# पुरस्कार व सदिच्छा

वेदोऽखिलो धर्म मूलम् ।। आणि यतोऽभ्युदय नि:श्रेयस: सिद्धि: स धर्म : ।। या दोन सिद्धांत वाक्यांचे महत्त्व लक्षात घेता ऋग्वेदीय ब्रह्मकर्म समुच्चय या पोथीच्या पुनर्मुद्रणाची अनन्यसाधारण आवश्यकता जाणत्यांच्या लक्षात येईलच.

गेल्या सुमारे १०० वर्षांत निर्णयसागर या प्रकाशन संस्थेने वेदसंबंधी कित्येक वाङ्मय अतिशय शुद्ध स्वरूपात पुस्तक व पोथीरूपानेही प्रसिद्ध करून गेल्या काही पिढ्यांतील वेद विद्यार्थ्यांसाठी जे फार थोर काम करून ठेवले त्यातीलच एक महत्त्वाचा भाग म्हणजे वे. शा. सं. वासुदेवभट्ट पणशीकर यांच्या संपादनातून प्रसिद्ध झालेली ही ब्रह्मकर्म समुच्चयाची पोथी, आन्हिक, संस्कार, व्रतोद्यापनादी (मिश्र) व और्ध्व-देहिक या चार प्रकरणाची मंडित अशा या पोथीत सामान्यत: आवश्यक असलेल्या बहुतेक सर्वच (श्रौतयज्ञ प्रक्रिया वगळता) श्रौत-स्मार्त पुराणोक्त धर्मकृत्यांचा यथाविधी समावेश आहे. उदाहरणार्थ आन्हिक प्रकरणात दैनंदिन व्यवहारांत लागणाऱ्या प्रात:स्मरण, स्नानविधी, संध्या पूजेपासून कितीतरी अत्यावश्यक गोष्टींचा समावेश आहे. दुसऱ्या म्हणजे प्रस्तुत प्रकाशित होत असलेल्या संस्कार प्रकरणात आपल्या जीवनात आवश्यक अशा षोडश संस्कारांचे आणि इतरही आवश्यक अशा अनेक शांतीचे यथासांग प्रयोग दिले आहेत. त्या दृष्टीने प्रस्तुतचे प्रकरण फारच महत्त्वाचे आहे यात शंकाच नाही. यानंतरचे तिसरे जे व्रतोद्यापनादी मिश्र प्रकरण आहे त्यात कित्येक श्रौत.स्मार्त आणि पौराणिक व्रतांचा आणि गायत्री पुरश्चरणासारख्या त्याचप्रमाणे महामृत्युंजय जपासारख्या सद्य: फलदायी उपासनांचा अंतर्भाव आहे. आणि चौथ्या प्रकरणात और्ध्वदेहिकाची

यो देवः सवितास्माकं धियो धर्मादिगोचरे । प्रेरयेत्तस्य तद्भर्गस्तद्वरेण्यमुपास्महे ॥







मुक्ताविद्रुमहेमनीलधवलच्छायैर्मुखैस्त्रीक्षणैर्युक्तामिंदुकलानिबद्धमुकुटां तत्त्वार्थवर्णात्मिकां ।
गायत्रीं वरदाभयांकुशकशाशुभ्रं कपालं गुणं शंखं चक्रमथारविन्दयुगुलं हस्तैर्वहंतीं भजे ॥

# ॥ विद्वदभ्यर्थनम् ॥

संगुंफ्य वस्वष्टगुण (२८८) प्रयोगसामोदपुष्पांकितमालिकेयं ॥ भक्त्यार्पिता भूसुरकंठदेशे चिरं लसत्वीशकृपाकटाक्षात् ॥ १ ॥

ॐ नमः शिवाय ॥ सुरेषु प्रधानं निजानां निधानं क्रतूनां विधानं सुखाधानमस्मात् ॥ समाधानदं नौमि पूर्वं गणेशं यतो विघ्नसंघस्तिरोधानमेति ॥ १ ॥ ॥ विदांकुर्वत्वार्या यदखिलमहीमंडलतले द्विजाचारादन्यन्नहि परमिहामुत्रफलदम् ॥ अतो ब्राह्मं कर्म प्रकरणचतुष्केण सुमहन्निबध्नीयां पूर्वाकरनिकरसाह्याद्बुधमुदे ॥ २ ॥ मार्तंडोदयसमयान्निशांतमाद्ये प्राग्दैनंदिनमिह कर्म संप्रदिष्टम् ॥ भूशुद्ध्यादिकमभिषेचनीयजातं श्रावण्याद्यथ बहुशश्च पैतृकं तु ॥३॥ द्वैतीयीके ब्राह्मसंस्कारसंघो विघ्नध्वस्त्यै शांतयस्तत्र तत्र ॥ अग्रे दुर्योगर्क्षगंडांतशांतिवर्गो न्यस्तः कौस्तुभेनादृतो यः ॥४॥ तार्तीयीके पुरुषमहिलानित्यकाम्यव्रतानामुक्तो ह्युद्यापनविधिरथो पिप्पलोद्यापनादि ॥ देवार्चापि स्थिरचरभिदा पंचकुंड्येककुंडीनीलोत्सर्गोपवनजलसंस्कारशांत्यादि शिष्टम् ॥५॥ पुंस्त्रीप्रायश्चित्तमादौ तुरीये मृत्यूर्ध्वं च प्रोक्तमंत्येष्टिकर्म ॥ संन्यासश्चाप्यातुरोऽथो महांश्च सांगोपांगं सर्वमेतन्निबद्धम् ॥६॥ येऽधीतमंत्रनिवहा अपि याज्ञिकेषु प्रायोऽनुपस्थितिवशात्समये स्खलंति ॥ तेषामुपस्थितिकृतेऽखिल-

सूक्तकोशो मंत्राद्यवर्णमनुलक्ष्य मया व्यधायि ॥७॥ सुतनुसंकलितादपि याज्ञिकाद्विषयदिक्कथनं कृतमत्र यत् ॥ न सकलं विषयक्रमदर्शनादनुपदं सकलं स्फुटतामियात् ॥८॥ अनल्पैः प्रयासैर्दुरापाः प्रयोगा मया याज्ञिकेभ्यः प्रयासाद्गृहीत्वा ॥ समावेशिता युक्तितोऽस्मिन्क्रमेण द्विजानामिमे साह्यदाः स्युः सुखेन ॥९॥ लोके केचन वंचकाः परगुणोत्कर्षासहाः पुस्तकं स्वीयं नो ददते परान्कच पुनः स्वार्थेऽपि नो युंजते ॥ तेभ्यः केचन मध्यमा निशि परेऽह्न्यागच्छ दास्ये न लभ्येतेत्येवमजस्रमर्थिनमहो दुन्वंति शाठ्यात्परम् ॥ १० ॥ यावद्बुद्धिबलं विचार्य द्रमिताः सर्वे प्रयोगा मया ये दौर्लभ्यवशाच्च नांकनमगुर्येऽल्लब्धये याज्ञिकाः ॥ याचित्वा बहुशोऽनवाप्य समये छिन्नंत्यहर्वासरं तत्क्लेशानपमार्ष्टुमादरवतामायासहानाय च ॥११॥ सतां पारंपर्यान्निपुणतरयज्ञैकमनसां तपःस्वाध्यायाद्यैः सुनिशितधियां नापि विदुषाम् ॥ न गर्वान्नो लोभान्न च कृतमतीनामपि कृते कृतो यत्नोऽयं मेऽलसजडसुनिष्किंचनकृते ॥१२॥ धौरेयगुर्जरकुलद्वयमंडनेन श्रीकृष्णशास्त्रियुगुलेन च शोधकाले ॥ निर्व्याजमत्र समकार्युपकारजातं प्रत्यर्पणेन न तदुत्तरितुं शकेयम् ॥ १३ ॥ दृग्दोषान्मतिमान्द्यतोऽनवसराच्चाथो प्रमादादपि प्रायो मानुषशेमुषीसुनियतं संख्यावतां दृक्पथम् ॥ आगच्छेत्स्खलितं ह्युदारमनसा तत्सूचनीयं दयाकूपारैरिति तान्मुहुः सविनयं बद्धांजलि प्रार्थये ॥१४॥ ग्रंथे गुणाढ्यमभवद्यदि जात्वमुष्मिंस्तज्ज्ञेयमस्मदखिलेष्टगुरुप्रसादात् ॥ दोषान्मदल्पमतिजांस्त्वनुमार्ज्य संतः शैवालनीरमिव सादरमाद्रेयुः ॥१५॥ निर्णयसागरनेताऽयुङ्क्त तुकारामजावजी श्रेष्ठी ॥ तत्प्रेरणया कृतं प्रयोगजातं मुदार्यसेवार्थम् ॥१६॥ विदुषामंतेवासिश्रेण्यादरणाय संस्कृतो ग्रंथः ॥

पणशीकरोपनामकलक्ष्मणतनुजेन

वासुदेवेन ॥ १७ ॥

# ॥ पुनःसंस्करणीयानतयोविज्ञप्तयश्च ॥



श्रीः ॥ ज्ञेपूपरिष्टाद्विनयेन दोषहानाय विज्ञप्तिरलं कृतास्ति ॥ पूर्वांकनीया पुनरंकने तु पुनर्न तामत्र नतिं विधास्ये ॥ १ ॥ श्रीशेच्छावशतो मयाश्रिह पुनर्लब्धेऽस्य संशोधने याज्ञिक्यप्रवणान्बहूननवमान्ग्रंथान्विलोक्यादरात् ॥ पूर्वावृत्तिगताः प्रमादजनिता दोषा. मदक्ष्णोःपथं प्राप्तास्ते पुनरंकनेऽपि च यथाप्रज्ञं पुनर्मार्जिताः ॥२॥ दोषाः प्रमादहक्चापल्याऽव्युत्पत्तिनिबंधनाः ॥ सदा सर्वत्र सर्वेषां प्रभवंतीश्वराहते ॥ ३ ॥ न शास्त्रकरुणालयोऽत्र सुतरो ह्यपारत्वतो निसर्गकरुणालयास्तु कृतिनो ह्युदारत्वतः ॥ क्षितावखिलविज्ञ कोऽपि नरधर्मिणी हि च्युतिर्नतिः सकलमार्जनीति रचये गुणिभ्योऽद्य ताम् ॥४॥ न निजवदनोद्रिक्तो भूयात्क्वचित्कवलः श्रिये जडपरिकरो ग्रंथारंभेऽप्ययं न तथा मम ॥ द्विजगणकृतेऽनिंद्यः सेवोद्यमो निजशक्तितो वियति विहगा नीचैरुच्चैः पतंत्यनुवासरम् ॥ ५ ॥ आस्तां विस्तृतफल्गुवल्गनगिरा नूत्नैः सुरत्नैरिव प्रत्नैः प्रोद्वलिते त्रिषष्टि ६३ विषयैरायासतः शोधिते ॥ श्रीशः पूरयतात्यदक्षरपदभ्रंशोत्थमूनाधिकं विद्वांसः करुणादृशोनमधिकं संमार्जयेयुः सदा ॥६॥ नतिततिनुतिविज्ञप्तिष्वन्यतमाराधिता ह्यघं विबुधाः ॥ अंत्यखिलाभिर्दोषान्किं नो न हरेयुरर्चिताः सुबुधाः ॥ ७ ॥

अर्थमेनमनवं हृदिकृत्य नंनमीति विदुषोऽजलिपूर्वम् ॥ विट्ठरिश्ठनुतलक्ष्मणजन्मा

वासुदेवपणशीकरशर्मा ॥ ८ ॥

# अथब्रह्मकर्मसमुच्चयस्थविषयानुक्रमः ।

विषयाः पत्रं.

## रंगरंजितमंडलानि ।



विषयाः पत्रं.

## आह्निकादिप्रकरणम् ॥ १ ॥



विषयाः पत्रं.

**संस्कारप्रकरणम् ॥ २ ॥**

इतिब्रह्मकर्मसमुच्चयस्थविषयानुक्रमः ॥

## ॥ पुरवणी अनुक्रम ॥

# अथब्रह्मकर्मसमुच्चयांतर्गतमंत्राणामकारादिवर्णक्रमः ।

इतिब्रह्मकर्मसमुच्चयांतर्गतमंत्राणामकारादिवर्णक्रमकोशः समाप्तः ।

# ॥ अथाह्निकाचारप्रकरणम् ॥ १ ॥

## ॥ १ ॥ अथमंगलमुपोद्धातश्च ॥

श्रीगणेशायनमः ॥ श्रीवेदपुरुषायनमः ॥ ॥ सूर्यसिंदूरोल्लसितास्यंगिरमादौब्रह्मश्रीशेशानथवाचंयमवृंदम् ॥ नत्वाप्रत्यूहौघनिवृत्त्यैपितरौप्राकुर्वेब्राह्मंकर्मसमूहंसुखसिद्ध्यै ॥ १ ॥ समूहेऽस्मिन्नित्याह्निकविविधसंस्कारनिचयप्रकीर्णप्रांत्येतिप्रकरणचतुष्केऽत्रबहवः ॥ प्रयोगाःसंक्षानवचनगणोविस्तृतिभियासमूलग्रंथेभ्योनिपुणमवसेयःसुकृतिभिः ॥ २ ॥ ॥ आश्वलायनः ॥ अथोच्यतेगृहस्थस्यनित्यकर्मयथाविधि ॥ यत्कृत्वानृण्यमाप्नोतिदैवात्पित्र्याच्चमानुषात् ॥ अथात्रब्राह्ममुहूर्तमारभ्यास्वापंकर्माण्युच्यंते ॥ ब्राह्मोमुहूर्तश्चद्वेधा अंत्ययामात्मकोरात्रेरुपांत्यमुहूर्तश्च ॥ मनुः ॥ ब्राह्मेमुहूर्तेबुध्येतधर्मार्थौचानुचिंतयेत् ॥ कायक्लेशांश्चतन्मूलान्वेदतत्त्वार्थमेवच ॥ वेदतत्वार्थईश्वरः ॥ अत्रस्मरणीयमाहव्यासः ॥ ॥ छ ॥ ॥ छ ॥

## ॥ २ ॥ अथप्रातःस्मरणम् ॥

श्रीः ॥ महर्षिर्भगवान्व्यासःकृत्वेमांसंहितांपुरा ॥ श्लोकैश्चतुर्भिर्धर्मात्मापुत्रमध्यापयच्छुकम् ॥ १ ॥ मातापितृसहस्राणिपुत्रदारशतानिच ॥ संसारेष्वनुभूतानियांतियास्यंतिचापरे ॥ २ ॥ हर्षस्थानसहस्राणिभयस्थानशतानिच ॥ दिवसेदिवसेमूढमाविशंतिनपंडितम् ॥ ३ ॥ ऊर्ध्वबाहुर्विरौम्येषनचकश्चिच्छृणोतिमे ॥ धर्मादर्थश्चकामश्चसकिमर्थंनसेव्यते ॥ ४ ॥ नजातुकामा

नभयान्नलोभाद्धर्मंत्यजेज्जीवितस्यापिहेतोः ॥ धर्मोनित्यःसुखदुःखेत्वनित्येजीवोनित्योहेतुरस्यत्वनित्यः ॥ ५ ॥ इमांभारतसावित्रींप्रातरुत्थाययःपठेत् ॥ सभारतफलंप्राप्यपरंब्रह्माधिगच्छति ॥ ६ ॥ योगोशतंकनकशृंगमयंददातिविप्रायवेदविदुषेचबहुश्रुताय ॥ पुण्यांचभारतकथांशृणुयाच्चनित्यंतुल्यंफलंभवतितस्यचतस्यचैव ॥ ७ ॥ ॥ अथभानोःश्लोकाः ॥ ॥ प्रातःस्मरामिखलुतत्सवितुर्वरेण्यंरूपंहिमंडलमृचोऽथतनुर्यजूंषि ॥ सामानियस्यकिरणाःप्रभवादिहेतुंब्रह्माहरात्मकमलक्ष्यमचिंत्यरूपम् ॥ १ ॥ प्रातर्नमामितरणिंतनुवाङ्मनोभिर्ब्रह्मेंद्रपूर्वकसुरैर्नुतमर्चितंच ॥ वृष्टिप्रमोचनविनिग्रहहेतुभूतंत्रैलोक्यपालनपरंत्रिगुणात्मकंच ॥ २ ॥ प्रातर्भजामिसवितारमनंतशक्तिंपापौघशत्रुभयरोगहरंपरंच ॥ तंसर्वलोककलनात्मककालमूर्तिंगोकंठबंधनविमोचनमादिदेवम् ॥ ३ ॥ श्लोकत्रयमिदंभानोःप्रातःप्रातःपठेत्तुयः ॥ ससर्वव्याधिनिर्मुक्तःपरंसुखमवाप्नुयात् ॥ ४ ॥ ॥ अथविघ्नेशस्य ॥ प्रातःस्मरामिगणनाथमनाथबंधुंसिंदूरपूरपरिशोभितगंडयुग्मम् ॥ उद्दंडविघ्नपरिखंडनचंडदंडमाखंडलादिसुरनायकवृंदवंद्यम् ॥ १ ॥ प्रातर्नमामिचतुराननवंद्यमानमिच्छानुकूलमखिलंचवरंददानम् ॥ तंतुंदिलंद्विरसनप्रिययज्ञसूत्रंपुत्रंविलासचतुरंशिवयोःशिवाय ॥ २ ॥ प्रातर्भजाम्यभयदंखलुभक्तशोकदावानलंगणविभुंवरकुंजरास्यम् ॥ अज्ञानकाननविनाशनहव्यवाहमुत्साहवर्धनमहंसुतमीश्वरस्य ॥ ३ ॥ श्लोकत्रयमिदंपुण्यंसदासाम्राज्यदायकम् ॥ प्रातरुत्थायसततंयःपठेत्प्रयतःपुमान् ॥ ४ ॥ ॥ अथदेव्याः ॥ ॥ प्रातःस्मरामिशरदिंदुकरोज्ज्वलाभांसद्रत्नवत्सकलकुंडलहारशोभाम् ॥ दिव्यायुधोर्जितसुनीलसहस्रहस्तांरक्तोत्पलाभचरणांभवतींपरेशाम् ॥ १ ॥प्रातर्नमामिमहिषासुरचंडमुंडशुंभासुरप्रमुखदैत्यविनाशदक्षाम् ॥ ब्रह्मेंद्ररुद्रमुनिमोहनशीललीलांचंडींसमस्तसुरमूर्तिमनेकरूपाम् ॥ २ ॥ प्रातर्भजामिभजतामखिलार्थदात्रींधात्रींसमस्तजगतांदु

रितापहंत्रीम् ॥ संसारबंधनविमोचनहेतुभूतांमायांपरांसमधिगम्यपरस्यविष्णोः ॥ ३ ॥ श्लोकत्रयमिदंदेव्याश्चंडिकायाःपठेन्नरः ॥ सर्वान्कामानवाप्नोतिविष्णुलोकेमहीयते ॥ ४ ॥ ॥ अथशिवस्य ॥ ॥ प्रातःस्मरामिभवभीतिहरंसुरेशंगंगाधरंवृषभवाहनमंबिकेशम् ॥ खट्वांगशूलवरदाभयहस्तमीशंसंसाररोगहरमौषधमद्वितीयम् ॥ १ ॥ प्रातर्नमामिगिरिशंगिरिजार्धदेहंसर्गस्थितिप्रलयकारणमादिदेवम् ॥ विश्वेश्वरंविजितविश्वमनोभिरामंसंसाररोग० ॥ २ ॥ प्रातर्भजामिशिवमेकमनंतमाद्यंवेदांतवेद्यमनघंपुरुषंमहांतम् ॥ नामादिभेदरहितंषडभावशून्यंसंसार० ॥ ३ ॥ प्रातःसमुत्थायशिवंविचिंत्यश्लोकत्रयंयेऽनुदिनंपठंति ॥ तेदुःखजातंबहुजन्मसंचितंहित्वापदंयांतितदेवशंभोः ॥ ४ ॥ ॥ अथविष्णोः ॥ ॥ प्रातःस्मरामिभवभीतिमहार्तिशांत्यैनारायणंगरुडवाहनमब्जनाभम् ॥ ग्राहाभिभूतवरवारणमुक्तिहेतुंचक्रायुधंतरुणवारिजपत्रनेत्रम् ॥ १ ॥ प्रातर्नमामिमनसावचसाचमूर्ध्नापादारविंदयुगुलंपरमस्यपुंसः ॥ नारायणस्यनरकार्णवतारणस्यपारायणप्रवणविप्रपरायणस्य ॥ २ ॥ प्रातर्भजामिभजतामभयंकरंतंप्राक्सर्वजन्मकृतपापभयापहत्यै ॥ योग्राहवक्रपतितांघ्रिगजेंद्रघोरशोकप्रणाशमकरोद्धृतशंखचक्रः ॥ ३ ॥ श्लोकत्रयमिदंविष्णोःप्रातःकालेपठेत्तुयः ॥ लोकत्रयगुरुस्तस्मैदद्यादात्मपदंहरिः ॥ ४ ॥ ॥ अथराघवस्य ॥ प्रातःस्मरामिरघुनाथमुखारविंदंमंदस्मितंमृदुलभाषिविशालभालम् ॥ कर्णावलंबिचलकुंडलशोभिगंडंकर्णांतदीर्घनयनंनयनाभिरामम् ॥ १ ॥ प्रातर्नमामिरघुनाथकरारविंदंरक्षोगणायभयदंवरदंनिजेभ्यः ॥ यद्राजसंसदिविभज्यमहेशचापंसीताकरग्रहणमंगलमापसद्यः ॥ २ ॥ प्रातर्नमामिरघुनाथपदारविंदंपद्मांकुशादिशुभरेखिसुखावहंमे ॥ योगींद्रमानसमधुव्रतसेव्यमानंशापापहंसपदिगौतमधर्मपत्न्याः ॥ ३ ॥ प्रातर्वदामिवचसारघुनाथनामवाग्दोषहारिसकलंशमलंकरोति ॥ यत्पार्वतीस्वपतिनासहभो

कुकाभामीत्यासहस्रहरिनामसमंजजाप ॥ ४ ॥ प्रातःश्रयेश्रुतिनुतांरघुनाथमूर्तिनीलांबुजोत्पलसितेतररत्ननीलाम् ॥ आमुक्त मौक्तिकविशेषविभूषणाढ्यांध्येयांसमस्तमुनिभिर्जनमुक्तिहेतुम् ॥ ५ ॥ यःश्लोकपंचकमिदंप्रयतःपठेत्तुनित्यंप्रभातसमयेपुरुषः प्रबुद्धः ॥ श्रीरामकिंकरजनेषुसएवमुख्योभूत्वाप्रयातिहरिलोकमनन्यलभ्यम् ॥ ६ ॥ ॥ अन्यच्च ॥ ॥ ब्रह्मामुरारिस्त्रिपुरांत कारिर्भानुःशशीभूमिसुतोबुधश्च ॥ गुरुश्चशुक्रःशनिराहुकेतवःकुर्वंतुसर्वेममसुप्रभातम् ॥ १ ॥ भृगुर्वसिष्ठःक्रतुरंगिराश्चमनुः पुलस्त्यःपुलहश्चगौतमः ॥ रैभ्योमरीचिश्च्यवनश्चदक्षःकुर्वंतुसर्वे० ॥ २ ॥ सनत्कुमारःसनकःसनंदनःसनातनोऽप्यासुरिपिंग लौच ॥ सप्तस्वराःसप्तरसातलानिकुर्वं० ॥ ३ ॥ सप्तार्णवाःसप्तकुलाचलाश्चसप्तर्षयोद्वीपवनानिसप्त ॥ भूरादिकृत्वाभुवनानि सप्तकुर्वं० ॥ ४ ॥ पृथ्वीसगंधासरसास्तथापःस्पर्शीचवायुर्ज्वलनःसतेजः ॥ नभःसशब्दंमहतासहैतेकु० ॥ ५ ॥ इत्थंप्रभातेप रमंपवित्रंपठेत्स्मरेद्वाश्रृणुयाच्चतद्वत् ॥ दुःस्वप्ननाशस्त्विहसुप्रभातंभवेच्चनित्यंभगवत्प्रसादात् ॥ १ ॥ वैन्यंपृथुंहैहयमर्जुनंच शाकुंतलेयंभरतंनलंच ॥ रामंचयोवैस्मरतिप्रभातेतस्यार्थलाभोविजयश्चहस्ते ॥ २ ॥ बलिर्विभीषणोभीष्मःप्रह्लादोनारदोध्रुवः ॥ षडेतेवैष्णवाःप्रोक्ताःस्मरणंपापनाशनम् ॥ ३ ॥ अश्वत्थामाबलिर्व्यासोहनूमांश्चविभीषणः ॥ कृपःपरशुरामश्चसप्तैतेचिरजी विनः ॥ ४ ॥ सप्तैतान्संस्मरेन्नित्यंमार्कंडेयमथाष्टमम् ॥ जीवेद्वर्षशतंसाग्रमपमृत्युविवर्जितः ॥ ५ ॥ अहल्याद्रौपदीसीतातारा मंदोदरीतथा ॥ पंचकंनास्मरेन्नित्यंमहापातकनाशनम् ॥ ६ ॥ कर्कोटकस्यनागस्यदमयंत्यानलस्यच ॥ ऋतुपर्णस्यराजर्षेःकीर्त नंकलिनाशनम् ॥ ७ ॥ धर्मोविवर्धतियुधिष्ठिरकीर्तनेनपापंप्रणश्यतिवृकोदरकीर्तनेन ॥ शत्रुर्विनश्यतिधनंजयकीर्तनेनमाद्री सुतौकथयतांनभवंतिरोगाः ॥ ८ ॥ पुण्यश्लोकोनलोराजापुण्यश्लोकोयुधिष्ठिरः ॥ पुण्यश्लोकाचवैदेहीपुण्यश्लोकोजनार्दनः

॥ ९ ॥ विश्वेशंमाधवंढुंढिंदंडपाणिंचभैरवम् ॥ वंदेकाशींगुहांगंगांभवानींमणिकर्णिकाम् ॥ १० ॥ इत्यादिपौराणश्लोकान्पठित्वा ॥ समुद्रवसनेदेविपर्वतस्तनमंडले ॥ विष्णुपत्निनमस्तुभ्यंपादस्पर्शंक्षमस्वमे ॥ इतिभूमिंप्राथ्योत्थायरविंगुरुंचनमस्कृत्य प्रातरग्निमित्यादिमंत्रान्पठेत् ॥ हरिः ॐ प्रातरग्निंप्रातरिंद्रंहवामहेप्रातर्मित्रावरुणाप्रातरश्विना । प्रातर्भगंपूषणंब्रह्मणस्पतिंप्रातःसोमंसुतरुद्रंहुवेम ॥ प्रातर्जितंभगमुग्रंहुवेमवयंपुत्रमदितेर्योविधर्ता । आध्रश्चिद्यंमन्यमानस्तुरश्चिद्राजाचिद्यंभगंभक्षीत्याह ॥ भगप्रणेतर्भगसत्यराधोभगेमांधियमुदवाददन्नः । भगप्रणोजनयगोभिरश्वैर्भगप्रनृभिर्नृवंतःस्याम ॥ उतेदानींभगवंतःस्यामोतप्रपित्वउतमध्येअह्नां । उतोदितामघवन्त्सूर्यस्यवयंदेवानांसुमतौस्याम ॥ भगऽएवभगवाँऽअस्तुदेवास्तेनवयंभगवंतःस्याम । तंत्वाभगसर्वऽइज्जोहवीतिसनोभगपुरऽएताभवेह ॥ समध्वरायोषसोनमंतदधिक्रावेवशुचयेपदाय । अर्वाचीनंवसुविदंभगंनोरथमिवाश्वावाजिनऽआवहंतु ॥ अश्वावतीर्गोमतीर्नऽउषासोवीरवतीःसदमुच्छंतुभद्राः ॥ घृतंदुहानाविश्वतःप्रपीतायूयंपातस्वस्तिभिःसदानः ॥ ॥ ॐयच्चगोषुदुःष्वप्न्यंयच्चास्मेदुहितर्दिवः । त्रितायतद्विभावर्याप्स्यायपरावहानेहसोवऊतयःसुऊतयोवऊतयः ॥ निष्कंवाघाकृणवतेस्रजंवादुहितर्दिवः । त्रितेदुःष्वप्न्यंसर्वमाप्त्येपरिदद्मस्यनेहसोवऊतयःसुऊतयोवऊतयः ॥ तदन्नायतदपसेतंभागमुपसेदुषे । त्रितायचद्वितायचोषोदुःष्वप्न्यंवहानेहसोवऊतयःसुऊतयोवऊतयः ॥ यथाकलांयथाशफंयथऋणंसंनयामसि । एवादुःष्वप्न्यंसर्वमाप्त्येसंनयामस्यनेहसोवऊतयःसुऊतयोवऊतयः ॥ अजैष्माद्यासनामचाभूमानागसोवयं । उषोयस्माद्दुःष्वप्न्यादभैष्मापतदुच्छत्वनेहसोवऊतयःसुऊतयोवऊतयः ॥ ॐ अजैष्माद्यासनामचाभूमानागसोवयं ॥ जाग्रत्स्वप्नःसंकल्पःपापोयंद्विष्मस्तंसऋच्छतुयोनोद्वेष्टितमृच्छतु ॥ इतिप्रातःस्मरणंसंपूर्णम् ॥ ॥ ॥ ७ ॥

## ॥ ३ ॥ अथप्रज्ञाविवर्धनस्तोत्रम् ॥

श्रीः ॥ स्कंदउवाच ॥ योगीश्वरोमहासेनःकार्तिकेयोऽग्निनंदनः ॥ स्कंदःकुमारःसेनानीःस्वामीशंकरसंभवः ॥ १ ॥ गांगेयस्ताम्रचूडश्चब्रह्मचारीशिखिध्वजः ॥ तारकारिरुमापुत्रःक्रौंचारिश्चषडाननः ॥ २ ॥ शब्दब्रह्मसमुद्रश्चसिद्धसारस्वतोगुहः ॥ सनत्कुमारोभगवान्भोगमोक्षफलप्रदः ॥ ३ ॥ शरजन्मागणाधीशपूर्वजोमुक्तिमार्गकृत् ॥ सर्वागमप्रणेताचवांछितार्थप्रदर्शनः ॥ ४ ॥ अष्टाविंशतिनामानिमदीयानीतियःपठेत् ॥ प्रत्यूषेश्रद्धयायुक्तोमूकोवाचस्पतिर्भवेत् ॥ ५ ॥ महामंत्रमयानीतिममनामानुकीर्तनम् ॥ महाप्रज्ञामवाप्नोतिनात्रकार्याविचारणा ॥ ६ ॥ इतिश्रीरुद्रयामलेप्रज्ञाविवर्धनस्तोत्रंसंपूर्णम् ॥ ॥ अथद्वितीयंप्रज्ञाकरंस्तोत्रम् ॥ प्राचीसंध्याकाचिदंतर्निशायाःप्रज्ञादृष्टेरंजनश्रीरपूर्वा ॥ वक्रीवेदान्पातुमेवाजिवक्त्रावागीशाख्यावासुदेवस्यमूर्तिः ॥ १ ॥ प्रणताज्ञानसंदोहध्वांतध्वंसनकर्मठम् ॥ नमामितुरगग्रीवंहरिंसारस्वतप्रदम् ॥ २ ॥ श्लोकद्वयमिदंप्रातरष्टाविंशतिवारकम् ॥ प्रयतःपठतेनित्यंकृत्स्नाविद्याप्रसिद्ध्यति ॥ ३ ॥ इतिप्रज्ञाकरंहयग्रीवस्तोत्रंसंपूर्णम् ॥ ॥ ॥ छ ॥

## ॥ ४ ॥ अथमूत्रपुरीषोत्सर्गविधिः ॥



श्रीः ॥ ततःप्रातःसमुत्थायकुर्याद्विण्मूत्रमेवच ॥ नैर्ऋत्यामिषुविक्षेपमतीत्याभ्यधिकंभुवः ॥ इति॥ तत्र पूर्वोक्तब्राह्मेमुहूर्तेउत्थायाचम्यइष्टदेवतांनमस्कृत्य प्रातःस्मरणंविधायरविंगुरुंचनमस्कृत्यग्रामाद्बहिर्नैर्ऋत्यामिषुक्षेपात्ययेशुद्धमृत्तिकांससिकतांजलपात्रंचादाय कीटादिरहितस्थलंगत्वामृज्जलपात्रेनिधायायज्ञियैरनार्द्रैस्तृणैर्भूमिमाच्छाद्यप्रावृतशिराःपृष्ठतःकंठलंबितयज्ञोपवीतो

यद्येकवस्त्रश्चेद्दक्षिणकर्णेनिहितयज्ञोपवीतोमौनीघ्राणास्येपिधायदिवोदङ्मुखोरात्रौदक्षिणामुखोमूत्रपुरीषेउत्सृज्य लोष्ठादिनागु दंपरिमृज्यगृहीतशिश्नउत्थाय पूर्वगृहीतमृज्जलपात्रेगृहीत्वार्द्रामलकमात्रमृज्जलैर्द्विवारंलिंगशौचंकृत्वार्धप्रसृतितदर्धार्धैर्मृज्जलै स्त्रिवारमपानंशोध्यपुनर्जलैरेवलिंगगुदेप्रक्षाल्यशुद्धमृत्तिकयैकवारंहस्तंप्रक्षाल्य शुद्धभूमिमागत्यान्यमृज्जलैर्दशवारंवामकरंप्र क्षाल्य ततःकरद्वयंसप्तवारंतावद्भिरेवमृज्जलैःप्रक्षाल्यवामदक्षिणपादौप्रत्येकंत्रिःप्रक्षाल्यान्यजलेनद्वादशगंडूषान्वामभागेकृत्वा जलपात्रंत्रिःपर्युक्ष्यजलबिंदून्जलेनिक्षिप्योपवीतीद्विराचामेत् ॥ मूत्रमात्रोत्सर्गेतुपूर्ववदेकवारंलिंगंप्रक्षाल्यवामकरंत्रिःप्रक्षाल्य करद्वयंद्विःप्रक्षाल्यैकैकयामृदापादौप्रक्षाल्यगंडूषचतुष्टयंविधायाचामेत् ॥ उक्तशौचाकरणेप्रायश्चित्तंस्मृतिरत्नावल्यां ॥ गाय त्र्यष्टशतंचैवप्राणायामत्रयंतथा इति ॥ जपेदितिशेषः ॥ इतिमूत्रपुरीषोत्सर्गविधिः ॥ ॥ ॥ ४ ॥

## ॥ ५ ॥ अथदंतधावनविधिः ॥

श्रीः ॥ मुखेपर्युषितेनित्यंभवत्यप्रयतोनरः ॥ तदार्द्रकाष्ठंशुष्कंवाभक्षयेद्दंतधावने ॥ १ ॥ उत्थायनेत्रेप्रक्षाल्यशुचिर्भूत्वासमा हितः ॥ परिजप्यचमंत्रेणभक्षयेद्दंतधावनं ॥ २ ॥ शुचिर्भूत्वाविण्मूत्रोत्सर्गेणशुचिर्भूत्वेत्यर्थः ॥ प्रतिपत्षष्ठ्यष्टमीनवम्येकाद शीचतुर्दशीपंचदशीसंक्रांतिव्यतीपातव्रतोपवासश्राद्धदिनार्कभौमशुक्रमंददिननिषिद्धदिनातिरिक्तदिनेषु ब्राह्मणोद्वादशांगुलप्र माणेनदशांगुलप्रमाणेनवाकनिष्ठांगुलिवत्स्थूलेनतिंतिण्यादिविहितवृक्षोद्भवेनचूर्णीकृताग्रेणप्रक्षालितेनशुष्केणार्द्रेणवा ॥ आयु र्बलंयशोवर्चःप्रजाःपशून्वसूनिच ॥ ब्रह्मप्रज्ञांचमेधांचत्वंनोदेहिवनस्पते ॥ इतिमंत्रेणाभिमंत्रितेनकाष्ठेन–मुखदुर्गंधिनाशायदं

तानांचविशुद्धये ॥ श्रीवनस्पतेत्वगात्राणांकुर्वेहंदंतधावनं ॥ इतिमंत्रमुक्त्वादंतान्संशोध्यरजतादिनिर्मितयाजिह्वोलेखिन्यापर्णादिनावाजिह्वामुल्लिख्यद्वादशगंडूषांश्चकृत्वा ॐकारंगायत्रींचस्मृत्वाशिखांबध्नीयात् ॥ इतिदंतधावनम् ॥ ॥ ५ ॥

## ॥ ६ ॥ अथप्रातःस्नानविधिः ॥

श्रीः ॥ नमामिगंगेतवपादपंकजंसुरासुरैर्वंदितदिव्यरूपम् ॥ भुक्तिंचमुक्तिंचददासिनित्यंभावानुसारेणसदानराणाम् ॥ १ ॥ गंगागंगेतियोब्रूयाद्योजनानांशतैरपि ॥ मुच्यतेसर्वपापेभ्योविष्णुलोकंसगच्छति॥ आचम्यप्राणायामंकृत्वा श्रीमद्भगवतोमहापुरुषस्यविष्णोराज्ञयाप्रवर्तमानस्यअद्यब्रह्मणोद्वितीयेपरार्धेविष्णुपदेश्रीश्वेतवाराहकल्पेवैवस्वतमन्वंतरे कलियुगेप्रथमचरणेभरतवर्षेभरतखंडेजंबुद्वीपेदंडकारण्यदेशे (गोदावर्याःदक्षिणेतीरे कृष्णावेण्योरुत्तरेतीरेवा) शालिवाहनशकेबौद्धावतारेरामक्षेत्रेपरशुरामाश्रमेअस्मिन्वर्तमाने अमुकनामसंवत्सरेअमुकायनेअमुकर्तौअमुकमासेअमुकपक्षेअमुकतिथौअमुकवासरेअमुकदिवसनक्षत्रेअमुकस्थेवर्तमानेचंद्रे अमुकस्थेश्रीसूर्येअमुकस्थेदेवगुरौशेषेषुग्रहेषुयथायथंस्थानस्थितेषुसत्सुशुभयोगेशुभकरणे एवंगुणविशेषणविशिष्टायांशुभपुण्यतिथौश्रीपरमेश्वराज्ञारूपसकलशास्त्रश्रुतिस्मृतिपुराणोक्तफलप्राप्त्यर्थं ममआत्मनःकृतकायिकवाचिकमानसिकसांसर्गिकसकलपापक्षयार्थंप्रातःस्नानमहंकरिष्ये ॥ गंगाप्रार्थनंचकरिष्ये ॥ तीर्थराजायनमः ॥ त्वंराजासर्वतीर्थानांत्वमेवजगतः ॥ याचितंतीर्थंमेदेहितीर्थराजनमोस्तुते ॥ नंदिनीनलिनीसीतामालतीचमलापहा ॥ विष्णुपादाब्जसंभूता गंगात्रिपथगामिनी ॥ पुष्कराद्यानितीर्थानिगंगाद्याःसरितस्तथा ॥ आगच्छंतुपवित्राणिस्नानकालेसदामम ॥ स्नात्वामार्जयेत्

आपोहिष्ठेतितृचस्यांबरीषःसिंधुद्वीपआपोगायत्रीमार्जनेविनियोगः॥ ॐ आपोहिष्ठामयोभुवस्तानऊर्जेदधातन।महेरणायचक्षसे॥ योवःशिवतमोरसस्तस्यभाजयतेहनः। उशतीरिवमातरः ॥ तस्माअरंगमामवोयस्यक्षयायजिन्वथ। आपोजनयथाचनः॥ ततःस्नानंकृत्वा॥ इमंमेगंगइत्यस्यासिंधुक्षित्प्रैयमेधोनद्योजगती तीर्थालोडनेविनियोगः॥ ॐ इमंमेगंगेयमुनेसरस्वतिशुतुद्रिस्तोमं सचतापरुष्ण्या। असिक्न्यामरुद्वृधेवितस्तयार्जीकीयेशृणुह्यासुषोमया॥ इत्यंगुष्ठेनत्रिरुदकमालोड्य॥ ऋतंचेतितृचस्यमाधु च्छंदसोघमर्षणोभाववृत्तमनुष्टुप्अघमर्षणेविनियोगः॥ ॐ ऋतंचसत्यंचाभीद्धात्तपसोध्यजायत। ततोरात्र्यजायततततःसमुद्रो ऽअर्णवः॥ समुद्रादर्णवादधिसंवत्सरोऽअजायत। अहोरात्राणिविदधद्विश्वस्यमिषतोवशी ॥ सूर्याचंद्रमसौधातायथापूर्वम कल्पयत्। दिवंचपृथिवींचांतरिक्षमथोस्वः॥ इतित्रिरावृत्त्याघमर्षणंकुर्यात्॥(अर्घ्यमंत्राःकाम्ये॥ नमःकमलनाभायनमस्तेजल शायिने॥ नमस्तेकेशवानंतगृहाणार्घ्यंनमोस्तुते॥ एहिसूर्यसहस्रांशोतेजोराशेजगत्पते॥ अनुकंपयमांभक्त्यागृहाणार्घ्यंनमो ऽस्तुते॥ धातुःकमंडलूद्भूतेगंगेत्रिपथगामिनि॥ त्रैलोक्यवंदितेदेविगृहाणार्घ्यंनमोऽस्तुते॥) पापोहंपापकर्माहंपापात्मापापसं भवः॥ त्राहिमांकृपयागंगेसर्वपापहराभव॥ स्नानांगतर्पणंकुर्यात्॥ ब्रह्मादयोयेदेवाः तान्देवांस्तर्पयामि॥ भूर्देवांस्तर्पयामि॥ भुवर्देवांस्तर्पयामि॥ स्वर्देवांस्तर्पयामि॥ भूर्भुवःस्वर्देवांस्तर्पयामि॥ निवीती॥ कृष्णद्वैपायनादयोयऋषयः तानृषींस्तर्पयामि॥ भूऋर्षींस्तर्पयामि॥ भुवऋर्षींस्तर्पयामि॥ स्वऋर्षींस्तर्पयामि॥ भूर्भुवःस्वऋर्षींस्तर्पयामि॥ सव्येनापसव्येनवा॥ सोमःपितृमा न्यमोंगिरस्वानग्निष्वात्ताःकव्यवाहनादयोयेपितरः तान्पितॄंस्तर्पयामि॥ भूःपितॄंस्तर्पयामि॥ भुवःपितॄंस्तर्पयामि॥ स्वःपितॄंस्त र्पयामि॥ भूर्भुवःस्वःपितॄंस्तर्पयामि॥ अग्निदग्धाश्चयेजीवायेप्यदग्धाःकुलेमम॥ भूमौदत्तेनतोयेनतृप्तायांतुपरांगतिम्॥ इत्युद

कांजलिंतटेप्रक्षिप्य॥ यन्मयादूषितंतोयंशारीरमळसंभवात्॥तद्दोषपरिहारार्थंयक्ष्माणंतर्पयाम्यहम्॥इतियक्ष्मतर्पणंकुर्यात्॥ स्नानविधौविशेषविधिरुत्सर्जनप्रयोगेद्रष्टव्यः॥ ततःशुष्कंवासःपरिधायोत्तरीयार्थंद्वितीयंप्रावृत्यपरिधानीयमुपरिदर्शनिष्पीडयेत्॥

## ॥ ७ ॥ अथोष्णोदकस्नानविधिः ॥

श्रीः ॥ पात्रेकिंचिच्छीतोदकंप्रक्षिप्यतदुपर्युष्णोदकेनपात्रमापूर्य॥ ॐ शंनोदेवीरभिष्टय आपोभवंतुपीतये। शंयोरभिस्रवंतुनः॥ ॐ आपःपुनंतुपृथिवींपृथिवीपूतापुनातुमाम् । पुनंतुब्रह्मणस्पतिर्ब्रह्मपूतापुनातुमाम् ॥ ॐद्रुपदादिवेन्मुमुचानः । स्विन्नस्नात्वीमलादिव ॥ पूतंपवित्रेणेवाज्यं । आपःशुंधंतुमैनसः ॥ ॐऋतंचसत्यंचाभीद्धात्तपसोध्यजायत । ततोरात्र्यजायततत्तःसमुद्रोअर्णवः ॥ ॐआपोहिष्ठामयोभुवस्तानऊर्जेदधातन । महेरणायचक्षसे ॥ इतिपंचमंत्रैरुष्णोदकमभिमंत्र्यगंगादितीर्थानिस्मरन्स्नात्वाआचम्यआपोहिष्ठेतितिसृभिर्मार्जनंकुर्यात् ॥ उष्णोदकस्नानेसंकल्पाघमर्षणतर्पणानिनकुर्यात् ॥ ॥ छ ॥

## ॥ ८ ॥ अथगौणस्नानानि ॥

श्रीः ॥ आचम्ययथानिमित्तंसंकल्पादिकृत्वाआपोहिष्ठादिमंत्रैःप्रोक्षणंमंत्रस्नानं ॥ १ ॥ गायत्र्यादशकृत्वोजलमभिमंत्र्यतेनसर्वांगप्रोक्षणंगायत्रं ॥ २ ॥ अग्निरितिभस्मेत्यादिमंत्रैरंगेषुभस्मलेपनमाग्नेयस्नानं ॥ ३ ॥ आर्द्रवस्त्रेणांगमार्जनंकापिलं ॥ ४ ॥ विष्णुपादोदकविप्रपादोदकोक्षणविष्णुध्यानादिभिश्चस्नानांतराणि ॥५॥ गौणस्नानैर्जपसंध्यादौशुद्धिर्नतुश्राद्धदेवार्चनादौ ॥ ब्रह्मयज्ञेविकल्पः ॥ नैमित्तिककाम्यादिस्नाननिमित्तानिग्रंथांतरेआलोच्यानि ॥ इतिगौणस्नानानि ॥ ॥ छ ॥

## ॥ ९ ॥ अथभस्मधारणविधिः ॥

श्रीः ॥ श्राद्धेयज्ञेजपेहोमेवैश्वदेवेसुरार्चने॥ भस्मत्रिपुंड्रैःपूतात्मामृत्युंजयतिमानवः ॥ आसनेउपविश्य आचम्यप्राणायामंकृत्वा ॥ अद्येत्यादिपूर्वो० शरीरशुद्ध्यर्थंभस्मधारणमहंकरिष्ये ॥ ॐ मानस्तोकेतनयेमानआयौमानोगोषुमानोअश्वेषुरीरिषः । वीरान्मांनोरुद्रभामितोवधीर्हविष्मंतःसदमित्त्वाहवामहे ॥ इतिहस्तेभस्मगृहीत्वाजलमिश्रितंकृत्वा ॥ ॐईशानःसर्वविद्यानामीश्वरःसर्वभूतानांब्रह्माधिपतिर्ब्रह्मणोधिपतिर्ब्रह्माशिवोमेअस्तुसदाशिवोम् ॥ शिरसि ॥ ॐ तत्पुरुषायविद्महेमहादेवायधीमहि ॥ तन्नोरुद्रःप्रचोदयात् ॥ मुखे ॥ ॐअघोरेभ्योथघोरेभ्योघोरघोरतरेभ्यः ॥ सर्वेभ्यःसर्वशर्वेभ्योनमस्तेअस्तुरुद्ररूपेभ्यः॥ हृदये ॥ ॐ वामदेवायनमोज्येष्ठायनमःश्रेष्ठायनमोरुद्रायनमःकालायनमःकलविकरणायनमोबलविकरणायनमोबलायनमोबलप्रमथनायनमःसर्वभूतदमनायनमोमनोन्मनायनमः ॥ गुह्ये ॥ ॐ सद्योजातंप्रपद्यामिसद्योजातायवैनमोनमः॥ भवेभवेनातिभवेभवस्वमांभवोद्भवायनमः ॥ पादयोः ॥ अग्निरितिमंत्रस्यपिप्पलादोरुद्रोगायत्रीजपेवि० ॥ ॐअग्निरितिभस्म । वायुरितिभस्म । जलमितिभस्म । स्थलमितिभस्म । व्योमेतिभस्म । सर्वंह्वाइदंभस्म । मनएतानिचक्षूंषिभस्मानि ॥ इत्यभिमंत्र्यजलमिश्रि

---

१ अग्निहोत्राग्निजंभस्मविरजाहोमजंतथा ॥ औपासनसमुत्पन्नंसमिदग्निसमुद्भवम् ॥ इत्यादि ॥ २ आसनान्याह्व्यासः ॥ कौशेयंकंबलंचैवअजिनंपट्टमेवच ॥ दारुजंतालपत्रंवाआसनंपरिकल्पयेत् ॥ कृष्णाजिनेज्ञानसिद्धिर्मोक्षश्रीर्व्याघ्रचर्मणि ॥ वशाजिनेत्व्याधिनाशःकंबलेदुःखमोचनम् ॥ अभिचारेनीलवर्णंरक्तंवश्यादिकर्मणि ॥ शांतिकेकंबलःप्रोक्तःसर्वेष्टंचित्रकंबले ॥ वशामगीतिमयखे ॥ इत्यासनानि ॥

तेनमध्यमांगुलित्रयगृहीतेनललाटहृदयनाभिगलांसबाहुसंधिपृष्ठशिरःस्थानेषु ॐ नमःशिवायेतिशिवमंत्रेण ॐ नमोनारायणायेत्यष्टाक्षरेणवागायत्र्यावाप्रणवेनवात्रिपुंड्रान्कुर्यात् ॥ इतिभस्मधारणविधिः ॥ ॥ ७ ॥

## ॥ १० ॥ अथगोपीचंदनधारणम् ॥

श्रीः ॥ प्रातःपुंड्रंमृदाकुर्याद्धुत्वाचैवतुभस्मना ॥ ऊर्ध्वपुंड्रंमृदाकुर्याद्भस्मनातुत्रिपुंड्रकम् ॥ विहितामृदश्चगोपीचंदनतुलसीमूलसिंधुतीरजाह्नवीतीरवल्मीकादिस्थाग्राह्याः ॥ मृदंहस्तेजलेनार्द्रीकृत्यशुक्लपक्षेकेशवायनमःइतिललाटे । नारायणेत्युदरे । माधवेतिहृदये । गोविंदेतिकंठे । विष्णवइतिदक्षिणपार्श्वे । मधुसूदनेतिदक्षबाहुमूले । त्रिविक्रमेतिदक्षकर्णमूलदेशे । वामनेतिवामपार्श्वे । श्रीधरेतिवामबाहौ । हृषीकेशेतिवामकर्णदेशे । पद्मनाभेतिपृष्ठे । दामोदरेतिककुदि । एवंद्वादशतिलकान्कृत्वाकृष्णपक्षेसंकर्षणादिद्वादशनामभिर्निर्दिष्टद्वादशस्थानेषुकृत्वांतेशिरसि ॐनमोभगवतेवासुदेवायेतित्रयोदशस्तिलकोविधेयः ॥ विध्यंतरंयथा—वामहस्तेजलंकृत्वासावित्र्याचाभिमंत्रितम् ॥ तद्विष्णोरितिमंत्रेणमर्दयेन्मृत्तिकांततः ॥ अतोदेवेतिसूक्तेनतिलकंधारयेत्सदा ॥ एवंयथासंप्रदायंतिलकान्कुर्यात् ॥ इतिगोपीचंदनादिमृद्धारणविधिः ॥ ॥ ७ ॥

## ॥ ११ ॥ अथकुशग्रहणविधिः (पवित्रप्रमाणंच) ॥

श्रीः ॥ तत्रदशविधादर्भायथा ॥ कुशाःकाशायवादूर्वाउशीराश्चसकुंदकाः ॥ गोधूमाव्रीहयोमुंजादशदर्भाःसबल्वजाः ॥ कुशाभावेतुकाशाःस्युःकाशाःकुशसमाःस्मृताः ॥ कुशाभावेग्रहीतव्याअन्येदर्भायथोचितम् ॥ कुशग्रहणकालः ॥ मासेनभस्यमा

वास्यातस्यांदर्भोच्चयोमतः ॥ अयातयामास्तेदर्भाविनियोज्याःपुनःपुनः ॥ शुचिर्भूत्वाशुचौदेशेस्थित्वापूर्वोत्तरामुखः॥ ॐ कारे णैवमंत्रेणकुशान्स्पृष्ट्वाद्विजोत्तमः ॥ मंत्रस्तु ॥ ॐ विरिंचिनासहोत्पन्नपरमेष्ठीनिसर्गज ॥ दहस्वसर्वपापानिदर्भस्वस्तिकरोभव ॥ हुंफट्कारेणदर्भास्तुसकृच्छित्त्वासमुद्धरेत् ॥ पवित्रलक्षणंतु ॥ अनंतर्गर्भितंसाग्रंकौशंद्विदलमेवच ॥ प्रादेशमात्रंविज्ञेयंपवित्रं यत्रकुत्रचित् ॥ चतुर्भिर्दर्भपिंजूलैर्ब्राह्मणस्यपवित्रकम् ॥ एकैकन्यूनमुद्दिष्टंवर्णेवर्णेयथाक्रमम् ॥ अन्यान्यपिपवित्राणिकुशदूर्वा मयानिच ॥ हेमात्मकपवित्रस्यकलांनार्हंतिषोडशीम् ॥ हैमेनसर्वदासर्वंकुर्यादेवाविचारयन् ॥ रौप्यंदक्षप्रदेशिन्यांबिभृयाद्दीक्षि तोद्विजः॥ इदंपवित्रमनामिकायांधारयेत् ॥ काम्याद्यन्यपवित्राण्यन्यत्रालोचनीयानि ॥ इतिकुशग्रहणविधिःपवित्रलक्षणंच ॥

## ॥ १२ ॥ अथमालालक्षणंसंस्कारश्च ॥

श्रीः ॥ अंगुलीगणनादेकंरेखयाष्टगुणंभवेत् ॥ कुशग्रंथ्याकोटिगुणंरुद्राक्षैःस्यादनंतकम् ॥ अक्षगणनाप्युक्ताप्रजापतिना ॥ अष्टोत्तरशतंकुर्याच्चतुःपंचाशदेवतु ॥ सप्तविंशतिकंवापिततोनैकाधिकावरा ॥ रक्तवर्णैरमिश्रैश्चकीटरंध्रविवर्जितैः ॥ अक्षसूत्रं प्रकर्तव्यंगोपुच्छवलयाकृति ॥ वक्रंवक्रेणसंयोज्यपुच्छंपुच्छेनयोजयेत् ॥ मेरुरूर्ध्वमुखःकार्यःप्रत्येकंनागपाशकं ॥ पश्चात्तेनज पंकुर्यान्नवेदुक्तफलंप्रिये ॥ एकैकंमणिमंगुष्ठेनाकर्षन्प्रजपेन्मनुम् ॥ मेरौतुलंघितेदेविनमंत्रफलभाग्भवेत् ॥ प्रमादात्पतितेसूत्रे जपेदष्टोत्तरंशतं ॥ पादयोःपतितेतस्मिन्प्रक्षाल्यद्विगुणंजपेत् ॥ इतिसूत्रमाला ॥ एतच्चगायत्रीजपातिरिक्तजपेज्ञेयम् ॥ ॥ ॥ अथसंस्कारः ॥ कुशोदकसहितैःपंचगव्यैर्मालांप्रक्षाल्य ॥ ॐ ह्रीं अंआंइंईंउंऊंऋंॠंऌंॡंएंऐंओंऔंअंअः कंखंगंघंङं चंछंजंझंञं टंठंडंढंणं तंथंदंधंनं पंफंबंभंमं यंरंलंवंशंषंसंहंक्षं एतानिपंचाशन्मातृकाक्षराणिअश्वत्थपत्रस्थापितमालायांवि

न्यस्य ॐ सद्योजातं० ॐ वामदेवाय० ॐ अघोरेभ्यो० ॐ तत्पुरुषाय० ॐ ईशानःसर्वविद्यानां० इतिपंचमंत्रान्जपित्वा ॥ सद्योजातमितिमंत्रेणमालांचपंचगव्येनप्रोक्ष्य ॥ शीतलजलेनप्रक्षाल्य ॥ वामदेवेतिचंदनेनावघृष्य ॥ अघोरेतिमालांधूपयित्वा ॥ तत्पुरुषेतिचंदनकस्तूर्यादिनालेपयित्वा ॥ ईशानइतिमंत्रेणप्रतिमणिंशतवारंदशवारंवाभिमंत्र्य ॥ अघोरइतिमंत्रेणमेरुंशतवारमभिमंत्रयेत् ॥ ततएतैरेवपंचभिर्मंत्रैर्मालांपंचोपचारैःपूजयेत् ॥ एवंजपमालासंस्कृताभवति ॥ धारणनियमस्त्वित्थम् ॥ रुद्राक्षान्कंठदेशेदशनपरिमितान्मस्तकेद्वेचविंशेषट्षट्कर्णप्रदेशेकरयुगलकृतेद्वादशद्वादशैव ॥ बाह्वोरिंदोःकलाभिर्नयनधुगकृतेए कमेकंशिखायांवक्षस्यष्टाधिकंयःकलयतिशतकंसस्वयंनीलकंठः ॥ १ ॥ अतोपिविशेषोन्यत्रद्रष्टव्यः ॥ इतिमालासंस्कारः ॥ध्ध॥

## ॥ १३ ॥ अथप्रातःसंध्या ॥

श्रीः ॥ ॥ प्रातःसंध्याकालः ॥ उत्तमातारकोपेतामध्यमालुप्ततारका ॥ अधमासूर्यसहिताप्रातःसंध्यात्रिधामता ॥ शुचौदेशे भूमिष्ठपादोंतर्जानुहस्तःप्राङ्मुखउदङ्मुखोवोपविश्यसंहतांगुलिनाशुद्धजलंगृहीत्वामुक्तांगुष्ठकनिष्ठेनवामेनान्वारब्धेनपाणिनाब्रह्मतीर्थेनकेशवनारायणमाधवेतिसंबुद्ध्यंतैस्त्रिभिर्नामभिस्त्रिरपःपिबेत् ॥ ब्रह्मतीर्थमंगुष्ठमूलम् ॥ ॐ केशव । नारायण । माधव । गोविंदायनमः । विष्णवेनमः । मधुसूदनायनमः । त्रिविक्रमायनमः । वामनायनमः । श्रीधरायनमः । हृषीकेशायनमः ।

१ प्रतिनामादौप्रणवमुच्चरेत् । केशवनारायणमाधवेतिनामभिराचमनम्, गोविंदनाम्ना दक्षिणकरप्रक्षालनम्, विष्णुनाम्ना वामकरप्रक्षालनम्, मधुसूदनत्रिविक्रमेतिद्वाभ्यां ओष्ठद्वयप्रोक्षणम्, वामनश्रीधरेतिद्वाभ्यां मुखमार्जनम्, हृषीकेशेन वामकरप्रोक्षणम्, पद्मनाभेन पादप्रक्षालनम्, दामोदरेण मस्तकप्रोक्षणम्, संकर्षणेन ऊर्ध्वोष्ठप्रोक्षणम्, वासुदेवेन दक्षिणनासाछिद्रस्पर्शः, प्रद्युम्नेन वामनासाछिद्रस्पर्शः, अनिरुद्धेन दक्षिण-

पद्मनाभायनमः । दामोदरायनमः । संकर्षणायनमः । वासुदेवायनमः । प्रद्युम्नायनमः । अनिरुद्धायनमः । पुरुषोत्तमाय नमः । अधोक्षजायनमः । नारसिंहायनमः । अच्युतायनमः । जनार्दनायनमः । उपेंद्रायनमः । हरयेनमः । श्रीकृष्णाय नमः ॥ पूर्वोक्तवद्दर्भद्वयकृतेपवित्रेग्रंथिरहितेग्रंथियुतेवाहस्तयोर्धृत्वा ॥ प्रणवस्यपरब्रह्मऋषिः । परमात्मादेवता । दैवीगाय त्रीच्छंदः । सप्तानांव्याहृतीनांविश्वामित्रजमदग्निभरद्वाजगौतमात्रिवसिष्ठकश्यपाऋषयः । अग्निवाय्वादित्यबृहस्पतिवरुणेंद्र विश्वेदेवादेवताः । गायत्र्युष्णिगनुष्टुब्बृहतीपंक्तित्रिष्टुब्जगत्यश्छंदांसि । गायत्र्याविश्वामित्रऋषिः । सवितादेवता । गायत्री च्छंदः । गायत्रीशिरसःप्रजापतिर्ऋषिः । ब्रह्माग्निवाय्वादित्यादेवताः । यजुश्छंदः । प्राणायामेविनियोगः ॥ ॐ भूः ॐ भुवः ॐ स्वः ॐ महः ॐ जनः ॐ तपः ॐ सत्यं ॐ तत्सवितुर्वरेण्यंभर्गोदेवस्यधीमहि ॥ धियोयोनःप्रचोदयात् ॥ ॐ आपोज्योती रसोमृतंब्रह्मभूर्भुवःस्वरोम् ॥ एवंत्रिरुक्त्वा ॥ ममोपात्तदुरितक्षयद्वाराश्रीपरमेश्वरप्रीत्यर्थंप्रातःसंध्यामुपासिष्ये मार्जनम् ॥ आपोहिष्ठेतितृचस्यांबरीषःसिंधुद्वीपऋषिःआपोदेवतागायत्रीछंदःमार्जनेविनियोगः ॐ आपोहिष्ठामयोभुवः । ॐ तानऊर्जे

---

नेत्रस्पर्शः, पुरुषोत्तमेन वामनेत्रस्पर्शः, अधोक्षजेन दक्षिणकर्णस्पर्शः, नारसिंहेन वामकर्णस्पर्शः, अच्युतेन नाभिस्पर्शः, जनार्दनेन हृदयस्पर्शः, उपेंद्रेण मस्तकस्पर्शः, हरिणा दक्षिणभुजस्पर्शः, श्रीकृष्णेन वामभुजस्पर्शः इति ॥ एवमाचमनासंभवेनिःपीन्वाहस्तंप्रक्षाल्यश्रोत्रंस्पृशेत् ॥

१ सर्वेषांवाभवेद्वाभ्यांपवित्रंग्रंथितंनवा ॥ इतिवचनाद्दर्भद्वयमपि ॥ २ दक्षिणेरेचयेद्वायुंवामेनापूरितोदरम् ॥ कुंभकेनजपंकुर्यात्प्राणायामोभवेदिति ॥ पंचांगुलीभिर्नासाग्रंपीडयेत्प्रणवेनवै ॥ मुद्रेयंसर्वपापघ्नीवानप्रस्थगृहस्थयोः ॥ कनिष्ठानामिकांगुष्ठैर्यतेश्चब्रह्मचारिणः ॥ प्रणवव्याहृतीःसप्तगायत्रींशिरसासह ॥ त्रिःपठेदायतप्राणःप्राणायामःसउच्यते ॥ इति ॥

दधातन । ॐ महेरणायचक्षसे ॥ ॐ योवःशिवतमोरसः । ॐ तस्यभाजयतेहनः । ॐ उशतीरिवमातरः ॥ ॐ तस्माअरंगमा मवः । ॐ यस्यक्षयायजिन्वथ ( इत्यधः ) ॥ ॐ आपोजनयथाचनः ॥ मंत्राचमनम् ॥ सूर्यश्चेतिमंत्रस्य याज्ञवल्क्यउपनिषद ऋषिः । सूर्यमन्युमन्युपतिरात्रयोदेवताः । प्रकृतिश्छंदः । अभ्यंतरशुद्ध्यर्थेमंत्राचमनेविनियोगः ॥ ॐ सूर्यश्चमामन्युश्चमन्यु पतयश्चमन्युकृतेभ्यः ॥ पापेभ्योरक्षंताम् ॥ यद्रात्र्यापापमकार्षं ॥ मनसावाचाहस्ताभ्यां ॥ पद्भ्यामुदरेणशिश्ना ॥ रात्रिस्तद वलुंपतु ॥ यत्किंचदुरितंमयि ॥ इदमहंमाममृतयोनौ ॥ सूर्येज्योतिषिजुहोमिस्वाहा ॥ इतिजलंपीत्वाआचम्य ॥ प्रणवस्यपर ब्रह्मऋषिः परमात्मादेवता दैवीगायत्रीच्छंदः व्याहृतीनांपरमेष्ठीप्रजापतिःप्रजापतिर्बृहती गायत्र्याविश्वामित्रःसविता गायत्री ॥ द्वितीयंमार्जनम् ॥ आपोहिष्ठेतिनवर्चस्यसूक्तस्यांबरीषःसिंधुद्वीपआपोगायत्री ॥ पंचमीवर्धमानासप्तमीप्रतिष्ठाअंत्येद्वेअनुष्टुभौ मार्जनेविनियोगः ॥ प्रथमंप्रणवेनमार्जनंव्याहृतिभिर्द्वितीयंप्रणवांतयागायत्र्यातृतीयंनवर्ग्भिश्चतुर्थंगायत्रीशिरसेतिमार्जयेत् ॥ ॐ आपोहिष्ठा ऋ० ३ ॥ शंनोदेवीरभिष्टयआपोभवंतुपीतये ॥ शंयोरभिस्रवंतुनः ॥ ईशानावार्याणांक्षयंतीश्चर्षणीनाम् ॥ अपोयाचामिभेषजम् ॥ अप्सुमेसोमोअब्रवीदंतर्विश्वानिभेषजा ॥ अग्निंचविश्वशंभुवम् ॥ आपःपृणीतभेषजंवरूथंतन्वे३मम ॥ ज्योक्सूर्यंदृशे ॥ इदमापःप्रवहतयत्किंचदुरितंमयि ॥ यद्वाहमभिदुद्रोहयद्वाशेपउतानृतम् ॥ आपोअद्यान्वचारिषंरसेनसमग

---

१ 'याज्ञवल्क्युपनिषदृषिःयाज्ञिक्यउपनिषत्कांडऋषिः' इतिपाठौ ॥ २ अत्रविशेषः ॥ गायत्रीपंक्तिविराजश्छंदांसि इतिमंत्राचमनेछंदस्त्रयं तद्व्यवस्थाच रक्षंतामित्यंतागायत्री दुरितंमय्यंतापंक्तिः स्वाहेत्यंताविराडितिमयूखे ॥ ३ प्रणवेनव्याहृतिभिर्गायत्र्याप्रणवांतया ॥ आपोहिष्ठेतिसूक्ते नमार्जनंहिचतुर्थकम् ॥ ऋगंतेर्धऋचांतेवापादांतेवापिमार्जयेत् ॥ गायत्रीशिरसाचांतेमार्जयित्वाघमर्षणम् ॥

स्वहि ॥ यर्यस्वानग्नआगहि्तंमांसंसृजवर्चसा ॥ इति ॥ अघमर्षणम् ॥ ऋतंचेतितृचस्यमाधुच्छंदसोऽघमर्षणऋषिः । भाववृत्तंदेवता । अनुष्टुपछंदः । अघमर्षणेविनियोगः ॥ ॐ ऋतंचसत्यंचाभीद्धात्तपसोध्यजायत ॥ ततोरात्र्यजायतततःसमुद्रोअर्णवः ॥ समुद्रादर्णवादधिसंवत्सरोअजायत ॥ अहोरात्राणिविदधद्विश्वस्यमिषतोवशी ॥ सूर्याचंद्रमसौधातायथापूर्वमकल्पयत् ॥ दिवंचपृथिवींचांतरिक्षमथोस्वः॥इतिवामनासापुटेनवायुंनिरुध्यदक्षिणनासयापापपुरुषंनिरस्यतज्जलमनवलोकयन्वामभागेक्षितौक्षिपेत्॥ आचम्य ॥ अर्घ्यदानम् ॥ प्रणवस्यपरब्रह्मऋषिः परमात्मादेवता दैवीगायत्रीछंदः व्याहृतीनांपरमेष्ठीप्रजापतिःप्रजापतिर्बृहती गायत्र्याविश्वामित्रःसवितागायत्री ॥ श्रीसूर्यायार्घ्यदानेविनियोगः ॥ ॐ भूर्भुवःस्वः तत्सवितुर्व० श्रीसूर्यनारायणायेदमर्घ्यंसमर्पयामि इतित्रिः ॥ कालातिक्रमेप्रायश्चित्तार्थंचतुर्थ ॥ तच्चकाललोपजनितप्रत्यवायपरिहारार्थंचतुर्थार्घ्यदानंकरिष्ये इतिदद्यात् ॥ असावादित्योब्रह्म ॥ इत्यात्मानंप्रदक्षिणंपरिषिच्यापउपस्पृशेत् ॥ आचम्यप्राणायामंकृत्वा ॥ गायत्रीजपः ॥ कुशोदकेनजपस्थानंप्रोक्ष्य ॐ भूर्भुवःस्वरोमितिजपित्वासनेपद्मासनेनोपविश्य॥ पृथ्वीतिमंत्रस्य मेरुपृष्ठऋषिः । कूर्मोदेवता । सुतलंछंदः । आसनेविनियोगः ॥ ॐ पृथ्वित्वयाधृतालोकादेवित्वंविष्णुनाधृता ॥ त्वंचधारयमांदेविपवित्रंकुरुचासनम् ॥ ऊर्ध्वकेशिविरूपाक्षिमांसशोणितभक्षणे ॥ तिष्ठदेविशिखाबंधेचामुंडेह्यपराजिते ॥ अपसर्पंतुतेभूतायेभूताभूमिसंस्थिताः ॥ येभूताविघ्नकर्तारस्तेगच्छंतुशिवाज्ञया ॥ अपक्रामंतुभूतानिपिशाचाःसर्वतोदिशम् ॥ सर्वेषामविरोधेनब्रह्मकर्मसमारभे ॥ गायत्र्या विश्वामित्रऋषिः । सवितादेवता । गायत्रीछंदः । न्यासेविनियोगः ॥ ॐ तत्सवितुरंगुष्ठाभ्यांनमः । वरे

१· इदमर्घ्यंपूर्णांजलिःसूर्याभिमुखस्तिष्ठन् गोकर्णाकारांजलीकृतपाणिभ्यामूर्ध्वंक्षिपन्जलेवारिप्रोक्षितस्थलेपात्रेवादद्यात् ॥·

ण्यंतर्जनीभ्यांनमः । भर्गोदेवस्यमध्यमाभ्यानमः । धीमहिअनामिकाभ्यांनमः । धियोयोनःकनिष्ठिकाभ्यांनमः । प्रचोदयात् करतलकरपृष्ठाभ्यांनमः ॥ ॐ तत्सवितुर्हृदयायनमः । वरेण्यंशिरसेस्वाहा । भर्गोदेवस्यशिखायैवषट् । धीमहिकवचायहुम् । धियोयोनोनेत्रत्रयायवौषट् । प्रचोदयात्अस्त्रायफट् । इतिदिग्बंधः ॥ योदेवःसवितास्माकंधियोधर्मादिगोचरे ॥ प्रेरयेत्तस्यतद्भर्गस्तद्वरेण्यमुपास्महे ॥ शुक्लोवर्णः । अग्निर्मुखं । ब्रह्माशिरः । विष्णुर्हृदयं । रुद्रोललाटं । पृथिवीकुक्षिः । त्रैलोक्यंचरणाः । सांख्यायनगोत्रं । त्रिपदागायत्री । अशेषपापक्षयार्थंगायत्रीजपेविनियोगः ॥ मुक्ताविद्रुमहेमनीरधवलच्छायैर्मुखैस्त्रीक्षणैर्युक्तामिंदुकलानिबद्धमुकुटांतत्त्वार्थवर्णात्मिकाम् ॥ गायत्रींवरदाभयांकुशकशाशुभ्रंकपालंगुणंशंखंचक्रमथारविंदयुगुलंहस्तैर्वहंतींभजे ॥ बालांबालादित्यमंडलमध्यस्थांरक्तवर्णारक्तांबरानुलेपनस्रगाभरणांचतुर्वक्त्रांदंडकमंडल्वक्षसूत्राभयांकचतुर्भुजांहंसासनारूढां ब्रह्मदैवत्यामृग्वेदमुदाहरंतींभूर्लोकाधिष्ठात्रींगायत्रींनामदेवतांध्यायामि ॥ आगच्छवरदेदेविजपेमेसंनिधौभव ॥ गायंतंत्रायसेयस्माद्गायत्रीत्वंततःस्मृता ॥ ॐ भूर्भुवःस्वः ॥ तत्सवितुर्वरेण्यंभर्गोदेवस्यधीमहि ॥ धियोयोनःप्रचोदयात् ॥ इतिगाय

---

१ गायत्रीपदार्थविवरणम् ॥ 'तदित्यवाङ्मनोगम्यंध्येयंयत्सूर्यमंडले । सवितुःसकलोत्पत्तिस्थितिसंहारकारिणः ॥ वरेण्यमाश्रयणीयंयदाधारमिदंजगत् । भर्गःस्वसाक्षात्कारेणह्यविद्याशक्तिदाहकृत् । देवस्यज्ञानरूपस्यस्वानंदाक्रीडतोपिवा । धीमह्यहंसएवेतितेनैवाभेदसिद्धये । धियोंतःकरणेवृत्तीःप्रत्यक्प्रवणचारिणीः । यइत्यलिंगगम्यंतत्सत्यज्ञानादिलक्षणं । नोऽस्माकंबहुधाभ्यस्तभेदभिन्नधियांपुनः । प्रचोदयात्प्रेरयतुप्रार्थनायांविशिष्यते ॥ इत्यर्थंध्यायन्नासाग्रदत्तदृष्टिर्द्यावापृथिव्योःसंधिमीक्षमाणोमालयांगुलिपर्वभिर्वागायत्रींजपेत् ॥ तत्प्रकारश्च ॥ पर्वभिस्तुजपेद्देवींमालाकाम्यजपेस्मृता ॥ गायत्र्यामूलवेदत्वाद्वेदःपर्वसुगीयते ॥ आरभ्यानामिकामध्यंपर्वाण्युक्तान्यनुक्रमात् ॥ तर्जनीमूलपर्यंतंजपेद्दशसुपर्वसु ॥ मध्यमांगुलिमूलेतु

त्रीमंत्रं वस्त्राच्छादितहस्तपर्वभिर्गणयन्नष्टोत्तरशतमष्टाविंशतिर्दशवारंवाजप्त्वा ॥ पुनःतत्सवितुरितिषडंगन्यासंकृत्वाउपस्थानं कुर्यात् ॥ जातवेदसेमारीचःकश्यपोजातवेदाअग्निस्त्रिष्टुप् ॥ उपस्थानेविनियोगः ॥ ॐ जातवेदसेसुनवामसोममरातीयतोनिदहातिवेदः ॥ सनःपर्षदतिदुर्गाणिविश्वानावेवसिंधुंदुरितात्यग्निः ॥ मित्रोजनानितिनवर्चस्यसूक्तस्यगाथिनोविश्वामित्रऋषिःमित्रोदेवतात्रिष्टुप्छंदःअंत्याश्चतस्रोगायत्र्यः सूर्योपस्थानेविनियोगः ॥ ॐ मित्रोजनान्यातयतिब्रुवाणोमित्रोदाधारपृथिवीमुतद्यां ॥ मित्रःकृष्टीरनिमिषाभिचष्टेमित्रायहव्यंघृतवज्जुहोत ॥ प्रसमित्रमर्तोअस्तुप्रयस्वान्यस्तआदित्यशिक्षतिव्रतेन ॥ नहन्यतेनजीयतेत्वोतोनैनमंहोअश्नोत्यंतितोनदूरात् ॥ अनमीवासइळयामदंतोमितज्ञवोवरिमन्नापृथिव्याः ॥ आदित्यस्यव्रतमुपक्षियंतोवयंमित्रस्यसुमतौस्याम ॥ अयंमित्रोनमस्यःसुशेवोराजासुक्षत्रोअजनिष्टवेधाः ॥ तस्यवयंसुमतौयज्ञियस्यापिभद्रेसौमनसेस्याम ॥ महाँआदित्योनमसोपसद्योयातयज्जनोगृणतेसुशेवः ॥ तस्माएतत्पन्यतमायजुष्टमग्नौमित्रायहविराजुहोत ॥ मित्रस्यचर्षणीधृतोवोदेवस्यसानसि ॥ द्युम्नंचित्रश्रवस्तमम् ॥ अभियोमहिनादिवंमित्रोबभूवसप्रथाः ॥ अभिश्रवोभिःपृथिवीं ॥ मित्रायपंचयेमिरेजनाअभिष्टिशवसे ॥ सदेवान्विश्वान्बिभर्ति ॥ मित्रोदेवेष्वायुषुजनायवृक्तबर्हिषे ॥ इषइष्टव्रताअकः ॥ (इदमुपस्थानंमित्रस्यचर्षणीत्यादिचतुर्भिर्वोक्तं) ॥ त्र्यंबकंमैत्रावरुणिर्वसिष्ठोरुद्रोऽनुष्टुप् ॥ उपस्थानेविनियोगः ॥ ॐ त्र्यंबकंयजामहेसुगंधिंपुष्टिवर्धनम् ॥ उर्वारुकमिवबंधनान्मृत्योर्मुक्षीयमामृतात् ॥ तच्छंयोःशंयुर्विश्वेदेवाःशक्करी । उपस्थानेविनियोगः ॥ ॐ तच्छंयोरावृणीमहेगा

---

यत्पर्वद्वितयंभवेत् ॥ तंवैमेरुंविजानीयाज्जपेतंनातिलंघयेत् ॥ वस्त्रेणाच्छादितकरंदक्षिणंयःसदाजपेत् ॥ तस्यस्यात्सफलंजाप्यंतद्धीनमफलंस्मृतम् ॥ इति ।

१ आह्निककारैस्त्विदंनवर्चेदित्यैतत्तंतिमानांमित्रस्यचर्षणी [illegible] उपस्थानेविनियोगः कृतोस्ति ॥ कैश्चित्तुजातवेदसइत्यस्यैवोपस्थानमुक्तं ॥

तुंयज्ञायगातुंयज्ञपतयेदैवीस्वस्तिरस्तुनःस्वस्तिर्मानुषेभ्यः ॥ ऊर्ध्वंजिगातुभेषजम् ॥ शंनोअस्तुद्विपदेशंचतुष्पदे ॥ नमोब्रह्मणे प्रजापतिर्विश्वेदेवाजगती । उपस्थानेविनियोगः ॥ ॐ नमोब्रह्मणेनमोअस्त्वग्नयेनमःपृथिव्यैनमओषधीभ्यः ॥ नमोवाचेनमो वाचस्पतयेनमोविष्णवेमहतेकरोमि ॥ इतित्रिः ॥ प्राच्यैदिशेइंद्रायचनमः । आग्नेय्यैदिशेअग्नयेचनमः । दक्षिणायैदिशेयमा यचनमः । नैर्ऋत्यैदिशेनिर्ऋतयेचनमः । प्रतीच्यैदिशेवरुणायचनमः । वायव्यैदिशेवायवेचनमः । उदीच्यैदिशेसोमायचन मः । ईशान्यैदिशेईश्वरायचनमः । ऊर्ध्वायैदिशेब्रह्मणेचनमः । अधरायैदिशेअनंतायचनमः । संध्यायैनमः । गायत्र्यैनमः । सावित्र्यैनमः । सरस्वत्यैनमः । सर्वाभ्योदेवताभ्योनमः ॥ यांसदासर्वभूतानिस्थावराणिचराणिच ॥ सायंप्रातर्नमस्यंतिसा मासंध्याऽभिरक्षतु ॥ उत्तमेशिखरेजातेभूम्यांपर्वतमूर्धनि ॥ ब्राह्मणेभ्योऽभ्यनुज्ञातागच्छदेवियथासुखम् ॥ भद्रंनइतिमंत्रस्य ऐंद्रोविमदऋषिः ॥ अग्निर्देवता ॥ एकपदाविराट्छंदः । शांत्यर्थेजपेविनियोगः ॥ ॐ भद्रंनोअपिवातयमनः ॥ ॐ शांतिःशां तिःशांतिः ॥ प्रदक्षिणंपरिभ्रमन् ॥ आसत्यलोकादापातालादालोकालोकपर्वतात् ॥ येसंतिब्राह्मणादेवास्तेभ्योनित्यंनमोनमः ॥ इतिगुरूनभिवादयेत् ॥ स्वस्तिकाकारहस्ताभ्यांकर्णौस्पृष्ट्वाअमुकप्रवरोमुकगोत्रोत्पन्नोऽहममुकशर्माभोगुरोत्वामभिवादयामिइ तिभूम्युपसंग्रहंप्रणम्य ॥ अनेनप्रातःसंध्यावंदनेनकर्मणाश्रीपरमेश्वरःप्रीयताम् ॥ ॐ तत्सद्ब्रह्मार्पणमस्तु ॥ द्विराचम्य ॥ प्रा यश्चित्तान्यशेषाणितपःकर्मात्मकानिवै ॥ यानितेषामशेषाणांकृष्णानुस्मरणंपरम् ॥ विष्णवेनमइतित्रिः ॥ इतिप्रातःसंध्या ॥

---

१ अभिवादनंत्रिः भूमौ १ गुरौ २ वृद्धेषु ३ गुरुवृद्धाभावे स्वपादावभिवादयेत् ।

## ॥ १४ ॥ अथाग्निकार्यंब्रह्मचारिणः ॥

श्रीः ॥ ब्रह्मचारीसंध्योपासनोत्तरंआचम्यप्राणानायम्यदेशकालाद्युच्चार्यश्रीपरमेश्वरप्रीत्यर्थंप्रातरग्निकार्यं ( सायंकालेतुसायम
ग्निकार्यं ) करिष्यइतिसंकल्प्यअग्निंध्यात्वा अग्नेःपरितस्त्रिवारंसोदकेनपाणिनापरिसमूहनंत्रिवारंपर्युक्षणंचकृत्वासमिधमादाय
अग्नयेसमिधमित्यस्यहिरण्यगर्भोऽग्निर्बृहती ॥ समिदाधानेविनियोगः ॥ ॐ अग्नयेसमिधमाहार्षंबृहतेजातवेदसे ॥ तयात्वमग्ने
वर्धस्वसमिधाब्रह्मणावयंस्वाहा ॥ इतिसमिधमग्नौप्रास्यअग्नयइदंनममेतित्यागमुच्चरेत् ॥ ततःपाणीप्रक्षाल्याग्नौप्रताप्य ॥ ॐ ते
जसामासमनज्मिइतिमुखमवाङ्निमृज्यपाणीप्रक्षाल्यएवंपुनर्द्विवारंकृत्वा ॥ उपस्थानंकुर्यात् ॥ मयिमेधामितिषण्णांहिरण्यग
र्भऋषिः ॥ पूर्वेषांत्रयाणामग्नींद्रसूर्यादेवताः ॥ उत्तरत्रयाणामग्निर्देवता ॥ गायत्रीछंदः ॥ अग्न्युपस्थानेविनियोगः ॥ ॐ मयि
मेधांमयिप्रजांमय्यग्निस्तेजोदधातु ॥ मयिमेधांमयिप्रजांमयींद्रइंद्रियंदधातु ॥ मयिमेधांमयिप्रजांमयिसूर्योभ्राजोदधातु ॥ यत्ते
अग्नेतेजस्तेनाहंतेजस्वीभूयासं ॥ यत्तेअग्नेवर्चस्तेनाहंवर्चस्वीभूयासं ॥ यत्तेअग्नेहरस्तेनाहंहरस्वीभूयासंइत्यग्निमुपस्थाय ॥ मान
स्तोकइत्यस्यकुत्सोरुद्रोजगती ॥ विभूतिग्रहणेविनियोगः ॥ ॐ मानस्तोकेतनयेमानआयौमानोगोषुमानोअश्वेषुरीरिषः ॥ वीरा-
न्मानोरुद्रभामितोवधीर्हविष्मंतःसदमित्त्वाहवामहे ॥ त्र्यायुषंजमदग्नेरितिललाटे ॥ कश्यपस्यत्र्यायुषमितिकंठे ॥ अगस्त्यस्य
त्र्यायुषमितिनाभौ ॥ यद्देवानांत्र्यायुषमितिदक्षिणस्कंधे ॥ तन्मेअस्तुत्र्यायुषमितिवामस्कंधे ॥ सर्वमस्तुशतायुषमितिशिरसि ॥
ॐ चमेस्वरश्चमेयज्ञोपचतेनमश्च ॥ यत्तेन्यूनंतस्मैतउपयत्तेतिरिक्तंतस्मैतेनमः ॥ अग्नयेनमः ॐ स्वस्ति ॥ श्रद्धांमेधांयशःप्रज्ञां

विद्यांबुद्धिंश्रियंबलं ॥ आयुष्यंतेजआरोग्यंदेहिमेहव्यवाहन ॥ देहिमेहव्यवाहनोंनमइति ॥ इतिसंप्रार्थ्य ॥ अनेनप्रातरग्निकार्यहोमेनभगवान्श्रीअग्निनारायणःप्रीयताम् ॥ सायंतुसायमग्निकार्यहोमेनेत्यूहः ॥ इत्यग्निकार्यप्रयोगः ॥ ॥ ७ ॥

## ॥ १५ ॥ अथौपासनःसायंहोमः ॥

श्रीः॥ गृह्याग्निमान्सायंप्रातर्होमेअग्नेःपश्चिमतउपविश्याचम्यप्राणानायम्यदेशकालाद्युच्चार्यममोपात्तदुरितक्षयद्वाराअग्निरूपीपरमेश्वरप्रीत्यर्थंसायमौपासनहोमंकरिष्यइतिसंकल्प्य ॥ चत्वारिशृंगेत्यग्निपुरुषंध्यात्वात्रिःपरिसमुह्यदर्भैःपरिस्तीर्याद्भिःपर्युक्ष्यहोमद्रव्यंसमिद्युतमग्नेरुत्तरतोनिधायज्वलतादर्भद्वयेनावज्वल्यप्रोक्ष्यतेनत्रिःपर्यग्निकृत्वातदुल्मुकंनिरस्यापउपस्पृश्यअग्नेःपश्चिमतआस्तीर्णेषुकुशेषुसमिधासहहविर्निधाय॥ विश्वानिनइतितृचस्यात्रेयोवसुश्रुतोऽग्निस्त्रिष्टुप् ॥ अग्न्यर्चनेविनियोगः॥ इति पूर्वाभ्यामृग्भ्यांप्रतिपादमष्टासुदिक्षुगंधादिनाग्निमभ्यर्च्य ॥ तृतीययाबद्धांजलिर्नमस्कृत्यदक्षिणंजान्वाच्यसमिधंतूष्णीमग्नौप्रक्षिप्यापउपस्पृश्यसमिधिप्रदीप्तायांविधूमज्वालांगारेषु शतसंख्यान्प्रस्थस्यचतुःषष्टितमभागमितान्वातंडुलान्दक्षिणहस्तेनादायसव्यपाणिंहृदिनिधायांगुल्युत्तरपार्श्वेनसमिन्मूलतोद्व्यंगुलप्रदेशे ॥ ॐ अग्नयेस्वाहेतिहुत्वा ॥ अग्नयइदं० ॥ पुनस्तंडुलानादायतस्याऐशानदेशेपूर्वाहुतेर्भूयसीमाहुतिं ॥ ॐ प्रजापतिपदंचतुर्थ्यंतंमनसास्मरन्स्वाहेत्युच्चार्यासंसृष्टांहुत्वाप्रजापतयइदंनम

१ अयंसर्वेषांगृह्याग्निमतांविवाहोत्तराव्यवहितागामिराव्यारब्धत्वात्संध्योत्तराव्यवहितकालएवास्यावश्यकत्वाच्चपूर्वमुपन्यस्तः। अयंचसायंसूर्यास्तात्प्रागग्नीनांगृह्याग्नेर्वाप्रादुष्करणं(प्रज्वलनं)कृत्वासूर्यास्तोत्तरंहोमःकार्यः । प्रादुष्करणकालातिक्रमे ॐ भूर्भुवःस्वःस्वाहेतिमंत्रेणस्रुवाज्याहुतिरूपंसर्वप्रायश्चित्तमाज्यसंस्कारपूर्वकंकृत्वाहोमःकार्यः ॥ आपदिसमस्यहोमपक्षहोमौसमारोपविधिश्चान्यत्रद्रष्टव्यः ॥

मेतित्यक्त्वापूर्ववदुपविश्यपरिस्तरणानिविसृज्यपरिसमूहनपर्युक्षणेकृत्वोपस्थानंकुर्यात् ॥ तत्रमंत्राः ॥ अग्नआयूंषीतितिसृणां शतंवैखानसाऋषयः ॥ अग्निःपवमानोदेवता ॥ गायत्रीछंदः ॥ अग्न्युपस्थानेविनियोगः ॥ ॐ अग्नआयूंषिपवसआसुवोर्जमिषं चनः ॥ आरेबाधस्वदुच्छुनां ॥ अग्निर्ऋषिःपवमानःपांचजन्यःपुरोहितः ॥ तमीमहेमहागयं ॥ अग्नेपवस्वस्वपाअस्मेवर्चःसुवीर्यं ॥ दधद्रयिंमयिपोषं ॥ इत्युपस्थाय ॥ अग्नेत्वंनइतिचतसृणांगौपायनालौपायनावाबंधुःसुबंधुःश्रुतबंधुर्विप्रबंधुश्चैकर्चाऋषयःअग्नि र्देवताद्विपदाविराट्छंदःअग्न्युपस्थानेवि० ॥ ॐ अग्नेत्वंनोअंतमउतत्राताशिवोभवावरूथ्यः ॥ वसुरग्निर्वसुश्रवाअच्छानक्षिद्यु मत्तमंरयिंदाः ॥ सनोबोधिश्रुधीहवमुरुष्याणोअघायतःसमस्मात् । तंत्वाशोचिष्ठदीदिवःसुम्नायनूनमीमहेसखिभ्यः ॥ प्रजाप तेहिरण्यगर्भःप्रजापतिस्त्रिष्टुप् ॥ प्रजापत्युपस्थानेवि० ॥ प्रजापतेनत्वदेतान्यन्योविश्वाजातानिपरितावभूव ॥ यत्कामास्तेजु हुमस्तन्नोअस्तुवयंस्यामपतयोरयीणां ॥ तंतुंतन्वन्नित्यस्यदेवाअग्निर्जगती ॥ अग्न्युपस्थानेवि० ॥ तंतुंतन्वन्रजसोभानुमन्विहिज्यो तिष्मतःपथोरक्षधियाकृतान् ॥ अनुल्बणंवयतजोगुवामपोमनुर्भवजनयादैव्यंजनं ॥ हिरण्यगर्भइत्यस्यहिरण्यगर्भःप्रजापतिस्त्रिष्टु प् ॥ प्रजापत्युपस्थानेवि० ॥ हिरण्यगर्भःसमवर्तताग्रेभूतस्यजातःपतिरेकआसीत् ॥ सदाधारपृथिवींद्यामुतेमांकस्मैदेवायहविषाविधेम ॥ एतैर्मंत्रैर्वायव्यदेशेप्रह्वःकृतांजलिरग्निमीक्षमाणउपस्थायपुनरुपविश्यमानस्तोकइतिविभूतिंधृत्वान्यूनातिरिक्ताछिद्रत्वा र्थंविष्णुस्मरणंकृत्वा ॥ अनेनहोमेनभगवान्परमेश्वरःप्रीयताम् ॥ ॐ तत्सद्ब्रह्मार्पणमस्त्वित्युक्त्वाग्निंसंभारयेत् ॥ इतिसायंहोमः

## ॥ १६ ॥ अथप्रातर्होमः ॥

श्रीः ॥ ममोपात्तदुरितक्षयद्वाराश्रीपरमेश्वरप्रीत्यर्थंप्रातरौपासनहोमंकरिष्ये ॥ चत्वारिश्रृंगेतिध्यानादिपूर्ववत् ॥ परिसमूहना

वज्वलनाद्यर्चनंपूर्ववत् ॥ समिधंतूष्णींअग्नौनिधाय ॥ ॐ सूर्यायस्वाहा सूर्यायेदं० ॥ ॐ प्रजापतयेस्वाहा प्रजापतयइदं० ॥ परिसमूहनादिकृत्वोपस्थानंकुर्यात् ॥ तिष्ठन् ॥ मंत्राः ॥ सूर्योनोदिवस्पात्वित्यस्यसौर्यश्चक्षुःसूर्योगायत्री ॥ सूर्योपस्थानेवि० ॥ ॐ सूर्योनोदिवस्पातुवातोअंतरिक्षात् ॥ अग्निर्नःपार्थिवेभ्यः ॥ उदुत्यंकाण्वःप्रस्कण्वःसूर्योगायत्री ॥ सूर्योपस्थानेवि० ॥ ॐ उदुत्यंजातवेदसंदेवंवहंतिकेतवः ॥ दृशेविश्वायसूर्यं ॥ चित्रंदेवानामित्यस्यांगिरसःकुत्सःसूर्यस्त्रिष्टुप् ॥ सूर्योपस्थानेवि० ॥ ॐ चित्रंदेवानामुदगादनीकंचक्षुर्मित्रस्यवरुणस्याग्नेः ॥ आप्राद्यावापृथिवीअंतरिक्षंसूर्यआत्माजगतस्तस्थुषश्च ॥ नमोमित्रस्येत्यस्यसौर्योभितपाःसूर्योजगती ॥ सूर्योपस्थानेवि० ॥ ॐ नमोमित्रस्यवरुणस्यचक्षसेमहोदेवायतदृतंसपर्यत ॥ दूरेदृशेदेवजाताय केतवेदिवस्पुत्रायसूर्यायशंसत ॥ एतैश्चतुर्भिःसूर्यमुपस्थाय ॥ प्रजापतेनत्वदेतान्० ॥ हिरण्यगर्भःसमवर्तता० ॥ इतिद्वाभ्यांप्रजापतिंचोपस्थायविभूतिंधृत्वा ॐ चमेस्वरश्चमेइतिप्रातर्होमेविशेषः ॥ इतिप्रातर्होमः ॥ कर्मेश्वरार्पणादिपूर्ववत् ॥ अस्तोत्तरंत्रिमुहूर्तांतःउदयोत्तरतश्चत्रिमुहूर्तांतरेवोभयत्रहोमंकुर्यात् ॥ स्वयमसंभवेपत्नीपुत्रःकुमारीभ्राताशिष्यादिर्वा ॥ त्यागंस्वयंपत्नीवा कुर्यात् ॥ तस्याअसंनिधौतदाज्ञयाऋत्विगादिरपि ॥ पत्न्याऋतुप्रसवोन्मादादिदोषेषुतदाज्ञांविनापिऋत्विगादिस्त्यागंकुर्यात् ॥

## ॥ १७ ॥ अथद्वादशनमस्काराः ॥

श्रीगणेशायनमः ॥ आचम्यप्राणानायम्य ॥ अद्यपूर्वोच्चरितवर्तमानएवंगुणविशेषणविशिष्टायांशुभपुण्यतिथौममआत्मनः श्रुतिस्मृतिपुराणोक्तफलप्राप्त्यर्थंश्रीसवितृसूर्यनारायणप्रीत्यर्थंद्वादशनमस्काराख्यंकर्मकरिष्येइतिसंकल्प्य ॥ ( पात्रेजलंगृहीत्वातन्मध्येगंधाक्षतपुष्पाणिक्षिप्त्वा ध्यानम् ) आकृष्णेनांगिरसोहिरण्यस्तूपःसवितात्रिष्टुप् ॥ सूर्यध्यानेविनियोगः ॥ ॐ आकृ

ष्णेनरजसावर्तमानोनिवेशयन्नमृतंमर्त्यंच ॥ हिरण्ययेनसवितारथेनादेवोयातिभुवनानिपश्यन् ॥ ध्येयःसदासवितृमंडल
मध्यवर्तीनारायणःसरसिजासनसन्निविष्टः ॥ केयूरवान्मकरकुंडलवान्किरीटीहारीहिरण्मयवपुर्धृतशंखचक्रः ॥ तेजोराशिंशि
यायुक्तंतप्तकांचनसन्निभम् ॥ किरीटिनंपद्मनेत्रंपद्मरागविभूषितम् ॥ पद्मासनंपद्मकरंपद्मगर्भसमद्युतिम् ॥ सप्ताश्वरथमारू
ढंद्विभुजंवरदंरविम् ॥ ॐ मित्रायनमः ॥ ॐ रवयेनमः ॥ ॐ सूर्यायनमः ॥ ॐ भानवेनमः ॥ ॐ खगायनमः ॥ ॐ पूष्णे
नमः ॥ ॐ हिरण्यगर्भायनमः ॥ ॐ मरीचयेनमः ॥ ॐ आदित्यायनमः ॥ ॐ सवित्रेनमः ॥ ॐ अर्कायनमः ॥ ॐ भास्करा
यनमः ॥ मित्ररविसूर्यभानुखगपूषहिरण्यगर्भमरीच्यादित्यसवित्रर्कभास्करेभ्योनमः ॥ विनतातनयोदेवःकर्मसाक्षीसुरेश्वरः ॥
सप्ताश्वःसप्तरज्जुश्चअरुणोमेप्रसीदतु ॥ ॐकर्मसाक्षिणेअरुणायनमः ॥ आदित्यस्यनमस्कारंयेकुर्वंतिदिनेदिने ॥ जन्मांतरस
हस्रेषुदारिद्र्यंनोपजायते ॥ अनेनद्वादशनमस्काराख्येनकर्मणाभगवान्सवितृसूर्यनारायणःप्रीयतांनमम ॥ अकालमृत्युहरणं
सर्वव्याधिविनाशनम् ॥ सूर्यपादोदकंतीर्थंजठरेधारयाम्यहम् ॥ इतितीर्थंगृह्णीयात् ॥ इतिद्वादशनमस्काराः ॥ ॥छ॥

## ॥ १८ ॥ अथतृचाकल्पनमस्काराः ॥

श्रीगणेशायनमः ॥ आचम्यप्राणानायम्य अद्येत्यादिदेशकालावुत्कीर्त्य श्रुतिस्मृतिपुराणोक्तफलप्राप्त्यर्थंश्रीसवितृसूर्यनारा
यणप्रीत्यर्थंचतृचाकल्पविधिनानमस्काराख्यंकर्मकरिष्ये ॥ ( पात्रेजलंगृहीत्वातन्मध्येगंधाक्षतपुष्पाणिक्षिप्त्वा ) ध्येयःसदा
सवितृमंडलमध्यवर्तीनारायणःसरसिजासनसंनिविष्टः ॥ केयूरवान्मकरकुंडलवान्किरीटीहारीहिरण्मयवपुर्धृतशंखचक्रः ॥
इतिध्यात्वा ॥ ॐ ह्रां उद्यन्नद्यमित्रमहः ह्रां ॐ मित्रायनमः ॥ ॐ ह्रीं आरोहन्नुत्तरांदिवम् ह्रीं ॐ रवयेनमः ॥ ॐ ह्रूं हृद्रो

गंममसूर्य ह्रूं ॐ सूर्यायनमः ॥ ॐ ह्रैं हरिमाणंचनाशय ह्रैं ॐ भानवेनमः ॥ ॐ ह्रौं शुकेषुमेहरिमाणम् ह्रौं ॐ खगायनमः ॥ ॐ ह्रः रोपणाकासुदध्मसि ह्रः ॐ पूष्णेनमः ॥ ॐ ह्रां अथोहारिद्रवेषुमे ह्रां ॐ हिरण्यगर्भायनमः ॥ ॐ ह्रीं हरिमाणंनिदध्म सि ह्रीं ॐ मरीचयेनमः ॥ ॐ ह्रूं उदगादयमादित्यः ह्रूं ॐ आदित्यायनमः ॥ ॐ ह्रैं विश्वेनसहसासह ह्रैं ॐ सवित्रेनमः॥ ॐ ह्रौं द्विषंतंमह्यंरंधयन् ह्रौं ॐ अर्कायनमः ॥ ॐ ह्रः मोअहंद्विषतेरधम् ह्रः ॐ भास्करायनमः ॥ ॐ ह्रांह्रीं उद्यन्नद्यमि त्रमहआरोहन्नुत्तरांदिवं ह्रांह्रीं ॐ मित्ररविभ्यांनमः ॥ ॐ ह्रूंह्रैं हृद्रोगंममसूर्यहरिमाणंचनाशय ह्रूंह्रैं ॐ सूर्यभानुभ्यांनमः॥ ॐ ह्रौंह्रः शुकेषुमेहरिमाणंरोपणाकासुदध्मसि ह्रौंह्रः ॐ खगपूषभ्यांनमः ॥ ॐ ह्रांह्रीं अथोहारिद्रवेषुमेहरिमाणंनिदध्म सि ह्रांह्रीं ॐ हिरण्यगर्भमरीचिभ्यांनमः ॥ ॐ ह्रूंह्रैं उदगादयमादित्योविश्वेनसहसासह ह्रूंह्रैं ॐ आदित्यसवितृभ्यां नमः ॥ ॐ ह्रौंह्रः द्विषंतंमह्यंरंधयन्मोअहंद्विषतेरधं ह्रौंह्रः ॐ अर्कभास्कराभ्यांनमः ॥ ॐ ह्रांह्रींह्रूंह्रैं उद्यन्नद्य० दिवं हृद्रो० नाशय ह्रांह्रींह्रूंह्रैं ॐ मित्ररविसूर्यभानुभ्यो० ॥ ॐ ह्रौंह्रःह्रांह्रीं शुके० सुदध्मसि ॥ अथोहा० निदध्मसि ह्रौंह्रःह्रांह्रीं ॐ खगपूषहिरण्यगर्भमरीचिभ्यो० ॥ ॐ ह्रूंह्रैंह्रौंह्रः उदगादय० सह ॥ द्विषंतं० रधं ह्रूंह्रैंह्रौंह्रः ॐ आदित्यसवित्र र्कभास्करेभ्योनमः ॥ ॐ ह्रांह्रींह्रूंह्रैंह्रौंह्रः ह्रांह्रींह्रूंह्रैंह्रौंह्रः उद्यन्न० द्विषंतंमह्यंरंधयन्मोअहंद्विषतेरधं ह्रांह्रींह्रूंह्रैंह्रौंह्रः ह्रांह्रींह्रूं ह्रैंह्रौंह्रः ॥ ॐ मित्ररविसूर्यभानुखगपूषहिरण्यगर्भमरीच्यादित्यसवित्रर्कभास्करेभ्योनमः ॥ इतित्रिः ॥ विनतातनयोदेवइ त्यरुणंप्रणमेत् ॥ आदित्यस्यनमस्कारमित्यादिपूर्ववत् ॥ अनेनतृचाकल्पनमस्काराख्येनकर्मणाभगवान्श्रीसवितृसूर्यनारायणः प्रीयतां ॥ इतितृचाकल्पनमस्काराः ॥ तृचाकल्पपद्धतिरग्रेवक्ष्यते ॥ ॥ ॥ छ ॥

## ॥ १९ ॥ अथसौरप्रारंभः ॥

श्रीः ॥ ॐ उदुत्यमितित्रयोदशर्चस्यसूक्तस्यकाण्वःप्रस्कण्वःसूर्योनवाद्यागायत्र्योऽत्याश्चतस्रोऽनुष्टुभोंत्यस्तृचोरोगघ्नउपनिषदं त्योर्धर्चोद्विषघ्नः ॥ चित्रंदेवानामितिषळर्चस्यसूक्तस्यांगिरसःकुत्सःसूर्यस्त्रिष्टुप् ॥ इंद्रंमित्रमितिद्वयोरौचथ्योदीर्घतमाःसूर्य स्त्रिष्टुप् ॥ हंसःशुचिषदित्यस्यगौतमोवामदेवःसूर्योजगती ॥ यत्त्वेतिभौमात्रिःसूर्योऽनुष्टुप् ॥ यदद्येत्येकाउत्सूर्यइतितिस्रःउ द्वेतीतिचतस्रोर्धपंचमाःएतासांमैत्रावरुणिर्वसिष्ठःसूर्यस्त्रिष्टुप् ॥ उदुत्यद्दर्शतमितितृचस्यमैत्रावरुणिर्वसिष्ठःसूर्यःआद्याबृहती द्वितीयासतोबृहतीतृतीयापुरउष्णिक् ॥ बण्महानितिद्वयोर्भार्गवोजमदग्निःसूर्यःआद्याबृहतीउत्तरासतोबृहती ॥ नमोमि त्रस्येतिद्वादशर्चस्यसूक्तस्यसौर्योभितपाःसूर्योजगतीदशमीत्रिष्टुप् ॥ सूर्योनइतिपंचर्चस्यसूक्तस्यसौर्यश्चक्षुःसूर्योगायत्री ॥ वि भ्राड्बृहदितिचतसृणांसौर्योविभ्राट्सूर्योजगतीअंत्याप्रस्तारपंक्तिः ॥ आयंगौरितितृचस्यसार्पराज्ञीसूर्योगायत्री ॥ श्रीसवितृ सूर्यनारायणप्रीत्यर्थेसौरमंत्रजपेविनियोगः ॥ ॐ उदुत्यंजातवेदसंदेवंवहंतिकेतवः ॥ दृशेविश्वायसूर्यं ॥ अपत्येतायवोयथा नक्षत्रायंत्यक्तुभिः ॥ सूरायविश्वचक्षसे ॥ अदृश्रमस्यकेतवोविरश्मयोजनाँअनु ॥ भ्राजंतोऽअग्नयोयथा ॥ तरणिर्विश्वदर्श तोज्योतिष्कृदसिसूर्य ॥ विश्वमाभासिरोचनं ॥ प्रत्यङ्देवानांविशःप्रत्यङ्ङुदेषिमानुषान् ॥ प्रत्यङ्विश्वंस्वर्दृशे ॥ १ ॥ येना पावकचक्षसाभुरण्यंतंजनाँअनु ॥ त्वंवरुणपश्यसि ॥ विद्यामेषिरजस्पृथ्वहामिमानोऽअक्तुभिः ॥ पश्यन्जन्मानिसूर्य ॥ सप्त त्वाहरितोरथेवहंतिदेवसूर्य ॥ शोचिष्केशंविचक्षण ॥ अयुक्तसप्तशुंध्युवःसूरोरथस्यनप्त्यः ॥ ताभिर्यातिस्वयुक्तिभिः ॥ उद्व यंतमसस्परिज्योतिष्पश्यंतउत्तरं ॥ देवंदेवत्रासूर्यमगन्मज्योतिरुत्तमं ॥ उद्यन्नद्यमित्रमहऽआरोहन्नुत्तरांदिवं ॥ हृद्रोगंममसू

यंहरिमाणंचनाशय ॥ शुकेषुमेहरिमाणंरोपणाकासुदध्मसि ॥ अथोहारिद्रवेषुमेहरिमाणंनिदध्मसि ॥ उदगादयमादित्योवि
श्वेनसहसासह ॥ द्विषंतंमह्यंरंधयन्मोऽअहंद्विषतेरधं ॥ २ ॥ चित्रंदेवानामुदगादनीकंचक्षुर्मित्रस्यवरुणस्याग्नेः ॥ आप्राद्या
वापृथिवीऽअंतरिक्षंसूर्यऽआत्माजगतस्तस्थुषश्च ॥ सूर्योदेवीमुषसंरोचमानांमर्योनयोषामभ्येतिपश्चात् ॥ यत्रानरोदेवयंतोयु
गानिवितन्वतेप्रतिभद्रायभद्रं ॥ भद्राऽअश्वाहरितःसूर्यस्यचित्राऽएतग्वाऽअनुमाद्यासः ॥ नमस्यंतोदिवऽआपृष्ठमस्थुःपरि
द्यावापृथिवीयंतिसद्यः ॥ तत्सूर्यस्यदेवत्वंतन्महित्वंमध्याकर्तोविततंसंजभार ॥ यदेदयुक्तहरितःसधस्थादाद्रात्रीवासस्तनुते
सिमस्मै ॥ तन्मित्रस्यवरुणस्याभिचक्षेसूर्योरूपंकृणुतेद्योरुपस्थे ॥ अनंतमन्यद्रुशदस्यपाजःकृष्णमन्यद्धरितःसंभरंति ॥ अद्या
देवाऽउदितासूर्यस्यनिरंहसःपिपृतानिरवद्यात् ॥ तन्नोमित्रोवरुणोमामहंतामदितिःसिंधुःपृथिवीऽउतद्यौः ॥ ३ ॥ इंद्रंमित्रंव
रुणमग्निमाहुरथोदिव्यःससुपर्णोगरुत्मान् ॥ एकंसद्विप्राबहुधावदंत्यग्निंयमंमातरिश्वानमाहुः ॥ कृष्णंनियानंहरयःसुपर्णाऽअ
पोवसानादिवमुत्पतंति ॥ तऽआववृत्रन्त्सदनादृतस्यादिद्घृतेनपृथिवीव्युद्यते ॥ हंसःशुचिषद्वसुरंतरिक्षसद्धोतावेदिषदतिथि
र्दुरोणसत् ॥ नृषद्वरसदृतसद्व्योमसदब्जागोजाऽऋतजाअद्रिजाऋतं ॥ यत्त्वासूर्यस्वर्भानुस्तमसाविध्यदासुरः ॥ अक्षेत्रविद्य
थामुग्धोभुवनान्यदीधयुः ॥ ४ ॥ यदद्यसूर्यब्रवोनागाऽउद्यन्मित्रायवरुणायसत्यं ॥ वयंदेवत्रादितेस्यामतवप्रियासोऽअर्यम
न्गृणंतः ॥ उत्सूर्योबृहदर्चींष्यश्रेत्पुरुविश्वाजनिममानुषाणां ॥ समोदिवादद्दृशेरोचमानःक्रत्वाकृतःसुकृतःकर्तृभिर्भूत् ॥ ससू
र्यप्रतिपुरोनऽउद्गाऽएभिःस्तोमेभिरेतशेभिरेवैः ॥ प्रनोमित्रायवरुणायवोचोनागसोऽअर्यम्णेऽअग्नयेच ॥ विनःसहस्रंशुरुधोर
दंत्वृतावानोवरुणोमित्रोऽअग्निः ॥ यच्छंतुचंद्राऽउपमंनोऽअर्कमानःकामंपूपुरंतुस्तवानाः ॥ ५ ॥ उद्वेतिसुभगोविश्वचक्षाः

साधारणः सूर्योमानुषाणां ॥ चक्षुर्मित्रस्यवरुणस्यदेवश्चर्मेवयःसमविव्यक्तमांसि ॥ उद्वेतिप्रसवीताजनानांमहान्केतुरर्णवःसूर्यस्य ॥ समानंचक्रंपर्याविवृत्सन्यदेतशोवहतिधूर्षुयुक्तः ॥ विभ्राजमानउषसामुपस्थाद्रेभैरुदेत्यनुमद्यमानः ॥ एषमेदेवःसविताचच्छंदयःसमानंनप्रमिनातिधाम ॥ दिवोरुक्मउरुचक्षाउदेतिदूरेअर्थस्तरणिर्भ्राजमानः ॥ नूनंजनाःसूर्येणप्रसूताअयन्नर्थानिकृणवन्नपांसि ॥ यत्राचक्रुरमृतागातुमस्मैश्येनोनदीयन्नन्वेतिपाथः ॥ उदुत्यद्दर्शतंवपुर्दिवएतिप्रतिह्वरे ॥ यदीमाशुर्वहतिदेवएतशोविश्वस्मैचक्षसेअरं ॥ शीर्ष्णःशीर्ष्णोजगतस्तस्थुषस्पतिंसमयाविश्वमारजः ॥ सप्तस्वसारःसुवितायसूर्यंवहंतिहरितोरथे ॥ ६ ॥ तच्चक्षुर्देवहितंशुक्रमुच्चरत् ॥ पश्येमशरदःशतंजीवेमशरदःशतम् ॥ बण्महाँअसिसूर्यबळादित्यमहाँअसि ॥ महस्तेसतोमहिमापनस्यतेद्धादेवमहाँअसि ॥ बट्सूर्यश्रवसामहाँअसिसत्रादेवमहाँअसि ॥ मह्नादेवानामसुर्यःपुरोहितोविभुज्योतिरदाभ्यं ॥ ७ ॥ नमोमित्रस्यवरुणस्यचक्षसेमहोदेवायतदृतंसपर्यत ॥ दूरेदृशेदेवजातायकेतवेदिवस्पुत्रायसूर्यायशंसत ॥ सामासत्योक्तिःपरिपातुविश्वतोद्यावाचयत्रततनन्नहानिच ॥ विश्वमन्यन्निविशतेयदेजतिविश्वाहापोविश्वाहोदेतिसूर्यः ॥ नतेअदेवःप्रदिवोनिवासतेयदेतशेभिःपतरैरथर्यसि ॥ प्राचीनमन्यदनुवर्ततेरजउदन्येनज्योतिषायासिसूर्य ॥ येनसूर्यज्योतिषाबाधसेतमोजगच्चविश्वमुदियर्षिभानुना ॥ तेनास्मद्विश्वामनिरामनाहुतिमपामीवामपदुःष्वप्न्यंसुव ॥ विश्वस्यहिप्रेषितोरक्षसिव्रतमहेळयन्नुच्चरसिस्वधाअनु ॥ यदद्यत्वासूर्योपब्रवामहैतन्नोदेवाअनुमंसीरतक्रतुं ॥ तन्नोद्यावापृथिवीतन्नआपइंद्रःशृण्वंतुमरुतोहवंवचः ॥ माशूनेभूमसूर्यस्यसंदृशिभद्रंजीवंतोजरणामशीमहि ॥ ८ ॥ विश्वाहात्वासुमनसःसुचक्षसःप्रजावंतोअनमीवाअनागसः ॥ उद्यंतंत्वामित्रमहोदिवेदिवेज्योग्जीवाःप्रतिपश्येमसूर्य ॥ महिज्योतिर्बिभ्रतंत्वाविचक्ष

णभास्वंतंचक्षुषेचक्षुषेमयः ॥ आरोहंतंबृहतःपाजसस्परिवयंजीवाःप्रतिपश्येमसूर्य ॥ यस्यतेविश्वाभुवनानिकेतुनाप्रचेरतेनि
चविशंतेऽअक्तुभिः॥ अनागास्त्वेनंहरिकेशसूर्याह्नाह्नानोवस्यसावस्यसोदिहि ॥ शंनोभवचक्षसाशंनोऽअह्नाशंभानुनाशंहिमाशं
घृणेन॥ यथाशमध्वंच्छमसद्दुरोणेतत्सूर्यद्रविणंधेहिचित्रं ॥ अस्माकंदेवाऽउभयायजन्मनेशर्मयच्छतद्विपदेचतुष्पदे ॥ अदत्पिबं
दूर्जयमानमाशितंतदस्मेशंयोररपोदधातन ॥ यद्वोदेवाश्चकृमजिह्वयागुरुमनसोवाप्रयुतीदेवहेळनं ॥ अरावायोनोऽअभिदुच्छु
नायतेतस्मिन्तदेनोवसवोनिधेतन ॥ ९ ॥ सूर्योनोदिवस्पातुवातोऽअंतरिक्षात् ॥ अग्निर्नःपार्थिवेभ्यः ॥ जोषासवितर्यस्य
तेहरःशतंसवाँअर्हति ॥ पाहिनोदिद्युतःपतंत्याः ॥ चक्षुर्नोदेवःसविताचक्षुर्नऽउतपर्वतः ॥ चक्षुर्धातादधातुनः ॥ चक्षुर्नोधे
हिचक्षुषेचक्षुर्विख्यैतनूभ्यः ॥ संचेदंविचपश्येम ॥ सुसंदृशंत्वावयंप्रतिपश्येमसूर्य ॥ विपश्येमनृचक्षसः ॥ १० ॥ . विभ्राड्बृ
हत्पिबतुसोम्यंमध्वायुर्दधद्यज्ञपतावविह्रुतं ॥ वातजूतोयोऽअभिरक्षतित्मनाप्रजाःपुपोषपुरुधाविराजति ॥ विभ्राड्बृहत्सुभृतं
वाजसातमंधर्मंदिवोधरुणेसत्यमर्पितं॥ अमित्रहावृत्रहादस्युहंतमंज्योतिर्जज्ञेऽअसुरहासपत्नहा ॥ इदंश्रेष्ठंज्योतिषांज्योतिरुत्तमं
विश्वजिद्धनजिदुच्यतेबृहत् । विश्वभ्राड्भ्राजोमहिसूर्योदृशऽउरुपप्रथेसहऽओजोअच्युतं ॥ विभ्राजंज्योतिषास्व१रगच्छो
रोचनंदिवः ॥ येनेमाविश्वाभुवनान्याभृताविश्वकर्मणाविश्वदेव्यावता ॥ ११ ॥ आयंगौःपृश्निरक्रमीदसदन्मातरंपुरः ॥
पितरंचप्रयन्त्स्वः ॥ अंतश्चरतिरोचनास्यप्राणादपानती ॥ व्यख्यन्महिषोदिवं ॥ त्रिंशद्धामविराजतिवाक्पतंगायधीयते ॥
प्रतिवस्तोरहद्युभिः ॥ १२ ॥ सवितापश्चातात्सवितापुरस्तात्सवितोत्तरात्तात्सविताधरात्तात् ॥ सवितानःसुवतुसर्वतातिंस
वितानोरासतांदीर्घमायुः ॥ श्रीसवितृसूर्यनारायणार्पणमस्तु ॥ ॥ इतिसौरसूक्तानि ॥ ॥ ७ ॥

## ॥ २० ॥ अथदेवपूजाप्रारंभः ॥

श्रीगणेशायनमः ॥ ॥ आचम्यप्राणायामंकृत्वा ॥ श्रीमन्महागणाधिपतयेनमः ॥ लक्ष्मीनारायणाभ्यांनमः ॥ उमामहेश्वराभ्यांनमः ॥ शचीपुरंदराभ्यांनमः ॥ मातापितृभ्यांनमः ॥ इष्टदेवताभ्योनमः ॥ कुलदेवताभ्योनमः ॥ ग्रामदेवताभ्योनमः ॥ स्थानदेवताभ्योनमः ॥ वास्तुदेवताभ्योनमः ॥ आदित्यादिनवग्रहदेवताभ्योनमः ॥ सर्वेभ्योदेवेभ्योनमः ॥ सर्वेभ्योब्राह्मणेभ्योनमोनमः ॥ एतत्कर्मप्रधानदेवताभ्योनमः ॥ अविघ्नमस्तु ॥ सुमुखश्चैकदंतश्चकपिलोगजकर्णकः ॥ लंबोदरश्चविकटोविघ्ननाशोगणाधिपः ॥ धूम्रकेतुर्गणाध्यक्षोभालचंद्रोगजाननः ॥ द्वादशैतानिनामानियः पठेच्छृणुयादपि ॥ विद्यारंभेविवाहेचप्रवेशेनिर्गमेतथा ॥ संग्रामेसंकटेचैवविघ्नस्तस्यनजायते ॥ शुक्लांबरधरंदेवंशशिवर्णंचतुर्भुजम् ॥ प्रसन्नवदनंध्यायेत्सर्वविघ्नोपशांतये ॥ सर्वमंगलमांगल्येशिवेसर्वार्थसाधिके ॥ शरण्येत्र्यंबकेगौरिनारायणिनमोऽस्तुते ॥ सर्वदासर्वकार्येषुनास्तितेषाममंगलम् ॥ येषांहृदिस्थोभगवान्मंगलायतनंहरिः ॥ तदेवलग्नंसुदिनंतदेवताराबलंचंद्रबलंतदेव ॥ विद्याबलंदैवबलंतदेवलक्ष्मीपतेतेंऽघ्रियुगंस्मरामि ॥ लाभस्तेषांजयस्तेषांकुतस्तेषांपराजयः ॥ येषामिंदीवरश्यामोहृदयस्थोजनार्दनः ॥ विनायकंगुरुंभानुंब्रह्मविष्णुमहेश्वरान् ॥ सरस्वतींप्रणौम्यादौसर्वकार्यार्थसिद्धये ॥ अभीप्सितार्थसिद्ध्यर्थंपूजितोयःसुरासुरैः ॥ सर्वविघ्नहरस्तस्मैगणाधिपतयेनमः ॥ सर्वेष्वारब्धकार्येषुत्रयस्त्रिभुवनेश्वराः ॥ देवादिशंतुनः

---

१ कामासक्तोऽथवाक्रुद्धःशालिग्रामशिलार्चनात् । भक्त्यावायदिवाभक्त्याकलौमुक्तिमवाप्नुयात् ॥ इतिस्कांदे ॥ योमोहादथवालस्यादकृत्वादेवतार्चनम् । भुंक्तेसयातिनरकंसूकरेष्वभिजायते । इतिकौर्मे ॥ अतोऽहरहर्देवपूजाप्रतिपुरुषमावश्यकी । अकरणेप्रत्यवायप्राप्तेः ॥

सिद्धिं ब्रह्मेशानजनार्दनाः ॥ श्रीमद्भगवतोमहापुरुषस्यविष्णोराज्ञयाप्रवर्तमानस्यअद्यब्रह्मणोद्वितीयेपरार्धेविष्णुपदेश्रीश्वेतवाराहकल्पेवैवस्वतमन्वंतरे अष्टाविंशतितमेयुगेयुगचतुष्केकलियुगेप्रथमचरणेजंबुद्वीपेभरतवर्षेदक्षिणापथेरामक्षेत्रेबौद्धावतारेदंडकारण्येदेशेशालिवाहनशकेसंधौवर्तमानेगोदावर्याःदक्षिणेतीरे (वोत्तरेतीरे) वर्तमानव्यावहारिकेअमुकनामसंवत्सरेअमुकायनेअमुकर्तौअमुकमासेअमुकपक्षेअमुकतिथौअमुकवासरेअमुकदिवसनक्षत्रे अमुकस्थितेवर्तमानेचंद्रेअमुकस्थितेश्रीसूर्येअमुकस्थितेदेवगुरौ शेषेषुग्रहेषुयथायथंराशिस्थानस्थितेषुसत्सुशुभनामयोगेशुभकरणेएवंगुणविशेषणविशिष्टायांशुभपुण्यतिथौममआत्मनःश्रुतिस्मृतिपुराणोक्तफलप्राप्त्यर्थंअस्माकंसकुटुंबानांसपरिवाराणां (द्विपद्चतुष्पदसहितानां) क्षेमस्थैर्यायुरारोग्यैश्वर्याभिवृद्ध्यर्थंसमस्ताभ्युदयार्थंचश्रीअमुकदेवताप्रीत्यर्थंयथामीलितोपचारद्रव्यैः ध्यानावाहनादिषोडशोपचारपूजांकरिष्ये॥ आसनादिविधिं शरीरशुद्ध्यर्थंपुरुषसूक्तन्यासंपञ्चांगन्यासंकलशशंखघंटादिपूजनंचकरिष्ये ॥ आदौनिर्विघ्नतासिद्ध्यर्थंमहागणपतिस्मरणंचकरिष्ये ॥ गणानांत्वाशौनकोगृत्समदोगणपतिर्जगती ॥ गणपतिस्मरणेविनियोगः ॥ ॐ गणानांत्वागणपतिंहवामहेकविंकवीनामुपमश्रवस्तमं ॥ ज्येष्ठराजंब्रह्मणांब्रह्मणस्पतआनःशृण्वन्नूतिभिःसीदसादनं ॥ वक्रतुंडमहाकायसूर्यकोटिसमप्रभ ॥ निर्विघ्नंकुरुमेदेवसर्वकार्येषुसर्वदा ॥ ॐ महागणाधिपतयेनमोनमः॥ आसनविधिः ॥ पृथ्वीतिमंत्रस्य । मेरुपृष्ठऋषिः । कूर्मोदेवता । सुतलंछंदः । आसनेविनियोगः ॥ ॐ पृथ्वित्वयाधृतालोकादेवित्वंविष्णुनाधृता ॥ त्वंचधारयमांदेविपवित्रंकुरुचासनम् ॥ अपसर्पंतुवामदेवोभूतान्यनुष्टुप् । भूतोत्सादनेविनियोगः ॥ ॐ अपसर्पंतुतेभूतायेभूताभूमिसं

---

१ महानासनविधिर्भूशुद्ध्यादयःसर्वेन्यासाश्चसविस्तरमाह्निकांतेऽनुपदमेवयोजितास्तत्रद्रष्टव्याःसतिसंभवेकार्याश्च ॥

स्थिताः ॥ येभूताविघ्नकर्तारस्तेगच्छंतुशिवाज्ञया ॥ अपक्रामंतुभूतानिपिशाचाःसर्वतोदिशम् ॥ सर्वेषामविरोधेनपूजाकर्मस मारभे ॥ तीक्ष्णदंष्ट्रमहाकायकल्पांतदहनोपम ॥ भैरवायनमस्तुभ्यमनुज्ञांदातुमर्हसि ॥ इतिभैरवंनमस्कृत्य ॥ वामपादत लपार्ष्णेनभूमिंत्रिःप्रहृत्य ॥ देवाआयांतु ॥ यातुधानाअपयांतु ॥ विष्णोदेवयजनंरक्षस्व ॥ भूमौप्रादेशंकुर्यात् ॥ येभ्योमा ताइत्यस्यगयःप्लातोविश्वेदेवाजगती ॥ मनुष्यगंधनिवारणेविनियोगः ॥ एवापित्रइत्यस्यवामदेवोबृहस्पतिर्विश्वेदेवास्त्रिष्टुप् ॥ मनुष्यगंधनिवारणेविनियोगः ॥ ॐ येभ्योमाताम्रधुमत्पिन्वतेपयःपीयूषंद्यौरदितिरद्रिबर्हाः ॥ उक्थशुष्मान्वृषभरान्त्स्वप्नस स्ताँआदित्याँअनुमदास्वस्तये ॥ ॐ एवापित्रेविश्वदेवायवृष्णेयज्ञैर्विधेमनमसाहविर्भिः ॥ बृहस्पतेसुप्रजावीरवंतोवयंस्या मपतयोरयीणाम् ॥ सहस्रशीर्षाषोळशनारायणःपुरुषोऽनुष्टुप् । अंत्यात्रिष्टुप् । स्वांगन्यासेविनियोगः ॥ ॐ सहस्रशीर्षापु रुषःसहस्राक्षःसहस्रपात् ॥ सभूमिंविश्वतोवृत्वात्यतिष्ठद्दशांगुलं ॥ वामकरायनमः ॥ ॐ पुरुषएवेदंसर्वंयद्भूतंयच्चभव्यं ॥ उतामृतत्वस्येशानोयदन्नेनातिरोहति ॥ दक्षिणकरायनमः ॥ ॐ एतावानस्यमहिमातोज्यायाँश्चपूरुषः ॥ पादोस्यविश्वा भूतानित्रिपादस्यामृतंदिवि ॥ वामपादायनमः ॥ ॐ त्रिपादूर्ध्वउदैत्पुरुषःपादोस्येहाभवत्पुनः ॥ ततोविष्वङ्व्यक्राम त्साशनानशनेअभि ॥ दक्षिणपादायनमः ॥ ॐ तस्माद्विराळजायतविराजोऽअधिपूरुषः ॥ सजातोऽअत्यरिच्यतपश्चाद्भू मिमथोपुरः ॥ वामजानवेनमः ॥ ॐ यत्पुरुषेणहविषादेवायज्ञमतन्वत ॥ वसंतोऽअस्यासीदाज्यंग्रीष्मइध्मःशरद्धविः ॥ दक्षिणजानवेनमः ॥ ॐ तंयज्ञंबर्हिषिप्रौक्षन्पुरुषंजातमग्रतः ॥ तेनदेवाऽअयजंतसाध्याऋषयश्चये ॥ वामकट्यैनमः ॥ ॐ

---

१ इमौमंत्रौपठित्वाघंटांसंवाद्यतदनंतरंसंकल्पादिपूजारंभःकार्यइतिधर्मसिंधौ ॥ केचनन्यासादावंतेवापठंतितत्रयथाचारंव्यवस्था ॥

तस्माद्यज्ञात्सर्वहुतःसंभृतंपृषदाज्यं ॥ पशून्तांश्चक्रेवायव्यानारण्यान्ग्राम्याश्चये ॥ दक्षिणकट्यैनमः ॥ ॐ तस्माद्यज्ञात्सर्वहु
तऋचःसामानिजज्ञिरे ॥ छंदांसिजज्ञिरेतस्माद्यजुस्तस्मादजायत ॥ नाभ्यैनमः ॥ ॐ तस्मादश्वाअजायंतयेकेचोभयादंतः ॥
गावोहजज्ञिरेतस्मात्तस्माज्जाताऽअजावयः ॥ हृदयायनमः ॥ ॐ यत्पुरुषंव्यदधुःकतिधाव्यकल्पयन् ॥ मुखंकिमस्यकौबाहू
काऊरूपादाउच्येते ॥ कंठायनमः ॥ ॐ ब्राह्मणोस्यमुखमासीद्बाहूराजन्यःकृतः ॥ ऊरूतदस्ययद्वैश्यःपद्भ्यांशूद्रोऽअजायत ॥
वामभुजायनमः ॥ ॐ चंद्रमामनसोजातश्चक्षोःसूर्योऽअजायत ॥ मुखादिंद्रश्चाग्निश्चप्राणाद्वायुरजायत ॥ दक्षिणभुजाय
नमः ॥ ॐ नाभ्याऽआसीदंतरिक्षंशीर्ष्णोद्यौःसमवर्तत ॥ पद्भ्यांभूमिर्दिशःश्रोत्रात्तथालोकाँऽअकल्पयन् ॥ मुखायनमः ॥
ॐ सप्तास्यासन्परिधयस्त्रिःसप्तसमिधःकृताः ॥ देवायद्यज्ञंतन्वानाऽअबध्नन्पुरुषंपशुं ॥ नेत्राभ्यांनमः ॥ ॐ यज्ञेनयज्ञमय
जंतदेवास्तानिधर्माणिप्रथमान्यासन् ॥ तेहनाकंमहिमानःसचंतयत्रपूर्वेसाध्याःसंतिदेवाः ॥ मूर्ध्नेनमः ॥ पंचांगन्यासः[1] ॥
ॐ ब्राह्मणोस्यमुखमासीद्बाहूराजन्यःकृतः ॥ ऊरूतदस्ययद्वैश्यःपद्भ्यांशूद्रोऽअजायत॥ हृदये ॥ ॐ चंद्रमामनसोजातश्चक्षोःसू
र्योऽअजायत ॥ मुखादिंद्रश्चाग्निश्चप्राणाद्वायुरजायत॥ शिरसि॥ ॐ नाभ्याऽआसीदंतरिक्षंशीर्ष्णोद्यौःसमवर्तत॥पद्भ्यांभूमि
र्दिशःश्रोत्रात्तथालोकाँऽअकल्पयन् ॥ शिखायां ॥ ॐ सप्तास्यासन्परिधयस्त्रिःसप्तसमिधःकृताः ॥ देवायद्यज्ञंतन्वानाऽअब
ध्नन्पुरुषंपशुं ॥ कवचायहुं ॥ ॐ यज्ञेनयज्ञमयजंतदेवास्तानिधर्माणिप्रथमान्यासन् ॥ तेहनाकंमहिमानःसचंतयत्रपूर्वेसा

१ आचारचंद्रिकायांतु अतोदेवेतिषडंगउक्तः ॥ अतोदेवा० हृदयाय० ॥ इदंविष्णु० शिरसे० ॥ त्रीणिपदा० शिखायै० ॥ विष्णोःकर्मा
णि० कवचाय० ॥ तद्विष्णोः० नेत्रत्रयाय० ॥ तद्विप्रासो० अस्त्राय० ॥ न्यासस्तुयथादेहेतथादेवेन्यसेत्पौरुषमित्यादिवचनात्स्वांगेदेवांगेचकल्प्यः ॥

ध्याःसंतिदेवाः ॥ अस्त्रायफट् ॥ इतिदिग्बंधः ॥ कलशस्यमुखेविष्णुःकंठेरुद्रःसमाश्रितः ॥ मूलेतत्रस्थितोब्रह्मामध्येमातृगणाःस्मृताः ॥ कुक्षौतुसागराःसर्वेसप्तद्वीपावसुंधरा ॥ ऋग्वेदोऽथयजुर्वेदःसामवेदोह्यथर्वणः ॥ अंगैश्चसहिताःसर्वेकलशंतुसमाश्रिताः ॥ अत्रगायत्रीसावित्रीशांतिःपुष्टिकरीतथा ॥ आयांतुदेवपूजार्थंदुरितक्षयकारकाः ॥ गंगेचयमुनेचैवगोदावरिसरस्वति ॥ नर्मदेसिंधुकावेरिजलेऽस्मिन्सन्निधिंकुरु ॥ कलशेगंगादितीर्थान्यावाहयामि ॥ कलशदेवताभ्योनमःसर्वोपचारार्थेगंधाक्षतपुष्पंसमर्पयामि ॥ धेनुमुद्रांप्रदर्श्य ॥ प्रक्षालितंशंखंप्रणवेनापूर्य ॥ ॐ शंखादौचंद्रदैवत्यंकुक्षौवरुणदेवता ॥ पृष्ठेप्रजापतिंविद्यादग्रेगंगासरस्वती ॥ त्रैलोक्येयानितीर्थानिवासुदेवस्यचाज्ञया ॥ शंखेतिष्ठंतिविप्रेंद्रतस्माच्छंखंप्रपूजयेत् ॥ त्वंपुरासागरोत्पन्नोविष्णुनाविधृतःकरे ॥ नमितःसर्वदेवैश्चपांचजन्यनमोस्तुते ॥ ॐ पांचजन्यायविद्महेपावमानायधीमहि ॥ तन्नःशंखःप्रचोदयात् ॥ शंखदेवताभ्योनमःसर्वोपचारार्थेचंदनंपुष्पंसमर्पयामि ॥ शंखमुद्रांप्रदर्श्य ॥ आगमार्थंतुदेवानांगमनार्थंतुरक्षसाम् ॥ कुर्वेघंटारवंतत्रदेवताह्वानलक्षणम् ॥ घंटायैनमःसर्वोपचारार्थेगंधाक्षतपुष्पंसमर्पयामि ॥ ॐ दिवेदिवेसदृशीरन्यमर्धंकृष्णाअसेधदपसद्मनोजाः ॥ अहंदासावृषभोवस्नयंतोदव्रजेवर्तिनंशंबरंच ॥ दीपदेवताभ्यो० गंधाक्षतपुष्पंसमर्पयामि ॥ कलशशंखोदकेन ॥ अपवित्रःपवित्रोवासर्वावस्थांगतोऽपिवा ॥ यःस्मरेत्पुंडरीकाक्षंसबाह्याभ्यंतरंशुचिः ॥ आत्मानंप्रोक्ष्यपूजाद्रव्याणिचसंप्रोक्षेत् ॥ अथध्यानम् ॥ अंजलौपुष्पंगृहीत्वा ॥ शांताकारंभुजगशयनंपद्मनाभंसुरेशंविश्वाधारंगगनसदृशंमेघवर्णंशुभांगम् ॥ लक्ष्मीकांतंकमलनयनंयोगिभिर्ध्यानगम्यंवंदेविष्णुंभवभयहरंसर्वलोकैकनाथम् ॥ १ ॥ ध्यायेन्नित्यंमहेशंरजतगिरिनिभंचारुचंद्रावतंसंरत्नाकल्पोज्ज्वलांगंपरशुमृगवराभीतिहस्तंप्रसन्नं ॥ पद्मासीनंसमंतात्स्तुतममरगणैर्व्याघ्रकृ

उत्तरदिक्

| [1]विष्णुपंचायतनं | | शिवपंचायतनं | | सूर्यपंचायतनं | | देवीपंचायतनं | | गणेशपंचायतनं | |
|---|---|---|---|---|---|---|---|---|---|
| शंकरः | गणेशः | विष्णुः | सूर्यः | शंकरः | गणेशः | विष्णुः | शंकरः | विष्णुः | शंकरः |
| २ | ३ | २ | ३ | २ | ३ | २ | ३ | २ | ३ |
| विष्णुः | | शंकरः | | सूर्यः | | देवी | | गणेशः | |
| १ | | १ | | १ | | १ | | १ | |
| देवी | सूर्यः | देवी | गणेशः | देवी | विष्णुः | सूर्यः | गणेशः | देवी | सूर्यः |
| ५ | ४ | ५ | ४ | ५ | ४ | ५ | ४ | ५ | ४ |

दक्षिणदिक्

त्तिंवसानंविश्वाद्यंविश्वंवद्यंनिखिलभयहरंपंचवक्त्रंत्रिनेत्रं ॥ २ ॥ गजवदनमचिंत्यंतीक्ष्णदंष्ट्रंत्रिनेत्रंबृहदुदरमशेषंभूतिराजं पुराणं ॥ अमरवरसुपूज्यंरक्तवर्णंसुरेशंपशुपतिसुतमीशंविघ्नराजंनमामि ॥ ३ ॥ सशंखचक्रंरविमंडलेस्थितंकुशेशयाक्रांतमनंतमच्युतं ॥ भजामिबुध्यातपनीयमूर्तिंसुरोत्तमंचित्रविभूषणोज्ज्वलं ॥ ४ ॥ विद्युद्दामसमप्रभांमृगपतिस्कंधस्थितांभीषणांक

---

१ बोपदेवः ॥ शंभौमध्यगतेहरीनहरभूदेव्यो, हरौशंकरेभास्येनागसुता, रवौहरगणेशाजांबिकाःस्थापयेत् ॥ देव्यांविष्णुहरैकदंतरवयो, लंबोदरेजेश्वरेनार्योः, शंकरभागतोऽतिसुखदाव्यस्तास्तुहानिप्रदाः ॥ एतेष्वन्यतमंस्वेष्टदेवतायाःपंचायतनंप्रकल्प्य तत्क्रमेणैवध्यानश्लोकादिपठनीयं ॥

न्याभिःकरवालखेटविलसद्धस्ताभिरासेविताम् ॥ हस्तैश्चक्रदरालिखेटविशिखांश्चापंगुणंतर्जनींबिभ्राणामनलात्मिकांशशिधरां दुर्गांत्रिनेत्रांभजे ॥ ५ ॥ ध्यायामिइतिपुष्पांजल्यर्पणं ॥ ॐ सहस्रशीर्षा० आगच्छदेवदेवेशतेजोराशेजगत्पते ॥ क्रियमाणांम यापूजांगृहाणसुरसत्तम ॥ श्रीअमुकदेवताभ्योनमःआवाहनार्थेपुष्पांजलिंसमर्पयामि ॥ ॐ पुरुषएवेदं० नानारत्नसमायुक्तंका र्तस्वरविभूषितम् ॥ आसनंदेवदेवेशप्रीत्यर्थंप्रतिगृह्यताम् ॥ श्रीअ० आस० तुलसीपत्रंस० ॥ ॐ एतावानस्य० पाद्यंगृहाण देवेशसर्वक्षेमसमर्थभो ॥ भक्त्यासमर्पितंदेवलोकनाथनमोऽस्तुते ॥ श्रीअ० पाद्यंसम० ॥ ॐ त्रिपादूर्ध्वउदै० नमस्तेदेवदेवे शनमस्तेधरणीधर ॥ नमस्तेजगदाधारअर्घ्यंनःप्रतिगृह्यताम् ॥ श्रीअ० अर्घ्यंस० ॥ ॐ तस्माद्विराळ० कर्पूरवासितंतोयंमंदा किन्याःसमाहृतम् ॥ आचम्यतांजगन्नाथमयादत्तंहिभक्तितः ॥ श्रीअ० आचमनीयंसम० ॥ ॐ यत्पुरुषेणहविषा० गंगासर स्वतीरेवापयोष्णीनर्मदाजलैः ॥ स्नापितोऽसिमयादेवतथाशांतिंकुरुष्वमे ॥ श्रीअ० स्नानीयंस० ॥ पंचामृतैःस्नपयिष्ये ॥ ॐ आप्यायस्वसमेतुतेविश्वतःसोमवृष्ण्यं ॥ भवावाजस्यसंगथे ॥ कामधेनोःसमुद्भूतंदेवर्षिपितृतृप्तिदम् ॥ पयोददामिदेवेशस्ना नार्थंप्रतिगृह्यताम् ॥ श्रीअ० स्नानार्थेपयःस्नानंस० ॥ पयःस्नानानंतरंशुद्धोदकस्नानंस० ॥ शुद्धोदकस्नानानंतरमाचमनीयं समर्पयामि ॥ सकलपूजार्थेगंधाक्षतपुष्पाणिस० ॥ ॐ दधिक्राव्णोअकारिषंजिष्णोरश्वस्यवाजिनः ॥ सुरभिनोमुखाकरत्प्रण आयूंषितारिषत् ॥ चंद्रमंडलसंकाशंसर्वदेवप्रियंदधि ॥ स्नानार्थंतेमयादत्तंप्रीत्यर्थंप्रतिगृह्यताम् ॥ श्रीअ० दधिस्नानंस०

---

१ शालग्रामार्चनेनैवआवाहनविसर्जने ॥ आवाहनऋचादद्यात्पूर्वंपुष्पांजलिंहरेः ॥ अंतेपुष्पांजलिंदद्याद्यागसंपूर्तिहेतवे ॥ प्रतिमापट्टयंत्राणां नित्यंस्नानंनकारयेत् ॥ कारयेत्पर्वदिवसेयथामलनिवारणं ॥ अन्यत्रावाहनंविहितमेव ॥

दधि० स०गंधा० ॥ ॐ घृतंमिमिक्षेघृतमस्ययोनिर्घृतेश्रितोघृतम्वस्यधाम ॥ अनुष्वधमावहमादयस्वस्वाहाकृतंवृषभवक्षि हव्यं ॥ आज्यंसुराणामाहारआज्यंयज्ञेप्रतिष्ठितम् ॥ आज्यंपवित्रंपरमंस्नानार्थंप्रतिगृह्यताम् ॥ श्रीअ० घृत० स० गंधा० ॥ ॐ मधुवाताऋतायतेमधुक्षरंतिसिंधवः । माध्वीर्नःसंत्वोषधीः ॥ मधुनक्तमुतोषसोमधुमत्पार्थिवंरजः । मधुद्यौरस्तुनःपिता ॥ मधुमान्नोवनस्पतिर्मधुमाँअस्तुसूर्यः ॥ माध्वीर्गावोभवंतुनः ॥ सर्वौषधिसमुत्पन्नंपीयूषसदृशंमधु ॥ स्नानार्थंतेप्रयच्छामिगृहाणपरमेश्वर ॥ श्रीअ० मधु० स० गंधा० ॥ ॐ स्वादुःपवस्वदिव्यायजन्मनेस्वादुरिंद्रायसुहवीतुनाम्ने ॥ स्वादुर्मित्रायवरुणायवायवेबृहस्पतयेमधुमाँअदाभ्यः ॥ इक्षुदंडसमुद्भूतदिव्यशर्करयाहरिम् ॥ स्नापयामिसदाभक्त्याप्रीतोभवसुरेश्वर ॥ श्रीअ० शर्करा०स०गंधा० ॥ गंधद्वारांदुराधर्षांनित्यपुष्टांकरीषिणीं ॥ ईश्वरींसर्वभूतानांतामिहोपह्वयेश्रियम् ॥ कर्पूरैलासमायुक्तंसुगंधिद्रव्यसंयुतम् ॥ गंधोदकंमयादत्तंस्नानार्थंप्रतिगृह्यताम् ॥ श्रीअ० षष्ठंगंधोदकस्ना० स० ॥ आपोहिष्ठाइतितृचेनशुद्धोदकस्नानंस० ॥ अमुकदे० नमः ॥ विलेपनार्थेचंदनंसमर्पयामि ॥ अमु०नमः ॥ अलंकारार्थेअक्षतान्समर्पयामि ॥ अमु०नमः ॥ पूजार्थेपुष्पाणितुलसीपत्राणिचसमर्पयामि ॥ अमु०नमः ॥ बिल्वपत्राणिदूर्वांकुरांश्चसमर्पयामि ॥ अमुकदेवताभ्योनमः ॥ धूपंसमर्पयामि ॥ अमुकदेवताभ्योनमः ॥ दीपंसमर्पयामि ॥ अमु० नमः ॥ नैवेद्यार्थेनानाविधखाद्यंशर्करांवासमर्पयामि ॥ अमृतोपस्तरणमसि ॥ ॐ प्राणायस्वाहा ॥ ॐ अपानायस्वाहा ॥ ॐ व्यानायस्वाहा ॥ ॐ उदानायस्वाहा ॥ ॐ समानायस्वाहा ॥ ॐ ब्रह्मणेस्वाहा ॥ नैवेद्यमध्येप्राशनार्थेपानीयंसमर्पयामि ॥ ॐ प्राणायस्वाहा० उत्तरापोशनंसमर्पयामि ॥ हस्तप्रक्षालनंसमर्पयामि ॥ मुखप्रक्षालनंसमर्पयापि ॥ करोद्वर्तनार्थेचंदनंसमर्पयामि ॥ मुखवासार्थंपूगीफलंतांबूलंसमर्पयामि ॥ सुव

र्णपुष्पदक्षिणांसमर्पयामि॥ अमुकदेवताभ्योनमः॥ प्रदक्षिणांनमस्कारंचसमर्पयामि॥ मंत्रपुष्पंसमर्पयामि॥ अनेनयथाज्ञानेन कृतपूर्वाराधनेनअमुकदेवताप्रीयतांनमम॥ तत्सद्ब्रह्मार्पणमस्तु॥उत्तरदिशिनिर्माल्यंविसर्जयेत्॥पुरुषसूक्तेनअभिषेकंकुर्यात्॥

## ॥ २१ ॥ अथपुरुषसूक्तम् ॥

श्रीः ॥ सहस्रशीर्षाषोळशनारायणःपौरुषमानुष्टुभंत्रिष्टुबंतं ॥ अभिषेकेविनियोगः ॥ हरिः ॐ ॥ सहस्रशीर्षापुरुषःसहस्राक्षः सहस्रपात्॥ सभूमिंविश्वतोवृत्वात्यतिष्ठद्दशांगुलं ॥ पुरुषएवेदंसर्वंयद्भूतंयच्चभव्यं ॥ उतामृतत्वस्येशानोयदन्नेनातिरोहति ॥ एतावानस्यमहिमातोज्यायांश्चपूरुषः॥ पादोस्यविश्वाभूतानित्रिपादस्यामृतंदिवि॥ त्रिपादूर्ध्वउदैत्पुरुषःपादोस्येहाभवत्पुनः ॥ ततोविष्वङ्व्यक्रामत्साशनानशनेअभि ॥ तस्माद्विराळजायतविराजोअधिपूरुषः ॥ सजातोअत्यरिच्यतपश्चाद्भूमिमथोपुरः ॥ १ ॥ यत्पुरुषेणहविषादेवायज्ञमतन्वत ॥ वसंतोअस्यासीदाज्यंग्रीष्मइध्मःशरद्धविः ॥ तंयज्ञंबर्हिषिप्रौक्षन्पुरुषंजातमग्रतः ॥ तेनदेवाअयजंतसाध्याऋषयश्चये ॥ तस्माद्यज्ञात्सर्वहुतःसंभृतंपृषदाज्यं ॥ पशून्तांश्चक्रेवायव्यानारण्यान्ग्राम्याश्चये ॥ तस्माद्यज्ञात्सर्वहुतऋचःसामानिजज्ञिरे ॥ छंदांसिजज्ञिरेतस्माद्यजुस्तस्मादजायत ॥ तस्मादश्वाअजायंतयेकेचोभयादतः ॥ गावोहजज्ञिरेतस्मात्तस्माज्जाताअजावयः ॥ २ ॥ यत्पुरुषंव्यदधुःकतिधाव्यकल्पयन् ॥ मुखंकिमस्यकौबाहूकाऊरूपादाउच्येते ॥ ब्राह्मणोस्यमुखमासीद्बाहूराजन्यःकृतः ॥ ऊरूतदस्ययद्वैश्यःपद्भ्यांशूद्रोअजायत ॥ चंद्रमामनसोजातश्चक्षोःसूर्योअजायत ॥ मुखादिंद्रश्चाग्निश्चप्राणाद्वायुरजायत ॥ नाभ्याआसीदंतरिक्षंशीर्ष्णोद्यौःसमवर्तत ॥ पद्भ्यांभूमिर्दिशःश्रो

---

१ स्नानेधूपेचदीपेचघंटादेनार्दमाचरेत् ॥ रुद्राद्यभिषेकविहितसूक्तान्यथर्वशीर्षाणिचआह्निकान्तेसंगृहीतानिसंतितत्रद्रष्टव्यानि ॥

त्रात्तथालोकाँअकल्पयन् ॥ सप्तास्यासन्परिधयस्त्रिःसप्तसमिधःकृताः ॥ देवायद्यज्ञंतन्वानाअबध्नन्पुरुषंपशुं ॥ यज्ञेनय
ज्ञमयजंतदेवास्तानिधर्माणिप्रथमान्यासन् ॥ तेहनाकंमहिमानःसचंतयत्रपूर्वेसाध्याःसंतिदेवाः ॥ ३ ॥ अतोदेवाइतिष
ण्णांकाण्वोमेधातिथिर्देवाविष्णुर्गायत्री ॥ अभिषेकेवि० ॥ अतोदेवाअवंतुनोयतोविष्णुर्विचक्रमे ॥ पृथिव्याःसप्तधाम
भिः ॥ इदंविष्णुर्विचक्रमेत्रेधानिदधेपदं ॥ समूढमस्यपांसुरे ॥ त्रीणिपदाविचक्रमेविष्णुर्गोपाअदाभ्यः ॥ अतोधर्माणि
धारयन् ॥ विष्णोःकर्माणिपश्यतयतोव्रतानिपस्पशे ॥ इंद्रस्ययुज्यःसखा ॥ तद्विष्णोःपरमंपदंसदापश्यंतिसूरयः ॥ दिवीव
चक्षुराततं ॥ तद्विप्रासोविपन्यवोजागृवांसःसमिंधते ॥ विष्णोर्यत्परमंपदं ॥ इतिपुरुषसूक्तंविष्णुसूक्तंच ॥ देवस्यत्वासवितुः
प्रसवेश्विनोर्बाहुभ्यांपूष्णोहस्ताभ्याममग्नेस्तेजसासूर्यस्यवर्चसेंद्रस्येंद्रियेणाभिषिंचामि ॥ बलायश्रियैयशसेन्नाद्याय ॐ भूर्भुवःस्वः
अमृताभिषेकोस्तु शांतिःपुष्टिस्तुष्टिश्चास्तु ॥ अमुकदेव० महाभिषेकस्नानंसमर्पयामि ॥ महाभि० शुद्धोदकस्नानंसमर्पया
मि ॥ स्नानांतेआचमनीयंस० ॥ ॐ तदस्तुमित्रावरुणातदग्नेशंयोरस्मभ्यमिदमस्तुशस्तं ॥ अशीमहिगाधमुतप्रतिष्ठांनमोदि
वेबृहतेसादनाय ॥ गृहावैप्रतिष्ठासूक्तंतत्प्रतिष्ठिततमयावाचाशंस्तव्यंतस्माद्यद्यपिदूरइवपशूँल्लभतेगृहानेवैनानाजिगमिषतिगृ
हाहिपशूनांप्रतिष्ठाप्रतिष्ठा ॥ नर्यप्रजांमेगोपाय ॥ अमृतत्वायजीवसे ॥ जातांजनिष्यमाणांच ॥ अमृतेसत्येप्रतिष्ठितां ॥
सुप्रतिष्ठितमस्तु ॥ ॐ तंयज्ञंबर्हिषिप्रौक्षन्पुरुषंजातमग्रतः ॥ तेनदेवाऽअयजंतसाध्याऋषयश्चये ॥ सर्वभूषाधिकेसौम्येलोक
लज्जानिवारणे ॥ मयोपपादितेतुभ्यंवाससीप्रतिगृह्यताम् ॥ अमु० वस्त्रं० ॥ आचमनीयं ॥ ॐ तस्माद्यज्ञात्सर्वहुतःसंभृतं

१ स्नानेवस्त्रेचनैवेद्येदद्यादाचमनंतथा । चकाराद्यज्ञोपवीतांतेपिदद्यात् ।

पृषदाज्यं ॥ पशून्तांश्चक्रेवायव्यानारण्यान्ग्राम्याश्चये ॥ देवदेवनमस्तेस्तुत्राहिमांभवसागरात् ॥ ब्रह्मसूत्रंसोत्तरीयंगृहाण पुरुषोत्तम ॥ अमु० यज्ञोप० आचमनीयं ॥ ( हरिद्रास्वर्णवर्णाभासर्वसौभाग्यदायिनी ॥ सर्वालंकारमुख्याहिदेवित्वंप्र तिगृह्यताम् ॥ हरिद्रांस० ॥ हरिद्राचूर्णसंयुक्तंकुंकुमंकामदायकं ॥ वस्त्रालंकरणंसर्वंदेवित्वंप्रतिगृह्यताम् ॥ अमुकदे० कुं कुमंसमर्पयामि ॥ कज्जलंकामिकंरम्यंकामिनीकामसंभवं ॥ नेत्रयोर्भूषणार्थायकज्जलंप्रतिगृह्यताम् ॥ अमुकदेव्यै० कज्जलं समर्पयामि ॥ उदितारुणसंकाशंजपाकुसुमसंनिभं ॥ सीमंतभूषणार्थायसिंदूरंप्रतिगृह्यताम् ॥ अमुकदे० सिंदूरंस० ॥ मांगल्यतंतुमणिभिर्मुक्ताफलविराजितम् ॥ कंठस्यभूषणार्थायकंठसूत्रंप्रगृह्यताम् ॥ अमुकदे० कंठसूत्रंस० ॥ काचस्यनि र्मितंदिव्यंकंकणंचसुरेश्वरि ॥ हस्तालंकरणार्थायकंकणंप्रतिगृह्यताम् ॥ अमुकदेवतायैनमः कंकणंस० ॥ अलंकारान्मयादेवि सुवर्णेनविनिर्मितान् ॥ प्रीत्यर्थंतवदेवेशिभूषणंप्रतिगृह्यताम् ॥ अमुकदे० नानाभूषणानिस० ॥ नानाभरणशोभाढ्यंनानार त्नोपशोभितं ॥ अर्पितंचमयादेविताडपत्रंप्रगृह्यताम् ॥ अमुकदे० ताडपत्रंसम० ॥ ) ॐ अहिरिवभोगैःपर्येतिबाहुंज्याया हेतिंपरिबाधमानः ॥ हस्तघ्नोविश्वावयुनानिविद्वान्पुमान्पुमांसंपरिपातुविश्वतः ॥ ज्योत्स्नापतेनमस्तुभ्यंनमस्तेविश्वरूपिणे ॥ नानापरिमलद्रव्यंगृहाणपरमेश्वर ॥ अमुकदे० नानापरिमलद्रव्याणिसम० ॥ ॐ तस्माद्यज्ञात्सर्वहुतऋचःसामानिजज्ञिरे ॥ छंदांसिजज्ञिरेतस्माद्यजुस्तस्मादजायत ॥ श्रीखंडंचंदनंदिव्यंगंधाढ्यंसुमनोहरं ॥ विलेपनंसुरश्रेष्ठचंदनंप्रतिगृह्यताम् ॥ अ मुकदे० चंदनंसं० ॥ अक्षतास्तंडुलाःशुभ्राःकुंकुमेनविराजिताः ॥ मयानिवेदिताभक्त्यागृहाणपरमेश्वर ॥ अमुकदे० अलं

---

१ इतआरभ्यसौभाग्यद्रव्याणिपरिमलद्रव्याणिचविभवेसतिदेव्यैदेवेभ्योऽपिदेयानि ।

कारार्थेअक्षतान्स० ॥ ॐ तस्मादश्वाअजायंतयेकेचोभयादतः ॥ गावोहजज्ञिरेतस्मात्तस्माज्जाताअजावयः ॥ माल्यादीनि सुगंधीनिमालत्यादीनिवैप्रभो ॥ मयाहृतानिपूजार्थंपुष्पाणिप्रतिगृह्यतां ॥ सेवंतिकाबकुलचंपकपाटलाब्जैःपुन्नागजातिकरवीररसालपुष्पैः ॥ बिल्वप्रवालतुलसीदलमालतीभिस्त्वांपूजयामिजगदीश्वरमेप्रसीद ॥ अमु० पुष्पाणिस० ॥ केशवादिचतुर्विंशतिनामभिर्वाअष्टोत्तरशतनामभिःसहस्रनामभिर्वातुलसीदलैरन्येनद्रव्येणवापूजयेत् ॥ ॐ यत्पुरुषंव्यदधुःकतिधाव्यकल्पयन् ॥ मुखंकिमस्यकौबाहूकाऊरूपादाउच्येते ॥ वनस्पतिरसोद्भूतोगंधाढ्योगंधउत्तमः ॥ आघ्रेयःसर्वदेवानांधूपोऽयंप्रतिगृह्यताम् ॥ अमु० धूपंस० ॥ ॐ ब्राह्मणोस्यमुखमासीद्बाहूराजन्यःकृतः ॥ ऊरूतदस्ययद्वैश्यःपद्भ्यांशूद्रोअजायत ॥ आज्यंसुवर्तिसंयुक्तंवह्निनायोजितंमया ॥ दीपंगृहाणदेवेशत्रैलोक्यतिमिरापह ॥ भक्त्यादीपंप्रयच्छामिदेवायपरमात्मने ॥ त्राहिमांनिरयाद्घोराद्दीपोयंप्रतिगृह्यतां ॥ अमु० दीपंस० ॥ ॐ चंद्रमामनसोजातश्चक्षोःसूर्योअजायत ॥ मुखादिंद्रश्चाग्निश्चप्राणाद्वायुरजा

---

१ पत्रंपुष्पंफलंचैवयथोत्पन्नंतथार्पयेत् ॥ बिल्वंतुन्युब्जंस्वाभिमुखाग्रंच ॥ **विष्णोः प्रियपुष्पाणि**—मालतीजातिकेतकीमल्लिकाशोकचंपकपुन्नागबकुलोत्पलकुंदकरवीरपाटलातगरपुष्पाणिअन्यानिसुरभीणिच ॥ अपामार्गभृंगराजखदिरशमीदूर्वाकुशदमनकबिल्वाम्रमंजरीतुलसीपत्राण्युत्तरोत्तरंप्रियाणि तुलसीतुसर्वाधिका ॥ **शिवप्रियाणि**—अर्ककरवीरबिल्वबकुलधत्तूरपाटलामंदारतगरपुन्नागशमीद्रोणपुष्पनीलोत्पलानि ॥ अस्य केतकचंपकेमहाशिवरात्रावेवविहिते ॥ **सूर्यविघ्नेशादेः**प्रायोविष्णुवत् रक्तंत्वतिप्रियं । **देव्याः**प्रायःशिववत् ॥ पुष्पपत्रविशेषेणपर्युषितदिनविचारः—बिल्वं ३० अपमार्ग १ जाती १ तुलसी ६ शमी ६ शतावरी ११ केतकी ४ दूर्वा ८ मंदारः १ पद्मं १ नागकेसरः २ दर्भः ३० अगस्त्यः १ मल्लिका ४ चंपकः ९ करवीरः ८ एतेषांनिर्दिष्टसंख्याकदिनोत्तरंपर्युषितत्वं । पत्रपुष्पादीनांग्रहणादिविचारोऽन्यत्रद्रष्टव्यः ॥

यत ॥ नैवेद्यंगृह्यतांदेवभक्तिंमेह्यचलांकुरु ॥ ईप्सितंमेवरंदेहिपरत्रचपरांगतिम् ॥ शर्कराखंडखाद्यानिदधिक्षीरघृतानिच ॥ आहारंभक्ष्यभोज्यंचनैवेद्यंप्रतिगृह्यताम् ॥ अमु० नैवेद्यंस० ॥ अमृतोपस्तरणमसिस्वाहा ॥ ॐ प्राणायस्वाहा ॥ ॐ अपानाय० ॐ व्यानाय० ॐ उदानाय० ॐ समानाय० ॐ ब्रह्मणे० ॥ नैवेद्यमध्येपानीयं स० ॥ ॐ प्राणायस्वा० उत्तरापोशनं स०॥ हस्तप्रक्षालनं स० ॥ मुखप्रक्षालनं स० ॥ करोद्वर्तनार्थेचंदनं स० ॥ पूगीफलंमहद्दिव्यंनागवल्लीदलैर्युतं ॥ कर्पूरैलासमायुक्तं तांबूलंप्रतिगृह्यताम् ॥ अमु० तांबूलं स० ॥ इदंफलंमयादेवस्थापितंपुरतस्तव ॥ तेनमेसुफलावाप्तिर्भवेज्जन्मनिजन्मनि ॥ फलेनफलितंसर्वंत्रैलोक्यंसचराचरं ॥ तस्मात्फलप्रदानेनसफलाःस्युर्मनोरथाः ॥ अमु० फलं स० ॥ हिरण्यगर्भगर्भस्थंहेमबीजंविभावसोः ॥ अनंतपुण्यफलदमतःशांतिंप्रयच्छमे ॥ अमु० दक्षिणां स० ॥ ॐ श्रियेजातःश्रियआनिरियायश्रियंवयोजरितृभ्योददाति ॥ श्रियंवसानाअमृतत्वमायन्भवंतिसत्यासमिथामितद्रौ ॥ श्रियएवैनंतच्छ्रियामादधातिसंततमृचावषट्कृत्यं संतत्यैसंधीयतेप्रजयापशुभिर्यएवंवेद ॥ याज्ययायजतिप्रत्तिर्वैयाज्यापुण्यैवलक्ष्मीःपुण्यामेवतलक्ष्मींसंभावयतिपुण्यांलक्ष्मींसंस्कुरुते ॥ चंद्रादित्यौचधरणिर्विद्युदग्निस्तथैवच ॥ त्वमेवसर्वज्योतींषिआर्तिक्यंप्रतिगृह्यताम् ॥ अमु० महानीराजनदीपं स० ॥ हृत्स्थाज्ञानतमोनाशक्षमंभक्त्यासमर्पितं ॥ कर्पूरदीपममलंगृहाणपरमेश्वर ॥ अमुकदे० कर्पूरार्तिक्यदीपं स० ॥ ॐ नाभ्याआसीदंतरिक्षंशीर्ष्णोद्यौःसमवर्तत ॥ पद्भ्यांभूमिर्दिशःश्रोत्रात्तथालोकाँअकल्पयन् ॥ नमःसर्वहितार्थायजगदाधारहेतवे ॥ साष्टांगोऽयंप्रणामस्तेप्रयत्नेनमयाकृतः ॥ नमोस्त्वनंतायसहस्रमूर्तयेसहस्रपादाक्षिशिरोरुबाहवे ॥ सहस्रनाम्नेपुरुषाय शाश्वतेसहस्रकोटीयुगधारिणेनमः ॥ अमु० नमस्कारान् सम० ॥ ॐ सप्तास्यासन्परिधयस्त्रिःसप्तसमिधःकृताः ॥ देवायद्य

ज्ञंतन्वानाअबध्नन्पुरुषंपशुं ॥ यानिकानिचपापानिजन्मांतरकृतानिच ॥ तानितानिविनश्यंतिप्रदक्षिणपदेपदे ॥ अमुक० प्रदक्षिणाः स० ॥ ॐ यज्ञेनयज्ञमयजंतदेवास्तानिधर्माणिप्रथमान्यासन् ॥ तेहनाकंमहिमानःसचंतयत्रपूर्वेसाध्याःसंतिदेवाः ॥ नमोमहद्भ्योनमो० राजाधिराजाय० ॥ मंत्रपुष्पांजलिंसमर्पयामि ॥ अग्निमावाह्य पुरुषसूक्तेनप्रत्यृचमाज्यंहुत्वा तदसंभवेसूक्तावृत्तिद्वयंजप्त्वा ॥ पुनस्तेनैवसूक्तेनषोडशपुष्पाण्यर्पयित्वा पुनःसूक्तंजपेत् ॥ तदनंतरंस्वोपदिष्टमूलमंत्रंयथाशक्तिजप्त्वा ॥ ततोगीतंवाद्यंनृत्यंछत्रंचामरंदर्पणंआंदोलनंसर्वराजोपचारार्थेतुलसीपत्रं स० ॥ ॐ अयंमेहस्तोभगवानयंमेभगवत्तरः ॥ अयंमेविश्वभेषजोयंशिवाभिमर्शनः ॥ अयंमातायंपितायंजीवातुरागमत् ॥ इदंतववप्रसर्पणंसुबंधवेहिनिरिहि ॥ आवाहनंनजानामिनजानामितवार्चनं ॥ पूजांचैवनजानामिक्षमस्वपरमेश्वर ॥ मंत्रहीनंक्रियाहीनंभक्तिहीनंसुरेश्वर ॥ यत्पूजितं मयादेवपरिपूर्णंतदस्तुमे ॥ अपराधसहस्रंचक्रियतेहर्निशंमया ॥ दासोऽयमितिमांमत्वाक्षमस्वपरमेश्वर ॥ पूजांते ॥ दत्वा षोडशभिर्ऋग्भिःषोडशान्नस्यचाहुतीः ॥ सूक्तेन(पौरुषेण)प्रत्यृचंपुष्पंदत्वासूक्तेनसंस्तुयात् ॥ अन्यैःपौराणैश्च ॥ गतंपापंगतंदुःखं गतंदारिद्र्यमेवच ॥ आगतासुखसंपत्तिःपुण्याच्चतवदर्शनात् ॥ रूपंदेहिजयंदेहियशोदेहिद्विषोजहि ॥ पुत्रान्देहिधनंदेहिसर्वान्कामांश्चदेहिमे ॥ यस्यस्मृत्याचनामोक्त्यातपःपूजाक्रियादिषु ॥ न्यूनंसंपूर्णतांयातिसद्योवंदेतमच्युतं ॥ इतिप्रार्थना ॥ अनेनमयायथाज्ञानेनयथामीलितोपचारद्रव्यैःकृतपूजनेनश्रीअमुकदेवताःप्रीयंताम् ॥ निर्माल्यं ( विष्णुभिन्नं ) देवदत्तंभावयित्वाशिरसिधारयेत् ॥ शंखमध्येस्थितंतोयंभ्रामितंकेशवोपरि ॥ अंगलग्नंमनुष्याणांब्रह्महत्यांव्यपोहति ॥ अनेनमंत्रेणशंखो

---

१ शंखोदकंशिरसिधृत्वादेवतीर्थंपूजांतेवैश्वदेवांतेवाशिरसिधार्यंपेयंच । तत्रक्रमः । विप्रपादोदकंपीत्वादेवपादोदकंपिबेत् । शालिग्रामशिलातोयम

दकंशिरसिधारयेत् ॥ अकालमृत्युहरणंसर्वव्याधिविनाशनं ॥ देवपादोदकंपीत्वाशिरसाधारयाम्यहं ॥ तीर्थंग्राह्यं ॥ तत्तुपा त्रांतरेणैवविहितंनहस्तेन ॥ ॥ इतिदेवपूजा ॥ इतिअष्टधाविभक्तदिवसस्यप्रथमभागकृत्यं ॥ ॥ छ ॥

## ॥ २२ ॥ अथमुद्रालक्षणानि ॥

श्रीः ॥ मुद्राविमुक्तहस्तेनक्रियतेकर्मदैविकम् ॥ यदितन्निष्फलंतस्मात्कर्ममुद्रान्वितश्चरेत् ॥ त्रिचाभास्करे ॥ हस्तद्वयेत्वधो वक्त्रेसंमुखेचपरस्परम् ॥ वामांगुलिर्दक्षिणानामंगुलीनांचसंधिषु ॥ संवेश्यमध्यमाभ्यांतुतर्जन्यांद्वेप्रयोजयेत् ॥ कनिष्ठेद्वेअ नामाभ्यांयुंज्यात्साधेनमुद्रिका ॥ १ ॥ वामांगुष्ठंतुसंगृह्यदक्षिणेनतुमुष्टिना ॥ कृत्वोत्तानंतथामुष्टिमंगुष्ठंतुप्रसारयेत् ॥ वा मांगुलीस्तथाश्लिष्टाःसंयुक्ताःसुप्रसारिताः ॥ दक्षिणांगुष्ठसंस्पृष्टामुद्राशंखस्यचोदिता ॥ २ ॥ हस्तौतुसंमुखौकृत्वासंलग्नौसुप्र सारितौ ॥ कनिष्ठांगुष्ठकौलग्नौमुद्राचक्रस्यसिद्धिदा ॥ ३ ॥ अन्योन्याभिमुखौहस्तौकृत्वातुग्रथितांगुली ॥ अंगुल्यौमध्यमे भूयःसंलग्नेसुप्रसारिते ॥ गदामुद्रासमाख्यातापरामुक्तिकरीतथा ॥ ४ ॥ करौतुसुमुखौकृत्वासंमुखावुन्नतांगुली ॥ तलांत र्मिलितांगुष्ठौकुर्यात्सापद्ममुद्रिका ॥ ५ ॥ हस्तौतुविमुखौकृत्वाग्रंथयित्वाकनिष्ठिके ॥ तर्जन्यौमुखतःश्लिष्टेश्लिष्टावंगुष्ठकौत था ॥ मध्यमानामिकायुग्मेद्वौपक्षाविवचिंतयेत् ॥ एषागरुडमुद्रास्यादशेषविषनाशिनी ॥ ६ ॥ अन्योन्याभिमुखौहस्तौकृ तौचेद्ग्रथितांगुली ॥ अंगुष्ठौचमिथःश्लिष्टौमुद्रैषाग्रथिताभिधा ॥ ७ ॥ मुष्टिद्वयस्यतर्जन्यौप्रसार्योर्ध्वाधरीकृते ॥ ग्रथिते

---

पीत्वायस्तुमस्तके ॥ प्रक्षेपणंचकुरुतेब्रह्महासनिगद्यते ॥ पात्रांतरेणवैग्राह्यंनकरेणकदाचन ॥ इतिकमलाकारः ॥ १ एवंदेवंसंपूज्यमातापितृप्रमुखान् गुरूनपूजयेत् । यस्यदेवेपराभक्तिर्यथोदेवेतथागुरौ ॥ इतिश्रुतेरितिमाधवः ॥ एकादश्याद्युपवासदिनेपितीर्थंग्राह्यं इतिकमलाकरः ।

चेदसौमुद्रायमपाशाभिधामता ॥ ८ ॥ हस्तंमुसलवत्कृत्वामुष्टिमाबध्यतर्जनीं ॥ प्रसार्यसंकुचेत्सेयंमुद्रास्यादंकुशाभिधा ॥
अत्रैवमध्यमायाअपिप्रसारणंसंप्रदायसिद्धं ॥ ९ ॥ हस्ताभ्यामंजलिंकृत्वानामिकामूलपर्वणोः ॥ अंगुष्ठौनिक्षिपेत्सेयंमुद्रात्वा
वाहनीस्मृता ॥ १० ॥ अधोमुखीत्वियंचेत्स्यान्मुद्रासंस्थापनीमता ॥ ११ ॥ उच्छ्रितांगुष्ठमुष्ट्योस्तुसंयोगात्संनिधापनी
॥ १२ ॥ अंतःप्रवेशितांगुष्ठौसैवसंरोधिनीमता ॥ १३ ॥ मुष्टिद्वयस्थितांगुष्ठौसंमुखौतुपरस्परम् ॥ संश्लिष्टावुच्छ्रितौकुर्या
त्सेयंसंमुखमुद्रिका ॥ १४ ॥ मुष्टिद्वयस्यतर्जन्यौप्रसार्याधोमुखीकृते ॥ अनुलोमविलोमेनभ्रामितेदेवताभितः ॥ दुष्टदृष्टि
निरासायसैषामुद्रावगुंठिनी ॥ १५ ॥ हृदयादिषडंगानांमुद्रादेवतनौकृताः ॥ संकलीकरणाभिख्याःसर्वावयवपूर्तिदाः ॥
त्रिद्व्येकदशसंख्याकत्रिवेदांगुलिभिःक्रमात् ॥ हृदयादिषडंगानांमुद्राऊह्याविपश्चिता ॥ तर्जन्यादित्रयेणप्रसारितेनहृदयम्
॥ १६ ॥ अंगुष्ठतर्जनीभ्यांयोजितमुखाभ्यामधोग्राभ्यांशिरः ॥ १७ ॥ प्रसृतांगुष्ठेनाधोमुखेनशिखा ॥ १८ ॥ करद्वयद
शांगुलिभिःप्रसृताभिःकवचम् ॥ १९ ॥ तर्जन्यादित्रयेणाग्रेणत्रिकोणाग्रतुल्येननेत्रम् ॥ द्विनेत्र्यांत्वनामिकालोपः ॥ २० ॥
हस्तद्वयस्याप्यंगुष्ठतर्जनीभ्यांसशब्दमभितोभ्रामिताभ्यामस्त्रमितिसांप्रदायिकोर्थः ॥ २१ ॥ अधोमुखीधेनुमुद्रादेवस्योपरि
दर्शिता ॥ अमृतीकरणीप्रोक्तापरमानंददायिनी ॥ २२ ॥ अधोमुखौग्रथितांगुष्ठौप्रसृतांगुलिकौकरौ ॥ परमीकरणंनाम
देवस्योपरिचालितौ ॥ २३ ॥ प्रसृतांगुलिकौहस्तौमिथःश्लिष्टौचसंमितौ ॥ कुर्यात्स्वहृदयेसेयंमुद्राप्रार्थनसंज्ञिका ॥ २४ ॥
अंजल्यांजलिमुद्रास्याद्वासुदेवाभिधाचसा ॥ २५ ॥ सैवशीर्षादिपादांतंचालिताचेदधोमुखी ॥ मुद्रैषाव्यापिकानामसद्गुण
व्याप्तिदायिनी ॥ २६ ॥ तर्जन्यादित्रयेकार्येहस्तयोःसंकुचन्मुखे ॥ प्रसारितेसुसरलेतथांगुष्ठकनिष्ठिके ॥ दक्षहस्तस्यतर्ज

न्यावामस्यानामिकामुखम् ॥ अनामयाचतर्जन्यामुखंमध्यांचमध्यया ॥ अंगुष्ठेनकनिष्ठायाअंगुष्ठस्यकनिष्ठया ॥ स्पर्शयेन्ना
लिनीमुद्रासैषातीर्थोपकर्षिणी ॥ २७ ॥ अंगुष्ठाग्रेणसंस्पृश्यकनिष्ठामध्यपर्वणी ॥ गंधमुद्रेतिसाख्यातांगुष्ठयोर्मध्यपर्वणी ॥
तर्जन्यग्रेणसंस्पृश्येत्पुष्पमुद्रेतिकीर्तिता ॥ २८ ॥ तर्जनीमध्यमानामामध्यपर्वाणिसंस्पृशेत् ॥ अंगुष्ठाग्रेणताधूपदीपनैवेद्यमु
द्रिकाः ॥ २९ ॥ ऊर्ध्वाग्रांगुलिभिर्ग्रासमुद्रावामकरेकृता ॥ ३० ॥ सैवतांबूलमुद्रास्याद्दक्षेसंकुचितांगुलिः ॥ ३१ ॥ तर्जनी
मध्यमांगुष्ठैःप्राणमुद्राप्रकीर्तिता ॥ ३२ ॥ मध्यमानामिकांगुष्ठैःस्यादपानस्यमुद्रिका ॥ ३३ ॥ कनिष्ठानामिकांगुष्ठैर्व्यान
मुद्राप्रकीर्तिता ॥ ३४ ॥ तर्जन्यनामिकांगुष्ठैःस्यादुदानस्यमुद्रिका ॥ ३५ ॥ समानमुद्रांगुलिभिःसंहताभिस्तुपंचभिः
॥ ३६ ॥ मणिबंधस्थितौकृत्वाप्रसृतांगुलिकौकरौ ॥ कनिष्ठांगुष्ठयुगुलेमिलित्वांतेप्रसारयेत् ॥ सप्तजिह्वाख्यमुद्रेयंवैश्वानर
वशंकरी ॥ ३७ ॥ मिलितानामिकांगुष्ठमध्यमाग्राणियोजयेत् ॥ शिष्टेद्वेउच्छ्रितेकुर्यान्मृतमुद्रेयमीरिता ॥ अनयोरुपयोग
स्तुहोमविधौभविष्यति ॥ ३८ ॥ कमलाकृतिमुद्रातुसौरमुद्रेतिकीर्तिता॥ ३९ ॥ मुष्टिद्वयंतथोत्तानंकृत्वासंयोज्यपार्श्वतः ॥
दक्षिणस्वकनिष्ठादीन्प्रसार्यक्रमतःपुरः ॥ तथावामकनिष्ठादीनेकैकान्सुप्रसारयेत् ॥ अष्टौमुद्राःसमाख्यातानामतासांक्रमाच्छृ
णु ॥ प्रोन्नामोन्नामनीचैवबिंबंपाशुपतंतथा ॥ शुद्धंत्यागःसारिणीचतथाचैवप्रसारिणी ॥ ४० ॥ ४१ ॥४२॥ ४३ ॥ ४४ ॥
॥ ४५ ॥ ४६ ॥ ४७ ॥ दक्षांगुष्ठेपरांगुष्ठंक्षिप्त्वाहस्तद्वयेनतु ॥ एकंमुष्टिंसावकाशंकुर्यात्साकुंभमुद्रिका ॥ ४८ ॥ अधो
मुखेवामहस्तऊर्ध्वास्यंदक्षहस्तकं ॥ क्षिप्त्वांगुलीरंगुलीभिर्ग्रथयित्वाविवर्तयेत् ॥ प्रोक्तासंहारमुद्रेयंविनियुक्ताविसर्जने ॥४९॥
इयमेवनिर्याणमुद्रेत्युच्यते ॥ इतित्रिचाभास्करेमुद्रालक्षणानि ॥ ॥ ७ ॥

## ॥ २३ ॥ अथदिनद्वितीयतृतीयभागकृत्यम् ॥

श्रीगणेशायनमः ॥ दिवसस्याद्यभागेतुसर्वमेतत्समाचरेत् ॥ द्वितीयेचतथाभागेवेदाभ्यासोविधीयते ॥ वेदस्वीकरणंपूर्वं विचारोभ्यसनंजपः ॥ तद्दानंचैवशिष्येभ्योवेदाभ्यासोहिपंचधा ॥ जपेदध्यापयेच्छिष्यान्धारयेद्वाविचारयेत् ॥ अवेक्षेतच शास्त्राणिधर्मादीनिद्विजोत्तमः ॥ तृतीयेचतथाभागेपोष्यवर्गार्थसाधनम् ॥ इतिदिनद्वितीयतृतीयभागकृत्यम् ॥ ॥छ॥

## ॥ २४ ॥ अथमध्याह्नस्नानम् ॥

श्रीगणेशायनमः ॥ चतुर्थेचदिवाभागेस्नानार्थंमृदमाहरेत् ॥ तिलपुष्पकुशादींश्चस्नायाच्चाकृत्रिमेजले ॥ नदीतीरमेत्यप्रक्षालितमुखपादपाणिराचांतोबद्धशिखःशुचौदेशेशुद्धमृत्तिकांतंदुलयवतिलांश्चनिधायमलस्नानंविधायदेशकालौस्मृत्वा ॥ ममसमस्तपापक्षयायुरभिवृद्धिद्वाराश्रीप० मध्याह्नस्नानंक० इतिसंकल्प्यमृत्तिकांगायत्र्यादाय ॥ अश्वक्रांते० ॥ उद्धृतासिवराहेण० ॥ इत्यभिमंत्र्यगायत्र्याप्रोक्ष्य ॐ आपोज्योतीरसोमृतंब्रह्मभूर्भुवःस्वरोमितिमंत्रेणावृत्त्यात्रिधाविभज्यैकेनभागेनमूर्धादिनाभिपर्यंतंद्वितीयभागेननाभेरधःपादपर्यंतमनुलिप्यांगानिक्षालयित्वादित्यंनिरीक्ष्य द्विराचम्यतृतीयभागंप्रचोदयादित्यस्त्रेणादायसव्येपाणौकृत्वा ॐ भूरितिदक्षिणभागं ॐ भुवइतिमध्यमभागं ॐ स्वरित्युत्तरभागंविधाय दक्षिणभागमस्त्रेणदशदिक्षुमंत्रावृत्त्यानिक्षिप्योत्तरभागंतीर्थेतूष्णींप्रक्षिप्यामध्यमभागंगायत्र्याभिमंत्र्यआदित्यायप्रदर्श्यगायत्र्याप्रणवेनचसर्वांगमनुलिप्य ॐ सुमित्र्यानआपओषधयःसंतु इतिमंत्रेणाद्भिरात्मानंपरिषिच्य दुर्मित्र्यास्तस्मैसंतुयोस्मान्द्वेष्टियंचवयंद्विष्मः इतिमंत्रेणां

गानिप्रक्षाल्याचम्यप्रातःस्नानवद्वरुणावाहनादिवस्त्रनिष्पीडनवर्जंकुर्यात् ॥ अशक्तौप्रातर्वत्स्नायात् ॥ ब्रह्मयज्ञांगतर्पणात्प्रा
ग्वस्त्रंननिष्पीड्यमितिविशेषः ॥ इतिमध्याह्नस्नानविधिः ॥ ॥ छ ॥ ॥ छ ॥

## ॥ २५ ॥ अथमध्याह्नसंध्या ॥

श्रीगणेशायनमः ॥ दर्भपवित्रपाणिराचम्यप्राणानायम्य ॥ ममोपात्तदुरितक्षयद्वाराश्रीपरमेश्वरप्रीत्यर्थंमध्याह्नसंध्यामुपासि
ष्ये ॥ आपोहिष्ठेतितृचेनपूर्ववत्प्रथमंमार्जनंकृत्वामंत्राचमनंकार्यं ॥ आपःपुनंत्वित्यस्यानुवाकस्यनारायणयाज्ञवल्क्यआपःपृथि
वीब्रह्मणस्पतिरष्टी मंत्राचमनेविनियोगः ॥ ॐ आपःपुनंतुपृथिवींपृथिवीपूतापुनातुमां ॥ पुनंतुब्रह्मणस्पतिर्ब्रह्मपूतापुनातुमां ॥
यदुच्छिष्टमभोज्यंयद्वादुश्चरितंमम ॥ सर्वंपुनंतुमामापोसतांचप्रतिग्रहꣳस्वाहा ॥ इतिअपःपीत्वा ॥ आचम्यप्रातःसंध्यावत्
द्वितीयंतृतीयंचतुर्थमार्जनंअघमर्षणांतंकृत्वा ॥ आचम्य ॥ तिष्ठन् हंसःशुचिषदितिमंत्रस्यगौतमोवामदेवःसूर्योजगती ॥ सू
र्यायार्घ्यदानेविनियोगः ॥ ॐ हंसःशुचिषद्वसुरंतरिक्षसद्धोतावेदिषदतिथिर्दुरोणसत् ॥ नृषद्वरसदृतसद्व्योमसदब्जागोजाऋ
तजाअद्रिजाऋतं ॥ श्रीसूर्यायइदमर्घ्यंसमर्पयामि ॥ इतित्रिःसकृद्वादद्यात् ॥ आत्मानंपरिषिच्य ॥ असावादित्योब्रह्म ॥
द्विराचम्य ॥ ऊर्ध्वबाहुरुन्मुखःसूर्यमुपतिष्ठेत् ॥ उदुत्यमितित्रयोदशर्चस्यसूक्तस्यकाण्वःप्रस्कण्वऋषिःश्रीसूर्योदेवतानवाद्या
गायत्र्यःअंत्याश्चतस्रोनुष्टुभः॥केचित्॥ चित्रंदेवानामितिषळर्चस्यसूक्तस्यआंगिरसःकुत्सःसूर्यस्त्रिष्टुप्सूर्योपस्थानेविनियोगः ॥

---

१ साचद्वादशघटीदिनोत्तरंविहिता ॥ अध्यर्धयामादासायंसंध्यामाध्याह्निकीष्यते ॥ इतिवचनात् ॥ यःसंध्यांयदिनोपास्तिअग्निकार्येणचेत्कृतम् ॥
गायत्र्यष्टशतंजप्यंप्रायश्चित्तंद्विजन्मनामिति ॥ २ एकमेवार्घ्यमितिधर्मसिंध्वादौ ।

ॐ उदुत्यंजातवेदसंदेवंवहंतिकेतवः ॥ दृशेविश्वायसूर्यं ॥ अपत्येतायवोयथानक्षत्रायंत्यक्तुभिः ॥ सूरायविचक्षसे ॥ अदृश्रमस्यकेतवोविरश्मयोजनाँअनु ॥ भ्राजंतोअग्नयोयथा ॥ तरणिर्विश्वदर्शतोज्योतिष्कृदसिसूर्य ॥ विश्वमाभासिरोचनं ॥ प्रत्यङ्देवानांविशःप्रत्यङ्ङुदेषिमानुषान् ॥ प्रत्यङ्विश्वंस्वर्दृशे ॥ १ ॥ येनापावकचक्षसाभुरण्यंतंजनाँअनु ॥ त्वंवरुणपश्यसि ॥ विद्यामेषिरजस्पृथ्वहामिमानोअक्तुभिः ॥ पश्यन्जन्मानिसूर्य ॥ सप्तत्वाहरितोरथेवहंतिदेवसूर्य ॥ शोचिष्केशंविचक्षण ॥ अयुक्तसप्तशुंध्युवःसूरोरथस्यनप्त्यः ॥ ताभिर्यातिस्वयुक्तिभिः ॥ उद्वयंतमसस्परिज्योतिष्पश्यंतउत्तरं ॥ देवंदेवत्रासूर्यमगन्मज्योतिरुत्तमं ॥ उद्यन्नद्यमित्रमहआरोहन्नुत्तरांदिवं ॥ हृद्रोगंममसूर्यहरिमाणंचनाशय ॥ शुकेषुमेहरिमाणंरोपणाकासुदध्मसि ॥ अथोहारिद्रवेषुमेहरिमाणंनिदध्मसि ॥ उदगादयमादित्योविश्वेनसहसासह ॥ द्विषंतंमह्यंरंधयन्मोअहंद्विषतेरधं ॥ २ ॥ चित्रंदेवानामुदगादनीकंचक्षुर्मित्रस्यवरुणस्याग्नेः ॥ आप्राद्यावापृथिवीअंतरिक्षंसूर्यआत्माजगतस्तस्थुषश्च ॥ सूर्योदेवीमुषसंरोचमानांमर्योनयोषामभ्येतिपश्चात् ॥ यत्रानरोदेवयंतोयुगानिवितन्वतेप्रतिभद्रायभद्रं ॥ भद्राअश्वाहरितःसूर्यस्यचित्राएतग्वाअनुमाद्यासः ॥ नमस्यंतोदिवआपृष्ठमस्थुःपरिद्यावापृथिवीयंतिसद्यः ॥ तत्सूर्यस्यदेवत्वंतन्महित्वंमध्याकर्तोविततंसंजभार ॥ यदेदयुक्तहरितःसधस्थादाद्रात्रीवासस्तनुतेसिमस्मै ॥ तन्मित्रस्यवरुणस्याभिचक्षेसूर्योरूपंकृणुतेद्योरुपस्थे ॥ अनंतमन्यद्रुशदस्यपाजःकृष्णमन्यद्धरितःसंभरंति ॥ अद्यादेवाउदितासूर्यस्यनिरंहसःपिपृतानिरवद्यात् ॥ तन्नोमित्रोवरुणोमामहंतामदितिःसिंधुःपृथिवीउतद्यौः ॥ ३ ॥ इत्युपस्थायउपविश्याचम्यप्राणायाममासनविधिंन्यासांश्चकृत्वा ॥ युवतींयुवादित्यमंडलमध्यस्थांश्वेतवर्णांश्वेतांबरानुलेपनस्रगाभरणांचतुर्वक्त्रांप्रतिवक्त्रंत्रिनेत्रांचंद्रशेखरांत्रिशूलखड्गखट्वांगडमरुकचतु

र्भुजांवृषभासनारूढांरुद्रदैवत्यांयजुर्वेदमुदाहरंतींभुवर्लोकाधिष्ठात्रींसावित्रींनामदेवतांध्यात्वा ॥ आगच्छवरदे० ॥ यथेष्टकामं जपंकुर्यात् ॥ अन्यत्प्रातःसंध्यावत् ॥ रात्रौमध्याह्नसंध्यायांआकृष्णेनेत्यर्घ्यदानं ॥ गायत्र्याप्रायश्चित्तार्थंद्वितीयंदत्वाहविष्पांतमितिपंचर्चेनोपस्थानंकार्यं ॥ इतिमध्याह्नसंध्या ॥ ॥ छ ॥ ॥ छ ॥

## ॥ २६ ॥ अथब्रह्मयज्ञः[1] ॥

श्रीगणेशायनमः ॥ दर्भेषुदर्भपाणिःप्राङ्मुखएवोपविश्य ॥ आचम्यप्राणानायम्यदेशकालाद्युच्चार्य ममोपात्तदुरितक्षयद्वारा श्रीपरमेश्वरप्रीत्यर्थंब्रह्मयज्ञेनयक्ष्ये ॥ पृथिवीतिमंत्रस्यमेरुपृष्ठऋषिः ॥ कूर्मोदेवता ॥ सुतलंछंदः ॥ आसनेविनियोगः ॥ ॐ पृथ्विव्त्वयाधृतालोकादेवित्वंविष्णुनाधृता ॥ त्वंचधारयमांदेविपवित्रंकुरुचासनं ॥ अपसर्पंतुतेभूतायेभूताभूमिसंस्थिताः ॥ येभूताविघ्नकर्तारस्तेगच्छंतुशिवाज्ञया ॥ अपक्रामंतुभूतानिपिशाचाःसर्वतोदिशं ॥ सर्वेषामविरोधेनब्रह्मकर्मसमारभे ॥ विद्युदसीतिमंत्रस्य ॥ अग्निर्ऋषिः ॥ वरुणोदेवता ॥ उदकोपस्पर्शनेविनियोगः ॥ ॐ विद्युदसिविद्यमेपाप्मानमृतात्सत्यमुपैमि[2] ॥ इतिमंत्रेणापउपस्पृश्यवामजानूपरिदक्षिणंपादंनिधायदक्षिणजानुनिकुशपवित्रगर्भप्रागंगुलिमुत्तानंसव्यपाणिंनिधायतदुपरिदक्षिणंपाणिंप्रागंगुलिमेवंन्यंचंनिधायव्याहृतिपूर्वांपच्छोर्धर्चशःसर्वांसावित्रींपठेत् ॥ ( प्रणवस्यपरब्रह्मऋषिः[3] ॥ परमात्मादेवता ॥ दैवीगायत्रीछंदः ॥ व्याहृतीनांविश्वामित्रजमदग्निभरद्वाजभृगवऋषयः ॥ अग्निवायुसूर्यप्रजापतयोदेवताः ॥

---

१ सचप्रातर्होमोत्तरंमध्याह्नसंध्योत्तरंवावैश्वदेवांतेवासकृदेवकार्यः । आश्वलायनैस्तुमध्याह्नसंध्योत्तरमेवानुष्ठेयः ॥ २ विद्युदसीत्यादेराद्यंतेपाठस्तैत्तिरीयविषयइति धर्मसिंधुः ॥ ३ ऋष्याद्येतन्नित्यंनपठेत । नचसारेदृषिछंदःश्राद्धेवैतानिकेमखे । ब्रह्मयज्ञेचेतिवचनात ॥

गायत्र्युष्णिगनुष्टुब्बृहत्यश्छंदांसि ॥ गायत्र्याविश्वामित्रःसवितागायत्री ॥ अग्निमीळइत्यादीनांछंदसांमधुच्छंदादयऋषयः॥ अग्न्यादयोदेवताः ॥ गायत्र्यादीनिछंदांसि ॥ ब्रह्मयज्ञेविनियोगः ॥ ) ॐ भूर्भुवःस्वः ॥ तत्सवितुः० इतिपादः अर्धं सर्वा ऋक् ॥३॥ अग्निमीळेपुरोहितंयज्ञस्यदेवमृत्विजं ॥ होतारंरत्नधातमं ॥ अग्निःपूर्वेभिर्ऋषिभिरीड्योनूतनैरुत ॥ सदेवाँएहवक्षति ॥ अग्निनारयिमश्नवत्पोषमेवदिवेदिवे ॥ यशसंवीरवत्तमं ॥ अग्नेयंयज्ञमध्वरंविश्वतःपरिभूरसि ॥ सइद्देवेषुगच्छति ॥ अग्निर्होताकविक्रतुःसत्यश्चित्रश्रवस्तमः ॥ देवोदेवेभिरागमत् ॥ १ ॥ यदंगदाशुषेत्वमग्नेभद्रंकरिष्यसि ॥ तवेत्तत्सत्यमंगिरः ॥ उपत्वाग्नेदिवेदिवेदोषावस्तर्धियावयं ॥ नमोभरंतएमसि ॥ राजंतमध्वराणांगोपामृतस्यदीदिविं ॥ वर्धमानंस्वेदमे ॥ सनःपितेवसूनवेग्नेसूपायनोभव ॥ सचस्वानःस्वस्तये ॥२॥ अग्निर्वैदेवानामवमोविष्णुःपरमः ॥ अथमहाव्रतं ॥ एषपंथाएतत्कर्म ॥ अथातःसंहितायाउपनिषत् ॥ विदामघवन्विदा॥ महाव्रतस्यपंचविंशतिंसामिधेन्यः ॥ इषेत्वोर्जेत्वा ॥ अग्नआयाहिवीतये॥ शंनोदेवीरभिष्टये ॥ अथैतस्यसमाम्नायस्य ॥ समाम्नायःसमाम्नातः ॥ मयरसतजभनलगसंमितं ॥ गौः । ग्मा ॥ पंचसंवत्सरमयं ॥ अथशिक्षांप्रवक्ष्यामि ॥ वृद्धिरादैच् ॥ यदिंद्रोदाशराज्ञेमानुषंव्यगाहथा ॥ इदंजनाउपश्रुत॥ योगीश्वरंयाज्ञवल्क्यं ॥ नारायणंनमस्कृत्य ॥ अथातोधर्मंव्याख्यास्यामः ॥ अथातोधर्मजिज्ञासा ॥ अथातोब्रह्मजिज्ञासा ॥ तच्छंयोरावृणीमहेगातुंयज्ञायगातुंयज्ञपतयेदैवीस्वस्तिरस्तुनःस्वस्तिर्मानुषेभ्यः ॥ ऊर्ध्वंजिगातुभेषजं ॥ शंनोअस्तुद्विपदेशंचतुष्पदे ॥ नमोब्रह्मणेनमोअस्त्वग्नयेनमःपृथिव्यैनमओषधीभ्यः ॥ नमोवाचेनमोवाचस्पतयेनमोविष्णवेमहतेकरोमि ॥ इतित्रिः ॥ ॐ भूर्भुवःस्वः शांतिःशांतिःशांतिः ॥ वृष्टिरसीतिमंत्रस्य ॥ अग्निर्ऋषिः ॥ वरुणोदेवता ॥ उदकोपस्पर्शनेविनियोगः ॥ ॐ वृष्टिरसिवृश्च

मेप्राप्मानमृतात्सत्यमुपागामित्यपःस्पृष्ट्वा ॥ देवतीर्थेनकुशाग्रैरेकैकांजलितर्पयेत् ॥ प्रजापतिस्तृप्यतु ॥ ब्रह्मातृप्यतु ॥ वेदास्तृप्यंतु ॥ देवास्तृप्यंतु ॥ ऋषयस्तृप्यंतु ॥ सर्वाणिच्छंदांसितृप्यंतु ॥ ॐकारस्तृप्यतु ॥ वषट्कारस्तृप्यतु ॥ व्याहृतयस्तृप्यंतु ॥ सावित्रीतृप्यतु ॥ यज्ञास्तृप्यंतु ॥ द्यावापृथिवीतृप्यतां ॥ अंतरिक्षंतृप्यतु ॥ अहोरात्राणितृप्यंतु ॥ सांख्यास्तृप्यंतु ॥ सिद्धास्तृप्यंतु ॥ समुद्रास्तृप्यंतु ॥ नद्यस्तृप्यंतु ॥ गिरयस्तृप्यंतु ॥ क्षेत्रौषधिवनस्पतिगंधर्वाप्सरसस्तृप्यंतु ॥ नागास्तृप्यंतु ॥ वयांसितृप्यंतु ॥ गावस्तृप्यंतु ॥ साध्यास्तृप्यंतु ॥ विप्रास्तृप्यंतु ॥ यक्षास्तृप्यंतु ॥ रक्षांसितृप्यंतु ॥ भूतानितृप्यंतु ॥ एवमंतानितृप्यंत्वित्येकोनत्रिंशन्मंत्रैः ॥ अथनिवीतीऋषितीर्थेनकुशमध्येनद्विःप्रत्येकं ॥ शतर्चिनस्तृप्यंतु ॥ माध्यमास्तृप्यंतु ॥ गृत्समदस्तृप्यतु ॥ विश्वामित्रस्तृप्यतु ॥ वामदेवस्तृप्यतु ॥ अत्रिस्तृप्यतु ॥ भरद्वाजस्तृप्यतु ॥ वसिष्ठस्तृप्यतु ॥ प्रगाथास्तृप्यंतु ॥ पावमान्यस्तृप्यंतु ॥ क्षुद्रसूक्तास्तृप्यंतु ॥ महासूक्तास्तृप्यंत्वितिद्वादशमंत्रैः ॥ अथप्राचीनावीतीपितृतीर्थेनकुशमूलैस्त्रिःप्रत्येकं ॥ सुमंतुजैमिनिवैशंपायनपैलसूत्रभाष्यभारतमहाभारतधर्माचार्यास्तृप्यंतु ॥ जानंतिबाहविगार्ग्यगौतमशाकल्यबाभ्रव्यमांडव्यमांडूकेयास्तृप्यंतु ॥ गर्गीवाचक्नवीतृप्यतु ॥ वडवाप्रातीथेयीतृप्यतु ॥ सुलभामैत्रेयीतृप्य० ॥ कहोळंतर्पयामि ॥ कौषीतकंत० ॥ महाकौषीतकंत० ॥ पैंग्यंत० ॥ महापैंग्यंत० ॥ सुयज्ञंत० ॥ सांख्यायनंत० ॥ ऐतरेयंत० ॥ महैतरेयंत० ॥ शाकलंत० ॥ बाष्कलंत० ॥ सुजातवक्रंत० ॥ औदवाहिंत० ॥ महौदवाहिंत० ॥

१ १ अंगुल्यग्रेतीर्थंदैवंस्वल्पांगुल्योर्मूलेकायं । मध्येंगुष्ठांगुल्योःपैत्रंमूलेत्वंगुष्ठस्यब्राह्मम् ॥ २ कुशाग्रैस्तर्पयेद्देवान्मनुष्यान्कुशमध्यतः । द्विगुणीकृत्यमूलाग्रैःपितॄन्संतर्पयेद्द्विजः ॥ इत्याचारमयूखे ॥ व्यासः ॥ एकैकमंजलिंदेवाद्वौद्वौतुसनकादयः ॥ अर्हंतिपितरस्त्रींस्त्रीन्स्त्रियस्त्वेकैकमंजलिं ॥

सौजामिंत० ॥ शौनकंत० ॥ आश्वलायनंत० ॥ येचान्येआचार्यास्तेसर्वेतृप्यंतु ॥ इतित्रयोविंशतिमंत्रैस्तर्पयित्वापितॄंस्तर्पयेत् ॥ यथा ( प्रत्येकमंजलित्रयं ॥ ततःअस्मत्पितरंअमुकशर्माणंअमुकगोत्रंवसुरूपंस्वधानमस्तर्पयामि ॥ अस्मत्पितामहंअमुकशर्माणंअमुकगोत्रंरुद्ररूपंस्व० ॥ अस्मत्प्रपितामहंअ०श०अ०गो० आदित्यरूपंस्वधा० ॥ अस्मत्[1]मातरंअमुकदांअमुकगोत्रांवसुरूपांस्व० ॥ अस्मत्पितामहींअ० दां अ०गो० रुद्र० स्व० ॥ अस्मत्प्रपितामहींअमुकदांअ०गो० आदित्यरूपांस्व० ॥ अ०सापत्नमातरंअमु०दांअमु०गोत्रांवसु०स्व० ॥ अस्मत्मातामहंअमुकशर्माणंअमुकगोत्रंसपत्नीकंवसुरूपंस्वधा० ॥ अस्मत्मातुःपितामहंअमुकशर्माणंअमुकगोत्रंसपत्नीकंरु०स्व०॥ अस्मत्मातुःप्रपितामहंअमुकशर्माणंअ०गोत्रंसपत्नीकंआदित्यरूपंस्व०॥ अस्मत्[2]पत्नींअमुकदांअमुकगोत्रांवसुरूपांस्वधानम० ॥ अस्मत्सुतंअमुकशर्माणंअमुकगोत्रंसपत्नीकंससुतंवसुरूपंस्वधानम० ॥ अस्मत्दुहितरंअमुकदांअमुकगोत्रांसभर्तृकांवसुरूपांस्व० ॥ अस्मत्पितृव्यंअमुकशर्माणंअमुकगोत्रंसपत्नीकंससुतंवसुरूपंस्व०॥ अस्मत्मातुलंअमुकशर्माणंअमुकगोत्रंसपत्नीकंससुतंवसुरूपंस्वधान०॥अस्मत्भ्रातरंअमुकशर्माणंअमुकगोत्रंसपत्नीकंससुतंवसुरूपंस्व० ॥ अस्मत्पितृभगिनींअमुकदांअमुकगोत्रांसभर्तृकांससुतांवसुरूपांस्वधानम० ॥ अस्मत्मातृभगिनींअमुकदांअमुकगोत्रांसभर्तृकांससुतांवसुरूपांस्व० ॥ अस्मत्भगिनींअमुकदांअमुकगोत्रांसभर्तृकांससुतांवसुरूपांस्व० ॥ अस्मत्श्वशुरंअमुकशर्माणंअमुकगोत्रंसपत्नीकंससुतंवसुरूपंस्वधानम० ॥ अस्मत्गुरुं ( पितरं ) अमुकशर्माणंअमुकगोत्रंसपत्नीकंससुतंवसुरूपंस्व० ॥ अस्मत्शिष्यंअमुकशर्माणंअमुकगोत्रंवसुरूपंस्वधानमस्तर्पयामि ॥ आब्रह्मस्तंबपर्यंतंदेवर्षिपितृमानवाः ॥ तृप्यंतुपि

१ मातृत्रयीभिन्नस्त्रीभ्यएकांजलिर्देयः ॥ २ इतोऽनुक्तज्ञापनायपत्न्याद्युच्चरःकृतोपितर्पकैःसमृतपितॄहएवकार्यः ॥

तरःसर्वेमातृमातामहादयः ॥ अतीतकुलकोटीनांसप्तद्वीपनिवासिनां ॥ आब्रह्मभुवनाल्लोकादिदमस्तुतिलोदकमितित्रिर्दत्वा ॥ येकेचास्मत्कुलेजाताअपुत्रागोत्रिणोमृताः ॥ तेगृह्णंतुमयादत्तंवस्त्रनिष्पीडनोदकम् ॥ इतिचतुर्गुणमुपरिदशंवस्त्रंभूमौवामभागेनिष्पीडयेत् ॥ अनेनदेवर्ष्याचार्यपितृतर्पणाख्येनकर्मणाभगवान्श्रीपरमेश्वरःप्रीयतांनमम ॥ द्विराचम्य ॥ येषांपितानन भ्रातानपुत्रोनान्यगोत्रिणः ॥ तेसर्वेतृप्तिमायांतुमयोत्सृष्टैःकुशैस्तथा ॥ इतिदर्भत्यागः ॥ इतिब्रह्मयज्ञः ॥ ॥ ६ ॥

## ॥ २७ ॥ अथवैश्वदेवप्रयोगः ॥

अथप्रातःसायंवैश्वदेवस्यसहकरणपक्षेतंत्रप्रयोगः ॥ अग्नेःपश्चात्प्राङ्मुखउपविश्य आचम्यप्राणायामंकृत्वादेशकालौनिर्दिश्य ममोपात्तदुरितक्षयद्वाराश्रीपरमेश्वरप्रीत्यर्थआत्म[illegible]संस्कारपंचसूनाजनितदोषपरिहारार्थंप्रातर्वैश्वदेवंसायंवैश्वदेवंचसहतंत्रेणकरिष्ये ॥ कुंडेस्थंडिलादौवापचनाग्निंजुष्टोदमूनाआत्रेयोवसुश्रुतोऽग्निस्त्रिष्टुप् ॥ एह्यग्नेराहूगणोगोतमोऽग्निस्त्रिष्टुप् ॥ अग्न्यावाहनेविनियोगः ॥ ॐ जुष्टोदमूनाअतिथिर्दुरोणइमंनोयज्ञमुप[illegible] ॥ विश्वाअग्नेअभियुजोविहत्याशत्रूयतामाभराभोजनानि ॥ एह्यग्नइहहोतानिषीदादब्धःसुपुरएताभवानः ॥ अवतांत्वारोदसीविश्वमिन्वेयजामहेसौमनसायदेवान् ॥ इत्यक्षतैरावाह्यआच्छादनंदूरीकृत्यसमस्तव्याहृतीनांपरमेष्ठीप्रजापतिःप्रजापतिर्बृहती ॥ अग्निप्रतिष्ठापनेविनियोगः ॥ ॐ भूर्भुवःस्वःपावकनामानमग्निंप्रतिष्ठापयामि ॥ प्रोक्षितेंधनानिनिक्षिप्यवेणुधमन्याप्रबोध्यध्यायेत् ॥ चत्वारिशृंगागौतमोवाम

---

१ तिलतर्पणंगृहेनिषिद्धमितिधर्मसिंधुः ॥ २ अत्रबह्वृचानांप्राचीनावीतीअन्येषांनिवीती । इदंचतीरादौबहिर्ब्रह्मयज्ञेकृतेकार्यंगृहेतुनिषिद्धम् ॥
३ पृथक्कर्तव्यश्चेत्प्रातर्वैश्वदेवंकरिष्यइतिप्रातः । सायंतसायंवैश्वदेवमित्याद्यूहःकार्यः ॥

देवोग्निस्त्रिष्टुप् ॥ अग्निमूर्तिध्यानेविनियोगः ॥ ॐ चत्वारिशृंगात्रयोअस्यपादाद्वेशीर्षेसप्तहस्तासोअस्य ॥ त्रिधाबद्धोवृषभोरो रवीतिमहोदेवोमर्त्यांआविवेश ॥ सप्तहस्तश्चतुःशृंगःसप्तजिह्वोद्विशीर्षकः ॥ त्रिपात्प्रसन्नवदनःसुखासीनःशुचिस्मितः ॥ स्वा हांतुदक्षिणेपार्श्वेदेवींवामेस्वधांतथा ॥ बिभ्रद्दक्षिणहस्तैस्तुशक्तिमन्नंस्रुचंस्रुवं ॥ तोमरंव्यजनंवामैर्घृतपात्रंचधारयन् ॥ मेषारू ढोजटाबद्धोगौरवर्णोमहौजसः ॥ धूम्रध्वजोलोहिताक्षःसप्तार्चिःसर्वकामदः ॥ आत्माभिमुखमासीनएवंरूपोहुताशनः ॥ अग्नेवैश्वानरशांडिल्यगोत्रमेषध्वजप्राङ्मुखोदेवममसंमुखोवरदोभव ॥ इतिध्यात्वापरिसमूहनपर्युक्षणेकृत्वा ॥ विश्वानिनइ त्यलंकृत्य ॥ विश्वानिनइतितिसृणामात्रेयोवसुश्रुतोऽग्निस्त्रिष्टुप् ॥ द्वयोरर्चनेऽत्यायाउपस्थानेविनियोगः ॥ ॐ विश्वानिनो दुर्गहाजातवेदः ॥ ॐ सिंधुंननावादुरितातिपर्षि ॥ ॐ अग्नेअत्रिवन्नमसागृणानः ॥ ॐ अस्माकंबोध्यवितातनूनां ॥ ॐ य स्त्वाहृदाकीरिणामन्यमानः ॥ ॐ अमर्त्यंमर्त्योजोहवीमि ॥ ॐ जातवेदोयशोअस्मासुधेहि ॥ ॐ प्रजाभिरग्नेअमृतत्वमश्यां ॥ ॐ यस्मैत्वंसुकृतेजातवेदउलोकमग्नेकृणवःस्योनं ॥ अश्विनंसपुत्रिणंवीरवंतंगोमंतंरयिंनशतेस्वस्ति ॥ आत्मानंचालंकृत्यहस्तंप्र क्षाल्य ॥ घृताक्तमन्नमग्नावधिश्रित्यउदगुद्वास्यप्रोक्ष्यअग्नेःपश्चिमतोनिधायत्रिधाविभज्य ॥ सव्यंपाणितलंहृदिन्यस्यदक्षिणह स्तेनदक्षिणभागादार्द्रामलकमितमन्नमादायांगुष्ठाग्रेणपीडितंसंहतांगुल्युत्तानपाणिनाप्रणवादिरहितैःस्वाहांतैःसूर्यादिमंत्रैर्जुहु यात् ॥ सूर्यायस्वाहा ॥ सूर्यायेदंनमम ॥ प्रजापतयेस्वाहाप्रजापतयइदं० ॥ सोमायवनस्पतयेस्वाहा० ॥ अग्नीषो माभ्यांस्वाहा० ॥ इंद्राग्निभ्यां० ॥ द्यावापृथिवीभ्यां० ॥ धन्वंतरयेस्वाहा ॥ इंद्राय० ॥ विश्वेभ्योदेवेभ्यः० ॥ ब्रह्मणेस्वाहाब्रह्मणइदं० ॥ सायंवैश्वदेवीयाः ॥ अग्नयेस्वाहा ॥ अग्नयइदंनमम ॥ प्रजापतयइत्यादिब्रह्मणइत्यंतंपूर्ववन्नवाहुती

हुत्वा ॥ ( भूः स्वाहाअग्नयइदंनमम ॥ भुवःस्वाहावायवइदं० ॥ स्वःस्वाहासूर्यायेदं० ॥ भूर्भुवःस्वःस्वाहाप्रजापतयइदं० )॥
त्रिस्त्रिःपरिसमूहनपर्युक्षणेकृत्वाअग्र्यलंकरणं ॥ पंचोपचारपूजांते ॥ अग्निस्तुविश्रवइत्यात्रेयोवसूयवोग्निस्त्रिष्टुप् ॥ पुष्पांजलौ
विनियोगः ॥ ॐ अग्निस्तुविश्रवस्तमंतुविब्रह्माणमुत्तमं ॥ अतूर्तंश्रावयत्पतिंपुत्रंददातिदाशुषे ॥ इतिपुष्पांजलिंसमर्प्यविभू
तिंधारयेत् ॥ मानस्तोकइत्यस्यकुत्सोरुद्रोजगती ॥ विभूतिग्रहणेविनियोगः ॥ ॐ मानस्तोकेतनयेमानआयौमानोगोषुमानो
अश्वेषुरीरिषः ॥ वीरान्मानोरुद्रभामितोवधीर्हविष्मंतःसदमित्वाहवामहे ॥ त्र्यायुषंजमदग्नेरितिललाटे ॥ कश्यपस्यत्र्यायुषं
कंठे ॥ अगस्त्यस्यत्र्यायुषंनाभौ ॥ यद्देवानांत्र्यायुषंदक्षिणस्कंधे ॥ तन्मेअस्तुत्र्यायुषंवामस्कंधे ॥ सर्वमस्तुशतायुषंशिरसि ॥
ॐ चंमेस्वरश्चमेयज्ञोपचतेनमश्च ॥ यत्तेन्यूनंतस्मैतउपयत्तेतिरिक्तंतस्मैतेनमः ॥ अग्नयेनमः ॥ स्वस्ति ॥ श्रद्धांमेधांयशःप्रज्ञां
विद्यांबुद्धिंश्रियंबलं ॥ आयुष्यंतेजआरोग्यंदेहिमेहव्यवाहन ॥ इतिदेवयज्ञः ॥ ॥ ७ ॥

## ॥ २८ ॥ अथभूतयज्ञः ॥

श्रीः ॥ भूमिंप्रोक्ष्य द्वितीयभागादन्नमादायप्राचीमारभ्यईशानीपर्यंतंचक्राकारंनैरंतर्येण सूर्यायस्वाहा ॥ प्रजापतयेस्वाहा ॥ सो
मायवनस्पतयेस्वाहा ॥ अग्नीषोमाभ्यांस्वाहा ॥ इंद्राग्निभ्यांस्वाहा ॥ द्यावापृथिवीभ्यांस्वाहा ॥ धन्वन्तरयेस्वाहा इंद्रायस्वाहा ॥
विश्वेभ्योदेवेभ्यःस्वाहा ॥ ब्रह्मणेस्वाहा ॥ अद्भ्यःस्वाहा ॥ ओषधिवनस्पतिभ्यः० ॥ गृहाय० ॥ गृहदेवताभ्यः० ॥ वास्तु
देवताभ्यः स्वाहेतिदत्वा चक्राद्बहिःप्राच्यांप्राक्संस्थं ॥ इंद्रायस्वाहा० ॥ इंद्रपुरुषेभ्यः० ॥ दक्षिणतउदक्संस्थं ॥ यमाय० ॥

१ अयंव्याहृतिहोमःकृताकृतः । अन्नेनव्याहृतिहोमोविधुरपरइतिभातीतिचंद्रिकायाम् ।

यमपुरुषेभ्यः० ॥ पश्चिमतःप्राक्संस्थं ॥ वरुणाय० ॥ वरुणपुरुषेभ्यः० ॥ उत्तरस्यामुदक्संस्थं ॥ सोमाय० ॥ सोमपुरुषेभ्यः० ॥ चक्रमध्ये ॥ ब्रह्मणेस्वाहा ॥ तत्प्राच्यां ॥ ब्रह्मपुरुषेभ्यः० ॥ ब्रह्मणोदक्षिणतः ॥ विश्वेभ्योदेवेभ्यः० ॥ ब्रह्मणःपश्चिमतः ॥ सर्वेभ्योभूतेभ्योदिवाचारिभ्यः० ॥ चक्रादुत्तरतोरक्षोभ्यःस्वाहेतिदत्वापउपस्पृश्यतदुत्तरतोभूमिंप्रोक्ष्यद्वितीयभूतयज्ञंकुर्यात्॥ तत्रसूर्यपदस्थानेऽग्निपदंदिवापदस्थानेनक्तमितिविशेषः ॥ शेषंपूर्ववत् ॥ इतिभूतयज्ञः ॥ ॥ ॥ छ ॥

## ॥ २९ ॥ अथपितृयज्ञः ॥

श्रीः ॥ प्राचीनावीती ॥ आग्नेय्यभिमुखःसव्यंजान्वाच्योत्तरभागादंगुष्ठपर्वमात्रमन्नंगृहीत्वापराचीनपाणिनाचक्राद्दक्षिणतः स्वधापितृभ्यइतिमंत्रेणबलिंदत्वापउपस्पृश्य ॥ द्वितीयचक्राग्नेयभागेचर्सथैवदत्वापउपस्पृश्यसव्यंपितृयज्ञान्नशेषेणैवचक्राद्ब हिर्नैर्ऋत्यकोणे श्यामाय ॥ चक्राद्वायव्यकोणे शबलाय॥ इत्युभयत्रबलिंदत्वा बहिर्गत्वागृहांगणेजलमासिच्यश्वचांडालपति तभूतवायसेभ्योन्नंभूमौविकिरेत् ॥ ऐंद्रवारुणवायव्यायाम्यानैर्ऋतिकाश्चये ॥ तेकाकाःप्रतिगृह्णंतुभूम्यांपिंडंमयोज्झितम् ॥ इतिपितृयज्ञशेषेणदद्यात् ॥ वैवस्वतकुलेजातौद्वौश्यामशबलौशुनौ ॥ ताभ्यांपिंडोमयादत्तोरक्षेतांपथिमांसदा ॥ येभूताः प्रचरंतिदिवानक्तंबलिमिच्छंतोवितुदस्यप्रेष्ठाः ॥ तेभ्योबलिंपुष्टिकामोददामिमयिपुष्टिंपुष्टिपतिर्ददातु ॥ रात्रौचेन्नक्तमितिब्रू यात् ॥ इतिशौनकोक्तचक्राकारप्रयोगः ॥ बलिदानोत्तरमंगणएवगोदोहनमात्रंतत्रस्थित्वातिथिमाकांक्षेत् ॥ प्रक्षालितपाणिपा दआचम्यगृहंप्रविशन्निमंमंत्रंपठेत् ॥ ॐ शांतापृथिवीशिवमंतरिक्षंद्यौर्नोदेव्यभयंनोअस्तु ॥ शिवादिशःप्रदिशउद्दिशोनआपो विद्युतःपरिपांतुसर्वतःशांतिःशांतिःशांतिः ॥ सर्वारिष्टशांतिरस्तुइतिजपित्वाविष्णुंस्मृत्वाकर्मार्पयेत् ॥ इतिपितृयज्ञः॥ छ॥

॥ प्रातर्बलिहरणम् ॥




॥ सायंबलिहरणम् ॥



## ॥ ३० ॥ अथमनुष्ययज्ञः ॥

श्रीः ॥ अतिथिभोजनपर्याप्तंषोडशग्रासमितंवाग्रासचतुष्टयंवाग्रासमितंवान्नंसनकादिमनुष्येभ्योहंतइदंनममेतिदद्यात् ॥ ब हुषुभिक्षुकेष्वागतेष्वशक्तेनत्रिभ्योग्रासत्रयंदेयम् ॥ इतिमनुष्ययज्ञः ॥ इतिदिनचतुर्थभागकृत्यम् ॥ ॥ ७४ ॥

## ॥ ३१ ॥ गोपूजनंब्राह्मणपूजनंच ॥

श्रीः ॥ अथदिनपंचमभागकृत्यानि ॥ अद्यपूर्वोच्चरितएवंगुणविशेषणविशिष्टायांशुभपुण्यतिथौममआत्मनःश्रुतिस्मृतिपुरा णोक्तफलप्राप्त्यर्थं श्रीरुद्ररूपिणीगोदेवताप्रीत्यर्थंयथाज्ञानेनयथामीलितोपचारैःपूजनमहंकरिष्ये ॥ गवामंगेषुतिष्ठंतिभुवनानि चतुर्दश ॥ यस्मात्तस्माच्छिवंमेस्यादिहलोकेपरत्रच ॥ श्रीरुद्ररूपिण्यैगवेनमः ॥ ध्या० श्रीरु० आवा० आस० पाद्यं० अर्घ्यं० स्नानं० वस्त्रं० अक्षतान्० चंदनं० पुष्पं० धूपं० दीपं० ओदननैवेद्यं (गोग्रासं) समर्पयामि ॥ सौरभेय्यःसर्वहिताःपवित्राःपुण्यराशयः ॥ प्रतिगृह्णंतुमेग्रासंगावस्त्रैलोक्यमातरः ॥ गवामंगेष्वितिमंत्रेणप्रदक्षिणा ॥ मंत्रपुष्पंसमर्प्य ॥ आगावो० इत्येकंवर्गंपठित्वा ॥ गा वोमेअग्रतःसंतुगावोमेसंतुपृष्ठतः ॥ गावोमेहृदयेनित्यंगवांमध्येवसाम्यहं ॥ इतिसंप्रार्थ्य ॥ अनेनगोपूजनेनश्रीरुद्ररूपिणीगौः प्रीयतां ॥ इतिगोपूजनंसमाप्तं ॥ अथब्राह्मणपूजा ॥ महाविष्णुस्वरूपिणेब्राह्मणायइदमासनं ॥ इदंपाद्यं ॥ चरणंपवित्रंवि ततंपुराणं ॥ येनपूतस्तरतिदुष्कृतानि ॥ तेनपवित्रेणशुद्धेनपूताः ॥ अतिपाप्मानमरातिंतरेम ॥ भूमिदेवाग्रजन्मासित्वंविप्र पुरुषोत्तम ॥ प्रत्यक्षोयज्ञपुरुषअर्घोयंप्रतिगृह्यतां ॥ इदमर्घ्यंस० ॥ गंधाःपांतु सौमंगल्यंचास्तु ॥ अक्षताःपांतु आयुष्यम

स्तु ॥ पुष्पाणिपांतु सौश्रियमस्तु ॥ तांबूलंपातु ऐश्वर्यमस्तु ॥ दक्षिणाःपांतु बहुदेयंचास्तु ॥ नमोस्त्वनंतायसहस्रमूर्तयेसह स्रपादाक्षिशिरोरुबाहवे ॥ सहस्रनाम्नेपुरुषायशाश्वतेसहस्रकोटीयुगधारिणेनमः ॥ गंधादिसकलाराधनैःस्वर्चितमस्तु ॥ अस्तु सकलाराधनैःस्वर्चितं ॥ इतिब्राह्मणपूजनंसमाप्तं ॥ ॥ ५ ॥ ॥ ५ ॥

## ॥ ३२ ॥ अथत्रिसुपर्णप्रारंभः ॥

श्रीः ॥ ॐ शांतिःशांतिःशांतिः ॥ ॐ ब्रह्ममेतुमां ॥ मधुमेतुमां ॥ ब्रह्ममेवमधुमेतुमां ॥ यास्तेसोमप्रजावत्सोभिसोअहं ॥ दुष्वप्नहंदुरुःपह ॥ यास्तेसोमप्राणाꣳस्तान्जुहोमि ॥ त्रिसुपर्णमयाचितंब्राह्मणायदद्यात् ॥ ब्रह्महत्यांवाएतेघ्नंति ॥ येब्राह्म णास्त्रिसुपर्णपठंति ॥ तेसोमंप्राप्नुवंति ॥ आसहस्रात्पंक्तिंपुनंति ॥ ॐ ब्रह्ममेधया ॥ मधुमेधया ॥ ब्रह्ममेवमधुमेधया ॥ अ द्यानोदेवसवितःप्रजावत्सावीःसौभगं ॥ परादुष्वप्नियꣳसुव ॥ विश्वानिदेवसवितर्दुरितानिपरासुव ॥ यद्भद्रंतन्मआसुव ॥ मधुवाताऋतायतेमधुक्षरंतिसिंधवः ॥ माध्वीर्नःसंत्वोषधीः ॥ मधुनक्तमुतोषसिमधुमत्पार्थिवꣳरजः ॥ मधुद्यौरस्तुनःपिता ॥ मधुमान्नोवनस्पतिर्मधुमाꣳअस्तुसूर्यः ॥ माध्वीर्गावोभवंतुनः ॥ यइमंत्रिसुपर्णमयाचितंब्राह्मणायदद्यात् ॥ भ्रूणहत्यांवाए तेघ्नंति ॥ येब्राह्मणास्त्रिसुपर्णपठंति ॥ तेसोमंप्राप्नुवंति ॥ आसहस्रात्पंक्तिंपुनंति ॥ ॐ ब्रह्ममेधवा ॥ ॐ मधुमेधवा ॥ ब्रह्ममे वमधुमेधवा ॥ ब्रह्मादेवानांपदवीःकवीनामृषिर्विप्राणांमहिषोमृगाणां ॥ श्येनोगृध्राणाꣳस्वधितिर्वनानाꣳसोमःपवित्रमत्ये तिरेभन् ॥ हꣳसःशुचिषद्वसुरंतरिक्षसद्धोतावेदिषदतिथिर्दुरोणसत् ॥ नृषद्वरसदृतसद्व्योमसदब्जागोजाऋतजाअद्रिजाऋतं

बृहत् ॥ ऋचेत्वारुचेत्वासमित्स्रवंतिसरितोनधेनाः ॥ अंतर्हृदामनसापूयमानाः ॥ घृतस्यधाराअभिचाकशीमि ॥ हिरण्य
योवेतसोमध्यआसां ॥ तस्मिन्त्सुपर्णोमधुकृत्कुलायीभजन्नास्तेमधुदेवताभ्यः ॥ तस्यासतेहरयःसप्ततीरेस्वधांदुहानाअमृतं
स्यधारां ॥ यइदंत्रिसुपर्णमयाचितंब्राह्मणायदद्यात् ॥ वीरहत्यांवाएतेघ्नंति ॥ येब्राह्मणास्त्रिसुपर्णंपठंति ॥ तेसोमंप्राप्नुवं
ति ॥ आसहस्रात्पंक्तिंपुनंति ॥ ॐ तस्यैवंविदुषोयज्ञस्यात्मायजमानःश्रद्धापत्नीशरीरमिध्ममुरोवेदिर्लोमानिबर्हिर्वेदःशिखा
हृदयंयूपःकामआज्यंमन्युः पशुस्तपोग्निर्दमः शमयितादक्षिणावाग्घोताप्राणउद्गाताचक्षुरध्वर्युर्मनोब्रह्माश्रोत्रमग्नीद्यावद्ध्रियतेसा
दीक्षायदश्नातितद्धविर्यत्पिबतितदस्यसोमपानं यद्रमतेतदुपसदोयत्संचरत्युपविशत्युत्तिष्ठतेचसप्रवर्ग्योयन्मुखंतदाहवनीयोया
व्याहृतिराहुतिर्यदस्यविज्ञानंतज्जुहोतियत्सायंप्रातरत्तितत्समिधंयत्प्रातर्मध्यंदिनꣳ सायंचतानिसवनानियेअहोरात्रेतेदर्शपूर्णमा
सौयेर्धमासाश्चमासाश्चतेचातुर्मास्यानियऋतवस्तेपशुबंधायेसंवत्सराश्चपरिवत्सराश्चतेहर्गणाः सर्ववेदसंवाएतत्सत्रंयन्मरणंतदव
भृथएतद्वैजरामर्यमग्निहोत्रꣳसत्रंयएवंविद्वानुदगयनेप्रमीयतेदेवानामेवमहिमानंगत्वादित्यस्यसायुज्यंगच्छत्यथयोदक्षिणेप्रमी
यतेपितृणामेवमहिमानंगत्वाचंद्रमसःसायुज्यꣳ सलोकतामाप्नोत्येतौवैसूर्याचंद्रमसोर्महिमानौब्राह्मणोविद्वानभिजयतितस्माद्ब्र
ह्मणोमहिमानमाप्नोतितस्माद्ब्रह्मणोमहिमानं ॥ सहनाववतु ॥ सहनौभुनक्तु ॥ सहवीर्यंकरवावहै ॥ तेजस्विनावधीतम
स्तुमाविद्विषावहै ॥ ॐ शांतिःशांतिःशांतिः ॥ इतित्रिसुपर्णसमाप्तं ॥ ॥ छ ॥

## ॥ ३२ ॥ अथान्नसमर्पणविधिः ॥

श्रीः ॥ पात्राधोमंडलंकृत्वापात्रमध्येऽन्नंवामेभक्ष्यभोज्यंदक्षिणेघृतपायसंपुरतःशाकादीन् एवंपरिवेषणंकारयित्वा ॥ ब्राह्म

णभोजनसंकल्पः ॥ परिविष्टमन्नंगायत्रीमंत्रेणप्रोक्ष्य ॥ नानापात्रस्थमन्नंतस्मैतस्मैसंप्रददे ॥ प्रजापतेहिरण्यगर्भःप्रजापति त्रिष्टुप्‌अन्नसमर्पणेविनियोगः ॥ ॐ प्रजापतेनत्वदेतान्यन्योविश्वाजातानिपरितावभूव ॥ यत्कामास्तेजुहुमस्तन्नोअस्तुवयं स्यामपतयोरयीणाम् ॥ एकोविष्णुर्महद्भूतंपृथग्भूतान्यनेकशः ॥ त्रींल्लोकान्व्याप्यभूतात्माभुंक्तेविश्वभुगव्ययः ॥ अनेनब्राह्मणभोजनेनअमुकदेवताःप्रीयंतांनमम ॥ नमोदेव्यैमहादेव्यैशिवायैसततंनमः ॥ नमःप्रकृत्यैभद्रायैनियताःप्रणताःस्मताम् ॥ अनेनसुवासिनीभोजनेनअमुकदेवताप्रीयतांनमम ॥ ॐ तत्सद्ब्रह्मार्पणमस्तु ॥ अन्नपतेन्नस्यनोदेह्यनमीवस्यशुष्मिणः ॥ प्र प्रदातारंतारिषऊर्जंनोधेहिद्विपदेचतुष्पदे ॥ यंतुनदयोवर्षंतुपर्जन्याः ॥ सुपिप्पलाओषधयोभवंतु ॥ अन्नवतामोदनवता मामिक्षवतां ॥ एषाꣳराजाभूयासं ॥ ओदनमुद्ब्रुवते ॥ परमेष्ठीवाएषः ॥ यदोदनः ॥ परमामेवैनꣳश्रियंगमयति ॥ पार्वतीपतेहरहरमहादेव ॥ ॥ इतिअन्नसमर्पणं ॥ ॥छ॥ ॥छ॥

## ॥ ३४ ॥ अथभोजनविधिः ॥

श्रीः ॥ पाणिपादौप्रक्षाल्याचम्यश्रीपर्ण्यादिपीठेप्राङ्मुखःप्रत्यङ्मुखोवोपविश्यभूमिंप्रोक्ष्यचतुरस्रंमंडलंकृत्वातदुपरिद्विपंचाशत्पलपरिमितंकांस्यपात्रमन्यद्वापर्णपात्रंनिधायपरिवेषणंकारयित्वातस्मादन्नाद्गोग्रासार्थमन्नंपात्रांतरेकृत्वा सौरभेय्यःसर्वहिता इतिमंत्रेणगवेग्रासंदत्वाआचम्यप्रांजलिरन्नंप्रणम्य अस्माकंनित्यमेतदस्तुइतिप्रार्थ्य ॐ भूर्भुवःस्वः तत्सवितु० इत्यन्नमभ्युक्ष्य ॐ स्वादोपितोमधोपितोवयंत्वाववृमहे ॥ अस्माकमविताभव ॥ इत्यभिमंत्रितोदकेनान्नंप्रोक्ष्य ॥ सत्यंत्वर्तेनपरिषिंचामि ॥ इतिदिवा ॥ रात्रौतु ॥ ऋतंत्वासत्येनपरिषिंचामि ॥ इतिप्रदक्षिणमन्नंपरिषिच्य ॥ अंतश्चरतिभूतेषुगुहायांविश्व

तोमुखः ॥ त्वंयज्ञस्त्वंवषट्कारस्त्वंविष्णुःपुरुषःपरः ॥ पात्राद्दक्षिणतोभुविउदकधारांप्राक्संस्थांकृत्वातत्रक्रमेणबलित्रयंदद्यात् ॥ ॐ भूपतयेनमः ॥ ॐ भुवनपतयेनमः ॥ ॐ भूतानांपतयेनमः ॥ एवंबलित्रयंप्राक्संस्थंदत्त्वाउपर्युदकंदत्त्वाबलीनुद्धृत्यहस्तंप्रक्षाल्यआपोशनार्थंजलमादायवामहस्तमध्यमानामिकांगुष्ठैर्भोजनपात्रमालभ्य ॥ अन्नंब्रह्मारसोविष्णुर्भोक्तादेवोमहेश्वरः ॥ प्रीयतांभगवानीशःपरमात्मासदाशिवः ॥ अहंवैश्वानरोभूत्वाप्राणिनांदेहमाश्रितः ॥ प्राणापानसमायुक्तःपचाम्यन्नंचतुर्विधम् ॥ इत्यस्यार्थंध्यात्वावामकरेणपात्रंधृत्वा ॥ अमृतोपस्तरणमसीत्यपःप्राश्यमौनी ॥ तर्जनीमध्यमांगुष्ठैः ॥ ॐ प्राणायस्वाहाप्राणायेदंनमम ॥ मध्यमानामिकांगुष्ठैः ॥ ॐ अपानायस्वाहा० ॥ कनिष्ठिकानामिकांगुष्ठैः ॥ ॐ व्यानायस्वाहा० ॥ मध्यमानामिकांगुष्ठैः ॥ ॐ उदानायस्वाहा० ॥ सर्वाभिः ॥ ॐ समानायस्वाहा० ॥ ॐ ब्रह्मणेस्वाहा ॥ जलंस्पृष्ट्वायथेष्टंभोजनंकुर्यात् ॥ ततोभोजनांतेपात्रस्थमन्नंकिंचिद्गृहीत्वाअवघ्राय ॥ उच्छिष्टभाग्भ्योनमः ॥ इतिभूमौविसृज्य ॥ उत्तरापोशनार्थंउदकंगृहीत्वा ॥ अमृतापिधानमसिस्वाहा ॥ इतिमंत्रेणतदर्धंपीत्वा ॥ रौरवेपूयनिलयेपद्मार्बुदनिवासिनाम् ॥ अर्थिनामुदकंदत्तमक्षय्यमुपतिष्ठतु ॥ इतिमंत्रेणावशिष्टंजलंपितृतीर्थेनभूमौनिषिंच्यअंगणादौपाणिमुखेसंशोधयेत् ॥ हस्तौपादौप्रक्षाल्याचम्यशतपदानिगत्वा ॥ अगस्तिरग्निर्वडवानलश्चभुक्तंमयान्नंजरयंत्वशेषम् ॥ सुखंममैतत्परिणामसंभवंयच्छंत्वरोगोममचास्तुदेहः ॥ इत्युदरंपरिमृज्यतांबूलंभक्षयेत् ॥ इतिदिनपंचमभागकृत्यं ॥ षष्ठसप्तमौ भागौपुराणादिनानयेत् ॥ इतिभोजनविधिःसमाप्तः ॥ ॥ छ ॥ ॥छ॥

१ केचन—ॐ चित्रायस्वाहा । ॐ चित्रगुप्ताय० । ॐ यमाय० । ॐ यमदूताय० । ॐ सर्वेभ्योभूतेभ्यः० । इतिपंचाहुतीःददति ॥

## ॥ ३५ ॥ अथसायंसंध्याप्रारंभः ॥

श्रीगणेशायनमः ॥ अथदिनाष्टमभागकृत्यम् ॥ प्रातःकालवदाचमनंप्राणायामंचकुर्यात् ॥ ममोपात्तदुरितक्षयद्वाराश्रीपरमेश्वरप्रीत्यर्थंसायंसंध्यामुपासिष्ये ॥ ततअपःप्राशनमंत्रपर्यंतंप्रातःकालवत् ॥ अग्निश्चेतिमंत्रस्य ॥ याज्ञवल्क्यउपनिषदृषिः॥ अग्निमन्युमन्युपत्यहानिदेवताः ॥ प्रकृतिश्छंदः ॥ मंत्राचमनेविनियोगः ॥ ॐ अग्निश्चमामन्युश्चमन्युपतयश्चमन्युंकृतेभ्यः ॥ पापेभ्योरक्षंतां ॥ यदह्नापापमकार्षं ॥ मनसावाचाहस्ताभ्यां ॥ पद्भ्यामुदरेणशिश्ना ॥ अहस्तदवलुंपतु ॥ यत्किंचदुरितंमयि ॥ इदमहंमाममृतयोनौ ॥ सत्येज्योतिषिजुहोमिस्वाहा ॥ आचम्य० ॥ प्रातःकालवद्द्वितीयतृतीयचतुर्थमार्जनानिकृत्वा ॥ तथापश्चिमाभिमुखस्तिष्ठन्गायत्रीमंत्रेणसूर्यायत्रिवारमर्घ्यंदत्त्वा ॥ असावादित्योब्रह्म ॥ द्विराचमनंप्राणायामंचकृत्वा ॥ प्रातःकालवत्दिग्बंधासनंषडंगंचकृत्वा ॥ वृद्धांवृद्धादित्यमंडलमध्यस्थांश्यामांश्यामांबरानुलेपनस्रगाभरणामेकवक्त्रांशंखचक्रगदांकचतुर्भुजांगरुडासनारूढां विष्णुदैवत्यांसामवेदमुदाहरंतींस्वर्लोकाधिष्ठात्रींसरस्वतींनामदेवतांध्यात्वा ॥ ततोयथाशक्तिगायत्रीजपः॥ ततःइमंमेवरुणतत्त्वायामीत्यृचोराजीगर्तिशुनःशेपऋषिः वरुणोदेवताआद्यागायत्रीद्वितीयात्रिष्टुप्उपस्थानेविनियोगः ॥ इत्यृग्भ्यामुपस्थाय ( अत्रकेचनयच्चिद्धितइत्युपस्थानंकुर्वंति ॥ यच्चिद्धीतिदशर्चामाजीगर्तिः शुनःशेपःस्कृत्रिमोवैश्वामित्रोदेवरातऋषिः वरुणोदेवतागायत्रीछंदः वरुणोपस्थानेविनियोगः ॥ ॐ यच्चिद्धितेविशोयथाप्रदेववरुणव्रतं ॥ मिनीमसिद्यविद्यवि ॥ मानोवधायहत्नवेजिहीळानस्यरीरधः ॥ माहृणानस्यमन्यवे ॥ विमृळीकायतेमनोरथीरश्वंनसंदितं ॥ गीर्भिर्वरुणसीमहि ॥ पराहिमेविमन्यवःपततिवस्यइष्टये ॥ वयोनवसतीरुप ॥ कदाक्षत्रश्रियंनरमावरुणं

करामहे ॥ मृळीकायोरुचक्षसं ॥ तदित्समानमाशातेवेनंतानप्रयुच्छतः ॥ धृतव्रतायदाशुषे ॥ वेदायोवीनांपदमंतरिक्षे णपततां ॥ वेदनावःसमुद्रियः ॥ वेदमासोधृतव्रतोद्वादशप्रजावतः ॥ वेदायउपजायते ॥ वेदवातस्यवर्तनिमुरोर्ऋष्वस्यबृहतः ॥ वेदायेअध्यासते ॥ निषसादधृतव्रतोवरुणःपस्त्य३स्वा ॥ साम्राज्यायसुक्रतुः ॥ ) यांसदासर्वभूतानीतिसमाप्तिपर्यंतं प्रातःकालवत्कुर्यात् ॥ अंतेद्विराचम्ययस्यस्मृत्येतिविष्णुंस्मृत्वाप्रायश्चित्तान्यशेषाणीतिजपेत् ॥ इतिसायंसंध्यासमाप्ता ॥छ॥

## ॥ ३६ ॥ अथरात्रिकर्तव्यानि ॥

श्रीः ॥ संध्याहोमादिनिर्वर्त्यप्राक्प्रत्यगुदङ्मुखंदीपंप्रज्वाल्यपूजांकृत्वा त्रिघटीरात्र्युत्तरंभोजनंकृत्वास्तोत्रपाठादिनाप्रथमयाममतिक्रम्यशयनगृहंगत्वाशय्यासमीपमुपविश्यजपेत् ॥ ॐ सुत्रामाणंपृथिवींद्यामनेहसंसुशर्माणमदितिंसुप्रणीतिं ॥ दैवींनावंस्वरित्रामनागसमस्रवंतीमारुहेमास्वस्तये ॥ रात्रीव्यख्यदायतीतिषळर्चंसूक्तंजप्त्वा ॥ भोसर्पभद्रेतिऋग्द्वयंयोजरत्कारुणेत्यृचंच जप्त्वा ॥ अगस्तिर्माधवश्चैवमुचुकुंदोमहामुनिः ॥ कपिलोमुनिरास्तीकःपंचैतेसुखशायिनः ॥ कफल्लकस्यद्वेभार्येस्तंबिनीमोहिनीतथा ॥ तयोःस्मरणमात्रेणचोराभवंतिनिष्फलाः ॥ इतिपठित्वास्वपेत् ॥ उपानहौवेणुदंडमंबुपात्रंतथैवच ॥ तांबूलादीनि सर्वाणिसमीपेस्थापयेद्गृही ॥ नार्द्रवासाश्चनग्नश्चनोत्तरापरमस्तकः ॥ नाकाशेसर्वतःशून्येनचचैत्यद्रुमेतथा ॥ पूर्वरात्रेव्यतीते तुसगच्छेद्रतिमंदिरं ॥ पादौप्रक्षालयेत्पूर्वंपश्चाच्छय्यांसमाविशेत् ॥ धौतवस्त्रंचतांबूलंसंयोगेचशुभावहं ॥ उक्तदिनेशय्यांतरेउपवीतीमन्मथगृहंस्पृष्ट्वा विष्णुर्योनिमितिसूक्तंजप्त्वासकृदुपगत्योत्थायस्नानादिनाशुद्धोभूत्वाप्रबोधपर्यंतंसुप्त्वाप्रभातेप्रातः

स्मरणादिकुर्यात् ॥ इतिनैशोविधिः ॥ बह्वल्पंवास्वगृह्योक्तंयस्यकर्मप्रकीर्तितं ॥ तस्यतावतिशास्त्रार्थेकृतेसर्वःकृतोभवेत् ॥ नान्योविमुक्तयेपंथामुक्त्वाश्रमविधिंस्वकं ॥ तस्मात्कर्माणिकुर्वीततुष्टयेपरमेष्ठिनः ॥ इतिनित्यविधिःसंपूर्णः ॥ ॥ ७ ॥

## ॥ ३७ ॥ आसनविधिर्भूशुद्धिः ॥

श्रीः ॥ आचम्यप्राणानायम्यदेशकालौसंकीर्त्यअमुककर्मकरिष्ये ॥ तत्रादौशरीरशुद्ध्यर्थंभूशुद्धिभूतशुद्धिप्राणप्रतिष्ठांतर्मातृका बहिर्मातृकान्यासांश्चकरिष्येइतिसंकल्प्य ॥ उत्पतंत्विहभूतानिपृथिव्यंतरवासिनः ॥ आसनादौनमस्कृत्यब्रह्मकर्मसमारभे ॥ अपसर्पंतुतेभूतायेभूताभूमिसंस्थिताः ॥ येभूताविघ्नकर्तारस्तेगच्छंतुशिवाज्ञया ॥ अपक्रामंतुभूतानिपिशाचाःसर्वतोदिशं ॥ सर्वे षामविरोधेनब्रह्मकर्मसमारभे ॥ तीक्ष्णदंष्ट्रमहाकायकल्पांतदहनोपम ॥ भैरवायनमस्तुभ्यमनुज्ञांदातुमर्हसि ॥ इतिवामपाद पार्ष्णिनाभूमिंत्रिस्ताडयेत् ॥ समुद्रवसनेदेविपर्वतस्तनमंडिते ॥ विष्णुपत्नि नमस्तुभ्यंपादस्पर्शंक्षमस्वमे ॥ पृथ्वीतिमंत्रस्य मेरुपृ ष्ठऋषिः । कूर्मोदेवता । सुतलंछंदः । आसनेविनियोगः ॥ पृथ्वित्वयाधृतालोकादेवित्वंविष्णुनाधृता ॥ त्वंचधारयमांदेविपवि त्रंकुरुचासनं ॥ अनंतासनायनमः ॥ विमलासनायनमः ॥ योगासनायनमः ॥ कूर्मासनायनमः ॥ आधारशक्त्येनमः ॥ दुष्ट विद्राविणेनृसिंहायनमः ॥ मध्येपरमसुखायनमः ॥ ॐ भूर्भुवःस्वःइत्यासनेउपविश्य ॥ अंगुष्ठाग्रेतुगोविंदंतर्जन्यांतुमहीधरं ॥ मध्यमायांहृषीकेशमनामिक्यांत्रिविक्रमं ॥ कनिष्ठिक्यांन्यसेद्विष्णुंकरमध्येतुमाधवं ॥ एवंचकरविन्यासंसर्वपापप्रणाशनं ॥ ( ॐ कारःसर्वत्र ) भूःपादाभ्यांनमः ॥ भुवःजानुभ्यांनमः ॥ स्वःकटिभ्यांनमः ॥ महःनाभ्यैनमः ॥ जनःहृदयायनमः ॥ तपःकंठायनमः ॥ सत्यंललाटायनमः ॥ परब्रह्मशिरसेस्वाहा ॥ स्वशिरसि ॥ गंगुरुभ्योनमः ॥ पंपरमगुरुभ्योनमः ॥ पंप

रात्परगुरुभ्योनमः ॥ पंपरमेष्ठीगुरुभ्योनमः ॥ दक्षिणभुजे गंगणपतयेनमः ॥ वामभुजे दुंदुर्गायैनमः ॥ दक्षिणजानुनि क्षंक्षेत्रपालायनमः ॥ वामजानुनि संसरस्वत्यैनमः ॥ हृदये अंआत्मनेनमः ॥ पंपरमात्मनेनमः ॥ संसत्त्वात्मनेनमः ॥ रंरजआत्मनेनमः ॥ तंतमआत्मनेनमः ॥ नमोस्त्वनंतायनमोस्तुवेधसेनमोवसिष्ठायनमोस्तुशक्तये ॥ पराशरायाथनमोस्तुसात्वते नमोस्तुतेसत्यवतीसुताय ॥ नमोगुरुभ्योगुरुपादुकाभ्योनमःपरेभ्यःपरपादुकाभ्यः ॥ आचार्यसिद्धेश्वरपादुकाभ्योनमोस्तुलक्ष्मीपतिपादुकाभ्यः ॥ ॐ नमोमहद्भ्योनमोअर्भकेभ्योनमोयुवभ्योनमआशिनेभ्यः । यजामदेवान्यदिशक्नवाममाज्यायसः शंसमावृक्षिदेवाः ॥ सर्वभूतनिवारणायसशरायहृः सशार्ङ्गायसुदर्शनायास्त्रराजायहुंफट् ॥ इतिछोटिकाबंधंकृत्वा ॥ उदकोपस्पर्शः ॥ प्राणायामः ॥ ॐ धर्मकंदसमुद्भूतंज्ञाननालेनशोभितं ॥ ऐश्वर्याष्टदलोपेतंपरंवैराग्यकर्णिकं ॥ अधोमुखंतुहृत्पद्मंप्रणवेनोर्ध्वमुन्नयेत् ॥ ॐ इतिप्रणवेनविकसितंकृत्वातत्रत्यजीवात्मानंहंसइतिमंत्रेणांकुशमुद्रयासुषुम्नानाडीमार्गेणब्रह्मरंध्रंनीत्वा ॥ तत्रत्यसहस्रदलपद्मकर्णिकांतर्गतेनपरमात्मनासहैक्यभावमापादयेत् ॥ हंसःसोहं ॥ ब्रह्महत्याशिरस्कंचस्वर्णस्तेयभुजद्वयं ॥ सुरापानहृदायुक्तंगुरुतल्पकटिद्वयं ॥ तत्संसर्गिपदद्वंद्वमंगप्रत्यंगपातकं ॥ उपपातकरोमाणंरक्तश्मश्रुविलोचनं ॥ अधोमुखंकृष्णवर्णमंगुष्ठपरिमाणकं ॥ खड्गचर्मधरंपापंवामकुक्षौविचिंतयेत् ॥ एवंलक्षणंपापपुरुषंवामकुक्षौविचिंत्य ॥ यमिति वायुबीजेन १६ षोडशवारंवामनासापुटेनसंशोष्य ॥ रमित्यग्निबीजेन ६४ चतुःषष्टिवारंकुंभकेनसंदह्य ॥ पुनर्यमितिबीजेन ३२ द्वात्रिंशद्वारंतद्भस्मदक्षिणनासापुटेनबहिर्निःसार्य ॥ वमित्यमृतबीजेन १६ षोडशवारममृतीकुर्यात् ॥ इतिभूशुद्धिः ॥

## ॥ ३८ ॥ अथभूतशुद्धिः ॥

श्रीः ॥ पादादिजानुपर्यंतपृथिवीस्थानंचतुरस्रंचतुर्दिक्षुलांछितंतन्मध्येपीतवर्णलंबीजयुक्तंध्यायेत् ॥ ॐ स्योनापृथिविभवानृक्षरानिवेशनी ॥ यच्छानःशर्मसप्रथः ॥ लंभूम्यैनमः ॥ जान्वादिनाभिपर्यंतमपांस्थानंधनुराकारमुभयोःकक्ष्योःश्वेतपद्मलांछितंतन्मध्येश्वेतवर्णवंबीजयुक्तंध्यायेत् ॥ ॐ अप्सुमेसोमोअब्रवीदंतर्विश्वानिभेषजा ॥ अग्निंचविश्वशंभुवमापश्चविश्वभेषजीः ॥ वंअद्भ्योनमः ॥ नाभ्यादिहृदयपर्यंतमग्निस्थानंत्रिकोणंस्वस्तिकलांछितंतन्मध्येरक्तवर्णरंबीजयुक्तंध्यायेत् ॥ ॐ अग्निंदूतंवृणीमहेहोतारंविश्ववेदसं ॥ अस्ययज्ञस्यसुक्रतुं ॥ रंअग्नयेनमः ॥ हृदयादिभ्रूमध्यपर्यंतंवायुस्थानंषट्कोणंषड्बिंदुलांछितंतन्मध्येधूम्रवर्णयंबीजयुक्तंध्यायेत् ॥ ॐ वायोशतंहरीणांयुवस्वपोष्याणां ॥ उतवातेसहस्रिणोरथआयातुपाजसा ॥ यंवायवेनमः ॥ भ्रूमध्यादिब्रह्मरंध्रपर्यंतमाकाशस्थानंवृत्ताकारंध्वजलांछितंनीलवर्णहंबीजयुक्तंध्यायेत् ॥ ॐ आदित्प्रत्नस्यरेतसोज्योतिष्पश्यंतिवासरं ॥ परोयदिध्यतेदिवा ॥ हंआकाशायनमः ॥ पृथिवींपंचगुणांलंबीजेनषड्उद्धातप्रयोगेणाप्सुप्रविलापयामि ॥ लंलंलंलंलंलं ॥ चतुर्गुणाअपःवंबीजेनपंचोद्धातप्रयोगेणाग्नौप्रविलापयामि ॥ वंवंवंवंवं ॥ त्रिगुणंवह्निंरंबीजेनचतुरुद्धातप्रयोगेणवायौप्रविलापयामि ॥ रंरंरंरं ॥ द्विगुणंवायुंयंबीजेनत्रिरुद्धातप्रयोगेणाकाशेप्रविलापयामि ॥ यंयंयं ॥ एकगुणमाकाशंहंबीजेनद्विरुद्धातप्रयोगेणाहंकारेप्रविलापयामि ॥ हंहं ॥ तमहंकारंमहत्तत्त्वेप्रविलापयामि ॥ तन्महत्तत्त्वंप्रकृतौप्रविलापयामि ॥ तांप्रकृतिंपरब्रह्मणिप्रविलापयामि ॥ इतिप्रविलाप्य ॥ शुद्धोहंमुक्तोहंसच्चिदानंदस्वरूपोहंब्रह्माहमस्मीतिचिरंभावयेत् ॥ तस्मात्सर्वज्ञात्सर्वशक्तेःपरब्रह्मणःसकाशात्प्रकृतिः प्रकृतेर्महान् महतोहंकारः अहंका

रादाकाशः आकाशाद्वायुः वायोरग्निः अग्नेरापः अद्भ्यःपृथिवी पृथिव्याओषधयः ओषधीभ्योऽन्नं अन्नाद्रेतः रेतसःपुरुषः सवाएषपुरुषोन्नरसमयः ॥ इतिदेहोत्पत्तिंविभाव्यपुनर्जीवात्मानंहंसइतिमंत्रेणांकुशमुद्रयासुषुम्नानाडीमार्गेणब्रह्मरंध्रादानीय हृदिप्रतिष्ठापयेत् ॥ हंसःसोहं ॥ इतिभूतशुद्धिः ॥ ॥ छ ॥ ॥ छ ॥

## ॥ ३९ ॥ अथप्राणप्रतिष्ठा ॥

श्रीः ॥ अस्यश्रीप्राणप्रतिष्ठामंत्रस्य ब्रह्मविष्णुमहेश्वराऋषयः ॥ ऋग्यजुःसामाथर्वाणिछंदांसि ॥ पराप्राणशक्तिर्देवता ॥ आंबीजं ॥ ह्रींशक्तिः ॥ क्रोंकीलकं ॥ स्वशरीरेप्राणप्रतिष्ठापनेविनियोगः ॥ तत्रऋष्यादिन्यासः ॥ ब्रह्मविष्णुमहेश्वरऋषिभ्योनमः शिरसि ॥ ऋग्यजुःसामाथर्वछंदोभ्योनमो मुखे ॥ पराप्राणशक्तिदेवतायैनमो हृदये ॥ आंबीजायनमः गुह्ये ॥ ह्रींशक्तयेनमः पादयोः ॥ क्रोंकीलकायनमः सर्वांगे ॥ प्राणप्रतिष्ठापनेविनियोगः ॥ ॐ आंह्रींक्रोंअंकंखंगंघंङंआं ॐ क्रोंह्रींआं पृथिव्यप्तेजोवाय्वाकाशात्मने अंगुष्ठाभ्यांनमः हृदयायनमः ॥ ॐ आंह्रींक्रोंइंचंछंजंझंञंईक्रोंह्रींआं शब्दस्पर्शरूपरसगंधात्मने तर्जनीभ्यांनमः शिरसेस्वाहा ॥ ॐ आंह्रींक्रोंउंटंठंडंढंणंऊंक्रोंह्रींआं श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणात्मने मध्यमाभ्यांनमः शिखायैवषट् ॥ ॐ आंह्रींक्रोंएंतंथंदंधंनंऐंक्रोंह्रींआं वाक्पाणिपादपायूपस्थात्मने अनामिकाभ्यांनमः कवचायहुं ॥ ॐ आंह्रींक्रोंओंपंफंबंभंमंऔंक्रोंह्रींआं वक्तव्यादानगमनविसर्गानंदात्मने कनिष्ठिकाभ्यांनमः नेत्रत्रयायवौषट् ॥ ॐ आंह्रींक्रों अंयंरंलंवंशंषंसंहंक्षंअःक्रोंह्रींआं मनोबुद्ध्यहंकारचित्तविज्ञानात्मने करतलकरपृष्ठाभ्यांनमः अस्त्रायफट् ॥ एवंहृदयादि ॐ आंह्रींक्रोंअंयंरंलंवंशंषंसंहंक्षंअःक्रोंह्रींआं ममप्राणाइहप्राणाः ॥ ॐ आंह्रींक्रोंअंयंरंलंवंशंषंसंहंक्षंअःक्रोंह्रींआं ममजीवइहस्थि

तः ॥ ॐ आंह्रींक्रोंअंयंरंलंवंशंषंसंहंक्षंअःक्रोंह्रींआं ममसर्वेंद्रियाणिवाङ्मनस्त्वक्चक्षुःश्रोत्रजिह्वाघ्राणवाक्पाणिपादपायूपस्था
निस्वस्थानेइहैवागत्यसुखंचिरंतिष्ठंतुस्वाहा ॥ असुनीतेपुनरस्मासुचक्षुःपुनःप्राणमिहनोधेहिभोगं ॥ ज्योक्पश्येमसूर्यमुच्चरं
तमनुमतेमृळयानःस्वस्ति ॥ गर्भाधानादिपंचदशसंस्कारसिद्ध्यर्थंपंचदशप्रणवावृत्तीःकरिष्ये ॥ ॐ कारंपंचदशवारंजस्वा ॥
रक्तांभोधिस्थपोतोल्लसदरुणसरोजाधिरूढाकराब्जैःपाशंकोदंडमिक्षूद्भवमथगुणमप्यंकुशंपंचबाणान् ॥ बिभ्राणासृक्कपालंत्रिन
यनलसितापीनवक्षोरुहाढ्यादेवीबालार्कवर्णाभवतुसुखकरीप्राणशक्तिःपरानः ॥ इतिप्राणप्रतिष्ठा ॥ ॥ छ ॥

## ॥ ४० ॥ अथांतर्मातृकान्यासः ॥

श्रीः ॥ अस्यश्रीअंतर्मातृकासरस्वतीमंत्रस्य ब्रह्माऋषिः ॥ गायत्रीछंदः ॥ अंतर्मातृकासरस्वतीदेवता ॥ हलोबीजानि ॥
स्वराःशक्तयः ॥ बिंदवःकीलकं ॥ मातृकान्यासेविनियोगः ॥ तत्रऋष्यादिन्यासः ॥ ब्रह्मर्षयेनमःशिरसि ॥ गायत्रीछंद
सेनमोमुखे ॥ अंतर्मातृकासरस्वतीदेवतायैनमोहृदये ॥ हल्बीजेभ्योनमोगुह्ये ॥ स्वरशक्तिभ्योनमःपादयोः ॥ बिंदुकील
कायनमःसर्वांगे ॥ मातृकान्यासेविनियोगः ॥ ॐ अंकंखंगंघंङंआंअंगुष्ठाभ्यांनमः ॥ ॐ इंचंछंजंझंञंईंतर्जनीभ्यांनमः ॥ ॐ
उंटंठंडंढंणंऊंमध्यमाभ्यांनमः ॥ ॐ एंतंथंदंधंनंऐंअनामिकाभ्यांनमः ॥ ॐ ओंपंफंबंभंमंऔंकनिष्ठिकाभ्यांनमः ॥ ॐ अंयंरंलंवं
शंषंसंहंक्षंअःकरतलकरपृष्ठाभ्यांनमः ॥ एवंहृदयादिन्यासः ॥ ॐ अं. आं. इं. ईं. उं. ऊं. ऋं. ॠं. ऌं. ॡं. एं. ऐं. ओं. औं.
अं. अः. एतान्षोडशवर्णान्कंठस्थानेषोडशदलपद्मेन्यसामि ॥ कं. खं. गं. घं. ङं. चं. छं. जं. झं. ञं. टं. ठं. एतान्द्वादशव
र्णान्हृदयस्थानेद्वादशदलपद्मेन्यसामि ॥ डं. ढं. णं. तं. थं. दं. धं. नं. पं. फं. एतान्दशवर्णान्नाभिस्थानेदशदलपद्मेन्यसा

मि॥ वं. भं. मं. यं. रं. लं. एतान्षड्वर्णान्लिंगस्थानेषड्दलपद्मेन्यसामि॥ वं. शं. षं. सं. एतांश्चतुर्वर्णानाधारस्थानेचतुर्दलपद्मेन्यसामि ॥ हं. क्षं. एतद्वर्णद्वयंभ्रूमध्यगतेद्विदलपद्मेन्यसामि ॥ आधारेलिंगनाभौप्रकटितहृदयेतालुमूलेललाटेद्वेपत्रे षोडशारेद्विदशदशदलेद्वादशार्धेचतुष्के ॥ वासांतेबालमध्येडफकठसहितेकंठदेशेस्वराणांहंक्षंतत्त्वार्थयुक्तंसकलदलगतंवर्णरूपं नमामि ॥ बंधूकाभांत्रिनेत्रांपृथुजघनलसत्कुक्षिमुद्रक्तवस्त्रांपीनोत्तुंगप्रवृद्धस्तनजघनभरांयौवनारंभरूढां ॥ सर्वालंकारयुक्तां सरसिजवदनामिंदुसंक्रांतमौलिमंबापाशांकुशेष्टाभयवरदकरामंबिकांतांनमामि ॥ इतिअंतर्मातृकान्यासः ॥ ॥ ७ ॥

## ॥ ४१ ॥ अथबहिर्मातृकान्यासः ॥

श्रीः ॥ अस्यश्रीबहिर्मातृकासरस्वतीमंत्रस्य ब्रह्माऋषिः ॥ गायत्रीछंदः ॥ बहिर्मातृकासरस्वतीदेवता ॥ हलोबीजानि ॥ स्वराःशक्तयः ॥ बिंदवःकीलकं ॥ बहिर्मातृकान्यासेविनियोगः ॥ तत्रऋष्यादिन्यासः ॥ ब्रह्मर्षयेनमःशिरसि ॥ गायत्रीछंदसेनमोमुखे ॥ बहिर्मातृकासरस्वतीदेवतायैनमोहृदये ॥ हल्बीजेभ्योनमोगुह्ये ॥ स्वरशक्तिभ्योनमःपादयोः ॥ बिंदुकीलकायनमःसर्वांगे ॥ बहिर्मातृकान्यासेविनियोगः ॥ अंनमःमूर्ध्नि ॥ आंनमोमुखे ॥ इंनमोदक्षिणनेत्रे ॥ ईंनमोवामनेत्रे ॥ उंनमोदक्षिणकर्णे ॥ ऊंनमोवामकर्णे ॥ ऋंनमोदक्षिणनासापुटे ॥ ॠंनमोवामनासापुटे ॥ ऌंनमोदक्षिणगंडे ॥ ॡंनमोवामगंडे ॥ एंनमऊर्ध्वोष्ठे ॥ ऐंनमोऽधरोष्ठे ॥ ओंनमऊर्ध्वदंतपंक्तौ ॥ औंनमोऽधोदंतपंक्तौ ॥ अंनमोमूर्ध्नि ॥ अःनमोजिह्वायां॥ कं. खं. गं. घं. ङं. एतान्पंचवर्णान्दक्षिणहस्तेसंध्यग्रेषुविन्यसामि ॥ चं. छं. जं. झं. ञं. एतान्पंचवर्णान्वामहस्तेसंध्यग्रेषु विन्यसामि ॥ टं. ठं. डं. ढं णं. एतान्पंचवर्णान्दक्षिणपादेसंध्यग्रेषुविन्यसामि ॥ तं. थं. दं. धं. नं. एतान्पंचवर्णान्वामपादे

संध्यग्रेषुविन्यसामि ॥ पंनमोदक्षिणपार्श्वे० ॥ फंनमोवामपार्श्वे० ॥ बंनमःपृष्ठे० ॥ भंनमोनाभौ० ॥ मंनमउदरे० ॥ यंनम
स्त्वगात्मनेहृदयेन्य० ॥ रंनमोऽसृगात्मनेदोर्मूलेन्य० ॥ लंनमोमांसात्मनेककुदि० ॥ वंनमोमेदात्मनेकक्षद्वयेन्य० ॥ शंनमो
ऽस्थ्यात्मनेहृदयादिहस्तयुगुलेन्य० ॥ षंनमोमज्जात्मनेहृदयादिपादयुगुलेन्य० ॥ संनमःशुक्रात्मनेजठरेन्य० ॥ हंनमःप्राणा
त्मनेमुखेन्य० ॥ क्षंनमोजीवात्मनेसर्वशरीरेषुविन्यसामि ॥ पंचाशद्वर्णभेदैर्विहितवदनदोःपादहृत्कुक्षिवक्षोदेशांभास्वत्कपर्दा
कलितशशिकलामिंदुकुंदावदातां ॥ अक्षस्रक्कुंभचिंतालिखितवरकरांत्रीक्षणांपद्मसंस्थामच्छाकल्पामतुच्छस्तनजघनभरांभार
तींतांनमामि ॥ ॐ च॒त्वारि॒वाक्परि॑मिता प॒दानि॒तानि॑विदुर्ब्राह्म॒णाये॑म॒नी॒षिणः॑ ॥ गुहा॒त्रीणि॒निहि॑ता॒नेंग॑यंति॒तु॒रीयं॑वा॒चोमं॑नु
ष्या॑वदंति ॥ इतिबहिर्मातृकान्यासः ॥ ॥ छ ॥ ॥ छ ॥

## ॥ ४२ ॥ अथपवनपावनम् ॥

श्रीः ॥ आचम्यप्राणानायम्यदेशकालावुक्त्वा श्रुतिस्मृतिपुराणोक्तफलप्राप्त्यर्थंशरीरशुद्ध्यर्थमात्मानंपावयिष्ये ॥ आचार्यंऋ
त्विग्यजमानैःसहैकविंशतिदर्भपिंजूलान्यादायसप्तभिःसप्तभिःपावयति ॥ नाभ्याःसोदकैर्दर्भैर्मुखपर्यंतंसंमार्ष्टि ॥ ॐ चि॒त्प
ति॑र्मापुना॒त्वच्छि॑द्रेण प॒वित्रे॑ण॒वसोः॒सूर्य॑स्यर॒श्मिभिः॑ ॥ सकृन्मंत्रेणद्विस्तूष्णीं ॥ अथमार्जनं ॥ ॐ यद्दे॑वादेव॒हेड॑नं ॥ देवा॑सश्च
कृमाव॒यं ॥ आदि॒त्या॒स्तस्मा॑न्मामुंचत ॥ ऋ॒तस्य॒र्तेन॒मामुत ॥ देवा॑जीवनका॒म्यायत् ॥ वा॒चानृ॑तमूदि॒म ॥ अ॒ग्निर्मा॑तस्मा॒दे॑न
सः ॥ गार्ह॑पत्यः॒प्रमुं॑चतु ॥ दु॒रि॒ताया॑निचकृम ॥ क॒रोतु॒माम॑ने॒नसं॑ ॥ ऋ॒तेन॑द्यावापृथिवी॥ ऋ॒तेन॒त्वंसरस्वति ॥ ऋ॒तान्मा॑मुं
चतां॒हसः ॥ यद॒न्यकृ॑तमारि॒म ॥ स॒जा॒तशं॒सादु॒तवा॑जामिशं॒सात् ॥ ज्याय॑सःशंसा॑दु॒तवा॒कनी॑यसः ॥ अना॑ज्ञातंदे॒वकृ॑तं॒

यदेनः ॥ तस्मात्त्वमस्मान्जातवेदोमुमुग्धि ॥ यद्वाचायन्मनसा ॥ बाहुभ्यामूरुभ्यामष्ठीवद्भ्यां ॥ शिश्नैयेदनृतंचकृमावयं ॥ अग्निर्मातस्मादेनसः ॥ यद्धस्ताभ्यांचकरकिल्बिषाणि ॥ अक्षाणांवग्नुमुपजिघ्नमानः ॥ दूरेपश्याचराष्ट्रभृच्च ॥ तान्यप्सरसावनुंदत्तामृणानि ॥ अदीव्यन्नृणंयदहंचकार ॥ यद्वादास्यन्त्संजगाराजनेभ्यः ॥ अग्निर्मातस्मादेनसः ॥ यन्मयिमातागर्भेसति ॥ एनश्चकारयत्पिता ॥ अग्निर्मातस्मादेनसः ॥ यदापिपेषमातरंपितरं ॥ पुत्रःप्रमुदितोधयन् ॥ अहिंसितौपितरौमयातत् ॥ तदग्नेअनृणोभवामि ॥ यदंतरिक्षंपृथिवीमुतद्यां ॥ यन्मातरंपितरंवाजिहिंसिम ॥ अग्निर्मातस्मादेनसः ॥ यदाशसानिशसायत्पराशसा ॥ यदेनश्चकृमानूतनंयत्पुराणं ॥ अग्निर्मातस्मादेनसः ॥ अतिक्रामामिदुरितंयदेनः ॥ जहामिरिप्रंपरमेसधस्थे ॥ यत्रयंतिसुकृतोनापिदुष्कृतः ॥ तमारोहामिसुकृतांनुलोकं ॥ त्रितेदेवाअमृजतैतदेनः ॥ त्रितएतन्मनुष्येषुमामृजे ॥ ततोमायदिकिंचिदानशे ॥ अग्निर्मातस्मादेनसः ॥ गार्हपत्यःप्रमुंचतु ॥ दुरितायानिचकृम ॥ करोतुमामनेनसं ॥ दिविजाताअप्सुजाताः ॥ याजाताओषधीभ्यः ॥ अथोयाअग्निजाआपः ॥ तानःशुंधंतुशुंधनीः ॥ यदापोनक्तंदुरितंचराम ॥ यद्वादिवानूतनंयत्पुराणं ॥ हिरण्यवर्णास्ततउत्पुनीतनः ॥ इमंमेवरुणतत्त्वायामि ॥ त्वंनोअग्नेसत्वंनोअग्ने ॥ त्वमग्नेअयासि ॥ इत्यनुवाकंजपित्वा ॥ ॐ दधिक्राव्णोअकारिषंजिष्णोरश्वस्यवाजिनः ॥ सुरभिनोमुखाकरत्प्रणआयूंषितारिषत् ॥ इतिमार्जनं ॥ तांस्त्यक्त्वा ॥ अन्यान्गृहीत्वा ॥ ॐ वाक्पतिर्मापुनात्वच्छिद्रेणपवित्रेणवसोःसूर्यस्यरश्मिभिः ॥ नाभ्याःसोदकैर्दर्भैर्नासिकापर्यंतंसंमार्ष्टि ॥ सकृन्मंत्रेणद्विस्तूष्णीं ॥ ॐ पवमानःसुवर्जनः ॥ पवित्रेणविचर्षणिः ॥ यःपोतासपुनातुमा ॥ पुनंतुमादेवजनाः ॥ पुनंतुमनवोधिया ॥ पुनंतुविश्वआयवः ॥ जातवेदःपवित्रवत् ॥ पवित्रेणपुना

हिमा ॥ शुक्रेणदेवदीद्यत् ॥ अग्नेक्रत्वाक्रतूꣳरनु ॥ यत्तेपवित्रमर्चिषि ॥ अग्नेवितर्तमंतरा ॥ ब्रह्मतेनपुनीमहे ॥ उभाभ्यां देवसवितः ॥ पवित्रेणसवेनच ॥ इदंब्रह्मपुनीमहे ॥ वैश्वदेवीपुनतीदेव्यागात् ॥ यस्यैबह्वीस्तनुवोवीतपृष्ठाः ॥ तयामदंतः सधमाद्येषु ॥ वयꣳस्यामपतयोरयीणां ॥ वैश्वानरोरश्मिभिर्मापुनातु ॥ वातःप्राणेनैषिरोमयोभूः ॥ द्यावापृथिवीपयसापयोभिः ॥ ऋतावरीयज्ञियेमापुनीतां ॥ बृहद्भिःसवितस्तृभिः ॥ वर्षिष्ठैर्देवमन्मभिः ॥ अग्नेदक्षैःपुनाहिमा ॥ येनदेवाअपुनत ॥ येनापोदिव्यंकशः ॥ तेनदिव्येनब्रह्मणा ॥ इदंब्रह्मपुनीमहे ॥ यःपावमानीरध्येति ॥ ऋषिभिःसंभृतꣳरसं ॥ सर्वꣳसपूतमश्नाति ॥ स्वदितंमातरिश्वना ॥ पावमानीर्योअध्येति ॥ ऋषिभिःसंभृतꣳरसं ॥ तस्मैसरस्वतीदुहे ॥ क्षीरꣳसर्पिर्मधूदकं ॥ पावमानीःस्वस्त्ययनीः ॥ सुदुघाहिपयस्वतीः ॥ ऋषिभिःसंभृतोरसः ॥ ब्राह्मणेष्वमृतꣳहितं ॥ पावमानीर्दिशंतुनः ॥ इमंलोकमथोअमुं ॥ कामान्त्समर्धयंतुनः ॥ देवीर्देवैःसमाभृताः ॥ पावमानीःस्वस्त्ययनीः ॥ सुदुघाहिघृतश्चुतः ॥ ऋषिभिःसंभृतोरसः ॥ ब्राह्मणेष्वमृतꣳहितं ॥ येनदेवाःपवित्रेण ॥ आत्मानंपुनतेसदा ॥ तेनसहस्रधारेण ॥ पावमान्यःपुनंतुमा ॥ प्राजापत्यंपवित्रं ॥ शतोद्यामꣳहिरण्मयं ॥ तेनब्रह्मविदोवयं ॥ पूतंब्रह्मपुनीमहे ॥ इंद्रःसुनीतीसहमापुनातु ॥ सोमःस्वस्त्यावरुणःसमीच्या ॥ यमोराजाप्रमृणाभिःपुनातुमा ॥ जातवेदामोर्जयंत्यापुनातु ॥ इत्यनुवाकंजप्त्वा ॥ ततोमार्जनं ॥ आपोहिष्ठामयोभुवः ॥ तानऊर्जेदधातन ॥ महेरणायचक्षसे ॥ योवःशिवतमोरसः ॥ तस्यभाजयतेहनः ॥ उशतीरिवमातरः ॥ तस्माअरंगमामवः ॥ यस्यक्षयायजिन्वथ ॥ आपोजनयथाचनः ॥ तांस्त्यक्त्वा ॥ अन्यान्गृहीत्वा ॥ ॐ देवोमासवितापुनात्वच्छिद्रेणपवित्रेणवसोःसूर्यस्यरश्मिभिः ॥ नाभ्याःसोदकैर्दर्भैर्ललाटपर्यंतंसंमार्ष्टि ॥ सकृन्मंत्रेणद्विस्तूर्णीं ॥ तस्यतेपवित्रपतेपवि

त्रैणयस्मैकंपुनेतच्छंकेयं ॥ इतिजप्त्वा ॥ ततोमार्जनं ॥ हिरण्यवर्णाःशुचयःपावकायासुजातःकश्यपोयास्विंद्रः॥ अग्निंयागर्भं दधिरेविरूपास्तानआपःशंस्योनाभवंतु ॥ यासांराजावरुणोयातिमध्येसत्यानृतेअवपश्यंजनानां ॥ मधुश्चुतःशुचयोयाःपावकास्तानआपःशंस्योनाभवंतु ॥ यासांदेवादिविकृण्वंतिभक्षंयाअंतरिक्षेबहुधाभवंति ॥ याःपृथिवींपयसोंदंतिशुक्रास्तानआपः शंस्योनाभवंतु ॥ शिवेनमाचक्षुषापश्यतापःशिवयातनुवोपस्पृशतत्वचंमे ॥ सर्वांअग्नींरप्सुषदोहुवेवोमयिवर्चोबलमोजो निधत्त ॥ तांस्त्यक्त्वा ॥ भूर्भुवःसुवः इत्यपःप्राश्य ॥ आपोहिष्ठेतितिसृभिर्मुखंनिमृज्य ॥ विपरीताभिराचामेत् ॥ तस्मा अरं० चनः ॥ योवःशिव० ॥ आपोहि० क्षसे ॥ पयस्वतीरोषधयःपयस्वद्वीरुधांपयः ॥ अपांपयसोयत्पयस्तेनमामिंद्रसंसृज ॥ इतिप्रतिमंत्रमाचामेत् ॥ ततःस्मृत्युक्तमाचमनंकृत्वा ॥ कृत्वालंपादशौचंविमलमथजलंत्रिःपिबेदुन्मृजेद्द्विर्देशिन्यंगुष्ठकाभ्यांसजलमभिमृशेन्नासिकारंध्रयुग्मं॥ अंगुष्ठानामिकाभ्यांनयनयुगयुतंकर्णयुग्मंकनिष्ठांगुष्ठाभ्यांनाभिदेशेहृदयमथतलेनांगुलीभिःशिरोंसौ ॥ १ ॥ इतिस्मृत्युक्तमाचमनंचरेत् ॥ गायत्रीजपःशतकृत्वःसहस्रकृत्वोवाऽपरिमितकृत्वोवावर्तयेत्॥ दशवारमिडाजपः॥ ॐ इडादेवहूर्मनुर्यज्ञनीर्बृहस्पतिरुक्थामदानिशंसिषद्विश्वेदेवाःसूक्तवाचःपृथिविमातर्मामाहिंसीर्मधुमनिष्येमधुजनिष्येमधुवक्ष्यामिमधुवदिष्यामि मधुमतींदेवेभ्योवाचमुद्यासंशुश्रूषेण्यांमनुष्येभ्यस्तंमादेवाअवंतुशोभायैपितरोनुमदंतु ॥ अपनःशोशुचदघमग्नेशुशुग्ध्यारयिं ॥ अपनःशोशुचदघं ॥ सुक्षेत्रियासुगातुयावसूयाचयजामहे ॥ अपनःशोशुचदघं॥ प्रयद्भंदिष्ठएषांप्रास्माकासश्चसूरयः ॥ अपनःशोशुचदघं ॥ प्रयदग्नेःसहस्वतोविश्वतोयंतिभानवः ॥ अपनःशोशुचदघं ॥ प्रयत्तेअग्नेसूरयोजायेमहिप्रतेवयं ॥ अपनःशोशुचदघं ॥ त्वंहिविश्वतोमुखविश्वतःपरिभूरसि ॥ अपनःशोशुचदघं ॥ द्विषोनो

विश्वतोमुखातिनावेवपारय ॥ अपनःशोशुचदघं ॥ सनःसिंधुमिवनावयातिपर्षास्वस्तये ॥ अपनःशोशुचदघं॥ आपःप्रवणा दिवयतीरपास्मत्स्यंदतामघं ॥ अपनःशोशुचदघं ॥ उद्वनादुदकानीवापास्मत्स्यंदतामघं ॥ अपनःशोशुचदघं॥ आनंदायप्रमोदायपुनरागाःस्वान्गृहान्॥ अपनःशोशुचदघं॥ नवैतत्रप्रमीयतेगौरश्वःपुरुषःपशुः॥ यत्रेदंब्रह्मक्रियतेपरिधिर्जीवनायकं॥ अपनःशोशुचदघं ॥ सहस्रशीर्षापुरुषः ॥ सहस्राक्षःसहस्रपात् ॥ सभूमिंविश्वतोवृत्वा ॥ अत्यतिष्ठद्दशांगुलं ॥ पुरुषएवेदंसर्वं॥ यद्भूतंयच्चभव्यं ॥ उतामृतत्वस्येशानः ॥ यदन्नेनातिरोहति ॥ एतावानस्यमहिमा ॥ अतोज्यायांश्चपूरुषः ॥ पादोस्यविश्वाभूतानि ॥ त्रिपादस्यामृतंदिवि ॥ त्रिपादूर्ध्वउदैत्पूरुषः ॥ पादोस्येहाभवात्पुनः ॥ ततोविष्वङ्व्यक्रामत् ॥ साशनानशने अभि ॥ तस्माद्विराडजायत ॥ विराजोअधिपूरुषः ॥ सजातोअत्यरिच्यत ॥ पश्चाद्भूमिमथोपुरः ॥ यत्पुरुषेणहविषा॥ देवायज्ञमतन्वत ॥ वसंतोअस्यासीदाज्यं ॥ ग्रीष्मइध्मःशरद्धविः ॥ सप्तास्यासन्परिधयः ॥ त्रिःसप्तसमिधःकृताः ॥ देवायद्यज्ञंतन्वानाः ॥ अबध्नन्पुरुषंपशुं ॥ तंयज्ञंबर्हिषिप्रौक्षन् ॥ पुरुषंजातमग्रतः ॥ तेनदेवाअयजंत॥ साध्याऋषयश्चये॥ तस्माद्यज्ञात्सर्वहुतः ॥ संभृतंपृषदाज्यं ॥ पशूंस्तांश्चक्रेवायव्यान् ॥ आरण्यान्ग्राम्याश्चये ॥ तस्माद्यज्ञात्सर्वहुतः ॥ ऋचःसामानिजज्ञिरे ॥ छंदांसिजज्ञिरेतस्मात्॥ यजुस्तस्मादजायत ॥ तस्मादश्वाअजायंत ॥ येकेचोभयादतः॥ गावोहजज्ञिरेतस्मात्॥ तस्माज्जाताअजावयः ॥ यत्पुरुषंव्यदधुः ॥ कतिधाव्यकल्पयन् ॥ मुखंकिमस्यकौबाहू ॥ कावूरूपादावुच्येते ॥ ब्राह्मणोस्यमुखमासीत् ॥ बाहूराजन्यःकृतः ॥ ऊरूतदस्ययद्वैश्यः ॥ पद्भ्यांशूद्रोअजायत ॥ चंद्रमामनसोजातः॥ चक्षोःसूर्योअजायत॥ मुखादिंद्रश्चाग्निश्च ॥ प्राणाद्वायुरजायत ॥ नाभ्याआसीदंतरिक्षं ॥ शीर्ष्णोद्यौःसमवर्तत ॥ पद्भ्यांभूमिर्दिशःश्रोत्रात् ॥ त

थालोकाꣳअकल्पयन् ॥ वेदाहमेतंपुरुषंमहांतं ॥ आदित्यवर्णंतमसस्तुपारे ॥ सर्वाणिरूपाणिविचित्यधीरः ॥ नामानिकृत्वाभिवदन्यदास्ते ॥ धातापुरस्ताद्यमुदाजहार ॥ शक्रःप्रविद्वान्प्रदिशश्चतस्रः ॥ तमेवंविद्वानमृतइहभवति ॥ नान्यःपंथाअयनायविद्यते ॥ यज्ञेनयज्ञमयजंतदेवाः ॥ तानिधर्माणिप्रथमान्यासन् ॥ तेहनाकंमहिमानःसचंते ॥ यत्रपूर्वेसाध्याःसंतिदेवाः ॥ ॐ भूर्भुवःसुवः ॥ अनेनशरीरशुद्ध्यंगभूतपवनपावनन्यासेनश्रीपरमेश्वरःप्रीयतां ॥ ॥ ७ ॥

## ॥ ४३ ॥ अथमहान्यासः ॥

श्रीगणेशायनमः ॥ ॥ हरिःॐ ॥ अथातःपंचांगरुद्राणांन्यासपूर्वकंजपहोमार्चनविधिंव्याख्यास्यामः ॥ ॐ यातेरुद्रशिवातनूरघोरापापकाशिनी ॥ तयानस्तनुवाशंतमयागिरिशंताभिचाकशीहि ॥ शिखायैनमः ॥ ॐ अस्मिन्महत्यर्णवेंतरिक्षेभवाअधि ॥ तेषाꣳसहस्रयोजनेवधन्वानितन्मसि ॥ शिरसेनमः ॥ ॐ सहस्राणिसहस्रशोयेरुद्राअधिभूम्यां ॥ तेषाꣳसहस्रयोजनेवधन्वानितन्मसि ॥ ललाटायनमः ॥ ॐ हꣳसःशुचिषद्वसुरंतरिक्षसद्धोतावेदिषदतिथिर्दुरोणसत् ॥ नृषद्वरसदृतसद्व्योमसदब्जागोजाऋतजाअद्रिजाऋतंबृहत् ॥ भ्रूमध्यायनमः ॥ ॐ त्र्यंबकंयजामहेसुगंधिंपुष्टिवर्धनं ॥ उर्वारुकमिवबंधनान्मृत्योर्मुक्षीयमामृतात् ॥ नेत्राभ्यांनमः ॥ ॐ नमःस्रुत्यायचपथ्यायच ॥ कर्णाभ्यांनमः ॥ ॐ मानस्तोकेतनयेमानआयुषिमानोगोषुमानोअश्वेषुरीरिषः ॥ वीरान्मानोरुद्रभामितोवधीर्हविष्मंतोनमसाविधेमते ॥ नासिकायैनमः ॥ ॐ अवतत्यधनुस्त्वꣳसहस्राक्षशतेषुधे ॥ निशीर्यशल्यानांमुखाशिवोनःसुमनाभव ॥ मुखायनमः ॥ ॐ नीलग्रीवाःशितिकंठाःशर्वाअधःक्षमाच

राः ॥ तेषाꣳसहस्रयोजनेवधन्वानितन्मसि ॥ कंठायनमः ॥ ॐ नीलग्रीवाःशितिकंठादिवꣳरुद्राउपश्रिताः ॥ तेषाꣳसहस्र योजनेवधन्वानितन्मसि ॥ उपकंठायनमः ॥ ॐ नमस्तेअस्त्वायुधायानाततायधृष्णवे ॥ उभाभ्यामुततेनमोबाहुभ्यांतवध न्वने ॥ बाहुभ्यांनमः ॥ ॐ यातेहेतिर्मीढुष्टमहस्तेबभूवतेधनुः ॥ तयास्मान्विश्वतस्त्वमयक्ष्मयापरिब्भुज ॥ उपबाहुभ्यांन मः ॥ ॐ येतीर्थानिप्रचरंतिसृकावंतोनिषंगिणः ॥ तेषाꣳसहस्रयोजनेवधन्वानितन्मसि ॥ हस्ताभ्यांनमः ॥ ॐ सद्योजातं प्रपद्यामिसद्योजातायवैनमोनमः ॥ भवेभवेनातिभवेभवस्वमांभवोद्भवायनमः ॥ अंगुष्ठाभ्यांनमः ॥ ॐ वामदेवायनमो ज्येष्ठायनमःश्रेष्ठायनमोरुद्रायनमःकालायनमःकलविकरणायनमोबलविकरणायनमोबलायनमोबलप्रमथनायनमःसर्वभूतद मनायनमोमनोन्मनायनमः ॥ तर्जनीभ्यांनमः ॥ ॐ अघोरेभ्योथघोरेभ्योघोरघोरतरेभ्यः ॥ सर्वेभ्यःसर्वशर्वेभ्योनमस्तेअ स्तुरुद्ररूपेभ्यः ॥ मध्यमाभ्यांनमः ॥ ॐ तत्पुरुषायविद्महेमहादेवायधीमहि ॥ तन्नोरुद्रःप्रचोदयात् ॥ अनामिकाभ्यां नमः ॥ ॐ ईशानःसर्वविद्यानामीश्वरःसर्वभूतानांब्रह्माधिपतिर्ब्रह्मणोधिपतिर्ब्रह्माशिवोमेअस्तुसदाशिवोम् ॥ कनिष्ठिकाभ्यां नमः ॥ ॐ नमोवःकिरिकेभ्योदेवानाꣳहृदयेभ्यः ॥ हृदयायनमः ॥ ॐ नमोगणेभ्योगणपतिभ्यश्चवोनमः ॥ पृष्ठायनमः ॥ ॐ नमोहिरण्यबाहवेसेनान्येदिशांचपतयेनमः ॥ पार्श्वाभ्यांनमः ॥ ॐ विज्यंधनुःकपर्दिनोविशल्योबाणवाꣳउत ॥ अनेश न्नस्येषवआभुरस्यनिषंगथिः ॥ जठरायनमः ॥ ॐ हिरण्यगर्भःसमवर्त्ततागे्रभूतस्यजातःपतिरेकआसीत् ॥ सदाधारपृथिवींद्यामु तेमांकस्मैदेवायहविषाविधेम ॥ नाभ्यैनमः ॥ ॐ मीढुष्टमशिवतमशिवोनःसुमनाभव ॥ परमेवृक्षआयुधंनिधायकृत्तिंवसान आचरपिनाकंबिभ्रदागहि ॥ कट्यैनमः ॥ ॐ येभूतानामधिपतयोविशिखासःकपर्दिनः ॥ तेषाꣳसहस्रयोजनेवधन्वानित

न्मसि ॥ गुह्यायनमः ॥ ॐ सशिराजातवेदाः ॥ अक्षरंब्रह्मसंमितं ॥ वेदानाꣳशिरउत्तमं ॥ जातवेदसेशिरसामाता ॥ स्वयंब्रह्मभूर्भुवःसुवरोम् ॥ ॐ जातवेदसेसुनवामसोममरातीयतोनिदहातिवेदः ॥ सनःपर्षदतिदुर्गाणिविश्वानावेवसिंधुंदुरितात्यग्निः ॥ तामग्निवर्णांतपसाज्वलंतींवैरोचनींकर्मफलेषुजुष्टां ॥ दुर्गांदेवींशरणमहंप्रपद्येसुतरसितरसेनमः ॥ अग्नेत्वंपारयानव्योअस्मान्स्वस्तिभिरतिदुर्गाणिविश्वा ॥ पूश्चपृथ्वीबहुलानउर्वीभवातोकायतनयायशंयोः ॥ विश्वानिनोदुर्गहाजातवेदः सिंधुंननावादुरितातिपर्षि ॥ अग्नेअत्रिवन्मनसागृणानोस्माकंबोध्यविताततनूनां ॥ पृतनाजितꣳसहमानमुग्रमग्निꣳहुवेमपरमात्सधस्थात् ॥ सनःपर्षदतिदुर्गाणिविश्वाक्षामद्देवोअतिदुरितात्यग्निः ॥ अपानायनमः ॥ ॐ मानोमहांतमुतमानोअर्भकंमानउक्षंतमुतमानउक्षितं ॥ मानोवधीःपितरंमोतमातरंप्रियामानस्तनुवोरुद्ररीरिषः ॥ ऊरुभ्यांनमः ॥ ॐ एषतेरुद्रभागस्तंजुषस्वतेनावसेनपरोमूजवतोतीह्यवततधन्वापिनाकहस्तःकृत्तिवासाः ॥ जानुभ्यांनमः ॥ ॐ सꣳसृष्टजित्सोमपाबाहुशर्ध्यूर्ध्वधन्वाप्रतिहिताभिरस्ता ॥ बृहस्पतेपरिदीयारथेनरक्षोहामित्राꣳअपबाधमानः ॥ जंघाभ्यांनमः ॥ ॐ विश्वंभूतंभुवनंचित्रंबहुधाजातंजायमानंचयत् ॥ सर्वोह्येषरुद्रस्तस्मैरुद्रायनमोअस्तु ॥ गुल्फाभ्यांनमः ॥ ॐ येपथांपथिरक्षयऐलबृदायव्युधः ॥ तेषाꣳसहस्रयोजनेवधन्वानितन्मसि ॥ पादाभ्यांनमः ॥ ॐ अध्यवोचदधिवक्ताप्रथमोदैव्योभिषक् ॥ अहीꣳश्चसर्वाञ्जंभयन्त्सर्वाश्चयातुधान्यः ॥ कवचायनमः ॥ ॐ नमोबिल्मिनेचकवचिनेच ॥ उपकवचायनमः ॥ ॐ नमोअस्तुनीलग्रीवायसहस्राक्षायमीढुषे ॥ अथोयेअस्यसत्वानोहंतेभ्योकरंनमः ॥ तृतीयनेत्रायनमः ॥ ॐ प्रमुंचधन्वनस्त्वमुभयोरार्त्नियोर्ज्याम् ॥ याश्चतेहस्तइषवःपराताभगवोवप ॥ अस्त्रायफट् ॥ यएतावंतश्चभूयाꣳसश्चदिशोरुद्रावितस्थिरे ॥ तेषाꣳ

सहस्रयोजनेवधन्वानितन्मसि ॥ इतिदिग्बंधः ॥ इतिप्रथमोन्यासः ॥ ॥ ॐ नमोभगवतेरुद्रायेतिनमस्कारंन्यसेत् ॥
ॐ मूर्ध्नेनमः ॥ ॐ नं नासिकायैनमः ॥ ॐ मों ललाटायनमः ॥ ॐ भं मुखायनमः ॥ ॐ गं कंठायनमः ॥ ॐ वं हृदयाय
नमः ॥ ॐ तें दक्षिणहस्तायनमः ॥ ॐ रुं वामहस्तायनमः ॥ ॐ द्रां नाभ्यैनमः ॥ ॐ यं पादाभ्यांनमः ॥ ॐ सद्योजातंप्रप
द्यामिसद्योजातायवैनमोनमः ॥ भवेभवेनातिभवेभवस्वमांभवोद्भवायनमः ॥ पादाभ्यांनमः ॥ ॐ वामदेवायनमोज्येष्ठायनमः
श्रेष्ठायनमोरुद्रायनमःकालायनमःकलविकरणायनमोबलविकरणायनमोबलायनमोबलप्रमथनायनमःसर्वभूतदमनायनमोम
नोन्मनायनमः ॥ ऊरुमध्यायनमः ॥ ॐ अघोरेभ्योथघोरेभ्योघोरघोरतरेभ्यः ॥ सर्वेभ्यःसर्वशर्वेभ्योनमस्तेअस्तुरुद्ररूपेभ्यः ॥
हृदयायनमः ॥ ॐ तपुरुषायविद्महेमहादेवायधीमहि ॥ तन्नोरुद्रःप्रचोदयात् ॥ मुखायनमः ॥ ॐ ईशानःसर्वविद्यानामीश्व
रःसर्वभूतानांब्रह्माधिपतिर्ब्रह्मणोधिपतिर्ब्रह्माशिवोमेअस्तुसदाशिवोम् ॥ ॐ शिरसेनमः । ॐ कारंमूर्ध्निविन्यस्यनकारंनासि
काग्रतः ॥ मोकारंतुललाटेवैभकारंमुखमध्यतः ॥१॥ गंकारंकंठदेशेतुवकारंहृदिविन्यसेत् ॥ तेकारंदक्षिणेहस्तेरुकारंवामतोन्य
सेत् ॥ २ ॥ द्राकारंनाभिदेशेतुयकारंपादयोर्न्यसेत् ॥ सद्यंचपादयोर्न्यस्यवामंन्यस्योरुमध्यतः ॥ ३ ॥ अघोरंहृदिविन्यस्यमु
खेतत्पुरुषंन्यसेत् ॥ ईशानंहृदिविन्यस्यहंसोनामसदाशिवः ॥ ४ ॥ ) इतिद्वितीयोन्यासः ॥ ॥ अस्यश्रीहंसगायत्रीमंत्रस्यआ
त्माऋषिः ॥ परमात्मादेवता ॥ अव्यक्तगायत्रीछंदः ॥ हंसन्यासेविनियोगः ॥ ॐ हंसांअंगुष्ठाभ्यांनमः हृदयायनमः ॥ ॐ
हंसींतर्जनी० शिरसे० ॥ ॐ हंसूंमध्यमाभ्यां० शिखायै० ॥ ॐ हंसैंअनामिकाभ्यां० कवचाय० ॥ ॐ हंसौंकनिष्ठिकाभ्यां०
नेत्रत्रयाय० ॥ ॐ हंसःकरतलकर० अस्त्रायफट् ॥ इतिदिग्बंधः ॥ गमागमस्थंगमनादिशून्यंचिद्दीपदीपंतिमिरांधनाशं ॥

पश्यामितेसर्वजनांतरस्थंनमामिहंसंपरमात्मरूपं ॥ हंसः । सोहंसः ॥ परमहंसः ॥ ॐ हंसहंसायविद्महेपरमहंसायधीमहि ॥ तन्नोहंसःप्रचोदयात् ॥ हंसहंसेतियोब्रूयाद्धंसोनामसदाशिवः ॥ एवंन्यासविधिंकृत्वाततःसंपुटमारभेत् ॥ इतितृतीयोन्यासः ॥ ॥ ॐ भूर्भुवःस्वः ॐ ॥ ॐ त्रातारमिंद्रमवितारमिंद्रꣳहवेहवेसुहवꣳशूरमिंद्रं ॥ हुवेनुशक्रंपुरुहूतमिंद्रꣳस्वस्तिनोमघवाधात्विंद्रः ॥ ॐ भूर्भुवःस्वःललाटस्थानेइंद्रायनमः ॥ ॐ नं त्वंनोअग्नेवरुणस्यविद्वान्देवस्यहेडोवयासिसीष्ठाः ॥ यजिष्ठोवह्नितमःशोशुचानोविश्वाद्वेषाꣳसिप्रमुमुग्ध्यस्मत् ॥ नं नेत्रस्थानेअग्नयेनमः ॥ ॐ मों सुगंनःपंथामभयंकृणोतुयस्मिन्नक्षत्रेयमएतिराजा ॥ यस्मिन्नेनमभ्यषिंचंतदेवास्तदस्यचित्रꣳहविर्यजाम ॥ मों कर्णस्थानेयमायनमः ॥ ॐ भं असुन्वंतमयजमानमिच्छस्तेनस्येत्यांतस्करस्यान्वेषि ॥ अन्यमस्मदिच्छसातइत्यानमोदेविनिर्ऋतेतुभ्यमस्तु ॥ भं मुखस्थानेनिर्ऋतये० ॥ ॐ गं तत्त्वायामिब्रह्मणावंदमानस्तदाशास्तेयजमानोहविर्भिः ॥ अहेडमानोवरुणेहबोध्युरुशꣳसमानआयुःप्रमोषीः ॥ गं बाहुस्थानेवरुणाय० ॥ ॐ वं आनोनियुद्भिःशतिनीभिरध्वरꣳसहस्रिणीभिरुपयाहियज्ञं ॥ वायोअस्मिन्हविषिमादयस्वयूयंपातःस्वस्तिभिःसदानः ॥ वं नासिकास्थानेवायवे० ॥ ॐ तं वयꣳसोमव्रतेतव ॥ मनस्तनूषुबिभ्रतः ॥ प्रजावंतोअशीमहि ॥ तं हृदिस्थानेसोमाय० ॥ ॐ रुं तमीशानंजगतस्तस्थुषस्पतिंधियंजिन्वमवसेहूमहेवयं ॥ पूषानोयथावेदसामसद्वृधेरक्षितापायुरदब्धःस्वस्तये ॥ रुं नाभिस्थानेईशानाय० ॥ ॐ द्रां अस्मेरुद्रामेहनापर्वतासोवृत्रहत्येभरहूतौसजोषाः ॥ यःशꣳसतेस्तुवतेधायिपज्रइंद्रज्येष्ठाअस्माꣳअ

---

१ आदौप्रणवमुच्चार्यव्याहृतिप्रणवान्वितं ॥ बीजमंत्रंसमुच्चार्यमंत्रांतेबीजमेवच ॥ इंद्रादयोदिगीशाश्चनमोंताःसर्वएवहि ॥ बौधायनेनमुनिनाप्रोक्तंसंपुटलक्षणं ॥ २ एवमग्रेपि ॐ भूर्भुवःस्वः ॐ नं इत्यादि बीजादौबीजांतेचप्रणवपूर्वाव्याहृतयःप्रतिमंत्रंयोजनीयाः ॥

वंतुदेवाः ॥ द्रां मूर्धस्थानेआकाशायनमः ॥ ॐ यं स्योनापृथिविभवानृक्षरानिवेशनी ॥ यच्छानःशर्मसप्रथाः ॥ यं पादस्था नेभूम्यैनमः ॥ एतत्संपुटमिंद्रादीन्दिक्षुविन्यस्यैवमेवात्मनिरौद्रीकरणंकृत्वा ॥ ( रौद्रीकरणंचेत्थं )॥ ॐ विभूरसिप्रवाहणोरौ द्रेणानीकेनपाहिमांग्नेपिपृहिमामाहिꣳसीः ॥ श्रोत्राभ्यांनमः ॥ ॐ वह्निरसिहव्यवाहनोरौद्रेणानीकेन० ॥ त्वचेनमः ॥ ॐ श्वात्रोसिप्रचेतारौद्रेणा० ॥ चक्षुर्भ्यां० ॥ ॐ तुथोसिविश्ववेदारौद्रे० ॥ जिह्वायै० ॥ ॐ उशिगसिकवीरोरौद्रेणानीकेन० ॥ नासिकायै० ॥ ॐ अंघारिरसिबंभारिरौद्रेणानीकेन० ॥ पायवेन० ॥ ॐ अवस्युरसिदुवस्वान्रौद्रेणानीकेन० ॥ उपस्थायन० ॥ ॐ शुंध्यूरसिमार्जालीयोरौद्रेणानीकेन० ॥ हस्ताभ्यांन० ॥ ॐ सम्राडसिकृशानूरौद्रेणानीकेनपाहि० ॥ पादाभ्यांन० ॥ ॐ ॥ परिषद्योसिपवमानोरौद्रेणा० ॥ वाचेनमः ॥ ॐ प्रतक्वासिनभस्वान्रौद्रे० ॥ आत्मनेनमः॥ ॐ असंमृष्टोसिहव्यसूदोरौद्रे०॥ आकाशायनमः ॥ ॐ ऋतधामासिसुवर्ज्योतीरौद्रे० ॥ वायवेनमः ॥ ॐ ब्रह्मज्योतिरसिसुवर्धामारौद्रे० ॥ अग्नयेनमः ॥ ॐ अजोस्येकपाद्रौद्रे० ॥ अद्भ्योनमः ॥ ॐ अहिरसिबुध्नियोरौद्रे० ॥ भूम्यैनमः ॥ ( श्रोत्रत्वक्चक्षुषीजिह्वानासिकाचैवपंचमी ॥ पायूपस्थौहस्तपादौवाक्चैवदशमीतथा ॥ आत्माखंवायुरग्निश्चआपोभूमिस्तुषोडश ॥ ) त्वगस्थिगतैःपापैःप्रमुच्यतेसर्वभूतेष्वपराजितोभवति ॥ ततोयक्षराक्षसगंधर्वभूतप्रेतपिशाचयमदूतशाकिनीडाकिनीसर्पश्वापदतस्कराद्युपघाताःसर्वेज्वलंतंपश्यंतु ॥ माꣳरक्षंतु ॥ यजमानꣳरक्षंतु ॥ इतिचतुर्थोन्यासः ॥ ॥ ॐ मनोज्योतिर्जुषतामाज्यंविच्छिन्नंयज्ञꣳसमिमंदधातु ॥ याइष्टाउषसोनिम्रुचश्चताःसंदधामिहविषाघृतेन ॥ गुह्यायनमः ॥ ॐ अबोध्यग्निःसमिधाजनानांप्रतिधेनुमिवायतीमुषासं ॥ यह्वाइवप्रवयामुज्जिहानाःप्रभानवःसिस्रतेनाकमच्छ ॥ जठरायनमः ॥ ॐ मूर्धानंदिवोअरतिंपृथिव्यावैश्वानरमृतायंजातमग्निं ॥

कावंऽस्मस्याजमातीथजनानामासन्नापात्रंजनयंतदेवाः ॥ हृदयायनमः ॥ ॐ मर्माणितेवर्मणाछादयामिसोमस्त्वाराजामृतें नाभिवंस्तां ॥ उरोर्वरीयोवरिवस्तेअस्तुजयंतंत्वामनुमदंतुदेवाः ॥ मुखायनमः ॥ ॐ जातवेदायदिवापावकोसि ॥ वैश्वानरोयदिवावैद्युतोसि ॥ शंप्रजाभ्योयजमानायलोकं ॥ ऊर्जंपुष्टिंददद्भ्यावंवृत्स्व ॥ शिरसेस्वाहा ॥ ततआत्मरक्षाकर्तव्या ॥ ॐ ब्रह्मात्मन्वदसृजत ॥ तदकामयत ॥ समात्मनापद्येयेति ॥ आत्मन्नात्मन्नित्यामंत्रयत ॥ तस्मैदशमंऽहूतःप्रत्यश्रृणोत् ॥ सदशहूतोभवत् ॥ दशहूतोहवैनामैषः ॥ तंवाएतंदशहूतंऽसंतं ॥ दशहोतेत्याचक्षतेपरोक्षेण ॥ परोक्षप्रियाइवहिदेवाः ॥ आत्मन्नात्मन्नित्यामंत्रयत ॥ तस्मैसप्तमंऽहूतःप्रत्यश्रृणोत्॥ ससप्तहूतोभवत्॥ सप्तहूतोहवैनामैषः ॥ तंवाएतंऽसप्तहूतंऽसंतं ॥ सप्तहोतेत्याचक्षतेपरोक्षेण ॥ परोक्षप्रियाइवहिदेवाः ॥ आत्मन्नात्मन्नित्यामंत्रयत ॥ तस्मैषष्ठंऽहूतःप्रत्यश्रृणोत् ॥ सषड्ढूतोभवत् ॥ षड्ढूतोहवैनामैषः ॥ तंवाएतंऽषड्ढूतंऽसंतं ॥ षड्ढोतेत्याचक्षतेपरोक्षेण ॥ परोक्षप्रियाइवहिदेवाः ॥ आत्मन्नात्मन्नित्यामंत्रयत ॥ तस्मैपंचमंऽहूतःप्रत्यश्रृणोत्॥ सपंचहूतोभवत् ॥ पंचहूतोहवैनामैषः ॥ तंवाएतंपंचहूतंऽसंतं ॥ पंचहोतेत्याचक्षतेपरोक्षेण॥परोक्षप्रियाइवहिदेवाः॥ आत्मन्नात्मन्नित्यामंत्रयत॥ तस्मैचतुर्थंऽहूतःप्रत्यश्रृणोत्॥ सचतुर्हूतोभवत्॥ चतुर्हूतोहवैनामैषः॥ तंवाएतंचतुर्हूतंऽसंतं ॥ चतुर्होतेत्याचक्षतेपरोक्षेण॥ परोक्षप्रियाइवहिदेवाः॥ तमब्रवीत्॥ त्वंवैमेनेदिष्ठंऽहूतःप्रत्यश्रौषीः ॥ त्वयैनानाख्यातारइति ॥ तस्मान्नुहैनांश्चतुर्होतारइत्याचक्षते ॥ तस्माच्छुश्रूषुःपुत्राणांऽहृद्यतमः ॥ नेदिष्ठोहृद्यतमः ॥ नेदिष्ठोब्रह्मणोभवति ॥ यएवंवेद ॥ इतिपंचमोन्यासः ॥ ॥ ॐ यज्जाग्रतोदूरमुदैतुदैवंतदुसुप्तस्यतथैवैति ॥ दूरंगमंज्योतिषांज्योतिरेकंतन्मेमनःशिवसंकल्पमस्तु ॥ येनकर्माण्यपसोमनीषिणोयज्ञेकृण्वंतिविदथेषुधीराः ॥ यदपूर्वंयक्ष्ममंतःप्रजानांतन्मेमनःशिवसं

कल्पमस्तु ॥ यत्प्रज्ञानमुतचेतोधृतिश्चयज्योतिरंतरमृतंप्रजासु ॥ यस्मान्नऋतेकिंचनकर्मक्रियतेतन्मेमनःशिवसंकल्पमस्तु ॥
येनेदंभूतंभुवनंभविष्यत्परिगृहीतममृतेनसर्वं ॥ येनयज्ञस्तायतेसप्तहोतातन्मेमनःशिवसंकल्पमस्तु ॥ यस्मिन्नृचःसामयजूंषि
यस्मिन्प्रतिष्ठितारथनाभाविवाराः ॥ यस्मिंश्चित्तंसर्वमोतंप्रजानांतन्मेमनःशिवसंकल्पमस्तु ॥ सुषारथिरश्वानिवयंमनुष्या
न्नेनीयतेभीशुभिर्वाजिनइव ॥ हृत्प्रतिष्ठंयदजिरंयविष्ठंतन्मेमनःशिवसंकल्पमस्तु ॥ ॐ नमोभगवतेरुद्रायशिवसंकल्पंहृदया
यनमः ॥ ॐ सहस्रशीर्षापुरुषः ॥ सहस्राक्षःसहस्रपात् ॥ सभूमिंविश्वतोवृत्वा ॥ अत्यतिष्ठद्दशांगुलं ॥ पुरुषएवेदंसर्वं ॥
यद्भूतंयच्चभव्यं ॥ उतामृतत्वस्येशानः ॥ यदन्नेनातिरोहति ॥ एतावानस्यमहिमा ॥ अतोज्यायांश्चपूरुषः ॥ पादोस्यवि
श्वाभूतानि ॥ त्रिपादस्यामृतंदिवि ॥ त्रिपादूर्ध्वउदैत्पुरुषः ॥ पादोस्येहाभवात्पुनः ॥ ततोविष्वङ्व्यक्रामत् ॥ साशनान
शनेअभि ॥ तस्माद्विराडजायत ॥ विराजोअधिपुरुषः ॥ सजातोअत्यरिच्यत ॥ पश्चाद्भूमिमथोपुरः ॥ यत्पुरुषेणहविषा ॥
देवायज्ञमतन्वत ॥ वसंतोअस्यासीदाज्यं ॥ ग्रीष्मइध्मःशरद्धविः ॥ सप्तास्यासन्परिधयः ॥ त्रिःसप्तसमिधःकृताः ॥ देवा
यद्यज्ञंतन्वानाः ॥ अबध्नन्पुरुषंपशुं ॥ तंयज्ञंबर्हिषिप्रौक्षन् ॥ पुरुषंजातमग्रतः ॥ तेनदेवाअयजंत ॥ साध्याऋषयश्चये ॥ त
स्माद्यज्ञात्सर्वहुतः ॥ संभृतंपृषदाज्यं ॥ पशूंस्तांश्चक्रेवायव्यान् ॥ आरण्यान्ग्राम्याश्चये ॥ तस्माद्यज्ञात्सर्वहुतः ॥ ऋचः
सामानिजज्ञिरे ॥ छंदांसिजज्ञिरेतस्मात् ॥ यजुस्तस्मादजायत ॥ तस्मादश्वाअजायंत ॥ येकेचोभयादतः ॥ गावोहजज्ञि
रेतस्मात् ॥ तस्माज्जाताअजावयः ॥ यत्पुरुषंव्यदधुः ॥ कतिधाव्यकल्पयन् ॥ मुखंकिमस्यकौबाहू ॥ कावूरूपादावुच्ये
ते ॥ ब्राह्मणोस्यमुखमासीत् ॥ बाहूराजन्यःकृतः ॥ ऊरूतदस्ययद्वैश्यः ॥ पद्भ्यांशूद्रोअजायत ॥ चंद्रमामनसोजातः ॥

चक्षोःसूर्योअजायत ॥ मुखादिंद्रश्चाग्निश्च ॥ प्राणाद्वायुरजायत ॥ नाभ्याआसीदंतरिक्षं ॥ शीर्ष्णोद्यौःसमवर्तत ॥ पद्भ्यां भूमिर्दिशःश्रोत्रात् ॥ तथालोकाꣳअकल्पयन् ॥ वेदाहमेतंपुरुषंमहांतं ॥ आदित्यवर्णतमसस्तुपारे ॥ सर्वाणिरूपाणिविचित्यधीरः ॥ नामानिकृत्वाभिवदन्यदास्ते ॥ धातापुरस्ताद्यमुदाजहार ॥ शक्रःप्रविद्वान्प्रदिशश्चतस्रः ॥ तमेवंविद्वानमृतइहभवति ॥ नान्यःपंथाअयनायविद्यते ॥ यज्ञेनयज्ञमयजंतदेवाः ॥ तानिधर्माणिप्रथमान्यासन् ॥ तेहनाकंमहिमानःसचंते ॥ यत्रपूर्वेसाध्याःसंतिदेवाः ॥ ॐ नमोभगवतेरुद्रायपुरुषसूक्तꣳशिरसेस्वाहा ॥ ॐ अद्भ्यःसंभूतःपृथिव्यैरसाच्च ॥ विश्वकर्मणःसमवर्तताधि ॥ तस्यत्वष्टाविदधद्रूपमेति ॥ तत्पुरुषस्यविश्वमाजानमग्रे ॥ वेदाहमेतंपुरुषंमहांतं ॥ आदित्यवर्णतमसःपरस्तात् ॥ तमेवंविद्वानमृतइहभवति ॥ नान्यःपंथाविद्यतेयनाय ॥ प्रजापतिश्चरतिगर्भेअंतः ॥ अजायमानोबहुधाविजायते ॥ तस्यधीराःपरिजानंतियोनिं ॥ मरीचीनांपदमिच्छंतिवेधसः ॥ योदेवेभ्यआतपति ॥ योदेवानांपुरोहितः ॥ पूर्वोयोदेवेभ्योजातः ॥ नमोरुचायब्राह्मये ॥ रुचंब्राह्मंजनयंतः ॥ देवाअग्रेतदब्रुवन् ॥ यस्त्वैवंब्राह्मणोविद्यात् ॥ तस्यदेवाअसन्वशे ॥ ह्रीश्चतेलक्ष्मीश्चपत्न्यौ ॥ अहोरात्रेपार्श्वे ॥ नक्षत्राणिरूपं ॥ अश्विनौव्यात्तं ॥ इष्टंमनिषाण ॥ अमुंमनिषाण ॥ सर्वंमनिषाण ॥ ॐ नमोभगवतेरुद्रायेत्युत्तरनारायणꣳशिखायैवषट् ॥ ॐ आशुःशिशानोवृषभोनयुध्मोघनाघनःक्षोभणश्चर्षणीनां ॥ संक्रंदनोनिमिषएकवीरःशतꣳसेनाअजयत्साकमिंद्रः ॥ संक्रंदनेनानिमिषेणजिष्णुनायुत्कारेणदुश्च्यवनेनधृष्णुना ॥ तदिंद्रेणजयततत्सहध्वंयुधोनरइषुहस्तेनवृष्णा ॥ सइषुहस्तैःसनिषंगिभिर्वशीसꣳस्रष्टासयुधइंद्रोगणेन ॥ सꣳसृष्टजित्सोमपाबाहुशर्ध्यूर्ध्वधन्वाप्रतिहिताभिरस्ता ॥ बृहस्पतेपरिदीयारथेनरक्षोहामित्राꣳअपबाधमानः ॥ प्रभंजन्सेनाःप्रमृणोयु

धाजयंत्रस्माकमेध्यविताराथानां ॥ गोत्रभिदंगोविदंवज्रबाहुंजयंतमज्मप्रमृणंतमोजसा ॥ इमꣳसजाताअनुवीरयध्वमिंद्रꣳस
खायोनुसꣳरभध्वं ॥ बलविज्ञायस्थविरःप्रवीरःसहस्वान्वाजीसहमानउग्रः ॥ अभिवीरोअभिसत्वासहोजाजैत्रमिंद्ररथमातिं
ष्ठगोवित् ॥ अभिगोत्राणिसहसागाहमानोदायोवीरःशतमन्युरिंद्रः ॥ दुश्च्यवनःपृतनाषाडयुध्योस्माकꣳसेनाअवतुप्रयुत्सु ॥
इंद्रआसांनेताबृहस्पतिर्दक्षिणायज्ञःपुरएतुसोमः ॥ देवसेनानामभिभंजतीनांजयंतीनांमरुतोयंत्वग्रे ॥ इंद्रस्यवृष्णोवरुणस्य
राज्ञआदित्यानांमरुताꣳशर्धउग्रं ॥ महामनसांभुवनच्यवानांघोषोदेवानांजयतामुदस्थात् ॥ अस्माकमिंद्रःसमृतेषुध्वजेष्व
स्माकंयाइषवस्ताजयंतु ॥ अस्माकंवीराउत्तरेभवंत्वस्मानुदेवाअवताहवेषु ॥ उद्धर्षयमघवन्नायुधान्युत्सत्वनांमामकानांमहाꣳ
सि ॥ उद्वृत्रहन्वाजिनांवाजिनान्युद्रथानांजयतामेतुघोषः ॥ उपप्रेतजयतानरःस्थिरावःसंतुबाहवः ॥ इंद्रोवःशर्मयच्छत्व
नाधृष्यायथासथ ॥ अवसृष्टापरापतशरव्येब्रह्मसꣳशिता ॥ गच्छामित्रान्प्रविशमैषांकंचनोच्छिषः ॥ मर्माणितेवर्मभि
श्छादयामिसोमस्त्वाराजामृतेनाभिवस्तां ॥ उरोर्वरीयोवरिवस्तेअस्तुजयंतंत्वामनुमदंतुदेवाः ॥ यत्रबाणाःसंपतंतिकुमारा
विशिखाइव ॥ इंद्रोनस्तत्रवृत्रहाविश्वाहाशर्मयच्छतु ॥ ॐ नमोभगवतेरुद्रायअप्रतिरथंकवचायहुं ॥ ॐ त्वमग्नेरुद्रोअसु
रोमहोदिवः ॥ त्वꣳशर्धोमारुतंपृक्षईशिषे ॥ त्वंवातैररुणैर्यासिशंगयः ॥ त्वंपूषाविधतःपासिनुत्मना ॥ देवादेवेषुश्रय
ध्वं ॥ प्रथमाद्वितीयेषुश्रयध्वं ॥ द्वितीयास्तृतीयेषुश्रयध्वं ॥ तृतीयाश्चतुर्थेषुश्रयध्वं ॥ चतुर्थाःपंचमेषुश्रयध्वं ॥ पंच
माःषष्ठेषुश्रयध्वं ॥ षष्ठाःसप्तमेषुश्रयध्वं ॥ सप्तमाअष्टमेषुश्रयध्वं ॥ अष्टमानवमेषुश्रयध्वं ॥ नवमादशमेषुश्रयध्वं ॥
दशमाएकादशेषुश्रयध्वं ॥ एकादशाद्वादशेषुश्रयध्वं ॥ द्वादशास्त्रयोदशेषुश्रयध्वं ॥ त्रयोदशाश्चतुर्दशेषुश्रयध्वं ॥ च

तुर्दशाःपंचदशेषुश्रयध्वं ॥ पंचदशाःषोडशेषुश्रयध्वं ॥ षोडशाःसप्तदशेषुश्रयध्वं ॥ सप्तदशाअष्टादशेषुश्रयध्वं ॥ अष्टादशाएकान्नविंशेषुश्रयध्वं ॥ एकान्नविंशाविंशेषुश्रयध्वं ॥ विंशाएकविंशेषुश्रयध्वं ॥ एकविंशाद्वाविंशेषुश्रयध्वं ॥ द्वाविंशास्त्रयोविंशेषुश्रयध्वं ॥ त्रयोविंशाश्चतुर्विंशेषुश्रयध्वं ॥ चतुर्विंशाःपंचविंशेषुश्रयध्वं ॥ पंचविंशाःषड्विंशेषुश्रयध्वं ॥ षड्विंशाःसप्तविंशेषुश्रयध्वं ॥ सप्तविंशाअष्टाविंशेषुश्रयध्वं ॥ अष्टाविंशाएकान्नत्रिंशेषुश्रयध्वं ॥ एकान्नत्रिंशास्त्रिंशेषुश्रयध्वं ॥ त्रिंशाएकत्रिंशेषुश्रयध्वं ॥ एकत्रिंशाद्वात्रिंशेषुश्रयध्वं ॥ द्वात्रिंशास्त्रयस्त्रिंशेषुश्रयन्वं ॥ देवास्त्रिरेकादशास्त्रिस्त्रयस्त्रिंशाः ॥ उत्तरेभवत ॥ उत्तरवर्त्मानउत्तरसत्वानः ॥ यत्कामइदंजुहोमि ॥ तन्मेसमृध्यतां ॥ वयंस्यामपतयोरयीणां ॥ ॐ भूर्भुवःसुवःस्वाहा ॥ ॐ नमोभगवतेरुद्रायसर्वक्लेशापहर्त्रेशतरुद्रियमित्यस्त्रायफट् ॥ एवंपंचांगंसकृज्जपेत् ॥ अष्टांगंप्रणम्य ॥ ॐ हिरण्यगर्भःसमवर्तताग्रेभूतस्यजातःपतिरेकआसीत् ॥ सदाधारपृथिवींद्यामुतेमांकस्मैदेवायहविषाविधेम ॥ ॐ यःप्राणतोनिमिषतोमहित्वैकइद्राजाजगतोबभूव ॥ यईशेअस्यद्विपदश्चतुष्पदःकस्मैदेवायहविषाविधेम ॥ ॐ ब्रह्मजज्ञानंप्रथमंपुरस्ताद्विसीमतःसुरुचोवेनआवः ॥ सबुध्नियाउपमाअस्यविष्ठाःसतश्चयोनिमसतश्चविवः ॥ ॐ महीद्यौःपृथिवीचनइमंयज्ञंमिमिक्षतां ॥ पिपृतांनोभरीमभिः ॥ ॐ उपश्वासयपृथिवीमुतद्यांपुरुत्रातेमनुतांवेष्टितंजगत् ॥ सदुंदुभेसजूरिंद्रेणदेवैर्दूराद्दवीयोअपसेधशत्रून् ॥ ॐ अग्नेनयसुपथारायेअस्मान्विश्वानिदेववयुनानिविद्वान् ॥ युयोध्यस्मज्जुहुराणमेनोभूयिष्ठांतेनमउक्तिंविधेम ॥ ॐ यातेअग्नेयज्ञियातनूस्तयेह्यारोहात्मात्मानं ॥ अच्छावसूनिकृण्वन्नस्मेनर्यापुरूणि ॥ यज्ञोभूत्वायज्ञमासीदस्वांयोनिं ॥ जातवेदोभुवआजायमानःसक्षयएहि ॥ ॐ यथावःस्वाहाग्नयेदाशेमपरीळाभि

घृतवद्भिश्चहव्यैः ॥ तेभिर्नोअग्नेअमितैर्महोभिःशतंपूर्भिरायसीभिर्निपाहि ॥ इमंयमप्रस्तरमाहिसीदांगिरोभिःपितृभिःसंविदानः ॥ आत्वामंत्राःकविशस्तावहंत्वेनाराजन्हविषामादयस्व ॥ उरसाशिरसादृष्ट्यामनसावचसातथा ॥ पद्भ्यांकराभ्यांजानुभ्यांप्रणामोष्टांगउच्यते ॥ अनेनमहान्यासेनभगवान्श्रीपरमेश्वरःप्रीयतां ॥ इतिमहान्यासः ॥ ॥छ॥

## ॥ ४४ ॥ अथलघुन्यासप्रारंभः ॥

श्रीः ॥ ॐ प्रजननेब्रह्मातिष्ठतु ॥ पादयोर्विष्णुस्तिष्ठतु ॥ हस्तयोर्हरस्तिष्ठतु ॥ बाह्वोरिंद्रस्तिष्ठतु ॥ जठरेअग्निस्तिष्ठतु ॥ हृदयेशिवस्तिष्ठतु ॥ कंठेवसवस्तिष्ठंतु ॥ वक्त्रेसरस्वतीतिष्ठतु ॥ नासिकयोर्वायुस्तिष्ठतु ॥ नयनयोःसूर्याचंद्रमसौतिष्ठतां ॥ कर्णयोरश्विनौदेवौतिष्ठतां ॥ ललाटेरुद्रास्तिष्ठंतु ॥ मूर्ध्न्यादित्यास्तिष्ठंतु ॥ शिरसिमहादेवस्तिष्ठतु ॥ शिखायां चामुंडातिष्ठतु ॥ पृष्ठेपिनाकीतिष्ठतु ॥ पुरतःशूलीतिष्ठतु ॥ पार्श्वयोःशिवाशंकरौतिष्ठतां ॥ सर्वतोवायुस्तिष्ठतु ॥ ततोबहिःसर्वतोग्निर्ज्वालामालापरिवृतस्तिष्ठतु ॥ सर्वेष्वंगेषुसर्वादेवतायथायथास्थानानितिष्ठंतु ॥ माꣳरक्षंतु ॥ यजमानꣳरक्षंतु ॥ ॐ अग्निर्मेवाचिश्रितः ॥ वाꣳहृदये ॥ हृदयंमयि ॥ अहममृते ॥ अमृतंब्रह्मणि ॥ वायुर्मेप्राणेश्रितः ॥ प्राणोहृदये ॥ हृदयंमयि ॥ अहममृते ॥ अमृतंब्रह्मणि ॥ सूर्योमेचक्षुषिश्रितः ॥ चक्षुर्हृदये ॥ हृदयंमयि ॥ अहममृते ॥ अमृतंब्रह्मणि ॥ चंद्रमामेमनसिश्रितः ॥ मनोहृदये ॥ हृदयंमयि ॥ अहममृते ॥ अमृतंब्रह्मणि ॥ दिशोमेश्रोत्रेश्रिताः ॥ श्रोत्रꣳहृदये ॥ हृदयंमयि ॥

---

१ अत्रक्रमः—अग्निर्वायुश्चसूर्यश्चचंद्रमादिशएवच ॥ आपःपृथिव्योषधयइंद्रःपर्जन्यएवच ॥ ईशानआत्माचपुनर्लघुन्यासेत्रयोदश ॥ इतिलघुन्यासः ॥

अहममृते ॥ अमृतंब्रह्मणि ॥ आपोमेरेतसिश्रिताः ॥ रेतोहृदये ॥ हृदयंमयि ॥ अहममृते ॥ अमृतंब्रह्मणि ॥ पृथिवीमे शरीरेश्रिता ॥ शरीरंहृदये ॥ हृदयंमयि ॥ अहममृते ॥ अमृतंब्रह्मणि ॥ ओषधिवनस्पतयोमेलोमसुश्रिताः ॥ लोमानि हृदये ॥ हृदयंमयि ॥ अहममृते ॥ अमृतंब्रह्मणि ॥ इंद्रोमेबलेश्रितः ॥ बलंहृदये ॥ हृदयंमयि ॥ अहममृते ॥ अमृतंब्रह्मणि ॥ पर्जन्योमेमूर्ध्निश्रितः ॥ मूर्धाहृदये ॥ हृदयंमयि ॥ अहममृते ॥ अमृतंब्रह्मणि ॥ ईशानोमेमन्यौश्रितः ॥ मन्युर्हृदये ॥ हृदयंमयि ॥ अहममृते ॥ अमृतंब्रह्मणि ॥ आत्मामआत्मनिश्रितः ॥ आत्माहृदये ॥ हृदयंमयि ॥ अहममृते ॥ अमृतंब्रह्मणि ॥ पुनर्मआत्मापुनरायुर्गात् ॥ पुनःप्राणःपुनराकूतमागात् ॥ वैश्वानरोरश्मिभिर्वावृधानः ॥ अंतस्तिष्ठत्वमृतस्य गोपाः ॥ एवंसर्वशरीरंस्पृशेत् ॥ अथात्मानंशिवात्मानंश्रीरुद्ररूपंध्यायेत् ॥ शुद्धस्फटिकसंकाशंत्रिनेत्रंपंचवक्रकं ॥ गंगाधरं दशभुजंसर्वाभरणभूषितं ॥ नीलग्रीवंशशांकांकंनागयज्ञोपवीतिनं ॥ व्याघ्रचर्मोत्तरीयंचवरेण्यमभयप्रदं ॥ कमंडल्वक्षसूत्राभ्यामन्वितंशूलपाणिनं ॥ ज्वलंतंपिंगलजटाशिखमुद्द्योतकारिणं ॥ अमृतेनाप्लुतंहृष्टमुमादेहार्धधारिणं ॥ दिव्यसिंहासनासीनंदिव्यभोगसमन्वितं ॥ दिग्देवतासमायुक्तंसुरासुरनमस्कृतं ॥ नित्यंचशाश्वतंशुद्धंध्रुवमक्षरमव्ययं ॥ सर्वव्यापिनमीशानंरुद्रंवैविश्वरूपिणं ॥ एवंध्यात्वाद्विजःसम्यक्ततोयजनमारभेत् ॥ आराधितोमनुष्यैस्त्वंसिद्धैर्देवासुरादिभिः ॥ आराधयामिभक्त्यात्वांमांगृहाणमहेश्वर ॥ आत्वावहंतुहरयःसचेतसःश्वेतैरश्वैःसहकेतुमद्भिर्वाताजवैर्बलवद्भिर्मनोजवैरायाहिशीघ्रंममहव्यायशर्वोम् ॥ स्वामिन्सर्वजगन्नाथयावत्पूजावसानकं ॥ तावत्त्वंप्रीतिभावेनलिंगेस्मिन्सन्निधोभव ॥ शांतिदोभव ॥ सुप्रसन्नोभव ॥ वरदोभव ॥ अनेनलघुन्यासेनश्रीपरमेश्वरःप्रीयतां ॥ इतिलघुन्यासःसमाप्तः ॥ ॥छ॥

## ॥ ४५ ॥ अथरुद्राध्यायः ॥

श्रीगणेशायनमः ॥ अस्यश्रीरुद्रस्यप्रश्नस्य ॥ अनुष्टुपछंदस्य ॥ अघोरऋषिः ॥ संकर्षणमूर्तिस्वरूपोयोऽसावादित्यःपरमपुरुषः सएषरुद्रोदेवता ॥ अग्निक्रतुचरमायामिष्टिकायाꣳशतरुद्रियजपेविनियोगः ॥ सकलस्यरुद्राध्यायस्य ॥ श्रीरुद्रोदेवता ॥ एकागायत्रीछंदः ॥ तिस्रोनुष्टुभस्तिस्रःपंक्तयः ॥ सप्तानुष्टुभोद्वेजगत्यौ ॥ परमेष्ठीऋषिः ॥ अग्नाविष्णूसजोषसेत्येकादशानामनुवाकानां ॥ अग्निःकांडऋषिः ॥ आद्यागायत्री ॥ आग्नावैष्णवी ॥ शिष्टंयजुः ॥ वाजादयोग्न्यादिविशेषादेवताः ॥ महाविराट्छंदः ॥ नमःशंभवेतिबीजं ॥ मयोभवेतिशक्तिः ॥ नमःशंकरायेतिबीजं ॥ मयस्करायेतिशक्तिः ॥ नमःशिवायेतिबीजं ॥ शिवतरायेतिशक्तिः ॥ ॐ कारोबीजं ॥ मायाशक्तिः ॥ ब्रह्माबीजं ॥ सुषुम्नाशक्तिः ॥ नमइषुकृद्भ्योधन्वकृद्भ्य इतिकीलकं ॥ अमुकदेवताप्रीत्यर्थंजपेऽभिषेकेवाविनियोगः[१] ॥ हरिः ॐ ॥ इडादेवहूर्मनुर्यज्ञनीर्बृहस्पतिरुक्थामदानिशꣳसिषद्विश्वेदेवाः सूक्तवाचःपृथिविमातर्मामाहिꣳसीर्मधुमनिष्येमधुजनिष्येमधुवक्ष्यामिमधुवदिष्यामिमधुमतींदेवेभ्योवाचमुद्यासꣳ शुश्रूषेण्यांमनुष्येभ्यस्तंमादेवाअवंतुशोभायैपितरोनुमदंतु ॥ नमोरुद्रेभ्यः ॐ शांतिःशांतिःशांतिः ॥ ॥ ॐ नमस्तेरुद्रमन्यवउतोतइषवेनमः । नमस्तेअस्तुधन्वनेबाहुभ्यामुततेनमः । यातइषुःशिवतमाशिवंबभूवतेधनुः । शिवाशरव्यायातवतयानोरुद्रमृडय । यातेरुद्रशिवातनूरघोरापापकाशिनी । तयानस्तनुवाशंतमयागिरिशंताभिचाकशीहि । यामिषुंगिरिशंतहस्तेबिभर्ष्यस्तवे । शिवांगिरित्रतांकुरुमाहिꣳसीःपुरुषंजगत् । शिवेनवचसात्वागिरिशाच्छावदामसि ॥ यथानःसर्वमिज्जगदयक्ष्मꣳसुमनाअसत् ।

---

१ पूजायामभिषेकेविनियोज्यानितत्रचनाममात्रनिर्दिष्टानिरुद्रादिसूक्तानीतोऽवगंतव्यानि ॥ पुरुषसूक्तंतुतत्रैवगतं ॥

अध्यवोचदधिवक्ताप्रथमोदैव्योभिषक् । अहींश्चसर्वाञ्जम्भयन्त्सर्वाश्चयातुधान्यः । असौयस्ताम्रोअरुणउतबभ्रुःसुमङ्गलः । येचेमाꣳरुद्राअभितोदिक्षुश्रिताःसहस्रशोवैषाꣳहेडईमहे । असौयोवसर्पतिनीलग्रीवोविलोहितः । उतैनंगोपाअदृशन्नदृशन्नुदहार्यः । उतैनंविश्वाभूतानिसदृष्टोमृडयातिनः । नमोअस्तुनीलग्रीवायसहस्राक्षायमीढुषे ॥ अथोयेअस्यसत्वानोहंतेभ्योकरंनमः । प्रमुंचधन्वनस्त्वमुभयोरार्त्नियोर्ज्याम् । याश्चतेहस्तइषवःपराताभगवोवप । अवतत्यधनुस्त्वꣳसहस्राक्षशतेषुधे । निशीर्यशल्यानांमुखाशिवोनःसुमनाभव । विज्यंधनुःकपर्दिनोविशल्योबाणवाꣳउत । अनेशन्नस्येषवआभुरस्यनिषंगधिः । यातेहेतिर्मीढुष्टमहस्तेबभूवतेधनुः । तयास्मान्विश्वतस्त्वमयक्ष्मयापरिब्भुज । नमस्तेअस्त्वायुधायानाततायधृष्णवे । उभाभ्यामुततेनमोबाहुभ्यांतवधन्वने । परितेधन्वनोहेतिरस्मान्वृणक्तुविश्वतः । अथोयइषुधिस्तवारेअस्मन्निधेहितं ॥ १ ॥ नमोहिरण्यबाहवेसेनान्येदिशांचपतयेनमो नमोवृक्षेभ्योहरिकेशेभ्यःपशूनांपतयेनमो नमःसस्पिंजरायत्विषीमतेपथीनांपतयेनमोनमोबभ्लुशायविव्याधिनेन्नानांपतयेनमो नमोहरिकेशायोपवीतिनेपुष्टानांपतयेनमो नमोभवस्यहेत्यैजगतांपतयेनमो नमोरुद्रायाततायिनेक्षेत्राणांपतयेनमो नमःसूतायाहंत्यायवनानांपतयेनमो नमोरोहितायस्थपतयेवृक्षाणांपतयेनमो नमोमंत्रिणेवाणिजायकक्षाणांपतयेनमो नमोभुवंतयेवारिवस्कृतायौषधीनांपतयेनमोनमउच्चैर्घोषायाक्रंदयतेपत्तीनांपतयेनमो नमःकृत्स्नवीतायधावतेसत्वनांपतयेनमः ॥ २ ॥ नमःसहमानायनिव्याधिनआव्याधिनीनांपतयेनमो नमःककुभायनिषंगिणेस्तेनानांपतयेनमो नमोनिषंगिणऽइषुधिमतेतस्कराणांपतयेनमो नमोवंचतेपरिवंचतेस्तायूनांपतयेनमो नमोनिचेरवेपरिचरायारण्यानांपतयेनमो नमःसृकाविभ्योजिघांꣳसद्भ्योमुष्णतांपतयेनमो नमोऽसिमद्भ्योनक्तंचरद्भ्यःप्रकृंतानांपतयेनमो नमउष्णीषिणेगिरिचरायकुलुंचानांपतयेनमोनम

इषुमद्भ्योधन्वाविभ्यश्चवोनमो नमआतन्वानेभ्यःप्रतिदधानेभ्यश्चवोनमो नमआयच्छद्भ्योविसृजद्भ्यश्चवोनमो नमोस्यद्भ्योवि
ध्यद्भ्यश्चवोनमो नमआसीनेभ्यःशयानेभ्यश्चवोनमो नमःस्वपद्भ्योजाग्रद्भ्यश्चवोनमो नमस्तिष्ठद्भ्योधावद्भ्यश्चवोनमो नमःसभा
भ्यःसभापतिभ्यश्चवोनमो नमोअश्वेभ्योश्वपतिभ्यश्चवोनमः ॥ ३ ॥ नमआव्याधिनीभ्योविविध्यंतीभ्यश्चवोनमो नमउग
णाभ्यस्तृंहतीभ्यश्चवोनमो नमोगृत्सेभ्योगृत्सपतिभ्यश्चवोनमो नमोव्रातेभ्योव्रातपतिभ्यश्चवोनमो नमोगणेभ्योगणपतिभ्य
श्चवोनमो नमोविरूपेभ्योविश्वरूपेभ्यश्चवोनमो नमोमहद्भ्यःक्षुल्लकेभ्यश्चवोनमो नमोरथिभ्योरथेभ्यश्चवोनमो नमोरथेभ्योरथप
तिभ्यश्चवोनमो नमःसेनाभ्यःसेनानिभ्यश्चवोनमोनमःक्षत्तृभ्यःसंग्रहीतृभ्यश्चवोनमो नमस्तक्षभ्योरथकारेभ्यश्चवोनमो नमःकु
लालेभ्यःकर्मारेभ्यश्चवोनमो नमःपुंजिष्टेभ्योनिषादेभ्यश्चवोनमो नमइषुकृद्भ्योधन्वकृद्भ्यश्चवोनमो नमोमृगयुभ्यःश्वनिभ्यश्चवो
नमो नमःश्वभ्यःश्वपतिभ्यश्चवोनमः ॥ ४ ॥ नमोभवायचरुद्रायचनमःशर्वायचपशुपतयेचनमोनीलग्रीवायचशितिकंठायच
नमःकपर्दिनेचव्युप्तकेशायचनमःसहस्राक्षायचशतधन्वनेचनमोगिरिशायचशिपिविष्टायच नमोमीढुष्टमायचेषुमतेचनमोह्र
स्वायचवामनायचनमोबृहतेचवर्षीयसेचनमोवृद्धायचसंवृध्वनेचनमोअग्रियायचप्रथमायचनमआशवेचाजिरायचनमःशीघ्रि
यायचशीभ्यायचनमऊर्म्यायचावस्वन्यायचनमःस्रोतस्यायचद्वीप्यायच ॥ ५ ॥ नमोज्येष्ठायचकनिष्ठायचनमःपूर्वजायचापर
जायचनमोमध्यमायचापगल्भायचनमोजघन्यायचबुध्नियायच नमःसोभ्यायचप्रतिसर्यायच नमोयाम्यायचक्षेम्यायच नमउ
र्वर्यायचखल्यायचनमःश्लोक्यायचावसान्यायचनमोवन्यायचकक्ष्यायचनमः श्रवायचप्रतिश्रवायचनमआशुषेणायचाशुरथा
यचनमःशूरायचावभिंदतेचनमोवर्मिणेचवरूथिनेचनमोबिल्मिनेचकवचिनेचनमःश्रुतायचश्रुतसेनायच ॥ ६ ॥ नमोदुंदुभ्या

यचाहनन्यायचनमोधृष्णवेचप्रमृशायचनमोदूतायचप्रहितायच नमोनिषंगिणेचेषुधिमतेचनमस्तीक्ष्णेषवेचायुधिनेच नमः स्वायुधायचसुधन्वनेचनमः स्रुत्यायचपथ्यायचनमः काट्यायचनीप्यायचनमः सूद्यायचसरस्यायच नमोनाद्यायचवैशंतायचनमः कूप्यायचावट्यायचनमोवर्ष्यायचावर्ष्यायच नमोमेघ्यायचविद्युत्यायच नमईध्रियायचातप्यायच नमोवात्यायचरेष्मियायचनमोवास्तव्यायचवास्तुपायच ॥ ७ ॥ नमःसोमायचरुद्रायचनमस्ताम्रायचारुणायचनमःशंगायचपशुपतयेचनमउग्रायचभीमायचनमोअग्रेवधायचदूरेवधायच नमोहंत्रेचहनीयसेचनमोवृक्षेभ्योहरिकेशेभ्यो नमस्ताराय नमःशंभवेचमयोभवेचनमः शंकरायचमयस्करायच नमःशिवायचशिवतरायच नमस्तीर्थ्यायचकूल्यायचनमःपार्यायचावार्यायच नमःप्रतरणायचोत्तरणायचनमआतार्यायचालाद्यायचनमःशष्प्यायचफेन्यायचनमः सिकत्यायचप्रवाह्यायच ॥ ८ ॥ नमइरिण्यायचप्रपथ्यायचनमःकिंशिलायचक्षयणायचनमः कपर्दिनेचपुलस्तयेचनमोगोष्ठ्यायचगृह्यायचनमस्तल्प्यायचगेह्यायचनमः काट्यायचगह्वरेष्ठायचनमोह्रदय्यायचनिवेष्प्यायचनमः पांसव्यायचरजस्यायच नमःशुष्क्यायचहरित्यायच नमोलोप्यायचोलप्यायचनमऊर्व्यायचसूर्म्यायचनमःपर्ण्यायचपर्णशद्यायच नमोपगुरमाणायचाभिघ्नतेचनमआख्खिदतेचप्रख्खिदतेच नमोवःकिरिकेभ्योदेवानांहृदयेभ्योनमोविक्षीणकेभ्योनमोविचिन्वत्केभ्योनमआनिर्हतेभ्योनमआमीवत्केभ्यः ॥ ९ ॥ द्रापेअंधसस्पते दरिद्रंनीललोहित ॥ एषांपुरुषाणामेषांपशूनांमाभेर्मारोमोएषांकिंचनाममत् ॥ यातेरुद्रशिवातनूःशिवाविश्वाहभेषजी ॥ शिवारुद्रस्यभेषजीतयानोमृडजीवसे ॥ इमांरुद्रायतवसेकपर्दिनेक्षयद्वीरायप्रभरामहेमतिं ॥ यथानःशमसद्द्विपदेचतुष्पदेविश्वंपुष्टंग्रामेअस्मिन्ननातुरं ॥ मृडानोरुद्रोतनोमयस्कृधिक्षयद्वीरायनमसाविधेमते ॥ यच्छंचयोश्चमनुरायजेपितातदश्या

मतवंरुद्रप्रणीतौ ॥ मानोमहांतमुतमानोअर्भकंमानउक्षंतमुतमानंउक्षितं ॥ मानोवधीःपितरंमोतमातरंप्रियामानस्तनुवोरु
द्ररीरिषः ॥ मानस्तोकेतनयेमानआयुषिमानोगोषुमानोअश्वेषुरीरिषः ॥ वीरान्मानोरुद्रभामितोवधीर्हविष्मंतोनमसाविधे
मते ॥ आरात्तेगोघ्नउतपूरुषघ्नेक्षयद्वीरायसुम्नमस्मेतेअस्तु ॥ रक्षाचनोअधिचदेवब्रूह्यधाचनःशर्मयच्छद्विबर्हाः ॥ स्तुहिश्रुतं
गर्तसदंयुवानंमृगंनभीममुपहत्नुमुग्रं ॥ मृडाजरित्रेरुद्रस्तवानोअन्यंतेअस्मन्निवपंतुसेनाः ॥ परिणोरुद्रस्यहेतिर्वृणक्तुपरित्वेष
स्यदुर्मतिरघायोः ॥ अवस्थिरामघवद्भ्यस्तनुष्वमीढ्वस्तोकायतनयायमृडय ॥ मीढुष्टमशिवतमशिवोनःसुमनाभव ॥ परमेवृ
क्षआयुधंनिधायकृत्तिंवसानआचरपिनाकंबिभ्रदागहि ॥ विकिरिदविलोहितनमस्तेअस्तुभगवः ॥ यास्तेसहस्रंहेतयोन्य
मस्मन्निवपंतुताः ॥ सहस्राणिसहस्रधाबाहुवोस्तवहेतयः ॥ तासामीशानोभगवःपराचीनामुखाकृधि ॥ १० ॥ सहस्राणिस
हस्रशोयेरुद्राअधिभूम्यां ॥ तेषांसहस्रयोजनेवधन्वानितन्मसि ॥ अस्मिन्महत्यर्णवेंतरिक्षेभवाअधि ॥ नीलग्रीवाःशितिकं
ठाःशर्वाअधःक्षमाचराः ॥ नीलग्रीवाःशितिकंठादिवंरुद्राउपश्रिताः ॥ येवृक्षेषुसस्पिंजरानीलग्रीवाविलोहिताः ॥ येभूता
नामधिपतयोविशिखासःकपर्दिनः ॥ येअन्नेषुविविध्यंतिपात्रेषुपिबतोजनान् ॥ येपथांपथिरक्षयऐलबृदायव्युधः ॥ येतीर्था
निप्रचरंतिसृकावंतोनिषंगिणः ॥ यएतावंतश्चभूयांसश्चदिशोरुद्रावितस्थिरे ॥ तेषांसहस्रयोजनेवधन्वानितन्मसि ॥
नमोरुद्रेभ्योयेपृथिव्यांयेंतरिक्षेयेदिवि येषामन्नंवातोवर्षमिषवस्तेभ्योदशप्राचीर्दशदक्षिणादशप्रतीचीर्दशोदीचीर्दशोर्ध्वास्तेभ्यो
नमस्तेनोमृडयंतुतेयंद्विष्मोयश्चनोद्वेष्टितंवोजंभेदधामि ॥ ११ ॥ ॥ ॐ अग्नाविष्णूसजोषसेमावर्धंतुवांगिरः ॥ द्युम्नैर्वा
जेभिरागतं ॥ वाजश्चमेप्रसवश्चमेप्रयतिश्चमेप्रसितिश्चमेधीतिश्चमेक्रतुश्चमेस्वरश्चमेश्लोकश्चमे श्रावश्चमेश्रुतिश्चमेज्योतिश्चमेसु

वंश्चमेप्राणश्चमेपानश्चमेव्यानश्चमेसुश्चमे चित्तंचमआधीतंचमे वाक्चमेमनश्चमेचक्षुश्चमे श्रोत्रंचमेदक्षश्चमेबलंचमओजश्चमेस
हश्चमआयुश्चमेजराचमआत्माचमेतनूश्चमेशर्मचमेवर्मचमेऽङ्गानिचमे स्थानिचमेपरूꣳषिचमेशरीराणिचमे ॥ १ ॥ ज्यैष्ठ्यं
चमआधिपत्यंचमेमन्युश्चमेभामश्चमेमश्चमेम्भश्चमेजेमाचमे महिमाचमेवरिमाचमेप्रथिमाचमे वर्ष्माचमेद्राघुयाचमे वृद्धंचमेवृ
द्धिश्चमे सत्यंचमेश्रद्धाचमेजगच्चमेधनंचमेवशश्चमेत्विषिश्चमेक्रीडाचमेमोदश्चमेजातंचमेजनिष्यमाणंचमेसूक्तंचमे सुकृतंचमेवि
त्तंचमेवेद्यंचमेभूतंचमेभविष्यच्चमेसुगंचमेसुपथंचमऋद्धंचमऋद्धिश्चमेक्लृप्तंचमेक्लृप्तिश्चमेमतिश्चमेसुमतिश्चमे ॥ २ ॥ शंचमेमय
श्चमेप्रियंचमेनुकामश्चमे कामश्चमेसौमनसश्चमेभद्रंचमेश्रेयश्चमेवस्यश्चमेयशश्चमे भगश्चमेद्रविणंचमेयंताचमे धर्ताचमेक्षेमश्चमे
धृतिश्चमेविश्वंचमेमहश्चमेसंविच्चमेज्ञात्रंचमेसूश्चमेप्रसूश्चमेसीरंचमेलयश्चमऋतंचमेमृतंचमेयक्ष्मंचमेनामयच्चमे जीवातुश्चमेदी
र्घायुत्वंचमेनमित्रंचमेभयंचमेसुगंचमेशयनंचमेसूषाचमेसुदिनंचमे ॥ ३ ॥ ऊर्क्चमेसूनृताचमेपयश्चमे रसश्चमेघृतंचमेमधुच
मेसग्धिश्चमेसपीतिश्चमेकृषिश्चमेवृष्टिश्चमेजैत्रंचमऔद्भिद्यंचमे रयिश्चमेरायश्चमेपुष्टंचमेपुष्टिश्चमे विभुचमेप्रभुचमे बहुचमेभूय
श्चमेपूर्णंचमेपूर्णतरंचमेक्षितिश्चमेकूयवाश्चमेन्नंचमेक्षुच्चमेव्रीहयश्चमेयवाश्चमेमाषाश्चमेतिलाश्चमे मुद्गाश्चमेखल्वाश्चमेगोधूमाश्च
मेमसुराश्चमेप्रियंगवश्चमेणवश्चमेश्यामाकाश्चमेनीवाराश्चमे ॥ ४ ॥ अश्माचमेमृत्तिकाचमेगिरयश्चमे पर्वताश्चमेसिकता
श्चमेवनस्पतयश्चमे हिरण्यंचमेयश्चमेसीसंचमेत्रपुश्चमेश्यामंचमेलोहंचमेग्निश्चमआपश्चमेवीरुधश्चमओषधयश्चमे कृष्टपच्यंचमे
कृष्टपच्यंचमेग्राम्याश्चमेपशवआरण्याश्चयज्ञेनकल्पंतां वित्तंचमेवित्तिश्चमेभूतंचमेभूतिश्चमेवसुचमेवसतिश्चमेकर्मचमेशक्तिश्च
मेर्थश्चमएमश्चमइतिश्चमेगतिश्चमे ॥ ५ ॥ अग्निश्चमइंद्रश्चमेसोमश्चमइंद्रश्चमे सविताचमइंद्रश्चमे सरस्वतीचमइंद्रश्चमेपू

षाचमइंद्रश्चमे बृहस्पतिश्चमइंद्रश्चमेमित्रश्चमइंद्रश्चमेवरुणश्चमइंद्रश्चमे त्वष्टाचमइंद्रश्चमे धाताचमइंद्रश्चमेविष्णुश्चमइंद्रश्चमेऽ
श्विनौचमइंद्रश्चमे मरुतश्चमइंद्रश्चमेविश्वेचमेदेवाइंद्रश्चमे पृथिवीचमइंद्रश्चमेंतरिक्षंचमइंद्रश्चमे द्यौश्चमइंद्रश्चमेदिशश्चमइंद्रश्च
मेमूर्धाचमइंद्रश्चमेप्रजापतिश्चमइंद्रश्चमे ॥ ६ ॥ अꣳशुश्चमेरश्मिश्चमेदाभ्यश्चमेधिपतिश्चमउपाꣳशुश्चमेंतर्यामश्चमऐंद्रवा
यवश्चमेमैत्रावरुणश्चमआश्विनश्चमेप्रतिप्रस्थानश्चमे शुक्रश्चमेमंथीचमआग्रयणश्चमेवैश्वदेवश्चमे ध्रुवश्चमेवैश्वानरश्चमऋतुग्रहा
श्चमेतिग्राह्याश्चमऐंद्राग्नश्चमेवैश्वदेवश्चमे मरुत्वतीयाश्चमेमाहेंद्रश्चमआदित्यश्चमे सावित्रश्चमेसारस्वतश्चमे पौष्णश्चमेपात्नीवत
श्चमेहारियोजनश्चमे ॥ ७ ॥ इध्मश्चमेबर्हिश्चमेवेदिश्चमेधिष्णियाश्चमेस्रुचश्चमेचमसाश्चमेग्रावाणश्चमेस्वरवश्चमउपरवाश्चमेधि
षवणेचमेद्रोणकलशश्चमेवायव्यानिचमे पूतभृच्चमआधवनीयश्चम आग्नीध्रंचमेहविर्धानंचमे गृहाश्चमेसदश्चमेपुरोडाशाश्चमेप
चताश्चमेवभृथश्चमेस्वगाकारश्चमे ॥ ८ ॥ अग्निश्चमेघर्मश्चमेर्कश्चमेसूर्यश्चमेप्राणश्चमेश्वमेधश्चमेपृथिवीचमेदितिश्चमे दितिश्चमे
द्यौश्चमेशक्वरीरंगुलयोदिशश्चमेयज्ञेनकल्पंतामृक्चमेसामचमेस्तोमश्चमे यजुश्चमेदीक्षाचमेतपश्चमऋतुश्चमेव्रतंचमेहोरात्रयोर्वृष्ट्या
बृहद्रथंतरेचमेयज्ञेनकल्पेतां ॥ ९ ॥ गर्भाश्चमेवत्साश्चमेत्र्यविश्चमेत्र्यवीचमेदित्यवाट्चमेदित्यौहीचमेपंचाविश्चमेपंचावीचमे
त्रिवत्सश्चमेत्रिवत्साचमेतुर्यवाट्चमेतुर्यौहीचमे पष्ठवाच्चमेपष्ठौहीचमऽउक्षाचमेवशाचमऽऋषभश्चमेवेहच्चमेऽनड्वान्चमेधेनुश्चम
आयुर्यज्ञेनकल्पतांप्राणोयज्ञेनकल्पतामपानोयज्ञेनकल्पतां व्यानोयज्ञेनकल्पतांचक्षुर्यज्ञेनकल्पताꣳश्रोत्रंयज्ञेनकल्पतां मनोय
ज्ञेनकल्पतांवाग्यज्ञेनकल्पतामात्मायज्ञेनकल्पतांयज्ञोयज्ञेनकल्पतां ॥ १० ॥ एकाचमेतिस्रश्चमेपंचचमेसप्तचमेनवचमएका
दशचमेत्रयोदशचमे पंचदशचमेसप्तदशचमे नवदशचमएकविꣳशतिश्चमेत्रयोविꣳशतिश्चमेपंचविꣳशतिश्चमेसप्तविꣳशतिश्चमे

नवविंशतिश्चमएकत्रिंशच्चमेत्रयस्त्रिंशच्चमेचतस्रश्चमेष्टौचमेद्वादशचमेषोडशचमे विंशतिश्चमेचतुर्विंशतिश्चमेष्टाविंशतिश्चमेद्वात्रिंशच्चमेषट्त्रिंशच्चमे चत्वारिंशच्चमेचतुश्चत्वारिंशच्चमेष्टाचत्वारिंशच्चमेवाजश्चप्रसवश्चापिजश्चक्रतुश्चसुवश्च मूर्धाचव्यश्नियश्चांत्यायनश्चांत्यश्चभौवनश्चभुवनश्चाधिपतिश्च ॥ ११ ॥ इडादेवहूर्मनु० ॥ इतिरुद्राध्यायःसमाप्तः ॥ ॥छ॥

## ॥ ४६ ॥ अथविष्णुसूक्तानि ॥

श्रीः ॥ ॐ विष्णोर्नुकंवीर्याणिप्रवोचंयःपार्थिवानिविममेरजांसि ॥ योअस्कभायदुत्तरंसधस्थंविचक्रमाणस्त्रेधोरुगायः ॥ प्रतद्विष्णुस्तवतेवीर्येणमृगोनभीमःकुचरोगिरिष्ठाः ॥ यस्योरुषुत्रिषुविक्रमणेष्वधिक्षियंतिभुवनानिविश्वा ॥ प्रविष्णवेशूषमेतुमन्मगिरिक्षितउरुगायायवृष्णे ॥ यइदंदीर्घप्रयतंसधस्थमेकोविममेत्रिभिरित्पदेभिः ॥ यस्यत्रीपूर्णामधुनापदान्यक्षीयमाणास्वधयामदंति ॥ यउत्रिधातुपृथिवीमुतद्यामेकोदाधारभुवनानिविश्वा ॥ तदस्यप्रियमभिपाथोअश्यांनरोयत्रदेवयवोमदंति ॥ उरुक्रमस्यसहिबंधुरित्थाविष्णोःपदेपरमेमध्वउत्सः ॥ तावांवास्तून्युश्मसिगमध्यैयत्रगावोभूरिशृंगाअयासः ॥ अत्राहतदुरुगायस्यवृष्णःपरमंपदमवभातिभूरि ॥ १ ॥ प्रवःपांतमंधसोधियायतेमहेशूरायविष्णवेचार्चत ॥ यासानुनिपर्वतानामदाभ्यामहस्तस्थतुरर्वतेवसाधुना ॥ त्वेषमित्थासमरणंशिमीवतोरिंद्राविष्णूसुतपावामुरुष्यति ॥ यामर्त्यायप्रतिधीयमानमित्कृशानोरस्तुरसनामुरुष्यथः ॥ ताईवर्धंतिमह्यस्यपौंस्यंनिमातरानयतिरेतसेभुजे ॥ दधातिपुत्रोवरंपरंपितुर्नामतृतीयमधिरोचनेदिवः ॥ तत्तदिदस्यपौंस्यंगृणीमसीनस्यत्रातुरवृकस्यमीह्लुषः ॥ यःपार्थिवानित्रिभिरिद्विगामभिरुरुक्रमिष्टोरुगायायजीवसे ॥ द्वेइदं

स्यक्रमणेस्त्वदंशोभिख्यायमर्त्योभुरण्यति ॥ तृतीयमस्यनकिरादधर्षतिवयश्चनपतयंतःपतत्रिणः ॥ चतुर्भिःसाकंनवतिंचनामभिश्चक्रंनवृत्तंव्यतीँऽरवीविपत् ॥ बृहच्छरीरोविमिमानऋक्वभिर्युवाकुमारःप्रत्येत्याहवं ॥ २ ॥ भवामित्रोनशेव्योघृतासुतिर्विभूतद्युम्नएवयाउसप्रथाः ॥ अधातेविष्णोविदुषाचिदर्ध्यःस्तोमोयज्ञश्चराध्योहविष्मता ॥ यःपूर्व्यायवेधसेनवीयसेसुमज्जानयेविष्णवेददाशति ॥ योजातमस्यमहतोमहिब्रवत्सेदुश्रवोभिर्युज्यंचिदभ्यसत् ॥ तमुस्तोतारःपूर्व्यंयथाविदऋतस्यगर्भंजनुषापिपर्तन ॥ आस्यजानंतोनामचिद्विवक्तनमहस्तेविष्णोसुमतिंभजामहे ॥ तमस्यराजावरुणस्तमश्विनाक्रतुंसचंतमारुतस्यवेधसः ॥ दाधारदक्षमुत्तममहर्विदंव्रजंचविष्णुःसखिवाँऽअपोर्णुते ॥ आयोविवायसचथायदैव्यइंद्रायविष्णुःसुकृतेसुकृत्तरः ॥ वेधाअजिन्वत्त्रिषधस्थआर्यमृतस्यभागेयजमानमाभजत् ॥ ३ ॥ तवश्रियेमरुतोमर्जयंतरुद्रयत्तेजनिमचारुचित्रं ॥ पदंयद्विष्णोरुपमंनिधायितेनपासिगुह्यंनामगोनां ॥ ॥ ॐ संवांकर्मणासमिषाहिनोमींद्राविष्णूऽअपसस्पारेऽअस्य ॥ जुषेथांयज्ञंद्रविणंचधत्तमरिष्टैर्नःपथिभिःपारयंता ॥ याविश्वासांजनितारामतीनामिंद्राविष्णूकलशासोमधाना ॥ प्रवांगिरःशस्यमानाऽअवंतुप्रस्तोमासोगीयमानासोऽअर्कैः ॥ इंद्राविष्णूमदपतीमदानामासोमंयातंद्रविणोदधाना ॥ संवामंजन्त्वक्तुभिर्मतीनांसंस्तोमासःशस्यमानासऽउक्थैः ॥ आवामश्वासोऽअभिमातिषाहऽइंद्राविष्णूसधमादोवहंतु ॥ जुषेथांविश्वाहवनामतीनामुपब्रह्माणिशृणुतंगिरोमे ॥ इंद्राविष्णूतत्पनयाय्यंवांसोमस्यमदऽउरुचक्रमाथे ॥ अकृणुतमंतरिक्षंवरीयोप्रथतंजीवसेनोरजांसि ॥ इंद्राविष्णूहविषावावृधानाग्राद्वानानमसारातहव्या ॥ घृतासुतीद्रविणंधत्तमस्मेसमुद्रस्थःकलशःसोमधानाः ॥ इंद्राविष्णूपिबतंमध्वोऽअस्यसोमस्यदस्राजठरंपृणेथां ॥ आवामंधांसिमदिराण्यग्मन्नुपब्रह्माणिशृणुतंहवंमे ॥ उभाजिग्यथुर्नपरा

जयेथेनपराजिग्येकतरश्चनैनोः ॥ इंद्रश्चविष्णोयदपस्पृधेथांत्रेधासहस्रंवितदैरयेथां ॥ १ ॥ ॥ ॐ परोमात्रयातन्वावृधाननतेमहित्वमन्वश्नुवंति ॥ उभेतेविद्मरजसीपृथिव्याविष्णोदेवत्वंपरमस्यवित्से ॥ नतेविष्णोजायमानोनजातोदेवमहिम्नःपरमंतमाप ॥ उदस्तभ्नानाकमृष्वंबृहंतंदाधर्थप्राचींककुभंपृथिव्याः ॥ इरावतीधेनुमतीहिभूतंसूयवसिनीमनुषेदशस्या ॥ व्यस्तभ्नारोदसीविष्णवेतेदाधर्थपृथिवीमभितोमयूखैः ॥ उरुंयज्ञायचक्रथुरुलोकंजनयंतासूर्यमुषासमग्निं ॥ दासस्यचिद्वृषशिप्रस्यमायाजघ्नथुर्नरापृतनाज्येषु ॥ इंद्राविष्णूदृंहिताःशंबरस्यनवपुरोनवतिंचश्नथिष्टं ॥ शतंवर्चिनःसहस्रंचसाकंहथोऽअप्रत्यसुरस्यवीरान् ॥ इयंमनीषाबृहतीबृहंतोरुक्रमातवसावर्धयंती ॥ ररेवांस्तोमंविदथेषुविष्णोपिन्वतमिषोवृजनेष्विंद्र ॥ वषट्तेविष्णवासऽआकृणोमितन्मेजुषस्वशिपिविष्टहव्यं ॥ वर्धंतुत्वासुष्टुतयोगिरोमेयूयंपातस्वस्तिभिःसदानः ॥ १ ॥ नूमर्तोदयतेसनिष्यन्योविष्णवउरुगायायदाशत् ॥ प्रयःसत्राचामनसायजातऽएतावंतंनर्यमाविवासात् ॥ त्वंविष्णोसुमतिंविश्वजन्यामप्रयुतामेवयावोमतिंदाः ॥ पर्चोयथानःसुवितस्यभूरेरश्वावतःपुरुश्चंद्रस्यरायः ॥ त्रिर्देवःपृथिवीमेषऽएतांविचक्रमेशतर्चसंमहित्वा ॥ प्रविष्णुरस्तुतवसस्तवीयान्त्वेषंह्यस्यस्थविरस्यनाम ॥ विचक्रमेपृथिवीमेषऽएतांक्षेत्रायविष्णुर्मनुषेदशस्यन् ॥ ध्रुवासोऽअस्यकीरयोजनासऽउरुक्षितिंसुजनिमाचकार ॥ प्रतत्तेऽअद्यशिपिविष्टनामार्यःशंसामिवयुनानिविद्वान् ॥ तंत्वागृणामितवसमतव्यान्क्षयंतमस्यरजसःपराके ॥ किमित्तेविष्णोपरिचक्ष्यंभूत्प्रयद्ववक्षेशिपिविष्टोऽअस्मि ॥ मावर्पोऽअस्मदपगूहएतद्यदन्यरूपःसमिथेबभूथ ॥ वषट्तेविष्णवासऽआकृं० ॥ २ ॥ इतिविष्णुसूक्तानिसमाप्तानि ॥ ॥ ७ ॥

## ॥ ४७ ॥ अथरुद्रसूक्तम् ॥

श्रीः ॥ ॐ इमारुद्रायतवसेकपर्दिनेक्षयद्वीरायप्रभरामहेमतीः ॥ यथाशमसद्द्विपदेचतुष्पदेविश्वंपुष्टंग्रामेअस्मिन्ननातुरं ॥ मळानोरुद्रोतनोमयस्कृधिक्षयद्वीरायनमसाविधेमते ॥ यच्छंचयोश्चमनुरायेजेपितातदश्यामतवरुद्रप्रणीतिषु ॥ अश्यामतेसुमतिंदेवयज्ययाक्षयद्वीरस्यतवरुद्रमीढ्वः ॥ सुम्नायन्निद्विशोअस्माकमाचरारिष्टवीराजुहवामतेहविः ॥ त्वेषंवयंरुद्रंयज्ञसाधंवंकुंकविमवसेनिह्वयामहे ॥ आरेअस्मद्दैव्यंहेळोअस्यतुसुमतिमिद्वयमस्यावृणीमहे ॥ दिवोवराहमरुषंकपर्दिनंत्वेषंरूपंनमसानिह्वयामहे ॥ हस्तेबिभ्रद्भेषजावार्याणिशर्मवर्मच्छर्दिरस्मभ्यंयंसत् ॥ १ ॥ इदंपित्रेमरुतामुच्यतेवचःस्वादोःस्वादीयोरुद्रायवर्धनं ॥ रास्वाचनोअमृतमर्तभोजनंत्मनेतोकायतनयायमृळ॥मानोमहांतमुतमानोअर्भकंमानउक्षंतमुतमानउक्षितं ॥ मानोवधीःपितरंमोतमातरंमानःप्रियास्तन्वोरुद्ररीरिषः ॥ मानस्तोकेतनयेमानआयौमानोगोषुमानोअश्वेषुरीरिषः ॥ वीरान्मानोरुद्रभामितोवधीर्हविष्मंतःसदमित्त्वाहवामहे ॥ उपतेस्तोमान्पशुपाइवाकरंरास्वापितर्मरुतांसुम्नमस्मे ॥ भद्राहितेसुमतिर्मृळयत्तमाथावयमवइत्तेवृणीमहे॥ आरेतेगोघ्नमुतपूरुषघ्नंक्षयद्वीरसुम्नमस्मेतेअस्तु॥मृळाचनोअधिचब्रूहिदेवाधाचनःशर्मयच्छद्विबर्हाः ॥ अवोचामनमोअस्माअवस्यवःशृणोतुनोहवंरुद्रोमरुत्वान् ॥ तन्नोमित्रोवरुणोमामहंतामदितिःसिंधुःपृथिवीउतद्यौः ॥ २ ॥ इति ॥

## ॥ ४८ ॥ अथमन्युसूक्तम् ॥

श्रीः ॥ यस्तेमन्योइतिसप्तर्चस्यसूक्तस्यतापसोमन्युर्ऋषिःमन्युर्देवताजगतीच्छंदःद्वितीयासप्तमीचत्रिष्टुप् ॥ त्वयामन्योइति

सप्तर्चस्यसूक्तस्यतापसोमन्युर्ऋषिः मन्युर्देवताआद्यास्तिस्रस्त्रिष्टुभःततश्चतस्रोजगत्यः ॥ ॐ यस्तेमन्योविधद्वज्रसायकसहओ
जःपुष्यतिविश्वमानुषक् ॥ साह्यामदासमार्यंत्वयायुजासहस्कृतेनसहसासहस्वता ॥ मन्युरिन्द्रोमन्युरेवासदेवोमन्युर्होता
वरुणोजातवेदाः ॥ मन्युंविशईळतेमानुषीर्याःपाहिनोमन्योतपसासजोषाः ॥ अभीहिमन्योतवसस्तवीयान्तपसायुजाविजहि
शत्रून् ॥ अमित्रहावृत्रहादस्युहाचविश्वावसून्याभरात्वंनः ॥ त्वंहिमन्योअभिभूत्योजाःस्वयंभूर्भामोअभिमातिषाहः ॥ वि
श्वचर्षणिःसहुरिःसहावानस्मास्वोजःपृतनासुधेहि ॥ अभागःसन्नपपरेतोअस्मितवक्रत्वातविषस्यप्रचेतः ॥ तंत्वामन्योअक्र
तुर्जिहीळाहंस्वातनूर्बलदेयायमेहि ॥ अयंतेअस्म्युपमेह्यर्वाङ्प्रतीचीनःसहुरेविश्वधायः ॥ मन्योवज्रिन्नभिमामावंवृत्स्वहनाव
दस्यूँरुतबोध्यापेः ॥ अभिप्रेहिदक्षिणतोभवामेधावृत्राणिजंघनावभूरि ॥ जुहोमितेधरुणंमध्वोअग्रमुभाउपांशुप्रथमापिबाव
॥ १ ॥ त्वयामन्योसरथमारुजंतोहर्षमाणासोधृषितामरुत्वः ॥ तिग्मेषवआयुधासंशिशानाअभिप्रयंतुनरोअग्निरूपाः ॥
अग्निरिवमन्योत्विषितःसहस्वसेनानीर्नःसहुरेहूतएधि ॥ हत्वायशत्रून्विभजस्ववेदओजोमिमानोविमृधोनुदस्व ॥ सहस्वमन्यो
अभिमातिमस्मेरुजन्मृणन्प्रमृणन्प्रेहिशत्रून् ॥ उग्रंतेपाजोनन्वारुरुध्रेवशीवशंनयसएकजत्वम् ॥ एकोबहूनामसिमन्यवीळितो
विशंविशंयुधयेसंशिशाधि ॥ अकृत्तरुक्त्वयायुजावयंद्युमन्तंघोषंविजयायकृण्महे ॥ विजेषकृदिंद्रइवानवब्रवो३स्माकंमन्योअ
धिपाभवेह ॥ प्रियंतेनामसहुरेगृणीमसिविद्मातमुत्संयतआबभूथ ॥ आभूत्यासहजावज्रसायकसहोबिभर्ष्यभिभूतउत्तरम् ॥
क्रत्वानोमन्योसहमेद्येधिमहाधनस्यपुरुहूतसंसृजि ॥ संसृष्टंधनमुभयंसमाकृतमस्मभ्यंदत्तांवरुणश्चमन्युः ॥ भियंदधानाहृदये
षुशत्रवःपराजितासोअपनिलयंताम् ॥ २ ॥ ॥ इतिमन्युसूक्तंसमाप्तम् ॥ ॥ ॥ ७ ॥

## ॥ ४९ ॥ अथगणपतिसूक्तम् ॥

श्रीः ॥ ॐ आतूनंइंद्रक्षुमंतंचित्रंग्राभंसंगृभाय ॥ महाहस्तीदक्षिणेन ॥ विद्माहित्वातुविकूर्मितुविदेष्णंतुवीमघं ॥ तुविमात्रमवोभिः ॥ नहित्वाशूरदेवानमर्तासोदित्संतं ॥ भीमंनगांवारयंते ॥ एतोन्विंद्रंस्तवामेशानंवस्वःस्वराजं ॥ नराधसामधिषन्नः ॥ प्रस्तोषदुपगासिषच्छ्रवत्सामगीयमानं ॥ अभिराधसाजुगुरत् ॥ १ ॥ आनोभरदक्षिणेनाभिसव्येनप्रमृश ॥ इंद्रमानोवसोर्निर्भाक् ॥ उपक्रमस्वाभरधृषताधृष्णोजनानां ॥ अदाशूष्टरस्यवेदः ॥ इंद्रयउनुतेअस्तिवाजोविप्रेभिःसनित्वः ॥ अस्माभिःसुतंसनुहि ॥ सद्योजुवस्तेवाजाअस्मभ्यंविश्वश्चंद्राः ॥ वशैश्चमक्षूजरंते ॥ २ ॥ ॥ इतिगणपतिसूक्तंसमाप्तम् ॥ ॥४९॥

## ॥ ५० ॥ अथदेवीसूक्तम् ॥

श्रीः ॥ ॐ बृहस्पतेप्रथमंवाचोअग्रंयत्प्रैरतनामधेयंदधानाः ॥ यदेषांश्रेष्ठंयदरिप्रमासीत्प्रेणातदेषांनिहितंगुहाविः ॥ सक्तुमिवतितउनापुनंतोयत्रधीरामनसावाचमक्रत ॥ अत्रासखायःसख्यानिजानतेभद्रैषांलक्ष्मीर्निहिताधिवाचि ॥ यज्ञेनवाचःपदवीयमायन्तामन्वविंदन्नृषिषुप्रविष्टां ॥ तामाभृत्याव्यदधुःपुरुत्रातांसप्तरेभाअभिसंनवंते ॥ उतत्वःपश्यन्नददर्शवाचमुतत्वःशृण्वन्नशृणोत्येनां ॥ उतोत्वस्मैतन्वं१विसस्रेजायेवपत्यउशतीसुवासाः ॥ उतत्वंसख्येस्थिरपीतमाहुर्नैनंहिन्वंत्यपिवाजिनेषु ॥ अधेन्वाचरतिमाययैषवाचंशुश्रुवाँऽअफलामपुष्पां ॥ १ ॥ यस्तित्याजसचिविदंसखायंनतस्यवाच्यपिभागोऽअस्ति ॥ यदींशृ

१ अस्मदुपक्रमप्रविष्णुपंचायतनक्रमेणात्रदेवीसूक्ततःपूर्वसूर्याभिषेकसूक्तमपेक्षितं परंतुतत्सौरसूक्तेषुगतमितिनात्रनिवेशितम् ॥

णोत्यलकंशृणोतिनहिप्रवेदसुकृतस्यपंथां ॥ अक्षण्वंतःकर्णवंतःसखायोमनोजवेष्वसमाबभूवुः ॥ आदघ्नासउपकक्षासउत्वे ह्रदाइवस्नात्वाउत्वेददृश्रे ॥ हृदातष्टेषुमनसोजवेषुयद्ब्राह्मणाःसंयजंतेसखायः ॥ अत्राहत्वंविजहुर्वेद्याभिरोहब्रह्माणोविचरंत्युत्वे ॥ इमेयेनार्वाङ्नपरश्चरंतिनब्राह्मणासोनसुतेकरासः ॥ तएतेवाचमभिपद्यपापयासिरीस्तंत्रंतन्वतेऽप्रजज्ञयः ॥ सर्वेनंदंतियशसागतेनसभासाहेनसख्यासखायः ॥ किल्बिषस्पृत्पितुषणिर्ह्येषामरंहितोभवतिवाजिनाय ॥ ऋचांत्वःपोषमास्तेपुपुष्वान्गायत्रंत्वोगायतिशक्वरीषु ॥ ब्रह्मात्वोवदतिजातविद्यांयज्ञस्यमात्रांविमिमीतउत्वः ॥ २ ॥ ॥ इतिदेवीसूक्तम् ॥ ॥ ७ ॥

## ॥ ५१ ॥ अथश्रीसूक्तप्रारंभः ॥

श्रीः ॥ हिरण्यवर्णामितिपंचदशर्चस्यसूक्तस्य ॥ आनंदकर्दमचिक्लीतेंदिरासुताऋषयः ॥ श्रीरग्निश्चेत्युभेदेवते ॥ आद्यास्तिस्रोनुष्टुभः ॥ चतुर्थीबृहती ॥ पंचमीषष्ठ्यौत्रिष्टुभौ ॥ ततोष्टावनुष्टुभः ॥ अंत्याप्रस्तारपंक्तिः ॥ जपेविनियोगः ॥ हरिः ॐ हिरण्यवर्णांहरिणींसुवर्णरजतस्रजां ॥ चंद्रांहिरण्मयींलक्ष्मींजातवेदोमआवह ॥ तांमआवहजातवेदोलक्ष्मीमनपगामिनीं ॥ यस्यांहिरण्यंविंदेयंगामश्वंपुरुषानहं ॥ अश्वपूर्वांरथमध्यांहस्तिनादप्रबोधिनीं ॥ श्रियंदेवीमुपह्वयेश्रीर्मादेवीजुषतां ॥ कांसोस्मितांहिरण्यप्राकारामार्द्रांज्वलंतींतृप्तांतर्पयंतीं ॥ पद्मेस्थितांपद्मवर्णांतामिहोपह्वयेश्रियं ॥ चंद्रांप्रभासांयशसाज्वलंतींश्रियंलोकेदेवजुष्टामुदारां ॥ तांपद्मिनींमींशरणमहंप्रपद्येऽलक्ष्मीर्मेनश्यतांत्वांवृणे ॥ १ ॥ आदित्यवर्णेतपसोधिजातोवनस्पतिस्तववृक्षोथबिल्वः ॥ तस्यफलानितपसानुदंतुमायांतरायाश्चबाह्याअलक्ष्मीः ॥ उपैतुमांदेवसखःकीर्तिश्चमणिनासह ॥ प्रादुर्भूतोस्मिराष्ट्रेस्मिन्कीर्तिमृद्धिंददातुमे ॥ क्षुत्पिपासामलांज्येष्ठामलक्ष्मींनाशयाम्यहं ॥ अभूतिमसमृद्धिंचसर्वांनिर्णुदमेगृ

हांत् ॥ गंधद्वारांदुराधर्षांनित्यपुष्टांकरीषिणीं ॥ ईश्वरींसर्वभूतानांतामिहोपह्वयेश्रियं ॥ मनसःकाममाकूतिंवाचःसत्यमशी
महि ॥ पशूनांरूपमन्नस्यमयिश्रीःश्रयतांयशः ॥ २ ॥ कर्दमेनप्रजाभूतामयिसंभवकर्दम ॥ श्रियंवासयमेकुलेमातरंपद्ममा
लिनीं ॥ आपःस्रजंतुस्निग्धानिचिक्लीतवसमेगृहे ॥ निचदेवींमातरंश्रियंवासयमेकुले ॥ आर्द्रांयःकरिणींयष्टिंसुवर्णांहेममा
लिनीं ॥ सूर्यांहिरण्मयींलक्ष्मींजातवेदोमआवह ॥ आर्द्रांपुष्करिणींपुष्टिंपिंगलांपद्ममालिनीं ॥ चंद्रांहिरण्मयींलक्ष्मींजातवे
दोमआवह ॥ तांमआवहजातवेदोलक्ष्मीमनपगामिनीं ॥ यस्यांहिरण्यंप्रभूतंगावोदास्योश्वान्विंदेयंपुरुषानहं ॥ ३ ॥ यःशु
चिःप्रयतोभूत्वाजुहुयादाज्यमन्वहं ॥ श्रियःपंचदशर्चंचश्रीकामःसततंजपेत् ॥ ( पद्माननेपद्मऊरूपद्माक्षीपद्मसंभवे ॥ तन्मे
भजसिपद्माक्षियेनसौख्यंलभाम्यहं ॥ अश्वदायैगोदायैधनदायैमहाधने ॥ धनंमेलभतांदेविसर्वकामांश्चदेहिमे ॥ पद्मा
ननेपद्मविपद्मपत्रेपद्मप्रियेपद्मदलायताक्षि ॥ विश्वप्रियेविश्वमनोनुकूलेत्वत्पादपद्मंमयिसंनिधत्स्व ॥ पुत्रपौत्रधनंधान्यंह
स्त्यश्वादिगवेरथं ॥ प्रजानांभवसीमाताआयुष्मंतंकरोतुमे ॥ धनमग्निर्धनंवायुर्धनंसूर्योधनंवसुः ॥ धनमिंद्रोबृहस्पतिर्वरुणं
धनमस्तुते ॥ वैनतेयसोमंपिबसोमंपिबतुवृत्रहा ॥ सोमंधनस्यसोमिनोमह्यंददातुसोमिनः ॥ नक्रोधोनचमात्सर्यंनलोभोना
शुभामतिः ॥ भवंतिकृतपुण्यानांभक्तानांश्रीसूक्तंजपेत् ॥ सरसिजनिलयेसरोजहस्तेधवलतरांशुकगंधमाल्यशोभे ॥ भगव
तिहरिवल्लभेमनोज्ञेत्रिभुवनभूतिकरिप्रसीदमह्यं ॥ विष्णुपत्नींक्षमांदेवींमाधवींमाधवप्रियां ॥ लक्ष्मींप्रियसखींदेवींनमाम्य
च्युतवल्लभां ॥ महालक्ष्मीचविद्महेविष्णुपत्नीचधीमहि ॥ तन्नोलक्ष्मीःप्रचोदयात् ॥ श्रीवर्चस्वमायुष्यमारोग्यमाविधात्शो
भमानंमहीयते ॥ धान्यंधनंपशुंबहुपुत्रलाभंशतसंवत्सरंदीर्घमायुः ॥) ॥ ॥ इतिश्रीसूक्तंसमाप्तम् ॥ ॥ ॥ ४ ॥

## ॥ ५२ ॥ अथनारायणाथर्वशीर्षम् ॥



श्रीः ॥ ॐ अथपुरुषोहवैनारायणोऽकामयतप्रजाःसृजेयेति । नारायणात्प्राणोजायते । मनःसर्वेंद्रियाणिच । खंवायुर्ज्यो तिरापःपृथिवीविश्वस्यधारिणी । नारायणाद्ब्रह्माजायते । नारायणाद्विष्णुर्जायते । नारायणाद्रुद्रोजायते । नारायणादिं द्रोजायते । नारायणात्प्रजापतिःप्रजायते । नारायणाद्द्वादशादित्यारुद्रावसवःसर्वाणिछंदांसि । नारायणाद्देवाःसमुत्पद्यं ते । नारायणात्प्रवर्तंते । नारायणेप्रलीयंते । अथादित्योनारायणः । ब्रह्मानारायणः । शिवश्चनारायणः । शक्रश्चना रायणः । कालश्चनारायणः । दिशश्चनारायणः । ऊर्ध्वंचनारायणः । अधश्चनारायणः । अंतर्बहिश्चनारायणः । नारा यणएवेदꣳसर्वंयद्भूतंयच्चभाव्यम् । निष्कलोनिरंजनोनिर्विकल्पोनिराख्यातःशुद्धोदेवएकोनारायणोनद्वितीयोऽस्तिकश्चित् । यएवंवेद । सविष्णुरेवभवतिसविष्णुरेवभवति । ओमित्यग्रेव्याहरेत् । नमइतिपश्चात् । नारायणायेत्युपरिष्टात् । ओमि त्येकाक्षरम् । नमइतिद्वेअक्षरे । नारायणायेतिपंचाक्षराणि । एतद्वैनारायणस्याष्टाक्षरंपदं । योहवैनारायणस्याष्टाक्षरंपद मध्येति । अनुपब्रतःसर्वमायुरेति । विंदतेप्रजांरायस्पोषंगौपत्यंततोऽमृतत्वमश्नुतेततोमृतत्वमश्नुतइति । प्रत्यगानंदंब्रह्म पुरुषंप्रणवस्वरूपं । अकारउकारोमकारइति । तानेकधासंयोज्यतदेवतदोमिति । यमुक्त्वामुच्यतेयोगीजन्मसंसारबंधना त् । ॐ नमोनारायणायेतिमंत्रोपासकःवैकुंठभुवनंगच्छति । तदिदंपरमंपुंडरीकंविज्ञानघनं । तस्मात्तडिदाभमात्रं । ब्रह्म ण्योदेवकीपुत्रोब्रह्मण्योमधुसूदनः । सर्वभूतस्थमेकंवैनारायणम् । कारणरूपंपरब्रह्मकम् ॥ ॥ एतदथर्वशीर्षंयोऽधीते ।

॥ ५३ ।

१ इतःसर्वाथर्वशीर्षाणामाद्यंतयोः भद्रंकर्णेभिः० स्वस्तिनइंद्र० इतिमंत्रद्वयात्मिकाशांतिरवश्यंपठनीया ।

सायमधीयानोदिवसकृतंपापंनाशयति । प्रातरधीयानोरात्रिकृतंपापंनाशयति । सायंप्रातःप्रयुंजानोअपापोभवति । मध्यं दिनमादित्याभिमुखोऽधीयानःसद्यःपंचमहापातकोपपातकेभ्योमुच्यते । सर्ववेदपारायणपुण्यंलभते । श्रीनारायणसायुज्य मवाप्नोति । यएवंवेद । इत्युपनिषत् ॥ इतिनारायणाथर्वशीर्षसमाप्तम् ॥ ॥ ७ ॥

## ॥ ५३ ॥ अथशिवाथर्वशीर्षम् ॥

श्रीः ॥ ॐ देवाहवैस्वर्गलोकमायंस्तेरुद्रमपृच्छन्कोभवानिति ॥ सोऽब्रवीदहमेकःप्रथमासोद्वर्तामिचभविष्यामिचनान्यः कश्चिन्मत्तोव्यतिरिक्तइति । सोंऽतरादंतरंप्राविशद्दिशश्चांतरंप्राविशत्सोऽहंनित्यानित्योव्यक्ताव्यक्तोब्रह्माब्रह्माहंप्रांचःप्रत्यं चोऽहंदक्षिणांचउदंचोऽहमधश्चोर्ध्वश्चाहंदिशश्चप्रदिशश्चाहं पुमानपुमान्स्त्रियश्चाहंसावित्र्यहंगायत्र्यहंत्रिष्टुब्जगत्यनुष्टुप्चाहं छंदोऽहंसत्योऽहंगार्हपत्योदक्षिणाग्निराहवनीयोहंगौरहंगौर्यहमृगहंयजुरहं सामाहमथर्वांगिरसोऽहंज्येष्ठोऽहंश्रेष्ठोऽहंवरिष्ठोऽह मापोहंतेजोऽहंगुह्योऽहमरण्योऽहमक्षरमहंक्षरमहंपुष्करमहंपवित्रमहमुग्रंच बलिश्चपुरस्ताज्ज्योतिरित्यहमेवसर्वेभ्योमामेवसस र्वःसमायोमांवेदसदेवान्वेदसर्वांश्चवेदान्सांगानपि ब्रह्मब्राह्मणैश्चगांगोभिर्ब्राह्मणान्ब्राह्मणेनहविर्हविषाआयुरायुषासत्यंसत्येन धर्मेणधर्मंतर्पयामिस्वेनतेजसा । ततोहवैतेदेवारुद्रमपृच्छन्तेदेवारुद्रमपश्यन्तेदेवारुद्रमध्यायन्तेदेवाऊर्ध्वबाहवोरुद्रंस्तुवंति ॥ १ ॥ ॐ योवैरुद्रःसभगवान्यश्चब्रह्मातस्मैवैनमोनमः ॥ १ ॥ योवैरुद्रःसभगवान्यश्चविष्णुस्तस्मैवैनमोनमः ॥ २ ॥ यो वैरुद्रःसभगवान्यश्चस्कंदस्तस्मै० ॥ ३ ॥ योवैरुद्रःसभगवान्यश्चेंद्रस्तस्मैवैनमो० ॥ ४ ॥ योवैरुद्रःसभगवान्यश्चाग्निस्तस्मै० ॥ ५ ॥ योवैरुद्रःसभगवान्यश्चवायुस्तस्मैवैनमो० ॥ ६ ॥ योवैरुद्रःसभगवान्यश्चसूर्यस्तस्मैवैनगो० ॥ ७ ॥ योवैरुद्रःसभगवा

न्यश्चसोमस्तस्मैवैनमो० ॥ ८ ॥ योवैरुद्रःसभगवान्येऽष्टौग्रहास्तस्मैवैनमो० ॥९॥ योवैरुद्रःसभगवान्येचाष्टौप्रतिग्रहास्तस्मै० ॥ १० ॥ योवैरुद्रःसभगवान्यच्चभूस्तस्मैवैनमो० ॥ ११ ॥ योवैरुद्रःसभगवान्यच्चभुवस्तस्मै० ॥ १२ ॥ योवैरुद्रःसभगवान्यच्चस्वस्तस्मैवैनमो० ॥ १३ ॥ योवैरुद्रःसभगवान्यच्चमहस्तस्मै० ॥ १४ ॥ योवैरुद्रःसभगवान्याचपृथिवीतस्मै० ॥१५॥ योवैरुद्रःसभगवान्यच्चांतरिक्षंतस्मैवैनमो० ॥ १६ ॥ योवैरुद्रःसभगवान्याचद्यौस्तस्मै० ॥१७॥ योवैरुद्रःसभगवान्याश्चापस्तस्मै० ॥ १८ ॥ योवैरुद्रःसभगवान्यच्चतेजस्तस्मै० ॥ १९ ॥ योवैरुद्रःसभगवान्यश्चकालस्तस्मै० ॥ २० ॥ योवैरुद्रःसभगवान्यश्चयमस्तस्मै० ॥ २१ ॥ योवैरुद्रःसभगवान्यश्चमृत्युस्तस्मै० ॥ २२ ॥ योवैरुद्रःसभगवान्यच्चामृतंतस्मै० ॥ २३ ॥ योवैरुद्रःसभगवान्यच्चाकाशंतस्मै० ॥ २४ ॥ योवैरुद्रःसभगवान्यच्चविश्वंतस्मै० ॥ २५ ॥ योवैरुद्रःसभगवान्यच्चस्थूलंतस्मै० ॥ २६ ॥ योवैरुद्रःसभगवान्यच्चसूक्ष्मंतस्मै० ॥ २७ ॥ योवैरुद्रःसभगवान्यच्चशुक्लंतस्मै० ॥ २८ ॥ योवैरुद्रःसभगवान्यच्चकृष्णंतस्मै० ॥ २९ ॥ योवैरुद्रःसभगवान्यच्चकृत्स्नंतस्मै० ॥ ३० ॥ योवैरुद्रःसभगवान्यच्चसत्यंतस्मै० ॥ ३१॥ योवैरुद्रःसभगवान्यच्चसर्वंतस्मै० ॥ ३२ ॥ २॥ भूस्तेआदिर्मध्यंभुवस्तेस्वस्तेशीर्षंविश्वरूपोऽसिब्रह्मैकस्त्वंद्विधात्रिधावृद्धिस्त्वंशांतिस्त्वंपुष्टिस्त्वंहुतमहुतंदत्तमदत्तंसर्वमसर्वंविश्वमविश्वंकृतमकृतंपरमपरंपरायणंचत्वं । अपामसोमममृताअभूमागन्मज्योतिरविदामदेवान् । किंनूनमस्मान्कृणवदरातिःकिमुधूर्तिरमृतमर्त्यस्य । सोमसूर्यपुरस्तात्सूक्ष्मःपुरुषः । सर्वंजगद्धितंवाएतदक्षरंप्राजापत्यंसौम्यंसूक्ष्मंपुरुषंग्राह्यमग्राह्येणभावंभावेन सौम्यंसौम्येनसूक्ष्मंसूक्ष्मेणवायव्यंवायव्येनग्रसतितस्मैमहाग्रासायवैनमोनमः । हृदिस्थादेवताःसर्वाहृदिप्राणाःप्रतिष्ठिताः । हृदित्वमसियोनित्यंतिस्रोमात्राःपरस्तुसः ॥ तस्योत्तरतःशिरो

दक्षिणतःपादौ यउत्तरतःसओंकारःयओंकारःसप्रणवःयःप्रणवःससर्वव्यापीयःसर्वव्यापीसोऽनंतःयोऽनंतस्तत्तारंयत्तारंतच्छु
क्लंयच्छुक्लंतत्सूक्ष्मंयत्सूक्ष्मंतद्वैद्युतंयद्वैद्युतंतत्परंब्रह्मयत्परंब्रह्मसएकःयएकःसरुद्रःयोरुद्रःसईशानःयईशानःसभगवान्महेश्व
रः ॥ ३ ॥ अथकस्मादुच्यतेओंकारःयस्मादुच्चार्यमाणएवप्राणानूर्ध्वमुत्क्रामयतितस्मादुच्यतेओंकारः । अथकस्मादुच्यतेप्रण
वःयस्मादुच्चार्यमाणएवऋग्यजुःसामाथर्वांगिरसंब्रह्मब्राह्मणेभ्यःप्रणामयतिनामयतिचतस्मादुच्यतेप्रणवः । अथकस्मादुच्य
तेसर्वव्यापीयस्मादुच्चार्यमाणएवयथास्नेहेनपललपिंडमिवशांतरूपमोतप्रोतमनुप्राप्तोव्यतिषक्तश्चतस्मादुच्यतेसर्वव्यापी । अ
थकस्मादुच्यतेऽनंतःयस्मादुच्चार्यमाणएवतिर्यगूर्ध्वमधस्ताच्चास्यांतोनोपलभ्यतेतस्मादुच्यतेऽनंतः । अथकस्मादुच्यतेतारंय
स्मादुच्चार्यमाणएषगर्भजन्मव्याधिजरामरणसंसारमहाभयात्तारयतित्रायतेचतस्मादुच्यतेतारं । अथकस्मादुच्यतेशुक्लंयस्मा
दुच्चार्यमाणएवक्लंदतेक्लामयतिचतस्मादुच्यतेशुक्लं । अथकस्मादुच्यतेसूक्ष्मंयस्मादुच्चार्यमाणएवसूक्ष्मोभूत्वाशरीराण्यधितिष्ठ
तिसर्वाणिचांगान्यभिमृशतितस्मादुच्यतेसूक्ष्मं। अथकस्मादुच्यतेवैद्युतंयस्मादुच्चार्यमाणएवव्यक्तेमहतितमसिद्योतयतितस्मा
दुच्यतेवैद्युतं । अथकस्मादुच्यतेपरंब्रह्मयस्मात्परमपरंपरायणंचबृहद्बृहत्याबृंहयतितस्मादुच्यतेपरंब्रह्म । अथकस्मादुच्यते
एकःयःसर्वान्प्राणान्संभक्ष्यसंभक्षणेनाजःसंसृजतिविसृजतितीर्थमेकेव्रजंतितीर्थमेकेदक्षिणाःप्रत्यंचउदंचःप्रांचोऽभिव्रजंत्येके
तेषांसर्वेषामिहसंगतिःसाकंसएकोऽभूदंतश्चरतिप्रजानांतस्मादुच्यतेएकः । अथकस्मादुच्यतेरुद्रःयस्मादृषिभिर्नान्यैर्भक्तैर्द्रुतम
स्यरूपमुपलभ्यतेतस्मादुच्यतेरुद्रः । अथकस्मादुच्यतेईशानःयःसर्वान्देवानीशतेईशानीभिर्जननीभिश्चशक्तिभिः । अभि
त्वाशूरणोनुमोदुग्धाइवधेनवः । ईशानमस्यजगतःस्वर्दृशमीशानमिंद्रतस्थुषइतितस्मादुच्यतेईशानः । अथकस्मादुच्यतेभ

गवान्महेश्वरःयस्माद्भक्तान्ज्ञानेनभजत्यनुगृह्णातिचवाचंसंसृजतिविसृजतिचसर्वान्भावान्परित्यज्यात्मज्ञानेनयोगैश्वर्येणम हतिमहीयतेतस्मादुच्यतेभगवान्महेश्वरः। तदेतद्रुद्रचरितम् ॥४॥ एषोहदेवःप्रदिशोऽनुसर्वाःपूर्वोहजातःसउगर्भेअंतः। सए वजातःसजनिष्यमाणःप्रत्यङ्जनास्तिष्ठतिसर्वतोमुखः। एकोरुद्रोनद्वितीयायतस्थैयइमाँल्लोकानीशतईशनीभिः। प्रत्यङ्जना स्तिष्ठतिचांतकालेसंसृज्यविश्वाभुवनानिगोप्ता ॥ योयोनिंयोनिमधितिष्ठत्येकोयेनेदंसर्वंविचरतिसर्वम्। तमीशानंवरदंदेवमी ड्यंनिचाय्येमांशांतिमत्यंतमेति। क्षमांहित्वाहेतुजालस्यमूलंबुद्ध्यासंचितंस्थापयित्वातुरुद्रे। रुद्रमेकत्वमाहुःशाश्वतंवैपुरा णमिषमूर्जेणपशवोनुनामयंतंमृत्युपाशान्। तदेतेनात्मन्नेतेनार्धचतुर्थेनमात्रेणशांतिंसंसृजतिपशुपाशविमोक्षणंयासाप्रथमामा त्राब्रह्मदेवत्यारक्तावर्णेनयस्तांध्यायतेनित्यंसगच्छेद्ब्रह्मपदं। यासाद्वितीयामात्राविष्णुदेवत्याकृष्णवर्णेनयस्तांध्यायतेनित्यंस गच्छेद्वैष्णवंपदं। यासातृतीयामात्राईशानदेवत्याकपिलावर्णेनयस्तांध्यायतेनित्यंसगच्छेदैशानंपदं। यासार्धचतुर्थीमात्रास र्वदेवत्याऽव्यक्तीभूताखंविचरतिशुद्धास्फटिकसंनिभावर्णेनयस्तांध्यायतेनित्यंसगच्छेत्पदमनामयम्। तदेतदुपासीतमुनयोवा ग्वदंतिनतस्यग्रहणमयंपंथाविहितउत्तरेणयेनदेवायांतियेनपितरोयेनऋषयःपरमपरंपरायणंचेति। वालाग्रमात्रंहृदयस्यमध्येवि श्वंदेवंजातरूपंवरेण्यं। तमात्मस्थंयेतुपश्यंतिधीरास्तेषांशांतिर्भवतिनेतरेषां। यस्मिन्क्रोधंयांचतृष्णांक्षमांचाक्षमांहित्वाहेतुजा लस्यमूलंबुद्ध्यासंचितंस्थापयित्वातुरुद्रेरुद्रमेकत्वमाहुः। रुद्रोहिशाश्वतेनवैपुराणेनेषमूर्जेणतपसानियंताग्निरितिभस्मवायुरिति भस्मजलमितिभस्मस्थलमितिभस्मव्योमेतिभस्मसर्वंहवाइदंभस्ममनएतानिचक्षूंषियस्माद्व्रतमिदंपाशुपतंयद्भस्मनांगानिसंस्पृ शेत्तस्माद्ब्रह्मतदेतत्पाशुपतंपशुपाशविमोक्षणाय ॥५॥ योऽग्नौरुद्रोयोऽप्स्वंतर्यओषधीर्वीरुधआविवेश। यइमाविश्वाभुवना

निचक्रुपेतस्मैरुद्रायनमोऽस्त्वग्नये। योरुद्रोऽग्नौयोरुद्रोऽप्स्वंतर्योरुद्रओषधीर्वीरुधआविवेश। योरुद्रइमाविश्वाभुवनानिचक्रुपेत
स्मैरुद्रायवैनमोनमः। योरुद्रोऽप्सुयोरुद्रओषधीषुयोरुद्रोवनस्पतिषु। येनरुद्रेणजगदूर्ध्वंधारितंपृथिवीद्विधात्रिधाधर्ताधारिता
नागायेंतरिक्षेतस्मैरुद्रायवैनमोनमः। मूर्धानमस्यसंसेव्याप्यथर्वाहृदयंचयत्। मस्तिष्कादूर्ध्वंप्रेरयत्यवमानोऽधिशीर्षतः। त
द्वाअथर्वणःशिरोदेवकोशःसमुज्झितः। तत्प्राणोऽभिरक्षतिशिरोंऽतमथोमनः। नचदिवोदेवजनेनगुप्तानचांतरिक्षाणिनच
भूमयइमाः। यस्मिन्निदंसर्वमोतप्रोतंतस्मादन्यन्नपरंकिंचनास्ति। नतस्मात्पूर्वंनपरंतदस्तिनभूतंनोतभव्यंयदासीत्। सह
स्रपादेकमूर्धाव्याप्तंसएवेदमावरीवर्तिभूतं। अक्षरात्संजायतेकालःकालाद्व्यापकउच्यते। व्यापकोहिभगवान्रुद्रोभोगाय
मानोयदाशेतेरुद्रस्तदासंहार्यतेप्रजाः। उच्छ्वसितेतमोभवतितमसआपोऽप्स्वंगुल्यामथितंशिशिरंशिशिरंमथ्यमानंफेनंभवति
फेनादंडंभवत्यंडाद्ब्रह्माभवतिब्रह्मणोवायुःवायोरोंकारः ओंकारात्सावित्रीसावित्र्यागायत्रीगायत्र्यालोकाभवंति। अर्चयंतित
पःसत्यंमधुरक्षंतियद्ध्रुवं। एतद्धिपरमंतपः। आपोज्योतीरसोऽमृतंब्रह्मभूर्भुवःस्वरोंनमइति ॥ ६ ॥ ॥ यइदमथर्वशिरो
ब्राह्मणोऽधीते। अश्रोत्रियःश्रोत्रियोभवति। अनुपनीतउपनीतोभवति। सोऽग्निपूतोभवति। सवायुपूतोभवति। स
सूर्यपूतोभवति। ससोमपूतोभवति। ससत्यपूतोभवति। ससर्वैर्वेदैर्ज्ञातोभवति। ससर्वैर्वेदैरनुध्यातोभवति। सस
र्वेषुतीर्थेषुस्नातोभवति। तेनसर्वैःक्रतुभिरिष्टंभवति। गायत्र्याःषष्टिसहस्राणिजप्तानिभवंति। प्रणवानामयुतंजप्तंभव
ति। सचक्षुषःपंक्तिंपुनाति। आसप्तमात्पुरुषयुगान्पुनातीत्याहभगवानथर्वशिरःसकृज्जप्त्वैवशुचिःसपूतःकर्मण्योभवति। द्वि
तीयंजप्त्वागणाधिपत्यमवाप्नोति। तृतीयंजप्त्वैवमेवानुप्रविशत्योंसत्यमोंसत्यमोंसत्यं ॥ इत्यथर्ववेदेशिवाथर्वशीर्षंसमाप्तम् ॥

## ॥ ५४ ॥ अथगणपत्यथर्वशीर्षम् ॥



श्रीः ॥ ॐ नमस्तेगणपतये । त्वमेवप्रत्यक्षंतत्त्वमसि । त्वमेवकेवलंकर्तासि । त्वमेवकेवलंधर्तासि । त्वमेवकेवलंहर्तासि । त्वमेवसर्वंखल्विदंब्रह्मासि । त्वंसाक्षादात्मासिनित्यं ॥१॥ ऋतंवच्मि सत्यंवच्मि ॥२॥ अवत्वंमां । अववक्तारं । अवश्रोतारं । अवदातारं । अवधातारं । अवानूचानमवशिष्यं । अवपश्चात्तात् । अवपुरस्तात् । अवोत्तरात्तात् । अवदक्षिणात्तात् । अवचोर्ध्वात्तात् । अवाधरात्तात् । सर्वतोमांपाहिपाहिसमंतात् ॥ ३ ॥ त्वंवाङ्मयस्त्वंचिन्मयः । त्वमानंदमयस्त्वंब्रह्मम यः । त्वंसच्चिदानंदाद्वितीयोसि । त्वंप्रत्यक्षंब्रह्मासि । त्वंज्ञानमयोविज्ञानमयोसि ॥ ४ ॥ सर्वंजगदिदंत्वत्तोजायते । सर्वंजगदिदंत्वत्तस्तिष्ठति । सर्वंजगदिदंत्वयिलयमेष्यति । सर्वंजगदिदंत्वयिप्रत्येति । त्वंभूमिरापोनलोनिलोनभः । त्वंचत्वा रिवाक्पदानि ॥ ५ ॥ त्वंगुणत्रयातीतः । त्वंदेहत्रयातीतः । त्वंकालत्रयातीतः । त्वंमूलाधारस्थितोसिनित्यं । त्वंशक्तित्रया त्मकः । त्वांयोगिनोध्यायंतिनित्यं । त्वंब्रह्मात्वंविष्णुस्त्वंरुद्रस्त्वमिंद्रस्त्वमग्निस्त्वंवायुस्त्वंसूर्यस्त्वंचंद्रमास्त्वंब्रह्मभूर्भुवःस्वरोम् ॥ ॥ ६ ॥ गणादिंपूर्वमुच्चार्यवर्णादिंतदनंतरं । अनुस्वारःपरतरः । अर्धेंदुलसितं । तारेणरुद्धं । एतत्तवमनुस्वरूपं । गकारः । पूर्वरूपं । अकारोमध्यमरूपं । अनुस्वारश्चांत्यमरूपं । बिंदुरुत्तररूपं । नादःसंधानं । सꣳहितासंधिः । सैषागणेशविद्या । गणकऋषिः । निचृद्गायत्रीछंदः । गणपतिर्देवता ॥ ॐ गंगणपतयेनमः ॥ ७ ॥ एकदंतायविद्महेवक्रतुंडायधीमहि । तन्नो दंतिःप्रचोदयात् ॥ ८ ॥ एकदंतंचतुर्हस्तंपाशमंकुशधारिणम् । रदंचवरदंहस्तैर्बिभ्राणंमूषकध्वजम् । रक्तंलंबोदरंशूर्पकर्णकं रक्तवाससं । रक्तगंधानुलिप्तांगंरक्तपुष्पैःसुपूजितम् । भक्तानुकंपितंदेवंजगत्कारणमच्युतं । आविर्भूतंचसृष्ट्यादौप्रकृतेःपुरुषा

त्परं । एवंध्यायतियोनित्यंसयोगीयोगिनांवरः ॥ ९ ॥ नमोव्रातपतयेनमोगणपतयेनमःप्रमथपतयेनमस्तेअस्तुलंबोदरायैकदं
तायविघ्ननाशिनेशिवसुतायश्रीवरदमूर्तयेनमः ॥ १० ॥ एतदथर्वशीर्षंयोधीते । सब्रह्मभूयायकल्पते । ससर्वतःसुखमेधते ।
ससर्वविघ्नैर्नबाध्यते । सपंचमहापापात्प्रमुच्यते । सायमधीयानोदिवसकृतंपापंनाशयति । प्रातरधीयानोरात्रिकृतंपापंनाश
यति । सायंप्रातःप्रयुंजानोअपापोभवति । सर्वत्राधीयानोपविघ्नोभवति । धर्मार्थकाममोक्षंचविंदति । इदमथर्वशीर्षमशिष्या
यनदेयं । योयदिमोहाद्दास्यति सपापीयान्भवति । सहस्रावर्तनात् यंयंकाममधीते तंतमनेनसाधयेत् ॥ ११ ॥ अने
नगणपतिमभिषिंचति सवाग्मीभवति । चतुर्थ्यामनश्नन्जपति सविद्यावान्भवति । इत्यथर्वणवाक्यं । ब्रह्माद्याचरणंवि
द्यान्नबिभेतिकदाचनेति ॥ १२ ॥ योदूर्वांकुरैर्यजति सवैश्रवणोपमोभवति । योलाजैर्यजति सयशोवान्भवति । समेधावा
न्भवति । योमोदकसहस्रेणयजति सवांछितफलमवाप्नोति । यःसाज्यसमिद्भिर्यजति ससर्वंलभतेससर्वंलभते । अष्टौब्राह्मणान्
सम्यक्ग्राहयित्वा सूर्यवर्चस्वीभवति । सूर्यग्रहेमहानद्यांप्रतिमासन्निधौवाजप्त्वा सिद्धमंत्रोभवति । महाविघ्नात्प्रमुच्यते ।
महादोषात्प्रमुच्यते । महापापात्प्रमुच्यते । ससर्वविद्भवतिससर्वविद्भवतियएवंवेद । इत्युपनिषत् ॥ १३ ॥ इतिगण
पत्यथर्वशीर्षंसमाप्तम् ॥ ॥ छ ॥ ॥ छ ॥

## ॥ ५५ ॥ अथसूर्याथर्वशीर्षम् ॥

श्रीः ॥ ॐ अस्यश्रीसूर्याथर्वशीर्षस्य । ब्रह्माऋषिः । आदित्योदेवता । गायत्रीछन्दः । हंसाद्यग्निनारायणयुक्तंबीजं । हृल्ले
खाशक्तिः । द्विपदादिसर्गसंयुक्तंकीलकं । धर्मार्थकाममोक्षार्थजपेविनियोगः ॥ षट्स्वरारूढबीजेनषडंगंरक्तांबुजसंस्थितंस

ष्टाश्वरथिनंहिरण्यवर्णंचतुर्भुजंपद्मद्वयाभयवरदहस्तंकालचक्रप्रणेतारंचश्रीसूर्यनारायणंयएवंवेदसवैब्राह्मणः ॥ ॐ भूः । ॐ भुवः । ॐ स्वः । ॐ महः । ॐ जनः । ॐ तपः । ॐ सत्यं । ॐ तत्संवितु० । परोरजसेसावदोम् । ॐ आपोज्योतीरसोऽमृतंब्रह्मभूर्भुवःसुवरोम् । सूर्यआत्माजगतस्तस्थुषश्च । सूर्याद्वैखल्विमानिभूतानिजायंते । सूर्याद्यज्ञाःपर्जन्योऽन्नमात्मा । नमस्तेआदित्याय । त्वमेवकेवलंकर्तासि । त्वमेवप्रत्यक्षंविष्णुरसि । त्वमेवप्रत्यक्षंब्रह्मासि । त्वमेवप्रत्यक्षंरुद्रोऽसि । त्वमेवप्रत्यक्षमृगसि । त्वमेवप्रत्यक्षंयजुरसि । त्वमेवप्रत्यक्षंसामासि । त्वमेवप्रत्यक्षमथर्वासिं । त्वमेवसर्वंछंदोसि । आदित्याद्वायुर्जायते । आदित्याद्भूमिर्जायते । आदित्यादापोजायंते । आदित्याज्ज्योतिर्जायते । आदित्याद्व्योमदिशोजायंते । आदित्याद्वेदाजायंते । आदित्याद्देवाजायंते । आदित्योवाएषएतन्मंडलंतपति । असावादित्योब्रह्म । आदित्योंऽतःकरणमनोबुद्धिचित्ताहंकाराः । आदित्योवैव्यानसमानोदानापानप्राणाः । आदित्योवैश्रोत्रत्वक्चक्षूरसनानासाः । आदित्योवैवाक्पाणिपादोपस्थपायूनि । आदित्योवैशब्दस्पर्शरूपरसगंधाः । आदित्योवैवचनादानगमनानंदविसर्गाः । आनंदमयोज्ञानमयोविज्ञानमयआदित्यः । नमोमित्रायभानवेमृत्योर्मापाहिभ्राजिष्णवेविश्वहेतवेनमः । सूर्योनोदिवस्पातुवातोअंतरिक्षात् । अग्निर्नःपार्थिवेभ्यः । सूर्याद्भवंतिभूतानि । सूर्येणपालितानितु । सूर्येलयंप्राप्नुवंति । यःसूर्यःसोहमेवच । चक्षुर्नोदेवःसविता । चक्षुर्नउतपर्वतः । चक्षुर्धातादधातुनः । आदित्यायविद्महेसहस्रकरायधीमहि । तन्नःसूर्यःप्रचोदयात् । सवितापश्चात्तात् । सवितापुरस्तात् । सवितोत्तरात्तात् । सविताधरात्तात् । सवितानःसुवतुसर्वतातिम् । सवितानोरासतांदीर्घमायुः ॥ ॥ ओमित्येकाक्षरंब्रह्म । घृणिरितिद्वेअक्षरे । सूर्यइत्यक्षरद्वयम् । आदित्यइतित्रीण्य

क्षराणि । एतद्वैसूर्यस्याष्टाक्षरंमनुंयःसदाहरहर्जपतिसोब्रह्मण्योब्राह्मणोभवति । सूर्याभिमुखंजस्वामहाव्याधिभयात्प्रमुच्यते । अलक्ष्मीर्नश्यति । अभक्ष्यभक्षणात्पूतोभवति । अपेयपानात्पूतोभवति । अगम्यागमनात्पूतोभवति । व्रात्यसंभाषणात्पूतोभवति । मध्याह्नेसूर्याभिमुखःपठेत् । सद्यःपंचमहापापात्प्रमुच्यते । सैषासावित्रीविद्यानकस्यचित्प्रशंसेत् । यएतन्महाभागःप्रातःपठतिसभाग्यवान्जायते । पशून्विंदतिवेदार्थंलभते । त्रिकालंजस्वाक्रतुशतफलंप्राप्नोति । हस्तादित्येजपतिसमहामृत्युंतरति । यएवंवेद । इत्युपनिषत् ।। इतिसूर्याथर्वशीर्षसमाप्तम् ।। ।। ६९ ।।

## ।। ५६ ।। अथदेव्यथर्वशीर्षम् ।।

श्रीः ।। ॐ सर्वेवैदेवादेवीमुपतस्थुःकासित्वंमहादेवीति साब्रवीदहंब्रह्मस्वरूपिणी । मत्तःप्रकृतिपुरुषात्मकंजगत् । शून्यंचाशून्यंच । अहमानंदानानंदौअहंविज्ञानाविज्ञानेअहंब्रह्माब्रह्मणीद्वेब्रह्मणीवेदितव्ये । इतिचाथर्वणीश्रुतिः । अहंपंचभूतानि । अहंपंचतन्मात्राणि । अहमखिलंजगत् । वेदोहमवेदोहं । विद्याहमविद्याहम् । अजाहमनजाहं । अधश्चोर्ध्वंचतिर्यक्चाहं । अहꣳरुद्रेभिर्वसुभिश्चरामि । अहमादित्यैरुतविश्वदेवैः । अहंमित्रावरुणावुभौबिभर्मि । अहमिंद्राग्नीअहमश्विनाउभौ । अहꣳसोमंत्वष्टारंपूषणंभगंदधामि । अहंविष्णुमुरुक्रमं । ब्रह्माणमुतप्रजापतिंदधामि । अहंदधामिद्रविणꣳहविष्मतेसुप्राव्येयजमानायसुव्रते । अहꣳराज्ञीसंगमनीवसूनांचिकितुषीप्रथमायज्ञियानां । अहꣳसुवेपितरमस्यमूर्धन्ममयोनिरप्स्वंतःसमुद्रे । यएवंवेदसदैवीꣳसंपदमाप्नोति । तेदेवाअब्रुवन् । नमोदेव्यैमहादेव्यैशिवायैसततंनमः । नमःप्रकृत्यैभद्रायैनियताःप्रणताःस्मताम् । तामग्निवर्णांतपसाज्वलंतींवैरोचनींकर्मफलेषुजुष्टाम् । दुर्गांदेवींशरणंप्रपद्यामहेऽसुरान्नाशयित्र्यैतेनमः । देवींवाच

मजनयंतदेवास्तांविश्वरूपाःपशवोवदंति । सानोमंद्रेषमूर्जंदुहानाधेनुर्वागस्मानुपसुष्टुतैतु ॥ कालरात्रींब्रह्मस्तुतांवैष्णवींस्कंदमातरम् । सरस्वतीमदितिंदक्षदुहितरंनमामःपावनांशिवाम् । महालक्ष्म्यैचविद्महेसर्वशक्त्यैचधीमहि । तन्नोदेवीप्रचोदयात् । अदितिर्ह्यजनिष्टदक्षयादुहितातव । तांदेवाअन्वजायंतभद्राअमृतबंधवः ॥ कामेयोनिःकमलावज्रपाणिर्गुहाहंसामातरिश्वाभ्रमिंद्रः । पुनर्गुहासकलामाययाचापृथक्क्लेशाविश्वमातादिविद्याः ॥ एषात्मशक्तिः । एषाविश्वमोहिनीपाशांकुशधनुर्बाणधरा । एषाश्रीमहाविद्या । यएवंवेद सशोकंतरति । नमस्तेभगवतिमातरस्मान्पाहिसर्वतः । सैषावैष्णव्यष्टौवसवः सैवैकादशरुद्राः सैषाद्वादशादित्याः सैषाविश्वेदेवाःसोमपाअसोमपाश्चसैषायातुधानाअसुरारक्षांसिपिशाचयक्षसिद्धाः सैषासत्वरजस्तमांसि सैषाब्रह्मविष्णुरुद्ररूपिणीसैषाप्रजापतींद्रमनवःसैषाग्रहनक्षत्रज्योतिष्कलाकाष्ठादिविश्वरूपिणीतामहंप्रणौमिनित्यम् । पापापहारिणीदेवींभुक्तिमुक्तिप्रदायिनीं । अनंतांविजयांशुद्धांशरण्यांसर्वदांशिवाम् ॥ वियदाकारसंयुक्तंवीतिहोत्रसमन्वितम् ॥ अर्धेंदुलसितंदेव्याबीजंसर्वार्थसाधकम् ॥ एवमेकाक्षरंमंत्रंयतयःशुद्धचेतसः । ध्यायंतिपरमानंदमयाज्ञानांबुराशयः ॥ वाङ्मयाब्रह्मभूस्तस्मात्षष्ठवक्त्रसमन्वितम् । सूर्योवामश्रोत्रबिंदुसंयुक्ताष्टतृतीयकम् ॥ नारायणेनसंमिश्रोवायुश्चाधारयुक्तयः । विच्चेनवार्णकोणस्यमहानानंददायकः । हृत्पुंडरीकमध्यस्थांप्रातःसूर्यसमप्रभाम् । पाशांकुशधरांसौम्यांवरदाभयहस्तकाम् ॥ त्रिनेत्रांरक्तवसनांभक्तकामदुहंभजे । भजामित्वांमहादेविमहाभयविनाशिनि ॥ महादारिद्र्यशमनिमहाकारुण्यरूपिणि । यस्याःस्वरूपंब्रह्मादयोनजानंतितस्मादुच्यतेअज्ञेया । यस्याअंतोनलभ्यतेतस्मादुच्यतेअनंता । यस्यालक्ष्यंनोपलक्ष्यतेतस्मादुच्यतेअलक्ष्या । यस्याजननंनोपलक्ष्यतेतस्मादुच्यतेअजा । एकैवसर्वत्रवर्ततेतस्मा

दुच्यतएका । एकैवविश्वरूपिणीतस्मादुच्यतेऽनेका । अतएवोच्यतेऽज्ञेयानंतलक्ष्याजैकानेका । मंत्राणांमातृकादेवीश ब्दानांज्ञानरूपिणी । ज्ञानानांचिन्मयातीताशून्यानांशून्यसाक्षिणी ॥ यस्याःपरतरंनास्तिसैषादुर्गाप्रकीर्तिता । तांदुर्गांदु र्गमांदेवींदुराचारविघातिनीम् ॥ नमामिभवभीतोऽहंसंसारार्णवतारिणीम् ॥ ॥ इदमथर्वशीर्षंयोऽधीते । सपंचाथर्व शीर्षफलमाप्नोति । इदमथर्वशीर्षंज्ञात्वायोर्चांस्थापयति । शतलक्षंप्रजप्त्वापिनार्चांशुद्धिंचविंदति । शतमष्टोत्तरंचास्यपु रश्चर्याविधिःस्मृतः । दशवारंपठेद्यस्तुसद्यःपापैःप्रमुच्यते । महादुर्गाणितरतिमहादेव्याःप्रसादतः ॥ सायमधीयानोदिव सकृतंपापंनाशयति । प्रातरधीयानोरात्रिकृतंपापंनाशयति । सायंप्रातःप्रयुंजानोअपापोभवति । निशीथेतुरीयसंध्यायांज प्त्वावाक्सिद्धिर्भवति । नूतनायांप्रतिमायांजप्त्वादेवतासांनिध्यंभवति । भौमाश्विन्यांमहादेवीसंनिधौजप्त्वामहामृत्युंतरति समहामृत्युंतरति । यएवंवेद इत्युपनिषत् ॥ इतिदेव्यथर्वशीर्षम् ॥ ॥ ७ ॥

## ॥ ५७ ॥ अथसुवर्णघर्मानुवाकः ॥

श्रीः ॥ ॐ सुवर्णघर्मंपरिवेदवेनं ॥ इंद्रस्यात्मानंदशधाचरंतं ॥ अंतःसमुद्रेमनसाचरंतं ॥ ब्रह्मान्वविंदद्दशहोतारमर्णे ॥ अं तःप्रविष्टःशास्ताजनानां ॥ एकःसन्बहुधाविचारः ॥ शतंशुक्राणियत्रैकंभवंति ॥ सर्वेवेदायत्रैकंभवंति ॥ सर्वेहोतारोयत्रै कंभवंति ॥ समानंसीनआत्माजनानां ॥ १ ॥ अंतःप्रविष्टःशास्ताजनानानांसर्वात्मा ॥ सर्वाःप्रजायत्रैकंभवंति ॥ चतुर्होता रोयत्रसंपदंगच्छंतिदेवैः ॥ समानंसीनआत्माजनानां ॥ ब्रह्मेंद्रमग्निंजगतःप्रतिष्ठां ॥ दिवआत्मानंसवितारंबृहस्पतिं ॥ च तुर्होतारंप्रदिशोनुक्रृप्तं ॥ वाचोवीर्यंतपसान्वविंदत् ॥ अंतःप्रविष्टंकर्तारमेतं ॥ त्वष्टारंरूपाणिविकुर्वंतंविपश्चिं ॥ २ ॥ अ

मृतस्यप्राणंयज्ञमेतं ॥ चतुर्होतृणामात्मानंकवयोनिचिक्युः ॥ अंतःप्रविष्टंकर्तारमेतं ॥ देवानांबंधुनिहितंगुहासु ॥ अमृतेन क्लृप्तंयज्ञमेतं ॥ चतुर्होतृणामात्मानंकवयोनिचिक्युः ॥ शतंनियुतःपरिवेदविश्वाविश्ववारः ॥ विश्वमिदंवृणाति ॥ इंद्रस्या त्मानिहितःपंचहोता ॥ अमृतंदेवानामायुःप्रजानां ॥ ३ ॥ इंद्रंराजानंसवितारमेतं ॥ वायोरात्मानंकवयोनिचिक्युः ॥ रश्मिंरश्मीनांमध्येतपंतं ॥ ऋतस्यपदेकवयोनिपांति ॥ यआंडकोशेभुवनंबिभर्ति ॥ अनिर्भिण्णःसन्नथलोकान्विचष्टे ॥ यस्यांडकोशंशुष्ममाहुःप्राणमुल्बं ॥ तेनक्लृप्तोमृतेनाहमस्मि ॥ सुवर्णकोशंरजसापरीवृतं ॥ देवानांवसुधानींविराजं ॥ ४ ॥ अमृतस्यपूर्णांतामुकलांविचक्षते ॥ पादंषड्ढोतुर्नकिलाविवित्से ॥ येनर्तवःपंचधोतक्लृप्ताः ॥ उतवाषड्धामनसोतक्लृप्ताः ॥ तंषड्ढोतारमृतुभिःकल्पमानं ॥ ऋतस्यपदेकवयोनिपांति ॥ अंतःप्रविष्टंकर्तारमेतं ॥ अंतश्चंद्रमसिमनसाचरंतं ॥ सहैवसंतं नविजानंतिदेवाः ॥ इंद्रस्यात्मानंशतधाचरंतं ॥ ५ ॥ इंद्रोराजाजगतोयईशे ॥ सप्तहोतासप्तधाविक्लृप्तः ॥ परेणतंतुंपरि षिच्यमानं ॥ अंतरादित्येमनसाचरंतं ॥ देवानांहृदयंब्रह्मान्वविंदत् ॥ ब्रह्मैतद्ब्रह्मणउज्जभार ॥ अर्कंश्चोतंतंसरिरस्यम ध्ये ॥ आयस्मिन्सप्तपेरवः ॥ मेहंतिबहुलांश्रियं ॥ बह्वश्वामिंद्रगोमतीं ॥ ६ ॥ अच्युतांबहुलांश्रियं ॥ सहरिर्वसुवित्त मः ॥ पेरुरिंद्रायपिन्वते ॥ बह्वश्वामिंद्रगोमतीं ॥ अच्युतांबहुलांश्रियं ॥ मह्यमिंद्रोनियच्छतु ॥ शतंशताअस्ययुक्ताह रीणां ॥ अर्वाङायातुवसुभीरश्मिरिंद्रः ॥ प्रमंहमाणोबहुलांश्रियं ॥ रश्मिरिंद्रःसवितामेनियच्छतु ॥ ७ ॥ घृतंतेजोमधु मदिंद्रियं ॥ मय्ययमग्निर्दधातु ॥ हरिःपतंगःपटरीसुपर्णः ॥ दिविक्षयोनभसायएति ॥ सनइंद्रःकामवरंददातु ॥ पंचारंच क्रंपरिवर्ततेपृथु ॥ हिरण्यज्योतिःसरिरस्यमध्ये ॥ अजस्रंज्योतिर्नभसासर्पदेति ॥ सनइंद्रःकामवरंददातु ॥ सप्तयुंजंतिरथ

मेकंचक्रं ॥ ८ ॥ एकोअश्वोवहतिसप्तनामा ॥ त्रिनाभिंचक्रमजरमनर्वं ॥ येनेमाविश्वाभुवनानितस्थुः ॥ भद्रंपश्यंतउपसेदु रग्रे ॥ तपोदीक्षामृषयःसुवर्विदः ॥ ततःक्षत्रंबलमोजश्चजातं ॥ तदस्मैदेवाअभिसन्नमंतु ॥ श्वेतꣳरश्मिंवोभुज्यमानं ॥ अपां नेतारंभुवनस्यगोपां ॥ इंद्रंनिचिक्युःपरमेव्योमन् ॥ ९ ॥ रोहिणीःपिंगलाएकरूपाः ॥ क्षरंतीःपिंगलाएकरूपाः ॥ शतꣳस हस्राणिप्रयुतानिनाव्यानां ॥ अयंयःश्वेतोरश्मिः ॥ परिसर्वमिदंजगत् ॥ प्रजांपशून्धनानि ॥ अस्माकंददातु ॥ श्वेतोरश्मिः परिसर्वंबभूव ॥ सुवन्मह्यंपशून्विश्वरूपान् ॥ पतंगमक्तमसुरस्यमायया ॥ १० ॥ हृदापश्यंतिमनसामनीषिणः ॥ समुद्रेअं तःकवयोविचक्षते ॥ मरीचीनांपदमिच्छंतिवेधसः ॥ पतंगोवाचंमनसाबिभर्ति ॥ तांगंधर्वोवदद्गर्भेअंतः ॥ तांद्योतमानाꣳ स्वर्यंमनीषां ॥ ऋतस्यपदेकवयोनिपांति ॥ येग्राम्याःपशवोविश्वरूपाः ॥ विरूपाःसंतोबहुधैकरूपाः ॥ अग्निस्ताꣳअग्रेप्रमु मोक्तुदेवः ॥ ११ ॥ प्रजापतिःप्रजयासंविदानः ॥ वीतꣳस्तुकेस्तुके ॥ युवमस्मासुनियच्छतं ॥ प्रप्रयज्ञपतिंतिर ॥ येग्रा म्याःपशवोविश्वरूपाः ॥ विरूपाःसंतोबहुधैकरूपाः ॥ तेषाꣳसप्तानामिहरंतिरस्तु ॥ रायस्पोषायसुप्रजास्त्वायसुवीर्याय ॥ य आरण्याःपशवोविश्वरूपाः ॥ विरूपाःसंतोबहुधैकरूपाः ॥ १२ ॥ वायुस्ताꣳअग्रेप्रमुमोक्तुदेवः ॥ प्रजापतिःप्रजयासंविदा नः ॥ इडायैसृप्तंघृतवच्चराचरं ॥ देवाअन्वविंदन्गुहाहितं ॥ यआरण्याःपशवोविश्वरूपाः ॥ विरूपाःसंतोबहुधैकरूपाः ॥ तेषाꣳसप्तानामिहरंतिरस्तु ॥ रायस्पोषायसुप्रजास्त्वायसुवीर्याय ॥ १३ ॥ इतिसुवर्णघर्मानुवाकः ॥ ॥ ७ ॥

## ॥ ५८ ॥ अथइंद्रियंवेतिखंडद्वयम् ॥

श्रीगणेशायनमः ॥ ॐ ॥ इंद्रियंवाएतदस्मिँल्लोकेयद्धियद्धाभिषिंचतींद्रियमेवास्मिंस्तद्दधाति रसोवाएषओषधिवनस्पति

पुयन्मधुयन्मध्वाभिषिंचतिरसमेवास्मिंस्तद्दधाति तेजोवाएतत्पशूनांयद्घृतंयद्घृतेनाभिषिंचतितेजएवास्मिंस्तद्दधात्यमृतंवाएत
दस्मिँल्लोकेयदापोयदद्भिरभिषिंचत्यमृतत्वमेवास्मिंस्तद्दधाति सोभिषिक्तोभिषेक्त्रेब्राह्मणायहिरण्यंदद्यात्सहस्रंदद्यात्क्षेत्रंचतुष्पा
द्दद्यादथाप्याहुरसंख्यातमेवापरिमितंदद्यादपरिमितोवैक्षत्रियोपरिमितस्यावरुध्याइत्यथास्मैसुराकंसंहस्तआदधाति स्वादिष्ठ
यामदिष्ठयापवस्वसोमधारया ॥ इंद्रायपातवेसुतइतितांपिवेद्यदत्रशिष्टंरसिनःसुतस्ययदिंद्रोअपिवच्छचीभिः ॥ इदंतदस्यमनसा
शिवेनसोमंराजानमिहभक्षयामि ॥ अभित्वावृषभासुतेसुतंसृजामिपीतये ॥ तृंपाव्यश्नुहीमदमितियोहवावसोमपीथःसुरायांप्र
विष्टःसहैवैतेनैंद्रेणमहाभिषेकेणाभिषिक्तस्यक्षत्रियस्यभक्षितोभवति नसुरातांपीत्वाभिमंत्रयेतापामसोमंशंनोभवेतितद्यथैवादः
प्रियःपुत्रःपितरंप्रियावाजायापतिंसुखंशिवमुपस्पृशत्याविस्रस एवंहवैतेनैंद्रेणमहाभिषेकेणाभिषिक्तस्यक्षत्रियस्यसुरावासोमोवा
न्यद्वान्नाद्यंसुखंशिवमुपस्पृशत्याविस्रसः ॥ १ ॥ एतेनहवाऐंद्रेणमहाभिषेकेणतुरःकावषेयोजनमेजयंपारिक्षितमभिषिषेचत
स्मादुजनमेजयःपारिक्षितःसमंतंसर्वतःपृथिवींजयन्परीयायाश्वेनचमेध्येनेजेतदेषाभियज्ञगाथागीयते ॥ आसंदीवतिधान्यादं
रुक्मिणंहरितस्रजं ॥ अश्वंवबंधसारंगंदेवेभ्योजनमेजयइत्येतेनहवाऐंद्रेणमहाभिषेकेणच्यवनोभार्गवःशार्यातंमानवमभिषिषे
चतस्मादुशार्यातोमानवःसमंतंसर्वतःपृथिवींजयन्परीयायाश्वेनचमेध्येनेजे देवानांहापिसत्रेगृहपतिरासैतेनहवाऐंद्रेणमहाभिषे
केणसोमशुष्माबाजरत्नायनःशतानीकंसात्राजितमभिषिषेचतस्मादुशतानीकःसात्राजितः समंतंसर्वतःपृथिवींजयन्परीयाया
श्वेनमेध्येनेजंएतेनहवाऐंद्रेणमहाभिषेकेणपर्वतनारदावांबाष्ठ्यमभिषिषिचतुस्तस्मादांबाष्ठ्यःसमंतंसर्वतःपृथिवींजयन्परीया
याश्वेनचमेध्येनेजएतेनहवाऐंद्रेणमहाभिषेकेण पर्वतनारदौयुधांश्रौष्ठिमौग्रसैन्यमभिषिषिचतुस्तस्मादुयुधांश्रौष्ठिरौग्रसैन्यःस

मंतंसर्वतःपृथिवींजयन्परीयायाश्वेनचमेध्येनेजएतेनहवाऐंद्रेण महाभिषेकेणकश्यपोविश्वकर्माणंभौवनमभिषिषेचतस्मादुवि श्वकर्माभौवनःसमंतंसर्वतःपृथिवींजयन्परीयायाश्वेनचमेध्येनेजेभूमिर्हजगावित्युदाहरंतिनमामर्त्यःकश्चनदातुमर्हतिविश्वकर्म न्भौवनमांदिदासिथ ॥ निमंक्ष्येहंसलिलस्यमध्येमोघस्तएषकश्यपायाससंगरइत्येतेनहवाऐंद्रेणमहाभिषेकेणवसिष्ठःसुदासंपैज वनमभिषिषेचतस्मादुसुदाःपैजवनः समंतंसर्वतःपृथिवींजयन्परीयायाश्वेनचमेध्येजेजएतेनहवाऐंद्रेणमहाभिषेकेणसंवर्तआंगि रसोमरुत्तमाविक्षितमभिषिषेचतस्मादुमरुत्तआविक्षितःसमंतंसर्वतःपृथिवींजयन्परीयायाश्वेनचमेध्येनेजे तदप्येषश्लोकोभिगी तोमरुतःपरिवेष्टारोमरुत्तस्यावसन्गृहे ॥ आविक्षितस्यकामप्रेर्विश्वेदेवाःसभासदइति ॥ २ ॥ इंद्रियंवेतिखंडद्वयंसमाप्तं ॥

## ॥ ५९ ॥ अथमहापुरुषविद्या[1] ॥

श्रीः ॥ ॐ जितंतेपुंडरीकाक्षनमस्तेविश्वभावन ॥ सुब्रह्मण्यनमस्तेस्तुमहापुरुषपूर्वज ॥ १ ॥ नमोहिरण्यगर्भायप्रधानाव्य क्तरूपिणे ॥ ॐनमोवासुदेवायशुद्धज्ञानस्वरूपिणे ॥ २ ॥ देवानांदानवानांचसामान्यमसिदैवतं ॥ सर्वदाचरणद्वंद्वंव्रजा मिशरणंतव ॥ ३ ॥ एकस्त्वमसिलोकस्यस्रष्टासंहारकस्तथा ॥ अध्यक्षश्चानुमंताचगुणमायासमावृतः ॥ ४ ॥ संसारसागरं घोरमनंतंक्लेशभाजनं ॥ त्वामेवशरणंप्राप्यनिस्तरंतिमनीषिणः ॥ ५ ॥ नतेरूपंनचाकारोनायुधानिनचास्पदं ॥ तथापिपुरुषा कारोभक्तानांत्वंप्रकाशसे ॥ ६ ॥ नैवकिंचित्परोक्षंतेनप्रत्यक्षोसिकस्यचित् ॥ नैवकिंचिदसिद्धंतेनचसिद्धोसिकस्यचित् ॥७॥ कार्याणांकारणंपूर्णवचसांवाच्यमुत्तमं ॥ योगिनांपरमांसिद्धिंवदंतिपरमंविदः ॥ ८ ॥ अहंभीतोस्मिदेवेशसंसारेऽस्मिन्भया

१ धर्मसिंधौदेवपूजांप्रकृत्य 'स्वर्णघर्मानुवाकेनमहापुरुषविद्यया' इत्युक्तमासीदतोऽत्राभिषेकसूक्तेषुपौराणायाअपिमहापुरुषविद्यायानिवेशःकृतः ॥

वहे ॥ त्राहिमांपुंडरीकाक्षनजानेशरणंपरं ॥ ९ ॥ कालेष्वपिचसर्वेषुदिक्षुसर्वासुचाच्युत ॥ शरीरेपिगतौचापिवर्ततेमेमहद्भयं ॥ १० ॥ त्वत्पादकमलादन्यन्नमेजन्मांतरेष्वपि ॥ निमित्तंकुशलस्यास्तियेनगच्छामिसद्गतिं ॥ ११ ॥ विज्ञानंयदिदंप्राप्तंय दिदंज्ञानमर्जितं ॥ जन्मांतरेपिमेदेवमाभूदस्यपरिक्षयः ॥ १२ ॥ दुर्गतावपिजातायांत्वंगतिस्त्वंमतिर्मम ॥ यदिनाथंचविंदे यंतावतास्मिकृतीसदा ॥ १३ ॥ अकामकलुषंचित्तंममतेपादयोःस्थितं ॥ कामयेवैष्णवत्वंतुसर्वजन्मसुकेवलं ॥ १४ ॥ पुरुष स्यहरेःसूक्तंस्वर्ग्यंधन्यंयशस्करं ॥ आत्मज्ञानमिदंपुण्यंयोगज्ञानमिदंपरं ॥ १५ ॥ इत्येवमनयास्तुत्यास्तुत्वादेवंजनार्दनं ॥ किंकरोस्मीतिचात्मानंदेवायैवनिवेदयेत् ॥ १६ ॥ इतिमहापुरुषविद्यासमाप्ता ॥ ॥ ७ ॥

## ॥ ६० ॥ अथदेवेप्रारंभः ॥

श्रीः ॥ ॐ गणानांत्वागणपतिंहवामहेकविंकवीनामुपमश्रवस्तमं ॥ ज्येष्ठराजंब्रह्मणांब्रह्मणस्पतआनःशृण्वन्नूतिभिःसीदसा दनं ॥ ॐ नमोमहद्भ्योनमोऽअर्भकेभ्योनमोयुवभ्योनमऽआशिनेभ्यः ॥ यजामदेवान्यदिशक्नवाममाज्यायसःशंसमावृक्षिदेवाः ॥ १ ॥ ममत्तुनःपरिज्मावसर्हाममत्तुवातोऽअपांवृषण्वान् ॥ शिशीतमिंद्रापर्वतायुवंनस्तन्नोविश्वेवरिवस्यंतुदेवाः ॥ २ ॥ कु थातेऽअग्नेशुचयंतऽआयोर्ददाशुर्वाजेभिराशुषाणाः ॥ उभेयत्तोकेतनयेदधानाऋतस्यसामन्रणयंतदेवाः ॥ ३ ॥ यज्ञेनयज्ञ मयजंतदेवास्तानिधर्माणिप्रथमान्यासन् ॥ तेहनाकंमहिमानःसचंतयत्रपूर्वेसाध्याःसंतिदेवाः ॥ ४ ॥ परांशुभ्राऽअयासोय व्यासाधारण्येवंमरुतोमिमिक्षुः ॥ नरोदसीऽअपनुदंतघोराजुषंतवृधंसख्यायदेवाः ॥ ५ ॥ त्वेरायइंद्रतोशतमाःप्रणेतारःक स्यचिदृतायोः ॥ तेषुणोमरुतोमृळयंतुयेस्मापुरागातूयंतीवदेवाः ॥ ६ ॥ उभाशंसानर्यामामविष्टामुभेमामूतीऽअवसासचेतां ॥

भूरिंचिद्र्यःसुदास्तरायेषामदंतऽइषयेमदेवाः ॥ ७ ॥ उतनईंमरुतोवृद्धसेनास्मद्रोदसीसमनसःसदंतु ॥ पृषदश्वासोवन यो नरथारिशादसोमित्रयुजोनदेवाः ॥ ८ ॥ तवंस्यामपुरुवीरस्यशर्मन्नुरुशंसस्यवरुणप्रणेतः ॥ यूयंनःपुत्राऽअदितेरदब्धाऽ अभिक्षमध्वंयुज्यायदेवाः ॥ ९ ॥ दिवश्चिदातेरुचयंतरोकाऽउषोविभातीरनुभासिपूर्वीः ॥ अपोयदग्नउशधग्वनेषुहोतुर्मंद्र स्यपनयंतदेवाः ॥ १० ॥ शंसामहामिंद्रंयस्मिन्विश्वाऽआकृष्टयःसोमपाःकाममव्यन् ॥ यंसुक्रतुंधिषणेविभ्वतष्टंघनंवृत्राणां जनयंतदेवाः ॥ ११ ॥ त्रिरुत्तमादूणशारोचनानित्रयोराजंत्यसुरस्यवीराः ॥ ऋतावानऽइषिरादूळभासस्त्रिरादिवोविदथेसं तुदेवाः ॥ १२ ॥ नापांभूतनवोतीतृषामानिःशस्ताकृभवोयज्ञेऽअस्मिन् ॥ समिंद्रेणमदथसंमरुद्भिःसंराजभीरत्नधेयायदेवाः ॥ १३ ॥ अप्रतीतोजयतिसंधनानिप्रतिजन्यान्युतयासजन्या ॥ अवस्यवेयोवरिवःकृणोतिब्रह्मणेराजातमवतिदेवाः ॥ १४ ॥ कोवस्त्रातावसवःकोवरूताद्यावाभूमीऽअदितेत्रासीथांनः ॥ सहीयसोवरुणमित्रमर्तात्कोवोध्वरेवरिवोधातिदेवाः ॥ १५ ॥ त्वमपोयदवेतुर्वशायारमयःसुदुघाःपारइंद्र ॥ उग्रमयातमवहोहकुत्सांसंहयद्वामुशनारंतदेवाः ॥ १६ ॥ मूर्धानंदिवोऽअ रतिंपृथिव्यावैश्वानरमृतऽआजातमग्निं ॥ कविंसम्राजमतिथिंजनानामासन्नापात्रंजनयंतदेवाः ॥ १७ ॥ नाभिंयज्ञानांसदनं रयीणांमहामाहावमभिसंनवंत ॥ वैश्वानरंरथ्यमध्वराणांयज्ञस्यकेतुंजनयंतदेवाः ॥ १८ ॥ तेनोरायोद्युमतोवाजवतोदाता रोभूतनृवतःपुरुक्षोः ॥ दशस्यंतोदिव्याःपार्थिवासोगोजाताऽअप्यामृळताचदेवाः ॥ १९ ॥ येकेचज्मामहिनोऽअहिमाया दिवोजज्ञिरेऽअपांसधस्थे ॥ तेऽअस्मभ्यमिषयेविश्वमायुःक्षपउस्रावरिवस्यंतुदेवाः ॥ २० ॥ अस्मेरुद्रामेहनापर्वतासोवृत्रहत्ये भरहूतौसजोषाः ॥ यःशंसतेस्तुवतेधायिपज्रइंद्रज्येष्ठाऽअस्माँअवंतुदेवाः ॥ २१ ॥ परिप्रधन्वेंद्रायसोमस्वादुर्मित्रायपूष्णेभगा

य ॥ इंद्रस्तेसोमसुतस्यपेयाःक्रत्वेदक्षायविश्वेचदेवाः ॥ २२ ॥ प्रयाजान्मेऽअनुयाजांश्चकेवलानूर्जस्वंतंहविषोदत्तभागं ॥ घृतं चापांपुरुषंचौषधीनामग्नेश्चदीर्घमायुरस्तुदेवाः ॥ २३ ॥ ऐभिर्ददेवृष्ण्यापौंस्यानियेभिरौक्षद्वृत्रहत्यायवज्री ॥ येकर्मणःक्रियमाणस्यमह्नऋतेकर्ममुदजायंतदेवाः ॥ २४ ॥ अनृक्षराऋजवःसंतुपंथायेभिःसखायोयंतिनोवरेयं ॥ समर्यमासंभगोनोनिनीयात्संजास्पत्यंसुयममस्तुदेवाः ॥ २५ ॥ गृभ्णामितेसौभगत्वायहस्तंमयापत्याजरदष्टिर्यथासः ॥ भगोऽअर्यमासवितापुरंधिर्मह्यंत्वादुर्गार्हपत्यायदेवाः ॥ २६ ॥ समस्मिन्जायमानऽआसतग्नाऽउतेमवर्धन्नद्य१स्वगूर्ताः ॥ महेयत्त्वापुरूरवोरणायावर्धयन्दस्युहत्यायदेवाः ॥ २७ ॥ ब्रह्मचारीचरतिवेविषद्विषःसदेवानांभवत्येकमंगं ॥ तेनजायामन्वविंदद्बृहस्पतिःसोमेननीतांजुह्वं१नदेवाः ॥२८॥ सद्योजातोव्यमिमीतयज्ञमग्निर्देवानामभवत्पुरोगाः ॥ अस्यहोतुःप्रदिश्यृतस्यवाचिस्वाहाकृतंहविरदंतुदेवाः ॥२९॥ इदंतेपात्रंसनवित्तमिंद्रपिबासोममेनाशतक्रतो ॥ पूर्णऽआहावोमदिरस्यमध्वोयंविश्वऽइदभिहर्यंतिदेवाः ॥ ३० ॥ ॐ जातवेदसेसुनवामसोममरातीयतोनिदहातिवेदः ॥ सनःपर्षदतिदुर्गाणिविश्वानावेवसिंधुंदुरितात्यग्निः ॥ ॐ त्र्यंबकंयजामहेसुगंधिंपुष्टिवर्धनं ॥ उर्वारुकमिवबंधनान्मृत्योर्मुक्षीयमामृतात् ॥ ॐ गौरीर्मिमायसलिलानितक्षत्येकपदीद्विपदीसाचतुष्पदी ॥ अष्टापदीनवपदीबभूवुषीसहस्राक्षरापरमेव्योमन् ॥ ॐ सक्तुमिवतितउनापुनंतोयत्रधीरामनसावाचमक्रत ॥ अत्रासखायःसख्यानिजानतेभद्रैषांलक्ष्मीर्निहिताधिवाचि ॥ ॐ प्रणोदेवीसरस्वतीवाजेभिर्वाजिनीवती ॥ धीनामवित्र्यवतु ॥ ॐ यागुंगूर्यासिनीवालीयाराकायासरस्वती ॥ इंद्राणीमह्वऊतयेवरुणानींस्वस्तये ॥ ॐ निषुसीदगणपतेगणेषुत्वामाहुर्विप्रतमंकवीनां ॥ नऽऋतेत्वत्क्रियतेकिंचनारेमहामर्कंमघवन्चित्रमर्च ॥ ॐ आतूनइंद्रक्षुमंतंचित्रंग्राभंसंगृभाय ॥ महाहस्तीदक्षिणेन ॥ ॐ वषट्तेविष्ण

वासआकृंणोमितन्मैंजुषस्वशिपिविष्टहृव्यं ॥ वर्धंतुत्वासुष्टुतयोगिरोंमेयूयंपातस्वस्तिभिःसदानः ॥ ॐ राज्ञाधिराजायप्रसह्यसा हिने ॥ नमोवयंवैश्रवणायंकुर्महे ॥ समेकामान्कामकामायमह्यं ॥ कामेश्वरोवैश्रवणोददातु ॥ कुबेरायवैश्रवणाय ॥ महारा जायनमः ॥ ॐ स्वस्ति ॥ साम्राज्यंभौज्यंस्वाराज्यंवैराज्यंपारमेष्ठ्यंराज्यंमाहाराज्यमाधिपत्यमयंसमंतपर्यायीस्यात्सार्वभौमः सार्वायुषआंतादापरार्धात् ॥ पृथिव्यैसमुद्रपर्यंतायाएकराळिति ॥ तदप्येषश्लोकोभिगीतोमरुतःपरिवेष्टारोमरुत्तस्यावसन्गृ हे ॥ आविक्षितस्यकामप्रेर्विश्वेदेवाःसभासदइति ॥ योवैतांब्रह्मणोवेद । अमृतेनावृतांपुरीं ॥ तस्मैब्रह्मचब्रह्माच ॥ आयुःकीर्तिंप्र जांददुः ॥ ॐ नारायणायविद्महे वासुदेवायधीमहि ॥ तन्नोविष्णुःप्रचोदयात् ॥ तत्पुरुषायविद्महे महादेवायधीमहि ॥ तन्नो रुद्रःप्र० ॥ एकदंतायविद्महे वक्रतुंडायधीमहि ॥ तन्नोदंतिःप्र० ॥ भास्करायविद्महे महद्युतिकरायधीमहि ॥ तन्नोआदित्यःप्र० ॥ महालक्ष्मीचविद्महेविष्णुपत्नीचधीमहि ॥ तन्नोलक्ष्मीःप्रचोदयात् ॥ इतिमंत्रपुष्पमंत्राः ॥ एतदन्येपियथादैवतमूहनीयाः ॥

## ॥ ६१ ॥ अथपवमानपंच[1]सूक्तसर्वानुक्रमः ॥

श्रीः ॥ ॐ ॥ सहस्रशीर्षाषोळशनारायणःपौरुषमानुष्टुभंत्रिष्टुबंतं ॥ १ ॥ ॥ नवमंमंडलंपावमानंसौम्यंस्वादिष्ठयादशमधु च्छंदाःपवस्वमेधातिथिरेषशुनःशेपःसनहिरण्यस्तूपः समिद्धएकादशकाश्यपोसितोदेवलोवाविंशतिःसूक्तान्याद्यमाप्रियश्चतुर नुष्टुबंतंमंद्रयानंवासृग्रमेतेसोमाःपरिप्रियाप्रस्वानासउपास्मैसोमाअसृग्रं ॥ १ ॥ ॥ सोमःपरिप्राष्टावेषधियाप्रतेप्रनिम्नेनेवप रिसुवानःसप्तयत्सोमप्रकविरेतेधावंत्ये तेसोमासःसोमाअसृग्रं प्रसोमासःपवस्वपड्दृळ्हच्युतआगस्त्यस्तमममृक्षंतेध्मवाहोदार्ढच्यु

१ पंचसूक्तक्रमश्चेत्थम्—पौरुषंपावमानंचनतमंहोइतीतिच ॥ अस्यवामीयसूक्तंचपंचसूक्तान्यनुक्रमात् ॥ तत्रपुरुषसूक्तंपूर्वंपूजाबांगतमस्ति ॥

तएषकविर्नृमेधएषवाजीप्रियमेधःप्रास्यन्नृमेधःप्रधाराबिंदुःप्रसोमासोगोतमःप्रसोमासःश्यावाश्वःप्रसोमासस्तृतःप्रसुवानआनः पवस्वप्रभूवसुरसर्जिससुतोरहूगणएषउस्यआशुरर्पबृहन्मतिःपुनानःप्रयेगावोमेध्यातिथिर्जनयन्योअत्यइव ॥ २ ॥ ॥ प्रणोया स्यःसपवस्वासृग्रन्नयासोमः पंचकविर्भार्गवस्तंत्वापवस्वोत्तेशुष्मासउचथ्योध्वर्यो परिद्युक्षउत्तेचतुष्कमवत्सारोस्यप्रत्नांयवंयवंप रिसोमः प्रतेधारास्तरत्सपवस्वप्रगायत्रेणोपांत्यापुरउष्णिगयावीतीत्रिंशदमहीयुरेते असृग्रंजमदग्निरापवस्वनिध्रुविःकाश्यपोबृ षासोमकश्यपः ॥३॥ ॥ हिन्वंतिभृगुर्वारुणिर्जमदग्निर्वापवस्वशतंवैखानसाअष्टादश्यनुष्टुप्परास्तिस्रआग्नेय्यस्त्वंसोमासिद्वात्रिं शद्भरद्वाजःकश्यपोगोतमोत्रिर्विश्वामित्रोजमदग्निर्वसिष्ठइतीहतृचाःसप्तर्षयः शेषेपवित्रोवसिष्ठोवोभौवापवस्वसोमतिस्रोनित्य द्विदागायत्र्योवितानस्तिस्रःपौष्ण्योवायत्तेपवित्रंपंचाग्नेय्यःसावित्र्यग्निसावित्री वैश्वदेवीवासामंत्यास्त्रिंशीपुरउष्णिक्सप्तविंश्य नुष्टुबंत्येचतेपावमान्यध्येतृस्तुती ॥ ४ ॥ ॥ नतंशैलूषिःकुल्मलबर्हिषोवामदेव्योवांहोमुग्वैश्वदेवमुपरिष्टाद्बार्हतमंत्यात्रि ष्टुप् ॥ ॥ इतिवैसप्तोनैंद्रोलबआत्मानंतुष्टाव ॥ ॥ अस्यद्विपंचाशदल्पस्तवंत्वेतत्संशयोत्थापनप्रश्नप्रतिवाक्यान्यत्रप्रायेण ज्ञानमोक्षाक्षरप्रशंसाचपंचपाद्सांकंजानांयद्गायत्रेयं सशिंक्तेसप्तार्धगर्भागौरीरितिजगत्यएतदंतंतुवैश्वदेवंतस्याःसमुद्राइतिवा चःसमुद्रा आपोक्षरंसाप्रस्तारपंक्तिःशकमयमितिशकधूमउक्षाणंपृश्निमितिसोमस्त्रयःकेशिनइत्यग्निः सूर्योवायुश्चकेशिनश्चत्वा रिवाग्वाच इंद्रंमित्रंसौर्योद्वादशेतिसंवत्सरसंस्थंकालचक्रवर्णनं यस्तेसरस्वत्यैयज्ञेनसाध्येभ्यःपरानुष्टुप्सौरीपर्जन्याग्निदेवतावां त्यासरस्वतेसूर्यायवा ॥ श्रीमहाविष्णुप्रीत्यर्थंजपेअभिषेकेवाविनियोगः ॥ ५ ॥ ॥ ६७ ॥

बिलपृष्ठंत्रिःसंमृज्य ततोदर्भाणांमूलैर्दंडस्याधस्ताद्बिलपृष्ठादारभ्ययावदुपरिष्टाद्बिलंतावत्त्रिःसंमृज्य प्रोक्ष्य प्रताप्य आज्यस्था
ल्याउत्तरतोनिधाय तैरेवदर्भैर्जुहूंचैवमेवसंमृज्य प्रोक्ष्य प्रताप्य स्रुवादुत्तरतोनिधाय दर्भानद्भिःक्षालयित्वाऽग्नावनुप्रहरेत् ॥
ततःसुश्रृतंचरुंस्रुवगृहीतेनाज्येनाभिघार्य उदगुद्वास्य अग्न्याज्ययोर्मध्येननीत्वा आज्याद्दक्षिणतोबर्हिषिसांतरमासाद्य पुनरप्य
भिघार्य नवाभिघार्य अग्न्यायतनादेकादशांगुलमितेदेशेऽग्निंसमंत्रमभ्यर्चयेत् ॥ विश्वानिनइतितिसृणांवसुश्रुतोग्निस्त्रिष्टुप् द्वयो
रर्चनेऽन्त्यायाउपस्थानेविनियोगः ॥ ॐ विश्वानिनोदुर्गहाजातवेदः । ॐ सिंधुंननावादुरितातिपर्षि । ॐ अग्नेअत्रिवन्नमसागृ
णानः । ॐ अस्माकंबोध्यविताततूनां । ॐ यस्त्वाहृदाकीरिणामन्यमानः । ॐ अमर्त्यंमर्त्योजोहवीमि । ॐ जातवेदोयशोअ
स्मासुधेहि । ॐ प्रजाभिरग्नेअमृतत्वमश्यां । ॐ यस्मैत्वंसुकृतेजातवेदउलोकमग्नेकृणवःस्योनं । अश्विनंसपुत्रिणंवीरवंतंगोमंतं
रयिंनशतेस्वस्ति । आत्मानंचालंकृत्य हस्तंप्रक्षाल्य इध्मबंधनरज्जुमिध्मस्थानेनिधायपाणिनेध्ममादाय मूलमध्याग्रेषुस्रुवेणत्रिर
भिघार्य मूलमध्ययोर्मध्यभागेगृहीत्वा ॥ अयंतेवामदेवोजातवेदाअग्निस्त्रिष्टुप् इध्महवनेविनियोगः । ॐ अयंतइध्मआत्माजा
तवेदस्तेनेध्यस्ववर्धस्वचेद्धवर्धयचास्मान्प्रजयापशुभिर्ब्रह्मवर्चसेनान्नाद्येनसमेधयस्वाहा अग्नयेजातवेदसइदंनमम । आघारहोमे
वायव्यकोणमारभ्याग्नेयकोणपर्यंतं प्रजापतिपदंमनसास्मरन्प्रजापतयेस्वाहा प्रजापतयइदंनमम । नैर्ऋतकोणमारभ्यईशानी
कोणपर्यंतं प्रजापतयेस्वाहा प्रजापतयइदंनमम । उत्तरतःअग्नयेस्वाहा अग्नयइदंनमम । दक्षिणतःसोमायस्वाहा सोमायेदं
नमम ॥ अथप्रधानाज्यहोमः ॥ ॐ सावित्र्यैस्वाहा सावित्र्याइदंनमम । ॐ ब्रह्मणेस्वाहा ब्रह्मणइदंनमम । ॐ श्रद्धायैस्वाहा
श्रद्धायाइदंनमम । ॐ मेधायैस्वाहा मेधायाइदंनमम । ॐ प्रज्ञायैस्वाहा प्रज्ञायाइदंनमम । ॐ धारणायैस्वाहा धारणाया

इदंनमम । ॐ सदसस्पतयेस्वाहा सदसस्पतयइदंनमम । ॐ अनुमतयेस्वाहा अनुमतयइदंनमम । ॐ छंदोभ्यऋषिभ्यःस्वाहा छंदोभ्यऋषिभ्यइदंनमम। (अथपंचावत्तीचेत्तिष्ठन्। ॐप्रसूतोभक्षमकरंचरावपिस्तोमंचेमंप्रथमःसूरिरुन्मृजे। सुतेसातेनयद्यागमंवांप्रतिविश्वामित्रजमदग्नीदमे। इतिपठित्वोपविश्यएकमवदानमधिकंगृह्यतामित्याचार्यंप्रार्थयेत्)। ततःस्रुवेणस्रुच्याज्यमुपस्तीर्यचरुंद्विरवदायपात्रस्थमभिघार्यअवत्तंचाभिघार्य (पंचावत्तीचेत्तदाचरुंत्रिरवदाय)॥ अग्निमीळेवैश्वामित्रोमधुच्छंदाअग्निर्गायत्री उत्सर्जनप्रधानगृहसिद्धचरुहोमेविनियोगः ॥ ॐ अग्निमीळेपुरोहितंयज्ञस्यदेवमृत्विजं । होतारंरत्नधातमंस्वाहा ॥ अग्नयइदंनमम ॥ १ ॥ कुषुंभकस्तदगस्त्योसूणसूर्याअनुष्टुप् उत्सर्जनप्रधानगृह० ॥ ॐ कुषुंभकस्तदब्रवीद्गिरेःप्रवर्तमानकः । वृश्चिकस्यारसंविषमरसंवृश्चिकतेविषंस्वाहा । असूणसूर्येभ्यइदंनमम ॥ २ ॥ त्वमग्नेशौनकोगृत्समदोग्निर्जगती उत्सर्जन० ॥ ॐ त्वमग्नेद्युभिस्त्वमाशुशुक्षणिस्त्वमद्भ्यस्त्वमश्मनस्परि । त्वंवनेभ्यस्त्वमोषधीभ्यस्त्वंनृणांनृपतेजायसेशुचिःस्वाहा ॥ अग्नयइदंनमम ॥ ३ ॥ आवदन्गृत्समदःशकुंतोजगती उत्सर्जनप्रधान० ॥ ॐ आवदंस्त्वंशकुनेभद्रमावदतूष्णीमासीनःसुमतिंचिकिद्धिनः । यदुत्पतन्वदसिकर्करिर्यथाबृहद्वदेमविदथेसुवीराःस्वाहा ॥ शकुंतायेदंनमम ॥ ४ ॥ सोमस्यमागाथिनोविश्वामित्रोग्निस्त्रिष्टुप् उत्सर्जन० ॥ ॐ सोमस्यमातवसंवक्ष्यग्नेवह्निंचकर्थविदथेयजध्यै ॥ देवाँअच्छादीद्यद्युंजेअद्रिंशमायेअग्नेतन्वंजुषस्वस्वाहा ॥ अग्नयइदंनमम ॥५॥ गृणानाभार्गवोजमदग्निर्मित्रावरुणौगायत्री उत्सर्जन० ॥ ॐ गृणानाजमदग्निनायोनावृतस्यसीदतं । पातंसोममृतावृधास्वाहा ॥ मित्रावरुणाभ्यामिदंनमम ॥ ६ ॥ त्वांह्यग्नेगोतमोवामदेवोग्निरष्टिः उत्सर्जन० ॥ ॐ त्वांह्यग्नेसदमित्समन्यवोदेवासोदेवमरतिंन्येरिरइतिक्रत्वान्येरिरे । अमर्त्यंयजतमर्त्येष्वादेवमादेवंजनतप्रचेतसंविश्वमादेवंज

नतप्रन्चैतसंस्वाहा ॥ अग्नयइदंनमम ॥ ७ ॥ धामंतेगोतमोवामदेवआपोजगती उत्सर्जन० ॥ ॐ धामंतेविश्वंभुवनमधिश्रितमंतःसमुद्रेहृद्यं१तरायुषि ॥ अपामनीकेसमिथेयआभृतस्तमश्यामधुमंतंतऊर्मिस्वाहा ॥ अग्नयइदंनमम ॥ ८ ॥ अबोध्यात्रेयोबुधगविष्ठिरावग्निस्त्रिष्टुप् उत्सर्जन० ॥ ॐ अबोध्यग्निःसमिधाजनानांप्रतिधेनुमिवायतीमुषासं । यह्वाइवप्रवयामुज्जिहानाःप्रभानवःसिस्रतेनाकमच्छस्वाहा ॥ अग्नयइदंनमम ॥ ९ ॥ गंतानआत्रेयएवयामरुन्मरुतोतिजगती उत्सर्जन० ॥ ॐ गंतानोयज्ञंयज्ञियाःसुशमिश्रोताहवमरक्षएवयामरुत्॥ ज्येष्ठासोनपर्वतासोव्योमनियूयंतस्यप्रचेतसःस्यातदुर्धर्तवोनिदःस्वाहा ॥ मरुन्यइदंनमम ॥ १० ॥ त्वंह्यग्नेबार्हस्पत्योभारद्वाजोग्निस्त्रिष्टुप् उत्सर्जन० ॥ ॐ त्वंह्यग्नेप्रथमोमनोतास्याधियोअभवोदस्महोता ॥ त्वंसींवृषन्नकृणोर्दुष्टरीतुसहोविश्वस्मैसहसेसहध्यैस्वाहा ॥ अग्नयइदंनमम ॥ ११ ॥ योनःस्वःपायुर्भारद्वाजोविश्वेदेवाअनुष्टुप् उत्सर्जन० ॥ ॐ योनःस्वोअरणोयश्चनिष्ठ्योजिघांसति । देवास्तंसर्वेधूर्वंतुब्रह्मवर्ममांतरंस्वाहा ॥ विश्वेभ्योदेवेभ्यइदंनमम ॥ १२ ॥ अग्निंनरोमैत्रावरुणिर्वसिष्ठोग्निर्विराट् उत्सर्जन० ॥ ॐ अग्निंनरोदीधितिभिररण्योर्हस्तच्युतीजनयंतप्रशस्तं । दूरेदृशंगृहपतिमथर्युंस्वाहा ॥ अग्नयइदंनमम ॥ १३ ॥ प्रतिचक्ष्वमैत्रावरुणिर्वसिष्ठइंद्रासोमावनुष्टुप् उत्सर्जन० ॥ ॐ प्रतिचक्ष्वविचक्ष्वेंद्रश्चसोमजागृतं । रक्षोभ्योवधमस्यतमशनिंयातुमद्भ्यःस्वाहा ॥ इंद्रासोमाभ्यामिदंनमम ॥ १४ ॥ माचित्काण्वःप्रगाथइंद्रोबृहती उत्सर्जन० ॥ ॐ माचिदन्यद्विशंसतसखायोमारिषण्यत । इंद्रमित्स्तोतावृषणंसचासुतेमुहुरुक्थाचशंसतस्वाहा ॥ इंद्रायेदंनमम ॥ १५ ॥ आग्नेयाहिकाण्वःसौभरिरग्नामरुतोनुष्टुप् उत्सर्जनप्रधान० ॥ ॐ आग्नेयाहिमरुत्सखारुद्रेभिःसोमपीतये । सोभर्याउपसुष्टुतिंमादयस्वस्वर्णरेस्वाहा ॥ अग्नामरुद्भ्यइदंनमम ॥ १६ ॥ स्वादिष्ठयामधुच्छंदाःपवमानःसोमोगायत्री उत्सर्जन

प्रधानगृह० ॥ ॐ स्वादिष्ठयामदिष्ठयापवस्वसोमधारया ॥ इंद्रायपातवेसुतःस्वाहा ॥ पवमानायसोमायेदंनमम ॥१७॥ यत्तेराजन्मारीचःकश्यपःपवमानःसोमःपंक्तिः उत्सर्जनप्रधान० ॥ ॐ यत्तेराजन्छृतंहविस्तेनसोमाभिरक्षनः ॥ अरातीवामानस्तारीन्मोचनःकिंचनाममदिंद्रायेंदोपरिस्रवस्वाहा ॥ पवमानायसोमायेदंनमम ॥ १८ ॥ अग्नेबृहन्नास्यत्रितोग्निस्त्रिष्टुप् उत्सर्जनप्रधान०॥ॐ अग्नेबृहन्नुषसामूर्ध्वोअस्थान्निर्जगन्वान्तमसोज्योतिषागात् । अग्निर्भानुनारुशतास्वंगआजातोविश्वासद्मान्यप्राःस्वाहा ॥ अग्नयइदंनमम ॥ १९ ॥ समानीवःसंवननःसंज्ञानमनुष्टुप् उत्सर्जनप्रधानगृहसिद्धचरुहोमेविनियोगः ॥ ॐ समानीवआकूतिःसमानाहृदयानिवः । समानमस्तुवोमनोयथावःसुसहासतिस्वाहा ॥ संज्ञानायेदंनमम ॥२०॥ स्विष्टकृतंद्धिरभिघारयति ॥ यदस्येतिहिरण्यगर्भोग्निःस्विष्टकृदतिधृतिः स्विष्टकृद्धोमेविनियोगः ॥ ॐ यदस्यकर्मणोत्यरीरिचंयद्वान्यूनमिहाकरं । अग्निष्टस्स्विष्टकृद्विद्वान्त्सर्वंस्विष्टंसुहुतंकरोतुमे । अग्नयेस्विष्टकृतेसुहुतहुतेसर्वप्रायश्चित्ताहुतीनांकामानांसमर्धयित्रेसर्वान्नःकामान्त्समर्धयस्वाहा ॥ अग्नयेस्विष्टकृतइदंनमम ॥ त्रिसंनहनेनरुद्रं रुद्रायस्वाहा ॥ रुद्रायेदंनमम ॥ अपउपस्पृश्य ॥ सर्वैःसहप्राणानायम्य ॥ पृथ्वीतिमंत्रस्यमेरुपृष्ठऋषिःकूर्मोदेवता सुतलंछंदः आसनेविनियोगः । ॐ पृथिवित्वयाधृतालोकादेवित्वंविष्णुनाधृता । त्वंचधारयमांदेविपवित्रंकुरुचासनं । अपसर्पंतुतेभूतायेभूताभूमिसंस्थिताः । येभूताविघ्नकर्तारस्तेगच्छंतुशिवाज्ञया ॥ अपक्रामंतुभूतानिपिशाचाःसर्वतोदिशं । सर्वेषामवरोधेनब्रह्मकर्मसमारभे ॥ शरावेजलंदर्भांश्चादाय ॥ विद्युदसिविद्यमेपाप्मानमृतात्सत्यमुपैमि इतितज्जलमुपस्पृश्यदर्भगर्भंब्रह्मांजलिंकृत्वादक्षिणांकेनिधाय प्रणवादिस्वयंपठन्नन्यानप्युपविष्टान्वाचयेत् ॥ प्रण

१ अत्रोक्तंभट्टकुमारिलगृह्यकारिकासु—शाकलानांसमानीवइत्यृचांत्याहुतिर्भवेत् । बाष्कलानांतुतच्छंयोरित्यृचांत्याहुतिर्भवेत् ॥ इति ॥

वस्यपरब्रह्म ऋषिःपरमात्मादेवतादैवीगायत्रीछंदः समस्तव्याहृतीनांपरमेष्ठीप्रजापतिःप्रजापतिर्बृहती गायत्र्याविश्वामित्रःस
वितागायत्री अग्निमीळइत्यादीनांछंदसांमधुच्छंदादयऋषयः अग्न्यादयोदेवताः गायत्र्यादीनिछंदांसि सर्वेषामुत्सर्जनेविनियो
गः ॥ ॐ भूर्भुवःस्वः तत्सवितुर्वरेण्यं । भर्गोदेवस्यधीमहि । धियोयोनःप्रचोदयात् । ॐ भूर्भुवःस्वः तत्सवितुर्वरेण्यंभर्गोदेवस्य
धीमहि । धियोयोनःप्रचोदयात् । ॐ भूर्भुवःस्वः तत्सवितुर्वरेण्यंभर्गोदेवस्यधीमहिधियोयोनःप्रचोदयात् ॥ ॐ अग्निमीळेपुरो
हितं । यज्ञस्यदेवमृत्विजं । होतारंरत्नधातमं । अग्निःपूर्वेभिर्ऋषिभिः । ईड्योनूतनैरुत । सदेवाँएहवक्षति । अग्निनारयिमश्न
वत् । पोषमेवदिवेदिवे । यशसंवीरवत्तमं । अग्नेयंयज्ञमध्वरं । विश्वतःपरिभूरसि । सइद्देवेषुगच्छति । अग्निर्होताकविक्रतुः ।
सत्यश्चित्रश्रवस्तमः । देवोदेवेभिरागमत् ॥ १ ॥ यदंगदाशुषेत्वं । अग्नेभद्रंकरिष्यसि । तवेत्तत्सत्यमंगिरः । उपत्वाग्ने
दिवेदिवे । दोषावस्तर्धियावयं । नमोभरंतएमसि । राजंतमध्वराणां । गोपामृतस्यदीदिविं । वर्धमानंस्वेदमे । सनःपितेव
सूनवे । अग्नेसूपायनोभव । सचस्वानःस्वस्तये ॥ २ ॥ अग्निर्वैदेवानामवमोविष्णुःपरमः । अथमहाव्रतं । एषपंथा
एतत्कर्म । अथातःसंहितायाउपनिषत् । विदामघवन्विदा । महाव्रतस्यपंचविंशतिंसामिधेन्यः । इषेत्वोर्जेत्वा । अग्न
आयाहिवीतये । शन्नोदेवीरभिष्टये । अथैतस्यसमाम्नायस्य । समाम्नायःसमाम्नातः । मयरसतजभनलगसंमितं । गौः ।
ग्मा । पंचसंवत्सरमयं । अथशिक्षांप्रवक्ष्यामि । वृद्धिरादैच् । ( यदिंद्रोदाशराज्ञेमानुषंव्यगाहथाः । इदंजनाउपश्रुत ) ।
योगीश्वरंयाज्ञवल्क्यं । नारायणंनमस्कृत्य । अथातोधर्मव्याख्यास्यामः । अथातोधर्मजिज्ञासा । अथातोब्रह्मजिज्ञासा ।
तच्छंयोरावृणीमहेगातुंयज्ञायगातुंयज्ञपतये दैवीःस्वस्तिरस्तुनःस्वस्तिर्मानुषेभ्यः । ऊर्ध्वंजिगातुभेषजं शंनोअस्तुद्विपदेशंचतु

ष्पदे । नमोब्रह्मणेनमोअस्त्वग्नयेनमःपृथिव्यैनमओषधीभ्यः । नमोवाचेनमोवाचस्पतयेनमोविष्णवेमहतेकरोमि ॥ इति त्रिः ॥ ॐ शांतिःशांतिःशांतिः । वृष्टिरसिवृश्चमेपाप्मानमृतात्सत्यमुपागाम् । सर्वे उत्सृष्टावेदाः इत्युक्त्वाजलंस्पृशेयुः ॥ ततःअयाश्चेतिविमदोऽयाअग्निःपंक्तिः प्रायश्चित्ताज्यहोमेविनियोगः ॥ ॐ अयाश्चाग्नेस्यनभिशस्तीश्चसत्यमित्वमयाअसि । अयासावयसाकृतोयासन्हव्यमूहिषेयानोधेहिभेषजंस्वाहा । अयासेऽग्नयइदंनमम ॥ अतोदेवामेधातिथिर्देवागायत्री प्रायश्चित्ताज्यहोमेविनियोगः । ॐ अतोदेवाअवंतुनोयतोविष्णुर्विचक्रमे । पृथिव्याःसप्तधामभिःस्वाहा । देवेभ्यइदंनमम ॥ इदंविष्णुर्मेधातिथिर्विष्णुर्गायत्री प्रायश्चित्ताज्यहोमेविनियोगः । ॐ इदंविष्णुर्विचक्रमेत्रेधानिदधेपदं । समूळ्हमस्य पांसुरेस्वाहा ॥ विष्णवइदंनमम ॥ व्यस्तसमस्तव्याहृतीनांविश्वामित्रजमदग्निभरद्वाजप्रजापतयऋषयः अग्निवायुसूर्यप्रजापतयोदेवताः गायत्र्युष्णिगनुष्टुब्बृहत्यश्छंदांसि प्रायश्चित्ताज्यहोमेविनियोगः । ॐ भूःस्वाहा । अग्नयइदंनमम ॥ ॐ भुवःस्वाहा । वायवइदंनमम ॥ ॐ स्वःस्वाहा । सूर्यायेदंनमम ॥ ॐ भूर्भुवःस्वःस्वाहा । प्रजापतयइदंनमम ॥ अनाज्ञातमिति मंत्रद्वयस्यहिरण्यगर्भोग्निरनुष्टुप् ज्ञाताज्ञातदोषनिबर्हणार्थंप्रायश्चित्ताज्यहोमेविनियोगः ॥ ॐ अनाज्ञातंयदाज्ञातंयज्ञस्यक्रियतेमिथु । अग्नेतदस्यकल्पयत्वꣳहिवेत्थयथातथꣳस्वाहा ॥ अग्नयइदंनमम ॥ ॐ पुरुषसंमितोयज्ञोयज्ञःपुरुषसंमितः । अग्नेतदस्यकल्पयत्वꣳहिवेत्थयथातथꣳस्वाहा ॥ अग्नयइदंनमम ॥ यत्पाकत्रेत्यास्यत्रितोग्निस्त्रिष्टुप् प्रायश्चित्ताज्यहोमेविनियोगः । ॐ यत्पाकत्रामनसादीनदक्षानयज्ञस्यमन्वतेमर्त्यासः । अग्निष्टद्धोताक्रतुविद्विजानन्यजिष्ठोदेवाँऋतुशोयजातिस्वाहा ॥ अग्नयइदंनमम ॥ यद्वोदेवाअभितपामरुतस्त्रिष्टुप् प्रायश्चित्ताज्यहोमेविनियोगः। ॐ यद्वोदेवाअतिपातयानिवाचाचप्रयुतीदेवहेळनं ।

अरायोअस्माँअभिदुच्छुनायतेन्यत्रास्मन्मरुतस्तन्निधेतनस्वाहा ॥ मरुद्भ्यइदंनमम ॥ ( यज्ञोपघातादौप्रायश्चित्तानि । अस्मि
न्कर्मणिकृमिकीटपिपीलिकामक्षिकाद्युपघातदोषपरिहारार्थंद्वेमिंदाहुतीहोष्यामि । ॐ यन्मआत्मनोमिंदाभूदग्निस्तत्पुनराहार्जा
तवेदाविचर्षणिस्वाहा ॥ मिंदवतेग्नयइदंनमम ॥ ॐ पुनरग्निश्चक्षुरदात्पुनरिंद्रोबृहस्पतिः । पुनर्मेअश्विनायुवंचक्षुराधत्तमक्ष्योः
स्वाहा ॥ मिंदवतेग्नयइदंनमम ॥ अस्मिन्कर्मणिस्वराक्षरपदवर्णभ्रेषजनितप्रत्यवायपरिहारार्थंआभिर्गीर्भिरित्येकामाज्याहुतिं
होष्यामि ॥ ॐ आभिर्गीर्भिर्यदतोनऊनमाप्याययहरिवोवर्धमानः । यदास्तोतृभ्योमहिगोत्रारुजासिभूयिष्ठभाजोअधतेस्याम
स्वाहा ॥ इंद्रायहरिवतइदंनमम ॥ ) सांगतासिद्ध्यर्थंसर्वप्रायश्चित्तंकरिष्ये ॥ ॐ भूर्भुवःस्वःस्वाहा ॥ प्रजापतयइदंनमम ॥
संस्रावेण ॐ विश्वेभ्योदेवेभ्यःस्वाहा ॥ विश्वेभ्योदेवेभ्यःसंस्रावभागेभ्यइदंनमम ॥ हविःशेषमुदगुद्वास्यबर्हिषिपूर्णपात्रंनिन
येत् ॥ पूर्णमसिपूर्णमेभूयाःसुपूर्णमसिसुपूर्णमेभूयाःसदसिसन्मेभूयाःसर्वमसिसर्वमेभूयाः ॥ अक्षितिरसिमामेक्षेष्ठाः ॥ प्राच्यां
दिशिदेवाऋत्विजोमार्जयंतां । दक्षिणस्यांदिशिमासाःपितरोमार्जयंतां । अपउपस्पृश्य । प्रतीच्यांदिशिग्रहाःपशवोमार्जयंतां ।
उदीच्यांदिश्यापओषधिवनस्पतयोमार्जयंतां । ऊर्ध्वायांदिशियज्ञःसंवत्सरःप्रजापतिर्मार्जयतां । आपोअस्मानित्यस्यदेवश्रवा
आपस्त्रिष्टुप् मार्जनेविनियोगः ॥ ॐ आपोअस्मान्मातरःशुंधयंतुघृतेननोघृतप्वःपुनंतु । विश्वंहिरिप्रंप्रवहंतिदेवीरुदिदाभ्यः
शुचिरापूतएमि ॥ इदमापःसिंधुद्वीपआपोनुष्टुप् मार्जनेविनियोगः ॥ ॐइदमापःप्रवहतयत्किंचदुरितंमयि । यद्वाहमभिदुद्रो
हयद्वाशेपउतानृतं । सुमित्र्यानआपओषधयःसंतु । दुर्मित्र्यास्तस्मैसंतुयोस्मान्द्वेष्टि । यंचवयंद्विष्मस्तंहन्मि । इतिनैर्ऋत्यांदि
शिकुशाग्रैरपःसिंचेत् ॥ माहंप्रजांपरासिचंयानःसयावरीःस्थन । समुद्रेवोनिनयानिस्वंपाथोअपीथ ॥ ताआपःसमुद्रंपच्छेयुरिति

चिन्तयन् गंगादिनदीःस्मरन् अंजलिस्थदर्भैरात्मानमन्यांश्चमार्जयेत् ॥ ततःअग्नेर्वायव्यदेशेतिष्ठन् ॥ अग्नेत्वंनइति चतसृणांगौपायनालौपायनावाबंधुःसुबंधुःश्रुतबंधुर्विप्रबंधुश्चैकैकर्चाऋषयः अग्निर्देवता द्विपदाविराट्छंदः अग्न्युपस्थानेविनियोगः ॥ ॐ अग्नेत्वंनोअंतमउतत्राताशिवोभवावरूथ्यः । वसुरग्निर्वसुश्रवाअच्छानक्षिद्युमत्तमंरयिंदाः ॥ सनोबोधिश्रुधीहवमुरुष्याणोअघायतःसमस्मात् ॥ तंत्वाशोचिष्ठदीदिवःसुम्नायनूनमीमहेसखिभ्यः॥ उपविश्यपरिस्तरणान्युत्तरेविसृजेत् ॥ परिसमूहनपर्युक्षणेकृत्वा विश्वानिनइत्यग्निंगंधादिभिश्चपूजयित्वा ॥ ॐ अग्निस्तुविश्रवस्तमंतुविब्रह्माणमुत्तमम् । अतूर्तंश्रावयत्पतिंपुत्रंददातिदाशुषे॥ अग्निर्ददातिसत्पतिंसासाहयोयुधानृभिः । अग्निरत्यंरघुष्यदंजेतारमपराजितं ॥ अग्नयेनमः मंत्रपुष्पंसमर्पयामि । मानस्तोकइत्यस्यकुत्सोरुद्रोजगती विभूतिग्रहणेविनियोगः ॥ ॐ मानस्तोकेतनयेमानआयौमानोगोषुमानोअश्वेषुरीरिषः । वीरान्मानोरुद्रभामितोवधीर्हविष्मंतःसदमित्त्वाहवामहे ॥ त्र्यायुषंजमदग्नेरिति ललाटे । कश्यपस्यत्र्यायुषं कंठे । अगस्त्यस्यत्र्यायुषं नाभौ । यद्देवानांत्र्यायुषं दक्षिणस्कंधे । तन्मेअस्तुत्र्यायुषं वामस्कंधे । सर्वमस्तुशतायुषं शिरसि । ओंचमेस्वरश्चमेयज्ञोपचतेनमश्च । यत्तेन्यूनंतस्मैतउपयत्तेतिरिक्तंतस्मैतेनमः । अग्नयेनमः । ॐ स्वस्ति । श्रद्धांमेधांयशःप्रज्ञांविद्यांबुद्धिंश्रियंबलं ॥ आयुष्यंतेजआरोग्यंदेहिमेहव्यवाहन ॥ देहिमेहव्यवाहनोन्नमइति ॥ प्रमादात्कुर्वतांकर्मप्रच्यवेताध्वरेषुयत् ॥ स्मरणादेवतद्विष्णोःसंपूर्णंस्यादितिश्रुतिः ॥ प्रायश्चित्तान्यशेषाणितपःकर्मात्मकानिवै ॥ यानितेषामशेषाणांकृष्णानुस्मरणंपरं ॥ यस्यस्मृत्याचनामोक्त्यातपोयज्ञक्रियादिषु ॥ न्यूनंसंपूर्णतांयातिसद्योवंदेतमच्युतं ॥ अनेनउत्सर्जनहोमाख्येनकर्मणाभगवान्श्रीपरमेश्वरःप्रीयतांनमम ॥ ॐ तत्सद्ब्रह्मार्पणमस्तु ॥ ॥ ७ ॥ ॥ ७ ॥

## ॥ ६८ ॥ अथस्नानविधिः ॥

श्रीः ॥ भस्मगोमयमृत्तंदुलतिलकुशदूर्वादिसंभृतसंभारः उदकतीरंगत्वा सर्वैःसहआचम्यप्राणानायम्यदेशकालौसंकीर्त्य उत्सर्जनांगत्वेनसर्वैःसहगणस्नानंकरिष्ये ॥ आपोहिष्ठेतितृचेनस्नात्वा आचम्य ॥ उत्सर्जनांगत्वेनभस्मस्नानंकरिष्ये ॥ भस्मादाय ॐ ईशानःसर्वविद्यानामीश्वरःसर्वभूतानांब्रह्माधिपतिर्ब्रह्मणोधिपतिर्ब्रह्माशिवोमेअस्तुसदाशिवोम् । शिरसि । ॐ तत्पुरुषाय विद्महेमहादेवायधीमहि । तन्नोरुद्रःप्रचोदयात् । मुखे । ॐ अघोरेभ्योथघोरेभ्योघोरघोरतरेभ्यः । सर्वेभ्यःसर्वशर्वेभ्योनमस्तेअस्तुरुद्ररूपेभ्यः । हृदये । ॐ वामदेवायनमोज्येष्ठायनमःश्रेष्ठायनमोरुद्रायनमःकालायनमःकलविकरणायनमोबलविकरणायनमोबलायनमोबलप्रमथनायनमःसर्वभूतदमनायनमोमनोन्मनायनमः । गुह्ये । ॐ सद्योजातंप्रपद्यामिसद्योजातायवैनमोनमः । भवेभवेनातिभवेभवस्वमांभवोद्भवायनमः । पादयोः ॥ अग्निरितिभस्म वायुरितिभस्म जलमितिभस्म स्थलमितिभस्म व्योमेतिभस्म सर्वंहवाइदंभस्म । ॐ मानस्तोकेतनयेमानआयौमानोगोषुमानोअश्वेषुरीरिषः । वीरान्मानोरुद्रभामितोवधीर्हविष्मंतःसदमित्त्वाहवामहे ॥ सर्वांगेविलिप्य स्नात्वा आचम्य ॥ उत्सर्जनांगत्वेनगोमयस्नानंकरिष्ये ॥ ॐ गंधद्वारांदुराधर्षांनित्यपुष्टांकरीषिणीं ॥ ईश्वरींसर्वभूतानांतामिहोपह्वयेश्रियं ॥ इतिगोमयमादाय ॥ अग्रमग्रंचरंतीनामोषधीनांवनेवने ॥ तासामृषभपत्नीनांपवित्रंकायशोधनं ॥ तन्मेरोगांश्चशोकांश्चनुदगोमयसर्वदा ॥ इतिशिरःप्रभृत्यंगानिविलिप्य स्नात्वा आचम्य ॥ उत्सर्जनांगत्वेनमृत्तिकास्नानं मृत्संस्कारंचकरिष्ये ॥ ॐ बळित्थापर्वतानांखिद्रंबिभर्षिपृथिवि । प्रयाभूमिंप्रवत्वतिमह्नाजिनोषिमहिनि । इतिभूमिंप्रार्थ्य ॥ ॐ मावोरिषत्खनितायस्मैचाहंखनामिवः । द्विपच्चतुष्पदस्माकंसर्वमस्त्वनातुरं । इतिखनित्वा ॥ ॐ स्योनापृथिवि

भवानृक्षरानिवेशनी । यच्छानः शर्मसप्रथः । इतिमृदमादाय ॥ ॐ आयनेतेपरायणेदूर्वारोहंतुपुष्पिणीः ॥ हृदाश्चपुंडरीकाणिस मुद्रस्यगृहाइमे । इतिदूर्वामादाय ॥ ॐ तत्सवितुर्वरेण्यंभर्गोदेवस्यधीमहि ॥ धियोयोनःप्रचोदयात् । प्रोक्ष्य भूमौनिधाय ॥ ॐ त्रातारमिंद्रमवितारमिंद्रंहवेहवेसुहवंशूरमिंद्रं । ह्वयामिशक्रंपुरुहूतमिंद्रंस्वस्तिनोमघवाधात्विंद्रः ॥ पूर्वतःक्षिपेत् ॥ ॐ यमा यसोमंसुनुतयमायजुहुताहविः । यमंहयज्ञोगच्छत्यग्निदूतोअरंकृतः । दक्षिणतः ॥ ॐ तत्त्वायामिब्रह्मणावंदमानस्तदाशास्ते यजमानोहविर्भिः । अहेळमानोवरुणेहबोध्युरुशंसमानआयुःप्रमोषीः । पश्चिमतः ॥ ॐ वयंसोमव्रतेतवमनस्तनूषुबिभ्रतः ॥ प्रजावंतःसचेमहि । उत्तरतः ॥ ॐ तत्सूर्यरोदसीउभेदोषावस्तोरुपब्रुवे । भोजेष्वस्माँऽअभ्युच्चरासदा । उपरिष्टात् ॥ ॐ अधः पश्यस्वमोपरिसंतरांपादकौहर । मातेकशप्लकौदृशन्स्त्रीहिब्रह्माबभूविथ । अधः ॥ ( सर्वैर्मृदंवामहस्तेगृहीत्वाजलेनार्द्रीकृत्य ) ॐ सहस्रशीर्षापुरुषःसहस्राक्षःसहस्रपात् । सभूमिंविश्वतोवृत्वात्यतिष्ठद्दशांगुलं । शिरसि ॥ ॐ अक्षीभ्यांतेनासिकाभ्यांक र्णाभ्यांछुबुकादधि । यक्ष्मंशीर्षण्यंमस्तिष्काज्जिह्वायाविवृहामिते । मुखे ॥ ॐ ग्रीवाभ्यस्तउष्णिहाभ्यःकीकसाभ्योअनूक्यात् । यक्ष्मंदोषण्य१मंसाभ्यांबाहुभ्यांविवृहामिते । कंठे ॥ ॐ आंत्रेभ्यस्तेगुदाभ्योवनिष्ठोर्हृदयादधि । यक्ष्मंमतस्नाभ्यांयक्नःप्लाशि भ्योविवृहामिते । हृदये ॥ ॐ नाभानाभिंनआददेचक्षुश्चित्सूर्येसचा । कवेरपत्यमादुहे । नाभौ ॥ ॐ त्वमिंद्रसजोषसमर्कंबि भर्षिबाह्वोः । वज्रंशिशानओजसा । बाह्वोः ॥ ॐ सोमानंस्वरणंकृणुहिब्रह्मणस्पते । कक्षीवंतंयऔशिजः ॥ कक्ष्योः ॥ ॐ यः कुक्षिःसोमपातमःसमुद्रइवपिन्वते । उर्वीरापोनकाकुदः । कुक्ष्योः ॥ ॐ बह्वीनांपितावहुरस्यपुत्रश्चिश्चाकृणोतिसमनावगत्य । इषुधिःसंकाःपृतनाश्चसर्वाःपृष्ठेनिनद्धोजयतिप्रसूतः । पृष्ठे ॥ ॐ ऊरुभ्यांतेअष्ठीवद्भ्यांपार्ष्णिभ्यांप्रपदाभ्यां । यक्ष्मंश्रोणिभ्यां

भासंदाद्भंसंसोविवृहामिते । ऊर्वोः ॥ ॐ मेहनाद्वनंकरणाल्लोमभ्यस्तेनखेभ्यः । यक्ष्मंसर्वस्मादात्मनस्तमिदंविवृहामिते । जान्वोः ॥ ॐ एतावानस्यमहिमातोज्यायांश्चपूरुषः । पादोस्यविश्वाभूतानित्रिपादस्यामृतंदिवि । पादयोः ॥ ॐयस्यविश्वानिहस्तयोःपंचक्षितीनांवसु ॥ स्पाशयस्वयोअस्मद्धुग्दिव्येवाशनिर्जहि । हस्तयोः ॥ ॐ अंगादंगाल्लोम्नोलोम्नोजातंपर्वणिपर्वणि । यक्ष्मंसर्वस्मादात्मनस्तमिदंविवृहामिते ॥ इतिमंत्रेणपुरुषसूक्तेनचसर्वांगेविलिप्य ॥ ॐ अश्वक्रांतेरथक्रांतेविष्णुक्रांतेवसुंधरे । शिरसांधारयिष्यामिरक्षस्वमांपदेपदे ॥ इतिसतिलदूर्वामृदंशिरसिनिधाय मृत्तिकास्थानंप्रक्षाल्य भूमिंप्रार्थयेत् ॥ भूमिर्धेनुर्धरणीलोकधारिणी । उद्धृतासिवराहेणकृष्णेनशतबाहुना । मृत्तिकेहनमेपापंयन्मयादुष्कृतंकृतं । मृत्तिकेब्रह्मदत्तासिकाश्यपेनाभिमंत्रिता ॥ मृत्तिकेदेहिमेपुष्टिंत्वयिसर्वंप्रतिष्ठितं । मृत्तिकेप्रतिष्ठितेसर्वंतन्मेनिर्णुदमृत्तिके ॥ त्वयाहतेनपापेनगच्छामिपरमांगतिं ॥ तीर्थंप्रार्थयेत् ॥ ॐ हिरण्यशृंगंवरुणंप्रपद्येतीर्थंमेदेहियाचितः । यन्मयाभुक्तमसाधूनांपापेभ्यश्चप्रतिग्रहः । यन्मेमनसावाचाकर्मणावादुष्कृतंकृतं । तन्नइंद्रोवरुणोबृहस्पतिःसविताचपुनंतुपुनःपुनः । नमोग्नयेप्सुमतेनमइंद्रायनमोवरुणायनमोवारुण्यैनमोद्भ्यः । यदपांक्रूरंयदमेध्यंयदशांतंतदपगच्छतात् ॥ अत्याशनादतीपानाद्यच्चउग्रात्प्रतिग्रहात् । तन्नोवरुणोराजापाणिनाह्यवमर्शतु ॥ सोहमपापोविरजोनिर्मुक्तोमुक्तकिल्बिषः । नाकस्यपृष्ठमारुह्यगच्छेद्ब्रह्मसलोकतां । यश्चाप्सुवरुणःसपुनात्वघमर्षणः ॥ अवतेहेळइतिद्वयोराजीगर्तिःशुनःशेपोवरुणस्त्रिष्टुप् । वरुणप्रार्थनेविनियोगः ॥ ॐ अवतेहेळोवरुणनमोभिरवयज्ञेभिरीमहेहविर्भिः । क्षयंनस्मभ्यमसुरप्रचेताराजन्नेनांसिशिश्रथःकृतानि ॥ उदुत्तमंवरुणपाशमस्मदवाधमंविमध्यमंश्रथाय ॥ अथावयमादित्यव्रतेतवानागसोअदितयेस्याम ॥ याःप्रवतोवसिष्ठोनद्यःशक्करी तीर्थाभिमर्शनेविनियोगः ॥ ॐयाःप्रवतोनि

यतंउद्वतंउदन्वतीरनुदकाश्चयाः। ताअस्मभ्यंपयसापिन्वमानाःशिवादेवीरशिपदाभवंतुसर्वानद्योअशिमिदाभवंतु ॥ इमंमेगं गइतिद्वयोःसिंधुक्षित्प्रैयमेधोनद्योजगती तीर्थावलोडनेविनियोगः ॥ ॐ इमंमेगंगेयमुनेसरस्वतिशुतुद्रिस्तोमंसचतापरुष्ण्या। असिक्न्यामरुद्वृधेवितस्तयार्जीकीयेशृणुह्यासुषोमया ॥ सितासितेसरितेयत्रसंगथेतत्राप्लुतासोदिवमुत्पतंति। येवैतन्वं विसृजं तिधीरास्तेजनासोअमृतत्वंभजंते ॥ सागरस्वननिर्घोषदंडहस्तासुरांतक । जगत्स्रष्टर्जगन्मर्दिन्नमामित्वांसुरेश्वर ॥ इमंमंत्रंस मुच्चार्यतीर्थेस्नानंसमाचरेत्॥ अन्यथातत्फलस्यार्धंतीर्थेशोहरतिध्रुवं॥ॐ इदंतेन्याभिरसमानमद्भिर्याःकाश्चसिंधुंप्रवहंतिनद्यः॥ सर्पोजीर्णामिवत्वचंजहातिपापंसशिरस्कोभ्युपेत्य ॥ नंदिनीनलिनीसीतामालतीचमलापहा । विष्णुपादाब्जसंभूतागंगात्रिपथ गामिनी॥ भागीरथीभोगवतीजाह्नवीत्रिदशेश्वरी। पुष्कराद्यानितीर्थानिगंगाद्याःसरितस्तथा। आगच्छंतुपवित्राणिस्नानकाले सदाममं ॥ गंगागंगेतियोब्रूयाद्योजनानांशतैरपि । मुच्यतेसर्वपापेभ्योविष्णुलोकंसगच्छति ॥ आपोहिष्ठेतितृचस्यांबरीषःसिं धुद्वीपआपोगायत्री मार्जनेविनियोगः ॥ ॐ आपोहिष्ठा० ऋ० ३॥ समुद्रज्येष्ठाइतिचतसृणांवसिष्ठआपस्त्रिष्टुप्। मार्जनेवि०॥ ॐ समुद्रज्येष्ठाःसलिलस्यमध्यात्पुनानायंत्यनिविशमानाः। इंद्रोयावज्रीवृषभोरराद्ताआपोदेवीरिहमामवंतु॥ याआपोदिव्या उतवास्रवंतिखनित्रिमाउतवायाःस्वयंजाः । समुद्रार्थायाःशुचयःपावकास्ताआपोदेवीरिहमामवंतु ॥ यासांराजावरुणोयाति मध्येसत्यानृतेअवपश्यन्जनानां। मधुश्चुतःशुचयोयाःपावकास्ताआपोदेवीरिहमामवंतु॥ यासुराजावरुणोयासुसोमोविश्वेदेवा यासूर्जंमदंति । वैश्वानरोयास्वग्निःप्रविष्टस्ताआपोदेवीरिहमामवंतु ॥ तरत्समंदीतिचतसृणांकाश्यपावत्सारःपवमानःसोमो गायत्री मार्जनेवि० ॥ ॐ तरत्समंदीधावतिधारासुतस्यांधसः । तरत्समंदीधावति ॥ उस्रावेदवसूनांमर्तस्यदेव्यवसः। तर

त्समंदीधावति ॥ ध्वस्रयोःपुरुषंत्योरासहस्राणिदद्महे । तरत्समंदीधावति॥ आययोस्त्रिंशतंतनासहस्राणिचदद्महे । तरत्समं दीधावति ॥ एतोन्विंद्रमितितिसृणामांगिरसइंद्रोनुष्टुप् मार्जनेवि० ॥ ॐ एतोन्विंद्रंस्तवामशुद्धंशुद्धेनसाम्ना । शुद्धैरुक्थैर्वावृध्वांसंशुद्धआशीर्वान्ममत्तु ॥ इंद्रशुद्धोनआगहिशुद्धःशुद्धाभिरूतिभिः । शुद्धोरयिंनिधारयशुद्धोममद्धिसोम्यः ॥ इंद्रशुद्धोहिनोरयिंशुद्धोरत्नानिदाशुषे । शुद्धोवृत्राणिजिघ्नसेशुद्धोवाजंसिषाससि ॥ ऋतंचेतितृचस्याघमर्षणोभाववृत्तमनुष्टुप् अघमर्षणे विनियोगः ॥ ॐ ऋतंचसत्यंचाभीद्धात्तपसोध्यजायत । ततोरात्र्यजायतततःसमुद्रोअर्णवः ॥ समुद्रादर्णवादधिसंवत्सरोअजायत । अहोरात्राणिविदधद्विश्वस्यमिषतोवशी ॥ सूर्याचंद्रमसौधातायथापूर्वमकल्पयत् ॥ दिवंचपृथिवींचांतरिक्षमथोस्वः ॥ स्नात्वा स्नानांगतर्पणंकुर्यात् । ब्रह्मादयोयेदेवाः तान्देवांस्तर्पयामि भूर्देवांस्तर्पयामि भुवोदेवांस्तर्पयामि स्वर्देवांस्तर्पयामि भूर्भुवःस्वर्देवांस्तर्पयामि ॥ निवीती ॥ कृष्णद्वैपायनादयोयेऋषयः तानृषींस्तर्पयामि भूरृषींस्तर्पयामि भुवरृषींस्तर्पयामि स्वरृषींस्तर्पयामि भूर्भुवःस्वरृषींस्तर्पयामि ॥ प्राचीनावीती ॥ सोमःपितृमान्यमोंगिरस्वानग्निष्वात्ताःकव्यवाहनादयोयेपितरः ॥ तान्पितृंस्तर्पयामि ॥ भूःपितृंस्तर्पयामि ॥ भुवःपितृंस्तर्पयामि ॥ स्वःपितृंस्तर्पयामि ॥ भूर्भुवःस्वःपितृंस्तर्पयामि ॥ अग्निदग्धाश्चयेजीवायेप्यदग्धाःकुलेमम ॥ भूमौदत्तेनतोयेनतृप्तायांतुपरांगतिं ॥ इतिजलांजलिंतटेनिक्षिप्य॥ येकेचास्मत्कुले जाताअपुत्रागोत्रिणोमृताः ॥ तेगृह्णंतुमयादत्तंवस्त्रनिष्पीडनोदकं ॥ इतिमंत्रेणोत्तरीयवस्त्रंतटेनिष्पीड्य ॥ ततःयज्ञोपवीती ॥ यन्मयादूषितंतोयंशारीरमलसंभवात् ॥ तद्दोषपरिहारार्थंयक्ष्माणंतर्पयाम्यहं ॥ इतियक्ष्मतर्पणंकृत्वा ॥ ज्ञानतोऽज्ञानतोवापियन्मेवुश्चरितंकृतं ॥ तत्क्षमस्वाखिलंदेविजगन्मातर्नमोस्तुते ॥ इतिनदींप्रार्थयेत् ॥ इतिस्नानविधिःसमाप्तः ॥ ॥ छ ॥

## ॥ ६९ ॥ अथऋषिपूजनम् ॥



श्रीः ॥ धृतशुक्लांबरोनिवीतीऋषीन्पूजयेत् ॥ देशकालौसंकीर्त्य उत्सर्जनांगत्वेनअरुंधतीसहितकश्यपादिसप्तर्षिप्रीत्यर्थंआवाहनादिषोडशोपचारैःपूजनंकरिष्ये ॥ ॐ ऋषेमंत्रकृतांस्तोमैःकश्यपोद्वर्धयन्गिरः ॥ सोमंनमस्यराजानंयोजज्ञेवीरुधांपतिरिंद्रायेंद्रोपरिस्रव ॥ कश्यपायनमः कश्यपंआवाहयामि ॥ ॐ अत्रिर्यद्वांमवरोहन्नृबीसमजोहवीन्नाधमानेवयोषा ॥ श्येनस्यचिज्जवसानूतनेनागच्छतमश्विनाशंतमेन ॥ अत्रयेनमः अत्रिंआवाहयामि ॥ ॐ एवानःस्पृधःसमजासमत्स्विंद्ररारंधिमिथतीरदेवीः । विद्यामवस्तोरवसागृणंतोभरद्वाजाउततइंद्रनूनं ॥ भरद्वाजायनमः भरद्वाजंआवाहयामि ॥ ॐ प्रसूतोभक्षमकरंचरावपिस्तोमंचेमंप्रथमःसूरिरुन्मृजे । सुतेसातेनयद्यागमंवांप्रतिविश्वामित्रजमदग्नीदमे ॥ विश्वामित्रायनमः विश्वामित्रंआवाहयामि ॥ ॐ अभित्वागोतमागिराजातवेदोविचर्षणे । द्युम्नैरभिप्रणोनुमः ॥ गौतमायनमः गौतमंआवाहयामि ॥ ॐ गृणानाजमदग्निनायोनावृतस्यसीदतं । पातंसोममृतावृधा ॥ जमदग्नयेनमः जमदग्निंआवाहयामि ॥ ॐ उतासिमैत्रावरुणोवसिष्ठोर्वश्याब्रह्मन्मनसोधिजातः । द्रप्संस्कन्नंब्रह्मणादैव्येनविश्वेदेवाःपुष्करेत्वाददंत ॥ वसिष्ठायनमः वसिष्ठंआवाहयामि ॥ ॐ अत्रेर्यथानुसूयास्याद्वसिष्ठस्याप्यरुंधती । कौशिकस्ययथासतीतथात्वमपिभर्तरि ॥ अरुंधत्यैनमः अरुंधतींआवाहयामि ॥ तदस्तुमित्रा० गृहावै० सुप्रतिष्ठितमस्तु ॥ आवाहनादिप्रत्युपचारं ॐ देवाएतस्यामवदंतपूर्वेसप्तऋषयस्तपसेयेनिषेदुः । भीमाजायाब्राह्मणस्योपनीतादुर्धांदधातिपरमेव्योमन् ॥ इतिमंत्रेणषोडशोपचारैःपूजयेत् ॥ ॥ इतिऋषिपूजा ॥ ॥ छ ॥

## ॥ ७० ॥ अथऋष्यादितर्पणम् ॥

साक्षतहस्तःकुशमध्येन । कश्यपंतर्पयामि । अत्रिंतर्पयामि । भरद्वाजंतर्पयामि । विश्वामित्रंतर्पयामि । गौतमंतर्पयामि । जमदग्निंतर्पयामि । वसिष्ठंतर्पयामि । अरुंधतींतर्पयामि ॥ उपवीतीदेवतीर्थेनकुशाग्रैः ॥ सावित्रींतर्पयामि । ब्रह्माणंतर्पयामि । श्रद्धांतर्पयामि । मेधांतर्पयामि । प्रज्ञांतर्पयामि । धारणांतर्पयामि । सदसस्पतिंतर्पयामि । अनुमतिंतर्पयामि । छंदांस्यृषीं स्तर्पयामि । अग्निंतर्पयामि । अग्नीषोमौतर्पयामि । अग्निंतर्पयामि । ककुभंतर्पयामि । अग्निंतर्पयामि । मित्रावरुणौतर्पयामि । अग्निंतर्पयामि । अपस्तर्पयामि । अग्निंतर्पयामि । मरुतस्तर्पयामि । अग्निंतर्पयामि । विश्वान्देवांस्तर्पयामि । अग्निंतर्पयामि । इंद्रासोमौतर्पयामि । इंद्रंतर्पयामि । अग्नामरुतस्तर्पयामि । पवमानसोमंतर्पयामि । पवमानसोमंतर्पयामि । अग्निंतर्पयामि । संज्ञानंतर्पयामि ॥ ॥ अथब्रह्मयज्ञांगतर्पणं । प्रजापतिस्तृप्यतु । ब्रह्मातृप्यतु । वेदास्तृप्यंतु । देवास्तृप्यंतु । ऋषयस्तृप्यंतु । सर्वाणिछंदांसितृप्यंतु । ओंकारस्तृप्यतु । वषट्कारस्तृप्यतु । व्याहृतयस्तृप्यंतु । सावित्रीतृप्यतु । यज्ञास्तृप्यंतु । द्यावापृथिवीतृप्यतां । अंतरिक्षंतृप्यतु । अहोरात्राणितृप्यंतु । सांख्यास्तृप्यंतु । सिद्धास्तृप्यंतु । समुद्रास्तृप्यंतु । नद्यस्तृप्यंतु । गिरयस्तृप्यंतु । क्षेत्रौषधिवनस्पतिगंधर्वाप्सरसस्तृप्यंतु । नागास्तृप्यंतु । वयांसितृप्यंतु । गावस्तृप्यंतु । साध्यास्तृप्यंतु । विप्रास्तृप्यंतु । यक्षास्तृप्यंतु । रक्षांसितृप्यंतु । भूतानितृप्यंतु । एवमंतानितृप्यंतु ॥ अथर्षयः । निवीती ॥ ऋषितीर्थेनकुशमध्येन शतर्चिनस्तृप्यंतु । माध्यमास्तृप्यंतु । गृत्समदस्तृप्यतु । विश्वामित्रस्तृप्यतु । वामदेवस्तृप्यतु । अत्रिस्तृप्यतु । भरद्वाजस्तृ

---

१ देवतीर्थमुक्तममरेण 'अंगुल्यग्रेतीर्थंदैवं' इति । ऋजुहस्तेनांगुल्यग्रगाभिरद्भिरित्यर्थः । २ कनिष्ठांगुलिमूलगाभिरद्भिस्तर्पयेत् ।

प्यतु। वसिष्ठस्तृप्यतु। प्रगाथास्तृप्यंतु। पावमान्यस्तृप्यंतु। क्षुद्रसूक्तास्तृप्यंतु। महासूक्तास्तृप्यंतु॥ प्राचीनावीती॥ ( जीवत्पितृकैरंगुष्ठपर्यंतं ) पितृतीर्थेनद्विगुणीकृतकुशमूलाग्रैः[1]। सुमंतुजैमिनिवैशंपायनपैलसूत्रभाष्यभारतमहाभारतधर्माचार्यास्तृप्यंतु। जानंतिबाहविगार्ग्यगौतमशाकल्यबाभ्रव्यमांडव्यमांडूकेयास्तृप्यंतु। गार्गीवाचक्नवीतृप्यतु! वडवाप्रातीथेयीतृप्यतु। सुलभामैत्रेयीतृप्यतु। कहोळंतर्पयामि। कौषीतकंतर्पयामि। महाकौषीतकंतर्पयामि। पैंग्यंतर्पयामि। महापैंग्यंतर्पयामि। सुयज्ञंतर्पयामि। सांख्यायनंतर्पयामि। ऐतरेयंतर्पयामि। महैतरेयंतर्पयामि। शाकलंतर्पयामि। बाष्कलंतर्पयामि। सुजातवक्रंतर्पयामि। औदवाहिंतर्पयामि। महौदवाहिंतर्पयामि। सौजामिंतर्पयामि। शौनकंतर्पयामि। आश्वलायनंतर्पयामि। येचान्येआचार्यास्तेसर्वेतृप्यंतु॥ ततःस्वपितृतर्पणं॥ अस्मत्पितरं अमुकशर्माणं अमुकगोत्रं वसुरूपं स्वधानमस्तर्पयामि। ३[2]। पितामहं अ० श० अ० गो० रुद्ररूपंस्व०। प्रपितामहं अ० श० अ० गो० आदित्यरूपं स्व०। मातरं अमुकदां अमुकगोत्रां वसुरूपां स्व०। पितामहीं अ० अ० गो० रुद्ररूपां स्व०। प्रपितामहीं अ० अ० गो० आदित्यरूपां स्व०। सापत्नमातरं अ० अ० गो० वसुरूपां स्व०। मातामहं अमुकशर्माणं अमुकगोत्रं सपत्नीकं वसुरूपं स्व०। मातुःपितामहं अ० श० अ० गो० सप० रुद्ररूपं स्व०। मातुःप्रपितामहं अ० श० अ० गो० सप० आदित्यरूपं स्व०। पत्नीं अमुकदां अमुकगोत्रां वसुरूपां स्व०। सुतं अमुकशर्माणं अ० गो० सप० ससुतं वसुरूपं स्व०। दुहितरं अमुकदां अमुक० सभर्तृकां ससुतां वसुरूपां स्व०। पितृव्यं

---

१ अंगुष्ठांगुलिमध्यगाभिरद्भिः। २ एकैकमंजलिंदेवेभ्योद्वौद्वावृषिभ्यस्त्रींस्त्रीन्पितृभ्यइतिनियमोबह्वृचांवैकल्पिकः। मातृत्रयीभिन्नस्त्रीणामेकैकोंजलिर्देयः।

अ० श० अ० गो० सप० ससुतं वसुरूपं स्व० । मातुलं अ० श० अ० गो० सप० ससुतं वसु० स्व० । भ्रातरं अ० श० अ० गो० सप० ससुतं वसु०स्व० । पितृभगिनीं अमुकदां अमुकगोत्रां सभर्तृकां ससुतां वसुरूपां स्व० । मातृभगिनीं अमुकदां अमुकगोत्रां सभर्तृकां ससुतां वसुरूपां स्व० । आत्मभगिनीं अमुकदां अ० गो० स० ससु० वसु० स्व० । श्वशुरं अ० श० अ० गो० सप० ससुतं वसुरूपं स्व० । गुरुं अ० श० अ० गो० सप० ससुतं वसुरूपं स्व० । शिष्यं अमुकशर्माणं अ० गो० वसुरूपं स्व० । आप्तं अ० श० अ० गो० वसुरूपं स्वधानमस्तर्पयामि ॥ ॥ ततोयमतर्पणं ॥ यमंतर्पयामि । धर्मराजंतर्पयामि । मृत्युंतर्पयामि । अंतकंतर्पयामि । वैवस्वतंतर्पयामि । कालंतर्पयामि । सर्वभूतक्षयंतर्पयामि । औदुंबरंतर्पयामि । दध्नंतर्पयामि । नीलंतर्पयामि । परमेष्ठिनंतर्पयामि । वृकोदरंतर्पयामि । चित्रंतर्पयामि । चित्रगुप्तंतर्पयामि ॥ ॥ यमोनिहंतापितृधर्मराजोवैवस्वतोदंडधरश्चकालः ॥ भूताधिपोदत्तकृतानुसारीकृतांतएतद्दशभिर्जपंति ॥ इतितिष्ठंतोदशवारंसर्वेजपेयुः ॥ ॐ आग्नाअग्नइहावसेहोत्रांयविष्ठभारतीं । वरूत्रींधिषणांवह ॥ १ ॥ अधीवासंपरिमातूरिहन्नहतुविग्रेभिःसत्वभिर्यातिविज्रयः ॥ वयोदधत्पद्वतेरेरिहत्सदानुश्येनीसचतेवर्तनीरह ॥ २ ॥ अयंयज्ञोदेववयाअयंमियेधइमाब्रह्माण्ययमिंद्रसोमः । स्तीर्णंबर्हिरातुशक्रप्रयाहिपिबानिषद्यविमुचाहरीइह ॥ ३ ॥ अतीयामनिदस्तिरःस्वस्तिभिर्हित्वावद्यमरातीः । वृष्टीशंयोरापउस्रिभेषजंस्याममरुत्वःसह ॥ ४ ॥ अग्नेरक्षाणोअंहसःप्रतिष्मदेवरीषतः । तपिष्ठैरजरोदह ॥ ५ ॥ अग्नेभववसुषमिधासमिद्धउतबर्हिरुर्वियाविस्तृणीतां । उतद्वारउशतीर्विश्रयंतामुतदेवाँउशतआवहेह ॥ ६ ॥ अद्यामुरीययदियातुधानोअस्मियदिवायुस्ततपपूरुषस्य । अधासवीरैर्दशभिर्वियूयायोमामोघंयातुधानेत्याह ॥ ७ ॥ अध्वर्योद्रावयात्वंसोममिंद्रःपिपासति । उपनूनंयुयुजेवृषणाहरीआचज

गामवृत्रहा ॥ ८ ॥ अग्निंदूतंपुरोदधेहव्यवाहमुपब्रुवे । दूर्वाआसादयादिह ॥ ९ ॥ अग्नेबाधस्वविमृधोविदुर्गहापामीवामपर क्षांसिसेध । अस्मात्समुद्राद्बृहतोदिवोनोपांभूमानमुपनःसृजेह ॥ १० ॥ ततःशांत्यर्थंआनोभद्राःशंनइंद्राग्नीइत्यादिशांतिसूक्ता निसुवृष्ट्यर्थंपर्जन्यसूक्तानिचजपेत् ॥ ॐ विश्वेत्तातेसवनेषुप्रवाच्यायाचकर्थमघवन्निंद्रसुन्वते । पारावतंयत्पुरुसंभृतंवस्वपावृ णोःशरभायऋषिबंधवे ॥ इतिमंत्रेणऋषीन्जलेउद्वासयेत् ॥ वेदप्रीत्यर्थंब्राह्मणान्भोजयेत् ॥ गच्छगच्छसुरश्रेष्ठस्वस्थानेपर मेश्वर । यत्रब्रह्मादयोदेवास्तत्रगच्छहुताशन ॥ इत्यग्निंविसृज्याद्भिराचामेत् ॥ इत्युत्सर्जनप्रयोगः ॥ ॥ ॥ छ ॥

## ॥ ७१ ॥ अथोपाकर्मप्रयोगः ॥

श्रीः ॥ आचम्यप्राणानायम्यदेशकालौसंकीर्त्य । ममाध्याप्यानांचाधीतानामध्येष्यमाणानांचछंदसांयातयामतानिरासेना प्यायनद्वाराश्रीपरमेश्वरप्रीत्यर्थंएभिर्ब्राह्मणैःसहउपाकर्माख्यंकर्मकरिष्ये इति संकल्प्य । तदंगंगणपतिंपूजयित्वास्मृत्वावाब्रह्मः स्थंडिलादिसर्वंकर्मकरिष्ये। स्थंडिलोपलेपनाद्यग्निध्यानांतंकृत्वाध्यमवध्यात्। क्रियमाणेउपाकर्महोमेदेवतापरिग्रहार्थमन्वाधानं करिष्ये।अस्मिन्नन्वाहितेग्नावित्यादिचक्षुषीआज्येनेत्यंतमुक्त्वा अत्रप्रधानं सावित्रीं ब्रह्माणं श्रद्धां मेधां प्रज्ञां धारणां सदसस्पतिं अनुमतिं छंदांस्यृषीन् एताःप्रधानदेवताः आज्येन।पुनरत्रप्रधानं अग्निं अग्निपृणसूर्यान् अग्निं शकुंतं अग्निं मित्रावरुणौ अग्निं अपः अग्निं मरुतः अग्निं विश्वान्देवान् अग्निं इंद्रासोमौ इंद्रं अग्नामरुतः पवमानसोमं पवमानसोमं अग्निं संज्ञानं एताः प्रधानदेवताः दधिसक्तुद्रव्येणशेषेणस्विष्टकृतमग्निमिध्मसन्नहनेनरुद्रं यज्ञोपवीतेनपरमात्मानं अयासमग्निंदेवान्विष्णुं० सद्योयक्ष्ये ।पात्रासा

१ शांतिसूक्तानिपर्जन्यसूक्तानिचात्रैवपठनीयान्यपितानिसर्वाण्युपाकर्मप्रयोगांतेसंगृहीतानिसंतितत्रालोचनीयानि ।

दनेदधिसक्तुस्थालीप्रोक्षण्यौइत्यादिदधिसक्तुनासहाज्यंत्रिःपर्यग्निकृत्वा चक्षुष्यंतेन्वाधानोक्तसावित्र्यादिनवभिर्मंत्रैराज्यंहुत्वा अत्रपंचावत्तिनस्तिष्ठंतः ॐ प्रसूतोभक्षमकरंचरावपिस्तोमंचेमंप्रथमःसूरिरुन्मृजे ॥ सुतेसातेनयद्यागमंवांप्रतिविश्वामित्रजमदग्नीदमे ॥ इतिमंत्रंपठेयुः॥ पंचावत्तीतुदर्व्यामुपस्तीर्यमध्यात्पूर्वार्धात्पश्चार्धाच्चत्रिर्हविषोवदायाभिघार्यजुहुयात्॥ अग्निमीळेवैश्वामित्रोमधुच्छंदाअग्निर्गायत्री ॥ उपाकर्मप्रधानदधिसक्तुहोमेविनियोगः ॥ ॐ अग्निमीळेपुरोहितंयज्ञस्यदेवमृत्विजं ॥ होतारंरत्नधातमंस्वाहा ॥ अग्नयइदं० ॥ कुषुंभकस्तदगस्त्योमृणसूर्याअनुष्टुप् ॥ उपाकर्मप्र० ॥ ॐ कुषुंभकस्तदब्रवीद्गिरेःप्रवर्तमानकः ॥ वृश्चिकस्यारसंविषमरसंवृश्चिकतेविषंस्वाहा ॥ अमृणसूर्येभ्यइ०॥ त्वमग्नेद्युभिरित्यस्यशौनकोगृत्समदोऽग्निर्जगती॥ उपाकर्म०॥ ॐत्वमग्नेद्युभिस्त्वमाशुशुक्षणिस्त्वमद्भ्यस्त्वमश्मनस्परि॥त्वंवनेभ्यस्त्वमोषधीभ्यस्त्वंनृणांनृपतेजायसेशुचिःस्वाहा॥अग्नयइ०॥ आवदन्छौनकोगृत्समदःशकुंतोजगती ॥ उपाकर्म०॥ ॐ आवदंस्त्वंशकुनेभद्रमावदतूष्णीमासीनःसुमतिंचिकिद्धिनः ॥ यदुत्पतन्वदसिकर्करिर्यथाबृहद्वदेमविदथेसुवीराःस्वाहा ॥ शकुंतायेदं० ॥ सोमस्यमागाथिनोविश्वामित्रोग्निस्त्रिष्टुप् ॥ उपाकर्मप्रधान० ॥ ॐ सोमस्यमातवसंवक्ष्यग्नेवह्निंचकर्थविदथेयजध्यै ॥ देवाँअच्छादीद्यद्युंजेअद्रिंशमायेअग्नेतन्वंजुषस्वस्वाहा ॥ अग्नयइदं० ॥ गृणानाभार्गवोजमदग्निर्मित्रावरुणौगायत्री ॥ उपाकर्म० ॥ ॐ गृणानाजमदग्निनायोनावृतस्यसीदतं ॥ पातंसोममृतावृधास्वाहा ॥ मित्रावरुणाभ्यामिदं० ॥ त्वांह्यग्नेगौतमोवामदेवोऽग्निरष्टिः ॥ उपाकर्म० ॥ ॐ त्वांह्यग्नेसदमित्समन्यवोदेवासोदेवमरतिंन्येरिरइतिक्रत्वान्येरिरे॥अमर्त्यंयजतमर्त्येष्वादेवमादेवंजनतप्रचेतसंविश्वमादेवंजनतप्रचेतसंस्वाहा ॥ अग्नयइदं० ॥

---

१ हुत्वाज्यनवभिर्मंत्रैःसावित्र्याद्यैरतःपरं । अथावदानधर्मेणतान्सक्तून्दधिसंयुतान् । हुत्वाग्निमीळइत्याद्यमंत्रैर्विंशतिभिःक्रमात् ॥

धामंतेगौतमोवामदेवआपोजगती ॥ उपाकर्म० ॥ ॐ धामँतेविश्वंभुवनमधिश्रितमंतःसमुद्रेहृद्यं१तरायुषि ॥ अपामनीकेसमिथेयआभृतस्तमश्यामधुमंतंतऊर्मिस्वाहा ॥ अद्भ्यइदं० ॥ अबोध्यात्रेयौबुधगविष्ठिरावग्निस्त्रिष्टुप् ॥ उपाकर्म० ॥ ॐ अबोध्यग्निःसमिधाजनानांप्रतिधेनुमिवायतीमुषासं ॥ यह्वाइवप्रवयामुज्जिहानाःप्रभानवःसिस्रतेनाकमच्छस्वाहा ॥ अग्नयइदं० ॥ गंतानआत्रेयएवयामरुन्मरुतोतिजगती ॥ उपाकर्म० ॥ ॐ गंतानोयज्ञंयज्ञियाःसुशमिश्रोताहवमरक्षएवयामरुत् ॥ ज्येष्ठासोनपर्वतासोव्योमनियूयंतस्यप्रचेतसःस्यातदुर्धर्तवोनिदःस्वाहा ॥ मरुद्भ्यइदं० ॥ त्वंह्यग्नेबार्हस्पत्योभारद्वाजोऽग्निस्त्रिष्टुप् ॥ उपाकर्म० ॥ ॐ त्वंह्यग्नेप्रथमोमनोतास्याधियोअभवोदस्महोता ॥ त्वंसींवृषन्नकृणोर्दुष्टरींतुसहोविश्वस्मैसहसेसहध्यैस्वाहा ॥ अग्नयइदं० ॥ योनःस्वःपायुर्भारद्वाजोविश्वेदेवाअनुष्टुप् ॥ उपाकर्म० ॥ ॐ योनःस्वोअरणोयश्चनिष्ट्योजिघांसति ॥ देवास्तंसर्वेधूर्वंतुब्रह्मवर्ममर्मांतरंस्वाहा ॥ विश्वेभ्योदेवेभ्यइ० ॥ अग्निंनरोमैत्रावरुणिर्वसिष्ठोग्निर्विराट् ॥ उपाकर्म० ॥ ॐ अग्निंनरोदीधितिभिररण्योर्हस्तच्युतीजनयंतप्रशस्तं ॥ दूरेदृशंगृहपतिमथर्युंस्वाहा ॥ अग्नयइ० ॥ प्रतिचक्ष्वमैत्रावरुणिर्वसिष्ठइंद्रासोमावनुष्टुप् ॥ उपाक० ॥ ॐ प्रतिचक्ष्वविचक्ष्वेंद्रश्चसोमजागृतं ॥ रक्षोभ्योवधमस्यतमशनिंयातुमद्भ्यःस्वाहा ॥ इंद्रासोमाभ्यामिदं० ॥ माचित्काण्वःप्रगाथइंद्रोबृहती ॥ उपाकर्म० ॥ ॐ माचिदन्यद्विशंसतसखायोमारिषण्यत ॥ इंद्रमित्स्तोतावृषणंसचासुतेमुहुरुक्थाचशंसतस्वाहा ॥ इंद्राये० ॥ आग्नेयाहिसौभरिरग्नामरुतोऽनुष्टुप् ॥ उपाक० ॥ ॐ आग्नेयाहिमरुत्सखारुद्रेभिःसोमपीतये ॥ सोभर्याउपसुष्टुतिंमादयस्वस्वर्णरेस्वाहा ॥ अग्नामरुद्भ्यइदं० ॥ स्वादिष्ठयामधुच्छंदाःपवमानःसोमोगायत्री ॥ उपाकर्म० ॥ ॐ स्वादिष्ठयामदिष्ठयापवस्वसोमधारया ॥ इंद्रायपातवेसुतःस्वाहा ॥ पवमानायसोमायेदं० ॥ यत्तेराजन्मारीचःकश्यपःपवमानःसोमः

पंक्तिः ।। उपाकर्म० ।।ॐ यत्तेराजन्छृतंहुविस्तेनसोमाभिरक्षनः ।। अरातीवामानस्तारीन्मोचनःकिंचनाममदिंद्रायेंदोपरिस्रवस्वाहा ।। पवमानायसोमायेदं० ।। अग्नेबृहन्नाप्त्यस्त्रितोऽग्निस्त्रिष्टुप् ।। उपाकर्म० ।। ॐ अग्नेबृहन्नुषसामूर्ध्वोअस्थान्निर्जगन्वान्तमसोज्योतिषागात् ।। अग्निर्भानुनारुशतास्वंगआजातोविश्वासद्मान्यप्राःस्वाहा ।। अग्नयइदं० ।। समानीवइत्यस्यांगिरसःसंवननःसंज्ञानमनुष्टुप् ।। उपाक० ।। ॐ समानीवआकूतिःसमानाहृदयानिवः ।। समानमस्तुवोमनोयथावःसुसहासतिस्वाहा ।। संज्ञानायेदं० ।। ततःस्विष्टकृतंहुत्वारज्जुंप्रहृत्य दधिसक्तुप्राश्नीयुः ।। दधिक्राव्णोवामदेवोदधिक्रावानुष्टुप् दधिसक्तुप्राशनेविनियोगः ।। ॐ दधिक्राव्णोअकारिषंजिष्णोरश्वस्यवाजिनः । सुरभिनोमुखाकरत्प्रणआयुंषितारिषत्स्वाहा ।। प्राश्यआचम्यमार्जयेत् ।। उत्तरपरिस्तरणदर्भाणामधःअंजलिंकृत्वान्येनअपआसेचयतेतन्मार्जनम् ।। यज्ञोपवीतमितिमंत्रस्यपरब्रह्मपरमात्मात्रिष्टुप् यज्ञोपवीतहवनेविनियोगः ।। ॐ यज्ञोपवीतंपरमंपवित्रंप्रजापतेर्यत्सहजंपुरस्तात् । आयुष्यमग्र्यंप्रतिमुंचशुभ्रंयज्ञोपवीतंबलमस्तुतेजःस्वाहा । परमात्मनइदंनमम इतिहुत्वा ।। ततःसदक्षिणानियज्ञोपवीतानियथाशक्तिब्राह्मणेभ्योदत्त्वास्वयंधारयेत् ।। अन्येसर्वेपिस्वस्वधार्ययज्ञोपवीतानिपृथगभिमंत्र्यधारयेयुः ।। ।। छ ।। ।। छ ।।

## ।। ७२ ।। यज्ञोपवीताभिमंत्रणम् ।।

श्रीः ।।उपाकर्मांगत्वेनयज्ञोपवीताभिमंत्रणंधारणंचक० ।। ब्रह्मजज्ञानंगौतमोवामदेवोब्रह्मात्रिष्टुप् । सूत्रकरणेवि० । ॐ ब्रह्मजज्ञानंप्रथमंपुरस्ताद्विसीमतःसुरुचोवेनआवः ।। सबुध्न्याउपमाअस्यविष्ठाःसतश्चयोनिमसतश्चविवः ।। इदंविष्णुःकाण्वोमेधातिथिर्विष्णु

---

१ वेदारंभणतःपूर्वंसक्तुप्राशनतःपरं ।। नवयज्ञोपवीतानिहुत्वादत्त्वाचधारयेत् ।।

गायत्री। सूत्रत्रिगुणीकरणेवि० । ॐ इदंविष्णु० ॥ त्र्यंबकंमैत्रावरुणिर्वसिष्ठोरुद्रोनुष्टुप् । ग्रंथिबंधनेविनियो० ॥ ॐ त्र्यंबकंय जामहे० ॥ आपोहिष्ठेतितृचस्यांबरीषःसिंधुद्वीपआपोगायत्री यज्ञोपवीताभिमंत्रणेवि० । ॐ आपोहिष्ठा० ३ ऋचः । ॐ हिरण्य वर्णाःशुचयःपावकायासुजातःकश्यपोयास्विंद्रः । अग्निंयागर्भंदधिरेविरूपास्तानआपःशꣳस्योनाभवंतु ॥ यासाꣳराजावरुणो यातिमध्येसत्यानृतेअवपश्यन्जनानां । मधुश्चुतःशुचयोयाःपावकास्तानआपःशꣳस्योनाभवंतु ॥ यासांदेवादिविकृण्वंतिभक्षंया अंतरिक्षेबहुधाभवंति । याःपृथिवींपयसोंदंतिशुक्रास्तानआपःशꣳस्योनाभवंतु ॥ शिवेनमाचक्षुषापश्यतापःशिवयातनुवोपस्पृ शतत्वचंमे । सर्वाꣳअग्नीꣳरप्सुषदोहुवेवोमयिवर्चोबलमोजोनिधत्त ॥ ॐ पवमानःसुवर्जनः । पवित्रेणविचर्षणिः । यःपोता सपुनातुमा । पुनंतुमादेवजनाः । पुनंतुमनवोधिया । पुनंतुविश्वआयवः । जातवेदःपवित्रवत् । पवित्रेणपुनाहिमा । शुक्रेण देवदीद्यत् । अग्नेक्रत्वाक्रतूꣳरनु । यत्तेपवित्रमर्चिषि । अग्नेविततमंतरा । ब्रह्मतेनपुनीमहे । उभाभ्यांदेवसवितः । पवित्रेण सवेनच । इदंब्रह्मपुनीमहे । वैश्वदेवीपुनतीदेव्यागात् । यस्यैबह्वीस्तनुवोवीतपृष्ठाः । तयामदंतःसधमाद्येषु । वयꣳस्यामपतं योरयीणां । वैश्वानरोरश्मिभिर्मापुनातु । वातःप्राणेनेषिरोमयोभूः । द्यावापृथिवीपयसापयोभिः । ऋतावरीयज्ञियेमापुनीतां । बृहद्भिःसवितस्तृभिः । वर्षिष्ठैर्देवमन्मभिः । अग्नेदक्षैःपुनाहिमा । येनदेवाअपुनत । येनापोदिव्यंकशः । तेनदिव्येनब्रह्मणा । इदंब्रह्मपुनीमहे । यःपावमानीरध्येति । ऋषिभिःसंभृतꣳरसं । सर्वꣳसपूतमश्नाति । स्वदितंमातरिश्वना । पावमानीर्योऽअ ध्येति । ऋषिभिःसंभृतꣳरसं । तस्मैसरस्वतीदुहे । क्षीरꣳसर्पिर्मधूदकं । पावमानीःस्वस्त्ययनीः । सुदुघाहिपयस्वतीः । ऋषि भिःसंभृतोरसः । ब्राह्मणेष्वमृतꣳहितं । पावमानीर्दिशंतुनः । इमंलोकमथोअमुं । कामान्त्समर्धयंतुनः । देवीर्देवैःसमाभृताः ।

पावमानीःस्वस्त्ययनीः । सुदुघाहिघृतश्चुतः । ऋषिभिःसंभृतोरसः । ब्राह्मणेष्वमृतꣳहितं । येनदेवाःपवित्रेण । आत्मानंपुनतेसदा । तेनसहस्रधारेण । पावमान्यःपुनंतुमा । प्राजापत्यंपवित्रं । शतोद्यामꣳहिरण्मयं । तेनब्रह्मविदोवयं । पूतंब्रह्मपुनीमहे । इंद्रःसुनीतीसहमापुनातु । सोमःस्वस्त्यावरुणःसमीच्या । यमोराजाप्रमृणाभिःपुनातुमा । जातवेदामोर्जयंत्यापुनातु । ॐ भूरग्निंचपृथिवींचमांच । त्रीꣳश्चलोकान्त्संवत्सरंच । प्रजापतिस्त्वासादयतु । तयादेवतयांगिरस्वद्ध्रुवासीद । ॐ भुवोवायुंचांतरिक्षंचमांच । त्रीꣳश्चलोकान्त्संवत्सरंच । प्रजापतिस्त्वासादयतु । तयादेवतयांगिरस्वद्ध्रुवासीद । ॐ स्वरादित्यंचदिवंचमांच । त्रीꣳश्चलोकान्त्संवत्सरंच । प्रजापतिस्त्वासादयतु । तयादेवतयांगिरस्वद्ध्रुवासीद । ॐ भूर्भुवःसुवश्चंद्रमसंचदिशश्चमांच । त्रीꣳश्चलोकान्त्संवत्सरंच । प्रजापतिस्त्वासादयतु । तयादेवतयांगिरस्वद्ध्रुवासीद ॥ ॐ कारंप्रथमतंतौन्यसामि । अग्निंद्वितीयतंतौन्यसामि । नागांस्तृतीयतंतौन्यसामि । सोमंचतुर्थतंतौन्यसामि । पितॄन्पंचमतंतौन्यसामि । प्रजापतिंषष्ठतंतौन्यसामि । वायुंसप्तमतंतौन्यसामि । सूर्यमष्टमतंतौन्यसामि । विश्वान्देवान्नवमतंतौन्यसामि । ऋग्वेदंप्रथमदोरकेन्यसामि । यजुर्वेदंद्वितीयदोरकेन्यसामि । सामवेदंतृतीयदोरकेन्यसामि । अथर्ववेदंग्रंथौन्यसामि । प्रतियज्ञोपवीतंदशगायत्रीमंत्रंजप्त्वा । उद्वयमुदुत्यंचित्रमितितिसृभिःसूर्यायदर्शयित्वा । गायत्र्यात्रिस्ताडयेत् । यज्ञोपवीतमितिमंत्रस्यपरब्रह्मपरमात्मात्रिष्टुप् । श्रौतस्मार्तकर्मानुष्ठानसिद्ध्यर्थंयज्ञोपवीतधारणेविनियोगः । ॐ यज्ञोपवीतंपरमंपवित्रंप्रजापतेर्यत्सहजंपुरस्तात् । आयुष्यमग्र्यंप्रतिमुंचशुभ्रंयज्ञोपवीतंबलमस्तुतेजः । इतिमंत्रेणप्रथमंदक्षिणबाहुमुद्धृत्यपश्चात्कंठेधारयेत् ॥ आचम्य ॥ समुद्रंगच्छस्वाहा । इतिजीर्णयज्ञोपवीतंजलेविसर्जयेत् । ततःसर्वैःसहप्राणानायम्य पृथ्वीतिमंत्रस्य इत्याद्युत्सर्जनांगवत्ब्रह्मयज्ञांते सर्वेउपाकृता

वेदाः इत्युक्त्वा अंजलिस्थान्कुशान्दक्षिणकटौनिवेशयेयुः॥ ततआचार्यःप्रायश्चित्तादिहोमशेषंसमापयेत् । ततःसर्वेवेदप्रीत्यर्थं ब्राह्मणभोजनंसंकल्प्यदक्षिणांदद्युः । आचार्योऽग्निंविसृज्यकर्मेश्वरार्पणंकृत्वाविष्णुंनत्वाद्विराचामेत् ॥ इत्युपाकर्मप्रयोगः॥

## ॥ ७३ ॥ अथनूतनब्रह्मचारिश्रावणी ॥

तत्रोपाकर्मणिविशेषः । देशकालौनिर्दिश्यास्यनूतनब्रह्मचारिणःवेदग्रहणाधिकारसिद्धिद्वाराश्रीपरमेश्वरप्रीत्यर्थं उपाकर्माख्यं कर्मकरिष्ये । आदौनिर्विघ्नतासिद्ध्यर्थंमहागणपतिपूजनंस्वस्तिपुण्याहवाचनंमातृकापूजनंनांदीश्राद्धंचकरिष्ये इतिसंकल्प्यनांदीश्राद्धांतंकृत्वाशेषंसर्वंपूर्ववत्कुर्यात् । यज्ञोपवीतधारणकाले । ब्रह्मचारीचेत्कटिसूत्रकौपीनवस्त्राजिनयज्ञोपवीतमेखलादंडानुपनयनवद्धारयित्वापुराणानिजलेनिक्षिपेत्॥ तत्रमंत्राः। युवंवस्त्राणीत्यस्यौचथ्योदीर्घतमामित्रावरुणौत्रिष्टुप्॥ वासोधारणे विनि० ॥ ॐ युवंवस्त्राणिपीवसावसाथेयुवोरच्छिद्रामंतवोहसर्गाः॥ अवातिरतमनृतानिविश्वऋतेनमित्रावरुणासचेथे॥ मित्रस्यचक्षुरित्यस्यवामदेवोऽजिनंत्रिष्टुप् ॥ अजिनधारणेवि० ॥ ॐ मित्रस्यचक्षुर्धरुणंबलीयस्तेजोयशस्विस्थविरंसमिद्धं ॥ अनाहनस्यंवसनंजरिष्णुपरीदंवाज्यजिनंदधेहं ॥ यज्ञोपवीतमिति० यज्ञोपवीतधारणे० ॥ ॐ यज्ञोप० तेजः ॥ इयंदुरुक्तादितिद्वयोर्वामदेवोमेखलात्रिष्टुप्॥ मेखलाबंधनेविनियोगः ॥ ॐ इयंदुरुक्तात्परिबाधमानाशर्मवरूथंपुनतीनआगात् ॥ प्राणापानाभ्यांबलमाभरंतीप्रियादेवानांसुभगामेखलेयं॥ ऋतस्यगोप्त्रीतपसःपरस्पीघ्नतीरक्षःसहमानाअरातीः ॥ सानःसमंतमनुपरेहिभद्रयाभर्तारस्तेमेखलेमारिषाम ॥ मेखलांत्रिरावृत्यनाभिप्रदेशेग्रंथित्रयंकुर्यात् ॥ स्वस्तिनइत्यस्यस्वस्त्यात्रेयोविश्वेदेवास्त्रिष्टुप् ॥ दंडधारणेवि० ॥ ॐ स्वस्तिनोमिमीतामश्विनाभगःस्वस्तिदेव्यदितिरनर्वणः ॥ स्वस्तिपूषाअसुरोदधातुनःस्वस्तिद्यावा

पृथिवीसुचेतुनां ॥ अदांतंदमयित्वामांमार्गेसंस्थापयन्स्वयं ॥ दंडःकरेस्थितोयस्मात्तस्माद्रक्षयतोभयं ॥ इतिविशेषः ॥ ततः समाप्तौकर्मेश्वरार्पणंकृत्वायथाशक्तिब्राह्मणभोजनंसंकल्प्यब्राह्मणान्संपूज्यकर्मेश्वरायार्पयेत् ॥ इतिनूतनब्रह्मचारिणउपाकर्म॥

## ॥ ७४ ॥ अथसभादीपदानम् ॥

श्रीः ॥ आचम्यदेशकालौसंकीर्त्य पुराणोक्तफलावाप्त्यर्थं ममइहजन्मनिजन्मांतरेचाखंडितसौभाग्याद्यवाप्तयेपुत्रपौत्रधनधान्यादिसमृद्धयेवांछितसर्वमनोरथप्राप्तयेचसभादीपदानकल्पोक्तफलावाप्तिकामाऽहंब्रह्मविष्णुरुद्रप्रीत्यर्थं ब्राह्मणसभायांअग्निसंनिधौब्राह्मणायसभादीपदानंकरिष्ये । तत्रादौगणपतिपूजनंपंचशब्दैःपुण्याहवाचनंदीपपूजनंब्राह्मणपूजनंचकरिष्ये । दीपपूजांकृत्वाब्राह्मणंसंपूज्य ॥ भोदीपब्रह्मरूपस्त्वंज्योतिषांप्रभुरव्ययः ॥ आरोग्यंदेहिपुत्रांश्चअवैधव्यंप्रयच्छमे ॥ श्रावणेमास्युपाकर्मण्यारब्धेविप्रसंसदि ॥ व्रीहितंडुलपिष्टस्यपाचितेनचनिर्मितं ॥ घृतवर्त्यग्निसंयुक्तंविमलेकांस्यभाजने ॥ सपादतंडुलप्रस्थंपूरितंसुप्रतिष्ठितं ॥ अवैधव्यसुपुत्रत्वदीर्घायुःश्रीसुखाप्तये ॥ सभादीपप्रदानंचतुभ्यंविप्रसदक्षिणं ॥ ब्रह्मविष्णुमहेशाश्चप्रीयंतांदीपदानतः ॥ ममाभीष्टप्रदाःसंतुभवेस्मिन्वाभवांतरे ॥ सर्वकामप्रदानृणांदीपदानप्रतोषिताः ॥ श्रावण्यांश्रवणर्क्षेचसभायामग्निसन्निधौ ॥ सभादीपप्रदानेनततःशांतिंप्रयच्छमे ॥ स्वस्त्यस्तुदीर्घमायुःश्रेयःशांतिःपुष्टिस्तुष्टिश्चास्तु ॥ इदंसभादीपदानंदक्षिणातांबूलसहितंअमुकशर्मणेब्राह्मणायतुभ्यमहंसंप्रददे तेनश्रीब्रह्मविष्णुरुद्राःप्रीयंतां ॥ इतिसभादीपदानविधिः ॥ ॥

## ॥ ७५ ॥ अथशांतिसूक्तानि ॥

श्रीः ॥ आनोभद्राइतिदशर्चस्यसूक्तस्यगौतमोराहूगणोविश्वेदेवाजगती षष्ठीविराट्स्थाना अंत्यास्तिस्रस्त्रिष्टुभः । स्वस्तिनइति

पंचानांस्वस्त्यात्रेयोविश्वेदेवास्त्रिष्टुप् अन्त्येद्वेअनुष्टुभौ । शंनइंद्राग्नीइतिपंचदशर्चस्यसूक्तस्यवसिष्ठोविश्वेदेवास्त्रिष्टुप्। यतइंद्रे
तिषण्णांभर्गःप्रगाथइंद्रःप्रागाथं । भद्रंनइत्यस्यऐंद्रोविमदोऽग्निरेकपदाविराट् । आशुःशिशानइतित्रयोदशर्चस्यसूक्तस्याप्र
तिरथऐंद्रइंद्रोदेवता चतुर्थ्याबृहस्पतिः द्वादश्याअप्वा त्रयोदश्याइंद्रोमरुतोवात्रिष्टुबंत्यानुष्टुप् । मुंचामित्वेतिपंचर्चस्यसूक्
स्ययक्ष्मनाशनःप्राजापत्यइंद्रस्त्रिष्टुबंत्यानुष्टुप् । त्यमूष्वितितृचस्यसूक्तस्यारिष्टनेमिस्तार्क्ष्यस्त्रिष्टुप् । महित्रीणामि
तितृचस्यसूक्तस्यसत्यधृतिर्वारुणिरदितिरादित्योगायत्री । रात्रीव्यख्यदित्यष्टर्चस्यसूक्तस्यकुशिकःसौभरोरात्रिर्वाभारद्वाजी
रात्रिर्गायत्री । सर्वारिष्टशांत्यर्थेशांतिसूक्तरात्रिसूक्तजपेविनियोगः ॥ ॐ आनोभद्राःक्रतवोयंतुविश्वतोदब्धासोअपरीतास
उद्भिदः ॥ देवानोयथासदमिद्वृधेअसन्नप्रायुवोरक्षितारोदिवेदिवे ॥ देवानांभद्रासुमतिर्ऋजूयतांदेवानांरातिरभिनोनिवर्ततां ॥
देवानांसख्यमुपसेदिमावयंदेवानआयुःप्रतिरंतुजीवसे ॥ तान्पूर्वयानिविदाहूमहेवयंभगंमित्रमदितिंदक्षमस्रिधं । अर्यमणंवरु
णंसोममश्विनासरस्वतीनःसुभगामयस्करत् ॥ तन्नोवातोमयोभुवातुभेषजंतन्मातापृथिवीतत्पिताद्यौः ॥ तद्ग्रावाणःसोमसुतो
मयोभुवस्तदश्विनाशृणुतंधिष्ण्यायुवं ॥ तमीशानंजगतस्तस्थुषस्पतिंधियंजिन्वमवसेहूमहेवयं ॥ पूषानोयथावेदसामसद्वृधेर
क्षितापायुरदब्धःस्वस्तये ॥ १ ॥ स्वस्तिनइंद्रोवृद्धश्रवाःस्वस्तिनःपूषाविश्ववेदाः ॥ स्वस्तिनस्तार्क्ष्योअरिष्टनेमिःस्वस्तिनोबृहस्प
तिर्दधातु ॥ पृषदश्वामरुतःपृश्निमातरःशुभंयावानोविदथेषुजग्मयः ॥ अग्निजिह्वामनवःसूरचक्षसोविश्वेनोदेवाअवसागम
न्निह ॥ भद्रंकर्णेभिःशृणुयामदेवाभद्रंपश्येमाक्षभिर्यजत्राः ॥ स्थिरैरंगैस्तुष्टुवांसस्तनूभिर्व्यशेमदेवहितंयदायुः ॥ शतमिन्नुशर
दोअंतिदेवायत्रानश्चक्राजरसंतनूनां ॥ पुत्रासोयत्रपितरोभवंतिमानोमध्यारीरिषतायुर्गंतोः ॥ अदितिर्द्यौरदितिरंतरिक्षमदिति

मातासपितासपुत्रः ॥ विश्वेदेवाअदितिःपंचजनाअदितिर्जातमदितिर्जनित्वं ॥ २ ॥ स्वस्तिनोमिमीतामश्विनाभगःस्वस्तिदे
व्यदितिरनर्वणः ॥ स्वस्तिपूषाअसुरोदधातुनःस्वस्तिद्यावापृथिवीसुचेतुना ॥ स्वस्तयेवायुमुपब्रवामहैसोमंस्वस्तिभुवनस्ययस्प
तिः ॥ बृहस्पतिंसर्वगणंस्वस्तयेस्वस्तयआदित्यासोभवंतुनः ॥ विश्वेदेवानोअद्यास्वस्तयेवैश्वानरोवसुरग्निःस्वस्त ॥ देवा
अवंत्वृभवःस्वस्तयेस्वस्तिनोरुद्रःपात्वंहसः ॥ स्वस्तिमित्रावरुणास्वस्तिपथ्येरेवति ॥ स्वस्तिनइंद्रश्चाग्निश्चस्वस्ति अ कृधि
स्वस्तिपंथामनुचरेमसूर्याचंद्रमसाविव ॥ पुनर्ददताघ्नताजानतासंगमेमहि ॥ ३ ॥ स्वस्त्ययनंताक्ष्यमरिष्टनेमिमहद्भूतंवायु
संदेवतानां ॥ असुरघ्नमिंद्रसखंसमत्सुबृहद्यशोनावमिवारुहेम ॥ अंहोमुचमांगिरसंगयंचस्वस्त्यात्रेयंमनसाचताक्ष्यं ॥ यत
पाणिःशरणंप्रपद्येस्वस्तिसंबाधेष्वभयंनोऽअस्तु ॥ ४ ॥ शंनइंद्राग्नीभवतामवोभिःशंनइंद्रावरुणारातहव्या । शमिंद्रासोमासु
वितायशंयोःशंनइंद्रापूषणावाजसातौ ॥ शंनोभगःशमुनःशंसोअस्तुशंनःपुरंधिःशमुसंतुरायः ॥ शंनःसत्यस्यसुयमस्यशंसः
नोअर्यमापुरुजातोऽअस्तु ॥ शंनोधाताशमुधर्तानोअस्तुशंनउरूचीभवतुस्वधाभिः ॥ शंरोदसीबृहतीशंनोअद्रिःशंनोदेवानांसु
हवानिसंतु ॥ शंनोअग्निर्ज्योतिरनीकोअस्तुशंनोमित्रावरुणावश्विनाशं ॥ शंनःसुकृतांसुकृतानिसंतुशंनइषिरोअभिवातुवातः ॥
शंनोद्यावापृथिवीपूर्वहूतौशमंतरिक्षंदृशयेनोअस्तु ॥ शंनओषधीर्वनिनोभवंतुशंनोरजसस्पतिरस्तुजिष्णुः ॥ ५ ॥ शंनइंद्रोवसु
भिर्देवोअस्तुशमादित्येभिर्वरुणःसुशंसः ॥ शंनोरुद्रोरुद्रेभिर्जलाषःशंनस्त्वष्टाग्नाभिरिहशृणोतु ॥ शंनःसोमोभवतुब्रह्मशंनः शं
नोग्रावाणःशमुसंतुयज्ञाः ॥ शंनःस्वरूणांमितयोभवंतुशंनःप्रस्वः शम्वस्तुवेदिः ॥ शंनःसूर्यउरुचक्षाउदेतुशंनश्चतस्रःप्रदिशो
भवंतु ॥ शंनःपर्वताध्रुवयोभवंतुशंनःसिंधवःशमुसंत्वापः ॥ शंनोअदितिर्भवतुव्रतेभिःशंनोभवंतुमरुतःस्वर्काः शंनोवि ष्णुः

शमुपूषानोअस्तुशंनोभवित्रंशम्वस्तुवायुः ॥ शंनोदेवःसविताත्रायमाणःशंनोभवंतूषसोविभातीः ॥ शंनःपर्जन्योभवतुप्रजाभ्यः
शंनःक्षेत्रस्यपतिरस्तुशंभुः ॥६॥ शंनोदेवाविश्वदेवाभवंतुशंसरस्वतीसहधीभिरस्तु ॥ शमभिषाचःशमुरातिषाचःशंनोदिव्याः
पार्थिवाःशंनोअप्याः ॥ शंनःसत्यस्यपतयोभवंतुशंनोअर्वंतःशमुसंतुगावः ॥ शंनऋभवःसुकृतःसुहस्ताःशंनोभवंतुपितरोहवेषु ॥
शंनोअजएकपाद्देवोअस्तुशंनोहिर्बुध्न्यः[१] शंसमुद्रः॥ शंनोअपान्नपात्पेरुरस्तुशंनःपृश्निर्भवतुदेवगोपा ॥ आदित्यारुद्रावसवोजुषं
तेदंब्रह्मक्रियमाणंनवीयः ॥ शृण्वंतुनोदिव्याःपार्थिवासोगोजाताऽउतयेयज्ञियासः ॥ येदेवानांयज्ञियायज्ञियानांमनोर्यजत्रा
अमृताऽऋतज्ञाः ॥ तेनोरासंतामुरुगायमद्ययूयंपातस्वस्तिभिःसदानः ॥७॥ ( शंवतीःपारयंत्येतेदंपृच्छंतिवचोयुजा ॥ अभ्यारं
तंवमाकेतुंयएवेदमितिब्रवन् ॥ भासाकेतुंपरिस्रुतंभारतीब्रह्मवर्धनीः ॥ संजानानामहीमातायएवेदमितिब्रवत् ॥ इंद्रस्तंकिंविभुं
प्रभुंभानुनेयंसरस्वतीं ॥ येनसूर्यमरोचयद्येनेमेरोदसीउभे ॥ जुषस्वाग्नेअंगिरःकाण्वंमेध्यातिथिं ॥ मात्वासोमस्यवबृहत्सुतस्यम
धुमत्तमः ॥ त्वमग्नेअंगिरःशोचस्वदेववीतमः ॥ आशंतमशंतमाभिरभिष्टिभिःशांतिःस्वस्तिमकुर्वत ॥ शंनःकनिक्रदद्देवःपर्ज
न्योअभिवर्षतु ॥ शंनोद्यावापृथिवीशंप्रजाभ्यःशंनएधिद्विपदेशंचतुष्पदे ॥८॥ ) यतइंद्रभयामहेततोनोअभयंकृधि ॥ मघवञ्छ
ग्धितवतन्नऊतिभिर्विद्विषोविमृधोजहि । त्वंहिराधस्पतेराधसोमहःक्षयस्यासिविधतः ॥ तंत्वावयंमघवन्निंद्रगिर्वणःसुतावंतोह
वामहे ॥ इंद्रस्पळुतवृत्रहापरस्पानोवरेण्यः॥ सनोरक्षिषच्चरमंसमध्यमंसपश्चात्पातुनःपुरः ॥९॥ त्वंनःपश्चादधरादुत्तरात्पुरइंद्रनि
पाहिविश्वतः॥ आरेऽअस्मत्कृणुहिदैव्यंभयमारेहेतीरदेवीः॥ अद्याद्याश्वश्वइंद्रत्रास्वपरेचनः॥ विश्वाचनोजरितॄन्त्सत्पतेअहा

[१] एतावत्पर्यंतमेवोत्सर्जनांतेशांतिसूक्तानिपठित्वापर्जन्यसूक्तानिपठेत् । अग्रेतनोभागःप्रसंगाच्छांतिपाठपूरणायात्रोपन्यस्तोस्ति ।

दिवानक्तंचरक्षिषः ॥ प्रभंगीशूरोमघवातुवीमघःसंमिश्लोवीर्यायकं ॥ उभातेबाहूवृषणाशतक्रतोनियावज्रंमिमिक्षतुः ॥ १० ॥
भद्रंनोअपिवातयमनः ॥ आशुःशिशानोवृषभोनभीमोघनाघनःक्षोभणश्चर्षणीनां ॥ संक्रंदनोनिमिषएकवीरःशतंसेनाअजयत्सा
कमिंद्रः ॥ संक्रंदनेनानिमिषेणजिष्णुनायुत्कारेणदुश्च्यवनेनधृष्णुना ॥ तदिंद्रेणजयततत्सहध्वंयुधोनरइषुहस्तेनवृष्णा ॥ सइषु
हस्तैःसनिषंगिभिर्वशीसंस्रष्टासयुधइंद्रोगणेन ॥ संसृष्टजित्सोमपाबाहुशर्ध्यु१ग्रधन्वाप्रतिहिताभिरस्ता ॥ बृहस्पतेपरिदीयारथे
नरक्षोहामित्राँऽअपबाधमानः ॥ प्रभंजन्त्सेनाःप्रमृणोयुधाजयन्नस्माकमेध्यवितारथानां ॥ बलविज्ञायस्थविरःप्रवीरःसहस्वान्वा
जीसहमानउग्रः ॥ अभिवीरोअभिसत्वासहोजाजैत्रमिंद्ररथमातिष्ठगोवित् ॥ गोत्रभिदंगोविदंवज्रबाहुंजयंतमज्मप्रमृणंतमोज
सा ॥ इमंसजाताअनुवीरयध्वमिंद्रंसखायोअनुसंरभध्वं ॥ ११ ॥ अभिगोत्राणिसहसागाहमानोदयोवीरःशतमन्युरिंद्रः ॥ दुश्च्यव
नःपृतनाषाळयुध्यो३स्माकंसेनाअवतुप्रयुत्सु ॥ इंद्रआसांनेताबृहस्पतिर्दक्षिणायज्ञःपुरएतुसोमः ॥ देवसेनानामभिभंजतीनांज
यंतीनांमरुतोयंत्वग्रं ॥ इंद्रस्यवृष्णोवरुणस्यराज्ञआदित्यानांमरुतांशर्धउग्रं ॥ महामनसांभुवनच्यवानांघोषोदेवानांजयतामुद
स्थात् ॥ उद्धर्षयमघवन्नायुधान्युत्सत्वनांमामकानांमनांसि ॥ उद्वृत्रहन्वाजिनांवाजिनान्युद्रथानांजयतांयंतुघोषाः ॥ अस्माक
मिंद्रःसमृतेषुध्वजेष्वस्माकंयाइषवस्ताजयंतु ॥ अस्माकंवीराउत्तरेभवंत्वस्माँऽउदेवाअवताहवेषु ॥ अमीषांचित्तंप्रतिलोभयंती
गृहाणांगान्यप्वेपरेहि ॥ अभिप्रेहिनिर्दहहृत्सुशोकैरंधेनामित्रास्तमसासचंतां ॥ प्रेताजयतानरइंद्रोवःशर्मयच्छतु ॥ उग्रावःसंतु
बाहवोनाधृष्यायथासथ ॥ १२ ॥ असौयासेनामरुतःपरेषामभ्यैतिनओजसास्पर्धमाना ॥ तांगूहततमसापव्रतेनयथामीषाऽअ
न्योऽअन्यंनजानात् ॥ अंधाअमित्राभवताशीर्षाणाऽअहयइव ॥ तेषांवोऽअग्निदग्धानामग्निमूढानामिंद्रोहंतुवरंवरं ॥ १२ ॥

मुंचामित्वाहुविषाजीवनायकमज्ञातयक्ष्मादुतराजयक्ष्मात् ॥ ग्राहिर्जग्राहयदिवैतदेनंतस्याइंद्राग्नीप्रमुमुक्तमेनं ॥ यदिक्षितायुर्य
दिवापरेतोयदिमृत्योरंतिकंनीतएव ॥ तमाहरामिनिर्ऋतेरुपस्थादस्पार्षमेनंशतशारदाय ॥ सहस्राक्षेणशतशारदेनशतायुषाह
विषाहार्षमेनं ॥ शतंयथेमंशरदोनयातींद्रोविश्वस्यदुरितस्यपारं ॥ शतंजीवशरदोवर्धमानःशतंहेमंतान्छतमुवसंतान् ॥ शत
मिंद्राग्नीसविताबृहस्पतिःशतायुषाहविषेमंपुनर्दुः ॥ आहार्षंत्वाविदंत्वापुनरागाःपुनर्नव ॥ सर्वांगसर्वतेचक्षुःसर्वमायुश्चतेविदं ॥
॥१४॥ त्यमूषुवाजिनंदेवजूतंसहावानंतरुतारंरथानां ॥ अरिष्टनेमिंपृतनाजमाशुंस्वस्तयेतार्क्ष्यमिहाहुवेम ॥ इंद्रस्येवरातिमाजो
हुवानास्वस्तयेनावमिवारुहेम ॥ उर्वीनपृथ्वीबहुलेगभीरेमावामेतौमापरेतौरिषाम ॥ सद्यश्चिद्यःशवसापंचकृष्टीःसूर्यइवज्योति
षापस्ततान ॥ सहस्रसाःशतसाअस्यरंहिर्नस्मावरंतेयुवतिंनशर्यां ॥ १५ ॥ महित्रीणामवोस्तुद्युक्षंमित्रस्यार्यम्णः ॥ दुराधर्षं
वरुणस्य ॥ नहितेषाममाचननाध्वसुवारणेषु ॥ ईशेरिपुरघशंसः ॥ यस्मैपुत्रासोअदितेःप्रजीवसेमर्त्याय ॥ ज्योतिर्यच्छंत्यजस्रं
॥ १६ ॥ रात्रीव्यख्यदायतीपुरुत्रादेव्य१क्षभिः ॥ विश्वाअधिश्रियोधित ॥ ओर्वप्राअमर्त्यानिवतोदेव्यु१द्वतः ॥ ज्योतिषाबा
धतेतमः ॥ निरुस्वसारमस्कृतोषसंदेव्यायती ॥ अपेदुहासतेतमः ॥ सानोअद्ययस्यावयंनितेयामन्नविक्ष्महि ॥ वृक्षेनवसतिंव
यः ॥ निग्रामासोअविक्षतनिपद्वंतोनिपक्षिणः ॥ निश्येनासश्चिदर्थिनः ॥ यावयावृक्यं१वृकंयवयस्तेनमूर्म्ये ॥ अथानःसुतराभव ॥
उपमापेपिशत्तमःकृष्णंव्यक्तमस्थित ॥ उषऋणेवयातय ॥ उपतेगाइवाकरंवृणीष्वदुहितर्दिवः ॥ रात्रिस्तोमंनजिग्युषे ॥ १७ ॥
आरात्रिपार्थिवंरजःपितरःप्रायुधामभिः ॥ दिवःसदांसिबृहतीवितिष्ठसआत्वेषंवर्ततेतमः ॥ येतेरात्रीनृचक्षसोयुक्तासोनवति
र्नव ॥ अशीतिःसंत्वष्टाउतोतेसप्तसप्ततीः ॥ रात्रींप्रपद्येजननींसर्वभूतनिवेशनीं ॥ भद्रांभगवतींकृष्णांविश्वस्यजगतोनिशां ॥ संवे

शर्नींसंयमनींग्रहनक्षत्रमालिनीं ॥ प्रपन्नोहंशिवांरात्रींभद्रेपारमशीमहिभद्रेपारमशीमह्योंनमः ॥ स्तोष्यामिप्रयतोदेवींशरण्यांबहु
चप्रियां ॥ सहस्रसंमितांदुर्गांजातवेदसेसुनवामसोमं ॥ शांत्यर्थंतद्विजातीनामृषिभिःसोमपाश्रिताः ॥ ऋग्वेदेत्वंसमुत्पन्नारातीं
यतोनिर्दहातिवेदः ॥ येत्वांदेविप्रपद्यंतिब्राह्मणाहव्यवाहनीं ॥ अविद्यावहुविद्यावासनःपर्षदतिदुर्गाणिविश्वा ॥ येअग्निवर्णांशु
भांसौम्यांकीर्तयिष्यंतियेद्विजाः ॥ तान्तारयतिदुर्गाणिनावेवसिंधुंदुरितात्यग्निः ॥ दुर्गेषुविषमेघोरेसंग्रामेरिपुसंकटे ॥ अग्निचो
रनिपातेषुदुष्टग्रहनिवारणिदुष्टग्रहनिवारण्योंनमः ॥ दुर्गेषुविषमेषुत्वंसंग्रामेषुवनेषुच ॥ मोहयित्वाप्रपद्यंतेतेषांमेअभयंकुरुतेषां
मेअभयंकुर्वोंनमः ॥ केशिनींसर्वभूतानांपंचमीतिचनामच ॥ सामांसमांदिशांदेवींसर्वतःपरिरक्षंतुसर्वतःपरिरक्षत्वोंनमः ॥
तामग्निवर्णांतपसाज्वलंतींवैरोचनींकर्मफलेषुजुष्टां ॥ दुर्गांदेवींशरणमहंप्रपद्येसुतरसितरसेनमःसुतरसितरसेनमः ॥ दुर्गादुर्गेषु
स्थानेषुशंनोदेवीरभिष्टये ॥ यइमंदुर्गास्तवंपुण्यंरात्रौरात्रौसदापठेत् ॥ रात्रिःकुशिकःसोभरोरात्रिर्वाभारद्वाजीरात्रिस्तवंगायत्रं ॥
रात्रीसूक्तंजपेन्नित्यंतत्कालेउपपद्यते ॥ १८ ॥ उलूकयातुंशुशुलूकयातुंजहिश्वयातुमुतकोकयातुं ॥ सुपर्णयातुमुतगृध्रयातुंदृषदे
वप्रमृणरक्षइंद्र ॥ पिशंगभृष्टिमंभृणंपिशाचिमिंद्रसंमृण ॥ सर्वरक्षोनिबर्हय ॥ रक्षाणोअग्नेतवरक्षणेभीरारक्षाणःसुमखप्रीणानः ॥
प्रतिष्फुरविरुजवीड्वंहोजहिरक्षोमहिचिद्वावृधानं ॥ ब्रह्मचतेजातवेदोनमश्चेयंचगीःसदमिद्वर्धनीभूत् ॥ रक्षाणोअग्नेतनयानि
तोकारक्षोतनस्तन्वो३ अप्रयुच्छन् ॥ १९ ॥ गणानांत्वागणपतिंहवामहेकविंकवीनामुपमश्रवस्तमं ॥ ज्येष्ठराजंब्रह्मणांब्रह्मण
स्पतआनःशृण्वन्नूतिभिःसीदसादनं ॥ जातवेदसेसुनवामसोममरातीयतोनिदहातिवेदः ॥ सनःपर्षदतिदुर्गाणिविश्वानावेवसिं
धुंदुरितात्यग्निः ॥ क्षेत्रस्यपतिनावयंहितेनेवजयामसि ॥ गामश्वंपोषयित्न्वासनोमृळातीदृशे ॥ वास्तोष्पतेप्रतिजानीह्यस्मा

न्त्स्वावेशोअनमीवोभवानः ॥ यत्त्वेमहेप्रतितन्नोजुषस्वशंनोभवद्विपदेशंचतुष्पदे ॥ वास्तोष्पतेप्रतरणोनएधिगयस्फानोगोभि
रश्वेभिरिंदो ॥ अजरासस्तेसख्येस्यामपितेवपुत्रान्प्रतिनोजुषस्व ॥ वास्तोष्पतेशग्मयासंसदातेसक्षीमहिरण्वयागातुमत्या ॥
पाहिक्षेमउतयोगेवरंनोयूयंपातस्वस्तिभिःसदानः ॥ अमीवहावास्तोष्पतेविश्वारूपाण्याविशन् ॥ सखासुशेवएधिनः ॥ २० ॥
स्वप्नःस्वप्नाधिकरणेसर्वंनिष्वापयाजिनं ॥ आसूर्यमन्यान्स्वापयन्नव्युषंजाग्रियादहं ॥ अजगरोनामसर्पःसर्पिरविषोमहान् ॥
तस्मिन्हिसर्पःसुधितस्तेनत्वास्वापयामसि ॥ सर्पःसर्पोअजगरःसर्पिरविषोमहान् ॥ तस्यसर्पात्सिंधवस्तस्यगाधमशीमहि ॥
काळिकोनामसर्पोनवनागसहस्रबळः॥यमुनह्रदेसोजातो ३ योनारायणवाहनः ॥ यदिकाळिकदूतस्ययदिकाःकाळिकाद्भयात् ॥
जन्मभूमिमतिक्रांतोनिर्विषोयातिकाळिकः ॥ आयाहींद्रपथिभिरीळितेभिर्यज्ञमिमंनोभागधेयंजुषस्व ॥ तृप्तांजहुर्मातुळस्येवयो
षाभागस्तेपैतृष्वसेयीवपामिव ॥ यशस्करंबलवंतंप्रभुत्वंतमेवराजाधिपतिर्बभूव ॥ संकीर्णनागाश्वपतिर्नराणांसुमंगल्यंसततंदी
र्घमायुः ॥ कर्कोटकोनामसर्पोयोदृष्टिविषउच्यते ॥ तस्यसर्पस्यसर्पत्वंतस्मैसर्पनमोस्तुते ॥ २१ ॥ माविभेर्नमरिष्यसिपरित्वा
पामिसर्वतः ॥ घनेनहन्मिवृश्चिकमहिंदंडेनागतं ॥ आदित्यरथवेगेनविष्णोर्बाहुबलेनच ॥ गरुडपक्षनिपातेनभूमिंगच्छमहाय
शाः ॥ गरुडस्यजातमात्रेणत्रयोलोकाःप्रकंपिताः ॥ प्रकंपितामहीसर्वासशैलवनकानना ॥ गगनंनष्टचंद्रार्कंज्योतिषंनप्रकाश
ते ॥ देवताभयभीताश्चमारुतोनप्लवायतिमारुतोनप्लवायत्योनमः ॥ भोसर्पभद्रभद्रंतेदूरंगच्छमहायशाः ॥ जन्मेजयस्ययज्ञांते
आस्तीकवचनंस्मर ॥ आस्तीकवचनंश्रुत्वायःसर्पोननिवर्तते ॥ शतधाभिद्यतेमूर्ध्निशिंशवृक्षफलंयथा ॥ अगस्त्योमाधवश्चैवमु
चुकुंदोमहामुनिः ॥ कपिलोमुनिरास्तीकःपंचैतेसुखशायिनः ॥ नर्मदायैनमःप्रातर्नर्मदायैनमोनिशि ॥ नमोस्तुनर्मदेतुभ्यंत्राहि

माँविषसर्पतः ॥ योजरत्कारुणाजातोजरत्कन्यांमहायशाः ॥ तस्यसर्पोपिभद्रंतेदूरंगच्छमहायशाः ॥ २२ ॥ ( ग्रहमंत्रानन्त्रैव शांतिपाठसमास्यंतेवापठंति । तेच ) आकृष्णेनरजसावर्तमानोनिवेशयन्नमृतंमर्त्यंच ॥ हिरण्ययेनसविितारथेनादेवोयातिभुवना निपश्यन् ॥ आप्यायस्वसमेतुतेविश्वतःसोमवृष्ण्यं ॥ भवावाजस्यसंगथे ॥ अग्निर्मूर्धादिवःककुत्पतिःपृथिव्याअयं ॥ अपांरेतां सिजिन्वति ॥ उद्बुध्यध्वंसमनसःसखायःसमग्निमिंध्वंबहवःसनीळाः ॥ दधिक्रामग्निमुषसंचदेवीमिंद्रावतोवसेनिह्वयेवः ॥ बृह स्पतेअतियदर्योअर्हाद्द्युमद्विभातिक्रतुमज्जनेषु ॥ यद्दीदयच्छवसऋतप्रजाततदस्मासुद्रविणंधेहिचित्रं ॥ शुक्रःशुशुक्वाँऽउषोनजा रःपप्रासमीची दिवोनज्योतिः ॥ शमग्निरग्निभिःकरच्छंनस्तपतुसूर्यः ॥ शंवातोवात्वरपाअपस्त्रिधः ॥ कयानश्चित्रआभुवदूतीसदा वृधःसखा ॥ कयाशचिष्ठयावृता ॥ केतुंकृण्वन्नकेतवेपेशोमर्याअपेशसे ॥ समुषद्भिरजायथाः ॥२३॥ तच्छंयोरावृणीमहेगातुं यज्ञायगातुंयज्ञपतयेदैवीस्वस्तिरस्तुनःस्वस्तिर्मानुषेभ्यः ॥ ऊर्ध्वंजिगातुभेषजं ॥ शंनोअस्तुद्विपदेशंचतुष्पदे ॥ ॐ नमोब्रह्मणे नमोअस्त्वग्नयेनमःपृथिव्यैनमओषधीभ्यः ॥ नमोवाचेनमोवाचस्पतयेनमोविष्णवेमहतेकरोमि ॥ २ ॥ शांतापृथिवीशिवमं तरिक्षंद्यौर्नोदेव्यभयंनोअस्तु ॥ शिवादिशःप्रदिशउद्दिशोनआपोविद्युतःपरिपांतुसर्वतःशांतिःशांतिःशांतिः ॥ इतिशांतिसू क्तानि ॥ षष्ठीपूजाशीर्मंत्राः ॥ तमर्वंतंनसानसिमरुषंनदिवःशिशुं ॥ मर्मृज्यंतेदिवेदिवे ॥ बोधद्यन्माहरिभ्यांकुमारःसाहदेव्यः ॥ अच्छानहूतउदरं ॥ उतत्यायजताहरीकुमारात्साहदेव्यात् ॥ प्रयतासद्यआददे ॥ एषवांदेवावश्विनाकुमारःसाहदेव्यः ॥ दीर्घायुरस्तुसोमकः ॥ तंयुवंदेवावश्विनाकुमारंसाहदेव्यं ॥ दीर्घायुषंकृणोतन ॥ इतिशांतिपाठःसंपूर्णः ॥ ॥ ७ ॥

## ॥ ७६ ॥ अथपर्जन्यसूक्तानि ॥

श्रीः ॥ अच्छावदेतिदशर्चस्यसूक्तस्यभौमोत्रिःपर्जन्यःद्वितीयाद्यास्तिस्रोजगत्यःनवम्यनुष्टुप् शिष्टाःषट्त्रिष्टुभः सुवृष्ट्यर्थंजपे विनियोगः ॥ ॐ अच्छावदतवसंगीर्भिराभिःस्तुहिपर्जन्यंनमसाविवास ॥ कनिक्रदद्वृषभोजीरदानूरेतोदधात्योषधीषुगर्भं ॥ विवृक्षान्हन्त्युतहंतिरक्षसोविश्वंबिभायभुवनंमहावधात् ॥ उतानागाईषतेवृष्ण्यावतोयत्पर्जन्यःस्तनयन्हंतिदुष्कृतः ॥ रथीवकशयाश्वाँऽअभिक्षिपन्नाविर्दूतान्कृणुतेवर्ष्याँ३अह ॥ दूरात्सिंहस्यस्तनथाउदीरतेयत्पर्जन्यःकृणुतेवर्ष्य१ंनभः ॥ प्रवातावांतिपतयंतिविद्युतउदोषधीर्जिहतेपिन्वतेस्वः ॥ इराविश्वस्मैभुवनायजायतेयत्पर्जन्यःपृथिवींरेतसावति ॥ यस्यव्रतेपृथिवीनंनमीतियस्यव्रतेशफवज्जर्भुरीति ॥ यस्यव्रतओषधीर्विश्वरूपाःसनःपर्जन्यमहिशर्मयच्छ ॥ १ ॥ दिवोनोवृष्टिंमरुतोररीध्वंप्रपिन्वतवृष्णोअश्वस्यधाराः ॥ अर्वाङेतेनस्तनयित्नुनेह्यपोनिषिंचन्नसुरःपितानः ॥ अभिक्रंदस्तनयगर्भमाधाउदन्वतापरिदीयारथेन ॥ दृतिंसुकर्षविषितंन्यंचंसमाभवंतूद्वतोनिपादाः ॥ महांतंकोशमुदचानिषिंचस्यंदंतांकुल्याविषिताःपुरस्तात् ॥ घृतेनद्यावापृथिवीव्युंधिसुप्रपाणंभवत्वघ्न्याभ्यः । यत्पर्जन्यकनिक्रदत्स्तनयन्हंसिदुष्कृतः ॥ प्रतीदंविश्वंमोदतेयत्किंचपृथिव्यामधि ॥ अवर्षीर्वर्षमुदुषूगृभायाकर्धन्वान्यत्येतवाऽउ ॥ अजीजनओषधीर्भोजनायकमुतप्रजाभ्योविदोमनीषां ॥२॥ तिस्रोवाचइतिषळर्चस्यसूक्तस्याग्नेयःकुमारोमैत्रावरुणिःपर्जन्यस्त्रिष्टुप् ॥ सुवृष्ट्यर्थंजपेविनियोगः ॥ ॐ तिस्रोवाचःप्रवदज्योतिरग्रायाएतद्दुहेमधुदोघमूधः ॥ सवत्संकृण्वन्गर्भमोषधीनांसद्योजातोवृषभोरोरवीति ॥ योवर्धनओषधीनांयोअपांयोविश्वस्यजगतोदेवईशे ॥ सत्रिधातुशरणंशर्मयंसत्त्रिवर्तुज्योतिःस्वभिष्ट्य१स्मे ॥ स्तरीरुत्वद्भवतिसूतउत्वद्यथावशंतन्वंचक्रएषः ॥ पितुःपयःप्रतिगृभ्णातिमातातेनपितावर्धते

तेतेनपुत्रः ॥ यस्मिन्विश्वानिभुवनानितस्थुस्तिस्रोद्यावस्त्रेधासस्रुरापः ॥ त्रयःकोशासउपसेचनासोमध्वश्चोतंत्यभितोविरप्शं ॥
इदंवचःपर्जन्यायस्वराजेहृदोअस्त्वंतरंतज्जुजोषत् ॥ मयोभुवोवृष्टयःसंत्वस्मेसुपिप्पलाओषधीर्देवगोपाः ॥ सरेतोधावृषभःशश्व
तीनांतस्मिन्नात्माजगतस्तस्थुषश्च ॥ तन्मऋतंपातुशतशारदाययूयंपातस्वस्तिभिःसदानः ॥ १ ॥ ॥ पर्जन्यायेतितृचस्यसूक्त
स्यआग्नेयःकुमारोमैत्रावरुणिर्वसिष्ठोवापर्जन्योगायत्री सुवृष्ट्य० योगः ॥ ॐ पर्जन्यायप्रगायतदिवस्पुत्राय... ॥ सनोयव
समिच्छतु ॥ योगर्भमोषधीनांगवांकृणोत्यर्वतां ॥ पर्जन्यःपुरुषीणां ॥ तस्माइदास्येहुविर्जुहोतामधुमत्तमं ॥ इळांनःसंयतंकरत्
॥ २ ॥ ॥ संवत्सरमितिदशर्चस्यसूक्तस्यमैत्रावरुणिर्वसिष्ठोमंडूकाआद्यानुष्टुप् शिष्टास्त्रिष्टुभः सुवृष्ट्यर्थ० ॥ ॐ संवत्सरंशश
यानाब्राह्मणाव्रतचारिणः ॥ वाचंपर्जन्यजिन्वतांप्रमंडूकाअवादिषुः ॥ दिव्याआपोअभियदेनमायन्दृतिंनशुष्कंसरसीशयानं ॥
गवामहनमायुर्वत्सिनीनांमंडूकानांवग्नुरत्रासमेति ॥ यदीमेनाँऽउशतोअभ्यवर्षीत्तृष्यावतःप्रावृष्यागतायां ॥ अक्खलीकृत्या
पितरंनपुत्रोऽअन्योअन्यमुपवदंतमेति ॥ अन्योअन्यमनुगृभ्णात्येनोरपांप्रसर्गेयदमंदिषातां ॥ मंडूकोयदभिवृष्टःकनिष्कन्पृ
श्निःसंपृक्तेहरितेनवाचं ॥ यदेषामन्योअन्यस्यवाचंशाक्तस्येववदतिशिक्षमाणः ॥ सर्वंतदेषांसमृधेवपर्वयत्सुवाचोवदथनाध्यप्सु
॥ ३ ॥ गोमायुरेकोअजमायुरेकःपृश्निरेकोहरितएकएषां ॥ समानंनामबिभ्रतोविरूपाःपुरुत्रावाचंपिपिशुर्वदंतः ॥ ब्राह्मणासो
अतिरात्रेनसोमेसरोनपूर्णमभितोवदंतः ॥ संवत्सरस्यतदहःपरिष्ठयन्मंडूकाःप्रावृषीणंबभूव ॥ ब्राह्मणासःसोमिनोवाचमक्रत
ब्रह्मकृण्वंतःपरिवत्सरीणं ॥ अध्वर्यवोघर्मिणःसिष्विदानाआविर्भवंतिगुह्यानकेचित् ॥ देवहितिंजुगुपुर्द्वादशस्यऋतुंनरोनप्रमि
नंत्येते ॥ संवत्सरेप्रावृष्यागतायांतप्ताघर्माअश्नुवतेविसर्गं ॥ गोमायुरदादजमायुरदात्पृश्निरदाद्धरितोनोवसूनि ॥ गवांमंडूका

ददतःशतानिसहस्रसावेप्रतिरंतआयुः ॥ ४ ॥ उपप्लवंदमंडूकिवर्षमावदतादुरि ॥ मध्येह्रदस्यप्लवस्वनिगृह्यचतुरःपरः ॥ ॥
प्रदेवत्रेतिपंचदशर्चस्यसूक्तस्यऐलूषःकवष अपः अपांनप्तावात्रिष्टुप् सुवृष्ट्यर्थेजपेविनियोगः ॥ ॐ प्रदेवत्राब्रह्मणेगातुरेत्वपोअ
च्छामनसोनप्रयुक्ति ॥ महीमित्रस्यवरुणस्यधासिंपृथुज्रयसेरीरधासुवृक्तिं ॥ अध्वर्यवोहविष्मंतोहिभूताच्छापइतोशतीरुशंतः ॥
अवयाश्चष्टेअरुणःसुपर्णस्तमास्यध्वमूर्मिमद्यासुहस्ताः ॥ अध्वर्यवोपइतासमुद्रमपांनपातंहविषायजध्वं ॥ सवोददद्र्मिमद्यासुपू
तंतस्मैसोमंमधुमंतंसुनोत ॥ योअनिध्मोदीदयदप्स्वं१तर्यंविप्रासईळतेअध्वरेषु ॥ अपांनपान्मधुमतीरपोदायाभिरिंद्रोवावृधे
वीर्याय ॥ याभिःसोमोमोदतेहर्षतेचकल्याणीभिर्युवतिभिर्नमर्यः ॥ ताअध्वर्योअपोअच्छापरेहियदासिंचाओषधीभिःपुनीतात्
॥ १ ॥ एवेद्यूनेयुवतयोनमंतयदीमुशंनुशतीरेत्यच्छ ॥ संजानतेमनसासंचिकित्रेध्वर्यवोधिषणापश्चदेवीः ॥ योवोवृताभ्योअ
कृणोदुलोकंयोवोमह्याअभिशस्तेरमुंचत् ॥ तस्माइंद्रायमधुमंतमूर्मिंदेवमादनंप्रहिणोतनापः ॥ प्रास्मैहिनोतमधुमंतमूर्मिंगर्भोयो
वःसिंधवोमध्वउत्सः ॥ घृतपृष्ठमीड्यमध्वरेष्वापोरेवतीःशृणुताहवंमे ॥ तंसिंधवोमत्सरमिंद्रपानमूर्मिंप्रहेतयउभेइयर्ति ॥ मद
च्युतमौशानंनभोजांपरित्रितंतुंविचरंतमुत्सं ॥ आवर्वृततीरधनुद्विधारागोषुयुधोननियवंचरंतीः ॥ ऋषेजनित्रीर्भुवनस्यपत्नीर
पोवंदस्वसवृधःसयोनीः ॥ २ ॥ हिनोतानोअध्वरंदेवयज्याहिनोतब्रह्मसनयेधनानां ॥ ऋतस्ययोगेविष्यध्वमूधःश्रुष्टीवरीर्भूत
नास्मभ्यमापः ॥ आपोरेवतीःक्षयथाहिवस्वःक्रतुंचभद्रंबिभृथामृतंच ॥ रायश्चस्थस्वपत्यस्यपत्नीःसरस्वतीतद्गृणतेवयोधात् ॥
प्रतियदापोअदृश्रमायतीर्घृतंपयांसिबिभ्रतीर्मधूनि ॥ अध्वर्युभिर्मनसासंविदानाइंद्रायसोमंसुषुतंभरंतीः ॥ एमाअग्मन्रेवती
र्जीवधन्याअध्वर्यवःसादयतासखायः ॥ निबर्हिषिधत्तनसोम्यासोपांनप्त्रासंविदानासएनाः ॥ आग्मन्नापउशतीर्बर्हिरेदंन्य

ध्वरेअसदंदेवयंतीः ॥ अध्वर्यवःसुनुतेंद्रायसोममभूदुवःसुशकादेवयज्या ॥२॥ ॥ ऋषयोवैसरस्वत्यांसत्रमासततेकवषमैलूषं
सोमादनयन्दास्याःपुत्रःकितवोब्राह्मणःकथंनोमध्येदीक्षिष्टेतितंबहिर्धन्वोदवहन्नत्रैनंपिपासाहंतुसरस्वत्याउदकंमापादितिसब
हिर्धन्वोदूढःपिपासयावित्तएतदपोनप्त्रीयमपश्यत्प्रदेवत्राब्रह्मणेगातुरेत्वितितेनापांप्रियंधामोपागच्छत्तमापोनूदायंस्तंसरस्वती
समंतंपर्यधावत्तस्माद्धाप्येतर्हिपरिसारकमित्याचक्षतेयदेनंसरस्वतीसमंतंपरिससारतेवा ऋषयोब्रुवन्विदुर्वाइमंदेवाउपेमंह्वयाम
हाइतितथेतितमुपाह्वयंततमुपहूयैतदपोनप्त्रीयमकुर्वतप्रदेवत्राब्रह्मणेगातुरेत्विति तेनापांप्रियंधामोपागच्छन्नुपदेवानामुपापां
प्रियंधामगच्छत्युपदेवानांजयतिपरमंलोकंयएवंवेदयश्चैवंविद्वानेतदपोनप्त्रीयंकुरुते तत्संततमनुब्रूयात्संततवर्षीह्यप्रजाभ्यःपर्ज
न्योभवतियत्रैवंविद्वानेतत्संततमन्वाहयदवग्राहमनुब्रूयाज्जीमूतवर्षीह्यप्रजाभ्यःपर्जन्यः स्यात्तस्मात्तत्संततमेवानूच्यंतस्यत्रिःप्र
थमांसंततमन्वाहतेनैवतत्सर्वंसंततमनूक्तंभवति ॥ १ ॥ ताएतानवानंतरायमन्वाहहिनोतानोअध्वरंदेवयज्येतिदशमीमावर्वृत
तीरधनुद्विधाराइत्यावृत्तास्वेकधनासुप्रतियदापोअदृश्रमायतीरिति प्रतिदृश्यमानास्वाधेनवःपयसातूर्ण्यर्थाइत्युपायतीषुसम
न्यायन्त्युपयन्त्यन्याइतिसमायतीष्वापोवाअस्पर्धंतवयंपूर्वंयज्ञंवक्ष्यामोवयमिति याश्चेमाःपूर्वेद्युर्वसतीवर्योगृह्यंतेयाश्चप्रातरेक
धनास्ताभृगुरपश्यदापोवैस्पर्धंतइतिताएतयर्चासमज्ञपयत्समन्यायंत्युपयंत्यन्याइति ताःसमजानतसंजानानाहास्यापोयज्ञंवहं
तियएवंवेदापोनदेवीरुपयंतिहोत्रियमिति होतृचमसेसमवनीयमानास्वन्वाहवसतीवरीष्वेकधनासुचावेरपोध्वर्या३उइतिहोता
ध्वर्युंपृच्छत्यापोवैयज्ञोविदोयज्ञाँ३इत्येवतदाहोतेमनंनमुरित्यध्वर्युःप्रत्याहोतेमाः पश्येत्येवतदाहतास्वध्वर्योइंद्रायसोमंसोताम
धुमंतं ॥ वृष्टिवनिंतीव्रांतंबहुरमध्यंवसुमतेरुद्रवतआदित्यवतऋभुमतेविभुमतेवाजवतेबृहस्पतिवतेविश्वदेव्यावते । यस्येंद्रःपी

त्वावृत्राणिजंघनत्प्रसजन्यानितारिषो३मितिप्रत्युत्तिष्ठतिप्रत्युत्थेयावाआपःप्रतिवैश्रेयांसमायंतमुत्तिष्ठंतितस्मात्प्रत्युत्थेयाअनु पर्यावृत्याअनुवैश्रेयांसं पर्यावर्ततेतस्मादनुपर्यावृत्याअनुब्रुवैतवानुप्रपत्तव्यमीश्वरोह्यद्यप्यन्योयजेताथहोतारंयशोर्तोस्तस्माद नुब्रुवतैवानुप्रपत्तव्यंवयोयंत्यध्वभिरित्येतामनुब्रुवन्ननुप्रपद्येतजामयोअध्वरीयतां ॥ पृंचतीर्मधुनापयइतियोमधव्योयशोर्तोबु भूषेदमूर्याउपसूर्येयाभिर्वासूर्यःसहेति तेजस्कामोब्रह्मवर्चसकामोपोदेवीरुपह्वयेयत्रगावःपिबंतिनइतिपशुकामस्ताएताः सर्वा एवानुब्रुवन्ननुप्रपद्येतैतेषांकामानामवरुध्याएतान्कामानवरुंधेयएवंवेदेमाअग्मन्रेवतीर्जीवधन्याइतिसाद्यमानास्वन्वाहवसती वरीष्वेकधनासुचाग्मन्नापउशतीर्बर्हिरेदमितिसन्नासुसएतयापरिदधाति ॥ २ ॥ इतिश्रावणीखंडः॥ ॥ ७६ ॥

## ॥ ७७ ॥ अथप्रतिसांवत्सरिकश्राद्धं ॥

श्रीगणेशायनमः ॥ धृतशुक्लवस्त्रोपवस्त्रःकुशोर्णाजिनासनेष्वेषामन्यतमासनेवोपविश्य ॥ द्विराचम्य ॥ पवित्रंतेविततंब्रह्मणस्प तेप्रभुर्गात्राणिपर्येषिविश्वतः ॥ अतप्ततनूर्नतदामोअश्नुतेशृतासइद्वहंतस्तत्समाशत ॥ इतिपवित्रंधृत्वा ॥ ऊर्ध्वकेशिविरूपा क्षिमांसशोणितभक्षणे ॥ तिष्ठदेविशिखाबंधेचामुंडेह्यपराजिते ॥ अपसर्पंतुतेभूतायेभूताभूमिसंस्थिताः ॥ येभूताविघ्नकर्तारस्ते गच्छंतुशिवाज्ञया ॥ अपक्रामंतुभूतानिपिशाचाःसर्वतोदिशं ॥ सर्वेषामविरोधेनश्राद्धकर्मसमारभे ॥ ( कुशैःशिखाबंधंउपवी

---

१ द्वाभ्यामनामिकाभ्यांतुधार्येदर्भपवित्रके । एकानामिकयावापिद्वयोर्मध्येतुपर्वणोः । साग्रौविगर्भौतुकुशौकार्यंताभ्यांपवित्रकं । द्वाभ्यांतत्स्याच्चतु र्भिर्वाग्रंथियुक्तंनवाभवेत् । अन्यानिचपवित्राणिकुशदूर्वात्मकानिच । हेमात्मकपवित्रस्यकलांनार्हंतिषोडशीं । इतिपवित्रलक्षणं ॥

तबंधंनीवीबंधं-दक्षिणेवामेवाकुक्षौतिलैःसहकुशत्रयं-आसनेदर्भधारणंचकृत्वा ) प्राणानायम्य ॥ पितृदेवताभ्योनमः ॥ विष्णु र्विष्णुः ॥ श्रीमद्भगवतोमहापुरुषस्यइत्यादिदेशकालावुक्त्वा श्रीपरमेश्वरप्रीत्यर्थं (पुरूरवार्द्रवसंज्ञकानांविश्वेषांदेवानां) ॥ प्रा चीनावीती ॥ अस्मत्पितृपितामहप्रपितामहानांअमुकशर्मणांअमुकसगोत्राणांवसुरुद्रादित्यस्वरूपाणां ( मातुःश्राद्धेतुमातृपि तामहीप्रपितामहीनांअमुकामुकदानांअमुकगोत्राणां ) सव्यं एतेषां श्रेयोर्थंमोक्षार्थंतृप्त्यर्थंममपितृणांप्रतिसांवत्सरिकश्राद्धंस दैवंसपिंडंसाग्नौकरणंपार्वणेनविधिनाअन्नेनहविषासद्यःकरिष्ये ॥ तदंगंयवतिलोदकादिकरिष्ये ॥ आत्मशुद्ध्यर्थंभोक्तृगृहभांड भाजनशुद्ध्यर्थंचप्रायश्चित्ता( र्थंवैश्वदेव )सूक्तजपमहंकरिष्ये ॥ कुरुष्वइतिप्रतिवचनं ॥ ताम्रपात्रे इमंमेगंगेयमुनेसरस्वतिशु तुद्रिस्तोमंसचतापरुष्ण्या ॥ असिक्न्यामरुद्वृधेवितस्तयार्जीकीयेशृणुह्यासुषोमया ॥ इत्युदकंनिक्षिप्य ॥ गंधद्वारांदुराधर्षांनि त्यपुष्टांकरीषिणीं ॥ ईश्वरींसर्वभूतानांतामिहोपह्वयेश्रियं ॥ इतिगंधं ॥ शरासःकुशरासोदर्भासःसैर्याउत ॥ मौंजाअदृष्टावैरि णाःसर्वेंसाकंन्यलिप्सत ॥ इतिकूर्चनिक्षिप्य ॥ यवोसिधान्यराजोवावारुणोमधुसंयुतः ॥ निर्णोदःसर्वपापानांपवित्रमृषिभिःस्मृ

---

१ अत्रदक्षिणकक्ष्यांसयवपवित्रधारणंवामकक्ष्यांसतिलपवित्रधारणमित्याचारःक्वचित् ॥ २ संबंधगोत्रनामेतिसंबंधनामगोत्रेतिवाक्रमः । तत्र-सकारेणतुवक्तव्यंगोत्रंसर्वत्रधीमता । इतिवचनात् भारद्वाजसगोत्राणामिति भारद्वाजगोत्राणामितिवोच्चारःकार्यः । विभक्तिविचारः—षष्ठीविभक्त्यासंकल्पःक्षणश्चाक्षय्यकर्मच । षष्ठ्यावास्याच्चतुर्थ्यावासनदानंद्विजातये । द्वितीययावाहनंस्याद्विभक्तिस्तुचतुर्थिका । अन्नदानेपिंडपूजास्वधास्तीतिवाचने । पिंडदानेतुसंबुद्धिर्येचत्वेत्यादितःपुरा । ततःपरंचतुर्थीचेत्युभयंसर्वसंमतं । शेषाणिसर्वकर्माणिसंबुद्ध्यंतेयथायथं । इदंतेवाइदंवोवाप्रयुञ्ज्यैवसमाचरेत् ॥ ३ कूर्चलक्षणंसूत्रावल्यां—प्रथमाब्देपंचदर्भैःप्रत्यब्देसप्तभिस्तथा । तीर्थेमहालयेचैवनवदर्भैस्तुकूर्चकः ॥ आकरेष्वनुपलंभादयमाचारलब्धोभाति ॥

तं ॥ इतियवान् ॥ याःफलिनीर्याऽअफलाअपुष्पायाश्चपुष्पिणीः ॥ बृहस्पतिप्रसूतास्तानोमुंचंत्वंहसः ॥ इतिपूगीफलं ॥ हिर
ण्यरूपःसहिरण्यसंदृगपांनपात्सेदुहिरण्यवर्णः ॥ हिरण्ययात्परियोनेर्निषद्याहिरण्यदाददत्यन्नमस्मै ॥ इतिहिरण्यं ॥ युवासुवा
साःपरिवीतआगात्सउश्रेयान्भवतिजायमानः ॥ तंधीरासःकवयउन्नयंतिस्वाध्यो३ मनसादेवयंतः ॥ यवोदकेइदंगंधंपुष्पंतुलसी
पत्रंनमः ॥ सर्वेउपचाराःयवैःसंपूर्णाःसंतु ॥ अपसव्यं ॥ तिलोदकं ॥ इमंमेगंगे० ॥ गंधद्वारां० ॥ शुरास:० ॥ तिलोसिसोमदे
वत्योगोसवेदेवनिर्मितः ॥ प्रत्नवद्भिःप्रत्तःस्वधयापितृनिमांल्लोकान्प्रीणयाहिनःस्वधानमः ॥ इतितिलान् ॥ माकाकंबीरमुद्वृहो
वनस्पतिमशस्तीर्विहिनीनशः ॥ मोतसूरोअहएवाचनग्रीवाआदधतेवेः ॥ इतिभृंगराजपत्रं ॥ याःफलिनी० ॥ इतिपूगीफलं ॥
हिरण्यरूपः० ॥ इतिहिरण्यं ॥ युवासुवासाः० ॥ तिलोदकेइदंगंधंपुष्पंभृंगराजपत्रंनमः ॥ सर्वेउपचारास्तिलैःसंपूर्णाःसंतु ॥
गंधपुष्पैःप्रच्छाद्य ॥ सहस्रशीर्षापुरुषः० ॥ सूक्तं ॥ ममाग्नेवर्चोविहवेष्वस्तुवयंत्वेंधानास्तन्वंपुषेम ॥ मह्यंनमंतांप्रदिशश्चतस्र
स्त्वयाध्यक्षेणपृतनाजयेम ॥ ममदेवाविहवेसंतुसर्वइंद्रवंतोमरुतोविष्णुरग्निः ॥ ममांतरिक्षमुरुलोकमस्तुमह्यंवातःपवतांकामेऽ
अस्मिन् ॥ मयिदेवाद्रविणमायजंतांमय्याशीरस्तुमयिदेवहूतिः ॥ दैव्याहोतारोवनुषंतपूर्वेरिष्टाःस्यामतन्वासुवीराः ॥ मह्यंय
जंतुममयानिहव्याकूतिःसत्यामनसोमेअस्तु ॥ एनोमानिगांकतमच्चनाहंविश्वेदेवासोऽअधिवोचतानः ॥ देवीःषळुर्वीरुरुनःकृ
णोतविश्वेदेवासइहवीरयध्वं ॥ माहास्महिप्रजयामातनूभिर्मारधामद्विषतेसोमराजन् ॥ १ ॥ अग्नेमन्युंप्रतिनुदन्परेषामदब्धो
गोपाःपरिपाहिनस्त्वं ॥ प्रत्यंचोयंतुनिगुतःपुनस्ते१मैषांचित्तंप्रबुधांविनेशत् ॥ धाताधातॄणांभुवनस्ययस्पतिर्देवंत्रातारमभिमा
तिषाहं ॥ इमंयज्ञमश्विनोभाबृहस्पतिर्देवाःपांतुयजमानन्यर्थात् । उरुव्यचानोमहिषःशर्मयंसदस्मिन्हवेपुरुहूतःपुरुक्षुः ॥ सनः

प्रजायैहर्यश्वमृळयेंद्रमानोरीरिषोमापरादाः ॥ येनःसपत्नाअपतेभवंतिंद्राग्निभ्यामवबाधामहेतान् ॥ वसवोरुद्राऽआदित्याउ
परिस्पृशंमोग्रंचेत्तारमधिराजमक्रन् ॥ अर्वाचमिंद्रममुतोहवामहेयोगोजिद्धनजिदश्वजिद्यः ॥ इमंनोयज्ञंविहवेजुषस्वास्यकुल्मो
हरिवोमेदिनंत्वा ॥ तरत्समंदीधावतिधारासुतस्यांधसः ॥ तरत्समंदीधावति ॥ उस्रावेदवसूनांमर्तस्यदेव्यवसः ॥ तरत्समंदी
धावति ॥ ध्वस्रयोःपुरुषंत्योरासहस्राणिदद्महे ॥ तरत्समंदीधावति ॥ आययोस्त्रिंशततंतनासहस्राणिचदद्महे ॥ तरत्समंदीधा
वति ॥ ॥ नतमंहोनदुरितंदेवासोअष्टमर्त्यं ॥ सजोषसोयमर्यमामित्रोनयंतिवरुणोऽअतिद्विषः ॥ तद्धिवयंवृणीमहेवरुणमि
त्रार्यमन् ॥ येनानिरंहसोयूयंपाथनेथाचमर्त्यमतिद्विषः ॥ तेनूनंनोयमूतयेवरुणोमित्रोऽअर्यमा ॥ नयिष्ठाऽउनोनेषणिपर्षिष्ठाऽ
उनःपर्षण्यतिद्विषः ॥ यूयंविश्वंपरिपाथवरुणोमित्रोऽअर्यमा ॥ युष्माकंशर्मणिप्रियेस्यामसुप्रणीतयोतिद्विषः ॥ आदित्यासोऽ
अतिस्रिधोवरुणोमित्रोऽअर्यमा ॥ उग्रंमरुद्भीरुद्रंहुवेमेंद्रमग्निंस्वस्तयेतिद्विषः ॥ नेतारऊषुणस्तिरोवरुणोमित्रोऽअर्यमा ॥ अति
विश्वानिदुरिताराजानश्चर्षणीनामतिद्विषः ॥ शुनमस्मभ्यमूतयेवरुणोमित्रोऽअर्यमा ॥ शर्मयच्छंतुसप्रथआदित्यासोयदीमहेअ
तिद्विषः ॥ यथाहुत्यद्वसवोगौर्यंचित्पदिषितामसुंचतायजत्राः ॥ एवोष्व१स्मन्मुंचताव्यंहःप्रतार्यग्नेप्रतरंनऽआयुः ॥ हंसःशुचि
षद्वसुरंतरिक्षसद्धोतावेदिषदतिथिर्दुरोणसत् ॥ नृषद्वरसदृतसद्व्योमसदब्जागोजाऋतजाअद्रिजाऋतं ॥ यत्किंचेदंवरुणदैव्येज
नेभिद्रोहंमनुष्या३श्चरामसि ॥ अचित्तीयत्तवधर्मायुयोपिममानस्तस्मादेनसोदेवरीरिषः ॥ ॐ भूर्भुवःस्वःतत्सवितु० ॥ शुचीवो
हव्यामरुतःशुचीनांशुचिंहिनोम्यध्वरंशुचिभ्यः ॥ ऋतेनसत्यमृतसापआयन्छुचिजन्मानःशुचयःपावकाः ॥ अग्निःशुचिव्रतत
मःशुचिर्विप्रःशुचिःकविः ॥ शुचीरोचतआहुतः ॥ उदग्नेशुचयस्तवशुक्राभ्राजंतईरते ॥ तवज्योतींष्यर्चयः ॥ एतोन्विंद्रंस्तवा

मसुन्द्रंशुद्धेनसाम्ना ॥ शुद्धैरुक्थैर्वावृध्वांसंशुद्धआशीर्वान्ममत्तु ॥ इंद्रशुद्धोनऽआगहिशुद्धःशुद्धाभिरूतिभिः ॥ शुद्धोरयिंनि धारयशुद्धोममद्धिसोम्यः ॥ इंद्रशुद्धोहिनोरयिंशुद्धोरत्नानिदाशुषे ॥ शुद्धोवृत्राणिजिघ्नसेशुद्धोवाजंसिषाससि ॥ अपवित्रःप वित्रोवासर्वावस्थांगतोपिवा ॥ यःस्मरेत्पुंडरीकाक्षंसबाह्याभ्यंतरःशुचिः ॥ सर्वस्थलभांडादिशुचिभवतु ॥ अस्तुसर्वंशुचि ॥ ब्रह्मदंडार्थंकिंचिद्धिरण्यंभूमौनिक्षिप्यसतिलजलकुशहस्तःब्राह्मणानांप्रदक्षिणात्रयंकुर्यात् ॥ ॐ भूर्भुवःस्वः ॥ समस्तसंपत्सम वाप्तिहेतवःसमुत्थितापत्कुलधूमकेतवः ॥ अपारसंसारसमुद्रसेतवःपुनंतुमांब्राह्मणपादपांसवः ॥ आपद्घनध्वांतसहस्रभानवः समीहितार्थार्पणकामधेनवः ॥ समस्ततीर्थांबुपवित्रमूर्तयोरक्षंतुमांब्राह्मणपादपांसवः ॥ विप्रौघदर्शनात्क्षिप्रंक्षीयंतेपापराशयः॥ वंदनान्मंगलावाप्तिरर्चनादच्युतंपदं ॥ आधिव्याधिहरंनृणांमृत्युदारिद्र्यनाशनं ॥ श्रीपुष्टिकीर्तिदंवंदेविप्रश्रीपादपंकजं ॥ याव तीर्वैदेवतास्ताःसर्वावेदविदिब्राह्मणेवसंतितस्माद्ब्राह्मणेभ्योवेदविद्भ्योदिवेदिवेनमस्कुर्यान्नाश्लीलंकीर्तयेदेताएवदेवताःप्रीणा ति । द्वौनमस्कारौकृत्वा ॥ अपसव्यं ॥ अक्रोधनैःशौचपरैःसततंब्रह्मचारिभिः ॥ भवितव्यंभवद्भिश्चमयाचश्राद्धकारिणा ॥ अ द्यतिथौपितृणांप्रतिसांवत्सरिकश्राद्धंकर्तुममाधिकारसंपदस्त्वितिभवंतोब्रुवंतु ॥ अस्तुश्राद्धाधिकारसंपत् ॥ सव्यं ॥ कालोऽयं मुख्यःकालोस्त्वितिभवंतोब्रुवंतु ॥ कालोऽयंमुख्यःकालोस्तु ॥ पाकादीनांहविर्योग्यतास्त्वितिभवंतोब्रुवंतु ॥ पाकादीनांहवि र्योग्यतास्तु ॥ ( क्षणादिकरिष्ये ॥ ) कुरुष्व ॥ ( विप्रस्यदक्षिणंजानुस्पृष्ट्वा ) पितृणांप्रतिसांवत्सरिकश्राद्धेपुरूरवाद्रवसंज्ञकवि श्वेदेवार्थंत्वयाक्षणःकर्तव्यः ॥ ॐ तथा ॥ (द्वितीयेपीत्थं) ॥ अपसव्यं ॥ (विप्रस्यवामंजानुस्पृष्ट्वा) पितृणांप्रतिसांवत्सरिकश्रा

द्धे अस्मत्पितृपितामहप्रपितामहार्थंत्वयाक्षणःकर्तव्यः ॥ ॐ तथा ॥ प्राप्नोतुभवान् ॥ प्राप्नवानि ॥ मंडलानिकुर्यात् ॥ प्रादेश मात्रंदेवानांमंडलंचतुरस्रकं ॥ वितस्तिमात्रंपितृमंडलंवर्तुलंकुर्यात् ॥ सव्यं ॥ देवपाद्यस्थानेइदमासनं ॥ गंधंनमः ॥ पुष्पंनमः॥ सर्वेउपचाराःयवैःसंपूर्णाःसंतु ॥ अपसव्यं ॥ पितृपाद्यस्थानेइदमासनं ॥ गंधंनमः ॥ पुष्पंनमः ॥ सर्वेउपचाराःतिलैःसंपूर्णाः संतु ॥ सव्यं ॥ देवाःस्वागतंसुस्वागतं ॥ पुरूरवार्द्रवसंज्ञकाविश्वेदेवाःब्रह्मणेभूर्भुवःस्वःइदंतेपाद्यं ॥ सुपाद्यं ॥ ( एवंद्वितीये )॥ शंनोदेवीरभिष्टयआपोभवंतुपीतये ॥ शंयोरभिस्रवंतुनः ॥ इतिमंत्रेणब्राह्मणानांशुद्धोदकेनपादप्रक्षालनंकुर्यात् ॥ अपसव्यं ॥ पितःस्वागतं ॥ सुस्वागतं ॥ पितःअमुकशर्मन् अमुकगोत्रवसुरूपब्रह्मणेभूर्भुवःस्वःइदंतेपाद्यं ॥ सुपाद्यं ॥ एवंपितामहप्रपि तामहयोः ॥ शंनोदेवीतिपूर्ववत् ॥ आधिव्याधि० ॥ कर्तापवित्रंविसृज्यहस्तौपादौप्रक्षाल्याचम्यपवित्रेधृत्वा ॥ सव्यं ॥ सर्वे षांस्वागतं ॥ सुस्वागतं ॥ ( निरंगुष्ठंविप्रदक्षिणंहस्तंधृत्वा ) देवाःसमाध्वं ॥ सुसमास्महे ॥ अपसव्यं ॥ पितरःसमाध्वं ॥ सुसमास्महे ॥ सव्यं ॥ उपक्रांतंपितृणांप्रतिसांवत्सरिकश्राद्धंकरिष्ये ॥ कुरुष्व ॥ शंनोदेवीरभिष्टयआपोभवंतुपीतये ॥ शंयो रभिस्रवंतुनः ॥ यवोसियवयास्मद्द्वेषोयवथाअरातीः ॥ अपसव्यं ॥ शंनोदेवीरभिष्टयआपोभवंतुपीतये ॥ शंयोरभिस्रवंतुनः ॥ उदीरतामवरउत्परासउन्मध्यमाःपितरःसोम्यासः ॥ असुंयईयुरवृकाऋतज्ञास्तेनोवंतुपितरोहवेषु ॥ अपहताअसुरारक्षांसिपि

---

१ संकल्पेक्षणदानेपाद्येआसनेआवाहनेर्घ्यदानेगंधाद्याच्छादनांतपंचोपचारेष्वन्नदानेपिंडदानेंजनाभ्यंजनयोरक्षय्येस्वधावाचनेचसंबंधगोत्रनामोच्चारणं ॥ २ अंगणेश्राद्धदेशद्वारेवाचतुरस्रंद्विहस्तंप्रादेशमात्रंवोदक्प्लवंदेवमंडलंकृत्वा ततोदक्षिणेषडंगुलंत्यक्त्वा दक्षिणाप्लवंचतुर्हस्तंवितस्तिमात्रंवावर्तुलं पितृमंडलंकार्यं ॥ ३ एतदाचमनप्रकारस्त्विरथं ॥ मंडलात्पूर्वतोदेवैःपितृभिश्चतथोत्तरे । कर्त्राचैवतथैशान्यामेवमाचमनंस्मृतं ॥

शाखायेक्षयंतिपृथिवीमनु ॥ अन्यत्रैतोगच्छंतुयत्रैतेषांगतंमनः ॥ इतिसर्वत्रतिलान्विकीर्य ॥ रक्षोहणंकृजिनमाजिघर्मिमित्रंप्र थिष्ठमुपयामिशर्म ॥ शिशानोऽअग्निःक्रतुभिःसमिद्धःसनोदिवासरिषःपातुनक्तं ॥ अष्टौवसवएकादशरुद्राद्वादशादित्याःश्रा द्धद्वारेवैष्णवीरक्षागयेयंभूमिः ॥सुभूमिः॥सव्यं ॥ दर्भैःपाकप्रोक्षणं॥ तरत्समंदी० ॥ त्रिभिष्ट्वंदेवसवितर्वर्षिष्ठैःसोमधामभिः॥ अग्नेदक्षैःपुनीहिनः ॥ पुनंतुमांदेवजनाःपुनंतुवसवोधिया ॥ विश्वेदेवाःपुनीतमाजातवेदःपुनीहिमा ॥ प्रप्यायस्वप्रस्यंदस्वसोम विश्वेभिरंशुभिः ॥ देवेभ्यउत्तमंहविः ॥ भूर्भुवःस्वः ॥ तत्सवितु० ॥ इतिप्रोक्ष्य ॥पाकादीनांपवित्रतास्तु॥ सर्वेपाकाःशुच योभवंतु ॥ पाकप्रोक्षणंविधिवदस्तु ॥ अस्तुविधिवत्॥ आगच्छंतुमहाभागाविश्वेदेवामहाबलाः॥ येह्यत्रविहिताःश्राद्धेसाव धानाभवंतुते ॥ सावधानाःस्मः ॥ अपसव्यं ॥ श्राद्धभूमौगयांध्यात्वाध्यात्वादेवंगदाधरं ॥ वस्वादींश्चपितॄन्ध्यात्वाततःश्रा द्धंप्रवर्तते ॥ प्रवर्तय ॥ सव्यं ॥ देवविप्रहस्ते अपोदत्वा । ( वामकरालब्धेनोत्तानेनदक्षकरेणसयवंदर्भद्वयंआसनदक्षभागे ) पुरूरवार्द्रवसंज्ञकानांविश्वेषांदेवानांब्रह्मणेभूर्भुवःस्वरिदमासनं ॥ स्वासनं ॥ ( एवंद्वितीयदेवे ) ॥ अत्रास्यतां ॥ धर्मोसि ॥ (निरंगुष्ठंकरंधृत्वा) ॥ प्रतिसांवत्सरिकश्राद्धेदेवेक्षणःक्रियतां ॥ॐ तथा ॥ प्राप्नोतुभवान् ॥प्राप्नवानि ॥ अर्घ्यमासाद्य ॥ वि प्राग्रेभूमिंप्रोक्ष्यप्रागग्रौद्वौद्वौदर्भावास्तीर्य पात्रद्वयंन्युब्जंनिधाय गायत्र्याप्रोक्ष्यउद्धृत्यपुनःप्रोक्ष्यतदुपरिपूर्वाग्रकूर्चौनिधाय ॥ अपआसिच्य ॥ शंनोदेवीरभिष्टयआपोभवंतुपीतये ॥ शंयोरभिस्रवंतुनः ॥ इतिसकृदभिमंत्र्य ॥ यवोसिधान्यराजोवावारु

१ निपात्यदक्षिणंजानुदेवान्परिचरेत्सदा। पितॄणांपरिचर्यातुवामजानुनिपातनात् । प्रदक्षिणंतुदेवानांपितॄणामप्रदक्षिणं । पितॄणांद्विगुणाभुग्नादर्भा दैवेऋजुत्वगाः । दैवेतूदङ्मुखःकर्तापित्र्येस्याद्दक्षिणामुखः ॥ २ प्रत्युपचारमाद्यंतयोरुदकदानंविहितं ॥

णोमधुसंयुतः ॥ निर्णोदःसर्वपापानांपवित्रमृषिभिःस्मृतं ॥ देवार्घ्यपात्रयोःगंधंपुष्पंतुलसीपत्रंनमः ॥ सर्वेउपचारायवैःसंपूर्णाःसंतु ॥ देवार्घ्यपात्रेसंपन्ने ॥ सुसंपन्ने ॥ स्वाहाअर्घ्याः ॥ संत्वर्घ्याः ॥ ( वामकरंकुशयवयुतंविप्रदक्षिणजानुनिन्यस्यहस्तेयवान्गृहीत्वा ) पुरूरवार्द्रवसंज्ञकान्विश्वान्देवान्भवत्स्वावाहयिष्ये ॥ आवाहय ॥ विश्वेदेवासआगतशृणुतामइमंहवं ॥ एदंबर्हिर्निषीदत ॥ ( इतिप्रतिविप्रमावाह्य ) ॥ विश्वेदेवाःशृणुतेमंहवंमेयेअंतरिक्षेयउपद्यविष्ठ ॥ येअग्निजिह्वाउतवायजत्राआसद्यास्मिन्बर्हिषिमादयध्वं ॥ विश्वान्देवानावाहयामिइत्यावाह्यावशिष्टयवान्देवद्विजपाददेशेभूमौक्षिपेत् ॥ अपोदत्वा ॥ (पात्रोपरितनौदर्भौहस्तेदत्वा ) पुरूरवार्द्रवसंज्ञकाविश्वेदेवाःइदंवोअर्घ्यंस्वाहानमः ॥ अस्त्वर्घ्यं ॥ (प्रतिविप्रं) यादिव्याआपःपृथिविसंबभूवुर्याअंतरिक्ष्याउतपार्थिवीर्याः ॥ हिरण्यवर्णायज्ञियास्तानआपःशंस्योनाभवंतु ॥ इदमर्घ्यंदत्तंनमम ॥ अस्तुदत्तं ॥ एवंद्वितीयेपि ॥ पुरूरवार्द्रवसंज्ञकाविश्वेदेवाःयथाभागशःअमीवोगंधाःस्वाहानमः ॥ सुगंधाः ॥ पु० इमानिवःपुष्पतुलसीपत्राणिस्वाहानमः ॥ सुपुष्पाणिसुपत्राणि ॥ पु० पूजार्थेएषवोधूपःस्वाहानमः ॥ सुधूपः ॥ पु० एषवोदीपःस्वाहानमः ॥ सुदीपः ॥ पु० आच्छादनार्थेवासोनिष्क्रयंयथाशक्तिद्रव्यंस्वाहानमः ॥ अस्तुस्वाच्छादनं ॥ अनुलेपनार्थेगोपीचंदनं ॥ धारणार्थेयज्ञोपवीतं ॥ फलार्थेपूगीफलं ॥ पवित्रार्थाविमौकुशौ ॥ अस्तुपवित्रं ॥ युवासुवासाःपरिवीतआगात्सउश्रेयान्भवतिजायमानः ॥

---

१ देवार्चादक्षिणादिःस्यात्पादजान्वंसमूर्धसु । शिरोंसजानुपादेषुवामांगादिषुपैतृके । देवतीर्थेनदैवंतत्पितृतीर्थेनपैतृकं ॥ २ गंधद्वारेतिवैगंधमायनेतेचपुष्पकं ॥ धूरसीत्यमुनाधूपमुद्दीप्यस्वेतिदीपकं ॥ युवंवस्त्राणिमंत्रेणवस्त्रंदद्यात्प्रयत्नतः ॥ ३ अगस्त्यंभृंगराजंचतुलसीकमलंतथा । चंपकंतिलपुष्पंचदूर्वाश्चपितृवल्लभाः ॥

तंधीरासःकवयउन्नयंतिस्वाध्योमनसादेवयंतः ॥ देवेभ्यएतेगंधपत्रपुष्पधूपदीपार्चनाच्छादनांताउपचाराःसर्वेपरिपूर्णाभवंतु अर्चनविधेःस्वर्चितमस्तु ॥ न्यूनातिरिक्तंविधिवदस्तु ॥ अस्तुविधिवत् ॥ यस्यस्मृत्याचनामोक्त्यातपोयज्ञक्रियादिषु ॥ न्यूनं संपूर्णतांयातिसद्योवंदेतमच्युतं ॥ युष्मदनुज्ञयापित्राद्यर्चनंकरिष्ये ॥ कुरुष्व ॥ अपसव्यं ॥ ( दक्षिणंजानुनिपात्य ) अस्मत् पितृपितामहप्रपितामहानांअमुकशर्मणांअमुकगोत्राणांवसुरुद्रादित्यस्वरूपाणांब्रह्मणेभूर्भुवःस्वरिदमासनं ( इतिसतिलद्विगु णभुग्नदर्भदानं ) ॥ स्वासनं ॥ अत्रास्यतां ॥ धर्मोसि ॥ ( निरंगुष्ठंविप्रकरंधृत्वा ) प्रतिसांवत्सरिकश्राद्धेपित्र्येक्षणःक्रियतां ॥ ॐ तथा ॥ प्राप्नोतुभवान् ॥ प्राप्नवानि ॥ अर्घ्यमासाद्य ॥ प्रोक्षितायांभुविदक्षिणाग्रांस्त्रींस्त्रीन्दर्भानास्तीर्यतत्राग्नेयीसंस्थंपात्र त्रयंन्युब्जंनिधाय ॥ गायत्र्याप्रोक्ष्य ॥ उद्धृत्य ॥ पुनःप्रोक्ष्य ॥ दक्षिणाग्रान्द्विगुणभुग्नांस्त्रींस्त्रीन्दर्भान्निधायजलमापूर्य ॥ शं नोदेवीरभिष्टयआपोभवंतुपीतये ॥ शंयोरभिस्रवंतुनः ॥ इतिसकृदनुमंत्र्य ॥ तिलोसिसोमदेवत्योगोसवेदेवनिर्मितः ॥ प्रत्न वद्भिःप्रत्तःस्वधयापितृनिमांल्लोकान्प्रीणयाहिनःस्वधानमः ॥ इतिमंत्रावृत्त्यातिलान्पृथक्पृथक्पात्रेषुप्रक्षिप्य ॥ पित्राद्यर्घ्य पात्रेषु गंधंपुष्पंभृंगराजपत्रंचनमः ॥ सर्वेउपचाराःतिलैःसंपूर्णाःसंतु ॥ पित्रर्घ्यपात्राणिसंपन्नानि ॥ सुसंपन्नानि ॥ स्वधार्घ्याः॥ संत्वर्घ्याः ॥ ( सव्यकरंकुशतिलयुतंविप्रवामजानुनिन्यस्य ) अस्मत्पितृपितामहप्रपितामहान्अमुकशर्मणःअमुकगोत्रान्वसु रुद्रादित्यस्वरूपान्भवत्स्वावाहयिष्ये ॥ आवाहय ॥ हस्तेतिलान्गृहीत्वा ) उशंतस्त्वानिधीमह्युशंतःसमिधीमहि ॥ उशंनुशत

१ अर्घ्यमावाहनंचैवद्विजांगुष्ठनिवेशनं । तृप्तिप्रश्नंचविकिरंतीर्थेपंचविवर्जयेत् । संकल्पासनयोःषष्ठीद्वितीयावाहनेतथा । अन्नदानेचतुर्थीस्या च्छेषंसंबोधनंस्मृतं ॥

आवहपितॄन्हविषेअत्तवे ॥ ( इतिप्रतिविप्रमावाह्य ) आयंतुनःपितरःसोम्यासोग्निष्वात्ताःपथिभिर्देवयानैः ॥ अस्मिन्यज्ञेस्वध यामदंत्वधिब्रुवंतुतेवंत्वस्मान् ॥ इतिसकृदुपतिष्ठेत् ॥ पितृपितामहप्रपितामहान्आवाहयामीत्यावाह्य हस्तेवशिष्टतिलान्द्विज पादमूलेनिक्षिपेत् ॥ ( अधस्थदर्भैःसहार्घ्यपात्रमेकैकंविप्राग्रेस्वधाअर्घ्याःसंत्वर्घ्याःइतिमंत्रावृत्त्यास्थापयेत् ) ॥ सव्यं ॥ अपो दत्वापात्रोपरिस्थदर्भान्विप्रहस्तेदत्वाअस्मत्पितरिदंतेऽर्घ्यं ॥ अस्त्वर्घ्यं ॥ अपसव्यं ॥ यादिव्याआपःपृथिविसंबभूवुर्याअंतरि क्ष्याउतपार्थिवीर्याः ॥ हिरण्यवर्णायज्ञियास्तानआपःशंस्योनाभवंतु ॥ पित्रेइदमर्घ्यंदत्तंनमम ॥ अस्तुदत्तं ॥ सव्यं ॥ पिताम हेदंतेऽर्घ्यं ॥ अस्त्वर्घ्यं ॥ अपसव्यं ॥ यादिव्या० ॥ पितामहायेदमर्घ्यंदत्तंनमम ॥ सव्यं ॥ प्रपितामहेदंतेऽर्घ्यंअस्त्वर्घ्यं ॥ अपसव्यं ॥ यादिव्या० ॥ प्रपितामहायेदमर्घ्यंदत्तंनमम ॥ अस्तुदत्तं ॥ प्रथमपित्रर्घ्यपात्रेसंस्रवान्समवनीयताभिरद्भिःपुत्र कामोमुखमनक्ति ॥ पुत्रवान्भव ॥ ( संस्रवपात्रंदेवपात्रादुत्तरतोदर्भोपरिन्युब्जंस्थापयेत् ) अपसव्यं ॥ पितृभ्यःस्थानमसि ॥ प्रणीतायेइदंगंधपुष्पंतुलसीपत्रंभृंगराजपत्रंसर्वेउपचारास्तिलैःसंपूर्णाःसंतु ॥ अप उपस्पृश्य ॥ अपसव्यं ॥ अस्मत्पितृपितामह प्रपितामहाःशर्माणःगोत्राःवसुरुद्रादित्यस्वरूपाःयथाभागशःअमीवोगंधाःस्वधानमः ॥ सुगंधाः ॥ (प्रत्युपचारमादावंतेचोदकं दद्यात् ) अस्मत्पितृपितामहप्रपितामहाःअमुकशर्माणःअमुकगोत्राःवसुरुद्रादित्यस्वरूपाःमाल्यार्थेइमानिवःपुष्पाणितुलसीप त्रभृंगराजपत्रसहितानिस्वधानमः ॥ सुपुष्पाणि ॥ सुपत्राणि ॥ अस्मत्पितृपितामहप्रपितामहाःअमुकशर्माणःअमुकगोत्राःवसु

---

१ अत्रमातृश्राद्धेपिपितॄनित्येवपठेत्नमातृहोमंत्रपठितत्वात् ॥ २ सव्यहस्तान्वारब्धदक्षिणहस्तेनार्घ्यदानं ॥ ३ अत्रपक्षांतरं—प्रथमपात्रमुत्तानं संस्रावोदकसहितंमंत्रेणासाद्यतृतीयपात्रेणसकूर्चपवित्रंतदाच्छादयेदिति ॥

रुद्रादित्यस्वरूपाःएषवोधूपःस्वधानमः ॥ सुधूपः ॥ अस्मत्पितृ० एषवोदीपःस्वधानमः ॥ सुदीपः ॥ आच्छादनार्थेवासोनिष्क्रयंकिंचित्द्रव्यंस्वधानमः ॥ अस्त्वाच्छादनं ॥ अनुलेपनार्थेगोपीचंदनं ॥ धारणार्थेयज्ञोपवीतं ॥ फलार्थेपूगीफलं ॥ पवित्रार्थेइमेकुशाः ॥ सुपवित्रं ॥ इदंपितृभ्योनमोअस्त्वद्ययेपूर्वासोयउपरासईयुः ॥ येपार्थिवेरजस्यानिषत्तायेवानूनंसुवृजनासुविक्षु ॥ पितृभ्यःएतेगंधपुष्पधूपदीपार्चनाच्छादनांताउपचाराःसर्वेपरिपूर्णाभवंतु ॥ अर्चनविधेःस्वर्चितमस्तु ॥ अस्तुस्वर्चितं ॥ न्यूनातिरिक्तंविधिवदस्तु ॥ अस्तुविधिवत् ॥ यस्यस्मृत्या० ॥ सव्यं ॥ युष्मदनुज्ञयामंडलादिपात्रासादनंकरिष्ये ॥ कुरुष्व ॥ देवपात्रस्थानेचतुरस्रंनैर्ऋतिमारभ्यईशान्यंतंप्रदक्षिणंमंडलंकृत्वा ॥ पितृपात्रेवर्तुलंईशानीतोनैर्ऋत्यंतमप्रदक्षिणंमंडलंकुर्यात् ॥ ततस्तेषुभोजनपात्राणिस्थापयेत् ॥ भस्मगृहीत्वापितृपात्राणांपरितः ॥ अपसव्यं ॥ पिशंगभृष्टिमंभृणंपिशाचिमिंद्रसंमृण ॥ सर्वंरक्षोनिबर्हय ॥ सव्यं ॥ देवपात्रपरितः ॥ रक्षाणोअग्नेतवरक्षणेभीरारक्षाणःसुमखप्रीणानः ॥ प्रतिष्फुरविरुजवीड्वंहोजहिरक्षोमहिंचिद्वावृधानं ॥ ब्रह्मचतेजातवेदोनमश्चेयंचगीःसदमिद्वर्धनीभूत् ॥ रक्षाणोअग्नेतनयानितोकारक्षोतनस्तन्वो३अप्रयुच्छन् ॥ यथाचक्रधरोविष्णुस्त्रैलोक्यंपरिरक्षति ॥ एवंमंडलभस्मांकःसर्वभूतानिरक्षतु ॥ सर्वेषांपापदृष्टीनांचक्षुर्बध्नातिकेशवः ॥ भस्मनामंडलंकुर्यात्पंक्तिदोषोनविद्यते ॥ पितृपूर्वकंकरशुद्धिः ॥ भवदनुज्ञयाविप्रपाणावग्नौकरणंकरिष्ये ॥ क्रियतां ॥

---

१ ब्रह्माविष्णुश्चरुद्रश्चश्रीर्हुताशनएवच । मंडलान्युपजीवंतितस्मात्कुर्वीतमंडलं ॥ इति ॥ २ आदित्यावसवोरुद्राविश्वेदेवाःसपैतृकाः । मंडलेचोपतिष्ठंतितस्मात्कुर्वीतमंडलं ॥ इति ॥ ३ पात्राणिच—पलाशमधूकोदुंबरकुटजप्लक्षजानिशस्तानि । कदलीपनसादीनिमध्यमानि ॥ ४ प्रत्येकमेकैकविप्रपक्षेविप्रपाणिष्वग्नौकरणमित्यूहःकार्यः ॥ मृतभार्यस्यापत्नीकस्यप्रथमदेवद्विजकरएवहोमोनपित्र्येइतिसिंधुः ॥

अपसव्यं ॥ घृताक्तमन्नमादायद्विधाविभज्य ॥ इदंसोमायपितृमतेइदमग्नयेकव्यवाहनायइतिभागद्वयंदक्षिणसंस्थमभिमृ
श्य ॥ वामहस्तेनदक्षिणहस्तमुपस्तीर्य ॥ मध्यात्पूर्वार्धादवदानधर्मेणावदाय ॥ पात्रस्थमवत्तंचाभिघार्य ॥ सोमायपितृमतेस्व
धानमः ॥ सोमायपितृमतइदंनमम ॥ तथा ॥ अग्नयेकव्यवाहनायस्वधानमः अग्नयेकव्यवाहनायेदंनमम ॥ एवंसर्वत्र ॥ स
व्येनोदकोपस्पर्शनं ॥ ॐ चमेस्वरश्चमेयज्ञोपचतेनमश्च ॥ यत्तेन्यूनंतस्मैतउपयत्तेऽतिरिक्तंतस्मैतेनमः ॥ अग्नयेनमः ॥ स्व
स्ति ॥ श्रद्धांमेधांयशःप्रज्ञांविद्यांबुद्धिंश्रियंबलं ॥ आयुष्यंतेजआरोग्यंदेहिमेकव्यवाहन ॥ पाणौहुतं ॥ सुहुतं ॥ घृतेनपात्रेऽ
भिघारंकृत्वा ॥ मूर्धानंदिवोअरतिंपृथिव्यावैश्वानरमृतआजातमग्निं ॥ कविंसम्राजमतिथिंजनानामासन्नापात्रंजनयंतदेवाः॥
(इत्यभिघारितेपात्रेविप्राःपाणिस्थमन्नंक्षिपेयुः[1] ॥ अत्रत्रिसुपर्णान्नसूक्तादीनांजपःकार्यः[2]) ॥ देवताभ्यःपितृभ्यश्चमहायोगिभ्य
एवच ॥ नमःस्वाहायैस्वधायैनित्यमेवनमोनमः ॥ कुरुक्षेत्रंगयांगंगांप्रभासंपुष्करंतथा ॥ एतानिपुण्यतीर्थानिश्राद्धकालेसदा
पठेत् ॥ सप्तव्याधादशार्णेषुमृगाःकालांजरेगिरौ ॥ चक्रवाकाःशरद्वीपेहंसाःसरसिमानसे ॥ तेपिजाताःकुरुक्षेत्रेब्राह्मणावेदपा
रगाः ॥ प्रस्थितादीर्घमध्वानंयूयंकिमवसीदथ ॥ अमूर्तानांचमूर्तानांपितॄणांदीप्ततेजसां ॥ नमस्यामिसदातेषांध्यायिनांयोग
चक्षुषां ॥ चतुर्भिश्चचतुर्भिश्चद्वाभ्यांपंचभिरेवच ॥ हूयतेचपुनर्द्वाभ्यांसमेविष्णुःप्रसीदतु ॥ ईशानःपितृरूपेणमहादेवोमहेश्व
रः ॥ प्रीयतांभगवानीशःपरमात्मासदाशिवः ॥ सव्यं ॥ गायत्रीमंत्रेणान्नप्रोक्षणं ॥ दक्षिणजानुपातयित्वा ॥ तूष्णींपरिषेच

---

१ विप्राःपाणिस्थंस्वस्वपात्रेसंस्थाप्यभोजनस्थानादन्यत्रहस्तंप्रक्षाल्याचम्ययथास्थानमुपविशेयुः । अग्नौकरणशेषंपिंडार्थमवस्थाप्यपितृपात्रेष्वेवदेयं ।
देवद्विजपाणिहोमेतुदेवपात्रेषु ॥ २ त्रिसुपर्णपूर्वभोजनविधौ २१ पत्रेगतं । अन्नसूक्तानिराक्षोघ्नादिसूक्तानिचएतच्छ्राद्धप्रयोगांतेन्निवेशितानिसंति ॥

नं ॥ ( दक्षिणहस्तउपरिवामोधइतिपाणिभ्यांपात्रमालभ्य ) पृथिवीतेपात्रंद्यौरपिधानंब्राह्मणस्यामुखेऽमृतंजुहोमिब्राह्मणानां त्वाविद्यावतांप्राणापानयोर्जुहोम्यक्षितमसिमामैषांक्षेष्ठाःअत्रामुष्मिँल्लोके ॥ अतोदेवाअवंतुनोयतोविष्णुर्विचक्रमे ॥ पृथिव्याः सप्तधामभिः ॥ विष्णोहव्यंरक्षस्वन्युब्जेनकरेणन्युब्जंद्विजांगुष्ठमूलमन्नेनिवेश्यप्रदक्षिणंभ्रामयेत् ॥ ततोवामहस्तेनपात्रंस्पृशन् पुरूरवार्द्रवसं० विश्वेदेवादेवताइदमन्नंहव्यमयंब्राह्मणआहवनीयार्थेइयंभूर्गयाअयंभोक्तागदाधरइदमन्नंब्रह्मइदंसौवर्णपात्रम क्षय्यवटच्छायेयं ॥ पुरूरवार्द्रवसंज्ञकविश्वेभ्योदेवेभ्यःइदमन्नंसोपस्करममृतरूपंपरिविष्टंपरिवेक्ष्यमाणंचास्यब्राह्मणस्यआतृप्तेः स्वाहाहव्यंनमोनमम ॥ ॐ तत्सद्गयायांविष्णुपदादिचतुर्दशपदेषुदत्तमन्नमक्षय्यमस्तुइतिसयवदर्भजलंपात्रवामभागेभूमौक्षि पेत् ॥ गयागदाधरःप्रीयतां ॥ प्रीतोभवतु ॥ येदेवासोदिव्येकादशस्थपृथिव्यामध्येकादशस्थ ॥ अप्सुक्षितोमहिनैकादशस्थते देवासोयज्ञमिमंजुषध्वं ॥ देवानुज्ञयापित्राद्यन्ननिवेदनंकरिष्ये ॥ कुरुष्व ॥ अपसव्यं ॥ तूष्णींपरिषिच्य ( वामहस्तउपरिदक्षि णोधःइतिपात्रमालभ्य ) पृथिवीतेपात्रंद्यौरपिधानंब्राह्मणस्त्वामुखेऽमृतंजुहोमिब्राह्मणानांत्वाविद्यावतांप्राणापानयोर्जुहोम्य क्षितमसिमामैषांक्षेष्ठाःअमुत्रामुष्मिँल्लोके ॥ इदंविष्णुर्विचक्रमेत्रेधानिदधेपदं ॥ समूढमस्यपांसुरे ॥ विष्णोकव्यंरक्षस्व ॥ विप्रांगु ष्ठमूलमन्नेनिवेश्यअप्रदक्षिणंभ्रामयेत् ॥ ततोवामहस्तेनपात्रमालभ्य ॥ पितृपितामहप्रपितामहादेवताः इदमन्नंकव्यमयंब्राह्म णआहवनीयार्थेइयंभूर्गयाअयंभोक्तागदाधरइदमन्नंब्रह्मइदंराजतंपात्रमक्षय्यवटच्छायेयं ॥ अस्मत्पितृपितामहप्रपितामहेभ्यः अमुकशर्मभ्यःअमुकगोत्रेभ्यःवसुरुद्रादित्यस्वरूपेभ्यः इदमन्नंसोपस्करममृतरूपंपरिविष्टंपरिवेक्ष्यमाणंचअस्यब्राह्मणस्यआतृ प्तेःस्वधाकव्यंनमोनमम ॥ ॐ तत्सत्गयायांरुद्रपदादिचतुर्दशपदेषुदत्तमन्नमक्षय्यमस्तु ॥ गयागदाधरःप्रीयतांप्रीतोभवतु ॥

येचेहपितरोयेचनेहयांश्चविद्मयाँउचनप्रविद्म ॥ त्वंवेत्थयतितेजातवेदःस्वधाभिर्यज्ञंसुकृतंजुषस्व ॥ पितृभ्यःसांकल्पितःप्रीयतां ॥ सव्यं ॥ ब्रह्मार्पणंब्रह्महविर्ब्रह्माग्नौब्रह्मणाहुतं ॥ ब्रह्मैवतेनगंतव्यंब्रह्मकर्मसमाधिना ॥ हरिर्दाताहरिर्भोक्ताहरिरन्नंप्रजापतिः ॥ हरिर्विप्रशरीरस्थोभुंक्तेभोजयतेहविः ॥ त्वांयोगिनश्चिंतयंतित्वांयजंतिचयज्वनः ॥ हव्यकव्यभुगेकस्त्वंपितृदेवस्वरूपधृक् ॥ चतुर्भिश्चचतुर्भिश्चद्वाभ्यांपंचभिरेवच ॥ हूयतेचपुनर्द्वाभ्यांसमेविष्णुःप्रसीदतु ॥ तत्सद्ब्रह्मार्पणमस्तु ॥ नैवेद्यसमर्पणं ॥ अपसव्यं ॥ ईशानविष्णुकमलासनकार्तिकेयवह्नित्रयार्करजनीशगणेश्वराणां ॥ क्रौंचामरेंद्रकलशोद्भवकश्यपानांपादान्नमामिसततंपितृमुक्तिहेतून् ॥ पंचक्रोशंगयाक्षेत्रंक्रोशमेकंगयाशिरः ॥ यत्रयत्रस्मरिष्यंतिपितृणांदत्तमक्षयं ॥ काशीविश्वेश्वरायनमः ॥ पुंडरीकाक्षायनमः ॥ गयागदाधरायनमः ॥ सव्यं ॥ मधुमतीःश्रावयिष्ये ॥ श्रावय ॥ मधुवाताऋतायतेमधुक्षरंतिसिंधवः ॥ माध्वीर्नःसंत्वोषधीः ॥ मधुनक्तमुतोषसोमधुमत्पार्थिवंरजः ॥ मधुद्यौरस्तुनःपिता ॥ मधुमान्नोवनस्पतिर्मधुमाँऽअस्तुसूर्यः ॥ माध्वीर्गावोभवंतुनः ॥ मधुमधुमधु ॥ सुमधुसर्वान्नंमधु ॥ अपसव्यं ॥ एकोविष्णुर्महद्भूतंपृथग्भूतान्यनेकशः ॥ त्रीँल्लोकान्व्याप्यभूतात्माभुंक्तेविश्वभुगव्ययः ॥ अनेनपितृणांप्रतिसांवत्सरिकश्राद्धीयब्राह्मणभोजनेनभगवान्पितृपितामहप्रपितामहस्वरूपीजनार्दनवासुदेवःप्रीयतां ॥ प्रीतोभवतु ॥ तत्सद्ब्रह्मार्पणमस्तु ॥ अपोशनार्थमुदकंदत्त्वा ॥ सव्यम् ॥ यथासुखंजुषध्वम् ॥ ( अमृतऋषिः सत्योदेवता गायत्रीच्छंदः ) अमृतोपस्तरणमसि ॥ श्रद्धायांप्राणेनिविष्टोमृतंजुहोमिशिवोमाविशाप्रदाहाय ॥ प्राणायस्वाहा ॥ श्रद्धायामपानेनिविष्टोमृतंजुहोमिशिवोमाविशाप्रदाहाय ॥ अपानायस्वाहा ॥ श्रद्धायांव्यानेनिविष्टोमृतंजुहोमिशिवोमाविशाप्रदाहाय ॥ व्यानायस्वाहा ॥ श्रद्धायामुदानेनिविष्टोमृतंजुहोमिशिवोमाविशाप्रदा

हाय ॥ उदानायस्वाहा ॥ श्रद्धायांᳪसमानेनिविष्टोमृतंजुहोमिशिवोमाविशाप्रदाहाय ॥ समानायस्वाहा ॥ ब्रह्मणिमआत्मा
नममृतत्वाय ॥ ब्रह्मणेस्वाहा ॥ करशुद्धिः ॥ दशत्रिर्वागायत्रीजपंकृत्वा ॥ श्रद्धयाग्निःसमिध्यतेश्रद्धयाहूयतेहविः ॥ श्रद्धा
भगस्यमूर्धनिवचसावेदयामसि ॥ प्रियंश्रद्धेददतःप्रियंश्रद्धेदिदासतः ॥ प्रियंभोजेषुयज्वस्विदंमउदितंकृधि ॥ यथादेवाअसु
रेषुश्रद्धामुग्रेषुचक्रिरे ॥ एवंभोजेषुयज्वस्वस्माकमुदितंकृधि ॥ श्रद्धांदेवायजमानावायुगोपाउपासते ॥ श्रद्धांहृदय्याᳪयाकू
त्याश्रद्धयाविंदतेवसु ॥ श्रद्धांप्रातर्हवामहेश्रद्धांमध्यंदिनंपरि ॥ श्रद्धांसूर्यस्यनिम्रुचिश्रद्धेश्रद्धापयेहनः ॥ अपेक्षितंयाचितव्यं
त्याज्यंचैवानपेक्षितम् ॥ उपविश्यसुखेनैवभोक्तव्यंस्वस्थमानसैः ॥ विद्यमानशाकपाकादिपदार्थेषुयद्रोचतेतद्ग्राह्यंयन्नरोचतेतत
त्त्याज्यम् ॥ सुखेनैवभोक्तव्यम् ॥ जुषामहे ॥ यथाशक्तिराक्षोघ्नसूक्तानिश्रावयिष्ये ॥ श्रावय ॥ भोजनांतेकिंचिद्दध्योदनंगंगा
मृतंच ॥ सर्वसंपूर्णं ॥ सिद्धस्यहविषोमध्येयद्रोचतेतद्याचयध्वं ॥ अलं ॥ मधुमतीःश्रावयिष्ये ॥ श्रावय ॥ मधुवाताऋताय
तेमधुक्षरंतिसिंधवः ॥ माध्वीर्नःसंत्वोषधीः ॥ मधुनक्तमुतोषसोमधुमत्पार्थिवंरजः ॥ मधुद्यौरस्तुनःपिता ॥ मधुमान्नोवनस्प
तिर्मधुमाँऽअस्तुसूर्यः ॥ माध्वीर्गावोभवंतुनः ॥ अपसव्यं ॥ अक्षन्नमीमदंतह्यवप्रियाअधूषत ॥ अस्तोषतस्वभानवोविप्रानवि
ष्ठयामतीयोजान्विंद्रतेहरी ॥ अमुकश्राद्धंसंपन्नं ॥ सुसंपन्नं ॥ सव्यं ॥ विश्वेदेवाःतृप्ताःस्थ ॥ तृप्ताःस्मः ॥ अपसव्यं ॥ पितृ
पितामहप्रपितामहाःतृप्ताःस्थ ॥ तृप्ताःस्मः ॥ शेषमन्नंकिंक्रियतां ॥ इष्टैःसहभुज्यतां ॥ सव्यं ॥ अद्यपूर्वोच्चरित० प्रतिसांव
त्सरिकश्राद्धेतिलोदकपिंडप्रदानंकरिष्ये ॥ कुरुष्व ॥ उच्छिष्टभागभ्योऽन्नंदीयतां ॥ यजमानकुलेजातादासादास्योन्नकांक्षिणः ॥

तेसर्वेतृप्तिमायांतुमयादत्तेनंभूतले ॥ अमृतापिधानमसि ॥ रौरवेपूयनिलयेपद्मार्बुदनिवासिनां॥ अर्थिनामुदकंदत्तमक्षय्यमु
पतिष्ठतु ॥ अपसव्यं ॥ अपहताअसुरारक्षांसिवेदिषदः ॥ तामभ्युक्ष्य ॥ सकृदाच्छिन्नैःप्राग्दक्षिणाग्रैर्दर्भैरवस्तीर्य ॥ शुंधंतां
पितरःशुंधंतांपितामहाःशुंधंतांप्रपितामहाः ॥ एवंमात्रादितिलोदकंबर्हिष्यासिंचेत् ॥ एतत्तेअस्मत्पितःअमुकशर्मन्अमुकगोत्र
वसुरूपयेचत्वामत्रानुअयंतेपिंडःस्वधा॥ अस्मत्पित्रेअमुकशर्मणेअमुकगोत्रायवसुरूपायअयंपिंडोगयास्थोदत्तोनममतेभ्यश्च॥
अस्मत्पितामह० शर्मन् गोत्र रुद्ररूप येचत्वा० ॥ पितामहायशर्मणे० ॥ अस्मत्प्रपितामह० अ० श० गो० आदित्यरूप०
अस्मत्प्रपितामहाय० तत्सङ्गयायांविष्णुपदादिचतुर्दशपदेषुदत्तमक्षय्यमस्तु॥ ततोलेपभाक्प्रीयेहस्तलेपंपिंडदर्भमूलेषुनिमृज्य
अत्रपितरोमादयध्वंयथाभागमावृषायध्वं इतिपिंडान्सकृदनुमंत्र्यसव्यपार्श्वेनोदङ्ङावृत्ययथाशक्तिप्राणान्नियम्यपर्यावृत्य अमी
मदंतपितरोयथाभागमावृषायीषत इतितथैवानुमंत्र्यसव्येनपिंडशेषमाघ्रायत्यजेत् ॥ चरोःप्राणभक्षंभक्षयेत् ॥ अस्मत्पितःयथा
नामगोत्रअभ्यंक्ष्वइतिघृतेनतैलेनवादर्भैरभ्यंजनं ॥ पितःयथानामगोत्रांक्ष्वेतिकज्जलंसर्वत्र ॥ पिंडेष्वंजनाभ्यंजनवासांसिद
द्यात् ॥ दशामूर्णास्तुकांवा ॥ एतद्वःपितरोवासोमानोतोन्यत्पितरोयुङ्ध्वं ॥ सव्यं ॥ कुलाभिवृद्ध्यर्थंपिंडपूजांकरिष्ये ॥ पिं
डसंस्थपितृभ्यःपाद्यंस्वधा ॥ अर्घ्यंस्वधा ॥ आचमनीयं० ॥ स्नानं० ॥ गंधंस्वधा ॥ पुष्पं० ॥ भृंगराजपत्रं० ॥ धूपं० ॥

---

१ अनेनमंत्रेणावशिष्टमन्नंविप्राःपात्राद्बहिर्दैविकंदक्षिणेपैतृकंवामेकुर्युः ॥ २ इमंमंत्रंपठन्दर्भमूलेनाग्नेय्यग्रंप्रत्यगपवर्गंपार्वणसंख्याकारेखाःकार्याःप्र
तिरेखंमंत्रावृत्तिः ॥ ३ अग्नौकरणशेषयुतान्नेनमधुसर्पिस्तिलमिश्रेणपिंडान्पत्न्याकारयित्वास्वयंवाकृत्वापराचीनपाणिनापितृतीर्थेनदद्यात् ॥

दीपं० ॥ अपूपपायसंनैवेद्यं० ॥ तांबूलं० ॥ दक्षिणां० ॥ अथैनानुपतिष्ठेत ॥[१] नमोवः पितरइषेनमोवः पितरऊर्जेनमोवः पित
रःशुष्मायनमोवः पितरोघोरायनमोवः पितरोजीवायनमोवः पितरोरसाय ॥ स्वधावः पितरोनमोवः पितरोनमएतायुष्माकंपितर
इमाअस्माकंजीवावोजीवंतइहसंतःस्याम ॥ मनोन्वाहुवामहेनाराशंसेनसोमेन ॥ पितॄणांचमन्मभिः ॥ आतंएतुमनःपुनःक्रत्वे
दक्षायजीवसे ॥ ज्योक्चसूर्यंदृशे ॥ पुनर्नःपितरोमनोददातुदैव्योजनः ॥ जीवंव्रातंसचेमहि ॥ इत्युपस्थायानंतरं ॥ अपसव्यं ॥
उत्तानहस्तेन ॥ परेतनपितरःसोम्यासोगंभीरेभिःपथिभिःपूर्विणेभिः ॥ दत्वायास्मभ्यंद्रविणेहभद्रंरयिंचनःसर्ववीरंनियच्छत ॥
इतिपिंडांश्चालयित्वा ॥ वीरंमेदत्तपितरःइतित्रिः ( गयायांधर्मपृष्ठेषुसदसिब्रह्मणस्पतेः ॥ गयाशीर्षेवटेचैवपितॄणांदत्तमक्षयं ॥
गयायांपितृरूपेणस्वयमेवजनार्दनः ॥ तंदृष्ट्वापुंडरीकाक्षंमुच्यतेचऋणत्रयात् ॥ शमीपत्रप्रमाणेनपिंडंदद्याद्गयाशिरे ॥ उद्धरेत्स
सगोत्राणिकुलमेकोत्तरंशतं ) ॥ सव्यं ॥ देवद्विजसंनिधौसदर्भभुवि ॥ असोमपाश्चयेदेवायज्ञभागविवर्जिताः ॥ तेषामन्नंप्रदा
स्यामिविकिरंवैश्वदेविकं ॥ असोमपेभ्योविश्वेभ्योदेवेभ्यःइदंविकिरान्नंदत्तंनममइतिसयवजलमन्नंविकिरेत् ॥ अपसव्यं ॥ पि
त्र्यद्विजसंनिधौसदर्भभुवि ॥ असंस्कृतप्रमीतायेत्यागिन्योयाःकुलस्त्रियः ॥ दास्यामितेभ्यःप्रकिरमन्नंताभ्यश्चपैतृकं ॥ कुमार
कुमारिकाभ्यःगर्भाद्विनिःसृतेभ्यःइदंप्रकिरान्नंदत्तंनमम ॥ इतिसतिलोदकमन्नंविकीर्य ॥ येअग्निदग्धायेअनग्निदग्धामध्येदिवः
स्वधयामादयंते ॥ तेभिःस्वराळसुनीतिमेतांयथावशंतन्वंकल्पयस्व ॥ अग्निदग्धेभ्योऽनग्निदग्धेभ्योऽस्मत्कुलप्रसूतमृतेभ्योजी

---

१ यत्किंचित्पच्यतेभक्ष्यंभोज्यमन्नमगर्हितं । अनिवेद्यनभोक्तव्यंपिंडमूलेकथंचन ॥ इतिवचनाच्छ्राद्धीयसर्वपाकजातात्सर्वेकिंचित्किंचिन्निवेदयेत् ॥
२ अनेनमध्यमंपिंडंपार्वणद्वयेमध्यपिंडद्वयंमन्वष्टक्यादौत्रयंपत्न्यैदद्यात् । पत्नीआधत्तपितरइतिसकृत्पठितेनैवैकमनेकंवाप्राशयेत् । इदंप्रजाकामत्वएव ॥

वेभ्यःउच्छिष्टपिंडोगयास्थोदत्तोनमम ॥ इतिपित्र्यसंनिधौपिंडंतिलोदकंचदत्वा ॥ हस्तौपादौप्रक्षाल्यद्विराचम्य ॥ पवित्रंवंतः परिवार्चमासतेपितैषांप्रत्नोअभिरक्षतिव्रतं ॥ महःसमुद्रंवरुणस्तिरोदधेधीराइच्छेकुर्धरुणेष्वारभं ॥ इतिपवित्रंधृत्वा ॥ देवद्वि जहस्तेशिवाआपःसंतु ॥ संतुशिवाआपः ॥ सौमनस्यमस्तु ॥ अस्तुसौमनीयं ॥ यवाःपांतु ॥ पांतुयवाः ॥ दीर्घमायुःश्रेयःशां तिःपुष्टिस्तुष्टिश्चास्त्विवेतिभवंतोब्रुवंतु ॥ दीर्घमायुः० ॥ अपसव्यं ॥ पित्र्यद्विजकरेशिवाआपःसंतु ॥ संतुशिवाआपः ॥ सौमन स्यमस्तु ॥ अस्तुसौमनीयं ॥ तिलाःपांतु ॥ पांतुतिलाः ॥ दीर्घमायुः० ॥ अस्मद्गोत्रंवर्धतां ॥ गोत्रस्याभिवृद्धिरस्तु ॥ पिंडा नामर्चनविधेःस्वर्चितमस्तु ॥ प्रणीतापात्रमुद्धृत्य ॥ पितृपितामहप्रपितामहानांशर्मणांगोत्राणांयद्दत्तंप्रतिसांवत्सरिकश्राद्धीय मन्नमुदकादितदक्षय्यमस्त्विवेतिभवंतोब्रुवंतु ॥ अस्त्वक्षय्यंप्रतिसांवत्सरिकश्राद्धीयमन्नोदकादि । सव्यं ॥ पुरूरवार्द्रवसंज्ञकानां विश्वेषांदेवानांयद्दत्तंप्रतिसांवत्सरिकश्राद्धीयमन्नमुदकादितदक्षय्यमस्त्विवेतिभवंतोब्रुवंतु ॥ अस्त्वक्षय्यं० ॥ देवानांसुवर्णं ॥ पितॄणांरजतं ॥ श्राद्धभोक्तृभ्योब्राह्मणेभ्यःदक्षिणाःपांतु ॥ पांतुदक्षिणाः ॥ स्वधांवाचयिष्ये ॥ वाच्यतां ॥ अपसव्यं ॥ पितरः स्वधोच्यतांपितामहाःस्वधोच्यतां प्रपितामहाःस्वधोच्यतां ॥ अस्तुस्वधा ॥ पिंडोपरितिलोदकंदद्यात् ॥ स्वधासंपद्यंतामिति भवंतोब्रुवंतु ॥ संपद्यंतांस्वधा ॥ सव्यं ॥ अग्निपुरोगाविश्वेदेवाःप्रीयंतामितिभवंतोब्रुवंतु ॥ प्रीयंतांविश्वेदेवाः ॥ अपसव्यं ॥ वसुपुरोगाःपितरःप्रीयंतामितिभवंतोब्रुवंतु ॥ प्रीयंतांपितरः ॥ सव्यं ॥ संकल्पसिद्धिरस्त्विवेतिभवंतोब्रुवंतु ॥ अस्तुसंकल्पसिद्धिः ॥ शाकपाकाःपितृप्रियाः ॥ उत्तमोत्तमाः ॥ आत्मालंकारः ॥ पिंडान्नमस्कृत्य ॥ गोत्राशिषःप्रार्थयते ॥ प्रार्थय ॥ अघोराःपितरः संतु ॥ संत्वघोराःपितरः ॥ दातारोनोभिवर्धतांवेदाःसंततिरेवनः ॥ श्रद्धाचनोमाव्यगमद्बहुदेयंचनोस्तु ॥ अन्नंचनोबहुभवे

दतिर्थींश्चलभेमहि ॥ याचितारश्चनःसंतुमाचयाचिष्मकंचन॥ प्रतिवचनं ॥ दातारोवोभिवर्धंतांवेदाःसंततिरेववः ॥ श्रद्धाच वोमाव्यगमद्बहुदेयंचवोस्तु ॥ अन्नंचवोबहुभवेदतिर्थींश्चलभध्वं ॥ याचितारश्चवःसंतुमाचयाचिढ्वंकंचवः ॥ पिंडोद्धारणंकरिष्ये ॥ उद्धारय ॥ तद्विष्णोःपरमंपदंसदापश्यंतिसूरयः ॥ दिवीवचक्षुराततं ॥ तद्विप्रासोविपन्यवोजागृवांसःसमिंधते ॥ विष्णोर्यत्परमंपदं ॥ यत्रतत्परमं० ॥ यत्रगंगाच० ॥ अयोध्यामथुरामायाकाशीकांचीअवंतिका ॥ पुरीद्वारावतीचैवसप्तैतामोक्षदायकाः ॥ पिंडस्थानेशांतिःपुष्टिस्तुष्टिश्चास्तु ॥ स्वस्थानेवासः ॥ भोजनपात्राण्युच्चालयिष्ये ॥ कूर्चविसर्जनं ॥ वाजेवाजेव तवाजिनोनोधनेषुविप्राअमृताऋतज्ञाः ॥ अस्यमध्वःपिबतमादयध्वंतृप्तायातपथिभिर्देवयानैः ॥ सव्यं ॥ उत्तिष्ठतपितरःविश्वेदेवैःसह ॥ आमावाजस्यप्रसवोजगम्यादाद्यावापृथिवीविश्वशंभू ॥ आमागंतांपितरामातराचामासोमोअमृतत्वायगम्यात् ॥ स्वादुषंसदःपितरोवयोधाःकृच्छ्रेश्रितःशक्तीवंतोगभीराः ॥ चित्रसेनाइषुबलाअमृध्राःसतोवीराउरवोव्रातसाहाः ॥ ब्राह्मणासः पितरःसोम्यासःशिवेनोद्यावापृथिवीअनेहसा ॥ पूषानःपातुदुरितादृतावृधोरक्षामाकिर्नोअघशंसईशत ॥ इहैवस्तंमावियौष्टंविश्वमायुर्व्यश्नुतं ॥ क्रीळंतौपुत्रैर्नप्तृभिर्मोदमानौस्वेगृहे ॥ आयुःप्रजांधनंविद्यांस्वर्गमोक्षंसुखानिच ॥ प्रयच्छंतुतथाराज्यंप्रीतानृणांपितामहाः ॥ एताःसत्याआशिषःसंतु गोत्रस्याभिवृद्धिरस्तु ॥ प्रतिसांवत्सरिकश्राद्धंगयाकृतश्राद्धफलमस्तु ॥ पितृणामक्षय्यातृप्तिरस्तु ॥ अद्यमेसफलंजन्मभवत्पादाब्जवंदनात् ॥ अद्यमेवंशजाःसर्वेयातावोनुग्रहाद्दिवं ॥ यच्चशाकादिदानेनक्लेशितायूयमीदृशाः ॥ तत्क्लेशजातंचित्तेतुविस्मृत्यक्षंतुमर्हथ ॥ विस्मृत्यक्षमामहे ॥ अद्यसूर्यपर्वसदृशीतिथिर्व्यासवसिष्ठवामदेवसदृशाब्राह्मणाः मयायत्कृतंपितृणांप्रतिसांवत्सरिकश्राद्धंतन्मध्येआसनभोजनमंत्रतंत्रद्रव्यदक्षिणासुन्यूनं ब्राह्मणवचनात्सर्वसंपू

र्णमस्त्वितिभवंतोब्रुवंतु ॥ सर्वंसंपूर्णमस्तु ॥ वसिष्ठासःपितृवद्वाचमक्रतदेवाँईळानाऋषिवत्स्वस्तये ॥ प्रीताइवज्ञातयःकाममे त्यास्मेदेवासोवधूनुतावसु ॥ देवान्वसिष्ठोअमृतान्ववंदेयेविश्वाभुवनाभिप्रतस्थुः ॥ तेनोरासंतामुरुगायमद्ययूयंपातस्वस्तिभिः सदानः ॥ इदंपितृभ्योनमोअस्त्वद्येतिनमस्कारवतीमंततःशंसतितस्मादंततःपितृभ्योनमस्क्रियतेतदाहुर्न्याहावंपित्र्याःशंसे३त न्याहावा३इति ॥ न्याहावमेवसंसेदसंस्थितंवैपितृयज्ञस्यसाध्वसंस्थितंवाएषपितृयज्ञंसंस्थापयतियोन्याहावंशंसतितस्मान्न्या हावमेवशंस्तव्यं ॥ ब्राह्मणानासीमांतमनुव्रजेत् ॥ जपच्छिद्रंतपश्छिद्रंयच्छिद्रंश्राद्धकर्मणि ॥ सर्वंभवतुमेऽच्छिद्रंब्राह्मणानांप्र सादतः ॥ यस्यस्मृत्याचनामोक्त्यातपोयज्ञक्रियादिषु ॥ न्यूनंसंपूर्णतांयातिसद्योवंदेतमच्युतं ॥ मंत्रहीनंक्रियाहीनंभक्तिहीनं द्विजोत्तमाः ॥ श्राद्धंसंपूर्णतांयातुप्रसादाद्भवतांमम ॥ अनेनपितॄणांप्रतिसांवत्सरिकश्राद्धयज्ञेनपितृपितामहप्रपितामहस्वरूपी जनार्दनवासुदेवःप्रीयतां ॥ एषपितृयज्ञः ॥ तत्सद्ब्रह्मार्पणमस्तु ॥ वषट्तेविष्णवासआकृणोमितन्मेजुषस्वशिपिविष्टहव्यं ॥ वर्धंतुत्वासुष्टुतयोगिरोमेयूयंपातःस्वस्तिभिःसदानः ॥ विष्णवेनमोविष्णवेनमोविष्णवेनमः ॥ द्विराचम्य ॥ वैश्वदेवंकृत्वापरे हनितद्वैषवाश्राद्धांगतर्पणंकुर्यात् ॥ इतिप्रतिसांवत्सरिकश्राद्धप्रयोगःसमाप्तः ॥ ॥ छ ॥

## ॥ ७८ ॥ अथान्नसूक्तानि ॥

श्रीः ॥ आमासुपक्वमैरयआसूर्यंरोहयोदिवि ॥ घर्मंनसामंतपतासुवृक्तिभिर्जुष्टंगिर्वणसेबृहत् ॥ सोमोधेनुंसोमोअर्वंतमाशुंसो

१ श्राद्धभोजनेभोक्तुःप्रायश्चित्तं—दर्शश्राद्धेषट्प्राणायामाः ॥ महालयादिश्राद्धेषुत्रिवर्षोर्ध्वप्रतिवार्षिकेषुचषट्प्राणायामाः गायत्र्यादशकृत्वो भिमंत्रितस्यजलस्यपानंच ॥

मौवीरंकर्मण्यंददाति ॥ सादन्यंविदथ्यंसभेयंपितृश्रवणंयोददाशदस्मै ॥ उपह्वयेसुदुघांधेनुमेतांसुहस्तोगोधुगुतदोहदेनां ॥
श्रेष्ठंसवंसवितासाविषन्नोभीद्धोघर्मस्तदुषुप्रवोचं ॥ हिंकृण्वतीवसुपत्नीवसूनांवत्समिच्छंतीमनसाभ्यागात् ॥ दुहामश्विभ्यांप
योअघ्न्येयंसावर्धतांमहतेसौभगाय ॥ इंद्रदह्यंयामकोशाअभूवन्यज्ञायशिक्षगृणतेसखिभ्यः ॥ दुर्मायवोदुरेवामर्त्यासोनिषंगि
णोरिपवोहंत्वासः ॥ वाशीमंतऋष्टिमंतोमनीषिणःसुधन्वानइषुमंतोनिषंगिणः ॥ स्वश्वास्थसुरथाःपृश्निमातरःस्वायुधामरुतोया
थनाशुभं ॥ चतुष्कपर्दायुवतिःसुपेशाघृतप्रतीकावयुनानिवस्ते ॥ तस्यांसुपर्णावृषणानिषेदतुर्यत्रदेवादधिरेभागधेयं ॥ एकःसु
पर्णःससमुद्रमाविवेशसइदंविश्वंभुवनंविचष्टे ॥ तंपाकेनमनसापश्यमंतितस्तंमातारेळ्हिसउरेळ्हिमातरं ॥ सुपर्णंविप्राःकवयोवचो
भिरेकंसंतंबहुधाकल्पयंति ॥ छंदांसिचदधतोअध्वरेषुग्रहान्त्सोमस्यमिमतेद्वादश ॥ पितुंनुस्तोषंमहोधर्माणंतविषीं ॥ यस्यत्रितो
व्योजसावृत्रंविपर्वमर्दयत् ॥ स्वादोपितोमधोपितोवयंत्वाववृमहे ॥ अस्माकमविताभव ॥ उपनःपितवाचरशिवःशिवाभिरू
तिभिः ॥ मयोभुरद्विषेण्यःसखासुशेवोअद्वयाः ॥ तवत्येपितोरसारजांस्यनुविष्ठिताः ॥ दिविवाताइवश्रिताः ॥ तवत्येपितोदद
तस्तवस्वादिष्ठतेपितो ॥ प्रस्वाद्मानोरसानांतुविग्रीवाइवेरते ॥ त्वेपितोमहानांदेवानांमनोहितं ॥ अकारिचारुकेतुनातवाहिमव
सावधीत् ॥ यददोपितोअजगन्विवस्वपर्वतानां ॥ अत्राचिन्नोमधोपितोरंभक्षायगम्याः ॥ यदपामोषधीनांपरिंशमारिशामहे ॥
वातापेपीवइद्भव ॥ यत्तेसोमगवाशिरोयवाशिरोभजामहे ॥ वातापेपीवइद्भव ॥ करंभओषधेभवपीवोवृक्कउदारथिः ॥ वाता
पेपीवइद्भव ॥ तंत्वावयंपितोवचोभिर्गावोनहव्यासुषूदिम ॥ देवेभ्यस्त्वासधमादमस्मभ्यंत्वासधमादं ॥ कयानश्चित्रआभुवदू
तीसदावृधःसखा ॥ कयाशचिष्ठयावृता ॥ कस्त्वासत्योमदानांमंहिष्ठोमत्सदंधसः ॥ दृळ्हाचिदारुजेवसु ॥ अभीषुणःसखीना

मवितांजरितॄणां ॥ शतंभवास्यूतिभिः ॥ ॥ स्वादोरभक्षिवयसःसुमेधाःस्वाध्योवरिवोवित्तरस्य ॥ विश्वेयंदेवाउतमर्त्यासोम
धुब्रुवंतोअभिसंचरंति ॥ अंतश्चप्रागाअदितिर्भवास्यवयाताहरसोदैव्यस्य ॥ इंदविंद्रस्यसख्यंजुषाणःश्रौष्टीवधुरमनुरायऋध्याः ॥
अपामसोमममृताअभूमागन्मज्योतिरविदामदेवान् ॥ किंनूनमस्मान्कृणवदरातिःकिमुधूर्तिरमृतमर्त्यस्य ॥ शन्नोभवहृदआपीत
इंदोपितेवसोमसूनवेसुशेवः ॥ सखेवसख्यउरुशंसधीरःप्रणआयुर्जीवसेसोमतारीः ॥ इमेमापीतायशसउरुष्यवोरथंनगावःसम
नाहपर्वसु ॥ तेमारक्षंतुविस्रसश्चरित्रादुतमास्रामाद्यवयंत्विंदवः ॥ १ ॥ अग्निंनमामथितंसंदिदीपःप्रचक्षयकृणुहिवस्यसोनः ॥
अथाहितेमदआसोममन्येरेवाँइवप्रचरापुष्टिमच्छ ॥ इषिरेणतेमनसासुतस्यभक्षीमहिपित्र्यस्येवरायः ॥ सोमराजन्प्रणआयूंषि
तारीरहानीवसूर्योवासराणि ॥ सोमराजन्मृळयानःस्वस्तितवस्मसिव्रत्या३स्तस्यविद्धि ॥ अलर्तिदक्षउतमन्युरिंदोमानोअर्योअ
नुकामंपरादाः ॥ त्वंहिनस्तन्वःसोमगोपागात्रेगात्रेनिषसत्थानृचक्षाः ॥ यत्तेवयंप्रमिनामव्रतानिसनोमृळसुषखादेववस्यः ॥
ऋदूदरेणसख्यासचेययोमानरिष्येद्धर्यश्वपीतः ॥ अयंयःसोमोन्यधाय्यस्मेतस्माइंद्रंप्रतिरमेम्यायुः ॥ २ ॥ अपत्याअस्थुरनिरा
अमीवानिरत्रसंतमिषीचीरभैषुः ॥ आसोमोऽअस्माँऽअरुहद्विहायाअगन्मयत्रप्रतिरंतआयुः ॥ योनइंदुःपितरोहृत्सुपीतोमर्त्यो
मर्त्याँआविवेश ॥ तस्मैसोमायहविषाविधेममृळीकेअस्यसुमतौस्याम ॥ त्वंसोमपितृभिःसंविदानोनुद्यावापृथिवीआततंथ ॥
तस्मैतइंदोहविषाविधेमवयंस्यामपतयोरयीणां ॥ त्रातारोदेवाअधिवोचतानोमानोनिद्राईशतमोतजल्पिः ॥ वयंसोमस्यविश्वह
प्रियासःसुवीरासोविदथमावदेम ॥ त्वंनःसोमविश्वतोवयोधास्त्वंस्वर्विदाविशानृचक्षाः ॥ त्वंनइंदऊतिभिःसजोषाःपाहिपश्चा
तादुतवापुरस्तात् ॥ ३ ॥ ॥ नवाउदेवाःक्षुधमिद्वधंददुरुताशितमुपगच्छंतिमृत्यवः ॥ उतोरयिःपृणतोनोपदस्यत्युतापृणन्म

डि॒ता॒रं॑न॒विं॑दते ॥ यआ॒ध्राय॑चकमा॒नाय॑पि॒त्वोऽन्न॑वा॒न्त्सन्र॑पि॒ता॒योप॑ज॒ग्मुषे॑ ॥ स्थि॒रंमनः॑कृणु॒तेसेव॑ते॒पु॒रोतो॑चि॒त्सम॒र्डि॒तारं॑न॒वि॑
द॑ते ॥ सइद्भो॒जोयोगृ॒हवे॑ददा॒त्यन्न॑कामाय॒चर॑तेकृ॒शाय॑ ॥ अर॑मस्मै॒भवति॒याम॑हू॒ताउ॒ताप॒री॒षुकृ॑णु॒तेसखा॑यं ॥ नससखा॒योनदद॑ाति
सख्ये॑सचा॒भुवे॒सच॑मानायपि॒त्वः ॥ अपा॑स्मा॒त्प्रेया॒न्नतदो॑को॑अस्ति॒पृ॒णंत॑म॒न्यमर॑णं॒चिदि॒च्छेत् ॥ पृ॒णी॒यादिन्ना॒ध॑मानाय॒तव्या॒न्द्रा
घी॑यांस॒मनु॑पश्येत॒पंथां॑ ॥ ओहि॒वर्त॑ते॒रथ्ये॑वच॒क्रान्यम॒न्यमुप॑तिष्ठंत॒रायः॑ ॥ १ ॥ मोघ॒मन्नं॑विंदते॒अप्र॑चेताः॒सत्यं॑ब्रवी॒मिव॒धइत्स
तस्य॑ ॥ नार्य॒मणं॒पुष्य॑ति॒नोसखा॑यं॒केव॑लाघोभवतिकेवला॒दी ॥ कृ॒षन्नित्फाल॒आशि॑तंकृणोति॒यन्नध्वा॑न॒मप॑वृंक्ते॒चरि॑त्रैः ॥ वद॑न्ब्र॒ह्मा
वद॑तो॒वनी॑या॒न्पृणन्ना॒पिरपृ॑णंतम॒भिष्या॑त् ॥ एक॑पा॒द्भूयो॑द्वि॒पदो॒विच॑क्रमेद्वि॒पात्त्रि॒पाद॑म॒भ्ये॑ति॒पश्चात् ॥ चतु॑ष्पादेतिद्वि॒पदा॑म
भिस्व॒रे सं॒पश्य॒न्पंक्तीरु॑प॒तिष्ठ॑मानः ॥ स॒मौ चि॒द्धस्तौ॒नस॒मं वि॑विष्टः॒संमा॒तरा॑चि॒न्नस॒मंदु॑हाते ॥ य॒मयो॑श्चि॒न्नस॒मावी॒र्या॑णिज्ञा॒ती
चि॒त्संतौ॒नस॒मंपृ॑णीतः ॥ २ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥

## ॥ ७९ ॥ अथराक्षोघ्नादिसूक्तानि ॥

कृ॒णु॒ष्वपाजः॒प्रसि॑तिं॒नपृ॒थ्वीं या॒हिराजे॒वाम॑वाँ॒इभे॑न ॥ तृ॒ष्वीमनु॒प्रसि॑तिंद्रूणा॒नोस्ता॑सि॒विध्य॑र॒क्षस॒स्तपि॑ष्ठैः ॥ तव॑भ्र॒मास॑आशु॒याप॑तं
त्यनु॑स्पृशधृष॒ता शोशु॑चानः ॥ तपूं॑ष्यग्ने जु॒ह्वा॑प॒तंगा॒नसं॑दितो॒विसृ॑ज॒विष्व॑गु॒ल्काः ॥ प्रति॒स्पशो॒विसृ॑ज॒तूर्णि॑तमो॒भवा॑पा॒युर्वि॒शो
अ॒स्याअद॑ब्धः ॥ योनो॑दू॒रेअ॒घशं॑सो॒योअंत्यग्ने॒माकि॑ष्टे॒व्यथि॒राद॑धर्षीत् ॥ उद॑ग्नेतिष्ठ॒प्रत्याऽऽत॑नुष्व॒न्य १ मित्राँ॑ओषतात्तिग्महेते ॥
योनो॒अरा॑तिंसमिधान॒चक्रे॑नी॒चातंध॑क्ष्यत॒संनशु॒ष्कं ॥ ऊ॒र्ध्वोभ॑व॒प्रति॑वि॒ध्याध्य॒स्मदा॒विष्कृ॑णुष्व॒दैव्या॒न्यग्ने ॥ अव॑स्थि॒रात॑नुहि

यातुजूनोंजामिमजामिंप्रमृणीहिशत्रून् ॥ १ ॥ सतेजानातिसुमतिंयविष्ठयईवतेब्रह्मणेगातुमैरत् ॥ विश्वान्यस्मैसुदिनानिरायो द्युम्नान्यर्योविदुरोअभिद्यौत् ॥ सेदग्नेअस्तुसुभगःसुदानुर्यस्त्वानित्येनहविषायउक्थैः ॥ पिप्रीषतिस्वआयुषिदुरोणेविश्वेदस्मैसु दिनासासदिष्टिः ॥ अर्चामितेसुमतिंघोष्यर्वाक्संतेवावाताजरतामियंगीः ॥ स्वश्वास्त्वासुरथामर्जयेमास्मेक्षत्राणिधारयेरनुद्यून् ॥ इहत्वाभूर्याचरेदुपत्मन्दोषावस्तर्दीदिवांसमनुद्यून् ॥ क्रीळंतस्त्वासुमनसःसपेमाभिद्युम्नातस्थिवांसोजनानां ॥ यस्त्वास्वश्वःसु हिरण्योअग्नउपयातिवसुमतारथेन ॥ तस्यत्राताभवसितस्यसखायस्तआतिथ्यमानुषग्जुजोषत् ॥ २ ॥ महोरुजामिबंधुतावचो भिस्तन्मापितुर्गोतमादन्वियाय ॥ त्वंनोअस्यवचसश्चिकिद्धिहोतर्यविष्ठसुक्रतोदमूनाः ॥ अस्वप्नजस्तरणयःसुशेवाअतंद्रासो ऽवृकाअश्रमिष्ठाः ॥ तेपायवःसध्र्यंचोनिषद्याग्नेतवनःपांत्वमूर ॥ येपायवोमामतेयंतेअग्नेपश्यंतोऽअंधंदुरितादरक्षन् ॥ ररक्षतान्त्सुकृतोविश्ववेदादिप्संतइद्रिपवोनाहदेभुः ॥ त्वयावयंसधन्य १ स्त्वोतास्तवप्रणीत्यश्यामवाजान् ॥ उभाशंसासूदयस त्यतातेनुष्ठुयाकृणुह्यह्रयाण ॥ अयातेअग्नेसमिधाविधेमप्रतिस्तोमंशस्यमानंगृभाय ॥ दहाशसोरक्षसःपाह्य १ स्मान्द्रुहोनिदोमि त्रमहोअवद्यात् ॥ ३ ॥ ॥ रक्षोहणंवाजिनमाजिघर्मिमित्रंप्रथिष्ठमुपयामिशर्म ॥ शिशानोअग्निःक्रतुभिःसमिद्धःसनोदिवास रिषःपातुनक्तं ॥ अयोदंष्ट्रोअर्चिषायातुधानानुपस्पृशजातवेदःसमिद्धः ॥ आजिह्वयामूरदेवान्रभस्वक्रव्यादोवृक्त्व्यपिधत्स्वा सन् ॥ उभोभयाविन्नुपधेहिदंष्ट्राहिंस्रःशिशानोवरंपरंच ॥ उतांतरिक्षेपरियाहिराजन्जंभैःसंधेह्यभियातुधानान् ॥ यज्ञैरिषूःसं नममानोअग्नेवाचाशल्याँअशनिभिर्दिहानः ॥ ताभिर्विध्यहृदयेयातुधानान्प्रतीचोबाहून्प्रतिभङ्ध्येषां ॥ अग्नेत्वचंयातुधानस्य भिंधिहिंस्राशनिर्हरसाहंत्वेनं ॥ प्रपर्वाणिजातवेदःशृणीहिक्रव्यात्क्रविष्णुर्विचिनोतुवृक्णं ॥ १ ॥ यत्रेदानींपश्यसिजातवेदस्ति

ष्टंतमग्नउतवाचरंतं ॥ यद्वांतरिक्षेपथिभिःपतंतंतमस्तांविध्यशर्वाशिशानः ॥ उतालब्धंस्पृणुहिजातवेदआलेभानादृष्टिभिर्यातुधा
नात् ॥ अग्नेपूर्वोनिजहिशोशुचानआमादःक्ष्विंकास्तमदंत्वेनीः ॥ इहप्रब्रूहियतमःसोअग्नेयोयातुधानोयइदंकृणोति ॥ तमारभ
स्वसमिधायविष्ठनृचक्षसश्चक्षुषेरंधयैनं ॥ तीक्ष्णेनाग्नेचक्षुषारक्षयज्ञंप्रांचंवसुभ्यःप्रणयप्रचेतः ॥ हिंस्रंरक्षांस्यभिशोशुचानंमात्वा
दभन्यातुधानानृ॰क्षः ॥ नृचक्षारक्षःपरिपश्यविक्षुतस्यत्रीणिप्रतिशृणीह्यग्रा ॥ तस्याग्नेपृष्टीर्हरसाशृणीहित्रेधामूलंयातुधानस्य
वृश्च ॥ २ ॥ त्रिर्यातुधानःप्रसितिंतएत्वृतंयोअग्नेअनृतेनहंति ॥ तमर्चिषास्फूर्जयन्जातवेदःसमक्षमेनंगृणतेनिवृंङ्धि ॥ तदग्ने
चक्षुःप्रतिधेहिरेभेशफारुजंयेनपश्यसियातुधानं ॥ अथर्ववज्ज्योतिषादैव्येनसत्यंधूर्वंतमचितंन्योष ॥ यदग्नेअद्यमिथुनाशपातो
यद्वाचस्तृष्टंजनयंतरेभाः ॥ मन्योर्मनसःशरव्या३जायतेयातयाविध्यहृदयेयातुधानान् ॥ पराशृणीहितपसायातुधानान्पराग्ने
रक्षोहरसाशृणीहि ॥ परार्चिषामूरदेवान्छृणीहिपरासुतृपोअभिशोशुचानः ॥ पराद्यदेवावृजिनंशृणंतुप्रत्यगेनंशपथायंतुतृष्टाः ॥
वाचास्तेनंशरवऋच्छंतुमर्मन्विश्वस्यैतुप्रसितिंयातुधानः ॥ ३ ॥ यःपौरुषेयेणक्रविषासमंक्तेयोअश्व्येनपशुनायातुधानः ॥ योअ
घ्न्यायाभरतिक्षीरमग्नेतेषांशीर्षाणिहरसापिवृश्च ॥ संवत्सरीणंपयउस्रियायास्तस्यमाशीद्यातुधानोनृचक्षः ॥ पीयूषमग्नेयतमस्ति
तृप्सात्तंप्रत्यंचमर्चिषाविध्यमर्मन् ॥ विषंगवांयातुधानाःपिबंत्वावृश्च्यंतामदितयेदुरेवाः ॥ परैनांदेवःसवितादददातुपराभागमोष
धीनांजयंतां ॥ सनादग्नेमृणसियातुधानान्नत्वारक्षांसिपृतनासुजिग्युः ॥ अनुदहसहमूरान्क्रव्यादोमातेहेत्यामुक्षतदैव्यायाः ॥
त्वंनोअग्नेअधरादुदक्तात्त्वंपश्चादुतरक्षापुरस्तात् ॥ प्रतितेतेअजरासस्तपिष्ठाअघशंसंशोशुचतोदहंतु ॥ ४ ॥ पश्चात्पुरस्तादधरा
दुदक्तात्कविःकाव्येनपरिपाहिराजन् ॥ सखेसखायमजरोजरिम्णेऽग्नेमर्ताँअमर्त्यस्त्वंनः ॥ परित्वाग्नेपुरंवयंविप्रंसहस्यधीमहि ॥

धृषद्वर्णंदिवेदिवेहंतारंभंगुरावतां ॥ विषेणभंगुरावतःप्रतिष्मरक्षसोदह ॥ अग्नेतिग्मेनशोचिषातपुरग्राभिर्ऋष्टिभिः ॥ प्रत्यग्नेमिथुनादहयातुधानाकिमीदिनो ॥ संत्वाशिशामिजागृह्यदब्धंविप्रमन्मभिः ॥ प्रत्यग्नेहरसाहरःशृणीहिविश्वतःप्रति ॥ यातुधानस्य रक्षसोबलंविरुजवीर्यं ॥ ५ ॥ ॥ इंद्रासोमातपतंरक्षउब्जतंन्यर्पयतंवृषणातमोवृधः ॥ पराशृणीतमचितोन्योषतंहतंनुदेथांनि शिशीतमत्रिणः ॥ इंद्रासोमासमघशंसमभ्य१घंतपुर्ययस्तुचरुरग्निवाँइव ॥ ब्रह्मद्विषेक्रव्यादेघोरचक्षसेद्वेषोधत्तमनवायंकिमीदिने ॥ इंद्रासोमादुष्कृतोवव्रेअंतरनारंभणेतमसिप्रविध्यतं ॥ यथानातःपुनरेकश्चनोदयत्तद्वामस्तुसहसेमन्युमच्छवः ॥ इंद्रासोमावर्तयतंदिवोवधंसंपृथिव्याअघशंसायतर्हणं ॥ उत्तक्षतंस्वर्य१पर्वतेभ्योयेनरक्षोवावृधानंनिजूर्वथः ॥ इंद्रासोमावर्तयतंदिवस्पर्यग्नितप्तेभिर्युवमश्महन्मभिः ॥ तपुर्वधेभिरजरेभिरत्रिणोनिपर्शानेविध्यतंयंतुनिस्वरं ॥ १ ॥ इंद्रासोमापरिवांभूतुविश्वतइयंमतिःकक्ष्याश्वेववाजिना ॥ यांवांहोत्रांपरिहिनोमिमेधयेमाब्रह्माणिनृपतीवजिन्वतं ॥ प्रतिस्मरेथांतुजयद्भिरेवैर्हतंद्रुहोरक्षसोभंगुरावतः ॥ इंद्रासोमादुष्कृतेमासुगंभूद्योनःकदाचिदभिदासतिद्रुहा ॥ योमापाकेनमनसाचरंतमभिचष्टेअनृतेभिर्वचोभिः ॥ आपइवकाशिनासंगृभीताअसन्नस्त्वासतइंद्रवक्ता ॥ येपाकशंसंविहरंतएवैर्येवाभद्रंदूषयंतिस्वधाभिः ॥ अहयेवातान्प्रददातुसोमआवादधातुनिर्ऋतेरुपस्थे ॥ योनोरसंदिप्सतिपित्वोअग्नेयोअश्वानांयोगवांयस्तनूनां ॥ रिपुस्तेनस्तेयकृद्दभ्रमेतुनिषहीयतांतन्वा३तनाच ॥ २ ॥ परःसोअस्तुतन्वा३तनाचतिस्रःपृथिवीरधोअस्तुविश्वाः ॥ प्रतिशुष्यतुयशोअस्यदेवायोनोदिवादिप्सतियश्चनक्तं ॥ सुविज्ञानंचिकितुषेजनायसच्चासच्चवचसीपस्पृधाते ॥ तयोर्यत्सत्यंयतरदृजीयस्तदित्सोमोवतिहंत्यासत् ॥ नवाउसोमोवृजिनंहिनोतिनक्षत्रियंमिथुयाधारयंतं ॥ हंतिरक्षोहंत्यासद्वदंतमुभाविंद्रस्यप्रसितौशयाते ॥ यदिवाहमनृतदेवआसमोघं

वादेवाँऽअप्यूहेअग्ने ॥ किमस्मभ्यंजातवेदोहृणीषेद्रोघवाचस्तेनिर्ऋथंसचंतां ॥ अद्यामुरीययदियातुधानोअस्मियदिवायुस्ततप
पूरुषस्य ॥ अधासवीरैर्दशभिर्वियूयायोमामोघंयातुधानेत्याह ॥ ३ ॥ योमायातुंयातुधानेत्याहयोवारक्षाःशुचिरस्मीत्याह ॥
इंद्रस्तंहंतुमहतावधेनविश्वस्यजंतोरधमस्पदीष्ट ॥ प्रयाजिगातिखर्गलेवनक्तमपद्रुहातन्वं१गूहमाना ॥ वव्राँऽअनंताँऽअवसाप
दीष्टग्रावाणोघ्नंतुरक्षसउपब्दैः ॥ वितिष्ठध्वंमरुतोविक्ष्वी१च्छतगृभायतरक्षसःसंपिनष्टन ॥ वयोयेभूत्वीपतयंतिनक्तभिर्येवारि
पोदधिरेदेवेअध्वरे ॥ प्रवर्तयदिवोअश्मानमिंद्रसोमशितंमघवन्त्संशिशाधि ॥ प्राक्तादपाक्तादधरादुदक्तादभिजहिरक्षसःपर्व
तेन ॥ एतउत्येपतयंतिश्वयातवइंद्रंदिप्संतिदिप्सवोदाभ्यं ॥ शिशीतेशक्रःपिशुनेभ्योवधंनूनंसृजदशनिंयातुमद्भ्यः ॥ ४ ॥
इंद्रोयातूनामभवत्पराशरोहविर्मथीनामभ्या३विवासतां ॥ अभीदुशक्रःपरशुर्यथावनंपात्रेवभिंदन्त्सतएतिरक्षसः ॥ उलूकयातुं
शुशुलूकयातुंजहिश्वयातुमुतकोकयातुं ॥ सुपर्णयातुमुतगृध्रयातुंदृषदेवप्रमृणरक्षइंद्र ॥ मानोरक्षोअभिनड्यातुमावतामपोच्छतुमि
थुनायाकिमीदिनां ॥ पृथिवीनःपार्थिवात्पात्वंहसोऽतरिक्षंदिव्यात्पात्वस्मान् ॥ इंद्रंजहिपुमांसंयातुधानमुतस्त्रियंमाययाशाश
दानां ॥ विग्रीवासोमूरदेवाऋदंतुमातेदृशन्त्सूर्यमुच्चरंतं ॥ प्रतिचक्ष्वविचक्ष्वेंद्रश्चसोमजागृतं ॥ रक्षोभ्योवधमस्यतमशनिंया
तुमद्भ्यः ॥ ५ ॥ ॥ अग्नेहंसिन्य१त्रिणंदीद्यन्मर्त्येष्वा ॥ स्वेक्षयेशुचिव्रत ॥ उत्तिष्ठसिस्वाहुतोघृतानिप्रतिमोदसे ॥ यत्त्वास्रुचः
समस्थिरन् ॥ सआहुतोविरोचतेग्निरीळेन्योगिरा ॥ स्रुचाप्रतीकमज्यते ॥ घृतेनाग्निःसमज्यतेमधुप्रतीकआहुतः ॥ रोचमानो
विभावसुः ॥ जरमाणःसमिध्यसेदेवेभ्योहव्यवाहन ॥ तंत्वाहवंतमर्त्याः ॥ १ ॥ तंमर्ताअमर्त्यंघृतेनाग्निंसपर्यत ॥ अदाभ्यंगृ
हपतिं ॥ अदाभ्येनशोचिषाग्नेरक्षस्त्वंदह ॥ गोपाऋतस्यदीदिहि ॥ सत्वमग्नेप्रतीकेनप्रत्योषयातुधान्यः ॥ उरुक्षयेषुदीद्यत् ॥

तंत्वागीर्भिरुरुक्षयाहव्यवाहंसमीधिरे ॥ यजिष्ठंमानुषेजने ॥ २ ॥ ॥ ब्रह्मणाग्निःसंविदानोरक्षोहाबाधतामितः ॥ अमीवाय स्तेगर्भंदुर्णामायोनिमाशये ॥ यस्तेगर्भममीवादुर्णामायोनिमाशये ॥ अग्निष्टंब्रह्मणासहनिष्क्रव्यादमनीनशत् ॥ यस्तेहंतिपतयं तंनिषत्स्नुंयःसरीसृपं ॥ जातंयस्तेजिघांसतितमितोनाशयामसि ॥ यस्तऊरूविहरत्यंतरादंपतीशये ॥ योनिंयोअंतरारेह्लित मितोनाशयामसि ॥ यस्त्वाभ्राताप्रतिर्भूत्वाजारोभूत्वानिपद्यते ॥ प्रजांयस्तेजिघांसतितमितोनाशयामसि ॥ यस्त्वास्वप्नेनतम सामोहयित्वानिपद्यते ॥ प्रजांयस्तेजिघांसतितमितोनाशयामसि ॥ १ ॥ उदीरतामवरउत्परासउन्मध्यमाःपितरःसोम्यासः ॥ असुंयईयुरवृकाऋतज्ञास्तेनोवंतुपितरोहवेषु॥इदंपितृभ्योनमोअस्त्वद्ययेपूर्वासोयउपरासईयुः ॥ येपार्थिवेरजस्यानिषत्तायेवानूनं सुवृजनासुविक्षु ॥ आहंपितृन्त्सुविदत्राँअवित्सिनपातंचविक्रमणंचविष्णोः ॥ बर्हिषदोयेस्वधयासुतस्यभजंतपित्वस्तइहागं मिष्ठाः ॥ बर्हिषदःपितरऊत्य१र्वागिमावोहव्याचकृमाजुषध्वं ॥ तआगतावसाशंतमेनाथानःशंयोररपोदधात ॥ उपहूताःपितरः सोम्यासोबर्हिष्येषुनिधिषुप्रियेषु ॥ तआगमंतुतइहश्रुवंत्वधिब्रुवंतुतेऽवंत्वस्मान् ॥ १ ॥ आच्याजानुदक्षिणतोनिषद्येमंयज्ञम भिगृणीतविश्वे ॥ माहिंसिष्टपितरःकेनचिन्नोयद्वआगःपुरुषताकराम ॥ आसीनासोअरुणीनामुपस्थेरयिंधत्तदाशुषेमर्त्याय ॥ पुत्रेभ्यःपितरस्तस्यवस्वःप्रयच्छततइहोर्जंदधात ॥ येनःपूर्वेपितरःसोम्यासोऽनूहिरेसोमपीथंवसिष्ठाः ॥ तेभिर्यमःसंरराणोहवीं ष्युशन्नुशद्भिःप्रतिकाममत्तु ॥ येतातृपुर्देवत्राजेहमानाहोत्राविदःस्तोमतष्टासोऽअर्कैः ॥ आग्नेयाहिसुविदत्रेभिरर्वाङ्सत्यैःकव्यैः पितृभिर्घर्मसद्भिः ॥ येसत्यासोहविरदोहविष्पाइंद्रेणदेवैःसरथंदधानाः ॥ आग्नेयाहिसहस्रंदेववंदैःपरैःपूर्वैःपितृभिर्घर्मसद्भिः ॥ २ ॥ अग्निष्वात्ताःपितरएहगच्छतसदःसदःसदतसुप्रणीतयः ॥ अत्ताहवींषिप्रयतानिबर्हिष्यथारयिंसर्ववीरंदधातन ॥

त्वमग्नईळितोजातवेदोऽवाड्ढव्यानिसुरभीणिकृत्वी ॥ प्रादाःपितृभ्यःस्वधयातेअक्षन्नद्धित्वंदेवप्रयताहवींषि ॥ येचेहपितरोये
चनेहयांश्चविद्मयाँउचनप्रविद्म ॥ त्वंवेत्थयतितेजातवेदःस्वधाभिर्यज्ञंसुकृतंजुषस्व ॥ येअग्निदग्धायेअनग्निदग्धामध्येदिवः
स्वधयामादयंते ॥ तेभिःस्वराळसुनीतिमेतांयथावशंतन्वंकल्पयस्व ॥२॥ ॥ देवानांपत्नीःशंसत्यनूचीरग्निंगृहपतिंतस्मादनू
चीपत्नीगार्हपत्यमास्तेतदाहूराकांपूर्वांशंसेज्जाम्यैवैपूर्वपेयमितितत्तन्नादृत्यं देवानामेवपत्नीःपूर्वाःशंसेदेषहवाएतत्पत्नीषु रेतोद
धाति यदग्निर्गार्हपत्योऽग्निनैवासुतद्गार्हपत्येनपत्नीषुप्रत्यक्षाद्रेतोदधाति प्रजात्यैप्रजायतेप्रजयापशुभिर्यएवंवेदतस्मात्समानोद
र्याःस्वसान्योदर्यायैजायायाअनुजीविनीजीवतिराकांशंसति राकाहवाएतांपुरुषस्यसेवनींसीव्यतियैषाशिश्नेधिपुमांसोस्यपुत्रा
जायंतेयऽएवंवेदपावीरवींशंसतिवाग्वैसरस्वतीपावीरवीवाच्येवतद्वाचंदधाति तदाहुर्यामींपूर्वांशंसेत् ॥ पित्र्या३ँइति॥ यामी
मेवपूर्वांशंसेदिमंयमप्रस्तरमाहिसीदेतिराज्ञोवैपूर्वपेयंतस्माद्यामीमेवपूर्वांशंसेन्मातलीकव्यैर्यमोअंगिरोभिरितिकाव्यानामनूचीं
शंसत्यवरेणैववैदेवान्काव्याःपरेणैवपितॄंस्तस्मात्काव्यानामनूचींशंसत्युदीरतामवरउत्परासइति पित्र्याःशंसत्युन्मध्यमाःपित
रःसोम्यासइतियेचैवावमायेचपरमायेचमध्यमास्तान्त्सर्वाननंतरायंप्रीणात्याहंपितॄन्त्सुविदत्राँअवित्सीतिद्वितीयांशंसति बर्हि
षदोयेस्वधयासुतस्येत्येतद्धवाएषांप्रियंधामयद्बर्हिषदइतिप्रियेणैवैनांस्तद्धाम्नासमर्धयति प्रियेणधाम्नासमृध्यतेयएवंवेदेदंपितृ
भ्योनमोअस्त्वद्येतिनमस्कारवतींमंततःशंसतितस्मादंततःपितृभ्योनमस्क्रियते तदाहुर्व्याहावंपित्र्याःशंसेत् ॥ अव्याहावा३ँ
इति॥ व्याहावमेवशंसेदसंस्थितंवैपितृयज्ञस्यसाध्वसंस्थितंवाएषपितृयज्ञंसंस्थापयतियोव्याहावंशंसतितस्माद्व्याहावमेवशंस्तव्यं
॥१॥स्वादुष्किलायंमधुमाँउतायमितींद्रस्यैंद्रीरनुपानीयाःशंसत्येताभिर्वाइंद्रस्तृतीयसवनमन्वपिबत्तदनुपानीयानामनुपानीया

त्वंमाधंतीववैतर्हिदेवतायदेताहोताशंसति तस्मादेतासुमद्वत्प्रतिगीर्यंययोरोजसास्कभितारजांसीतिवैष्णुवारुणीमृचंशंसतिवि
ष्णुर्वैयज्ञस्यदुरिष्टंपातिवरुणस्विष्टंतयोरुभयोरेवशांत्यैविष्णोर्नुकंवीर्याणिप्रवोचमिति वैष्णवींशंसतियथावैमत्यमेवंयज्ञस्यविष्णु
स्तद्यथादुष्कृष्टंदुर्मतीकृतंसुकृष्टंसुमतीकृतं कुर्वन्नियादेवमेवैतद्यज्ञस्यदुष्टुतंदुःशस्तंसुष्टुतंसुशस्तंकुर्वन्नेतियदेतांहोताशंसति तंतुंत
न्वन्रजसोभानुमन्विहीतिप्राजापत्यांशंसति प्रजावैतंतुःप्रजामेवास्माएतत्संतनोतिज्योतिष्मतःपथोरक्षधियाकृतानिति देवया
नावैज्योतिष्मंतःपंथानस्तानेवास्माएतद्वितनोत्यनुल्बणंवयतजोगुवामपोमनुर्भवजनयादैव्यंजनमित्येवैनंतन्मनोःप्रजयासंतनो
ति प्रजात्यैप्रजायतेप्रजयापशुभिर्यएवंवेदैवानइंद्रोमघवाविरप्शीत्युत्तमयापरिदधातीयंवाइंद्रोमघवाविरप्शीकरत्सत्याचर्षणी
धृदनर्वेतीयंवैसत्याचर्षणीधृदनर्वा ॥ त्वंराजाजनुषांधेह्यस्मेइतीयंवैराजाजनुषामधिश्रवोमाहिनंयज्जरित्रइतीयंवैमाहिनंयज्ञश्र
वोयजमानोजरितायजमानायैवैतामाशिषमाशास्ते तद्वुपस्पृशन्भूमिंपरिदध्यात्तद्यस्यामेवयज्ञंसंभरति तस्यामेवैनंतदंततःप्रति
ष्ठापयत्यग्नेमरुद्भिःशुभयद्भिर्ऋक्वभिरित्याग्निमारुतमुक्थंशस्त्वाग्निमारुत्यायजतियथाभागंतद्देवताःप्रीणातिप्रीणाति ॥२॥ इति
द्वेब्राह्मणखंडे ॥ इत्यादिसूक्तानिभुक्तवत्सुविप्रेषुयथासंभवंपठनीयानि ॥ ॥छ॥ ॥छ॥ ॥छ॥

## ॥ ८० ॥ सूत्रोक्तश्राद्धप्रयोगः ॥

श्रीः ॥ अथाश्वलायनसूत्रवृत्तिमात्रानुसारेणश्राद्धेंदुशेखरेदर्शश्राद्धपद्धतिर्लिख्यते ॥ कर्ताद्भिराचम्यप्राणानायम्यदेशकाला
द्युल्लिख्यप्राचीनावीती पितृपितामहप्रपितामहानांगोत्राणांशर्मणांवसुरुद्रादित्यस्वरूपाणांसपत्नीकानां मातामहमातुःपिताम
हमातुःप्रपितामहानांगोत्राणांशर्मणांवसुरुद्रादित्यस्वरूपाणांसपत्नीकानांदर्शश्राद्धमन्नेनहविषासद्यःकरिष्यइतिसंकल्प्य दैवमु

दगपवर्गमुपवीतीउदङ्मुखः पित्र्यमर्घ्यनिवेदनादिप्रथमपात्रन्युब्जीकरणांतदक्षिणाविसर्जनवर्जंसर्वंप्राचीनावीतीआग्नेयीसं
स्थमाग्नेयीमुखःकुर्यात् ॥ सव्यं ॥ ततोऽस्मिन्श्राद्धेपुरूरवार्द्रवसंज्ञकविश्वेदेवस्थानेत्वयाक्षणःकरणीयइत्यावृत्त्याद्वौब्रा
ह्मणौवैश्वदेविकौनिमंत्र्य ॥ पितुर्गोत्रस्यशर्मणोवसुरूपस्यस्थानेक्षणःकरणीयइत्यपसव्येनतत्तन्नामाद्युच्चार्य पित्रादित्रयार्थंमा
तामहादित्रयार्थंचत्रींस्त्रीन्ब्राह्मणान्निमंत्र्यएवंषट् ॥ स्नातकृतपच्छौचद्विराचांतानां श्रुतशीलवृत्तसंपन्नानांतेषांमध्येवैश्वदेवि
कावुदक्संस्थौप्राङ्मुखौ तद्दक्षिणतःपित्राद्यर्थानुदङ्मुखान्प्राक्संस्थान्ममैतेपितरइतिध्यायन्नासनेषूपवेश्यासनाद्याच्छादनांत
पदार्थानुष्ठानंदैवेपित्र्येचकांडानुसमयेनपदार्थानुसमयेनवादद्यात् ॥ सव्यं ॥ ततोवैश्वदेविकद्विजहस्तयोरपःप्रदायासनयो
र्ऋजून्दर्भान्युग्मान्सयवानुदगग्रान्दक्षिणभागेदत्त्वा अपःप्रदायतदग्रतोर्घ्यपात्रद्वयंन्यग्बिलमासाद्योत्तानीकृत्यप्रोक्ष्यप्रागग्र
द्विकुशांतर्हितेतस्मिन्नपोनिषिच्य ॥ शंनोदेवीरभिष्टयआपोभवंतुपीतये ॥ शंयोरभिस्रवंतुनः ॥ इतिमंत्रेणसकृदनुमंत्र्य ॥ य
वोसिधान्यराजोवावारुणोमधुसंयुतः ॥ निर्णोदःसर्वपापानांपवित्रमृषिभिःस्मृतमित्यावृत्त्यायवानोप्यतूष्णींगंधादिचक्षिप्त्वा
स्वाहाअर्घ्या इत्यावृत्त्यासकृद्वापात्रद्वयंप्रत्येकंनिवेद्यअपोदत्त्वापात्रस्थौकुशौद्विजहस्तेदत्त्वाविश्वेदेवाइदमर्घ्यमित्यर्घ्यंदत्त्वाद्वि
जहस्तात्स्रवंतीरपः ॥ यादिव्याआपःपृथिवीसंबभूवुर्याअंतरिक्ष्याउतपार्थिवीर्याः ॥ हिरण्यवर्णायज्ञियास्तानआपःशंस्योना
भवंतु ॥ इत्यनुमंत्र्यअपोदत्त्वाद्वितीयेप्येवंकुर्यात् ॥ ततोगंधपुष्पधूपदीपाच्छादनानिप्रत्येकमाद्यंतयोरब्दानपूर्वकंदत्त्वायस्य
स्मृत्येतिवदेत् ॥ अत्रदैवेर्घ्यदानंनेच्छंतीतिबहवः ॥ अपसव्यं ॥ पित्राद्यर्थद्विजासनेषुअयुग्मद्विगुणीकृतदक्षिणाग्रान्कुशा
न्सतिलान्वामभागेदत्त्वाऽपोदत्त्वातदग्रतोऽर्घ्यपात्रषट्कमाग्नेयीसंस्थमासाद्यअयुग्मकुशांतर्हितेष्वपआसिच्यशंनोदेवीरितिसकृ

दनुमंत्र्य ॥ तिलोसिसोमदेवत्योगोसवेदेवनिर्मितः ॥ प्रत्नवद्भिःप्रत्तःस्वधयापितॄनिमाँल्लोकान्प्रीणयाहिनःस्वधानमः ॥ इत्यावृ
त्त्याप्रतिपात्रंतिलानोप्यतूष्णींगंधादिनाल्लिखित्वास्वधाअर्घ्याइत्यावृत्त्याप्रत्येकंपात्राणिनिवेद्यापोदत्त्वोपवीतीसव्योपगृहीतदक्षि
णहस्तपितृतीर्थेनपितरिदंतेअर्घ्यमितिपित्रर्थद्विजहस्तेदत्वातद्धस्तात्संस्रवंतीरपोयादिव्याइत्यनुमंत्र्यापोदद्यात् ॥ एवंपितामहेदं
तेअर्घ्यंप्रपितामहेदंतेअर्घ्यमित्यादिनान्यत्रदत्त्वापितृतृतीयपात्रद्वितीयपात्रगतंजलशेषंप्रथमेआनीयपुत्रकामश्चेत्ताभिरद्भिर्मुख
मंक्त्वातत्पात्रंसकुशंद्विजदेशादुत्तरतोन्युब्जंनिधायासंस्रावंचालयेत् ॥ अपसव्यं ॥ गंधपुष्पधूपदीपाच्छादनानिप्रतिपदा
र्थमाद्यंतयोरुदकदानसहितंदत्त्वायस्यस्मृत्येतिवदेत् ॥ ततोभोजनपात्राण्यासाद्यपाकादुद्धृतमोदनंघृताक्तंस्वयंगृहीत्वावामह
स्तगृहीतमेक्षणेनदक्षिणहस्तेउपस्तीर्य ततोऽवदाय पात्रस्थमवत्तंचाभिघार्यपितृस्थानीयविप्रपाणौ सोमायपितृमतेस्वधानमः
इतिहुत्वा तथैवप्रत्यभिघारणवर्जमवदाय अग्नयेकव्यवाहनायस्वधानमइतिहुत्वा ॥ यद्युपवीतीजुहोतितदामंत्रविपर्यये
णहुत्वा प्राचीनावीतीभोजनपात्राण्यभिघार्यदेवपूर्वकमन्नेषुपरिविष्टेषुहुतशेषंकिंचित्पिंडार्थंविकिरार्थंचावशेष्यपित्रादिपात्रे
ष्वेवदत्त्वोपवीतीदेवपात्रस्थमन्नं गायत्र्याप्रोक्ष्य तूष्णींपरिषिच्य ॥ विश्वेभ्योदेवेभ्यइदमन्नंदत्तंदास्यमानंचातृप्तेःस्वाहेतित्य
जेत् ॥ एवंद्वितीयेपि ॥ प्राचीनावीती पित्रादिपात्रपरिषेचनांते अस्मत्पित्रेगोत्रायशर्मणेवसुरूपायइदमन्नंदत्तंदास्यमानंचा
तृप्तेःस्वधेतित्यजेत् ॥ एवमन्यत्रापि ॥ उपवीती गायत्र्यादिपवित्राणिजप्त्वा आपोशनंदत्त्वायथासुखंजुषध्वमितिभो
जनायातिसृज्यगायत्र्यादिपवित्राणिजपेत्विप्रान्श्रावयेच्च ॥ प्राचीनावीती ॥ तृप्तास्थेत्यादिनातृप्तान्ज्ञात्वामधुवाताइ
तितृचंअक्षन्नमीमदंतेतिचश्रावयित्वा संपन्नमितितान्पृष्ट्वासंपन्नमितितैःप्रत्युक्तेउपभुक्तात्सर्वस्मादन्नात्किंचित्पिंडार्थंविकिरा

र्थंचपृथक्कृत्य शिष्टमन्नमिदंकिमनेनकर्तव्यमित्यवशिष्टमन्नंतेभ्योनिवेद्यतैरिष्टैःसहभुज्यतामित्यनुज्ञातेतेष्वाचांतेष्वनाचांतेषु वाउच्छिष्टादरत्निदूरेकुशमूलेनापहताअसुरारक्षांसिवेदिषदइत्यावृत्त्यालेखाद्वयमाग्नेयीसंस्थंप्रागपवर्गं आचारात्प्रत्यगपवर्गंवा विलिख्यप्रत्येकमद्भिरभ्युक्ष्यलेखाद्वयेपृथक्कुशानास्तीर्यप्रतिलेखंत्रिषुस्थानेषु शुंधंतांपितरः शुंधंतांपितामहाः शुंधंतांप्रपिताम हाइत्यादित्रिभिस्त्रिभिर्मंत्रैःक्रमेणोदकंदत्वाअग्नौकरणशेषमिश्रितान्नकृतामलकपरिमाणंतदधिकपरिमाणंवापिंडमादाय एत त्तेपितर्येचत्वामत्रानुइतिपितृतीर्थेनप्रथमस्थानेदत्वाएवंतत्तन्नाम्नान्येभ्योदत्त्वा ॥ अत्रपितरोमादयध्वंयथाभागमावृषायध्वमि तिपिंडाननुमंत्र्यसव्यावृदुदङ्ङावृत्ययथाशक्त्यनुश्वासान्नासित्वापुनरभिपर्यावृत्य ॥ अमीमदंतपितरोयथाभागमावृषायीषते त्यनुमंत्र्यपिंडशेषमाघ्रायाचम्यपूर्ववत्शुंधंतांपितरइत्यादिमंत्रैरुदकनिनयनंपिंडेषुकृत्वा पितरभ्यंक्ष्वेत्यादिनाअभ्यंजनंदत्वा पितरंक्ष्वेत्यादिनांजनंदत्वावासोदशां।पंचाशद्वर्षादूर्ध्वंस्वीयहृदयलोमवा एतद्वःपितरोवासोमानोतोन्यत्पितरोयुंग्ध्वंइतिमंत्रेण सकृत्पठितेनपिंडेषुदत्त्वागंधादिभिरभ्यर्च्य ॥ नमोवःपितरइषेनमोवःपितरऊर्जेनमोवःपितरःशुष्मायनमोवःपितरोघोरायनमो वःपितरोजीवायनमोवःपितरोरसाय ॥ स्वधावःपितरोनमोवःपितरोनमएतायुष्माकंपितरइमाअस्माकंजीवावोजीवंतइहसंतः स्याम ॥ मनोन्वाहुवामहइतितृचेनोपस्थाय ॥ परेतनपितरःसोम्यासोगंभीरेभिःपथिभिःपूर्विणेभिः ॥ दत्वायास्मभ्यंद्रविणे हभद्रंरयिंचनःसर्ववीरंनियच्छत ॥ इतिपिंडान्प्रवाह्याचांतेषुपिंडदानेइदानीमुच्छिष्टसमीपेदर्भास्तृतायांभुवि ॥ असोमपाश्च येदेवायज्ञभागविवर्जिताः ॥ तेषामन्नंप्रदास्यामिविकिरंवैश्वदेविकं ॥ इतिविश्वेदेवसमीपेसव्येनदत्वा ॥ ततःप्राचीनावीती॥ असंस्कृतप्रमीतायेत्यागिन्योयाःकुलस्त्रियः ॥ दास्यामितेभ्यःप्रकिरमन्नंताभ्यश्चपैतृकं ॥ इतिपित्राद्युच्छिष्टसमीपेविकिरेत् ॥

अनाचांतपक्षेपिंडदानंकृत्वाचांतेष्वन्नंप्रकीर्य ॥ पुत्रकामनायांवीरंमेदत्तपितरइतिमध्यमपिंडमादाय ॥ आधत्तपितरोगर्भंकुमारंपुष्करस्रजं ॥ यथायमरपाअसत् ॥ इतिमंत्रेणपत्नींप्राशयित्वाइतरानप्सुप्रक्षिप्यगवेवादत्वा प्रथमार्घ्यपात्रंचालयित्वोपवीतीब्राह्मणेभ्योदक्षिणांदत्वा ॥ ॐस्वधोच्यतामितितान्पितृपूर्वंविसृज्यॐस्वधेतिप्रत्युक्ते ॥ दातारोनोभिवर्धतांवेदाःसंततिरेवनः ॥ श्रद्धाचनोमाव्यगमद्बहुदेयंचनोस्तु ॥ अन्नंचनोबहुभवेदतिथींश्चलभेमहि ॥ याचितारश्चनःसंतुमाचयाचिष्मकंचन ॥ इतिवरान्प्रार्थयित्वातैस्तथास्त्वितिप्रत्युक्ते यस्यस्मृत्याचनामोक्त्येतिपठित्वाविष्णुंस्मृत्वाकर्मेश्वरार्पणंकुर्यात् ॥ इति ॥

## ॥ ८१ ॥ श्राद्धोपघातप्रायश्चितानि ॥

अकृतेपिंडदानेतुविप्रोयदिवमेत्तदा ॥ पुनःपाकंप्रकुर्वीतश्राद्धंकुर्याद्यथाविधि ॥ अकृतेपिंडदानेतुभुंजानोब्राह्मणोवमेत् ॥ पुनःपाकात्तुकर्तव्यंपिंडदानंयथाविधि ॥ इति ॥ पिंडदानंश्राद्धं ॥ तथा ॥ पित्रर्थानांत्रयाणांहिपिताचवमतेयदि ॥ तर्हिनेचोपवासःस्यात्पुनःश्राद्धंपरेहनि ॥ वैश्वदेविकविप्रवमनेसर्वत्रहोमएव ॥ दक्षः ॥ निमंत्रितस्तुयच्छ्राद्धेभोजनेमुखनिःसृते ॥ तदैवहोमंकुर्वीतस्वाग्नौविप्रःसमाहितः ॥ प्राणादिपंचभिर्मंत्रैर्यावद्द्वात्रिंशसंख्यया ॥ ब्राह्मणस्तुततःकृत्वाघृतप्राशनमारभेत् ॥ होमस्तुलौकिकाग्नौवास्थालीपाकोक्तमंत्रेणप्राणायस्वाहेत्यादिपंचभिर्मंत्रैःपंचाहुतीर्हुत्वापुनःपंचभिरेकेतिपद्संख्यापूरणम् ॥ ऋग्विधानेतु ॥ इंद्रायसामसूक्तेनद्वात्रिंशदाहुतिभिर्होमः ॥ अथपिंडोपघाते पिंडेद्विदलीभूतेपुनःपूर्वपाकादन्नमानीययथाविधिपिंडदानमात्रंनसर्वश्राद्धावृत्तिरितिसर्वसंमतं ॥ श्वसृगालखरैःस्पृष्टःपिंडोभिन्नःप्रमादतः ॥ मार्जारमूषकैःस्पृष्टश्चांडालपतितादिभिः ॥ प्राजापत्यंचरेत्स्नात्वापुनःपिंडान्यथाविधि ॥ अन्यःश्राद्धोपयोगीनिर्णयः ॥ श्राद्धपंक्तौतुभुंजा

नोब्राह्मणोब्राह्मणंस्पृशेत् ॥ तदन्नमत्यजन्भुक्त्वागायत्र्यष्टशतंजपेत् ॥ पात्रेविप्रांतरोच्छिष्टसंसर्गेतच्छिरस्यहस्तंप्रक्षाल्यभुक्त्वा
स्नात्वाद्विशतंजपेत् ॥ उच्छिष्टभोजनेसहस्रंजपेत् ॥ अथश्राद्धदिनेस्मार्ताग्निमतांनिरग्निकानांबह्वृचानांश्राद्धांतएवश्राद्धशेषे
णपृथक्पाकेनवैश्वदेवःकार्यः ॥ अथतिलतर्पणम् ॥ तच्चयच्छ्राद्धेयावंतःपितरस्तर्पितास्तावत्पितृगणोद्देशेनतच्छ्राद्धांगत्वेन
तिलतर्पणंकार्यं ॥ तत्रकालनियमः ॥ दर्शश्राद्धेश्राद्धात्पूर्वंश्राद्धांगतिलतर्पणं ॥ तत्रविप्रनिमंत्रणोत्तरंपाकारंभोत्तरंवाब्रह्मय
ज्ञकरणेब्रह्मयज्ञांगनित्यतर्पणेनैवदर्शांगतिलतर्पणस्यासिद्धिः ॥ ततःपूर्वंवैश्वदेवोत्तरंवाब्रह्मयज्ञकरणेश्राद्धीयषट्पुरुषोद्देशेनश्रा
द्धांगतर्पणंकृत्वाश्राद्धारंभःकार्यः ॥ वार्षिकश्राद्धेपरेद्युरेवश्राद्धीयदेवतोद्देशेन ॥ वार्षिकश्राद्धदिनेनित्यतर्पणंतिलैर्नकार्यं ॥
सकृन्महालयेसर्वपित्रुद्देशेनपरेद्युरेव॥अथतर्पणप्रकारः ॥ परेद्युनिनित्यस्नानप्रातःसंध्योत्तरंश्राद्धांगतर्पणं संबंधनामगोत्राणिद्वि
तीयांतान्युच्चार्यस्वधानमस्तर्पयामीतिबह्वृचैर्दक्षिणहस्तेनान्यैरंजलिनातिलमिश्रंतर्पयेत् ॥ प्रत्यंजलिमंत्रावृत्तिः ॥ एवंनित्यतर्पणं
ज्ञेयं ॥ अथश्राद्धभोजनेप्रायश्चित्तानि ॥ दर्शश्राद्धेषट्प्राणायामाः ॥ महालयश्राद्धेषुत्रिवर्षोर्ध्वंप्रतिवार्षिकेषुचषट्प्राणाया
माःगायत्र्यादशकृत्वोभिमंत्रितजलपानंवा ॥ एवमन्येष्वपि अनुक्तप्रायश्चित्तश्राद्धेषुउक्तजलपानमेव ॥ वृद्धिश्राद्धेप्रा
णायामत्रयं ॥ आपदिदशाहांतनवसंज्ञकश्राद्धेषुएकादशाहेचश्राद्धभोजनेप्राजापत्यकृच्छ्रं ॥ द्वादशाहिकसपिंडीश्राद्धेऊनमा
सिकेचपादोनकृच्छ्रः ॥ द्वितीयमासिकत्रैपक्षिकोनषाण्मासिकोनाब्दिकेष्वर्धकृच्छ्रः ॥ अन्यमासिकेषुप्रथमाब्दिकेचर्पातसपिं
डनश्राद्धेचपादकृच्छ्र उपवासोवा ॥ द्वितीयतृतीयाब्दिकेएकोपवासः ॥ शूद्रश्राद्धेसर्वत्रचतुर्गुणं ॥ श्राद्धेंदुशेखरेश्राद्धादि
प्रायश्चित्तानि ॥ इत्याश्वलायनसूत्रवृत्तिमात्रानुसारेणश्राद्धेंदुशेखरेदर्शश्राद्धपद्धतिःसमाप्ता ॥ ॥ ७ ॥

श्रीः ॥ तत्रादौस्नानंगारुडे ॥ कुशोसिब्रह्मपुत्रोसिब्रह्मणानिर्मितःपुरा ॥ त्वयिस्नातेसचस्नातोयस्येदंग्रंथिबंधनं ॥ इतितीर्थे स्वयंस्नात्वाकुशग्रंथावष्टोत्तरशतस्नानानिकारयेत् ॥ ततस्त्रिपिंडीश्राद्धाधिकारार्थशरीरशुद्ध्यर्थंकृच्छ्रत्रयमेकंवाकृच्छ्रंगायत्रीज पद्वारागायत्रीहोमद्वारावाकार्यं॥ ततस्तीर्थेगत्वाप्रातःस्नानादिमाध्याह्निकांतंकृत्वादेशकालौसंकीर्त्यश्रीपरमेश्वरप्रीत्यर्थं प्राची नावीती अस्मत्कुलेप्रजातानामन्यगोत्रप्रजातानांवात्रिविधानांदिव्यांतरिक्षभौमानांसात्विकराजसतामसानामज्ञातनामगो त्राणांदुर्गतिंगतानामस्मत्कुलेक्लेशदानांसंतत्यादिप्रतिबंधकारिणांप्रेतानांप्रेतत्वनिवृत्त्यासुगतिप्राप्त्यर्थंअस्मत्कुलेसर्वबाधापरि हारार्थंचसव्यंअमुकतीर्थेत्रिपिंडीश्राद्धमहंकरिष्ये॥ तदंगत्वेनादौश्रीविष्णोःपूजनमहंकरिष्यइतिसंकल्प्यसहस्रशीर्षेतिपुरुषसूक्त न्यासपूर्वकंषोडशोपचारैःश्रीविष्णुंसंपूज्य ॥ ततस्त्रिपिंडीश्राद्धांगतिलोदकादिकृत्वापुरुषसूक्तंअतोदेवाइतिसूक्तंचजप्त्वाशुन्धी वोहव्येत्यादिमार्जनांते समस्तसंपदित्यादिब्राह्मणान्प्रदक्षिणीकृत्यनत्वा ॥ त्रिपिंडीश्राद्धाधिकारसंपदेस्त्वितिभवंतोब्रुवंतु ॥ अपसव्यं ॥ त्रिपिंडीश्राद्धेक्षणादिकरिष्ये ॥ दिविष्ठानांसात्विकानामज्ञातनामगोत्राणांप्रेतानांस्थानेक्षणंदत्वाभवद्भिःप्रसादः कर्तव्यः १ ॥ अंतरिक्षस्थानांराजसानामज्ञातनामगोत्राणांप्रेतानांस्थानेक्षणं० २ ॥ भूमिष्ठानांतामसानामज्ञातनामगोत्राणां प्रेतानांस्थानेक्षणं० ३ ॥ ततःपाद्यादिसर्वमनेनक्रमेणकृत्वा आवाहनवर्ज्यमर्घ्यंदत्वा सप्तव्याधेतिमंत्रेणोपहारान्प्रोक्ष्यगंधपु ष्पधूपदीपाच्छादनांतंकृत्वा अर्चनविधिष्वचिंतमस्तु ॥ युष्मदनुज्ञयात्रिपिंडीश्राद्धेपिंडदानमहंकरिष्ये ॥ अपहताअसुरार क्षांसिवेदिषदइतिरेखामुल्लिख्यतामभ्युक्ष्यसकृदाच्छिन्नैर्दर्भैरवस्तीर्यतत्रतिलोदकंकृत्वा ॥ अस्मत्कुलेमृतायेचगति र्येषांनविद्य

ते ॥ आवाहयिष्येतान्सर्वान्दर्भपृष्ठेतिलोदकैः ॥ १ ॥ मातामहकुलेयेचगतिर्येषांनविद्यते ॥ आवाहयिष्येतान्सर्वान्दर्भपृष्ठे तिलोदकैः ॥ २ ॥ बंधुवर्गकुलेयेचगतिर्येषांनविद्यते ॥ आवाहयिष्येतान्सर्वान्दर्भपृष्ठेतिलोदकैः ॥ ३ ॥ ततःयवमयपिंडो परिमधुवाताइतितृचेनमधुरत्रयंप्रक्षयित्वापिंडंहस्तेगृहीत्वा ॥ पितृवंशेमृतायेचमातृवंशेतथैवच ॥ गुरुश्वशुरबंधूनांयेचान्येबां धवास्तथा ॥ १ ॥ येमेकुलेलुप्तपिंडाःपुत्रदारविवर्जिताः ॥ क्रियालोपगताश्चैवजात्यंधाःपंगवस्तथा ॥ २ ॥ विरूपाआमगर्भाश्चज्ञा ताज्ञाताःकुलेमम ॥ धर्मपिंडंप्रदास्यामिह्यक्षय्यमुपतिष्ठतां ॥ ३ ॥ इमंयवमयंपिंडंमधुरत्रयसंयुतं ॥ ददामितस्मैप्रेताययःपीडां कुरुतेमम ॥ ४ ॥ येकेचित्प्रेतरूपेणवर्ततेपितरोमम ॥ यवपिंडप्रदानेनतृप्तिंगच्छंतुशाश्वतीं ॥ ५ ॥ येकेचिद्दिवितिष्ठंतिप्रे ताःसात्विकरूपिणः ॥ यवपिंडप्रदानेनतेतृप्यंतुक्षुधार्दिताः ॥ ६ ॥ दिविष्ठाःसात्विकाअज्ञातनामगोत्राःप्रेताः एषवोयवम यःपिंडउपतिष्ठतां इतिपिंडंदत्वातदुपरितिलोदकंदद्यात् ॥ ततःपश्चिमेरेखाकरणं ॥ अपहतेत्यादितिलोदकांतंकृत्वातत्रकुशो परि अस्मत्कुलेमृतायेचेत्यादित्रिभिर्मंत्रैःपूर्ववत् अज्ञातनामगोत्रान्प्रेतानावाह्यमधुवाताइतितृचेनमधुरत्रयंव्रीहिपिंडोपरिप्र क्षयित्वापिंडंहस्तेगृहीत्वा ॥ पितृवंशेमृतायेचेत्यादिमंत्रत्रयंपठित्वा ॥ ३ ॥ इमंव्रीहिमयंपिंडंमधुरत्रयसंयुतं ॥ तन्मुक्तयेप्रदा स्यामिपीडांयःकुरुतेमम ॥ ४ ॥ येकेचिद्वायुरूपेणवर्ततेपितरोमम ॥ तंडुलैःपिंडदानेनप्रजंतुगतिमुत्तमां ॥ ५ ॥ अंतरिक्षे चयेकेचिद्राजसावायुरूपिणः ॥ व्रीहिपिंडप्रदानेनतेतृप्यंतुक्षुधार्दिताः ॥ ६ ॥ अंतरिक्षस्थराजसाअज्ञातनामगोत्राःप्रेताः एषवोव्रीहिमयःपिंडउपतिष्ठतां इतिपिंडंदद्यात् ॥ ततःपश्चिमेपूर्ववदपहतेत्यादितिलोदकदानांतंकृत्वातत्रकुशोपरिअस्मत्कुले मृतायेचेत्यादित्रिभिर्मंत्रैःपूर्ववदज्ञातनामगोत्रान्पितॄनावाह्य मधुवाताइतितृचेनमधुरत्रयंतिलपिष्टपिंडोपरिप्रक्षयित्वा पिंडं

हस्तआदाय ॥ पितृवंशेमृतायेचेत्यादिमंत्रत्रयंपूर्वोक्तंपठित्वा ॥ ३ ॥ इमंतिलमयंपिंडंसर्पिषामधुनायुतं ॥ तेभ्योददामियेपी
डांमत्कुलेकुर्वंतेसदा ॥ ४ ॥ येकेचित्तामसाःप्रेताभूमौतिष्ठंतिसर्वदा ॥ तिलपिंडप्रदानेनगतिंगच्छंतुतेध्रुवां ॥ ५ ॥
तमोरूपाश्रयेकेचिद्वर्ततेपितरोमम ॥ पिण्याकपिंडदानेनतेतृप्यंतुक्षुधार्दिताः ॥ ६ ॥ भूमिष्ठास्तामसाअज्ञातनामगोत्राः
प्रेताःएषवस्तिलमयःपिंडउपतिष्ठतां ॥ अथपिंडोपरितिलोदकंदद्यादेभिर्मंत्रैः ॥ अस्मत्कुलेमृतायेचगतिर्येषांनविद्यते ॥
तेषामुद्धरणार्थायपिंडोपरितिलोदकं ॥ १ ॥ मातामहकुलेयेच०तिलोदकं ॥ २ ॥ बंधुवर्गकुलेयेच०तिलोदकं ॥ ३ ॥
ततःपितृवंशेमृतायेचेतित्रीन्मंत्रान्पठित्वा ॥ ज्ञाताज्ञाताःकुलेमम ॥ तेषामुद्धरणार्थायपिंडोपरितिलोदकमुपतिष्ठतां ॥ ३ ॥
अत्रपितरोमादयध्वमित्यादिचरोःघ्राणभक्षंभक्षयेत् ॥ पवित्रंविसृज्याचम्यान्यत्पवित्रंधृत्वा ॥ दिव्यंतरिक्षभूमिष्ठाः
सात्विकराजसतामसाअज्ञातनामगोत्राःप्रेताः अभ्यंग्ध्वं अंग्ध्वं इत्यादि त्रिष्वपिपिंडेषुअंजनाभ्यं जनेदत्वावासोदत्वा
नमोवःपितरइषे०जीवंव्रातंसचेमहि इत्युपस्थाय ॥ सव्येनपिंडपूजांविधाय ॥ दिव्यंतरिक्षभूमिष्ठाइत्याद्युच्चार्य ॥
त्रिपिंडीश्राद्धांगमर्घ्यदानंकरिष्येइतिसंकल्प्यअर्घ्यपात्रेउदकंगंधपुष्पतुलसीतिलान्प्रक्षिप्यतन्मध्येमातुलिंगत्रयंस्थापयित्वा
जान्वाच्य ॥ दिविष्ठाःसात्विकाअज्ञातनामगोत्राःप्रेताः युष्मभ्यइदमर्घ्यमुपतिष्ठतां ॥ १ ॥ पुनःएवमेवपात्रेजंबीर
त्रयंस्थापयित्वा अंतरिक्षस्थाराजसाअज्ञातनामगोत्राःप्रेताःयुष्मभ्यइदमर्घ्यमुपतिष्ठतां ॥ २ ॥ पुनरेवमेवखर्जूरीफलत्रयंस्था
पयित्वा भूमिष्ठास्तामसाअज्ञातनामगोत्राःप्रेताःयुष्मभ्यमिदमर्घ्यमुपतिष्ठतां ॥ ३ ॥ अथसव्येनविष्णुतर्पणम्॥ पिंडोपरिस
हस्रशीर्षेतिप्रत्यृचं विष्णुंतर्पयामि इतिअतोदेवाइतिषड्भिःप्रत्यृचंचतर्पयित्वा अथपुराणमंत्रैः ॥ अनादिनिधनोदेवशंखचक्रग

दाधर ॥ अक्षय्यपुंडरीकाक्षप्रेतमोक्षप्रदोभव ॥ श्रीविष्णुंतर्पयामि ॥ १ ॥ अतसीपुष्पसंकाशंपीतवाससमच्युतं ॥ येनमस्यंति गोविंदंनतेषांविद्यतेभयं ॥ श्रीविष्णुंत० ॥ २ ॥ कृष्णकृष्णकृपालोत्वमगतीनांगतिर्भव ॥ संसारार्णवमग्नानांप्रसीदपुरुषोत्तम ॥ श्रीविष्णुंत० ॥३॥ नारायणसुरश्रेष्ठलक्ष्मीकांतवरप्रद ॥ अनेनतर्पणेनाद्यप्रेतमोक्षप्रदोभव ॥ श्रीविष्णुं० ॥ ४ ॥ अपसव्यं ॥ पुनरर्घ्यं ॥ दुग्धंगृहीत्वा ॥ येकेचिदन्नलोभेनमृत्युंप्राप्तानराधमाः ॥ तेमेप्रेताःसुखंदद्युस्तेभ्योदुग्धतिलोदकं ॥ तान्प्रेतांस्तर्पयामि ॥ १ ॥ येकेचिद्द्रव्यलोभेनमृत्युं० ॥ २ ॥ येकेचित्सर्वलोभेनमृत्युं० ॥ ३ ॥ इतिप्रेतांस्तर्पयित्वा ॥ ततःपिंडान्नमस्कृत्य ब्राह्मणभोजनांतेपिंडविसर्जनंकुर्यात् ॥ ततोयुष्मदनुज्ञयामंडलानिकरिष्ये ॥ पात्रासादनाद्यन्नपरिवेषणांतंकृत्वा प्रथमपात्रे यवपिष्टं द्वितीयेव्रीहिपिष्टं तृतीयेतिलपिष्टंदत्वा तत्रनाग्नौकरणंएकोद्दिष्टत्वात् अन्नप्रोक्षणं अपसव्यं सत्यंत्वर्तेन०जुहोमिब्राह्मणानांत्वेत्यादि दिविष्ठाःसात्विकाअज्ञाताःप्रेतादेवताःइदंवोअन्नंइयंभूरित्यादि ॥ दिविष्ठेभ्यःसात्विकेभ्योऽज्ञातेभ्यःप्रेतेभ्यः इदमन्नंपरिविष्टंपरिवेक्ष्यमाणंचअस्यब्राह्मणस्योपतिष्ठतां ॥ १ ॥ एवंद्वितीयेपात्रेअंतरिक्षस्थाराजसाइत्यादि० ॥ २ ॥ एवंतृतीयेभूमिष्ठास्तामसाइत्यादि० ॥ ३ ॥ ततोब्रह्मार्पणंकृत्वा ईशानविष्णु० ॥ विष्णवेनैवेद्यंसमर्प्य ॥ एकोविष्णु० ॥ अनेनयथाशक्तिब्राह्मणभोजनेनदिव्यंतरिक्षभूमिष्ठाज्ञातनामगोत्रसात्विकराजसतामसप्रेतरूपीश्रीजनार्दनवासुदेवःप्रीयतां ॥ दशगायत्रींजस्वाअपेक्षितंयाचितव्यं० ॥ भोजनांतेदध्योदनं ॥ सिद्धस्यहविषोमध्ये०मधुवाता०अक्षन्नमी० ॥ त्रिपिंडीश्राद्धंसंपन्नं ॥ दिव्यंतरिक्षभूमिष्ठाअज्ञातनामगोत्राःसात्विकराजसतामसाःप्रेतास्तृप्तास्थ ॥ तृप्तास्मः ॥ शेषमन्नंकिंक्रियतां ॥ गोभ्योदीयतां ॥ अमृतापिधानमसि ॥ यजमानकुलेजाता० ॥ विकिरोच्छिष्टपिंडोनदेयः ॥ शिवाआपःसंतु ॥ संत्वित्यादि० ॥ त्रि

पिंडीश्राद्धेदिविष्ठेभ्यःसात्विकेभ्योऽज्ञातनामगोत्रेभ्यःप्रेतेभ्योयद्दत्तमन्नमुदकादितदुपतिष्ठतां ॥ अंतरिक्षस्थेभ्योराजसेभ्योऽ
ज्ञातनामगोत्रेभ्यःप्रेतेभ्योयद्दत्तमुदकादितदुपतिष्ठतां ॥ भूमिष्ठेभ्यस्तामसेभ्योऽज्ञातनामगोत्रेभ्यःप्रेतेभ्योयद्दत्तमन्नमुदकादि
तदुपतिष्ठतां ॥ दिविष्ठेभ्यःसात्विकेभ्यइत्याद्युच्चार्यइमादक्षिणाःइदंवस्त्रंचपातु ॥ अंतरिक्षस्थेभ्योराजसेभ्य इमादक्षिणाअयं
कमंडलुश्चपांतु ॥ भूमिष्ठेभ्यस्तामसेभ्यइमादक्षिणाइदमुपानद्युगंव्यजनंचपांतु ॥ ततस्तेषांप्रार्थना ॥ दिव्यंतरिक्षभूमिष्ठाःसा
त्विकाराजसास्तथा॥प्रेतावैंतामसायेन्येशांतिंयच्छंतुतर्पिताः॥१॥ तैश्चाशिषोदेयाः॥यानुद्दिश्यभवद्भिर्यत्कृतंश्राद्धंत्रिपिंडकं॥
श्राद्धेनानेनतेसर्वेतृप्तिंयांतुमुदान्विताः ॥ २ ॥ तेषांप्रसादाद्भवतांपूर्णाःसंतुमनोरथाः ॥ संपत्तिःसंततिश्चैववर्धतामुत्तरोत्त
रं॥ ३ ॥ भोजनपात्राण्युच्चालयेत् ॥ पिंडोद्वासनंकरिष्ये ॥ अयोध्यामथुरामाया०॥ मयायत्कृतंत्रिपिंडीश्राद्धंतत्कालादिहीनं०
ब्राह्मणवचनात्श्रीविष्णोःप्रसादात्सर्वसंपूर्णमस्त्वितिभवंतोब्रुवंतु ॥ सर्वसंपूर्णमस्तु ॥ वसिष्ठासः० ॥ जपच्छिद्रंतपश्छिद्रं०॥
एषत्रिपिंडीश्राद्धयज्ञः ॥ ॐतत्सद्ब्रह्मार्पणमस्तु ॥ प्रमादात्कुर्वतांकर्म० ॥ आचम्यप्राणानायम्य त्रिपिंडीश्राद्धसांगतासिद्ध
येतिलपात्रदानंकार्यमितिसंप्रदायः ॥ यानिकानिचपापानिब्रह्महत्यासमानिच ॥ तिलपात्रप्रदानेनतानिनश्यंतुसर्वदा ॥ १ ॥
अवशिष्टंश्राद्धशेषान्नंगोभ्योदेयंस्वयंनग्राह्यंप्रेतश्राद्धत्वात् ॥ अन्यच्च ॥ ब्राह्मणाभावेयथोक्तमन्नंत्रिपुरुषाहारपरिमितंकृत्वा
गोभ्योदद्यात् ॥ सामान्यब्राह्मणेषुसत्स्वपिगोभ्यःपितृभ्यः ब्राह्मणैःसहान्नंपात्रेपरिविष्यदेयं ॥ ततोभूयसींदद्यात् ॥ इतिवि
धानपारिजातस्थस्त्रिपिंडीश्राद्धप्रयोगः ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥

## ॥ ८३ ॥ अथसंक्षिप्तदर्शश्राद्धसंकल्पः ॥



श्रीः ॥ आचम्यदेशकालौसंकीर्त्य० पुराणोक्तफलप्राप्त्यर्थं ॥ पुरूरवार्द्रवसंज्ञकानांविश्वेषांदेवानांविश्वेषांदेवानां ॥ प्राचीनावीती ॥ अस्मत्पितृपितामहप्रपितामहानां अमुकशर्मणां अमुकगोत्राणां सपत्नीकानां वसुरुद्रादित्यस्वरूपाणां ॥ मातामहमातुःपितामहमातुःप्रपितामहानां अमुकशर्मणां अमुकगोत्राणां सपत्नीकानां वसुरुद्रादित्यस्वरूपाणां ( सव्यं ) एतेषांश्रेयोर्थं मोक्षार्थंतृप्त्यर्थं ममपितृणांदर्शश्राद्धंसांकल्पिकविधिनाअन्नेनहविषासद्यःकरिष्ये ॥ तदंगतिलोदकादिकरिष्ये ॥ तिलोदकं कृत्वा॥पुरूरवार्द्रवसंज्ञकानांविश्वेषांदेवानां॥ प्राचीनावीती॥ अस्मत्पितृ०महानां गो० सप०वसु०णां॥ मातामः०नां गो०सप० वसुरु० ब्रह्मणेइदमासनं ॥ स्वासनं ॥ अत्रास्यतां ॥ धर्मोसि ॥ सां० वोऽर्घः ॥ अस्मत्पि० हाः वसुरुद्रादित्यस्वरूपाः यथाभागशः अमीवोगंधाः ॥ सुगंधाः ॥ अस्मत्पि० हाः स० स्वरूपाः पूजार्थेपुष्पंतुलसीपत्रंच ॥ सुपुष्पंसुपत्रं ॥ अस्मत्पितृ० व० पाः पूजार्थे एषवोधूपः ॥ सुधूपः ॥ अस्मत्पि० हाः स० पाः पूजार्थे एषवोदीपः ॥ सुदीपः ॥ अस्मत्पि० हाः स० पाः आच्छादनार्थेकिंचिद्व्यावहारिकंद्रव्यं ॥ स्वाच्छादनं ॥ फलार्थेपूगफलं ॥ सुफलं ॥ पवित्रार्थेइमेकुशाः ॥ अस्तुपवित्रं ॥ ॐइदंपितृभ्योनमोऽअस्त्वद्ययेपूर्वासोयऽउपरासऽईयुः ॥ येपार्थिवेरजस्यानिषत्तायेवानूनंसुवृजनासुविक्षु ॥ नमःपितृभ्यः एतेआसनादिअत्रगंधपुष्पधूपदीपाच्छादनांताःपंचोपचाराःसर्वेपरिपूर्णाभवंतु ॥ अर्चनविधेःस्वर्चितमस्तु ॥ न्यूनंतद्विधिवदस्तु ॥ यस्यस्मृत्याचनामोक्त्यातपःपूजाक्रियादिषु ॥ न्यूनंसंपूर्णतांयातिसद्योवंदेतमच्युतं ॥ अच्युतायनमः ॥ गयायैनमः ॥ गदाधरायनमः ॥ पुंडरीकाक्षायनमः ॥ मंडलादिकरिष्ये ॥ परिविष्य ॥ पात्रप्रोक्षणं ॥ तत्संत्रिर्तुवरेण्यंभर्गो० ॥ ब्रह्मार्पणं

ब्रह्महविर्ब्रह्माग्नौब्रह्मणाहुतं ॥ ब्रह्मैवतेनगंतव्यंब्रह्मकर्मसमाधिना ॥ हरिर्दाताहरिर्भोक्ताहरिरन्नंप्रजापतिः ॥ हरिर्विप्रशरीरस्थो भुंक्तेभोजयतेहविः ॥ चतुर्भिश्चचतुर्भिश्चद्वाभ्यांपंचभिरेवच ॥ हूयतेचपुनर्द्वाभ्यांसमेविष्णुःप्रसीदतु ॥ तत्सद्ब्रह्मार्पणमस्तु ॥ नैवेद्यंसमर्प्य ॥ अपसव्यं ॥ एकोविष्णुर्महद्भूतंपृथग्भूतान्यनेकशः ॥ त्रीँल्लोकान्व्याप्यभूतात्माभुंक्तेविश्वभुगव्ययः॥अनेनम मपितुःदर्शश्राद्धयज्ञीयब्राह्मणभोजनेनभगवान्पित्रादिस्वरूपीजनार्दनवासुदेवःप्रीयतांनमम ॥ सव्यं ॥ देवाःतत्सत् अमृत मस्तु ॥ अपसव्यं ॥ पितरःतत्सद्ब्रह्मार्पणमस्तु ॥ श्राद्धउपविष्टायब्राह्मणायइमांदक्षिणांतुभ्यमहंसंप्रददे ॥ दक्षिणाःपांतु ॥ पांतुदक्षिणाः ॥ सकृद्गायत्रीजपंकृत्वा ॥ प्रार्थनाकार्या ॥ अपेक्षितंयाचितव्यंत्याज्यंचैवानपेक्षितं॥ उपविश्यसुखेनैवभोक्तव्यं स्वस्थमानसैः ॥ विद्यमानशाकपाकपदार्थेषुयद्रोचतेतद्ग्राह्यं ॥ यन्नरोचतेतत्त्याज्यं ॥ सुखेनैवभोक्तव्यं ॥ जुषामहे ॥ जप च्छिद्रंतपश्छिद्रंयच्छिद्रंश्राद्धकर्मणि ॥ सर्वंभवतुमेऽच्छिद्रंब्राह्मणानांप्रसादतः ॥ सर्वंअच्छिद्रंभवतु ॥ एषपितृयज्ञः ॥ तत्स द्ब्रह्मार्पणमस्तु ॥ वर्षद्वृतेविष्णवास० ॥ इतिदर्शश्राद्धम् ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥

## ॥ ८४ ॥ अथाक्षय्यतृतीया ॥

श्रीः ॥ ( अस्यांतृतीयायांयत्किंचिज्जपहोमपितृतर्पणंदानादिचक्रियतेतत्सर्वमक्षय्यम् ॥ अत्रदेवतोद्देशेनपित्रुद्देशेनचोदकुंभ दानमुक्तं ) ॥ तत्रसंकल्पः ॥ श्रीपरमेश्वरप्रीत्यर्थंवसंतमाधवदेवताप्रीत्यर्थंपितृप्रीत्यर्थंचब्राह्मणायोदकुंभदानमहंकरिष्ये ॥ तदंगंउदकुंभपूजनंब्राह्मणपूजनंचकरिष्ये इतिसंकल्प्यसूत्रवेष्टितंगंधफलयवाद्युपेतंकलशंपंचोपचारैर्ब्राह्मणंचसंपूज्य ॥ दान मंत्रः ॥ एषधर्मघटोदत्तोब्रह्मविष्णुशिवात्मकः ॥ अस्यप्रदानात्सकलाममसंतुमनोरथाः ॥ इतिमंत्रेणदद्यात् ॥ पित्रुद्देशेतुपितृ

णामक्षय्यतृप्त्यर्थंउदकुंभदानंकरिष्येइतिसंकल्प्यपूर्ववत्कुंभब्राह्मणौसंपूज्योदकुंभेगंधतिलफलादिनिक्षिप्य ॥ एषधर्मघटोदत्तो ब्रह्मविष्णुशिवात्मकः ॥ अस्यप्रदानात्तृप्यंतुपितरोपिपितामहाः ॥ गंधोदकतिलैर्मिश्रंसान्नंकुंभंफलान्वितं ॥ पितृभ्यःसंप्रदास्यामिअक्षय्यमुपतिष्ठत्वितिमंत्रेणदद्यात् ॥ युगादौसमुद्रस्नानंमहाफलं ॥ वैशाखस्याधिमासत्वेयुगादिश्राद्धंमासद्वयेपिकार्यं ॥ युगादिषूपवासोमहाफलः ॥ युगादिमन्वादौरात्रिभोजनेअभिस्ववृष्टिमितिमंत्रजपः ॥ युगादिश्राद्धलोपजन्यप्रत्यवायपरिहारार्थमृग्विधानोक्तंप्रायश्चित्तंकरिष्येइतिसंकल्प्यनयस्यद्यावेत्यृचंशतवारंजपेत् ॥ अयंनिर्णयःसर्वयुगादौज्ञेयः॥श्राद्धंदर्शवत् ॥

## ॥ ८५ ॥ अथदौहित्रप्रतिपच्छ्राद्धं ॥

श्रीः ॥ आश्विनशुक्लप्रतिपदिदौहित्रेणानुपनीतेनापिसपत्नीकमातामहस्यपार्वणंमातुलेसत्यप्यवश्यंकार्यं ॥ मातामहीसत्वे केवलमातामहपार्वणं ॥ इदंजीवत्पितृकेणैवकार्यं ॥ इदंसपिंडकमपिंडकंवा ॥ अत्रपुरूरवार्द्रवसंज्ञकाविश्वेदेवाः ॥ धूरिलोचना इतिकेचित् ॥ इयंप्रतिपदपराह्णव्यापिनीग्राह्येतिबहवः ॥ संगवव्यापिनीतिकेचित् ॥ केशवादिनामानितिथ्यादिचसंकीर्त्य अद्यपूर्वोच्चरितएवं० श्रुतिस्मृ० र्थंमातामहश्राद्धंकरिष्ये ॥ इतिसंकल्पः॥ अन्यत्सर्वंप्रकृतिवत् ॥ इतिदौहित्रश्राद्धनिर्णयः ॥

## ॥ ८६ ॥ अथाविधवानवमीश्राद्धं ॥

श्रीः ॥ आचम्यपवित्रंधृत्वाप्राणानायम्यदेशकालौसंकीर्त्य ममआत्मनःश्रुतिस्मृतिपुराणोक्तफलप्राप्त्यर्थंधूरिलोचनसंज्ञकानांविश्वेषांदेवानां ॥ अपसव्यं ॥ अस्मत्मातृपितामहीप्रपितामहीनांअमुकदानांअमुकगोत्राणांवसुरुद्रादित्यस्वरूपाणांएतासांश्रेयोर्थंमोक्षार्थंतृप्त्यर्थंअविधवानवमीश्राद्धाख्यंकर्मकरिष्ये ॥ अन्यत्सर्वंप्रकृतिवत् ॥ इतिअविधवानवमीश्राद्धसंकल्पः ॥

## ॥ ८७ ॥ अथसांकल्पिकश्राद्धविधिः ॥

श्रीः ॥ आचम्यपवित्रादिधृत्वाप्राणानायम्यदेशकालाद्युच्चार्यपुरूरवार्द्रवसंज्ञकानांविश्वेषांदेवानांअस्मत्पितृपितामहप्रपिताम हानांशर्मणांगोत्राणांरूपाणांअमुकश्राद्धंसांकल्पिकविधिनाऽन्नेनहविषासद्यःकरिष्ये इतिसंकल्प्य तृतीयक्षणदानांतंपूर्ववत्कृ त्वासमंत्रकमावाहनंविधिवदर्घ्यदानंचवर्जयेत् ॥ किंतुआवाहनेकेवलंदेवानावाहयामिपितॄनावाहयामिइत्येवावाह्यकेवलमर्घ्यं चदत्वा गंधपुष्पधूपदीपाच्छादनादिपात्रेषुभस्ममर्यादादिप्रतिसांवत्सरिकश्राद्धवत्सर्वंकृत्वाग्नौकरणंवर्जयित्वापरिवेषणादिसंप न्नवाचनांतेउत्तरापोशनंविकिरदानवर्जमक्षय्यवचनांतंकृत्वास्वधांवाचयिष्येस्वधोच्यतामितिवाक्यरहितंसर्वंपूर्ववत्समापयेत्॥

## ॥ ८८ ॥ अथमहालयश्राद्धं ॥

श्रीः ॥ धूरिलोचनसंज्ञकानांविश्वेषांदेवानां ॥ प्राचीनावीती ॥ अस्मत्पितृपितामहप्रपितामहानां अमुकशर्मणां अमुकगो त्राणां वसुरुद्रादित्यस्वरूपाणां ॥ मातृपितामहीप्रपितामहीनां अमुकदानां अमुकगोत्राणां वसुरुद्रादित्यस्वरूपाणां ॥ साप त्नमातुः अमुकदायाः अमुकगोत्रायाः वसुरूपायाः ॥ मातामहमातुःपितामहमातुःप्रपितामहानां अमुकशर्मणां अमुकगो त्राणां वसुरुद्रादित्यस्वरूपाणां ॥ मातामहीमातुःपितामहीमातुःप्रपितामहीनां अमुकदानां अमुकगोत्राणां वसुरुद्रादित्यस्व रूपाणां ॥ पत्न्याः अमुकदायाः अमुकगोत्रायाः वसुरूपायाः ॥ पुत्रस्य अमुकशर्मणः अमुकगोत्रस्य सपत्नीकस्य ससुतस्य वसुरूपस्य ॥ दुहितुः अमुकदायाः अमुकगोत्रायाः सभर्तृकायाः ससुतायाः वसुरूपायाः ॥ पितृव्यस्य अमुकशर्मणः अमुक गोत्रस्य सपत्नीकस्य ससुतस्य वसुरूपस्य ॥ मातुलस्य अमुकशर्मणः अमुकगोत्रस्य सपत्नीकस्य ससुतस्य वसुरूपस्य ॥ भ्रातुः

अमुकशर्मणः अमुकगोत्रस्य सपत्नीकस्य ससुतस्य वसुरूपस्य ॥ पितृभगिन्याः अमुकदायाः अमुकगोत्रायाः सभर्तृकायाः ससुतायाः वसुरूपायाः ॥ मातृभगिन्याः अमुकदायाः अमुकगोत्रायाः सभर्तृकायाः ससुतायाः वसुरूपायाः ॥ भगिन्याः अमुकदायाः अमुकगोत्रायाः सभर्तृकायाः ससुतायाः वसुरूपायाः ॥ श्वशुरस्य अमुकशर्मणः अमुकगोत्रस्यसपत्नीकस्य ससुतस्य वसुरूपस्य ॥ अस्मत्गुरोः अमुकशर्मणः अमुकगोत्रस्यसपत्नीकस्यससुतस्यवसुरूपस्य ॥ शिष्यस्यअमुकशर्मणः अमुकगोत्रस्यसपत्नीकस्यससुतस्यवसुरूपस्य ॥ आप्तस्यअमुकशर्मणःअमुकगोत्रस्यसपत्नीकस्यससुतस्यवसुरूपस्यएतेषांश्रेयो र्थंमोक्षार्थंतृप्त्यर्थंदेशकालाद्यनुसारतः ( षोडशमहालयसंकल्पः ) पित्रादीनुद्दिश्यकन्यागतेसवितरिमहालयापरपक्षिकश्राद्धं सदैवंसपिंडंसाग्नौकरणंपार्वणैकोद्दिष्टेनविधिनाअन्नेनहविषासद्यःकरिष्ये ॥ अन्यत्तिलोदकादिसांवत्सरिकवत्कृत्वातत्रतत्रसर्व पितृणामूहःकार्यः ॥ तत्रसर्वेषांसौकर्यायमहालयोक्तपार्वणैकोद्दिष्टपितृणामुच्चारविचारः ॥ संकल्पासनयोःषष्ठीद्वितीयावाह नेतथा ॥ अन्नदाने(येचत्वेत्युत्तरंपिंडदानेच)चतुर्थीस्याच्छेषाःसंबुद्धयःस्मृताः ॥ तत्रषष्ठीनिर्देशःसंकल्पेएवनिर्दिष्टःसआस नेऽक्षय्योदकदानेचयोज्यः ॥ द्वितीयाआवाहने ॥ साच—पितृपितामहप्रपितामहान् शर्मणः गोत्रान् वस्वादिरूपान् ॥ मातृपितामहीप्रपितामहीः अमुकदाः गोत्राः वस्वादिरूपाः ॥ मातामहमातुःपितामहमातुःप्रपितामहान् शर्मणः गोत्रान् सप त्नीकान् वस्वादिरूपान् ॥ पत्नीं अमुकदां गोत्रां वसुरूपां ॥ सुतं शर्माणं गोत्रं वसुरूपं ॥ सुतां अमुकदां गोत्रां वसुरूपां ॥ पितृव्यं शर्माणं गोत्रं सपत्नीकं वसु० ॥ मातुलं शर्माणं गोत्रं सप० वसु० ॥ भ्रातरं शर्माणं गोत्रं सप० वसु० ॥ पितृभ गिनीं अमुकदां गोत्रां सभर्तृकां ससुतां वसु० ॥ मातृभगिनीं दां गोत्रां सभ० ससु० वसु० ॥ भगिनीं दां गोत्रां सभ०

ससु० वसु० ॥ श्वशुरं शर्माणं गोत्रं सप० ससु० वसु०॥ गुरुं शर्माणं गोत्रं सप० ससु० वसु० ॥ ॥ चतुर्थीअन्नदाने ॥ साच—पितृपितामहप्रपितामहेभ्यः शर्मभ्यः गोत्रेभ्यः वस्वादिरूपेभ्यः ॥ मातृपितामहीप्रपितामहीभ्यः अमुकदाभ्यः गोत्राभ्यः वस्वादिरूपाभ्यः ॥ मातामह० महेभ्यः शर्मभ्यः गोत्रेभ्यः सपत्नीकेभ्यः वस्वादिरूपेभ्यः पत्न्यै दायै गोत्रायै वसुरूपायै ॥ सूनवे शर्मणे गोत्राय वसुरूपाय ॥ सुतायै दायै गोत्रायै वसुरूपायै ॥ पितृव्याय शर्मणे गोत्राय सपत्नीकाय वसु०॥ मातुलाय शर्मणे गोत्राय सप० वसु० ॥ भ्रात्रे शर्मणे गोत्राय सप० वसु० ॥ पितृभगिन्यै दायै गोत्रायै सभर्तृकायै वसुरूपायै ॥ मातृभगिन्यै दायै गोत्रायै सभ० वसु० ॥ भगिन्यै दायै गोत्रायै सभ० वसु० ॥ श्वशुराय शर्मणे गोत्राय सप० वसुरूपाय ॥ गुरवे शर्मणे गोत्राय सप० वसुरूपाय ॥ ॥ संबुद्धिःसर्वत्र ॥ साच—पितृपितामहप्रपितामहाः शर्माणः गोत्राः वस्वादिरूपाः ॥ मातृपितामहीप्रपितामह्यः अमुकदाः गोत्राः वस्वादिरूपाः ॥ मातामहमातुःपितामहमातुःप्रपितामहाः शर्माणः गोत्राः सपत्नीकाः वस्वादिरूपाः ॥ पत्नि अमुकदे गोत्रे वसुरूपे ॥ सुत शर्मन् गोत्र वसुरूप ॥ सुते अमुकदे गोत्रे वसुरूपे ॥ पितृव्य शर्मन् गोत्र सपत्नीक वसुरूप ॥ मातुल शर्मन् गोत्र सप० वसु०॥ भ्रातः शर्मन् गोत्र सप० वसु० ॥ पितृभगिनि अमुकदे गोत्रे सभर्तृके वसुरूपे ॥ मातृभगिनि अ०दे गोत्रे सभ० वसु०॥ भगिनि अ० दे गोत्रे सभ० वसु०॥ श्वशुर शर्मन् गोत्र सप० वसु० ॥ गुरो शर्मन् गोत्र सप० वसुरूप ॥ इत्यादियथायथमूह्यम् ॥ सर्वेषांपिंडदानोत्तरंचतुर्दिक्षुधर्मपिंडान्दद्यात् ॥ आब्रह्मणोयेपितृवंशजातामातुस्तथावंशभवामदीयाः॥वंशद्वयेस्मिन्ममदासभूताभृत्यास्तथैवाश्रितसेवकाश्च ॥ मित्राणिसख्यःपशवश्चवृक्षादृष्टाश्चपृष्टाश्चकृतोपकाराः ॥ जन्मांतरेयेममसंगताश्चतेभ्यःस्वधापिंडमहंददामि ॥ पितृवंशेमृता

येचमातृवंशेतथैवच ॥ गुरुश्वशुरबंधूनांयेचान्येबांधवामृताः ॥ येमेकुलेलुप्तपिंडाःपुत्रदारविवर्जिताः ॥ क्रियालोपगताश्चैव जात्यंधाःपंगवस्तथा ॥ विरूपाआमगर्भाश्चज्ञाताज्ञाताःकुलेमम ॥ धर्मपिंडोमयादत्तोह्यक्षय्यमुपतिष्ठतु ॥ असिपत्रवनेघोरेकुं भीपाकेचयेगताः ॥ तेषामुद्धरणार्थायइमंपिंडंददाम्यहं ॥ उच्छिन्नकुलवंशानांयेषांदाताकुलेनहि ॥ धर्मपिंडोमयादत्तोह्यक्षय्य मुपतिष्ठतु ॥ शमीपत्रप्रमाणेनपिंडंदद्याद्गयाशिरे ॥ उद्धरेत्सप्तगोत्राणिकुलमेकोत्तरंशतं ॥ ( मात्रादिद्वित्वेतुपिंडदानेएतद्वाम स्मन्मातरौयज्ञदाश्रीदेयेचयुवामत्रानु ॥ इतिपिंडंदत्त्वा ॥ अस्मन्मातृभ्यां अमुकामुकदाभ्यां गोत्राभ्यां वसुरूपाभ्यां अयं पिंडःस्वधानमःतेभ्यश्च इत्येकएवपिंडः ॥ अभ्यंजने अभ्यंजाथां अंजने अंजाथांइतिद्विवचनांतएवऊहःकार्यः ॥ मातृवहुत्वे एतद्वोस्मन्मातरो यज्ञदे श्रीदे रुद्रदे यथानामगोत्रे येचयुष्मानत्रानुइत्येकंपिंडंदत्वा अस्मन्मातृभ्यः अमुकामुकदाभ्यःगो त्राभ्यः वसुरूपाभ्यःअयंपिंडःस्वधानमः॥ अभ्यङ्ग्ध्वं अङ्ग्ध्वंइतिवहुवचनेनांजनाभ्यंजनेदेये ॥ अर्घ्यदानेपि अस्मन्मातरौ अमुकामुकदे गोत्रे इदंवांअर्घ्यं ॥ मातृवहुत्वे अस्मन्मातरः अमुकामुकदाः गोत्राः इदंवोर्घ्यं इतिएकएवार्घः ) ॥ तातांबा त्रितयंसपत्नजननीमातामहादित्रयंसस्त्रिस्त्रीतनयादितातजननीस्वभ्रातरःसस्त्रयः ॥ तातांबात्मभगिन्यपत्यधवयुग्जायापि तासद्गुरुःशिष्याप्ताःपितरोमहालयविधौतीर्थेतथातर्पणे ॥ इतिमहालयश्राद्धेविशेषः ॥ इतरत्सर्वंपार्वणवत् ॥ ७ ॥

## ॥ ८९ ॥ अथआमश्राद्धंहिरण्यश्राद्धंच ॥

श्रीः ॥ आचम्यपवित्रपाणिःप्राणानायम्यदेशकालाद्युच्चार्य पुरू० पितृपितामहप्रपितामहानां शर्मणां गोत्राणां स्वरूपाणां अमुकश्राद्धंसदैवंसपिंडमामेनहविषा ( हिरण्येनवा ) करिष्ये ॥ इतिसंकल्पः ॥ अन्यःप्रयोगस्तुसामान्यतःसांवत्सरिकश्रा

द्धवदेव ॥ इयान्विशेषः ॥ पाकप्रोक्षणस्थानेआमप्रोक्षणं ॥ आवाहनेउशंतस्त्वेतिमंत्रे पितॄन्हविषेस्वीकर्तवेइत्यूहः ॥ भस्म मर्यादांतंयथावत् ॥ विप्रहस्तेतंदुलैरग्नौकरणं ॥ आसादितपात्रेषुअन्नाच्चतुर्गुणंद्विगुणंसमंवातत्तदामंसंस्थाप्य पाणिहोमशेषंपिं डार्थंसंस्थाप्य पात्रेषुदत्त्वापृथिवीतेपात्रमित्यादिइदमामंहव्यंकव्यमित्यादि इदमाममममृतरूपंस्वाहाइत्यादिमध्वित्यंतंप्राग्वत् ॥ यथासुखंजुषध्वमित्यस्यआपोशनप्राणाहुतितृप्तिप्रश्नानांचलोपः ॥ संपन्नवाचनांतेन्नशेषप्रश्नलोपः ॥ सर्वमतेतंदुलैःसक्तुभिर्वा पिंडदानं ॥ केचिद्गृहसिद्धान्नेनपायसेनवापिंडानाहुः ॥ पिंडोपस्थाने नमोवःपितरइषेइतिमंत्रेइषेपदस्थाने नमोवःपितरआम द्रव्यायइत्यूहः ॥ स्वस्तीतिब्रूतेतिवर्ज्यं ॥ तथावाजेवाजेइतिमंत्रेतृप्तायातइत्यस्यस्थाने तप्स्यंथयातपथिभिरित्यूहःकार्यः ॥ शेषंप्राग्वत् ॥ अत्रपिंडदानविकल्पात्सांकल्पविधिनाप्येतद्द्वयंभवति ॥ इतिआमश्राद्धहिरण्यश्राद्धयोःसामान्यप्रयोगः ॥ ॥

## ॥ १० ॥ अथयतेराराधनविधिः ॥

श्रीगणेशायनमः॥ अयंद्वादशाहेत्रयोदशाहेवायथाचारंपार्वणश्राद्धानंतरंकार्यः॥ तत्रायंप्रयोगो गुरुचतुष्टयस्यचत्वारःकेशवादी नांचप्रत्येकमेकैकइत्येवंषोडशब्राह्मणपक्षमभिप्रेत्योच्यते ॥ कृतनित्यक्रियोयजमानःप्रातःब्रह्मीभूतस्यगुरोःसमाराधनेगुर्वर्थेभव द्भिःक्षणःकर्तव्यः ॥ ॐ तथाइतिप्रतिवचनं ॥ एवंपरमगुर्वर्थेपरमेष्ठीगुर्वर्थेपरात्परगुर्वर्थेभ०॥यद्वा ॥ विश्वरूपधराचार्यार्थेभ० ॥ ततोगुरुत्रयमितिवाचतुरोब्राह्मणान्निमंत्र्य ॥ शुक्लेकेशवार्थेक्षणःकर्तव्यः ॥ नारायणार्थे ॥ माधवार्थे ॥ गोविंदार्थे ॥ विष्णवर्थे ॥ मधुसूदनार्थे ॥ त्रिविक्रमार्थे ॥ वामनार्थे ॥ श्रीधरार्थे ॥ हृषीकेशार्थे ॥ पद्मनाभार्थे ॥ दामोदरार्थे ॥ १२ ॥ कृष्णपक्षेतु ॥ संकर्षणार्थे ॥ वासुदेवार्थे ॥ प्रद्युम्नार्थे ॥ अनिरुद्धार्थे ॥ पुरुषोत्तमार्थे ॥ अधोक्षजार्थे ॥ नारसिंहार्थे ॥ अच्युतार्थे ॥ जना

र्दनार्थे ॥ उपेंद्रार्थे ॥ हर्यर्थे ॥ श्रीकृष्णार्थे ॥ १२ ॥ एवंद्वादशविप्रान्निमंत्र्य ॥ कर्ताशुचिः आचम्यपवित्रपाणिःप्राणानाय
म्यदेशकालौसंकीर्त्यनारायणप्रीत्यर्थंब्रह्मीभूतस्यगुरोःसमाराधनंकरिष्यइतिसंकल्प्य ॥ गंधाक्षततुलसीदलकर्पूरमिश्रजलेनवर
णक्रमेणतेषांपादप्रक्षालनंकृत्वा तानाचमय्य स्वयंद्विराचामेत् ॥ पादप्रक्षालनोदकंपात्रांतरेगृहीत्वातत्पादौसाक्षतगंधपुष्पतुल
सीदलैरभ्यर्च्य ॥ आनंदमानंदकरंप्रसन्नंज्ञानस्वरूपंनिजबोधरूपं ॥ योगींद्रवंद्यंभवरोगवैद्यंश्रीमद्गुरुंनित्यमहंनमामि ॥ इति
नमस्कुर्यात् ॥ एवंसर्वेषांपूजांकृत्वागंधादिभिस्तत्पात्रमलंकृत्यदेवसन्निधौसंस्थाप्य ॥ कुशासनेषुप्राङ्मुखानुदङ्मुखान्वाउपवे
श्यपुरुषसूक्तेनप्रत्यृचं ॐनमोनारायणायेतिमंत्रसहितेनावाहनादिषोडशोपचारैःपदार्थानुसमयेनाभ्यर्चयेत् ॥ अथवागंधपु
ष्पधूपदीपाच्छादनांतापूजाद्रष्टव्या ॥ ततःचतुरस्राणिमंडलानिकृत्वातेषुपात्राण्यासाद्यपात्रेषुपायसादिविशिष्टद्रव्यंसाज्यंव्यं
जनसहितंचपरिविष्यगायत्र्याप्रोक्ष्यगुरवेइदमन्नंपरिविष्टंपरिवेक्ष्यमाणंचातृप्तेःस्वाहा हव्यंनमम एवंसर्वत्रान्ननिवेदनंकृत्वा ॥
ॐतद्ब्रह्म ॥ ॐतद्वायुः ॥ ॐतदात्मा ॥ ॐतत्सत्यं ॥ ॐतत्सर्वं ॥ ॐतत्पुरोर्नमः ॥ अंतश्चरतिभूतेषुगुहायांविश्वमूर्तिषु ॥
त्वंयज्ञस्त्वंवषट्कारस्त्वमिंद्रस्त्वꣳरुद्रस्त्वंविष्णुस्त्वंब्रह्मत्वंप्रजापतिः ॥ त्वंतदापआपोज्योतीरसोमृतंब्रह्मभूर्भुवःसुवरोम् ॥ इत्य
नुवाकंपठित्वाब्रह्मार्पणमितिचजपित्वाभुंजानेषूपनिषन्मंत्रान्श्रावयेत् ॥ तृप्तेषुसत्सु ॐ तद्ब्रह्मेत्यनुवाकंपठित्वाउत्तरापोशनोत्त
रमाचांतेषूपविष्टेषुविशिष्टतांबूलदक्षिणावस्त्रादिभिरभ्यर्च्यउपविष्टेष्वेवतेषुगुर्वाराधनांगभूतंतीर्थपूजनंकरिष्यइतिसंकल्प्य ॥
चतुरस्रमंडलंगोमयेनोपलिप्यतत्ररंगवल्ल्यादिभिरलंकृत्य तन्मंडलेधान्योपरिपादोदककलशंसंस्थाप्य तत्रगंगादिसर्वतीर्थानि
भावयित्वापुरुषसूक्तेनप्रत्यृचंतीर्थराजायनमइतिमंत्रेणषोडशोपचारैरभ्यर्च्यतत्पात्रंशिरसिधृत्वा॥ॐलोकःसरस्वत्यायांत्येषवैदे

वयानःपंथास्तमेवान्वारोहंत्याक्रोशंतोयांत्यवर्तिमेवान्यस्मिन्प्रतिष्यज्यप्रतिष्ठांगच्छंतियदादशशतंकुर्वंत्यथैकमुत्थानंशतायुः पुरुषःशतेंद्रियआयुष्येवेंद्रियेप्रतितिष्ठंतियदाशतंसहस्रंकुर्वंत्यथैकमुत्थानंसहस्रसंमितोवाअसौलोकोमुमेवलोकमभिजयंति यदैषांप्रमीयेतयदावाजीर्येरन्नथैकमुत्थानंतद्धितीर्थं ॥ १ ॥ भीषास्माद्वातःपवते ॥ भीषोदेतिसूर्यः ॥ भीषास्मादग्निश्चेंद्रश्च ॥ मृत्युर्धावतिपंचमइति ॥ सैषानंदस्यमीमांसाभवति ॥ युवास्यात्साधुयुवाध्यायकः ॥ आशिष्ठोद्रढिष्ठोबलिष्ठः ॥ तस्येयंपृथिवीसर्वावित्तस्यपूर्णास्यात् ॥ सएकोमानुषआनंदः ॥ तेयेशतंमानुषाआनंदाः ॥ १ ॥ सएकोमनुष्यगंधर्वाणामानंदः ॥ श्रोत्रियस्यचाकामहतस्य ॥ तेयेशतंमनुष्यगंधर्वाणामानंदाः ॥ सएकोदेवगंधर्वाणामानंदः ॥ श्रोत्रियस्यचाकामहतस्य ॥ तेयेशतंदेवगंधर्वाणामानंदाः ॥ सएकःपितॄणांचिरलोकलोकानामानंदः ॥ श्रोत्रियस्यचाकामहतस्य ॥ तेयेशतंपितॄणांचिरलोकलोकानामानंदाः ॥ सएकआजानजानांदेवानामानंदः ॥ २ ॥ श्रोत्रियस्यचाकामहतस्य ॥ तेयेशतमाजानजानांदेवानामानंदाः ॥ सएकःकर्मदेवानांदेवानामानंदः ॥ येकर्मणादेवानपियंति ॥ श्रोत्रियस्यचाकामहतस्य ॥ तेयेशतंकर्मदेवानांदेवानामानंदाः ॥ सएकोदेवानामानंदः ॥ श्रोत्रियस्यचाकामहतस्य ॥ तेयेशतंदेवानामानंदाः ॥ सएकइंद्रस्यानंदः ॥ ३ ॥ श्रोत्रियस्यचाकामहतस्य ॥ तेयेशतमिंद्रस्यानंदाः ॥ सएकोबृहस्पतेरानंदः ॥ श्रोत्रियस्यचाकामहतस्य ॥ तेयेशतंबृहस्पतेरानंदाः ॥ सएकःप्रजापतेरानंदः ॥ श्रोत्रियस्यचाकामहतस्य ॥ तेयेशतंप्रजापतेरानंदाः ॥ सएकोब्रह्मणआनंदः ॥ श्रोत्रियस्यचाकामहतस्य ॥ ४ ॥ सयश्चायंपुरुषे ॥ यश्चासावादित्ये ॥ सएकः ॥ सयएवंवित् ॥ अस्माल्लोकात्प्रेत्य ॥ एतमन्नमय

मात्मानमुपसंक्रामति ॥ एतंप्राणमयमात्मानमुपसंक्रामति ॥ एतंमनोमयमात्मानमुपसंक्रामति ॥ एतंविज्ञानमयमात्मानमुपसंक्रामति ॥ एतमानंदमयमात्मानमुपसंक्रामति ॥ तदप्येषश्लोकोभवति ॥ यतोवाचोनिवर्तंते ॥ अप्राप्यमनसासह ॥ ५ ॥ आनंदंब्रह्मणोविद्वान् ॥ नबिभेतिकुतश्चनेति ॥ एतंहवावनतपति ॥ किमहंसाधुनाकरवम् ॥ किमहंपापमकरवमिति ॥ सयएवंविद्वानेतेआत्मानंस्पृणुते॥ उभेह्येवैषएतेआत्मानंस्पृणुते ॥ यएवंवेद ॥ इत्युपनिषत् ॥ ६ ॥ इतिजह्वा हरिकीर्तनपुरःसरंसहर्षनृत्यंकृत्वातत्पात्रंपुनर्मंडलेसंस्थाप्यचंदनाक्षतपुष्पाणिपूजाविशिष्टानिबंधुभिःसहधृत्वा विप्रान्प्रदक्षिणीकृत्य ॥ आनंदमानंदकरंप्रसन्नंज्ञानस्वरूपंनिजबोधरूपं ॥ योगींद्रमीड्यंभवरोगवैद्यंश्रीमद्गुरुंनित्यमहंनमामि ॥ १ ॥ गुरुर्ब्रह्मागुरुर्विष्णुर्गुरुर्देवोमहेश्वरः ॥ गुरुःसाक्षात्परंब्रह्मतस्मैश्रीगुरवेनमः ॥ २ ॥ इतिमंत्रेणद्विजान्तीर्थराजंचनमस्कृत्य गुर्वर्थविप्रहस्तेपादोदकपात्रंदत्त्वातदाज्ञयातत्तीर्थमंत्रेणगृह्णीयात् ॥ तत्रमंत्रः ॥ अविद्यामूलशमनंसर्वपापप्रणाशनं ॥ गुरुपादोदकंतीर्थंसंसारद्रुमनाशनं ॥ (पुत्रादिकामनायांतु॥ शोषणंपापपंकस्यदीपनंज्ञानतेजसः॥ गुरोःपादोदकंचित्रंपुत्रपौत्रप्रवर्धनम् ॥) इतिगृह्णीयात् ॥ तान्पुनःप्रणम्यतानन्यांश्चदक्षिणादिभिस्तोषयित्वासन्मानपुरःसरंताननुव्रज्यकर्मेश्वरार्पणंकुर्यात् ॥ पश्चात्सुहृद्युतोभुंजीत ॥ ततःप्राप्तदर्शमहालयतीर्थप्रयुक्तानिश्राद्धानिकुर्यात् ॥ प्रतिमासंवाराधनंप्रत्यब्दंपार्वणोत्तरंचैवमेव ॥ अत्रषोडशब्राह्मणाशक्तावष्टौचत्वारोवा ॥ इत्थंकरणाशक्तौयथाशक्तियतीन्ब्राह्मणांश्चाहूयपादप्रक्षालनपूर्वकंगंधादिभिरभ्यर्च्यभोजयेत् ॥ इतिनागरखंडांतर्गतोयतेराराधनाविधिःसमाप्तः ॥ ॥ छ ॥ ॥ छ ॥

## ॥ ९१ ॥ अथयतेरेकादशेहनिपार्वणश्राद्धं ॥

श्रीः ॥ तत्रमध्याह्नेनद्यादौश्राद्धांगतिलतर्पणंकृत्वादेशकालौस्मृत्वाप्राचीनावीतीअमुकगोत्रस्यामुकशर्मणोब्रह्मीभूतस्यास्मत्पितुःकरिष्यमाणदर्शादिसर्वश्राद्धाधिकारार्थमद्यपार्वणश्राद्धंकरिष्येइतिपुत्रादिःसंकल्पयेत् ॥ शिष्यस्तुब्रह्मीभूतगुरोःप्रत्यब्दादिश्राद्धाधिकारार्थंतत्पितृसंबंधिनामगोत्रोद्देश्यतासिद्ध्यर्थंचपार्वणश्राद्धमितिसंकल्पयेत् ॥ अन्यत्समानं ॥ पुरूरवार्द्रवसंज्ञकाविश्वेदेवाः ॥ पितृपितामहप्रपितामहानांनामगोत्रादिसहितानामुच्चारः ॥ सर्वत्रपितुर्ब्रह्मीभूतइतिविशेषणमात्रमधिकं ॥ शेषंप्रत्यब्दश्राद्धवत् ॥ केचिच्छिष्यःकर्ताचेदात्मांतरात्मपरमात्मनउद्दिश्यसाधुरुरुसंज्ञकदेवयुतंसव्येनदेवधर्मकंनांदीश्राद्धवदेकादशाहेपार्वणश्राद्धंकुर्यादित्याहुः ॥ अत्रसर्वत्रविस्तरस्तोरोक्तसंन्यासपद्धतौद्रष्टव्यः ॥ ॥ छ ॥ ॥ छ ॥

## ॥ ९२ ॥ अथविधवाकर्तृकमहालयः ॥

श्रीः ॥ आचम्यपवित्रधारणपूर्वकंदेशकालाद्युच्चार्य धूरिलोचनसंज्ञकानांविश्वेषांदेवानां ममभर्तृतत्पितृपितामहानां अमुकशर्मणां अमुकगोत्राणां वसुरुद्रादित्यस्वरूपाणां ॥ ममभर्तुर्मातृपितामहीप्रपितामहीनां अमुकदानां अमुकगोत्राणां वसुरुद्रा० ॥ ममपितृपितामहप्रपितामहानां अमुकशर्मणां अमुकगोत्राणां वसुरु० ॥ मम मातृपितामहीप्रपितामहीनां अमुकदानां अमुकगोत्राणां वसुरुद्रा० ॥ मम मातामहमातृपितामहमातृप्रपितामहानां अमुकशर्मणां अमुकगोत्राणां वसुरुद्रा० ॥ मम मातामहीमातृपितामहीमातृप्रपितामहीनां अमुकदानां अमुकगोत्राणां वसुरुद्रादित्यस्वरूपाणां एतेषांश्रेयोर्थमोक्षार्थंतृप्त्यर्थं कन्यागतेसवितरिसकृन्महालयापरपक्षिकश्राद्धंकरिष्ये ॥ एवंसंकल्पंस्वयंकृत्वा ब्राह्मणद्वाराअग्नौकरणादिसहितंसर्वमविकृतंप्रयो

गंकारयेत् ॥ ( अशक्तौ भर्त्रादित्रयं स्वपित्रादित्रयं स्वमात्रादित्रयं मातामहादित्रयंसपत्नीकं इतिपार्वणचतुष्टयोद्देशेनमहालयःकार्यः ॥ अथवाभर्त्रादित्रयं स्वपित्रादित्रयंचेतिपार्वणद्वयोद्देशेनैवकार्यः ) ॥ ब्राह्मणस्तु अमुकनाम्न्यायजमानायाः भर्तृतत्पितृपितामहेत्याद्युच्चार्यइतरत्सर्वंनिर्दिष्टश्राद्धवत्समंत्रकंकुर्यात् ॥ इतिविधवाकर्तृकमहालयः ॥ ॥ छ ॥



## ॥ ९३ ॥ अथतीर्थश्राद्धं ॥

श्रीः ॥ तत्रगंगादितीर्थप्राप्तावर्घ्यावाहनद्विजांगुष्ठनिवेशनतृप्तिप्रश्नविकिरविसर्जनदिग्बंधवर्जंसकृन्महालयवत्सर्वपितृगणोद्देशेनधूरिलोचनसंज्ञकविश्वेदेवसहिततीर्थश्राद्धंकुर्यात् ॥ अग्नौकरणंकृताकृतं ॥ करणपक्षेतीर्थजलसमीपेश्राद्धंचेत्तदाप्राकृतमंत्रयुतंतीर्थजलेकार्यं ॥ अन्यथाहस्तादौ ॥ पिंडानांतीर्थेप्रक्षेपएवप्रतिपत्तिः ॥ अत्रतीर्थवासिनएवविप्राविगुणाअपिमुख्याः ॥ तदभावेन्ये ॥ अत्रश्राद्धीयेदेशेन्नादिद्रव्येचकाकश्वादिभिर्दृष्टेपिनदोषः ॥ तीर्थश्राद्धांगतर्पणंदर्शवत्पूर्वंकार्यं देशकालौसंकीर्त्यसर्वपितृगणमुच्चार्यएतेषाममुकतीर्थप्राप्तिनिमित्तकंतीर्थश्राद्धंसपिंडंसदैवंसद्यःकरिष्येइतिसंकल्पः॥ धूरिलोचनविश्वेदेवादिसर्वंसकृन्महालयवत् ॥ तीर्थयात्रायांसाग्नेःसपत्नीकस्यैवाधिकारः॥ निरग्निकस्यत्वपत्नीकस्यापि ॥ स्त्रियाःस्नानदानतीर्थयात्रानामस्मरणादिकंपुत्राद्यनुमत्यैव ॥ सधवायायात्रादिकंपत्यासहैव॥ इतितीर्थश्राद्धविचारःसंपूर्णः ॥ ॥ छ ॥ ॥ छ ॥



## समाप्तश्चायमाह्निकादिविषयःप्रथमोभागः ॥ १ ॥

# ॥ अथसंस्कारप्रकरणम् ॥ २ ॥

## ॥ १४ ॥ अथसंस्कारक्रमः ॥

श्रीः ॥ अंगिराः—पंचविंशतिसंस्कारैःसंस्कृतायेद्विजातयः ॥ तेपवित्राश्चयोग्याःस्युःश्राद्धादिषुसुयंत्रिताः ॥ तत्र—गर्भाधानं पुंसवनंसीमंतोबलिरेवच ॥ जातकृत्यंनामकर्मनिष्क्रमोन्नाशनंपरं ॥ चौलकर्मोपनयनंतद्व्रतानांचतुष्टयं ॥ स्नानोद्वाहौचाग्रयणमष्टकाचयथातथं ॥ श्रावण्यामाश्वयुज्यांचमार्गशीर्ष्यांचपार्वणं ॥ उत्सर्गश्चाप्युपाकर्ममहायज्ञाश्चनित्यशः ॥ संस्कारानियताह्येतेब्राह्मणस्यविशेषतःइति ॥ एषुनैमित्तिकादिभेदाश्चैवम् ॥ नैमित्तिकाःषोडशोक्ताः समुद्वाहावसानकाः ॥ सप्तैवाग्रयणाद्याश्चसंस्कारावार्षिकामताः ॥ मासिकंपार्वणंप्रोक्तमशक्तानांतुवार्षिकम् ॥ महायज्ञाश्चनित्याःस्युःसंध्यावच्चाग्निहोत्रवत् ॥ अत्रगर्भाधानाद्याउपनयनांताएवसर्वेषांनियतानतुस्नानाद्यास्तेनब्रह्मचर्यादेवप्रव्रजेदित्यादिनविरुध्यते ॥ ॥ ७ ॥

## ॥ १५ ॥ अथगणपतिपूजनम् ॥

श्रीगणेशायनमः॥अत्रहेमाद्रौदानकांडेबह्वृचपरिशिष्टत्वेनोक्तः सकलसाधारणशिष्टाचारप्राप्तश्चपुण्याहवाचनप्रयोगोलिख्यते॥ कृतमंगलस्नानःस्वलंकृतःसंभृतमंगलसंभारोमंगलरंगवल्लीमंडितशुद्धस्थलेप्राङ्मुखोयजमानऊर्णवस्त्राद्याच्छादितेपीठेउपविश्य पत्नींस्वदक्षिणतःप्राङ्मुखीमुपवेश्यसंस्कार्यंचतथैवोपवेश्य ब्राह्मणैर्यशस्करंबलवंतं कनिक्रदज्जनुषमित्यादिमांगल्यमंत्रघोषपुरः

सरंसुवासिन्याकृतमंगलतिलको द्विराचम्यपवित्रपाणिःप्राणानायम्य श्रीमन्महागणाधिपतयेनमःइत्यादिपठन्निष्ट-कुल-ग्राम-स्थान-वास्तुदेवताःफलतांबूलादिनासंतोष्यप्रणमेत् ॥ सर्वेभ्योदेवेभ्योनमःसर्वेभ्योब्राह्मणेभ्योनमः॥ एतत्कर्मप्रधान देवताभ्यो नमः ॥ अविघ्नमस्तु ॥ सुमुखश्चैकदंतश्चेत्यादिदेशकालौसंकीर्त्यश्रीपरमेश्वरप्रीत्यर्थंअमुकगोत्रःअमुकशर्माहंअमुकफलावाप्तये श्वोद्यवामुककर्मकरिष्ये ॥ तदंगतयादौपुण्याहवाचनंमातृकापूजनंनांदीश्राद्धंचकरिष्येइतिसंकल्पयेत् ॥ तत्रादौनिर्विघ्नतासिद्धयेमहागणपतिपूजनंकरिष्ये ॥ गणानांत्वाशौनकोगृत्समदोगणपतिर्जगती॥ गणपत्यावाहनेविनियोगः ॥ ॐ गणानांत्वागणपतिंहवामहेकविंकवीनामुपमश्रवस्तमं ॥ ज्येष्ठराजंब्रह्मणांब्रह्मस्पतआनःशृण्वन्नूतिभिःसीदसादनं ॥ ॐ भूर्भुवःस्वःऋद्धिबुद्धिसहितंसांगंसपरिवारंसायुधंसशक्तिकंमहागणपतिमावाहयामि॥ ॐ भूर्भुवःस्वर्महागणपतयेनमःआसनंसमर्पयामीत्यादि षोडशोपचारान्समर्प्य निषुसीदेतिपुष्पांजलिंसमर्प्य॥ वक्रतुंडमहाकायसूर्यकोटिसमप्रभ ॥ निर्विघ्नंकुरुमेदेवसर्वकार्येषुसर्वदा ॥ अथवा—कार्यंमेसिद्धिमायातुप्रसन्नेत्वयिधातरि॥ विघ्नानिनाशमायांतुसर्वाणिसुरनायक ॥ इतिसंप्रार्थ्य ॥ अनयापूजया सकलविघ्नहर्तामहागणपतिःप्रीयतां ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥

## ॥ ९६ ॥ अथपुण्याहवाचनम् ॥

श्रीः ॥ ( अग्रेसर्वत्रप्रतिकलशंमंत्रावृत्तिरुत्तरसंस्थताच ) कर्तास्वपुरतः॥ ॐ महीद्यौःपृथिवीचनइमंयज्ञंमिमिक्षतां॥ पिपृतां

१ यदातुप्रयोगाद्बहिर्भूतंपुण्याहवाचनाद्यंगंतदामुकफलसिद्ध्यर्थममुककर्मकर्तुमंगभूतमादौपुण्याहवाचनादिकरिष्यइतिप्रत्येकंसंकल्पः ॥ प्रधानसंकल्पस्तुसर्वकृत्वातद्दिनएवश्वोवाकार्यः ॥ शिष्टास्तुप्रयोगाद्यंतर्भूतमेवस्वस्तिवाचनंकारयंति ॥

नोभरीमभिः ॥ इतिमंत्रावृत्त्यादक्षिणोत्तरतोभूमिंस्पृष्ट्वा ॥ ॐ ओषधयःसंवदंतेसोमेनसहराज्ञा ॥ यस्मैकृणोतिब्राह्मणस्तंराज
न्पारयामसि ॥ इतितथैवतंदुलपुंजौकृत्वा ॥ ॐ आकलशेषुधावतिपवित्रेपरिषिच्यते ॥ उक्थैर्यज्ञेषुवर्धते ॥ इतितत्रद्वौकल
शौनिधाय ॥ ॐइमंमेगंगेयमुनेसरस्वतिशुतुद्रिस्तोमंसचतापरुष्ण्या ॥ असिक्न्यामरुद्वृधेवितस्तयार्जीकीयेशृणुह्यासुषोमया॥
इतितीर्थजलेनप्रत्येकंपूरयित्वा॥ ॐ गंधद्वारांदुराधर्षांनित्यपुष्टांकरीषिणीं ॥ ईश्वरींसर्वभूतानांतामिहोपह्वयेश्रियं ॥ इतिगंधं
प्रक्षिप्य ॥ ॐ कांडात्कांडात्प्ररोहंतीपरुषःपरुषःपरि॥ एवानोदूर्वेप्रतनुसहस्रेणशतेनच ॥ इतिदूर्वाः ॥ ॐ अश्वत्थेवोनिषदनं
पर्णेवोवसतिष्कृता ॥ गोभाजइत्किलासतयत्सनवथपूरुषं ॥ इतिपल्लवान् ॥ ॐ याःफलिनीर्याअफलाअपुष्पायाश्चपुष्पिणीः॥
बृहस्पतिप्रसूतास्तानोमुंचंत्वंहसः॥ इतिफलं ॥ ॐ सहिरत्नानिदाशुषेसुवातिसविताभगः॥ तंभागंचित्रमीमहे॥ इतिरत्नानि ॥
ॐ हिरण्यरूपःसहिरण्यसंदृगपान्नपात्सेदुहिरण्यवर्णः ॥ हिरण्ययात्परियोनेर्निषद्याहिरण्यदाददत्यन्नमस्मै ॥ इतिहिरण्यं ॥
ॐ युवासुवासाःपरिवीतआगात्सउश्रेयान्भवतिजायमानः॥ तंधीरासःकवयउन्नयंतिस्वाध्यो३ मनसादेवयंतः॥ इतिहिरण्यं॥
ॐ पूर्णादर्विपरापतसुपूर्णापुनरापत ॥ वस्नेवविक्रीणावहाइषमूर्जंशतक्रतो ॥ इतिसतंदुलाभ्यांपूर्णपात्राभ्यांकलशयोराननेपि
दध्यात् ॥ तत्त्वायामिशुनःशेपोवरुणस्त्रिष्टुप् ॥ उत्तरकलशेवरुणावाहने० ॥ ॐ तत्त्वायामिब्रह्मणावंदमानस्तदाशास्तेयजमा
नोहविर्भिः ॥ अहेळमानोवरुणेहबोध्युरुशंसमानआयुःप्रमोषीः ॥ कलशेवरुणंसांगंसपरिवारंसायुधंसशक्तिकंआवाहयामि ॥
ॐ भूर्भुवःस्वःवरुणायनमःचंदनंसमर्पयामि इत्यादिपंचोपचारैःसंपूज्य तत्त्वायामीतिपुष्पांजलिंसमर्प्य अनेनपूजनेनवरुणःप्री
यतां ॥ कलशस्यमुखेविष्णुःकंठेरुद्रःसमाश्रितः ॥ मूलेतत्रस्थितोब्रह्मामध्येमातृगणाःस्मृताः॥ कुक्षौतुसागराःसर्वेसप्तद्वीपाव

सुंधरा ॥ ऋग्वेदोथयजुर्वेदःसामवेदोह्यथर्वणः ॥ अंगैश्चसहिताःसर्वेकलशंतुसमाश्रिताः ॥ अत्रगायत्रीसावित्रीशांतिःपुष्टिक रीतथा ॥ आयांतुममशांत्यर्थंदुरितक्षयकारकाः ॥ सर्वेसमुद्राःसरितस्तीर्थानिजलदानदाः ॥ आयांतुममशांत्यर्थंदुरितक्षय कारकाः ॥ उत्तरकलशेअक्षतान्क्षिपेत् ॥ मातृदेवोभव ॥ पितृदेवोभव ॥ आचार्यदेवोभव ॥ अतिथिदेवोभव ॥ सर्वेभ्यो ब्राह्मणेभ्योनमोनमः ॥ ततःअवनिकृतजानुमंडलःकमलमुकुलसदृशमंजलिंशिरस्याधायदक्षिणेनपाणिनासुवर्ण ( स्वर्णः ) पूर्ण कलशंधारयित्वा आशिषःप्रार्थयते ॥ प्रार्थनामाह ॥ एताःसत्याआशिषःसंतु ॥ दीर्घानागानद्योगिरयस्त्रीणिविष्णुपदानिच तेनायुःप्रमाणेनपुण्याहंदीर्घमायुरस्तु ॥ ब्राह्मणहस्ते शिवाआपःसंतु ॥ सौमनस्यमस्तु ॥ अक्षतंचारिष्टंचास्तु ॥ गंधाःपांतु[1] ॥ सौमंगल्यंचास्तु ॥ अक्षताःपांतु ॥ आयुष्यमस्तु ॥ पुष्पाणिपांतु ॥ सौश्रियमस्तु ॥ तांबूलानिपांतु ॥ ऐश्वर्यमस्तु ॥ दक्षिणाः पांतु ॥ बहुदेयंचास्तु ॥ दीर्घमायुःश्रेयःशांतिःपुष्टिस्तुष्टिश्चास्तु ॥ श्रीर्यशोविद्याविनयोवित्तंवहुपुत्रंचायुष्यंचास्तु[2] ॥ यंकृत्वा सर्ववेदयज्ञक्रियाकरणकर्मारंभाःशुभाःशोभनाःप्रवर्ततेतमहमोंकारमादिंकृत्वाऋग्यजुःसामाशीर्वचनंबहृषिमतंसंविज्ञातंभव द्भिरनुज्ञातःपुण्यंपुण्याहंवाचयिष्ये ॥ विप्राः वाच्यतां ॥ ततोयजमानः ॥ ॐभद्रंकर्णेभिःशृणुयामदेवाभद्रंपश्येमाक्षभिर्यजत्राः ॥ स्थिरैरंगैस्तुष्टुवांसस्तनूभिर्व्यशेमदेवहितंयदायुः ॥ ॐ द्रविणोदाद्रविणसस्तुरस्यद्रविणोदाःसनरस्यप्रयंसत् ॥ द्रविणोदावीरव तीमिषंनोद्रविणोदारासतेदीर्घमायुः ॥ ॐ सवितापश्चातात्सवितापुरस्तात्सवितोत्तरात्तात्सविताधरात्तात् ॥ सवितानःसुवतुस र्वतातिंसवितानोरासतांदीर्घमायुः ॥ ॐनवोनवोभवतिजायमानोह्नांकेतुरुषसामेत्यग्रं ॥ भागंदेवेभ्योविदधात्यायन्प्रचंद्रमा



---

१ अत्रगंधाःपांत्वित्यादिभिर्मंत्रपूर्वार्धैर्युग्मान्ब्राह्मणान्गंधादिनापूजयेत् । तेचसौमंगल्यंचास्त्वितिमंत्रोत्तरार्धानिप्रतिब्रूयुः ॥ २ ब्राह्मणैरस्त्वितिसर्वत्र ॥

स्तिरतेदीर्घमायुः ॥ ॐ उच्चादिविदक्षिणावंतोअस्थुर्येऽअश्वदाःसहतेसूर्येण ॥ हिरण्यदाअमृतत्वंभजंतेवासोदाःसोमप्रतिरंत
आयुः ॥ ॐ आपंउदंतुजीवसेदीर्घायुत्वायवर्चसे॥ यस्त्वाहृदाकीरिणामन्यमानोमर्त्यंमर्त्योजोहवीमि ॥ जातवेदोयशोअस्मासु
धेहिप्रजाभिरग्नेअमृतत्वमश्यां ॥ यस्मैत्वंसुकृतेजातवेदउलोकमग्नेकृणवस्योनं॥अश्विनंसपुत्रिणंवीरवंतंगोमंतंरयिंनशतेस्वस्ति ॥
संत्वासिंचामियजुंषाप्रजामायुर्धनंच ॥ व्रतनियमतपःस्वाध्यायक्रतुदमदानविशिष्टानांब्राह्मणानांमनःसमाधीयतां ॥ विप्राः ॥
समाहितमनसःस्मः ॥ यजमानः ॥ प्रसीदंतुभवंतः ॥ विप्राः ॥ प्रसन्नाःस्मः ॥ यजमानः ॥ शांतिरस्तु ॥ पुष्टिरस्तु ॥ तुष्टि
रस्तु ॥ वृद्धिरस्तु ॥ अविघ्नमस्तु ॥ आयुष्यमस्तु ॥ आरोग्यमस्तु ॥ शिवंकर्मास्तु ॥ कर्मसमृद्धिरस्तु ॥ धर्मसमृद्धिरस्तु ॥
वेदसमृद्धिरस्तु ॥ शास्त्रसमृद्धिरस्तु ॥ पुत्रसमृद्धिरस्तु ॥ धनधान्यसमृद्धिरस्तु ॥ इष्टसंपदस्तु ॥ वहिर्देशेसर्वारिष्टनिरसन
मस्तु ॥ यत्पापंतत्प्रतिहतमस्तु ॥ यच्छ्रेयस्तदस्तु ॥ उत्तरेकर्मण्यविघ्नमस्तु ॥ उत्तरोत्तरमहरहरभिवृद्धिरस्तु ॥ उत्तरोत्तराः
क्रियाःशुभाःशोभनाःसंपद्यंतां ॥ इष्टाःकामाःसंपद्यंतां ॥ तिथिकरणमुहूर्तनक्षत्रसंपदस्तु ॥ तिथिकरणमुहूर्तनक्षत्रग्रहलग्ना
धिदेवताःप्रीयंताम् ॥ तिथिकरणेमुहूर्तनक्षत्रेसग्रहेसदैवतेप्रीयेताम् ॥ दुर्गापांचाल्यौप्रीयेतां॥ अग्निपुरोमाविश्वेदेवाःप्रीयंतां॥
इंद्रपुरोगामरुद्गणाःप्रीयंतां ॥ ब्रह्मपुरोगाःसर्वेवेदाःप्रीयंतां ॥ विष्णुपुरोगाःसर्वेदेवाःप्रीयंतां ॥ माहेश्वरीपुरोगाउमामातरः
प्रीयंतां ॥ वसिष्ठपुरोगाऋषिगणाःप्रीयंतां ॥ अरुंधतीपुरोगाएकपत्न्यःप्रीयंतां॥ऋषयश्छंदांस्याचार्यावेदादेवायज्ञाश्चप्रीयंतां ॥
ब्रह्मचब्राह्मणाश्चप्रीयंतां ॥ श्रीसरस्वत्यौप्रीयेतां ॥ श्रद्धामेधेप्रीयेतां ॥ भगवतीकात्यायनीप्रीयतां ॥ भगवतीमाहेश्वरीप्रीयतां ॥
भगवतीपुष्टिकरीप्रीयताम् ॥ भगवतीतुष्टिकरीप्रीयतां ॥ भगवतीऋद्धिकरीप्रीयतां ॥ भगवतीवृद्धिकरीप्रीयतां ॥ भगवंतौ

विघ्नविनायकौप्रीयेताम्॥भगवान्स्वामीमहासेनःसपत्नीकःससुतःसपार्षदःसर्वस्थानगतःप्रीयतां॥ हरिहरहिरण्यगर्भाःप्रीयंतां॥ सर्वाग्रामदेवताःप्रीयंतां॥ सर्वाःकुलदेवताःप्रीयंतां॥ सर्वावास्तुदेवताःप्रीयंतां॥ बहिरपः॥ हताब्रह्मद्विषः॥ हताःपरिपंथिनः॥ हताअस्यकर्मणोविघ्नकर्तारः॥ शत्रवःपराभवंयांतु॥ शाम्यंतुघोराणि॥ शाम्यंतुपापानि॥ शाम्यंत्वीतयः॥ शुभानिवर्धंतां॥ शिवाआपःसंतु॥ शिवाऋतवःसंतु॥ शिवाअग्नयःसंतु॥ शिवाआहुतयःसंतु॥ शिवाओषधयःसंतु॥ शिवावनस्पतयःसंतु॥ शिवाअतिथयःसंतु॥ अहोरात्रेशिवेस्याताम्॥ नि॒का॒मेनि॑कामेन प॒र्जन्यो॑वर्षतु॥ फलिन्योनओषधयःपच्यंतां॥ योगक्षेमोनःकल्पताम्॥ शुक्रांगारकबुधबृहस्पतिशनैश्चरराहुकेतुसोमसहिताआदित्यपुरोगाःसर्वेग्रहाःप्रीयंतां॥ भगवान्नारायणःप्रीयतां॥ भगवान्पर्जन्यःप्रीयतां॥ प्रीयतांभगवान्स्वामीमहासेनः॥ पुण्याहकालान्वाचयिष्ये॥ वाच्यतामितिविप्राः॥ ॐ उद्गा॒तेव॑शकुने॒साम॑गायसिब्रह्मपु॒त्रइ॑व॒सव॑नेषुशंससि॥ वृषे॑ववा॒जीशिशु॑मतीर॒पीत्या॑स॒र्वतो॑नःशकुनेभ॒द्रमाव॑दवि॒श्वतो॑नःशकुने॒पुण्य॒मावंद॥ याज्ययायजतिप्रत्तिर्वैयाज्यापुण्यैवलक्ष्मीःपुण्यामेवतल्लक्ष्मींसंभावयतिपुण्यांलक्ष्मींसंस्कुरुते॥ यत्पुण्यं॒नक्षत्रं॥ तद्बट्कुर्वी॑तोपव्यु॒षं॥ य॒दावैसूर्यं॑उ॒देति॥ अथ॒नक्ष॑त्रं॒नैति॥ यावति॒तत्र॒सूर्यो॒गच्छे॑त्॥ यत्र॑जघ॒न्यं॑पश्ये॑त्॥ तावतिकुर्वीतयत्का॒रीस्यात्॥ पु॒ण्या॒हए॑वकुरुते॥तानि॒वाए॒तानि॑यमनक्ष॒त्राणि॥यान्ये॒वदे॑वनक्ष॒त्राणि॥तेषु॑कुर्वीतयत्का॒रीस्यात्॥ पु॒ण्या॒हए॑वकुरुते॥ मह्यंसकुटुंबिनेमहाजनान्नमस्कुर्वाणायआशीर्वचनमपेक्षमाणायाद्यकरिष्यमाणामुककर्मणःपुण्याहंभवंतोब्रुवंत्वितित्रिर्वदेत्॥ ॐपुण्याहमितित्रिर्विप्राः॥ ॐ स्व॒स्तये॑वा॒युमुप॑ब्रवामहै॒सोमं॑स्व॒स्तिभुव॑नस्य॒यस्पतिः॥बृ॒ह॒स्पतिं॒सर्व॑गणंस्व॒स्तये॑स्व॒स्तय॑आदि॒त्यासो॑भवंतुनः॥ आदित्यउदयनीयःपथ्ययैवेतःस्वस्त्याप्रयंतिपथ्यांस्वस्तिमभ्युद्यंतिस्वस्त्येवेतःप्रयंतिस्वस्त्युद्यंति

स्वस्त्युधंति ॥ ॐस्वस्तिनइंद्रोवृद्धश्रवाः॥ स्वस्तिनःपूषाविश्ववेदाः॥ स्वस्तिनस्ताक्ष्यौअरिष्टनेमिः॥ स्वस्तिनोबृहस्पतिर्दधातु ॥ अष्टौदेवावसवःसोम्यासः॥ चतस्रोदेवीरजराश्रविष्ठाः॥ तेयज्ञंपांतुरजसःपरस्तात्॥ संवत्सरीणममृतंस्वस्ति ॥ मह्यमित्यादि ख्यायकर्मणेस्वस्तिभवंतोब्रुवंत्विति त्रिः ॥ ॐ आयुष्मतेस्वस्तीतिप्रतिवचनंत्रिः ॥ ॐऋध्यामस्तोमंसनुयामवाजमानोमंत्रैःसरथे होपयातं ॥ यशोनपक्कंमधुगोष्वंतराभूतांशोअश्विनोःकाममप्राः॥ सर्वामृद्धिमृध्नुयामितितंवैतेजसैवपुरस्तात्पर्यभवच्छंदोभिर्म ध्यतोक्षरैरुपरिष्टाद्गायत्र्यासर्वतोद्वादशाहंपरिभूयसर्वामृद्धिमार्भ्नोत्सर्वामृद्धिमृध्नोतियएवंवेद ॥ ऋध्यास्महव्यैर्नमसोपसद्य ॥ मित्रंदेवंमित्रधेयंनोअस्तु ॥ अनूराधान्हविषावर्धयंतः॥ शतंजीवेमशरदःसवीराः॥ त्रीणित्रीणिवैदेवानामृद्धानि ॥ त्रीणिच्छं दांसित्रीणिसवनानि ॥ त्रयइमेलोकाः॥ ऋध्यामेवतद्वीर्यएषुलोकेषुप्रतितिष्ठति॥ मह्यमित्यादिअस्यकर्मणःऋद्धिंभवंतोब्रुवंत्वि तित्रिः ॥ ॐ ऋध्यतामितिप्रतिवचनंत्रिः॥ ॐ श्रियेजातःश्रियआनिरियायश्रियंवयोजरितृभ्योदधाति ॥ श्रियंवसानाअमृत त्वमायन्भवंतिसत्यासमिथामितद्रौ॥ श्रियएवैनंतच्छ्रियामादधातिसंततमृचावषट्कृत्यंसंतत्यैसंधीयतेप्रजयापशुभिर्यएवंवेद॥ यस्मिन्ब्रह्माभ्यजयत्सर्वमेतत् ॥ अमुंचलोकमिदमुचसर्वं ॥ तन्नोनक्षत्रमभिजिद्विजित्य ॥ श्रियंदधात्वहृणीयमानं ॥ अहेबु ध्नियमंत्रंमेगोपाय ॥ यमृषयस्त्रयीविदाविदुः ॥ ऋचःसामानियजूंषि ॥ साहिश्रीरमृतासतां ॥ एतैर्मन्त्रैर्नीराजनंकारयंति॥ मह्यमित्यादिअमुककर्मणःश्रीरस्त्विति भवंतोब्रुवंत्विति त्रिः ॥ ॐ अस्तुश्रीरिति त्रिर्विप्राः ॥ वर्षशतंपूर्णमस्तु ॥ गोत्राभिवृद्धि रस्तु ॥ कर्मांगदेवताप्रीयतां ॥ ॐ शुक्रेभिरंगैरजआततन्वान्क्रतुंपुनानःकविभिःपवित्रैः ॥ शोचिर्वसानःपर्यायुरपांश्रियोमि

१ अत्रयत्कर्मोद्देश्यकंपुण्याहवाचनंतत्कर्मदेवतोहःकार्यः । ताश्चपुण्याहवाचनांतेसंगृहीतास्ततआलोचनीयाः ।

मीतेबृहतीरनूनाः ॥ तदप्येषःश्लोकोभिगीतोमरुतःपरिवेष्टारोमरुत्तस्यावसन्गृह ॥ आवाक्षितस्यकामप्रावश्वदेवाःसभासद
इति ॥ ततउत्तरकलशंदक्षिणहस्तेदक्षिणकलशंवामहस्तेगृहीत्वाताभ्यांधाराद्वयंसंततंपात्रेनिर्षिंचेदेभिर्मंत्रैः ॥ ( वास्तोष्पतइति
चतसृणांवसिष्ठोवास्तोष्पतिस्त्रिष्टुबंत्यागायत्री उदकसेचनेवि० )॥ ॐ वास्तोष्पतेप्रतिजानीह्यस्मान्स्वावेशोअनमीवोभवानः ॥
यत्त्वेमहेप्रतितन्नोजुषस्वशंनोभवद्विपदेशंचतुष्पदे ॥ वास्तोष्पतेप्रतरणोनएधिगयस्फानोगोभिरश्वेभिरिंदो ॥ अजरासस्तेसख्ये
स्यामपितेवपुत्रान्प्रतिनोजुषस्व ॥ वास्तोष्पतेशग्मयासंसदातेसक्षीमहिरण्वयागातुमत्या ॥ पाहिक्षेमउतयोगेवरंनोयूयंपातस्व
स्तिभिःसदानः ॥ अमीवहावास्तोष्पतेविश्वारूपाण्याविशन् ॥ सखासुशेवएधिनः ॥ शिवंशिवंशिवं ॥ ततःकर्तुर्वामतःपत्नीमु
पवेश्यपात्रपातितजलेनपल्लवदूर्वाभिरुदङ्मुखास्तिष्ठंतोविप्राअभिषिंचेयुः ॥ ( समुद्रज्येष्ठाइतिचतसृणांवसिष्ठआपस्त्रिष्टुप् ॥
त्रायंतामितितिसृणांविश्वामित्रजमदग्निवसिष्ठाआपोनुष्टुप् ॥ इमाआपइतितिसृणामैतरेयअपोनुष्टुब्जगत्यनुष्टुभः ॥ देवस्यत्वे
त्यस्यैतरेयःसविताश्विनौपूषाचयजुः ॥ समस्तव्याहृतीनांपरमेष्ठीप्रजापतिःप्रजापतिर्बृहती ॥ अभिषेकेवि० ) ॥ ॐसमुद्रज्ये
ष्ठाःसलिलस्यमध्यात्पुनानायंत्यनिविशमानाः ॥ इंद्रोयावज्रीवृषभोरराद ताआपोदेवीरिहमामवंतु ॥ याआपोदिव्याउतवास्र
वंतिखनित्रिमाउतवायाःस्वयंजाः ॥ समुद्रार्थायाः शुचयःपावकास्ताआपोदेवीरिहमामवंतु ॥ यासांराजावरुणोयातिमध्येस
त्यानृतेअवपश्यंजनानां ॥ मधुश्चुतःशुचयोयाःपावकास्ताआपोदेवीरिहमामवंतु ॥ यासुराजावरुणोयासुसोमोविश्वेदेवायासूर्ज
मदंति ॥ वैश्वानरोयास्वग्निःप्रविष्टस्ताआपोदेवीरिहमामवंतु ॥ त्रायंतामिहदेवास्त्रायतांमरुतांगणः ॥ त्रायंतांविश्वाभूतानि
यथायमरपाअसत् ॥ आपइद्वाउभेषजीरापोअमीवचातनीः ॥ आपःसर्वस्यभेषजीस्तास्तेकृण्वंतुभेषजं ॥ हस्ताभ्यांदशशाखा

भ्यांजिह्वावाचःपुरोगवी ॥ अनामयित्नुभ्यांत्वाताभ्यांत्वोपस्पृशामसि ॥ इमाआपःशिवतमाइमाःसर्वस्यभेषजीः ॥ इमाराष्ट्रस्यवर्धनीरिमाराष्ट्रभृतोमृताः ॥ याभिरिंद्रमभ्यषिंचत्प्रजापतिःसोमंराजानंवरुणंयमंमनुं ॥ ताभिरद्भिरभिषिंचामित्वामहंराज्ञांत्वमधिराजोभवेह ॥ महांतंत्वामहीनांसम्राजंचर्षणीनांदेवीजनित्र्यजीजनद्भद्राजनित्र्यजीजनत् ॥ देवस्यत्वासवितुःप्रसवेश्विनोर्बाहुभ्यांपूष्णोहस्ताभ्यामग्नेस्तेजसासूर्यस्यवर्चसेंद्रस्येंद्रियेणाभिषिंचामि ॥ बलायश्रियैयशसेन्नाद्याय ॥ ॐ भूर्भुवः स्वःअमृताभिषेकोस्तु ॥ शांतिःपुष्टिस्तुष्टिश्चास्तु ॥ द्विराचामेत् ॥ इतिपुण्याहवाचनं ॥ ॥ छ ॥ ॥ छ ॥

## ॥ १७ ॥ अथकर्मांगदेवताः ॥

श्रीः ॥ विवाहस्याग्निर्देवता तेनविवाहांगभूतस्वस्तिवाचनाद्यंतेकर्मांगदेवताग्निःप्रीयतामितिवदेत् ॥ औपासनेग्निसूर्यप्रजापतयः स्थालीपाकेग्निः गर्भाधानेब्रह्मा पुंसवनेप्रजापतिः सीमंतेधाता जातकर्मणिमृत्युः नामकर्मनिष्क्रमणान्नप्राशनेषुसविता चौलेकेशिनः उपनयनेइंद्रश्रद्धामेधाः अंतेसुश्रवाः पुनरुपनयनेग्निः समावर्तनस्येंद्रः उपाकर्मणिव्रतेषुचसविता वास्तुहोमेवास्तोष्पतिर्गेतप्रजापतिः आग्रयणेआग्रयणदेवताः सर्पबलेःसर्पाः तडागादीनांवरुणः ग्रहयज्ञेनवग्रहाः कूष्मांडहोमेचांद्रायणे अग्न्याधानेचाग्न्यादयः अग्निष्टोमस्याग्निः अन्येष्विष्टकर्मसुप्रजापतिः ॥ इतिकर्मांगदेवताऊहनीयाः ॥ ॥ छ ॥

## ॥ १८ ॥ अथमातृकापूजनम् ॥

श्रीः ॥ ( विनायकंआ० ) गौरीपद्माशचीमेधासावित्रीविजयाजया ॥ देवसेनास्वधास्वाहामातरोलोकमातरः ॥ धृतिःपुष्टिस्तथातुष्टिरात्मनःकुलदेवता ॥ ब्राह्मीमाहेश्वरीचैवकौमारीवैष्णवीतथा ॥ वाराहीचतथेंद्राणीचामुंडासप्तमातरः ( विनायक )

गौर्यादिषोडशमातृर्ब्राह्म्यादिसप्तमातृश्च ( दुर्गाक्षेत्रपालंगणपतिंच ) एतेष्वक्षतपुंजेष्वावाहयामि ॥ तदस्तु० ॥ गृहावै० प्रति ष्ठाप्रतिष्ठा ॥ सुप्रतिष्ठितमस्तु ॥ ॐ भूर्भुवःस्वःगौर्याद्यावाहितदेवताभ्योनमःइतिषोडशोपचारैःपूजयेत् ॥ ॐगौरीर्मिमाय सलिलानितक्षत्येकपदीद्विपदीसाचतुष्पदी ॥ अष्टापदीनवपदीबभूवुषीसहस्राक्षरापरमेव्योमन्॥ ॐ भूर्भुवःस्वःगौर्याद्यावाहि तदेवताभ्योनमःमंत्रपुष्पंसमर्पयामि ॥ अनेनषोडशोपचारैःपूजनेनगौर्याद्यावाहितदेवताःप्रीयंतां ॥ इतिमातृकापूजनम् ॥ ॥

## ॥ ९९ ॥ अथनांदीश्राद्धविचारः ॥

श्रीः ॥ गौर्यादिमातृकापूजनंनांदीश्राद्धांगं ॥ यत्रनांदीश्राद्धंनक्रियतेतत्रमातृकापूजनमपिनकार्यं ॥ तत्रपूर्वंमातृपार्वणंततःपि तृपार्वणंततःसपत्नीकमातामहपार्वणमितिपार्वणत्रयात्मकंनांदीश्राद्धं ॥ मातृजीवनेसपत्नमातृमरणेपिनमातृपार्वणं ॥एवंमाता मह्याजीवनेमातामहीसपत्न्यामरणेपिनमातामहादेःसपत्नीकत्वं॥अत्रकर्तुर्जीवत्पितृकत्वेनिर्णयः ॥ जीवेत्तुयदिवर्गाद्यस्तंवर्गंतुप रित्यजेदितिन्यायेनजीवत्पितृकःस्वापत्यसंस्कारेषुमातृमातामहपार्वणयुतंनांदीश्राद्धंकुर्यात्॥ मातरिजीवत्यांमातामहपार्वणक मेव ॥ मातामहेजीवतिमातृपार्वणकमेव ॥ केवलमातृपार्वणेविश्वेदेवानकार्याः ॥ वर्गत्रयाद्येषुमातृपितृमातामहेषुजीवत्सुनांदी श्राद्धलोपएवसुतसंस्कारेषूचितः ॥ द्वितीयविवाहाधानपुत्रेष्टिसोमयागादिषुस्वसंस्कारकर्मसुयेभ्यएवपितादद्यात्तेभ्योदद्यात्॥ तथाचमृतमातृमातामहकोपिजीवत्पितृकःस्वसंस्कारेपितुर्मातृपितामहीप्रपितामह्यः पितुःपितृपितामहप्रपितामहाः पितुर्मा तामहमातृपितामहमातृप्रपितामहाः इत्येवपार्वणत्रयमुद्दिश्यश्राद्धंकुर्यात् नतुस्वमातृमातामहपार्वणोद्देशः ॥ पितरिपितामहे चजीवतिस्वसंस्कारे पितामहस्यमातृपितामहीप्रपितामह्यइत्याद्युद्देशः ॥ एवंप्रपितामहेपियोज्यं ॥ पितुर्मात्रादिजीवनेतत्पार्वण

लोपएव ॥ तथाच्चयेभ्यएवपितादद्यादितिपक्षस्यवर्गाद्यजीवनेतत्पार्वणलोपइतिद्वारलोपपक्षस्यचस्वसंस्कारस्वापत्यसंस्कारभेदे नव्यवस्थासिद्धांतितेतिज्ञेयं ॥ केचित्तुपक्षद्वयस्यैच्छिकोविकल्पोनतुव्यवस्थितइत्याहुः ॥ एवंमृतपितृकस्यजीवन्मातृमातामह स्यपितृपार्वणेनैवनांदीश्राद्धसिद्धिर्ज्ञेया ॥ समावर्तनस्यमाणवककर्तृत्वेपितदंगभूतनांदीश्राद्धेपितुस्तदभावेज्येष्ठभ्रात्रादेरधिका रइतिकेचित् ॥ तत्रपितापुत्रसमावर्तनेस्वपितृभ्योनांदीश्राद्धंकुर्यात् ॥ पिताजीवत्पितृकश्चेत्सुतसंस्कारत्वात्द्वारलोपपक्षोयुक्त इतिभाति॥माणवकपितुःप्रवासादिनाअसंनिधानेभ्रात्रादिर्माणवकस्यपितुर्मातृपितामहीप्रपितामह्यइत्याद्युच्चार्यश्राद्धंकुर्यात्॥ मृतपितृकमाणवकसमावर्तनेपितृव्यभ्रात्रादिरस्यमाणवकस्यमातृपितामहीत्याद्युच्चारयेत् ॥ भ्रात्रादेरभावेस्वयमेवस्वपितृभ्यो दद्यात् ॥ एवंजीवत्पितृकोपिपितुरसन्निधानेभ्रात्रादेरभावेपितुःपितृभ्यःस्वयमेवनांदीमुखंकुर्यात् ॥ उपनयनेनकर्माधिका रस्यजातत्वात् ॥ एवंविवाहेपिद्रष्टव्यं ॥ मृतपितृकस्यचौलोपनयनादिकंपितृव्यमातुलादिःकुर्वन्अस्यसंस्कार्यस्यपितृपितामह त्याद्युच्चार्यश्राद्धंकुर्यात् ॥ जीवतःपितुरसन्निधानेनकुर्वन्मातुलादिरस्यसंस्कार्यस्यपितुर्जनकादीनुद्दिश्यकुर्यान्नतुसंस्कार्यस्य मृतानपिमात्रादीनितिसंक्षेपः ॥ विशेषोऽन्यग्रंथेष्वालोचनीयः ॥ ॥ छ ॥ ॥ छ ॥

## ॥ १०० ॥ अथनांदीश्राद्धम् ॥

श्रीः ॥ हस्तेदूर्वापवित्रंधृत्वा ॥ सत्यवसुसंज्ञकाविश्वेदेवाःनांदीमुखाःभूर्भुवःस्वःइदंवःपाद्यंस्वाहानमइयंचवृद्धिः ॥ मातृपि

१ वृद्धौतीर्थेचसंन्यस्तेतातेचपतितेसति । येभ्यएवपितादद्यात्तेभ्योदद्यात्स्वयंसुतः ॥ पित्रन्यकर्तृकसंस्कारादौसंस्कार्यपित्रादिभ्यएवदद्यान्नस्वेभ्यः । २ यज्ञादिकर्मांगेतुअमूलादर्भाएव । दूर्वादर्भाश्चयुग्माएवग्राह्याः । ३ सोमयागगर्भाधानपुंसवनसीमंतोन्नयनाधानादिकर्मांगभूतवृद्धिश्राद्धेक्रतुदक्षसंज्ञकाः ।

तामहीप्रपितामह्यःनांदीमुखाःभूर्भुवःस्वःइदंवःपाद्यं० ॥ पितृपितामहप्रपितामहाःनांदीमुखाःभूर्भुवःस्वःइदंवःपाद्यं० ॥ मातामहमातृपितामहमातृप्रपितामहाःपत्नीसहिताःनांदीमुखाःइदंवःपाद्यं० ॥ ॥ पुनःसत्यवसु० इदंवःआसनगंधाद्युपचारकल्पनंस्वाहानमइयंचवृद्धिः ॥ मातृ० इदंवः आसन० ॥ पितृपितामह० इदंवःआसन०॥मातामह० पत्नीस० आसन०॥ ॥ विनायकगौर्यादिषोडशमातरः ब्राह्म्यादिसप्तमातरःदुर्गाक्षेत्रपालगणपतयश्चभूर्भुवःस्वः इदंवःयुग्मब्राह्मणभोजनपर्याप्तामान्ननिष्क्रयीभूतंकिंचिद्धिरण्यंस्वाहानमइयंचवृद्धिः॥ सत्यवसु०युग्मब्राह्मणभोजन०द्धिरण्यं०॥मातृपितामहीप्रपितामह्यः०इदंवःयुग्म० द्धिरण्यं० ॥ पितृपितामहप्रपितामहाः० ॥ भूर्भुवःस्वःइदंवःयुग्म० द्धिरण्यं० ॥ मातामहमातृपितामहमातृप्रपितामः० युग्म० द्धिरण्यं० ॥ ॐ उपास्मैगायतानरःपवमानायेंदवे ॥ अभिदेवांऽइयक्षते ॥ अभितेमधुनापयोथर्वाणोअशिश्रयुः ॥ देवंदेवायदेवयु ॥ सनःपवस्वशंगवेशंजनायशमर्वते ॥ शंराजन्नोषधीभ्यः ॥ बभ्रवेनुस्वतवसेरुणायदिविस्पृशे ॥ सोमायगाथमर्चत ॥ हस्तच्युतेभिरद्रिभिःसुतंसोमंपुनीतन ॥ मधावाधावतामधु ॥ ॥ प्रजापतेनत्वदेतान्यन्योविश्वाजातानिपरिताबभूव ॥ यत्कामास्तेजुहुमस्तन्नोअस्तुवयंस्यामपतयोरयीणां ॥ कृतस्यनांदीश्राद्धस्यप्रतिष्ठाफलसिद्ध्यर्थंद्राक्षामलकनिष्क्रयिणींदक्षिणांदातुमहमुत्सृज्ये ॥ मातापितामहीचैवतथैवप्रपितामही ॥ पितापितामहश्चैवतथैवप्रपितामहः ॥ मातामहस्तत्पिताचप्रमातामहकादयः ॥ एतेभवंतुसुप्रीताःप्रयच्छंतुचमंगलं ॥ ॐ इळामग्नेपुरुदंससनिंगोःशश्वत्तमंहवमानायसाध ॥ स्यान्नःसूनुस्तनयोविजावाग्नेसातेसुमतिर्भूत्वस्मे ॥ इळामुपह्वयतेपशवोवाइळापशूनेवतदुपह्वयतेपशून्यजमानेदधातिदधाति ॥ यथाचारं

१ मातृपार्वणेनांदीमुखशब्देङीप्विकल्पान्नांदीमुखानांदीमुख्यइतिपक्षद्वयमुक्तं।अनादिसंज्ञात्वेननखमुखात्संज्ञायामितिनिषेधानवतारादितिपुरुषार्थ० ।

हिरण्येनभांडवादनं ॥ अनेननांदीश्राद्धेननांदीमुखदेवताःप्रीयंतांवृद्धिः ॥ ततःउत्तिष्ठब्रह्मणस्पते० अभ्यारमिदद्रयो० ॥ यांतुदेवगणाःसर्वेपूजामादायपार्थिवात्॥ इष्टकामप्रसिद्ध्यर्थंपुनरागमनायच ॥ इत्यादिमंत्रैरावाहितदेवताउत्थापयेत्॥इति ॥

## ॥ १०१ ॥ अथग्रहयज्ञःपरिशिष्टोक्तः ॥

श्रीः ॥ यजमानःस्नात्वानित्यकर्मनिर्वर्त्यमौहूर्तिकोक्तेशुभेकालेआचम्यपवित्रपाणिःप्राणानायम्यदेशकालौसंकीर्त्यकरिष्यमाणेऽमुकस्मिन्नाभ्युदयिकेनिर्विघ्नेनफलसिद्धिकामोबह्वृचगृह्यपरिशिष्टोक्तरीत्याग्रहयज्ञंकरिष्ये॥इतरनिमित्तेषुअमुककर्मकर्तुमादौ ग्रहानुकूल्यसिद्धिद्वाराअमुककामनासिद्धिद्वारावाश्रीपरमेश्वरप्रीत्यर्थंग्रहयज्ञंकरिष्यइतिसंकल्प्य॥तदंगंगणपतिपूजनंस्वस्तिवाचनंआचार्यादिवरणंचकरिष्ये ॥ ॥ आचार्यवरणं ॥ ब्राह्मणंसंपूज्यअमुकप्रवरान्वितोमुकगोत्रोऽमुकशर्माअहं ॥ अमुकप्रवरान्वितममुकगोत्रोत्पन्नंऋग्वेदांतर्गतशाकलशाखाध्यायिनममुकशर्माणंब्राह्मणंअस्मिन्ग्रहयज्ञेआचार्यत्वांवृणे ॥ इतिवृत्वा प्रार्थयेत् ॥ आचार्यस्तुयथास्वर्गेशक्रादीनांबृहस्पतिः॥ तथात्वंममयज्ञेस्मिन्नाचार्योभवसुव्रत ॥ विप्रोवृतोस्मियथाज्ञानतःकर्मकरिष्यामीतिवदेत् ॥ ॥ ब्रह्मवरणं ॥ यथाचतुर्मुखोब्रह्मास्वर्गेलोकेपितामहः ॥ तथात्वंममयज्ञेस्मिन्ब्रह्माद्विजपतेभव ॥ ॥ सदस्यवरणं ॥ त्वंनोगुरुःपितामातात्वंप्रभुस्त्वंपरायणं ॥ त्वत्प्रसादाच्चविप्रर्षेसर्वेमस्यान्मनोगतं ॥ आपद्धिमोक्षणार्थायकुरुयज्ञमतंद्रितः ॥ ऋत्विग्भिःसहितःशुद्धैःसंयतैःसुसमाहितैः ॥ आचार्येणचसंयुक्तःकुरुकर्मयथोदितं ॥ ॥ गाणपत्यवरणं ॥ प्रारिप्सितस्ययज्ञस्यजपस्यहवनस्यच ॥ निर्विघ्नेनसमाप्त्यर्थंत्वामहंगणपंवृणे ॥ उपद्रष्टृवरणं ॥ भगवन्सर्वधर्मज्ञसर्वधर्मभृतांवर ॥ वितते ममयज्ञेस्मिन्नुपद्रष्टाभवद्विज ॥ ऋत्विजश्चयथापूर्वंशक्रादीनांमखेऽभवन् ॥ यूयंतथामेभवतऋत्विजोर्हथस

समाः ॥ अस्ययागस्यनिष्पत्तौभवंतोभ्यर्थितामया ॥ सुप्रसन्नैश्चकर्तव्यंकर्मेदंविधिपूर्वकं ॥ इतिऋत्विजःसंप्रार्थ्ययथाविभव
मर्चयेत् ॥ तेचयथाज्ञानतःकर्मकरिष्यामइत्युक्त्वाआचामेयुः ॥ अथाचार्यःआचम्यपवित्रंधृत्वाप्राणानायम्यदेशकालौसंकी
र्त्ययजमानेनग्रहयज्ञाख्येकर्मणिवृतोहमाचार्यकर्मकरिष्ये इतिसंकल्प्य ॥ पृथ्वित्वया० ॥ यज्ञकर्मसमारभे ॥ इत्यासनविधिंपुरु
षसूक्तन्यासंजपंवाकृत्वा षडंगन्यासंविधाय ॥ कलशस्यमुखे० इतिकलशपूजांकृत्वा ॥ अपवित्रःपवित्रोवा० इतिपूजासंभारा
न्प्रोक्ष्यआत्मानंचप्रोक्षेत् ॥ ततःयदत्रसंस्थितंभूतंस्थानमाश्रित्यसर्वतः ॥ स्थानंत्यक्त्वातुतत्सर्वंयत्रस्थंतत्रगच्छतु ॥ अपक्रामं
तुभूतानिपिशाचाःसर्वतोदिशं ॥ सर्वेषामविरोधेनयज्ञकर्मसमारभे ॥ इतिगौरसर्षपान्विकीर्य ॥ शुचीवोहव्येतितिसृणांमैत्रा
वरुणिर्वसिष्ठोमरुतस्त्रिष्टुप् ॥ अग्निःशुचिव्रततमइतिद्वयोरांगिरसोविरूपोग्निर्गायत्री ॥ एतोन्विंद्रमितितिसृणामांगिरसस्तिर
श्चीइंद्रोनुष्टुप् ॥ भूमिप्रोक्षणेविनियोगः ॥ ॐ शुचीवोहव्यामरुतःशुचीनांशुचिंहिनोम्यध्वरंशुचिभ्यः ॥ ऋतेनसत्यमृतसाप
आयन्छुचिजन्मानःशुचयःपावकाः ॥ अग्निःशुचिव्रततमःशुचिर्विप्रःशुचिःकविः ॥ शुचीरोचतआहुतः ॥ उदग्नेशुचयस्तवशु
क्राभ्राजंतईरते ॥ तवज्योतींष्यर्चयः ॥ एतोन्विंद्रंस्तवामशुद्धंशुद्धेनसाम्ना ॥ शुद्धैरुक्थैर्वावृध्वांसंशुद्धआशीर्वान्ममत्तु ॥ इंद्र
शुद्धोनऽआगहिशुद्धःशुद्धाभिरूतिभिः ॥ शुद्धोरयिंनिधारयशुद्धोममद्धिसोम्यः ॥ इंद्रशुद्धोहिनोरयिंशुद्धोरत्नानिदाशुषे ॥
शुद्धोवृत्राणिजिघ्नसेशुद्धोवाजंसिषाससि ॥ पंचगव्येनभूमिप्रोक्षणं ॥ आपोहिष्ठेतितृचस्यांबरीषःसिंधुद्वीपआपोगायत्री भूमि
प्रोक्षणेविनियोगः॥ ॐ आपोहिष्ठा० इतितृचेन कुशोदकेनचप्रोक्षेत् ॥ अपवित्रःपवित्रोवासर्वावस्थांगतोपिवा ॥ यःस्मरेत्पुंड
रीकाक्षंसबाह्याभ्यंतरःशुचिः ॥ ततःकृतांजलिपुटस्तिष्ठन् ॥ ॐ स्वस्त्ययनंतार्क्ष्यमरिष्टनेमिंमहद्भूतंवायसंदेवतानां ॥ असुर

ह्नमिंद्रंसखंसमत्सुबृहद्यशोनावमिवारुहेम ॥ अंहोमुचमांगिरसंगयंचस्वस्त्यात्रेयंमनसाचताक्ष्यं ॥ प्रयतपाणिःशरणंप्रपद्येस्व स्तिसंबाधेष्वभयंनोअस्तु ॥ देवाआयांतु ॥ यातुधानाअपयांतु ॥ विष्णोदेवयजनंरक्षस्व ॥ भूमौप्रादेशंकुर्यात् ॥ ततोग्रहप्रति मानामग्न्युत्तारणंकृत्वा हस्तमात्रावरंचतुरस्रंकुंडंस्थंडिलंवासंस्कृत्यततईशान्यांवाकृतायांचतुर्दिक्षुहस्तमात्रावरायांचतुस्त्रिद्व्यं गुलप्रमाणत्रिभूमिकायांग्रहवेद्यांशुक्लतंडुलैःसकर्णिकमष्टदलमंबुजमुल्लिख्यकर्णिकायांदलेषुचवर्तुलादितत्तद्ग्रहपीठानिपीठेनव कुर्यात् ॥ यथा–मध्येरक्ताक्षतैर्वर्तुलमादित्याय ॥ १ ॥ आग्नेयदलेशुक्लाक्षतैश्चतुरस्रंसोमाय ॥ २ ॥ दक्षिणदलेरक्ताक्षतैस्त्रि कोणंमंगलाय ॥ ३ ॥ ईशानदलेहरिताक्षतैर्बाणाकारंबुधाय ॥ ४ ॥ उत्तरदलेपीताक्षतैर्दीर्घचतुरस्रंगुरवे ॥ ५ ॥ पूर्वदलेशुक्ला क्षतैःपंचकोणंशुक्राय ॥ ६ ॥ पश्चिमदलेकृष्णाक्षतैश्चापाकारंशनैश्चराय ॥७॥ नैर्ऋत्यदलेकृष्णाक्षतैःशूर्पाकारंराहवे ॥ ८ ॥ वायव्यदलेचित्राक्षतैर्ध्वजाकारंकेतवे॥९॥ इतिविलिख्यततउदीच्यांरंगवल्लीपद्मेधान्येनकुंभयोग्यंपीठंप्रकल्प्यतत्रनवमव्रणंतैज संमृष्टमयंवानुलिप्तमक्षतपुष्पमालाद्यलंकृतंशुभमभिषेककुंभंस्थापयेत् ॥ यथा–( महीद्यौःकाण्वोमेधातिथिर्भूमिर्गायत्री भूमि प्रार्थनेविनियोगः ॥ ॐ महीद्यौःपृथिवीचनइमंयज्ञंमिमिक्षतां ॥ पिपृतांनोभरीमभिः ॥ इतिभूमिंप्रार्थ्य ॥ ओषधयइत्यस्या थर्वणोभिषगोषधयोनुष्टुप् धान्यराशिकरणेवि० ॥ ॐ ओषधयःसंवदंतेसोमेनसहराज्ञा ॥ यस्मैकृणोतिब्राह्मणस्तंराजन्पारया मसि ॥ इतिधान्यराशिंकृत्वा ) आकलशेष्वित्यस्यकाश्यपोदेवलःपवमानःसोमोगायत्री कलशस्थापनेवि०॥ ॐ आकलशेषुधा वतिपवित्रेपरिषिच्यते ॥ उक्थैर्यज्ञेषुवर्धते ॥ इतिधान्यराश्युपरिकलशंनिधाय ॥ इमंमेगंगइत्यस्यासिंधुक्षितप्रैयमेधोनद्योज

---

१ सूर्यादीनांप्रतिमाद्रव्याणि–ताम्रंस्फाटिकंरक्तचंदनंसुवर्णंतदेवरजतंलोहंसीसंकांस्यंचेतिनव ॥ सुवर्णंवासर्वेषामिति ॥

गर्ती उदकपूरणेवि० ॥ ॐ इमंमेगंगेयमुनेसरस्वतिशुतुद्रिस्तोमंसचतापरुष्ण्या ॥ असिक्न्यामरुद्वृधेवितस्तयार्जीकीयेश्रृणुह्या सुषोमया ॥ अनेनपुण्यजलेनपूरयित्वा ॥ गायत्र्याविश्वामित्रःसवितागायत्री गोमूत्रप्रक्षेपणेवि० ॥ ॐ तत्सवि० ॥ अनेनगोमूत्रंचनिक्षिप्य ॥ गंधद्वारामित्यस्यानंदकर्दमचिक्लीतेंदिरासुताःश्रीरनुष्टुप् गोमयक्षेपणेवि० ॥ ॐ गंधद्वारांदुराधर्षांनित्यपुष्टांकरीषिणीं ॥ ईश्वरींसर्वभूतानांतामिहोपह्वयेश्रियं ॥ अनेनगोमयं ॥ आप्यायस्वेत्यस्यराहूगणोगोतमःसोमोगायत्री पयःक्षेपणेवि० ॥ ॐ आप्यायस्वसमेतुतेविश्वतःसोमवृष्ण्यं ॥ भवावाजस्यसंगथे ॥ अनेनगोक्षीरं ॥ दधिक्राव्णइत्यस्यगोतमोवामदेवोदधिक्रावानुष्टुप् दधिक्षेपणे० ॥ दधिक्राव्णोअकारिषंजिष्णोरश्वस्यवाजिनः ॥ सुरभिनोमुखाकरत्प्रणआयूंषितारिषत् ॥ अनेनदधि ॥ शुक्रमसिज्योतिरसितेजोसि ॥ इतिघृतं॥ पुनराप्यायस्वेत्यादित्रिभिःक्षीरदधिघृतानिप्रक्षिप्य॥ मधुवाताइतितिसृणांराहूगणोगोतमोविश्वेदेवागायत्री॥ मधुप्रक्षे० ॥ ॐ ॥ मधुवाता० ऋ० ॥३॥ स्वादुःपवस्वभार्गवोवेनःपवमानःसोमोजगती॥ शर्कराप्रक्षे० ॥ ॐ स्वादुःपवस्व० ॥ शर्करांचप्रक्षिप्य ॥ हयगजवल्मीकह्रदगोष्ठराजद्वारचतुष्पथमृदः ॥ उद्धृतासिवराहेणकृष्णेनशतबाहुना॥ मृत्तिकेहरमेपापंयन्मयादुष्कृतंकृतं ॥ अनेनाथवा स्योनापृथिविकाण्वोमेधातिथिर्भूमिर्गायत्री मृत्क्षेपणेवि० ॥ ॐ स्योनापृथिविभवानृक्षरानिवेशनी ॥ यच्छानःशर्मसप्रथः ॥ इतिमृदंकुंभेनिक्षिप्य ॥ रुवतिर्भीमइत्यस्य वैश्वामित्रोरेणुःपवमानसोमोजगती ॥ त्वक्क्षेपणेवि० ॥ रुवतिभीमोवृषभस्तविष्ययाशृंगेशिशानोहरिणीविचक्षणः ॥ आयोनिंसोमःसुकृतंनिषीदतिगव्ययीत्वग्भवतिनिर्णिगव्ययी ॥ अनेनन्यग्रोधाश्वत्थप्लक्षजंबूचूतवृक्षत्वचः ॥ याःफलिनीरित्यस्याथर्वणोभिषगोषधयोनुष्टुप् पुष्पफलक्षेपणेवि० ॥ ॐ याःफलिनीर्याअफलाअपुष्पायाश्चपुष्पिणीः ॥ बृहस्पतिप्रसूतास्तानोमुंचं

त्वंहंसः ॥ इतिपुष्पफले ॥ सहिरत्नानीत्यस्यश्यावाश्वःसविता गायत्री रत्नक्षेप० ॥ ॐ सहिरत्नानिदाशुषेसुवातिसविताभगः ॥ तंभागंचित्रमीमहे ॥ अनेननवरत्नानिहीरकमौक्तिकपद्मरागनीलमरकतगोमेदपुष्परागवैडूर्यप्रवालाख्यानि ॥ हिरण्यरूपइत्यस्यशौनकोगृत्समदोपान्नपात्त्रिष्टुप् ॥ हिरण्यक्षेपेवि० ॥ ॐ हिरण्यरूपःसहिरण्यसंदृगपान्नपात्सेदुहिरण्यवर्णः ॥ हिरण्ययात्परियोनेर्निषद्याहिरण्यदाददत्यन्नमस्मै ॥ इतिहिरण्यं ॥ याओषधीरित्यस्याथर्वणोभिषगोषधयोनुष्टुप् ॥ ओषधिप्र० ॐ याऽओषधीः पूर्वाजातादेवेभ्यस्त्रियुगंपुरा ॥ मनैनुबभ्रूणामहंशतंधामानिसप्तच ॥ अनेनशतौषधानि तदभावेदशमूलानि तदभावेसुवर्णंवा ॥ गंधद्वारामितिगंधंनिक्षिप्य ॥ ॐ गंधद्वारांदुराधर्षांनित्यपुष्टांकरीषिणीं ॥ ईश्वरींसर्वभूतानांतामिहोपह्वयेश्रियं ॥ ततःकांडात्कांडादितिदूर्वाःप्रक्षिप्य ॥ प्रवोयज्ञेष्वित्यस्यवसिष्ठोविश्वेदेवास्त्रिष्टुप् ॥ पल्लवप्रक्षेप० ॥ ॐ प्रवोयज्ञेषुदेवयंतोअर्चन्द्यावानमोभिःपृथिवीइषध्यै ॥ येषांब्रह्माण्यसमानिविप्राविष्वग्वियंतिवनिनोनशाखाः ॥ अनेनन्यग्रोधाद्युक्तवृक्षपल्लवैर्मुखमाच्छाद्य ॥ युवंवस्त्राणीत्यस्यौचथ्योदीर्घतमामित्रावरुणौत्रिष्टुप् ॥ कुंभवस्त्रयुग्मवेष्टनेवि० ॥ ॐ युवंवस्त्राणिपीवसावसाथेयुवोरच्छिद्रामंतवोहसर्गाः ॥ अवातिरतमनृतानिविश्वऋतेनमित्रावरुणासचेथे ॥ इतिवस्त्रयुग्मेनवेष्टयित्वाकुंभेतीर्थान्यावाहयेत् ॥ सर्वेसमुद्राःसरितस्तीर्थानिजलदानदाः ॥ आयांतुयजमानस्यदुरितक्षयकारकाः ॥ गंगेचयमुनेचैवगोदावरिसरस्वति ॥ नर्मदेसिंधोकावेरिजलेस्मिन्संनिधिंकुरु ॥ इमंमेगंगइत्यस्यासिंधुक्षित्प्रैयमेधोनद्योजगती ॥ तीर्थावाहने० ॥ ॐ इमंमेगंगेयमुनेसरस्वतिशुतुद्रिस्तोमंसचतापरुष्ण्या ॥ असिक्न्यामरुद्वृधेवितस्तयार्जीकीयेशृणुह्यासुषोमया ॥ इत्यावाह्य ॥ ततःकुंभमभिमृश्यजपेत् ॥ आपोहिष्ठेतितिसृणामांबरीषःसिंधुद्वीपआपोगायत्री ॥ नहितेक्षत्रमितितिसृणामाजीगर्तिःशुनःशेपोवरुणस्त्रिष्टुप् ॥ स्वादिष्ठयं

तितिसृणांमधुच्छंदाःपवमानसोमोगायत्री ॥ सर्वासांजपेविनि० ॥ ॐ आपोहिष्ठा० ऋ० ३ ॥ ॐ नहितेक्षत्रंनसहोनमन्युंवयं श्चनामीपतयंतआपुः ॥ नेमाऽआपोअनिमिषंचरंतीर्नयेवातस्यप्रमिनंत्यभ्वं ॥ अबुध्नेराजावरुणोवनस्योर्ध्वंस्तूपंददतेपूतदक्षः ॥ नीचीनाःस्थुरुपरिबुध्नएषामस्मेअंतर्निहिताःकेतवःस्युः ॥ उरुंहिराजावरुणश्चकारसूर्यायपंथामन्वेतवाऽउं ॥ अपदेपादाप्रतिधा तवेकरुतापवक्ताहृदयाविधश्चित् ॥ ३ ॥ ॐ स्वादिष्ठया० ऋ० ३॥ इतिकुंभमभिमंत्रयेत् ॥ (अत्रऋक्त्रयेणैवसिद्धेप्राचांसूक्तो पन्यासश्चिंत्यइतिकौस्तुभे ) अथयजमानःप्राङ्मुखःसमाहितचित्तआचार्यर्त्विक्सहितःपुण्याहवाचनंकुर्यात् ॥ अस्यनवग्रहकर्म णःपुण्याहंभवंतोब्रुवंत्विति ॥ एवंस्वस्तीति ॥ ऋद्धिंभ० ॥ श्रीरस्त्विति ॥ ततोग्रहपूजांकरिष्येइतिसंकल्प्य ततःपूर्वनिर्मित पीठेषुयथास्थानमुखीर्ग्रहप्रतिमाःस्थापयित्वातद्दक्षिणवामपार्श्वयोरधिदेवताप्रत्यधिदेवताप्रतिमेतदभिमुख्यौस्थापयेत् ॥ प्रति मानामसंभवेपुष्पाक्षतादिषुदेवताआवाहयेत् ॥ प्रत्यावाहनंप्रतिमायांपुष्पांजल्यर्पणं ॥ तत्रायंक्रमः ॥ प्रणवस्यपरब्रह्मपरमा त्मागायत्री ॥ व्यस्तसमस्तव्याहृतीनामत्रिभृगुभरद्वाजप्रजापतयोग्निवायुसूर्यप्रजापतयोगायत्र्युष्णिगनुष्टुब्बृहत्यः ॥ ग्रहावाहने विनियोगः ॥ ॐ भूरादित्यमावाहयामि ॥ ॐ भुवरादित्यमा० ॥ ॐ स्वरादित्यमा० ॐ भूर्भुवःस्वरादित्यमा० ॥ आकृष्णे नेत्यस्यहिरण्यस्तूपःसवितात्रिष्टुप् सूर्यावाहनेविनियोगः ॥ ॐ आकृष्णेनरजसावर्तमानोनिवेशयन्नमृतंमर्त्यंच ॥ हिरण्ययेनस वितारथेनादेवोयातिभुवनानिपश्यन् ॥ भगवन्नादित्यग्रहाधिपतेकाश्यपगोत्रकलिंगदेशेश्वरजपापुष्पोपमांगद्युतेद्विभुजपद्मा भयहस्तसिंदूरवर्णांबरमाल्यानुलेपनज्वलन्माणिक्यखचितसर्वांगाभरणभास्करतेजोनिधेत्रिलोकप्रकाशकत्रिदेवतामयमूर्ते न मस्तेसप्तद्वारुणध्वजपताकोपशोभितेनससाश्वरथवाहनेन मेरुंप्रदक्षिणीकुर्वन्नागच्छाग्निरुद्राभ्यांसहपद्मकर्णिकायांताम्रप्रतिमां

प्राङ्मुखींवर्तुलपीठेऽधितिष्ठपूजार्थंत्वामावाहयामि ॥ तद्दक्षिणपार्श्वे ॥ ॐ भूरादित्याधिदेवमग्निमावाहयामि ॥ ॐ भुवरादित्या धिदेव० ॥ ॐ स्वरादित्याधिदेव० ॥ ॐ भूर्भुवःस्वरादित्याधिदेव० ॥ अग्निंदूतंमेधातिथिरग्निर्गायत्री अग्न्यावाहनेविनि०॥ ॐ अग्निंदूतंवृणीमहेहोतारंविश्ववेदसं ॥ अस्ययज्ञस्यसुक्रतुं ॥ पिंगश्मश्रुकेशंपिंगाक्षित्रितयमरुणवर्णांगंछागस्थंसाक्षसूत्रंसप्ता र्चिषंशक्तिधरवरदहस्तद्वयमादित्याधिदेवमग्निमावाहयामि ॥ वामपार्श्वे ॥ ॐ भूरादित्यप्रत्यधिदेवंरुद्रमावाहयामि ॥ ॐ भुव रादित्यप्र० ॥ ॐ स्वरादित्यप्र० ॥ ॐ भूर्भुवःस्वरादित्यप्र० ॥ त्र्यंबकंमैत्रावरुणिर्वसिष्ठोरुद्रोनुष्टुप् रुद्रावाहनेविनियोगः ॥ ॐ त्र्यंबकंयजामहेसुगंधिंपुष्टिवर्धनं ॥ उर्वारुकमिवबंधनान्मृत्योर्मुक्षीयमामृतात् ॥ त्रिलोचनोपेतंपंचवक्त्रंवृषारूढंकपालशूल खट्वांगधारिणंचंद्रमौलिंसदाशिवमादित्यप्रत्यधिदेवंरुद्रमावा० ॥ १ ॥ ॥ तद्दक्षिणपूर्वदले ॥ ॐ भूःसोममावा० ॥ ॐ भुवः सोम० ॥ ॐ स्वःसोममावाहयामि ॥ ॐ भूर्भुवःस्वःसोममावाहयामि ॥ आप्यायस्वगोतमःसोमोगायत्री सोमावाहने० ॥ ॐ आ प्यायस्वसमेतुतेविश्वतःसोमवृष्ण्यं ॥ भवावाजस्यसंगथे ॥ भगवन्सोमद्विजाधिपतेसुधामयशरीरअत्रिगोत्रयामुनदेशेश्वरगो क्षीरधवलांगकांते द्विभुजगदावरदानांकितकरशुक्लांबरमाल्यानुलेपनसर्वांगमुक्तमौक्तिकाभरणरमणीयसमस्तलोकाप्यायकदे वतास्वाद्यमूर्तेनमस्तेसन्नद्धधवलध्वजपताकोपशोभितेनदशश्वेताश्वरथवाहनेनमेरुंप्रदक्षिणीकुर्वन्नागच्छाद्भिरुमयाचसहपश्चा ग्नेयदलमध्येस्फाटिकप्रतिमांप्रत्यङ्मुखींचतुरस्रपीठेऽधितिष्ठपूजार्थंत्वामावाहयामि ॥ तद्दक्षिणपार्श्वे ॥ ॐ भूःसोमाधिदेवताअ पआवा० ॥ ॐ भुवःसोमा० ॥ ॐ स्वःसोमा० ॥ ॐ भूर्भुवःस्वःसोमा० ॥ अप्सुमइत्यस्यांबरीपःसिंधुद्वीपआपोगायत्री ॥ अबावा० ॥ ॐ अप्सुमेसोमोअब्रवीदंतर्विश्वानिभेषजा ॥ अग्निंचविश्वशंभुवं ॥ स्त्रीरूपधारिणीःश्वेतवर्णामकरवाहनाःपाश

कलशधारिणीमुक्ताभरणभूषिताःसोमाधिदेवताअपआवा० ॥ तद्वामपार्श्वे ॥ॐ भूःसोमप्रत्यधिदेवतामुमामावा० ॥ ॐ भुवः सोमप्र० ॥ ॐ स्वःसोमप्र० ॥ भूर्भुवःस्वःसोमप्र०॥गौरीर्मिमायदीर्घतमाउमाजगती उमावा० ॥ ॐ गौरीर्मिमायसलिलानि तक्षत्येकपदीद्विपदीसाचतुष्पदी ॥ अष्टापदीनवपदीबभूवुषीसहस्राक्षरापरमेव्योमन् ॥ अक्षसूत्रकमलदर्पणकमंडलुधारिणीं त्रिदशपूजितांसोमप्रत्यधिदेवतामुमामावाह० ॥ २ ॥ ॥ दक्षिणत्रिकोणमंडले ॥ ॐ भूरंगारकमावाहयामि ॥ ॐ भुवोंगारक० ॥ ॐ स्वरंगारक० ॥ ॐ भूर्भुवःस्वरंगारक० ॥ अग्निर्मूर्धाविरूपोंगारकोगायत्री अंगारकावाहने० ॥ अग्निर्मूर्धादिवः ककुत्पतिःपृथिव्याअयं ॥ अपांरेतांसिजिन्वति ॥ भगवन्नंगारकअग्न्याकृतेभारद्वाजगोत्रअवंतिदेशेश्वरज्वालापुंजोपमांगद्युते चतुर्भुजशक्तिशूलगदाखड्गधारिन् रक्तांबरमाल्यानुलेपनप्रवालभूषिताभरणसर्वांगदुर्धरालोकदीप्तेनमस्तेसन्नद्धरक्तध्वजपताकोपशोभितेनरक्तमेषरथवाहनेनमेरुंप्रदक्षिणीकुर्वन्नागच्छभूमिस्कंदाभ्यांसहपद्मदक्षिणदलमध्ये रक्तचंदनप्रतिमांदक्षिणामुखीं त्रिकोणपीठेऽधितिष्ठपूजार्थंत्वामावाहयामि ॥ तद्दक्षिणपार्श्वे ॥ ॐ भूरंगारकाधिदेवतांभूमिमावाहयामि ॥ ॐ भुवोंगा० ॥ ॐ स्वरंगा० ॥ ॐ भूर्भुवःस्वरंगा० ॥ स्योनापृथिवीत्यस्यमेधातिथिर्भूमिर्गायत्री ॥ भूम्यावाहने० ॥ ॐ स्योनापृथिविभवानृक्षरानिवेशनी ॥ यच्छानःशर्मसप्रथः ॥ शुक्लवर्णांदिव्याभरणभूषितांचतुर्भुजांसौम्यवपुषंचंडांशुसदृशांबरांरत्नपात्रसस्यपात्रौषधिपात्रपद्मोपेतकरांचतुर्दिङ्नागपृष्ठगतामंगारकाधिदेवतांभूमिमावा०॥तद्वामपार्श्वे ॥ ॐ भूरंगारकप्रत्यधिदेवंस्कंदमावा० ॥ ॐ भुवोंऽगारक० ॥ ॐ स्वरंगारक० ॥ ॐ भूर्भुवःस्वरंगारक० ॥ कुमारश्चिदित्यस्यगृत्समदःस्कंदस्त्रिष्टुप् स्कंदावाहने० ॥ ॐ कुमारश्चित्पितरंवंदमानंप्रतिनानामरुद्रोपयंतं ॥ भूरेर्दातारंसत्पतिंगृणीषेस्तुतस्त्वंभेषजारास्यस्मे ॥ षण्मुखंशिखंडकविभूषणं

रक्तांबरधरंमयूरयानंकुक्कुटघंटापताकाशक्त्युपेतंचतुर्भुजमंगारकप्रत्यधिदेवंस्कंदमावाहयामि ॥३॥ ततःप्रागुत्तरदले ॥ ॐभूर्बु
धमावाहयामि ॥ ॐ भुवोबुध० ॥ ॐ स्वर्बुध० ॥ ॐ भूर्भुवःस्वर्बुधमावाहयामि॥उद्बुध्यध्वंबुधोबुधस्त्रिष्टुप् ॥ बुधावाहने०॥
ॐ उद्बुध्यध्वंसमनसःसखायःसमग्निमिंध्वंबहवःसनीळाः ॥ दधिक्रामग्निमुषसंचदेवीमिंद्रावतोवसेनिह्वयेवः ॥ भगवन्सौम्य
सौम्याकृतेसर्वज्ञानमयात्रिगोत्रमगधदेशेश्वरकुंकुमवर्णोपमांगद्युतेचतुर्भुजखड्गखेटकगदावरदानांकितपीतांबरमाल्यानुलेपन
मरकताभरणालंकृतसर्वांगविबुधपते नमस्तेसन्नद्धपीतध्वजपताकोपशोभितेनचतुःसिंहरथवाहनेनमेरुंप्रदक्षिणीकुर्वन्नागच्छवि
ष्णुपुरुषाभ्यांसहैशानदलमध्ये सुवर्णप्रतिमामुदङ्मुखींवाणाकारपीठेधितिष्ठपूजार्थंत्वामावा॰यामि ॥ तद्दक्षिणपार्श्वे ॥ ॐभूर्बु
धादिदेवंविष्णुमावा० ॥ ॐ भुवोबुधा० ॥ ॐ स्वर्बुधा० ॥ ॐ भूर्भुवःस्वर्बुधा[illegible] ॥ इदंविष्णुर्मेधातिथिर्विष्णुर्गायत्री
विष्ण्वावा० ॥ ॐ इदंविष्णुर्विचक्रमेत्रेधानिदधेपदं ॥ समूढमस्यपांसुरे ॥ कौमोदकीपद्मशंखच[illegible]क्रोपेतंचतुर्भुजंसौम्याधिदेवं
विष्णुमा० ॥ तद्वामपार्श्वे ॥ ॐ भूर्बुधप्रत्यधिदेवंपुरुषमावा० ॥ ॐ भुवोबुध० ॥ ॐ स्वर्बुध० ॥ ॐ भूर्भुवःस्वर्बुध० ॥ सह
स्रशीर्षानारायणःपुरुषोनुष्टुप् पुरुषावाह० ॥ ॐ सहस्रशीर्षापुरुषःसहस्राक्षःसपस्रपात् ॥ सभूमिंविश्वतोवृत्वात्यतिष्ठद्दशांगुलं ॥
कौमोदकीपद्मशंखचक्रोपेतंचतुर्भुजंसौम्यप्रत्यधिदेवंपुरुषमावाहयामि ॥ ४ ॥ ततउत्तरदले ॥ ॐ भूर्बृहस्पतिमावा० ॥ ॐ भुवो
बृह०॥ॐ स्वर्बृहस्पति० ॥ ॐ भूर्भुवःस्वर्बृह० ॥ बृहस्पतेअतीत्यस्यगृत्समदोबृहस्पतिस्त्रिष्टुप् बृहस्पत्यावाहने० ॥ ॐ बृहस्पते
अतियदर्योअर्हाद्द्युमद्विभातिक्रतुमज्जनेषु ॥ यद्दीदयच्छवसऋतप्रजाततदस्मासुद्रविणंधेहिचित्रं ॥ भगवन्बृहस्पतेसमस्तदेव
ताचार्यांगिरसगोत्रसिंधुदेशेश्वरतप्तसुवर्णसदृशांगदीप्तेचतुर्भुजदंडकमंडल्वक्षसूत्रवरदानांकितपीतांबरमाल्यानुलेपनपुष्पराग

मयाभरणरमणीय सर्वविद्याधिपतेनमस्तेसन्नद्धपीतध्वजपताकोपशोभितेनपीताश्वरथवाहनेनमेरुंप्रदक्षिणीकुर्वन्नागच्छेंद्रब्रह्म
भ्यांसहपद्मोत्तरदलमध्ये सुवर्णप्रतिमामुदङ्मुखींदीर्घचतुरस्रपीठेऽधितिष्ठपूजार्थंत्वामावाहयामि ॥ तद्दक्षिणपार्श्वे ॥ ॐ भूर्बृ
हस्पत्यधिदेवमिंद्रमावाहयामि ॥ ॐ भुवोबृह० ॥ ॐ स्वर्बृह० ॥ ॐ भूर्भुवःस्वर्बृह० ॥ इंद्रश्रेष्ठानीत्यस्यगृत्समदइंद्रस्त्रिष्टुप् ॥
इंद्रावाहने० ॥ ॐ इंद्रश्रेष्ठानिद्रविणानिधेहिचित्तिंदक्षस्यसुभगत्वमस्मे ॥ पोषंरयीणामरिष्टिंतनूनांस्वाद्मानंवाचःसुदिनत्व
मह्नां ॥ चतुर्दंतगजारूढंवज्रांकुशधरंशचीपतिंनानाभरणभूषितंबृहस्पत्यधिदेवमिंद्रमावाहयामि ॥ तद्वामपार्श्वे ॥ ॐ भूर्बृह
स्पतिप्रत्यधिदेवंब्रह्माणमावा० ॥ ॐ भुवोबृह० ॥ ॐ स्वर्बृह० ॥ भूर्भुवःस्वर्बृह० ॥ ब्रह्मणातइत्यस्यविश्वामित्रोब्रह्मात्रिष्टुप्
ब्रह्मावाहनेविनि० ॥ ब्रह्मणातेब्रह्मयुजायुनज्मिहरीसखायासधमादआशू ॥ स्थिरंरथंसुखमिंद्राधितिष्ठन्प्रजानन्विद्वाँउपया
हिसोमं ॥ पद्मासनस्थंजटिलंचतुर्मुखमक्षमालास्रुवपुस्तककमंडलुधारिणंकृष्णाजिनवाससंपार्श्वस्थितहंसंबृहस्पतिप्रत्यधिदेवंब्र
ह्माणमावा० ॥ ५ ॥ ॥ ततःप्राग्दले ॥ ॐ भूःशुक्रमावा० ॥ ॐ भुवःशुक्र० ॥ ॐ स्वःशुक्र० ॥ ॐ भूर्भुवःस्वःशुक्रमावा० ॥
शुक्रंतइत्यस्यभरद्वाजःशुक्रस्त्रिष्टुप् शुक्रावाहने० ॥ ॐ शुक्रंतेअन्यद्यजतंतेअन्यद्विषुरूपेअहनीद्यौरिवासि ॥ विश्वाहिमायाअव
सिस्वधावोभद्रातेपूषन्निहरातिरस्तु ॥ भगवन्भार्गवसमस्तदैत्यगुरोभार्गवगोत्रभोजकटदेशेश्वररजतोज्ज्वलांगकांतेचतुर्भुजदं
डकमंडल्वक्षसूत्रवरदानांकितशुक्लांबरमाल्यानुलेपनवस्त्राभरणभूषितसर्वांगसमस्तनीतिशास्त्रनिपुणमतेनमस्तेसन्नद्धशुक्लध्वज
पताकोपशोभितेनशुक्लाश्वसहितेनरथेनमेरुंप्रदक्षिणीकुर्वन्नागच्छेंद्राणींद्राभ्यांसहपूर्वदलमध्येरजतप्रतिमांप्राङ्मुखींपंचकोणपी
ठेऽधितिष्ठपूजार्थंत्वामावा० ॥ तद्दक्षिणपार्श्वे ॥ ॐ भूःशुक्राधिदेवतामिंद्राणीमावा० ॥ ॐ भुवःशु० ॥ ॐ स्वःशु० ॥ ॐ भूर्भु

वःस्वःशु० ॥ इंद्राणीमास्वित्यस्यवृषाकपिरिंद्राणीपंक्तिः इंद्राण्यावा० ॥ ॐ इंद्राणीमासुनारिषुसुभगामहमश्रवं ॥ नह्यस्याअ
परंचनजरसामरतेपतिर्विश्वस्मादिंद्रउत्तरः ॥ संतानमंजरीवरदानधरद्विभुजांशुक्राधिदेवतामिंद्राणीमावा० ॥ तद्वामपार्श्वे ॥
ॐ भूःशुक्रप्रत्यधिदेवमिंद्रमावा० ॥ ॐ भुवःशुक्र० ॥ ॐ स्वःशुक्र० ॥ ॐ भूर्भुवःस्वःशुक्र० ॥ इंद्रमिद्देवतातयइत्यस्यमेधा
तिथिरिंद्रोबृहती इंद्रावाहनेविनि० ॥ ॐ इंद्रमिद्देवतातयइंद्रंप्रयत्यध्वरे ॥ इंद्रंसमीकेवनिनोहवामहइंद्रंधनस्यसातये ॥ चतुर्दंत
गजारूढंवज्रांकुशधरंशचीपतिंनानाभरणभूषितंभार्गवप्रत्यधिदेवमिंद्रमावा० ॥ ६ ॥ ॥ ततःपश्चिमदले ॥ ॐभूःशनैश्चरमावा
हयामि ॥ ॐ भुवःशनै० ॥ ॐ स्वःशनै० ॥ ॐ भूर्भुवःस्वःशनैश्चरमावाहयामि ॥ शमग्निरिरिंबिठिःशनैश्चरउष्णिक् शनैश्चरा
वाहने० ॥ शमग्निरग्निभिःकरच्छंनस्तपतुसूर्यः ॥ शंवातोवात्वरपाअपस्रिधः ॥ भगवन्शनैश्चरभास्करतनयकाश्यपगोत्र
सौराष्ट्रदेशेश्वरकज्जलसमानांगकांतेचतुर्भुजचापतूणीरकृपाणाभयांकितनीलांबरमाल्यानुलेपननीलरत्नभूषणालंकृतसर्वांगस
सत्तभुवनभीषणामर्षमूर्तेनमस्तेसन्नद्धनीलध्वजपताकोपशोभितेननीलगृध्ररथवाहनेनमेरुंप्रदक्षिणीकुर्वन्नागच्छप्रजापतियमा
भ्यांसहपद्मपश्चिमदलमध्ये कालायसप्रतिमांप्रत्यङ्मुखींचापाकारपीठेऽधितिष्ठपूजार्थंत्वामावाहयामि ॥ तद्दक्षिणपार्श्वे ॥
ॐ भूःशनैश्चराधिदेवंप्रजापतिमा० ॥ ॐ भुवःशनै० ॥ ॐ स्वःशनै० ॥ ॐ भूर्भुवःस्वःशनै० ॥ प्रजापतेहिरण्यगर्भःप्रजापतिस्त्रि
ष्टुप्प्रजापत्यावा० ॥ ॐ प्रजापतेनत्वदेतान्यन्योविश्वाजातानिपरिताबभूव ॥ यत्कामास्तेजहुमस्तन्नोअस्तुवयंस्यामपतयोरयी
णां ॥ यज्ञोपवीतिनंहंसस्थमेकवक्त्रमक्षमालास्रुवपुस्तककमंडलुसहितंचतुर्भुजंशनैश्चराधिदेवंप्रजापतिमावा० ॥ तद्वामपार्श्वे ॥
ॐभूःशनैश्चरप्रत्यधिदेवंयममावा० ॥ ॐ भुवःशनै० ॥ ॐ स्वःशनै० ॥ ॐ भूर्भुवःस्वःशनै० ॥ यमायसोममित्यस्ययमोयमोनु

धुप्ययमावा० ॥ ॐ यमायसोमंसुनुतयमायजुहुताहविः ॥ यमंहयज्ञोगच्छत्यग्निदूतोअरंकृतः ॥ ईषत्पीनंदंडहस्तंरक्तसदृशंपाश धरं कृष्णवर्णमहिषारूढंसर्वाभरणभूषितंशनैश्चरप्रत्यधिदेवंयममावा० ॥ ७ ॥ ॥ ततःप्रत्यग्दक्षिणदले ॥ भूराहुमावा० ॥ भुवोराहु० ॥ ॐ स्वाराहु० ॥ ॐ भूर्भुवःस्वाराहुमा० ॥ कयानइत्यस्यवामदेवोराहुर्गायत्री ॥ राह्वावा० ॥ ॐ कयानश्चित्र आभुवदूतीसदावृधःसखा ॥ कयाशचिष्ठयावृता ॥ भगवन्राहोरविसोममर्दनसिंहिकानंदनपैठीनसगोत्रबर्बरदेशेश्वरकालमे घद्युतेव्याघ्रवदनचतुर्भुजखड्गचर्मशूलवरदानांकितकृष्णांबरमाल्यानुलेपनगोमेदकाभरणभूषितसर्वांगशौर्यनिधे नमस्तेसन्नद्ध कृष्णध्वजपताकोपशोभितेनकृष्णसिंहरथवाहनेनमेरुंप्रदक्षिणीकुर्वन्नागच्छसर्पकाला ग्यांसहपद्मनैर्ऋतदलमध्ये सीसकप्रतिमां दक्षिणामुखीं शूर्पाकारपीठेधितिष्ठपूजार्थंत्वामावा०॥तद्दक्षिणपार्श्वे॥ ॐ भूराह्वधिदेवान्सर्पानावाहयामि ॥ ॐ भुवोराह्व० ॥ ॐ स्वाराह्व० ॥ ॐ भूर्भुवःस्वाराह्व० ॥ आयंगौःसार्पराज्ञीसर्पागायत्रीसर्पावा०॥ॐ आयंगौःपृश्निरक्रमीदसदन्मातरंपुरः॥ पितरंचप्रयन्त्स्वः ॥ अक्षसूत्रधरान्कुंडलाकारपुच्छयुक्तानेकभोगांस्त्रिभोगान्भीष०॥न्राह्वधिदेवान्सर्पानावा०॥ तद्वामपार्श्वे॥ ॐ भूराहुप्रत्यधिदेवंकालमावा०॥ॐ भुवोरा० ॥ ॐ स्वारा० ॥ ॐ भूर्भुवःस्वारा० ॥ परंमृत्योसंकुसुकःकालस्त्रिष्टुप् काला वाहने० ॥ ॐ परंमृत्योअनुपरेहिपंथांयस्तेस्वइतरोदेवयानात् ॥ चक्षुष्मतेशृण्वतेतेब्रवीमिमानःप्रजांरीरिषोमोतवीरान् ॥ करा लवदनंनीलांगंभीषणंपाशदंडधरंसर्पवृश्चिकरोमाणंराहुप्रत्यधिदेवंकालमावा० ॥ ८ ॥ ॥ ततःप्रत्यगुत्तरदले ॥ ॐ भूःकेतु मावा० ॥ ॐ भुवःकेतुमा० ॥ ॐ स्वःकेतु० ॥ ॐ भूर्भुवःस्वःकेतुमा० ॥ केतुंकृण्वन्नित्यस्यमधुच्छंदाःकेतुर्गायत्री केत्वा वाहने० ॥ ॐ केतुंकृण्वन्नकेतवेपेशोमर्याअपेशसे ॥ समुषद्भिरजायथाः ॥ भगवन्केतोकामरूपजैमिनिगोत्रमध्यदेशेश्वरधूम्र

वर्णध्वजाकृतेद्विभुजगदावरदानांकितचित्रांबरमाल्यानुलेपन वैडूर्यमयाभरणभूषितसर्वांगचित्रशक्ते नमस्तेसन्नद्धचित्रध्वजप
ताकोपशोभितेनचित्रकपोतरथवाहनेनमेरुंप्रदक्षिणीकुर्वन्नागच्छब्रह्मचित्रगुप्ताभ्यां सहपश्चवायव्यदलमध्ये कांस्यप्रतिमांदक्षि
णामुखींध्वजाकारपीठेधितिष्ठपूजार्थंत्वामावाहयामि ॥ तद्दक्षिणपार्श्वे ॥ ॐ भूःकेत्वधिदेवंब्रह्माणमावा० ॥ ॐभुवःकेत्वधि०॥
ॐ स्वःकेत्वधि० ॥ भूर्भुवःस्वःकेत्वधि० ॥ ब्रह्मजज्ञानंवामदेवोब्रह्मात्रिष्टुप् ब्रह्मावा० ॥ ॐ ब्रह्मजज्ञानंप्रथमंपुरस्ताद्विसी
मतःसुरुचोवेनआवः ॥ सबुध्न्याउपमाअस्यविष्ठाःसतश्चयोनिमसतश्चविवः ॥ पद्मासनस्थंजटिलंचतुर्मुखमक्षमालास्रुवपुस्तक
कमंडलुधरंकृष्णाजिनवाससंपार्श्वस्थितहंसंकेत्वधिदेवंब्रह्माणमावा० ॥ तद्वामपार्श्वे॥ ॐ भूःकेतुप्रत्यधिदेवंचित्रगुप्तमावा० ॥
ॐ भुवःकेतु० ॥ ॐस्वःकेतु० ॥ ॐ भूर्भुवःस्वःकेतु० ॥ सचित्रचित्रमित्यस्यभरद्वाजश्चित्रगुप्तस्त्रिष्टुप् चित्रगुप्तावाहने० ॥ ॐ
सचित्रचित्रंचितयंतमस्मेचित्रंक्षत्रचित्रतमंवयोधां ॥ चंद्रंरयिंपुरुवीरंबृहंतंचंद्रचंद्राभिर्गृणतेयुवस्व ॥ उदीच्यवेषधरंसौम्यदर्श
नंलेखनीपत्रोपेतद्विभुजंकेतुप्रत्यधिदेवंचित्रगुप्तमावाहयामि ॥ ९ ॥ ॥ अथकर्मसाद्गुण्यदेवताः ॥ शनेर्वायुप्रदेशे ॥ ॐ भू
र्विनायकमावाहयामि० ॥ ॐ भुवोविना० ॥ ॐस्वर्विना० ॥ ॐ भूर्भुवःस्वर्विना० ॥ आतूनइत्यस्यकाण्वःकुसीदोविनायको
गायत्री विनायकावाहने॥ ॥ ॐ आतूनइंद्रक्षुमंतंचित्रंग्राभंसंगृभाय॥महाहस्तीदक्षिणेन ॥ त्रिनेत्रंगजाननंनागयज्ञोपवीतिनंचं
द्रधरंदंताक्षमालापरशुमोदकोपेतंचतुर्भुजंविना० ॥ तद्दक्षिणतः ॥ ॐ भूर्दुर्गामावाह० ॥ ॐ भुवोदुर्गा० ॥ ॐ स्वर्दुर्गा० ॥
ॐ भूर्भुवःस्वर्दुर्गा० ॥ जातवेदसेकश्यपोदुर्गात्रिष्टुप्॥ दुर्गावाहने० ॥ ॐ जातवेदसेसुनवामसोममरातीयतोनिदहातिवेदः ॥
सनःपर्षदतिदुर्गाणिविश्वानावेवसिंधुंदुरितात्यग्निः॥ शक्तिबाणशूलखड्गचक्रचंद्रबिंबखेटकपालपरशुटंकोपेतांदशभुजांसिंहारू

ढांदुर्गाख्यदैत्यासुहारिणींदुर्गामा० ॥ तद्दक्षिणतः॥ ॐ भूःक्षेत्रपालमावा०॥भुवःक्षेत्रपा० ॥ ॐ स्वःक्षेत्रपा० ॥ ॐ भूर्भुवःस्वःक्षेत्रपाल० ॥ क्षेत्रस्यपतिनावामदेवःक्षेत्रपालोनुष्टुप्॥क्षेत्रपालावा० ॥ ॐ क्षेत्रस्यपतिनावयंहितेनेवजयामसि॥गामश्वंपोषयित्न्वासनोमृळातीदृशे ॥ श्यामवर्णत्रिलोचनमूर्ध्वकेशंसुदंष्ट्रंभ्रुकुटीकुटिलाननंनूपुरालंकृतांघ्रिंसर्पमेखलयायुतंसर्पागमतिक्रुद्धंक्षुद्रघंटाबद्धगुल्फावलंबिनिनृकरोटीमालाधारिणमुरगकौपीनंचंद्रमौलिंदक्षिणहस्तैःशूलवेतालखड्गदुंदुभीन्दधानंवामहस्तैःकपालघंटाचर्मचापान्दधानंभीमंदिग्वाससममितद्युतिंक्षेत्रपालमावा० ॥ तद्दक्षिणतः ॥ ॐ भूर्वायुमा० ॥ ॐ भूवोवायु० ॥ ॐ स्वर्वायु० ॥ ॐ भूर्भुवःस्वर्वायुमा० ॥ ऋणाशिशुरित्यस्यत्रितोवायुरुष्णिक् वाय्वावाहने० ॥ ॐ ऋाणाशिशुर्महीनांहिन्वन्नृतस्यदीधितिं ॥ विश्वापरिप्रियाभुवदधद्विता॥धावद्धरिणपृष्ठगतंध्वजवरदानधारिणंधूम्रवर्णवायुमावा०॥तद्दक्षिणतः०॥ॐ भूराकाशमावा० ॥ ॐ भूवआका० ॥ ॐ स्वराकाश० ॥ ॐ भूर्भुवःस्वराकाश०॥आदित्प्रत्नस्यवत्सआकाशोगायत्री आकाशावाहने० ॥ ॐ आदित्प्रत्नस्यरेतसोज्योतिष्पश्यंतिवासरं ॥ परोयदिध्यतेदिवा ॥ नीलोत्पलाभंनीलांबरधारिणंचंद्रार्कोपेतंद्विभुजंषंढमाकाशमा० ॥ तद्दक्षिणतः॥ ॐ भूरश्विनावावाहयामि॥ ॐ भुवोश्विनावा०॥ ॐस्वरश्विनावा० ॥ ॐभूर्भुवःस्वरश्विना० ॥ अश्विनावर्तीराहूगणोगोतमोश्विनावुष्णिक् अश्व्यावा० ॥ ॐ अश्विनावर्तिरस्मदागोमद्दस्राहिरण्यवत् ॥ अर्वाग्रथंसमनसानियच्छतं ॥ प्रत्येकमौषधिपुस्तकोपेतदक्षिणवामहस्तावन्योन्यसंसक्तदेहावेकस्यदक्षिणपार्श्वेअपरस्यवामपार्श्वेरत्नभांडवरशुक्लांबरधारिनारीयुग्मोपेतौदेवभिषजावश्विनावावाहयामि ॥ ६ ॥ ॥ अथक्रतुसंरक्षकदेवताः॥ प्राग्दलाग्रे ॥ ॐ भूरिंद्रमावा० ॥ ॐ भुवइंद्र० ॥ ॐ स्वरिंद्र० ॥ ॐ भूर्भुवःस्वरिंद्र० ॥ इंद्रंवोमधुच्छंदाइंद्रोगायत्री इंद्रावा० ॥ ॐ इंद्रंवोवि

श्वतस्परिहवामहेजनेभ्यः ॥ अस्माकमस्तुकेवलः ॥ स्वर्णवर्णसहस्राक्षमैरावतवाहनंवज्रपाणिंशचीप्रियमिंद्रमावा० ॥ आग्ने
यदलाग्रे ॥ ॐ भूरग्निमा० ॥ ॐ भुवोग्निमा० ॥ स्वरग्निमा० ॥ ॐ भूर्भुवःस्वरग्नि० ॥ अग्निमीळेवैश्वामित्रोमधुच्छंदाअ
ग्निर्गायत्री अग्न्यावाहने० ॥ ॐ अग्निमीळेपुरोहितंयज्ञस्यदेवमृत्विजं ॥ होतारंरत्नधातमं ॥ रक्तवर्णसाक्षसूत्रंससार्चिपंससहस्तं
शत्त्यन्नस्रुक्स्रुवतोमरव्यजनघृतपात्राणिदधानंस्वाहाप्रियंमेषवाहनमग्निमावा० ॥ याम्यदलाग्रे ॥ ॐ भूर्यममावाहयामि ॥
ॐ भुवोयम० ॥ ॐ स्वर्यम० ॥ ॐ भूर्भुवःस्वर्यममा० ॥ यमायसोमंयमोयमोनुष्टुप् यमावाहने० ॥ ॐ यमायसोमंसुनुतयं
मायंजुहुताहविः ॥ यमंहंयज्ञोगच्छत्यग्निर्दूतोअरंकृतः ॥ रक्तवर्णदंडधरंमहिषवाहनमिलाप्रियंयममावा० ॥ नैर्ऋतदलाग्रे ॥
ॐ भूर्निर्ऋतिमावा० ॥ ॐ भुवोनिर्ऋति० ॥ ॐ स्वर्निर्ऋति० ॥ ॐ भूर्भुवःस्वर्निर्ऋतिमा० ॥ मोषुणःकाण्वोनिर्ऋतिर्गायत्री
निर्ऋत्यावा० ॥ ॐ मोषुणःपरापरानिर्ऋतिर्दुर्हणावधीत् ॥ पदीष्टतृष्णयासह ॥ नीलवर्णखड्गचर्मधरमूर्ध्वकेशंनरवाहनंकालि
काप्रियंनिर्ऋतिमा० ॥ पश्चिमदलाग्रे ॥ ॐ भूर्वरुणमावा० ॥ ॐ भुवोवरुण० ॥ ॐ स्वर्वरुण० ॥ ॐ भूर्भुवःस्वर्वरुण० ॥
उदुत्तममाजीगर्तिःशुनःशेपोवरुणोगायत्री वरुणावाहने० ॥ ॐ उदुत्तमंमुमुग्धिनोविपाशंमध्यमंचृत ॥ अवाधमानिजीवसे॥
रक्तवर्णनागपाशधरंमकरवाहनंपद्मिनीप्रियंसुवर्णभूषणंवरुणमावाहयामि ॥ वायव्यदलाग्रे ॥ ॐ भूर्वायुमावा० ॥ ॐ भुवो
वायु० ॥ ॐ स्वर्वायु० ॥ भूर्भुवःस्वर्वायु० ॥ तववायोव्यश्वोवायुर्गायत्री वाय्वावाहने० ॥ ॐ तववायवृतस्पतेत्वष्टुर्जा
मातरद्भुत ॥ अवांस्यावृणीमहे ॥ श्यामवर्णहेमदंडधरंकृष्णमृगवाहनंजगत्प्राणरूपंमोहिनीप्रियंवायुमा० ॥ उत्तरदलाग्रे ॥
ॐ भूःकुबेरमावा० ॥ ॐ भुवःकु० ॥ ॐ स्वःकु० ॥ भूर्भुवःस्वःकुबेरमा० ॥ त्वंनःसोमराहूगणोगोतमःकुबेरोगायत्री कुबेरा

वाहनेविनि० ॥ ॐ त्वंनःसोमविश्वतोरक्षाराजन्नघायतः ॥ नरिष्येत्त्वावतःसखा ॥ स्वर्णवर्णनिधीश्वरंकुंतपाणिमश्ववाहनंचि
त्रिणीप्रियंकुबेरमा० ॥ ऐशानदलाग्रे ॥ ॐ भूरीशानमावा० ॥ ॐ भुवईशा० ॥ ॐ स्वरीशान०॥ॐ भूर्भुवःस्वरीशान० ॥
कद्रुद्रायेत्यस्यकण्वईशानोगायत्री ईशानावा० ॥ ॐ कद्रुद्रायप्रचेतसेमीळ्हुष्टमायतव्यसे ॥ वोचेमशंतमंहृदे ॥ शुद्धस्फटिक
वर्णवरदाभयशूलाक्षसूत्रधरंवृषभवाहनंगौरीप्रियमीशानमावाहयामि ॥ ८ ॥ एवमेकचत्वारिंशद्देवताआवाह्य॥तत्त्वायाम्या
जीगर्तिःशुनःशेपःसकृत्रिमोवैश्वामित्रोवरुणस्त्रिष्टुप् ॥ वरुणावाहनेवि०॥ॐ तत्त्वायामिब्रह्मणावंदमानस्तदाशास्तेयजमानो
हविर्भिः ॥ अहेळमानोवरुणेहबोध्युरुशंसमानआयुःप्रमोषीः ॥ इतिकलशेचवरुणमावाह्यपूजयेत् ॥ तत्रचंदनादिषुग्रहभेदेन
व्यवस्था ॥ चंदनोमलयजोदेवदारुःकुंकुमंमनःशिलाशंखपिष्टंतिलपिष्टंकेतकीरजःकस्तूरीतिनवानुलेपनानि मलयजमेववा ॥
रक्तपद्मंकुमुदंरक्तकरवीरंपाटलंचंपकंकुंदंइंदीवरंकृष्णधत्तूरंतच्चित्रवर्णमितिनवपुष्पाणि सर्वेषांमल्लिकैववा ॥ ग्रहानपिपुष्पांज
लिप्रयोगेणावाहनमंत्रैराघाह्यनमोंतैर्नामभिःक्रमेणपुष्पांतानुपचारानर्पयेत् ॥ नामभिःआदित्यायनमःइत्येवंरूपैः ॥ एवंग्रहपी
ठगतसर्वदेवतानांपुष्पांतपूजांकृत्वाकुंडेस्थंडिलेवाआचार्योग्निंप्रतिष्ठाप्यान्वादध्यात्॥अथान्वाधानादिप्रयोगः॥ऋत्विग्भिरन्वा
रब्धःसमिद्द्वयमादायदेशकालौसंकीर्त्यक्रियमाणेग्रहयज्ञहोमेदेवतापरिग्रहार्थमित्यादिचक्षुषीआज्येनेत्यंतमुक्त्वा अत्रप्रधानं॥
आदित्यंप्रत्येकंशतसंख्याभिरर्कसमिच्चर्वाज्याहुतिभिः अग्निंरुद्रंचप्रत्येकंदशसंख्याभिस्तदाहुतिभिः१सोमंप्रत्येकंशतसंख्याभिः
पलाशसमिच्चर्वाज्याहुतिभिः अप्उमांचप्रत्येकंदशसंख्याभिस्तदाहुतिभिः२अंगारकंप्रत्येकंशतसंख्याभिःखादिरसमिच्चर्वाज्या
हुतिभिः भूमिंस्कंदंचप्रत्येकंदशसंख्याभिस्तदाहुतिः ३ बुधंप्रत्येकंशतसंख्याभिरपामार्गसमिच्चर्वाज्याहुतिभिः विष्णुंपुरुषंच

प्रत्येकंदशसंख्याभिस्तदाहुतिभिः ४ बृहस्पतिंप्रत्येकंशतसंख्याभिरश्वत्थसमिच्चर्वाज्याहुतिभिः इंद्रंब्रह्माणंचप्रत्येकंदशसंख्या
भिस्तदाहुतिभिः ५ शुक्रंप्रत्येकंशतसंख्याभिरौदुंबरसमिच्चर्वाज्याहुतिभिः इंद्राणीमिंद्रंचप्रत्येकंदशसंख्याभिस्तदाहुतिभिः
६ शनिंप्रत्येकंशतसंख्याभिःशमीसमिच्चर्वाज्याहुतिभिः प्रजापतिंयमंचप्रत्येकंदशसंख्याभिस्तदाहुतिभिः ७ राहुंप्रत्येकंशतसं
ख्याभिर्दूर्वासमिच्चर्वाज्याहुतिभिः सर्पान्कालंचप्रत्येकंदशसंख्याभिस्तदाहुतिभिः ८ केतुंप्रत्येकंशतसंख्याभिःकुशसमिच्चर्वा
ज्याहुतिभिः ब्रह्माणंचित्रगुप्तंचप्रत्येकंदशसंख्याभिस्तदाहुतिभिः ९ विनायकंदुर्गांक्षेत्रपालंवायुमाकाशमश्विनौ इंद्रमग्निंयमं
निर्ऋतिंवरुणंवायुंकुबेरंईशानंचप्रत्येकंपंचसंख्याभिःपलाशसमिच्चर्वाज्याहुतिभिः ॥ अग्निंवायुंसूर्यंप्रजापतिंचैकैकयाप्रभूतव्री
हितिलाहुत्या सूर्यंत्रयोदशवारमाज्येन अग्निंचतुस्त्रिंशद्वारमाज्येन रुद्रंद्वात्रिंशद्वारमाज्येन शेषेणस्विष्टकृतमित्यादि ॥ पात्रा
सादनकालेवह्वीनांचरुद्रासनस्थालीनामाज्यस्थालीनांस्रुवाणांचबहूनामासादनंकार्यंयुगपदनेककर्तृकचर्वाज्यहोमनिर्वाहाय ॥
आज्यसंस्कारकालेलोकसिद्धान्नतिलव्रीहिभिःसहाज्यस्यत्रिःपर्यग्निकरणं ॥ स्रुवाणांसंमार्गांतेदर्व्याःसंमार्गः ॥ ततोन्नंपात्रांतरेपृ
थक्कृत्वाग्नावधिश्रित्यस्रुवेणाभिघार्योदगुद्वास्याज्याद्दक्षिणतोव्यवहितदेशेबर्हिष्यासाद्यप्रत्यभिघार्य तदुत्तरतोव्रीहितिलानासा
द्यार्विगन्वारब्धइध्माधानाद्याज्यभागांतंकुर्यात्॥ततोयजमानस्त्यागंकुर्यात्॥ सयथा॥ शतशतसंख्याअर्कादिजातीयाःसमिधः
शतशतसंख्याहुतिपर्याप्तश्चरुःशतशतसंख्याहुतिपर्याप्तमाज्यंच आदित्यायसोमायांगारकायबुधायबृहस्पतयेशुक्रायशनैश्चरा
यराहवेकेतवेचनमम॥ दशदशसंख्याअर्कादिजातीयाःसमिधःदशदशसंख्याहुतिपर्याप्तश्चरुःदशदशसंख्याहुतिपर्याप्तमाज्यंच
अग्नयेरुद्रायाद्भ्योगौर्यैपृथिव्यैस्कंदायविष्णवेपुरुषायेंद्रायब्रह्मणेइंद्राण्यैइंद्रायप्रजापतयेयमायसर्पेभ्यःकालायब्रह्मणेचित्रगुप्ता

यचनमम॥पंचपंचसंख्याःपलाशसमिधःपंचपंचसंख्याहुतिपर्याप्तश्चरुःपंचपंचसंख्याहुतिपर्याप्तमाज्यंचविनायकायदुर्गायैक्षेत्र पालायवायवेआकाशायअश्विभ्यांइंद्रायाग्नयेयमायनिर्ऋतयेवरुणायवायवेकुबेरायईशानायचनमम ॥ एकैकाहुतिपर्याप्ताःप्र भूततिलव्रीहयःअग्नयेवायवेसूर्यायप्रजापतयेचनमम ॥ त्रयोदशाहुतिपर्याप्तमाज्यंसूर्यायनमम ॥ चतुस्त्रिंशदाहुतिपर्याप्तमाज्य मग्नयेनमम॥द्वात्रिंशदाहुतिपर्याप्तमाज्यंरुद्रायनमम ॥ ॥ ततोष्टर्त्विक्सहिताचार्यपक्षेआचार्यआदित्यायजुहुयादितरेइतरग्र हेभ्यः॥ ऋत्विक्चतुष्टयपक्षेद्वाभ्यांद्वाभ्यांग्रहाभ्यामेकैकोजुहुयात्॥तत्रत्र्यंगुलादूर्ध्वंमध्यमानामिकांगुष्ठैर्मूलभागेसमिधमादायद धिमध्वाज्याक्तांजुहुयात्॥पाणिनाग्राससमंचरुं॥ आज्यंस्रुवेणतदभावेऽश्वत्थादियज्ञियपर्णेनवा॥ सर्वेप्राङ्मुखाउदङ्मुखावाहृद यनिहितोर्ध्वांगुलिवामपाणयोजुहुयुः॥ आचार्यःप्रभूततिलव्रीहीन्व्यस्तसमस्तव्याहृतिभिर्हुत्वाज्यहोमंकुर्यात् ॥ तत्रमंत्राःसूक्ता निचलिख्यंते॥ तत्रप्रत्यृचंस्वाहांतैर्होमःकार्यः॥ सूर्योनइतिपंचर्चस्यसूक्तस्यसौर्यश्चक्षुःसूर्योगायत्री ॥ उदुत्यमितिमंत्रस्यकाण्वः प्रस्कण्वःसूर्योगायत्री ॥ नमोमित्रस्येतिमंत्रस्यसौर्योभितपाःसूर्योजगती ॥ चित्रंदेवानामितिमंत्रस्यांगिरसःकुत्सःसूर्यस्त्रिष्टुप् ॥ उद्वेतिसुभगइतिपंचर्चस्यमैत्रावरुणिर्वसिष्ठःसूर्यस्त्रिष्टुप् ॥ त्वमग्नेप्रथमइत्यष्टादशर्चस्यसूक्तस्यांगिरसोहिरण्यस्तूपोग्निर्जगती अं त्याष्टमीषोळश्यस्त्रिष्टुभः ॥ त्वमग्नेद्युभिरितिषोळशर्चस्यसूक्तस्यगृत्समदोग्निर्जगती ॥ कद्रुद्रायेतिपळर्चस्यसूक्तस्यघौरःकण्वोरु द्रोगायत्री तृतीयामैत्रावरुणी ॥ इमारुद्रायतवसइत्येकादशर्चस्यसूक्तस्यकुत्सोरुद्रोजगती अंत्येत्रिष्टुभौ ॥ आतेपितर्मरुतामिति

---

१ बहुत्रउद्वेतीतिसार्धचतसृणामितिदृश्यते सर्वानुक्रमेप्येतासांसार्धचतसृणामेवसौर्यक्त्वेनग्रहणमस्ति तथासत्येकोनाशीतिमंत्रपूर्तयेयत्राचक्रुरित्ये तत्सूक्तांतिमऋगर्धेनहोमापत्तिःस्यादितिकृत्वा ‘उद्वेतिसुभगःपंचर्चाभिर्हुत्वाघृताहुतीः’ इतिकौस्तुभधृतपारिजातवाक्येनपंचानामित्येवयुक्तं ॥

पंचदशर्चस्यसूक्तस्यगृत्समदोरुद्रस्त्रिष्टुप् ॥ सर्वत्रग्रहमखांगाज्यहोमेविनियोगः ॥ ॐ सूर्योनोदिवस्पातुवातोऽअंतरिक्षात् ॥ अग्निर्नःपार्थिवेभ्यःस्वाहा ॥ १ ॥ ॐ जोषासवितर्यस्यतेहरःशतंसवाँऽअर्हति ॥ पाहिनोदिद्युतःपतंत्याःस्वाहा ॥ २ ॥ ॐ चक्षुर्नोदेवःसविताचक्षुर्नऽउतपर्वतः ॥ चक्षुर्धातादधातुनःस्वाहा ॥ ३ ॥ ॐ चक्षुर्नोधेहिचक्षुषेचक्षुर्विख्यैतनूभ्यः ॥ संचेदंविचपश्येमस्वाहा ॥ ४ ॥ ॐ सुसंदृशंत्वावयंप्रतिपश्येमसूर्य ॥ विपश्येमनृचक्षसःस्वाहा ॥५॥ ॐ उदुत्यंजातवेदसंदेवंवहंतिकेतवः॥ दृशेविश्वायसूर्यस्वाहा ॥ ६ ॥ ॐ नमोमित्रस्यवरुणस्यचक्षसेमहोदेवायतदृतंसपर्यत ॥ दूरेदृशेदेवजातायकेतवेदिवस्पुत्रायसूर्यायशंसतस्वाहा ॥ ७ ॥ ॐ चित्रंदेवानामुदगादनीकंचक्षुर्मित्रस्यवरुणस्याग्नेः ॥ आप्राद्यावापृथिवीअंतरिक्षंसूर्यआत्माजगतस्तस्थुषश्चस्वाहा ॥ ८ ॥ ॐ उद्वेतिसुभगोविश्वचक्षाःसाधारणःसूर्योमानुषाणां ॥ चक्षुर्मित्रस्यवरुणस्यदेवश्चर्मेववयःसमविव्यक्तमांसिस्वाहा ॥ ९ ॥ ॐ उद्वेतिप्रसवीताजनानांमहान्केतुरर्णवःसूर्यस्य ॥ समानंचक्रंपर्याविवृत्सन्यदेतशोवहतिधूर्षुयुक्तःस्वाहा ॥ १० ॥ ॐ विभ्राजमानउषसामुपस्थाद्रेभैरुदेत्यनुमद्यमानः ॥ एषमेदेवःसविताचच्छंदयःसमानंनप्रमिनातिधामस्वाहा ॥ ॥ ११ ॥ ॐ दिवोरुक्मऽउरुचक्षाऽउदेतिदूरेऽअर्थस्तरणिर्भ्राजमानः ॥ नूनंजनाःसूर्येणप्रसूताऽअयन्नर्थानिकृणवन्नपांसिस्वाहा ॥ १२ ॥ ॐ यत्राचक्रुरमृतागातुमस्मैश्येनोनदीयन्नन्वेतिपाथः ॥ प्रतिवांसूरउदितेविधेमनमोभिर्मित्रावरुणोतहव्यैः स्वाहा ॥ १३ ॥ ॐ त्वमग्नेप्रथमोऽअंगिराऽऋषिर्देवोदेवानामभवःशिवःसखा ॥ तवव्रतेकवयोविद्मनापसोजायंतमरुतोभ्राजदृष्टयःस्वाहा॥१४॥ॐ त्वमग्नेप्रथमोऽअंगिरस्तमःकविर्देवानांपरिभूपसिव्रतं ॥ विभुर्विश्वस्मैभुवनायमेधिरोद्विमातशयुःकतिधाचिदायवेस्वाहा॥१५॥ॐ त्वमग्नेप्रथमोमातरिश्वनऽआविर्भवसुक्रतूयाविवस्वते ॥ अरेजेतांरोदसीहोतृवूर्येसघ्नोर्भारमयंजोम

होवसोस्वाहा॥१६॥ॐ त्वमग्नेमनवेद्यामवाशयः पुरूरवसेसुकृतेसुकृत्तरः॥श्वात्रेणयत्पित्रोर्मुच्यसेपर्यात्वापूर्वमनयन्नापरंपुनःस्वाहा ॥१७॥ ॐ त्वमग्नेवृषभःपुष्टिवर्धनऽउद्यतस्रुचेभवसिश्रवाय्यः ॥ यऽआहुतिंपरिवेदावषट्कृतिमेकायुरग्रेविशऽआविवाससिस्वाहा॥१८॥ॐत्वमग्नेवृजिनवर्तनिंनरंसक्मन्पिपर्षिविदथेविचर्षणे ॥ यःशूरसातापरितक्म्येधनेदभ्रेभिश्चित्समृताहंसिभूयसःस्वाहा॥१९॥ॐत्वतमग्नेअमृतत्वऽउत्तमेमर्तंदधासिश्रवसेदिवेदिवे ॥ यस्तातृषाणउभयायजन्मनेमयःकृणोषिप्रयआचसूरयेस्वाहा॥२०॥ॐत्वंनोऽअग्नेसनयेधनानांयशसंकारुंकृणुहिस्तवानः ॥ ऋध्यामकर्मापसानवेनदेवैर्द्यावापृथिवीप्रावतंनःस्वाहा॥२१॥ ॐ त्वंनोऽअग्नेपित्रोरुपस्थऽआदेवोदेवेष्वनवद्यजागृविः ॥ तनूकृद्बोधिप्रमतिश्चकारवेत्वंकल्याणवसुविश्वमोपिषेस्वाहा ॥२२॥ ॐत्वमग्नेप्रमतिस्त्वंपितासिनस्त्वंवयस्कृत्तवजामयोवयं ॥ संत्वारायःशतिनःसंसहस्रिणःसुवीरंयंतिव्रतपामदाभ्यस्वाहा॥२३॥ ॐ त्वामग्नेप्रथममायुमायवेदेवाऽअकृण्वन्नहुषस्यविश्पतिं ॥ इळामकृण्वन्मनुषस्यशासनींपितुर्यत्पुत्रोममकस्यजायतेस्वाहा ॥ ॥ २४ ॥ ॐत्वंनोअग्नेतवदेवपायुभिर्मघोनोरक्षतन्वश्चवंद्य ॥ त्रातातोकस्यतनयेगवामस्यनिमेषंरक्षमाणस्तवव्रतेस्वाहा ॥२५॥ ॐ त्वमग्नेयज्यवेपायुरंतरोनिषंगायचतुरक्षइध्यसे ॥ योरातहव्योवृकायधायसेकीरेश्चिन्मंत्रंमनसावनोषितंस्वाहा ॥ २६ ॥ ॐ त्वमग्नऽउरुशंसायवाघतेस्पार्हंयद्रेक्णःपरमंवनोषितत् ॥ आध्रस्यचित्प्रमतिरुच्यसेपिताप्रपाकंशास्सिप्रदिशोविदुष्टरःस्वाहा ॥ २७॥ ॐ त्वमग्नेप्रयतदक्षिणंनरंवर्मेवस्यूतंपरिपासिविश्वतः ॥ स्वादुक्षद्मायोवसतौस्योनकृज्जीवयाजंयजतेसोपमादिवःस्वाहा ॥ २८ ॥ ॐ इमामग्नेशरणिंमीमृषोनइममध्वानंयमगामदूरात् ॥ आपिःपिताप्रमतिःसोम्यानांभृमिरस्यृषिकृन्मर्त्यानांस्वाहा ॥ २९ ॥ ॐ मनुष्वदग्नेऽअंगिरस्वदंगिरोययातिवत्सदनेपूर्ववच्छुचे ॥ अच्छयाह्यावहादैव्यंजनमासादयबर्हिषियक्षिचप्रियं

स्वाहा ॥ ३० ॥ ॐ एतेनाग्ने ब्रह्मणावावृधस्वशक्तीवायत्तेचकृमाविदावा ॥ उतप्रणेष्यभिवस्योऽअस्मान्त्संनःसृजसुमत्यावाज
वत्यास्वाहा ॥ ३१ ॥ ॐ त्वमग्नेद्युभिस्त्वमाशुशुक्षणिस्त्वमद्भ्यस्त्वमश्मनस्परि ॥ त्वंवनेभ्यस्त्वमोषधीभ्यस्त्वंनृणांनृपतेजायसे
शुचिःस्वाहा ॥ ३२ ॥ ॐ तवाग्नेहोत्रंतवपोत्रमृत्वियंतवनेष्ट्रंत्वमग्निदृतायतः ॥ तवप्रशास्त्रंत्वमध्वरीयसिब्रह्माचासिगृहपतिश्च
नोदमेस्वाहा ॥ ३३ ॥ ॐ त्वमग्नऽइंद्रोवृषभःसतामसित्वंविष्णुरुरुगायोनमस्यः ॥ त्वंब्रह्मारयिविद्ब्रह्मणस्पतेत्वंविधर्तःसचसे
पुरंध्यांस्वाहा ॥ ३४ ॥ ॐ त्वमग्नेराजावरुणोधृतव्रतस्त्वंमित्रोभवसिदस्मईड्यः ॥ त्वमर्यमासत्पतिर्यस्यसंभुजंत्वमंशोविदथे
देवभाजयुःस्वाहा ॥ ३५ ॥ ॐ त्वमग्नेत्वष्टाविधतेसुवीर्यंतवग्नावोमित्रमहःसजात्यं ॥ त्वमाशुहेमाररिषेस्वश्व्यंत्वंनराँशर्धोऽअ
सिपुरूवसुःस्वाहा ॥ ३६ ॥ ॐ त्वमग्नेरुद्रोऽअसुरोमहोदिवस्त्वंशर्धोमारुतंपृक्षऽईशिषे ॥ त्वंवातैररुणैर्यासिशंगयस्त्वंपूषावि
धतःपासिनुत्मनास्वाहा ॥ ३७ ॥ ॐ त्वमग्नेद्रविणोदाऽअरंकृतेत्वंदेवःसवितारत्नधाऽअसि ॥ त्वंभगोनृपतेवस्वईशिषेत्वंपायु
र्दमेयस्तेविधत्स्वाहा ॥ ३८ ॥ ॐ त्वामग्नेदमऽआविश्पतिंविशस्त्वांराजानंसुविदत्रमृंजते॥त्वंविश्वानिस्वनीकपत्यसेत्वंसहस्रा
णिशतादशप्रतिस्वाहा ॥ ३९ ॥ ॐ त्वामग्नेपितरमिष्टिभिर्नरस्त्वांभ्रात्रायशम्यातनूरुचं ॥ त्वंपुत्रोभवसियस्तेविधत्त्वंसखासु
शेवःपास्याधृषःस्वाहा ॥ ४० ॥ ॐ त्वमग्नऽऋभुराकेनमस्य१स्त्वंवाजस्यक्षुमतोरायऽईशिषे ॥ त्वंविभास्यनुदक्षिदावनेत्वंविशि
क्षुरसियज्ञमातनिःस्वाहा ॥ ४१ ॥ ॐ त्वमग्नेऽअदितिर्देवदाशुषेत्वंहोत्राभारतीवर्धसेगिरा ॥ त्वमिळाशतहिमासिदक्षसेत्वंवृत्र
हावसुपतेसरस्वतिस्वाहा ॥ ४२ ॥ ॐ त्वमग्नेसुभृतउत्तमंवयस्तवस्पार्हेवर्णऽआसंदृशिश्रियः ॥ त्वंवाजःप्रतरणोबृहन्नसित्वंरयि
र्बहुलोविश्वतस्पृथुःस्वाहा ॥४३॥ ॐ त्वामग्नऽआदित्यासऽआस्य१त्वांजिह्वांशुचयश्चक्रिरेकवे ॥ त्वांरातिषाचोऽअध्वरेषुसश्चिरे

त्वंदेवाहविर्दंत्याहुतंस्वाहा ॥४४॥ ॐ त्वेऽअग्नेविश्वेऽअमृतासोऽअद्रुहऽआसादेवाहविर्दंत्याहुतं ॥ त्वयामर्तासःस्वदंतऽ
आसुतिंत्वंगर्भोवीरुधांजज्ञिषेशुचिःस्वाहा ॥ ४५ ॥ ॐ त्वंतान्त्संचप्रतिंचासिमज्मनाग्नेसुजातप्रचदेवरिच्यसे ॥ पृक्षोयदत्रम
हिनावितेभुवदनुद्यावापृथिवीरोदसीउभेस्वाहा ॥४६॥ ॐ येस्तोतृभ्योगोअग्रामश्वपेशसमग्नेरातिमुपसृजंतिसूरयः ॥ अस्मान्
चतांश्चप्रहिनेपिवस्युऽआबृहद्वदेमविदथेसुवीराःस्वाहा ॥ ४७ ॥ ॐ कद्रुद्रायप्रचेतसेमीढुष्टमायतव्यसे ॥ वोचेमशंतमंहृदे
स्वाहा ॥ ४८ ॥ ॐ यथानोअदितिःकरत्पश्वेनृभ्योयथागवे ॥ यथातोकायरुद्रियंस्वाहा ॥ ४९ ॥ ॐ यथानोमित्रोवरुणोयथा
रुद्रश्चिकेतति ॥ यथाविश्वेसजोषसःस्वाहा ॥५०॥ ॐ गाथपतिंमेधपतिंरुद्रंजलाषभेषजं ॥ तच्छंयोःसुम्नमीमहेस्वाहा ॥५१॥
ॐ यःशुक्रइवसूर्योहिरण्यमिवरोचते ॥ श्रेष्ठोदेवानांवसुःस्वाहा ॥ ५२ ॥ ॐ शंनःकरत्यर्वतेसुगंमेषायमेष्ये ॥ नृभ्योनारिभ्यो
गवेस्वाहा ॥ ५३ ॥ ॐ इमारुद्रायतवसेकपर्दिनेक्षयद्वीरायप्रभरामहेमतीः ॥ यथाशमसद्विपदेचतुष्पदेविश्वंपुष्टंग्रामेऽअस्मिन्न
नातुरंस्वाहा ॥५४॥ ॐ मृळानोरुद्रोतनोमयस्कृधिक्षयद्वीरायनमसाविधमते ॥ यच्छंचयोश्चमनुरायेजेपितातदश्यामतवरुद्र
प्रणीतिषुस्वाहा ॥५५॥ ॐ अश्यामतेसुमतिंदेवयज्ययाक्षयद्वीरस्यतवरुद्रमीढ्वः ॥ सुम्नायन्निद्विशोअस्माकमाचरारिष्टवीराजु
हवामतेहविःस्वाहा ॥ ५६ ॥ ॐ त्वेषंवयंरुद्रंयज्ञसाधंवंकुंकविमवसेनिह्वयामहे ॥ आरेऽअस्मद्दैव्यंहेळोऽअस्यतुसुमतिमिद्वय
मस्यावृणीमहेस्वाहा ॥ ५७ ॥ ॐदिवोवराहमरुषंकपर्दिनंत्वेषंरूपंनमसानिह्वयामहे ॥ हस्तेबिभ्रद्भेषजावार्याणिशर्मवर्मच्छर्दि
रस्मभ्यंयंसत्स्वाहा ॥ ५८ ॥ ॐ इदंपित्रेमरुतामुच्यतेवचःस्वादोःस्वादीयोरुद्रायवर्धनं ॥ रास्वाचनोऽअमृतमर्तभोजनंत्मने
तोकायतनयायमृळस्वाहा ॥ ५९ ॥ ॐ मानोमहान्तमुतमानोऽअर्भकंमानऽउक्षंतमुतमानऽउक्षितं ॥ मानोवधीःपितरंमोतमा

तरंमानःप्रियास्तन्वोरुद्ररीरिषःस्वाहा ॥ ६० ॥ ॐ मानस्तोकेतनयेमानऽआयौमानोगोषुमानोऽअश्वेषुरीरिषः ॥ वीरान्मानो रुद्रभामितोवधीर्हविष्मंतःसदमित्त्वाहवामहेस्वाहा ॥ ६१ ॥ ॐ उपतेस्तोमान्पशुपाइवाकरंरास्वापितर्मरुतांसुम्नमस्मे ॥ भद्रा हितेसुमतिर्मृळयत्तमाथावयमवइत्तेवृणीमहेस्वाहा ॥ ६२ ॥ ॐ आरेतेगोघ्नमुतपूरुषघ्नंक्षयद्वीरसुम्नमस्मेतेऽअस्तु ॥ मृळाचनोऽअधि चब्रूहिदेवाधाचनःशर्मयच्छद्विबर्हाःस्वाहा ॥ ६३ ॥ ॐ अवोचामनमोऽअस्माऽअवस्यवःशृणोतुनोहवंरुद्रोमरुत्वान् ॥ तन्नो मित्रोवरुणोमामहंतामदितिःसिंधुःपृथिवीऽउतद्यौःस्वाहा ॥ ६४ ॥ ॐ आतेपितर्मरुतांसुम्नमेतुमानःसूर्यस्यसंदृशोयुयोथाः ॥ अभिनोवीरोऽअर्वतिक्षमेतप्रजायेमहिरुद्रप्रजाभिःस्वाहा ॥ ६५ ॥ ॐ त्वादत्तेभीरुद्रशंतमेभिःशतंहिमाऽअशीयभेषजेभिः ॥ व्य१स्मद्द्वेषोवितरंव्यंहोव्यमीवाश्चातयस्वाविषूचीःस्वाहा ॥ ६६ ॥ ॐ श्रेष्ठोजातस्यरुद्रश्रियासितवस्तमस्तवसांवज्रबाहो ॥ पर्षि णःपारमंहसःस्वस्तिविश्वाऽअभीतीरपसोयुयोधिस्वाहा ॥ ६७ ॥ ॐ मात्वारुद्रचुक्रुधामानमोभिर्मादुष्टुतीवृषभमासहूती ॥ उन्नो वीराँऽअर्पयभेषजेभिर्भिषक्तमंत्वाभिषजांशृणोमिस्वाहा ॥ ६८ ॥ ॐ हवीमभिर्हवतेयोहविर्भिरवस्तोमेभीरुद्रंदिषीय ॥ ऋदूदरः सुहवोमानोऽअस्यैबभ्रुःसुशिप्रोरीरधन्मनायैस्वाहा ॥ ६९ ॥ ॐ उन्मामममंदवृषभोमरुत्वान्त्वक्षीयसावयसानाधमानं ॥ घृणीव वच्छायामरपाऽअशीयाविवासेयंरुद्रस्यसुम्नंस्वाहा ॥ ७० ॥ ॐ क्व१स्यतेरुद्रमृळयाकुर्हस्तोयोऽअस्तिभेषजोजलाषः ॥ अपभ र्तारपसोदैव्यस्याभीनुमावृषभचक्षमीथाःस्वाहा ॥ ७१ ॥ ॐ प्रबभ्रवेवृषभायश्वितीचेमहोमहींसुष्टुतिमीरयामि ॥ नमस्याकल्म लीकिनंनमोभिर्गृणीमसित्वेषंरुद्रस्यनामस्वाहा ॥ ७२ ॥ ॐ स्थिरेभिरंगैःपुरुरूपऽउग्रोबभ्रुःशुक्रेभिःपिपिशेहिरण्यैः ॥ ईशाना दस्यभुवनस्यभूरेर्नवाऽउयोषद्रुद्रादसुर्य१स्वाहा ॥ ७३ ॥ ॐ अर्हन्बिभर्षिसायकानिधन्वार्हन्निष्कंयजतंविश्वरूपं ॥ अर्हन्निदं

दयसेविश्वमभ्वंनवाऽओजीयोरुद्रत्वदस्तिस्वाहा ॥ ७४॥ ॐ स्तुहिश्रुतंगर्तसदंयुवानंमृगंनभीममुपहत्नुमुग्रं ॥ मृळाजरित्रेरुद्र स्तवानोन्यंतेअस्मन्निवपंतुसेनाःस्वाहा ॥ ७५ ॥ ॐ कुमारश्चित्पितरंवंदमानंप्रतिनानामरुद्रोपयंतं ॥ भूरेर्दातारंसत्पतिंगृणीषे स्तुतस्त्वंभेषजारास्यस्मेस्वाहा ॥ ७६ ॥ ॐ यावोभेषजामरुतःशुचीनियाशंतमावृषणोयामयोभु ॥ यानिमनुरवृणीतापितान स्ताशंचयोश्चरुद्रस्यवश्मिस्वाहा ॥ ७७ ॥ ॐ परिणोहेतीरुद्रस्यवृज्याःपरित्वेषस्यदुर्मतिर्महीगात् ॥ अवस्थिरामघवद्भ्यस्तनु ष्वमीढ्वस्तोकायतनयायमृळस्वाहा ॥ ७८ ॥ ॐ एवाबभ्रोवृषभचेकितानयथादेवनहृणीषेनहंसि ॥ हवनश्रुन्नोरुद्रेहबोधिबृहद्व देमविदथेसुवीराःस्वाहा॥७९॥एतैरेकोनाशीतिमंत्रैःप्रतिमंत्रंस्वाहांतैराज्यंहुत्वाग्रहवेद्यामाराधितैकचत्वारिंशद्देवताभ्योवरुणा यचघंटाशब्देनधूपदीपनैवेद्यतांबूलादीन्पुष्पांजल्यंतानुपचारान्समर्पयेत्॥ग्रहाणांधूपदीपनैवेद्येषुसाधारणोविधिः॥तत्रसूर्याय भद्रमुस्ताख्यकंदधूपः॥सोमायमयूरशिखा॥भौमायदशांगः॥ बुधायरालाख्यःसर्जरसः ॥ गुरवेबिल्वफलं ॥ शुक्रायचीडाख्यः श्रीवासः॥शिष्टेभ्यस्त्रिभ्यःक्रमेणकृष्णागरुजटामांसीमधूकानीतिधूपाः॥दीपःसर्पिषातिलतैलेनवासर्वेषां॥ षाष्टिकमादित्याय ॥ सोमायपायसं॥भौमायपयोमिश्रौदनः॥बुधायगुडमिश्रितः॥क्षीरमोदनंचपृथग्गुरवे ॥ भृगवेदध्योदनः ॥ शनयेकृसरः ॥ मांस स्थानीयमाषविकारमिश्रितौदनोराहवे॥चित्रान्नंकेतवे॥इतिनैवेद्यानि ॥ ततःप्रसीदंतुभवंतइतितान्संप्रार्थ्यऋत्विगन्वारब्धश्च वोज्यतिलव्रीहिशेषेणस्विष्टकृतंहुत्वाइध्मसन्नहनींरज्जुमग्नौप्रास्यप्रायश्चित्तादिहोमांतंसमाप्यसामात्ययजमानान्वारब्धआचा र्योद्वादशगृहीतेनाज्येनपूर्णाहुतिंजुहुयात्॥अद्यपूर्वो०सर्वकर्मप्रपूरिणींभद्रद्रव्यदांपूर्णाहुतिमाज्येनहोष्येतिसंकल्प्य स्रुवेणाज्यं गृहीत्वास्रुचंसमबिलांपूरयित्वातस्यांस्रुवमूर्ध्वबिलंनिधायपुनरधोबिलंनिक्षिप्य स्रुवाग्रेकुसुमाक्षतंनिधायसव्यपाणिनास्रुक्स्रुव

मूलेधृत्वादक्षिणपाणिनास्रुक्स्रुवंशंखमुद्रयागृहीत्वातिष्ठन्समपादऋजुकायःस्रुवाग्रन्यस्तदृष्टिःप्रसन्नात्मा ॥समुद्रादूर्मिरितितिसृणांगोतमोवामदेवोग्निस्त्रिष्टुप्॥मूर्धानमांगिरसोभरद्वाजोवैश्वानरोग्निस्त्रिष्टुप् ॥ पुनस्त्वाग्निर्वसुरुद्रादित्यास्त्रिष्टुप्॥पूर्णादर्विविश्वेदेवाःशतक्रतुरनुष्टुप्॥सप्ततेअग्नेसप्तवानग्निर्जगती ॥ धामंतेगोतमोवामदेवआपोजगती॥पूर्णाहुतौविनियोगः ॥ ॐ समुद्रादूर्मिर्मधुमाँउदारदुपांशुनासमंमृतत्वमानट् ॥ घृतस्यनामगुह्यंयदस्तिजिह्वादेवानाममृतस्यनाभिः॥वयंनामप्रब्रवामाघृतस्यास्मिन्यज्ञेधारयामानमोभिः ॥ उपब्रह्माशृणवच्छस्यमानंचतुःशृंगोवमीद्गौरएतत् ॥ चत्वारिशृंगात्रयोअस्यपादाद्वेशीर्षेसप्तहस्तासोअस्य ॥ त्रिधाबद्धोवृषभोरोरवीतिमहोदेवोमर्त्याँआविवेश॥ १ ॥ ॐ मूर्धानंदिवोअरतिंपृथिव्या वैश्वानरमृतआजातमग्निं॥कविंसम्राजमतिथिंजनानामासन्नापात्रंजनयंतदेवाः ॥ १ ॥ ॐ पुनस्त्वादित्यारुद्रावसवःसमिंधतु पुनर्ब्रह्माणोवसुनीथयज्ञैः॥घृतेनत्वंतन्वोवर्धयस्वसत्याःसंतुयजमानस्यकामाः॥१॥ॐ पूर्णादर्विपरापतसुपूर्णापुनरापत ॥ वस्नेवविक्रीणावहाइषमूर्जंशतक्रतो॥१॥ॐसप्ततेअग्नेसमिधःसप्तजिह्वाःसप्तऋषयःसप्तधामप्रियाणि ॥ सप्तहोत्राःसप्तधा त्वायजंतिसप्तयोनीरापृणस्वाघृतेन ॥ १ ॥ ॐ धामंतेविश्वंभुवनमधिश्रितमंतःसमुद्रेहृद्यंतरायुषि ॥ अपामनीकेसमिथेयआभृतस्तमश्यामममधुमंतंतऊर्मिस्वाहा ॥ १ ॥ अग्नयेवैश्वानरायवसुरुद्रादित्येभ्यःशतक्रतवेसप्तवतेग्नयेद्भ्यश्चेदंनमम ॥ ॐ पूर्णाहुतिमुत्तमांजुहोति ॥ सर्वंवैपूर्णाहुतिः ॥ सर्वमेवाप्नोति ॥ अथोइयंवैपूर्णाहुतिः ॥ अस्यामेवप्रतितिष्ठति ॥ विज्योतिषेत्यस्यवृशोजारोग्निस्त्रिष्टुप् ॥ संस्रावहोमेविनियोगः ॥ ॐ विज्योतिषाबृहताभात्यग्निराविर्विश्वानिकृणुतेमहित्वा ॥ प्रादेवीर्मायाःसहतेदुरेवाःशिशीतेशृंगेरक्षसेविनिक्षेस्वाहा ॥ अग्नयइदंनमम ॥ अथवसोर्धारा ॥ ततःपूर्णपात्रनिनयनसंस्थाजपेनोपस्थानपरिस्तरणविसर्जनपरिसमूहनपर्युक्षणाद्यर्चनपात्रोत्स

जनांतंकुर्यात् ॥ अथमंडपईशानेग्रहवेद्याःप्रागुदीच्यांशुचौदेशेसंमृष्टेपंचरंगैःस्वस्तिकंकृत्वा चतुष्पदंदीर्घचतुरस्रंसोत्तरच्छदं पीठंनिधायतत्रोदगग्रानमूलान्हरितदर्भानास्तीर्य तत्रयजमानंपरिहितनववस्त्रंप्राङ्मुखमुपवेश्याचार्यऋत्विग्भिःसहमंगलवाद्यै रभिषेककुंभोदकंपात्रांतरेआदाय प्रत्यङ्मुखस्तिष्ठन्सपलाशयौदुंबर्यार्द्रशाखयासहिरण्यपवित्रयासकुशदूर्वापल्लवयाहस्तमंतर्धा योदकपृषद्भिरब्लिंगाभिर्वारुणीभिःपावमानीभिरन्याभिश्चशांतिपवित्रलिंगाभिर्ग्रहाभिषेकमंत्रैः (सुरास्त्वामिति)इमाआपःशि वतमाइतितृचेनदेवस्यत्वेतिचयजुषाभूर्भुवःस्वरितिव्याहृतिभिरभिषिंचेत् ॥ तेचमंत्राः ॥ आपोहिष्ठेतितिसृणामांबरीषःसिंधु द्वीपआपोगायत्री ॥अभिषेकेविनियोगः ॥ ॐ आपोहिष्ठा० ॥३॥ तत्त्वायामीतितिसृणामाजीगर्तिःशुनःशेपःसकृत्रिमोवैश्वा मित्रोदेवरातोवरुणस्त्रिष्टुप् ॥ अभिषेके० ॥ ॐ तत्त्वायामिब्रह्मणावंदमानस्तदाशास्तेयजमानोहविर्भिः ॥ अहेळमानोवरुणे हबोध्युरुशंसमानआयुःप्रमोषीः ॥ तदिन्नक्तंतद्दिवामह्यमाहुस्तदयंकेतोहृदआविचष्टे ॥ शुनःशेपोयमह्वद्गृभीतःसोअस्मान्राजा वरुणोमुमोक्तु ॥ शुनःशेपोह्यह्वद्गृभीतस्त्रिष्वादित्यंद्रुपदेषुबद्धः ॥ अवैनंराजावरुणःससृज्याद्विद्वाँअदब्धोविमुमोक्तुपाशान् ॥ ॥ ३ ॥ स्वादिष्ठयेतितिसृणांवैश्वामित्रोमधुच्छंदाःपवमानसोमोगायत्री ॥ अभिषेके० ॥ ॐ स्वादिष्ठया० ॥ ३ ॥ शंनइंद्रा ग्नीतितिसृणांमैत्रावरुणिर्वसिष्ठोविश्वेदेवास्त्रिष्टुप् ॥ अभिषेके० ॥ ॐ शंनइंद्राग्नीभवतामवोभिःशंनइंद्रावरुणारातहव्या॥ शमिं द्रासोमासुवितायशंयोःशंनइंद्रापूषणावाजसातौ ॥ शंनोभगःशमुनःशंसोअस्तुशंनःपुरंधिःशमुसंतुरायः॥ शंनःसत्यस्यसुयमस्य शंसःशंनोअर्यमापुरुजातोअस्तु ॥ शंनोधाताशमुधर्तानोअस्तुशंनउरूचीभवतुस्वधाभिः ॥ शंरोदसीबृहतीशंनोअद्रिःशंनोदेवा नांसुहवानिसंतु ॥ ३ ॥ पवित्रंतइतितिसृणामांगिरसःपवित्रःपवमानसोमोजगती ॥ अभिषेके० ॥ ॐ पवित्रंतेविततंब्रह्मण

स्पितेप्रभुर्गात्राणिपर्येषिविश्वतः ॥ अतप्ततनूर्नतदामोअश्नुतेशृतासइद्वहंतस्तत्समाशत ॥ तपोष्पवित्रंविततंदिवस्पदेशोचंतोअ स्युतंतवोन्यंस्थिरन् ॥ अवंत्यस्यपवीतारमाशवोदिवस्पृष्ठमधितिष्ठंतिचेतसा ॥ अरूरुचदुषसःपृश्निरग्रियउक्षाबिभर्तिभुवनानि वाजयुः॥मायाविनोममिरेअस्यमायर्यानृचक्षसःपितरोगर्भमादधुः ॥ अथग्रहमंत्राः॥ग्रहाणामादिरादित्योलोकरक्षणकारकः ॥ विषमस्थानसंभूतांपीडांहरतुतेरविः ॥१॥ रोहिणीशःसुधामूर्तिःसुधागात्रःसुधाशनः ॥ विषमस्थानसंभूतांपीडांहरतुतेविधुः ॥ २ ॥ भूमिपुत्रोमहातेजाजगतांभयकृत्सदा ॥ वृष्टिकृद्वृष्टिहर्ताचपीडांहरतुतेकुजः ॥ ३ ॥ उत्पातरूपोजगतांचंद्रपुत्रोमहा द्युतिः ॥ सूर्यप्रियकरोविद्वान्पीडांहरतुतेबुधः ॥ ४ ॥ देवमंत्रीविशालाक्षःसदालोकहितेरतः ॥ अनेकशिष्यसंपूर्णःपीडांहर तुतेगुरुः ॥ ५ ॥ दैत्यमंत्रीगुरुस्तेषांप्राणदश्चमहामतिः ॥ प्रभुस्ताराग्रहाणांचपीडांहरतुतेभृगुः ॥ ६ ॥ सूर्यपुत्रोदीर्घदेहोवि शालाक्षःशिवप्रियः॥ मंदचारःप्रसन्नात्मापीडांहरतुतेशनिः ॥ ७ ॥ महाशिरामहावक्त्रोदीर्घदंष्ट्रोमहाबलः ॥ अतनुश्चोर्ध्वकेश श्चपीडांहरतुतेतमः ॥ ८ ॥ अनेकरूपवर्णैश्चशतशोथसहस्रशः ॥ उत्पातरूपोजगतःपीडांहरतुतेशिखी ॥९॥ अथदेवमंत्राः ॥ सुरास्त्वामभिषिंचंतुब्रह्मविष्णुमहेश्वराः ॥ वासुदेवोजगन्नाथस्तथासंकर्षणोविभुः ॥१॥ प्रद्युम्नश्चानिरुद्धश्चभवंतुविजयायते॥ आखंडलोग्निर्भगवान्यमोवैनिर्ऋतिस्तथा ॥ २ ॥ वरुणःपवनश्चैवधनाध्यक्षस्तथाशिवः॥ ब्रह्मणासहिताःसर्वेदिक्पालाःपांतुते सदा ॥ ३ ॥ कीर्तिर्लक्ष्मीर्धृतिर्मेधापुष्टिश्रद्धाक्रियामतिः ॥ बुद्धिर्लज्जावपुःशांतिःकांतिस्तुष्टिश्चमातरः ॥ ४ ॥ एतास्त्वामभि षिंचंतुदेवपत्न्यःसमागताः ॥ आदित्यश्चंद्रमाभौमोबुधजीवसितार्कजाः ॥ ५ ॥ ग्रहास्त्वामभिषिंचंतुराहुःकेतुश्चतर्पिताः ॥ देवदानवगंधर्वायक्षराक्षसपन्नगाः ॥ ६ ॥ ऋषयोमनवोगावोदेवमातरएवच॥देवपत्न्योद्रुमानागादैत्याश्चाप्सरसांगणाः ॥७॥

अस्त्राणिसर्वेशस्त्राणिराजानोवाहनानिच ॥ औषधानिचरत्नानिकालस्यावयवाश्चये ॥८॥ सरितःसागराःशैलास्तीर्थानिजल
दानदाः॥एतेत्वामभिषिंचंतुसर्वकामार्थसिद्धये ॥ ९ ॥ एतैर्मंत्रैःप्रतिमंत्रमभिषिच्य ॥ हिरण्यवर्णामितिपंचदशर्चस्यसूक्तस्य
आनंदकर्दमचिक्लीतेंदिरासुताऋषयः श्रीरग्निश्चेत्युभेदेवतेआद्यास्तिस्रोनुष्टुभःचतुर्थीप्रस्तारपंक्तिःपंचमीषष्ठ्यौत्रिष्टुभौततोष्टा
वनुष्टुभोंत्याप्रस्तारपंक्तिः॥ अभिषेकेविनियोगः ॥ ॐहिरण्यवर्णांहरिणीं० ऋ० १५ ॥ इमाआपइतितिसृणामैतरेयआपोनुष्टु
ब्जगत्यनुष्टुभः ॥ अभिषेकेविनियोगः ॥ ॐ इमाऽआपःशिवतमा० ३ ॥ देवस्यत्वेत्यस्यैतरेयःसविताश्विनौपूषाचयजुः ॥ दे
वस्यत्वासवितुःप्रसवेऽश्विनोर्बाहुभ्यांपूष्णोहस्ताभ्यामग्नेस्तेजसासूर्यस्यवर्चसेंद्रस्येंद्रियेणाभिषिंचामि ॥ बलायश्रियैयशसेन्नाद्या
यभूर्भुवःस्वः॥अमृताभिषेकोस्तु शांतिःपुष्टिस्तुष्टिश्चास्तुइत्यभिषिंचेत् ॥ ततोभिषेकशालायामेवाभिषिक्तयजमानस्यपूर्वादिदि
क्षुविदिक्षुचचित्रान्नैराचार्योदिग्देवताभ्यःइंद्रायनमःअग्नयेनमः इत्यादिनाममंत्रैर्बलीनुत्क्षिपेत् ॥ ततोयजमानस्यसुवासिनीभि
र्दीपैर्नीराजनंकारयेत् ॥ ततोयजमानोभिषेकवस्त्रमाचार्यायदत्वाश्वेतांबरंश्वेतचंदनंश्वेतपुष्पाणिचधृत्वाभिषेकशालातोऽग्निस
मीपमागत्याग्नेर्ग्रहपीठदेवतानांचपंचोपचारपूजांतेग्निंग्रहांस्तदुपदेवताश्चध्यात्वा ॥ ॐ अग्नयेनमः ॐ आदित्यायनमःइतिमंत्रैः
प्रणवादिभिःप्रत्येकंपुष्पांजलिंसमर्पयेत् ॥ ततआचार्योदेवतोद्वासनंकुर्यात् ॥ ॐ भूर्भुवःस्वःआदित्यायनमः आदित्यमुद्वास
यामि ॥ एवंसोमादीनामुद्वासनवाक्यमूह्यं ॥ ततआचार्यप्रभृतिभ्योजपहोमफलंगृहीत्वातेभ्योदक्षिणां गौःशंखःरक्तोनड्वान्
हिरण्यंपीतवासःश्वेताश्वःकृष्णागौःकालायसंहस्तीछागोवेतिग्रहक्रमेणदद्यात् ॥ अत्रन्यूनदक्षिणाबुधदक्षिणयाहिरण्येनसमा
कार्याआद्यगवावा ॥ एतदभावेसर्वेभ्योयथाशक्तिहिरण्यंवादद्यात् ॥ आचार्यायद्विगुणं ॥ अन्येभ्यश्चयथाशक्तिभूयसीं ॥ ततः

कांस्यपात्रगताज्ये रूपंरूपंप्रतिरूपोबभूवेतिमंत्रेणसकुटुंबःस्वप्रतिरूपंप्रेक्ष्य ॥ आज्यंतेजःसमुद्दिष्टमाज्यंपापहरंस्मृतं ॥ आज्यं सुराणामाहारआज्येदेवाःप्रतिष्ठिताः ॥ इतिमंत्रंपठित्वातदाज्यंसदक्षिणंब्राह्मणायदद्यात् ॥ ततोभूरिदक्षिणांदत्वासंकल्प्यवा ॥ एकस्याआहुतेरेकंशतस्यैकंसहस्रस्यवाएकंयथाशक्तिवाब्राह्मणान्भोजयित्वातेभ्यःशांतिःपुष्टिस्तुष्टिश्चास्त्वित्याद्याशिषोगृहीत्वा तान्संप्रार्थ्यप्रणिपत्य ॥ यस्यस्मृत्याचनामोक्त्यातपोयज्ञक्रियादिषु ॥ न्यूनंसंपूर्णतांयातिसद्योवंदेतमच्युतमितिपठित्वा ॥ प्रमादात्कुर्वतांकर्मप्रच्यवेताध्वरेषुयत् ॥ स्मरणादेवतद्विष्णोःसंपूर्णस्यादितिश्रुतिः ॥ इत्युक्त्वान्यूनातिरिक्तच्छिद्रत्वार्थंयथा शक्तिअच्युतानंतगोविंदेतिनाममंत्रजपंकृत्वाग्रहयज्ञफलंश्रीविष्णवेसमर्प्यस्वयंहृष्टमनाबंधुभिःसहभुंजीत ॥ अयंचाश्वलायनगृ ह्यपरिशिष्टानुसारीग्रहमखःस्मार्ताग्निमतामाश्वलायनानामेव ॥ बह्वल्पंवास्वगृह्योक्तंयथाकर्मप्रचोदितं ॥ तस्यतावतिशास्त्रार्थे कृतेसर्वःकृतोभवेदितिवचनात् ॥ एवमन्येषामपियदिस्वगृह्यादावुक्तस्तदासएव ॥ येषांतुस्वगृह्यादौनोक्तस्तैर्याज्ञवल्क्यादि स्मृत्युक्तोमत्स्यपुराणाद्युक्तोवानुष्ठेयःस्मृत्यादेःसाधारण्यादितिदिक् ॥ इतिपरिशिष्टोक्तोनवग्रहमखप्रयोगःसमाप्तः ॥ ॥

## ॥ १०२ ॥ ग्रहयज्ञोमात्स्योक्तः(अयुतहोमः) ॥

श्रीः ॥ कर्ताकृतनित्यक्रियोद्विराचम्यपवित्रपाणिःप्राणानायम्यदेवगुरुब्राह्मणाभिवादनपूर्वंदेशकालौस्मृत्वा श्रीकामःवृष्ट्यायुः पुष्ट्यादिकामः ग्रहपीडायामुत्पातरोगेवातच्छांतिकामोवायुतहोमाख्यनवग्रहयज्ञेनाहंयक्ष्ये ॥ केवलंतुग्रहयज्ञंकरिष्ये इतिसं कल्प्य गणपतिपूजनस्वस्तिवाचनमातृकापूजननांदीश्राद्धानिकृत्वाआचार्यादीन्वृणुयात् ॥ ( मंडपमध्येऐशान्यांवाहस्तमात्रं

१ अस्मिन्प्रयोगेतत्रतत्रधनुश्चिह्नांतर्गतोभागःअयुतहोमविषयकोज्ञेयः । २ मंडपसंस्कारवास्तवाद्यावाहनंब्रह्मादिमंडलदेवताश्चाग्रेउक्ताः ।

कुंडंनिर्मायतदैशान्यांग्रहवेदीहस्तविस्तृतावित स्त्युच्चावप्रत्रययुताचतुरस्राकार्या ॥ अथाचार्योमुकहोमेग्निप्रतिष्ठांकर्तुमुपलेपना दिकुंडसंस्कारंमेखलायोनिदेवतास्थापनंपूजनंचकरिष्यइतिसंकल्प्यकुंडंसंस्कृत्यकुशोदकेनप्रोक्ष्योर्ध्वमेखलायांश्वेतवर्णालंकृता यांइदंविष्णुरितिविष्णुं । रक्तवर्णमध्यमेखलायाब्रह्मजज्ञानमितिब्रह्माणं । कृष्णवर्णाधोमेखलायांकद्रुद्रायेतिरुद्रं । योन्यांगौ रीमिंमायेतिगौरींचसंपूज्याग्निंप्रतिष्ठाप्यग्रहवेद्यांसर्वतोभद्रंकृत्वातत्रब्रह्मादिमंडलदेवताआवाह्यसंपूज्यतत्र)ग्रहमंडलंविलिख्य ग्रहान्स्थापयेत् ॥ यथा ॥ ग्रहवेद्यांवस्त्रेष्टदलंपद्मंगंधादिनाकृत्वा ॥ प्रणवस्यपरब्रह्मऋषिःपरमात्मादेवतादैवीगायत्रीछंदः व्याहृतीनांक्रमेणजमदग्निभरद्वाजभृगवऋषयः अग्निवायुसूर्यादेवताः दैवीगायत्रीदैवीउष्णिग्दैवीबृहत्यश्छंदांसि सूर्याद्यावाहने विनियोगः ॥ ग्रहपीठस्यमध्येवर्तुलेद्वादशांगुलेप्राङ्मुखंसूर्यंरक्तपुष्पाक्षतैः ॥ आकृष्णेनहिरण्यस्तूपःसवितात्रिष्टुप् सूर्यावाह नेवि० ॥ ॐ आकृष्णेन० ॥ ॐ भूर्भुवःस्वःकलिंगदेशोद्भवकाश्यपसगोत्रसूर्येहागच्छेहतिष्ठ सूर्यायनमःसूर्यमावाहयामीतिसूर्यं स्थापयेत् ॥ १ ॥ ततआग्नेयेचतुरस्रेचतुर्विंशांगुलेप्रत्यङ्मुखंसोमंश्वेतपुष्पाक्षतैः ॥ आप्यायस्वगोतमःसोमोगायत्री सोमावाह नेवि० ॥ ॐ आप्यायस्वसमेतुते० ॥ ॐ भूर्भुवःस्वःयमुनातीरोद्भवात्रेयसगोत्रसोमेहागच्छेहतिष्ठेतिस्थापयेत् २ ॥ ततोदक्षि णेत्रिकोणेत्र्यंगुलेमंडलेदक्षिणाभिमुखंभौमंरक्तपुष्पाक्षतैः ॥ अग्निर्मूर्धाविरूपोंगारकोगायत्री अंगारकावाहनेविनि० ॥ ॐअग्नि मूर्धादिवःककुत्० ॥ ॐभूर्भुवःस्वःअवंतिदेशोद्भवभारद्वाजसगोत्रभौमेहागच्छेहतिष्ठेतिस्थापयेत् ३ ॥ ततऐशान्यांबाणाकारे चतुरंगुलेमंडलेउदङ्मुखंबुधंपीतपुष्पाक्षतैः ॥ उद्बुध्यध्वंबुधोबुधस्त्रिष्टुप् बुधावाहनेविनियोगः ॥ ॐ उद्बुध्यध्वंसमनसःसखा यः० ॥ ॐ भूर्भुवःस्वःमगधदेशोद्भवात्रेयसगोत्रबुधेहागच्छेहतिष्ठ० ४ ॥ ततउत्तरेदीर्घचतुरस्रेद्व्यंगुलेमंडलेउदङ्मुखंबृहस्पतिं

पीतपुष्पाक्षतैः ॥ बृहस्पतेगृत्समदोबृहस्पतिस्त्रिष्टुप् बृहस्पत्यावाहनेविनि०॥ ॐ बृहस्पतेअतियदर्योअर्हाद्० ॥ ॐ भूर्भुवःस्वः
सिंधुदेशोद्भवांगिरसगोत्रबृहस्पतेइहागच्छेहतिष्ठेति० ५ ॥ ततःपूर्वेपंचकोणेनवांगुलेमंडलेप्राङ्मुखंशुक्रंशुक्लपुष्पाक्षतैः ॥ शुक्रः
पराशरःशुक्रोद्विपदाविराट् शुक्रावाहनेविनियोगः ॥ ॐ शुक्रःशुशुक्वाँउषोन० ॥ ॐ भूर्भुवःस्वःभोजकटदेशोद्भवभार्गवसगोत्र
शुक्रेहागच्छेहतिष्ठेतिस्थापयेत् ६ ॥ ततःपश्चिमेधनुराकारेद्व्यंगुलेमंडलेप्रत्यङ्मुखंशनिंकृष्णपुष्पाक्षतैः ॥ शमग्निरिरिंबिठिःशनि
रुष्णिक् शन्यावाहनेविनि० ॥ शमग्निरग्निभिः० ॥ ॐ भूर्भुवःस्वःसौराष्ट्रदेशोद्भवकाश्यपसगोत्रशनैश्चरेहागच्छेहतिष्ठेति०
७॥ततोनैर्ऋत्येशूर्पाकारेद्वादशांगुलेमंडलेदक्षिणाभिमुखंराहुंकृष्णपुष्पाक्षतैः॥कयानोवामदेवोराहुर्गायत्री राह्वावाहनेविनि०॥
ॐ कयानश्चित्रआभुव० ॥ ॐ भूर्भुवःस्वःराठिनापुरोद्भवपैठीनसगोत्रराहोइहागच्छेहतिष्ठेति० ८ ॥ ततोवायव्येध्वजाकारे
षडंगुलेमंडलेदक्षिणाभिमुखंकेतुंधूम्रपुष्पाक्षतैः॥ केतुंकृण्वन्मधुच्छंदाःकेतुर्गायत्री केत्वावाहनेविनि०॥ॐकेतुंकृण्वन्नकेतवे० ॥
ॐ भूर्भुवःस्वःअंतर्वेदिसमुद्भवजैमिनिसगोत्रकेतोइहागच्छेहतिष्ठेतिं० ९ ॥ यथोक्तकुसुमतंडुलाभावेयथालाभमुपपन्नैःकुसुमतं
डुलैःस्थापयेत् ॥ अथाधिदेवताः ॥ त्र्यंबकंवसिष्ठोरुद्रोनुष्टुप् रुद्रावाहनेवि० ॥ ॐ त्र्यंबकंयजामहेसु० ॥ ॐ भूर्भुवःस्वःसूर्य
दक्षिणपार्श्वेईश्वरेहागच्छेहतिष्ठेति० १॥ गौरीर्मिमायदीर्घतमाउमाजगती उमावाहनेविनियोगः॥ ॐ गौरीर्मिमायसलिला० ॥
ॐ भूर्भुवःस्वःउमेइहागच्छेत्यावाह्येहतिष्ठेतिसोमदक्षिणपार्श्वेउमांस्थापयेत् २ ॥ यदक्रंदोदीर्घतमाःस्कंदस्त्रिष्टुप् स्कंदावाहने
विनियोगः ॥ ॐ यदक्रंदःप्रथमं० ॥ भूर्भुवःस्वःस्कंदेहागच्छेहतिष्ठेति भौमदक्षिणपार्श्वेस्कंदं० ३ ॥ विष्णोर्नुकंदीर्घतमाना
रायणस्त्रिष्टुप् नारायणावाहनेविनियोगः ॥ ॐ विष्णोर्नुकंवीर्याणि० ॥ ॐ भूर्भुवःस्वःनारायणेहागच्छेत्यावाह्येहतिष्ठेति बुध

दक्षिणपार्श्वेनारायणम् ४ ॥ ब्रह्मजज्ञानंवामदेवोब्रह्मात्रिष्टुप् ब्रह्मावाहनेविनियोगः ॥ ॐ ब्रह्मजज्ञानंप्रथमं० ॥ ॐ भूर्भुव. स्वः ब्रह्मन्निहागच्छेत्यावाह्येहतिष्ठेति बृहस्पतिदक्षिणपार्श्वेब्रह्माणं० ५॥ इंद्रंवोमधुच्छंदाइंद्रोगायत्री इंद्रावाहनेविनियोगः । ॐ इंद्रंवोविश्वतस्परि० ॥ भूर्भुवःस्वःइंद्रेहागच्छेहतिष्ठेतिशुक्रदक्षिणपार्श्वेइंद्रं ६ ॥ यमायसोमंयमोयमोनुष्टुप् यमावाहने विनियोगः ॥ ॐ यमायसोमंसुनुत० ॥ ॐ भूर्भुवःस्वःयमेहागच्छेहतिष्ठेति शनैश्चरदक्षिणपार्श्वेयमं ७ ॥ मोषुणःकण्वःकालो गायत्री कालावाहनेविनियोगः ॥ ॐ मोषुणःपरापरा० ॥ ॐ भूर्भुवःस्वःकालेहागच्छेहतिष्ठेति राहुदक्षिणपार्श्वेकालं ८ ॥ उषो वाजंप्रस्कण्वश्चित्रगुप्तोबृहती चित्रगुप्तावाहनेविनियोगः ॥ ॐ उषोवाजंहिवंस्वय० ॥ ॐ भूर्भुवःस्वःचित्रगुप्तेहागच्छेहतिष्ठेति केतुदक्षिणपार्श्वेचित्रगुप्तं ९ ॥ ततःशुक्लपुष्पाक्षतैःसर्वाःप्रत्यधिदेवताःस्थापयेत् ॥ अग्निंदूतंमेधातिथिरग्निर्गायत्री अग्न्यावाह नेवि० ॥ ॐ अग्निंदूतंवृणीमहे० ॥ ॐ भूर्भुवःस्वःअग्नेइहागच्छेहतिष्ठेतिसूर्यवामपार्श्वेऽग्निं १ ॥ अप्सुमेमेधातिथिरापोनुष्टुप् अवावा० ॥ ॐ अप्सुमेसोमो० ॥ ॐ भूर्भुवःस्वःआपइहागच्छतेहतिष्ठतेतिसोमवामपार्श्वेअपः २ ॥ स्योनामेधातिथिर्भूमि र्गायत्री भूम्यावाहने० ॥ ॐ स्योनापृथिवि० ॥ ॐ भूर्भुवःस्वःभूमेइहागच्छेहतिष्ठेतिभौमवामपार्श्वेभूमिं ३ ॥ इदंविष्णुर्मे धातिथिर्विष्णुर्गायत्री विष्ण्वावाहने० ॥ ॐ इदंविष्णुर्वि० ॥ ॐ भूर्भु० विष्णोइहागच्छेहतिष्ठेतिबुधवामपार्श्वेविष्णुं ४ ॥ इंद्र श्रेष्ठानिगृत्समदइंद्रस्त्रिष्टुप् इंद्रावाहने० ॥ ॐ इंद्रश्रेष्ठानि० ॥ ॐ भूर्भु० इंद्रेहागच्छेहतिष्ठेतिबृहस्पतिवामपार्श्वेइंद्रं ५॥ इंद्रा णींवृषाकपिरिंद्राणीपंक्तिः इंद्राण्यावा० ॥ ॐ इंद्राणीमासुनारिषु० ॥ ॐ भूर्भु० इंद्राणीहागच्छेहतिष्ठेतिशुक्रवामपार्श्वेइंद्राणीं ६ ॥ प्रजापतेहिरण्यगर्भःप्रजापतिस्त्रिष्टुप् प्रजापत्यावाहने० ॥ ॐ प्रजापतेनत्व० ॥ ॐ भूर्भुवःस्वःप्रजापतेइहागच्छेहतिष्ठेति

१४६

शनिवामपार्श्वेप्रजापतिं ७ ॥ आयंगौःसार्पराज्ञीसर्पागायत्री सर्पावाहने० ॥ ॐ आयंगौःपृश्नि० ॥ ॐ भूर्भुवःस्वःसर्पाइहाग च्छतेहतिष्ठध्वमितिराहुवामपार्श्वेसर्पान् ८ ॥ ब्रह्मजज्ञानंवामदेवोब्रह्मात्रिष्टुप् ब्रह्मावाहनेवि० ॥ ॐ ब्रह्मजज्ञानं० ॥ ॐभूर्भु वःस्वः ब्रह्मन्निहागच्छेहतिष्ठेतिकेतुवामपार्श्वेब्रह्माणं ९ ॥ ततःशुक्लपुष्पाक्षतैर्गणपत्यादिपंचदेवताःस्थापयेत् ॥ गणानांत्वागृ त्समदोगणपतिर्जगती गणपत्यावाहने० ॥ ॐ गणानांत्वागणपतिं० ॥ ॐ भूर्भुवःस्वः ॥ गणपतेइहागच्छेहतिष्ठेतिराहोरुत्तर तोगणपतिं १ ॥ जातवेदसेकश्यपोदुर्गात्रिष्टुप् दुर्गावाहने० ॥ ॐ जातवेदसे० ॥ ॐ भूर्भुवःस्वःदुर्गेइहागच्छेहतिष्ठेतिशनेरु त्तरतोदुर्गां २ ॥ तववायोव्यश्वोवायुर्गायत्री वाय्वावाहनेवि० ॥ ॐ तववायवृतस्पते० ॥ ॐ भूर्भुवःस्वः वायोइहागच्छेहति ष्ठेतिरवेरुत्तरतोवायुं ३ ॥ आदित्प्रत्नस्यआकाशोगायत्री आकाशावाहनेवि० ॥ ॐ आदित्प्रत्नस्यरेतसो० ॥ ॐ भूर्भुवःस्वःआ काशेहागच्छेहतिष्ठेतिराहोर्दक्षिणेआकाशं ४ ॥ एषोउषाःप्रस्कण्वोश्विनौगायत्री अश्व्यावाहने० ॥ ॐ एषोउषाअपूर्व्या० ॥ ॐ भूर्भुवःस्वःअश्विनाविहागच्छतमिहतिष्ठतमितिकेतोर्दक्षिणेश्विनौ ५ ॥ यद्वाविनायकादीन्पंचोत्तरतःस्थापयेत् ॥ ततोग्रह पीठगतावक्ष्यमाणदेवताःस्थापयेत् ॥ उत्तरेक्षेत्राधिपतिंवास्तोष्पतिंचावाहयेदित्येके ॥ क्षेत्रस्यपतिनावामदेवःक्षेत्रपालोनुष्टुप् क्षेत्रपालावाहनेवि० ॥ ॐ क्षेत्रस्यपतिना० ॥ ॐ भूर्भुवःस्वःक्षेत्रपालेहागच्छेहतिष्ठेति क्षेत्रपालं ६ ॥ वास्तोष्पतेवसिष्ठोवास्तो ष्पतिस्त्रिष्टुप् वास्तोष्पत्यावाहने० ॥ ॐ वास्तोष्पते० ॥ ॐ भूर्भुवःस्वःवास्तोष्पतेइहागच्छेहतिष्ठेतितदुत्तरेवास्तोष्पतिं ७ ॥ ततःप्रागादिदलाग्रेष्विंद्रादिलोकपालान्पूर्वाभिमुखानावाहयेत् ॥ तत्रमंत्राश्च ॥ इंद्रंविश्वाजेतेंद्रोऽनुष्टुप् ॥ पूर्वेइंद्रावाहने० ॥ ॐ इंद्रंविश्वाअवीवृधन्० ॥ ॐ भूर्भुवःस्वःइंद्रेहागच्छेहतिष्ठेतिपूर्ववत् १ ॥ एवमुत्तरत्रापि ॥ अग्निंदूतंमेधातिथिरग्निर्गायत्री

अग्न्यावाहनेवि० ॥ ॐ अग्निंदूतंवृणीमहे० २॥ यमायसोमंयमोयमोनुष्टुप् यमावाहने० ॥ ॐ यमायसोमं० ३ ॥ मोषुणःक
ण्वोनिर्ऋतिर्गायत्री निर्ऋत्यावाह० ॥ ॐ मोषुणःपरापरा० ४॥ तत्त्वायामिशुनःशेपोवरुणस्त्रिष्टुप् वरुणावाह० ॥ ॐ तत्त्वा
यामिब्रह्मणा० ५ ॥ तववायोव्यश्वोवायुर्गायत्री वाय्वावाह० ॥ ॐ तववायवृतस्पते० ६ ॥ सोमोधेनुंगोतमःसोमस्त्रिष्टुप्
सोमावाहने० ॥ ॐ सोमोधेनुं० ७॥ तमीशानंगोतमईशानोजगतीईशानावाह० ॥ ॐ तमीशानंजगत० ८॥ एवमीशानां
तादेवताआवाह्य ॥ ( ततईशानीपूर्वयोर्मध्येसहस्रशीर्षेत्यनंतं १ नैर्ऋत्यपश्चिमयोर्मध्येब्रह्मजज्ञानमितिब्रह्माणं २ ततउत्तरेक्षे
त्रस्यपतिनेतिक्षेत्रपालं ३ वास्तोष्पतइतिवास्तोष्पतिं ४ चावाह्य ) तदस्तुमित्रावरुणा० गृहावैप्रतिष्ठा० इतिप्रतिष्ठाप्योक्तत
त्तन्मंत्रैरादित्यायनमइत्येवमादिभिर्नाममंत्रैर्वाषोडशोपचारैःसंपूज्य (फलपुष्पमालाशोभितंवितानंबृहस्पतिदैवत्यंसूर्यादिभ्यइ
दंनममेत्युत्सृज्यग्रहवेद्युपरिबध्नीयात् )॥ ग्रहवेदीशानभागेमहीद्यौःपृथिवीचनइत्यादिभिर्विधिनाकलशस्थापनंकृत्वातदुपरित
त्वायामीतिमंत्रेणवरुणंसंपूज्यतत्रकलशेसमुद्रनद्यावाहनंकुर्यात् ॥ सर्वेसमुद्राःसरितस्तीर्थानिजलदानदाः ॥ आयांतुयजमान
स्यदुरितक्षयकारकाः ॥ ततःकलशाभिमंत्रणं कलशस्यमुखेविष्णुरित्यादि० ॥ ततःकलशप्रार्थना ॥ देवदानवसंवादेमथ्यमा
नेमहोदधौ ॥ उत्पन्नोसितदाकुंभविधृतोविष्णुनास्वयं ॥ त्वत्तोयेसर्वतीर्थानिदेवाःसर्वेत्वयिस्थिताः ॥ त्वयितिष्ठंतिभूतानित्व
यिप्राणाःप्रतिष्ठिताः ॥ शिवःस्वयंत्वमेवासिविष्णुस्त्वंचप्रजापतिः ॥ आदित्यावसवोरुद्राविश्वेदेवाःसपैतृकाः ॥ त्वयितिष्ठंति
सर्वेपियतःकामफलप्रदाः ॥ त्वत्प्रसादादिमंयज्ञंकर्तुमीहेजलोद्भव ॥ सान्निध्यंकुरुदेवेशप्रसन्नोभवसर्वदा ॥ ततआचार्योऽन्वा
दध्यात् ॥ तत्रप्रधानकीर्तनेविशेषः ॥ सूर्यसोममंगारकंबुधंबृहस्पतिंशुक्रंशनिंराहुंकेतुंच एताःप्रधानदेवताः अष्टोत्तरशतमष्टा

विंशतिवासंख्याकाभिःअर्कादिजातीयसमिदाहुतिभिस्तावतीभिश्चर्वाहुतिभिराज्याहुतिभिश्च ॥ ईश्वरंउमांस्कंदंनारायणंब्रह्माणंइंद्रंयमंकालंचित्रगुप्तं अग्निंअपःभूमिंविष्णुंइंद्रंइंद्राणींप्रजापतिंसर्पान्ब्रह्माणं एतादेवताःअष्टाविंशतिसंख्याकाभिरष्टाभिर्वा तदाहुतिभिः ॥ विनायकंदुर्गांवायुमाकाशंअश्विनौक्षेत्रपालंवास्तोष्पतिं इंद्रमग्निंयमंनिर्ऋतिंवरुणंवायुंसोममीशानं एतादेवताः अष्टचतुर्वासंख्याकाभिःसमिदाहुतिभिश्चर्वाहुतिभिराज्याहुतिभिश्च ( सूर्यादिनवग्रहान्दशसंख्याकतिलाहुतिभिः ॥ अग्निंवायुंसूर्यंप्रजापतिंचप्रत्येकंपंचविंशतिशतमिताभिस्तिलाहुतिभिर्यक्ष्ये । कमलाकरमतेप्रजापतिं समस्तव्याहृतिभिरयुतसंख्यया घृताक्ततिलद्रव्येण यक्ष्येइति) शेषेणस्विष्टकृतमित्यादि॥ आज्यसंस्कारकालेसूर्यायत्वाजुष्टंनिर्वपामीतिचतुरोमुष्टीन्निरुप्यैवंसोमायमंगलायत्वेत्यादिप्रकारेणग्रहेभ्यश्चतुरश्चतुरोमुष्टीन्निरुप्य इतरासांदेवतानांकृतेदेवेभ्योजुष्टंनिर्वपामीतिचतुरोमुष्टीन्निर्वपेत् ॥ गृहसिद्धान्नेनवाहोमः ॥ आज्येनसहगृहसिद्धान्नस्यचपर्यग्निकरणम् ॥ दर्वीस्रुवसंमार्गांतेगृहसिद्धान्नंस्थाल्यामादायअग्नावधिश्रित्याभिघारणादिर्बर्हिष्यासादनांतंकुर्यात् ॥ अर्कादितत्तद्ग्रहोक्तयज्ञियतरुजातीयाःसमिधश्चतत्रैवासाद्यअग्न्यर्चनाद्याज्यभागवराहुत्यंतेयजमानोन्वाधानानुसारेणएतत्संख्याहुतिपर्याप्तं अर्कादिजातीयसमिच्चर्वाज्यात्मकंहविस्त्रयंसूर्यायसोमायेत्यादिनममेत्येवंत्यागपूर्वकंतदंगदेवताभ्योपित्यक्त्वा एवंत्यागेकृतेसर्त्विगाचार्योऽर्कादिसमिधोदधिमध्वाक्ताश्चर्वाहुतीराज्याहुतीश्चसंकल्पानुसारिसंख्याकाजुहुयात् ॥ ( ततस्तिलैर्दशदशाहुतिभिर्ग्रहहोमस्तथाव्याहृतिभिरयुतसंख्ययाहोमश्च कार्यः ॥ ) ततःस्विष्टकृदादिप्रायश्चित्तहोमांतंकृत्वा दिक्पालादिभ्यःसदीपमाषभक्तबलिसंकल्पंयजमानद्वाराकारयेत् ॥ ॥

१ होमप्रकारस्तु—नमुक्तकेशीजुहुयान्नानिपातितजानुकः । उत्तानेनैवहस्तेनअंगुष्ठाग्रेणपीडितं । संहतांगुलिपाणिस्तुवाग्यतोजुहुयाद्द्विजः ॥

## ॥ १०३ ॥ अथबलिदानम् ॥

श्रीः ॥ सपत्नीकोयजमानःप्रतिबलिंसंकल्प्यसाक्षतजलंत्यजेत् ॥ तद्यथा ॥ अग्न्यायतनस्यसमंतादिक्षुमाषभक्तबलीन्दिक्पाले भ्योदद्यात् ॥ त्रातारमिंद्रंगर्गइंद्रस्त्रिष्टुप् इंद्रप्रीत्यर्थेबलिदानेविनियोगः ॥ ॐ त्रातारमिंद्रं० ॥ इंद्रायसांगायसपरिवारायसा युधायसशक्तिकायएषमाषभक्तबलिर्नमम ॥ भोइंद्रदिशंरक्षबलिंभुंक्ष्वममयजमानस्यसकुटुंबस्यायुःकर्ताक्षेमकर्ताशांतिकर्तापु ष्टिकर्ताभवेतिपुष्पाक्षतजलानिपूर्वाभिमुखस्त्यजेत् ॥ १ ॥ अग्निंदूतंमेधातिथिरग्निर्गायत्री अग्निप्रीत्यर्थेबलिदानेवि० ॥ ॐ अग्निंदूतंवृणीमहे० अग्नयेसांगाय० २ ॥ यमायसोमंयमोयमोनुष्टुप् यमप्रीत्यर्थेबलिदानेवि०॥ॐयमायसोमं०॥यमायसांगाय० ३ ॥ मोषुणःकण्वोनिर्ऋतिर्गायत्री निर्ऋतिप्रीत्यर्थेबलि० ॥ ॐ मोषुणःपरापरा० ॥ निर्ऋतयेसांगाय० ४ ॥ तत्त्वायामिशुनः शेपोवरुणस्त्रिष्टुप् वरुणप्रीत्यर्थे० ॥ ॐ तत्त्वायामिब्रह्मणा० वरुणायसांगाय० ५ ॥ तववायोव्यश्वोवायुर्गायत्री वायुप्रीत्यर्थे बलि० ॥ ॐ तववायवृतस्पते० वायवेसांगाय०६॥सोमोधेनुंगोतमःसोमस्त्रिष्टुप् सोमप्रीत्यर्थे० ॥ ॐ सोमोधेनुंसोमोअर्वंत०॥ सोमायसांगाय०७॥तमीशानंगोतमईशानोजगती ईशानप्रीत्यर्थे०॥ॐतमीशानंजगतः०ईशानायसांगाय० ८ ॥ आकाशभूमि भ्यां०॥ततोग्रहबलयोदेयाः तत्रपूर्वंआकृष्णेनहिरण्यस्तूपःसवितात्रिष्टुप् सूर्यप्रीत्यर्थे०॥ॐआकृष्णेनरजसा० ॥ आदित्यायसां गायसपरिवारायईश्वराग्निरूपाधिदेवताप्रत्यधिदेवतासहितायेमंसदीपमाषभक्तबलिंसमर्पयामिइतिपुष्पांजलिंक्षिपेत् भोआदि त्येमंबलिंगृहाणममयजमानस्य० १ ॥ आप्यायस्वगोतमःसोमोगायत्री सोमप्रीत्यर्थे० ॥ ॐ आप्यायस्वसमेतु० ॥ सोमायसां गाय०उमाब्रूपाधिदेवताप्रत्यधिदेवतासहितायेत्यादि० २ ॥ अग्निर्मूर्धात्रिरूपोंगारकोगायत्री भौमप्रीत्यर्थेबलिदाने०॥ॐअग्नि

मूर्धादिवः० ॥ भौमायसांगाय० स्कंदभूमिरूपाधिदेवताप्रत्यधिदेवतासहितायेत्यादि० ३ ॥ उद्बुध्यध्वंबुधोबुधस्त्रिष्टुप् बुध
प्रीत्यर्थे० ॥ ॐ उद्बुध्यध्वंसमनसः० बुधायसांगाय० नारायणविष्णुरूपाधिदेवताप्रत्यधिदेवतासहितायेत्यादि०४॥बृहस्पते
गृत्समदोबृहस्पतिस्त्रिष्टुप् बृहस्पतिप्रीत्यर्थेबलि० ॥ ॐबृहस्पतेअति०बृहस्पतयेसांगाय० ब्रह्मेंद्ररूपाधिदेवताप्रत्यधिदेवतास
हितायेत्यादि ५ ॥ शुक्रःपराशरःशुक्रोद्विपदाविराट् शुक्रप्रीत्यर्थेबलि० ॥ ॐ शुक्रःशुंशुक्वाँउषोन० शुक्रायसांगाय० इंद्रेंद्राणी
रूपाधिदेवताप्रत्यधिदेवतासहितायेत्यादि ६॥ शमग्निरिरिंबिठिःशनिरुष्णिक् शनिप्रीत्यर्थे० ॥ ॐ शमग्निरग्निभिः०शनैश्च
रायसांगाय० यमप्रजापतिरूपाधिदेवताप्रत्यधिदेवतासहितायेत्यादि ७॥ कयानोवामदेवोराहुर्गायत्री राहुप्रीत्यर्थेबलि० ॥
ॐ कयानश्चित्र० ॥ राहवेसांगाय० कालसर्परूपाधिदेवताप्रत्यधिदेवतासहितायेत्यादि ८॥ केतुंकृण्वन्मधुच्छंदाःकेतुर्गायत्री
केतुप्रीत्यर्थेबलि० ॥ ॐ केतुंकृण्वन्न० केतवेसांगायसंपरिवाराय० चित्रगुप्तब्रह्मरूपाधिदेवताप्रत्यधिदेवतासहितायेत्यादि०॥
ततःगणानांत्वागृत्समदोगणपतिर्जगती गणपतिप्रीत्यर्थेबलिदाने० ॥ ॐ गणानांत्वागणपतिं० गणपतयेसांगायसपरिवाराय
ऋद्धिबुद्धिसहितायेत्यादि० १ ॥ जातवेदसेकश्यपोदुर्गात्रिष्टुप् दुर्गाप्रीत्यर्थे० ॥ ॐ जातवेदसेसुनवाम० दुर्गायैसांगायैसप
रिवारायैसायुधायैसशक्तिकायैइमंबलिं० ॥ भोदुर्गेममयजमानस्यायुःकर्त्रीपुष्टिकर्त्रीतुष्टिकर्त्रीऋद्धिकर्त्रीभव २॥ तववायोव्य
श्वोवायुर्गायत्री वायुप्रीत्यर्थे० ॥ ॐ तववायवृत० वायवेसांगायेत्यादि० ३ ॥ आदित्प्रत्नस्यवत्सआकाशोगायत्री आकाश
प्रीत्यर्थे०॥ ॐआदित्प्रत्नस्यरेतसो० आकाशायसांगायेत्यादि० ४ ॥ एषोउषाःप्रस्कण्वोश्विनौगायत्री अश्विप्रीत्यर्थेबलिदाने०
ॐ एषोउषाअपूर्व्या० अश्विभ्यांसांगाभ्यांसपरिवाराभ्यांसायुधाभ्यांसशक्तिकाभ्यामिमंमाषभक्तबलिं० ॥ भोअश्विनौअमुंव

लिंगृह्णीतंममयजमानस्यआयुःकर्तारौक्षेमकर्तारौभवतं ५ ॥ वास्तोष्पतेवसिष्ठोवास्तोष्पतिस्त्रिष्टुप् वास्तोष्पतिप्रीत्यर्थे०॥ॐ वा
स्तोष्पते० ॥ वास्तोष्पतयेसांगायेत्यादि ६॥ततःक्षेत्रपालवलिः॥क्षेत्रस्यवामदेवःक्षेत्रपालोनुष्टुप् क्षेत्रपालप्रीत्यर्थे० ॥ ॐ क्षेत्रस्य
पतिना० क्षेत्रपालायसांगायसपरिवारायभूतप्रेतपिशाचराक्षसडाकिनीशाकिनीवेतालपरिवारयुतायइममित्यादि ॥ ततः
शूद्रादिनातद्बलिनयनेकृतेशांतापृथिवीतिभुवंप्रोक्ष्यसयजमानआचार्यःप्रक्षालितपाणिपादआचांतःसर्वकर्मप्रपूरणींभद्रद्रव्य
दांपूर्णाहुतिंहोष्येइतिसंकल्प्य स्रुचिद्वादशगृहीतमाज्यंफलसंयुतंगृहीत्वातस्यांगंधपुष्पाक्षतालंकृताग्रंस्रुवमधोविलंनिधायस्रु
क्स्रुवंशंखमुद्रयागृहीत्वोर्ध्वस्तिष्ठन् ॥ मूर्धानंभरद्वाजोग्निर्वैश्वानरस्त्रिष्टुप् पूर्णाहुतौविनियोगः ॥ ॐ मूर्धानंदिवो० ॥ अनेनपू
र्णाहुतिंहुत्वाअग्नयेवैश्वानरायेदंनममेतित्यागः॥ यद्वा मूर्धानं० ॥ पुनस्त्वाग्निर्वसुरुद्रादित्यास्त्रिष्टुप् ॥ पूर्णादर्विविश्वेदेवाःशत
क्रतुरनुष्टुप् ॥ सप्ततेअग्नेसप्तवानग्निर्जगती ॥ पूर्णाहुतौवि० ॥ इतिचतुर्भिर्हुत्वा ॥ इदमग्नयेवैश्वानरायवसुरुद्रादित्येभ्यःशतक्र
तवेसप्तवतेग्नयेचनममेतित्यागःकार्यः ॥ ततःसंस्रावहोमादिकर्मशेषंसमापयेत् ॥ ततःसर्वौषधैःसर्वगंधैश्चविलिप्तांगंप्राङ्मुखंय
जमानंसपरिवारंचत्वारोविप्राउदङ्मुखाऐशानीमुखावाग्रहकुंभोदकेन समुद्रज्येष्ठाइत्याद्यैरभिषेकमंत्रैर्ग्रहमंत्रैः सुरास्त्वामभिषिं
चंत्वित्यादिपौराणमंत्रैश्चाभिषिंचेयुः ॥ ततःस्नात्वाशुक्लांबरगंधमाल्यधरःप्राङ्मुखोयजमानोग्रहादीनांचोत्तरपूजांविधायाग्निं
संपूज्यविभूतिंधारयेत्॥ततोवरणक्रमेणर्त्विजोयजमानहस्तेश्रेयःसंपादनंकुर्युः॥ यजमानआचार्यादिभ्यःअमुककर्मणःश्रेयोग्रह
णंकरिष्ये ॥ आचार्यःशिवाआपःसंत्वितियजमानहस्तेजलंक्षिपेत् ॥ सौमनस्य० पुष्पं ॥ अक्षतंचारिष्टं० अक्षतान् ॥ दीर्घमा
युः०पुनर्जलं ॥ भवन्नियोगेनमयाअमुककर्मणियत्कृतंजपहोमादितदुत्पन्नंयच्छ्रेयस्तत्तुभ्यमहंसंप्रददे ॥ तेनत्वंश्रेयस्वीभव ॥ स

घतधारास्त्वितिवदेत्॥एवंब्रह्मादयः॥ ततःकर्ताग्नेःपश्चादाचार्यर्त्विजउदङ्मुखान्संपूज्यदेशकालौसंकीर्त्य कृतैतदयुतहोमाख्यग्र
हयज्ञस्यप्रतिष्ठासिद्ध्यर्थंश्रीसूर्यप्रीत्यर्थंइमांकपिलांरुद्रदैवत्याममुकगोत्रायामुकशर्मणेआचार्यायदक्षिणांसंप्रददेनममेत्युक्त्वा॥
कपिलेसर्वदेवानांपूजनीयासिरोहिणी॥ तीर्थदेवमयीयस्मादतःशांतिंप्रयच्छमे॥ इतिपठेत्॥ एवमग्रे॥ पुण्यस्त्वंशंखपुण्या
नांमंगलानांचमंगलं॥ विष्णुनाविधृतोनित्यमतःशांतिं० ॥ इतिसोमायशंखं॥ धर्मस्त्वंवृषरूपेणजगदानंदकारकः॥ अष्टमूर्ते
रधिष्ठानमतःपाहिसनातनेतिभौमायवृषं॥ हिरण्यगर्भगर्भस्थमितिबुधायहेम॥ पीतवस्त्रयुगंयस्माद्वासुदेवस्यवल्लभं॥ प्रदाना
त्तस्यवैविष्णोततःशांतिं० ॥ इतिगुरवेपीतवस्त्रं॥ विष्णुस्त्वमश्वरूपेणयस्मादमृतसंभवः॥ चंद्रार्कवाहनंनित्यमतःशांतिं० ॥
इतिशुक्रायाश्वं॥ यस्मात्त्वंपृथिवीकृष्णाधेनुःकेशवसंनिभा॥ सर्वपापहरानित्यमतःशांतिं० ॥ इतिशनयेकृष्णांगां॥ यस्मा
दायसकर्माणित्वदधीनानिसर्वदा॥ लांगलान्यायुधादीनितस्माच्छांतिं० ॥ इतिराहवेलोहं॥ यस्मात्त्वंछागयज्ञानामंगत्वेन
व्यवस्थितः॥ यानंविभावसोर्नित्यमतःशांतिं० ॥ इतिकेतवेछागं॥ सर्वेषांवागावः गवामंगेषुतिष्ठंतीतिदेयाः॥ सर्वेभ्योवा
सुवर्णं॥ ततोविभवेसतिशय्यारत्नभूमिवस्त्रकांचनान्यपियथाश्रद्धंदद्यात्॥ ततोब्रह्मादिऋत्विग्भ्योयथाशक्तिदक्षिणांदत्वा
यांतुदेवेतिदेवान्गच्छेत्यग्निंचविसृज्यतत्पीठंसोपस्करमाचार्यहस्तेप्रतिपाद्यपत्न्यासहरूपंरूपमित्याज्यावलोकनांते तदाज्यंसद
क्षिणंब्राह्मणायदत्वोक्तसंख्ययागुडौदनादिभिर्विप्रान्संभोज्याशिषोगृहीत्वाकर्मेश्वरार्पणंकुर्यात्॥ इति (अयुतहोमसंवलितो)
मात्स्यानुसारीग्रहयज्ञप्रयोगःसंपूर्णः॥

## ॥ १०४ ॥ अथवसोर्धारानुवाकः ॥

श्रीः ॥ वसोर्धाराचेत्थं ॥ वह्नेरुपरिस्तंभद्वयविधृतामौदुंबरीमृज्वीमकोटरांबाहुप्रमाणामार्द्रांस्रुचंपूर्वाग्रांनिधायतदुपरिशृंख
लावलंबितेननिर्मलघृतपूरितेन ताम्रेणमृन्मयेनवाकुंभेनाधोयवमात्रछिद्रेणाज्यंमुंचतास्रुवप्रणालिकयाग्रेसुवर्णजिह्वातोधोनि
पतंतीमग्नेरुपरिवसोर्धारांपातयेत् ॥ पतंत्यांचतस्यांचमकानुवाकानाग्नेयादीनिसूक्तानिश्रावयेत् ॥ तत्रकूयवाश्चमइतिमंत्रवा
क्यंद्वादशवारमावर्तनीयं ॥ चमकानुवाकानामग्निःकांडऋषिःआद्याग्नावैष्णवीगायत्री शिष्टानांवाजादयोन्नादिविशेषादेवताः
यजुश्छंदः ॥ अग्निमीळेनवानांमधुच्छंदाअग्निर्गायत्री ॥ विष्णोर्नुकमितिषण्णांदीर्घतमाविष्णुरनुष्टुप् ॥ आतेपितरितिपंचद
शानांगृत्समदोरुद्रस्त्रिष्टुप् ॥ स्वादिष्ठयेतिदशानांमधुच्छंदाःपवमानःसोमोगायत्री ॥ कायमानइतिमहावैश्वानरसाम्नोवैश्वा
नरोमहावैश्वानरःपथ्याबृहती ॥ मूर्धानमितिज्येष्ठसाम्नोभरद्वाजोवैश्वानरस्त्रिष्टुप् ॥ वसोर्धारायांविनियोगः ॥ सामगानासं
भवेऋङ्मात्रंपठेत् ॥ ॐ वसोर्धारांजुहोतिवसोर्मेधारांसदितिवाएषाहूयतेघृतस्यवाएनमेषाधारामुष्मिंल्लोकेपिन्वमानोपतिष्ठत
आज्येनजुहोतितेजोवाआज्यंतेजोवसोर्धारातेजसैवास्मैतेजोवरुंधेथोकामावैवसोर्धाराकामानेवावरुंधेयंकामयेतप्राणानस्यान्ना
द्यंविच्छिंद्यामितिविग्राहंतस्यजुहुयात्प्राणानेवास्यान्नाद्यंविच्छिनत्तियंकामयेतप्राणानस्यान्नाद्यꣳसंतनुयामिति संततांतस्यजुहु
यात्प्राणानेवास्यान्नाद्यꣳसंतनोतिद्वादशद्वादशानिजुहोति द्वादशमासाःसंवत्सरःसंवत्सरेणैवास्माऽअन्नमवरुंधेन्नंचमेक्षुच्चमइ
त्याहैतद्वाऽअन्नस्यरूपꣳरूपेणैवान्नमवरुंधेग्निश्चमआपश्चम इत्याहैषावाअन्नस्ययोनिःसयोन्येवान्नमवरुंधेर्धेंद्राणिजुहोति देवता
एवावरुंधेयत्सर्वेषामर्धमिंद्रःप्रतितस्मादिंद्रोदेवतानांभूयिष्ठभाक्तमइंद्रमुत्तरमाहेंद्रियमेवास्मिन्नुपरिष्टाद्दधातियज्ञायुधानिजुहो

ति यज्ञोवैयज्ञायुधानिंयज्ञमेवावरुंधेथोऽएतद्वैयज्ञस्यरूपंरूपेणैवयज्ञमवरुंधे वभृथश्चमेस्वगाकारश्चमइत्याहस्वगाकृत्याअग्नि श्चमेघर्मश्चमइत्याहैतद्वैब्रह्मवर्चसस्यरूपंरूपेणैवब्रह्मवर्चसमवरुंधऋक्चमेसामचमइत्याहैतद्वैछंदसांरूपंरूपेणैवछंदांस्यव रुंधे गर्भाश्चमेवत्साश्चमइत्याहैतद्वैपशूनांरूपंरूपेणैवपशूनवरुंधेकल्पांजुहोत्यक्लृप्तस्यक्लृप्त्यैयुग्मदयुजेजुहोति मिथुनत्वायोत्त रावतीभवतोभिक्रांत्याएकाचमेतिस्रश्चमइत्याहदेवछंदसंवाएकाचतिस्रश्चमनुष्यछंदसंचतस्रश्चाष्टौचदेवछंदसंचैवमनुष्यछंदसं चावरुंधऽआत्रयस्त्रिंशतोजुहोतित्रयस्त्रिंशद्वैदेवतादेवताएवावरुंधऽ आष्टाचत्वारिंशतोजुहोत्यष्टाचत्वारिंशदक्षराजग तीजागताःपशवोजगत्यैमास्मैपशूनवरुंधे वाजश्चप्रसवश्चेतिद्वादशंजुहोतिद्वादशमासाःसंवत्सरसंवत्सरएवप्रतितिष्ठति ॥ इतिवसोर्धारानुवाकः ॥ १ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥

## ॥ १०५ ॥ अथाग्न्युपघातेप्रायश्चित्तानि ॥

श्रीः ॥ तत्रपूर्वमग्न्युपघातेप्रायश्चित्तम् ॥ अस्मिन्कर्मणिस्वयंज्वलनादिनाग्न्युपघातजनितप्रत्यवायपरिहारार्थंप्रायश्चित्तंकरि ष्ये ॥ ॐ पुनस्त्वादित्यारुद्रावसवःसमिंधतांपुनर्ब्रह्माणोवसुनीथयज्ञैः ॥ घृतेनत्वंतनुवोवर्धयस्वसत्याःसंतुयजमानस्यकामाः॥ इतिमंत्रेणाग्नौसमिधमाधायतेनैवमंत्रेणस्रुवाहुतिंजुहुयात् ॥ आदित्यरुद्रवसुब्रह्मभ्यइदंनमम ॥ ॥ अस्मिन्क० आसादितप्र णीतास्कंदनशोषणप्रस्रवणादिजनितप्रत्यवाय० विहितप्राय० ॥ आपोहिष्ठेतितृचेनप्रणीतायामुदकमापूर्यस्रुवाहुतिंजुहुयात् ॥ ॐ ततंमआपस्तदुतायतेपुनःस्वादिष्ठाधीतिरुचथायशस्यते ॥ अयंसमुद्रउतविश्वभेषजःस्वाहाकृतस्यसमुतृप्णुतर्भुवःस्वाहा ॥

ऋभुभ्य० ॥ ॥अस्मिन्क० हवनीयद्रव्याणामग्नेश्चकेशनखकीटपिपीलिकामक्षिकाद्युपघातजनितप्रत्य० द्वेमिंदाहुतीहोष्यामि॥ ॐ यन्मआत्मनोमिंदाभूदग्निस्तत्पुनराहाज्जातवेदाविचर्षणिःस्वाहा ॥ मिंदवतेग्नयइदं० ॥ पुनरग्निश्चक्षुरदात्पुनरिंद्रोबृहस्पतिः ॥ पुनर्मेअश्विनायुवंचक्षुराधत्तमक्ष्योःस्वाहा ॥ मिंदवतेग्नय० ॥ ॥अस्मिन्क० परिस्तरणबर्हिरादीनांदाहादिनाशजनितप्रत्यवाय० ॥ ॐ त्वमग्नेअयास्ययासन्मनसाहितः ॥ अयासन्हव्यमूहिषेयानोधेहिभेषजंस्वाहा ॥ अयासेग्नयइदं० ॥ ॐ प्रजापतेनत्वदेतान्यन्योविश्वाजातानिपरिताबभूव ॥ यत्कामास्तेजुहुमस्तन्नोअस्तुवयंस्यामपतयोरयीणांस्वाहा ॥ प्रजापतय० ॥ ॥ अस्मिन्क० आयतनाद्बहिरंगारपतनजनितप्रत्यवाय० ॥ ॐ इदंतएकंपरउंतएकंतृतीयेनज्योतिषासंविशस्व ॥ संवेशनेतन्व१श्चारुरेधिप्रियोदेवानांपरमेजनित्रे ॥ इतिमंत्रेणांगारानायतनेप्रक्षिप्य भूर्भुवःस्वःस्वाहाइतिस्रुवाहुतिंजुहुयात् ॥ ॥ अस्मिन्क०स्वराक्षरपदवर्णभ्रेषजनितप्रत्यवाय० आभिर्गीर्भिरित्येकामाज्याहुतिंहोष्यामि ॥ ॐ आभिर्गीर्भिर्यदतोनऊनमाप्याययहरिवोवर्धमानः ॥ यदास्तोतृभ्योमहिगोत्रारुजासिभूयिष्ठभाजोअधतेस्यामस्वाहा ॥ इंद्रायहरिवत० ॥ अस्मिन्क० स्वाहाकारप्रदानासमकालताजनितप्रत्यवाय० मनोज्योतिरित्येकामाज्याहुतिंहोष्यामि ॥ ॐ मनोज्योतिर्जुषतामाज्यंविच्छिन्नंयज्ञंसमिमंदधातु ॥ याइष्टाउषसोनिम्रुचश्चताःसंदधामिहविषाघृतेनस्वाहा ॥ मनसेज्योतिषइदं० ॥ ॥ अस्मिन्क० नियमासनवाग्लोपजनितप्रत्यवाय० इदंविष्णुस्त्र्यंबकमितिमंत्राभ्यांस्रुवाहुतीहोष्यामि ॥ ॐ इदंविष्णुर्विचक्रमेत्रेधानिदधेपदं॥ समूढमस्यपांसुरेस्वाहा ॥ विष्णवइदं० ॥ ॐ त्र्यंबकंयजामहेसुगंधिंपुष्टिवर्धनं ॥ उर्वारुकमिवबंधनान्मृत्योर्मुक्षीयमामृता

स्वाहा ॥ त्र्यंबकायेदं० ॥ ॥ अस्मिन्कर्मणिहोम्यद्रव्याणांसमिदादीनांमध्येउक्तसंख्यातोन्यूनातिरिक्तत्वजनितप्रत्यवाय०
प्रायश्चित्तंकरिष्ये ॥ ॐ यत्पाकत्रा० अग्नयइदं० ॥ ॥ अस्मिन्कर्मणि० देवताद्वयोर्मध्येऋत्विगग्निमध्येचपुरुषांतरगमनजनि
तप्रत्य० पथिकृदग्निदेवताकांपूर्णाहुतिंहोष्यामि ॥ जुह्वांचतुर्गृहीतमाज्यंगृहीत्वाजुहुयात् ॥ ॐ अग्नयेपथिकृतेस्वाहा अग्नये
पथिकृतइदं० ॥ ॥ अस्मिन्क० प्रधानाहुत्युपरिस्विष्टकृदाहुतिप्रक्षेपजनितप्रत्यवाय० ॥ ॐ यत्रवेत्थवनस्पतेदेवानांगुह्या
नामानि ॥ तत्रहव्यानिगामयस्वाहा ॥ इत्यनेनसमिधंहुत्वासमस्तव्याहृत्याज्यंजुहुयात् ॥ ॥ अस्मिन्क० ऋक्तोयज्ञभ्रेषप्राय० ॥
ॐ भूःस्वाहा अग्नयइदं ॥ ॥ अ० यजुष्टोयज्ञभ्रेषप्रा० ॥ ॐ भुवःस्वाहा वायवइदं० ॥ ॥ अ० सामतोयज्ञभ्रेष० ॥ स्वः
स्वाहा सूर्यायेदं ॥ ॥ अविज्ञातप्रायश्चित्तं० ॥ ॐ भूर्भुवःस्वःस्वाहा प्रजापतय० ॥ ॥ चरौश्रप्यमाणेतापादुत्सिक्ते चरूत्सेक
जनितप्रत्यवा० यदिपूर्वस्यांतदाइंद्रायस्वाहेतिस्रुवाहुतिः ॥ दक्षिणस्यांयमायस्वा० ॥ पश्चिमायांवरुणाय० ॥ उत्तरस्यांसोमाय० ॥
विदिक्षुभूर्भुवःस्वःस्वाहेति ॥ एवंहुत्वा स्रुवगृहीतेनाज्येनचरुमाप्याययति आप्यायस्वसंतेपयांसीत्याभ्यां ॥ ततोमिंदाहु
ती ॥ यन्मआत्मनो० पुनरग्निरितिद्वाभ्यां ॥ ततःसर्वप्रायश्चित्तं भूर्भुवःस्वःस्वाहेति ॥ ॥ अस्मिन्क० हूयमानाहुतिस्कंद
नजनितप्रत्यवाय० ॥ स्कन्नंहविरभिमृशेत् ॥ देवांजनमगन्यज्ञस्तस्यमाशीरवतुवर्धतां ॥ भूतिर्घृतेनमुंचतुयज्ञोयज्ञपतिमꣳ
हसः ॥ भूपतयेस्वाहा ॥ भुवनपतयेस्वाहा ॥ भूतानांपतयेस्वाहा ॥ यज्ञस्यत्वाप्रमयोन्मयाभिमयाप्रतिमया ॥ ततः ॥
द्रप्सश्चस्कंदप्रथमाꣳअनुद्यूनिमंचयोनिमनुयश्चपूर्वः ॥ समानंयोनिमनुसंचरंतंद्रप्संजुहोम्यनुसप्तहोत्राः ॥ इत्याज्याहुतिंहुत्वाव्या
हृतिभिश्च ॥ ततःस्कन्नमग्नौक्षिपेत् ॥ ॥ व्रतलोप० व्रतपतिदेवताकांपूर्णाहुतिं० ॥ चतुर्गृहीतमाज्यं० अग्नयेव्रतपतयेस्वाहा ॥ ॥

अग्नेरुक्तस्थानादन्यत्रनासाकर्णादौघृताहुतिप्रक्षेपजनितप्रत्यवाय० मूलेनपंचविंशतिसंख्याज्याहुतीर्होष्यामि ॥ मूलमंत्रेणजुहुयात् ॥ ॥ अस्मिन्क० वेदिकाकुंडकलशप्रतिमादीनामुक्तप्रमाणाद्धीनाधिकताजनितप्रत्यवायपरि० अष्टाविंशतिवारंसमस्तव्याहृत्याज्याहुतीर्होष्यामि ॥ ॐ भूर्भुवःस्वःस्वाहा प्रजापतयइदंनमम ॥ ॥ सांगतासिद्ध्यर्थेसर्वप्रायश्चित्तंकरिष्ये ॥ ॐ भूर्भुवःस्वःस्वाहा प्रजापतयइदंनमम ॥ इतिसर्वसाधारणप्रायश्चित्तानि ॥ ॥ छ ॥ ॥ छ ॥

## ॥ १०६ ॥ अथाग्निनामानि ॥

श्रीः ॥ लौकिकेपावकोह्यग्निःप्रथमःपरिकीर्तितः ॥ अग्निस्तुमारुतोनामगर्भाधानेप्रकीर्तितः ॥ पुंसवेपवमानस्तुशोभनःशुभकर्मसु ॥ सीमन्तेमंगलोनामप्रबलोजातकर्मणि ॥ पार्थिवोनामकरणेप्राशनेऽन्नस्यवैशुचिः ॥ सभ्यनामातुचूडायांव्रतादेशेसमुद्भवः ॥ गोदानेसूर्यनामास्याद्विवाहेयोजकःस्मृतः ॥ आवसथ्येद्विजोज्ञेयोवैश्वदेवेतुरुक्मकः ॥ प्रायश्चित्तेविटश्चैवपाकयज्ञेषुपावकः ॥ देवानांहव्यवाहश्चपितॄणांकव्यवाहनः ॥ शांतिकेवरदःप्रोक्तःपौष्टिकेबलवर्धनः ॥ पूर्णाहुत्यांमृडोनामक्रोधोग्निश्चाभिचारिके ॥ वश्यार्थेकामदोनामवनदाहेतुदूषकः ॥ कुक्षौतुजाठरोज्ञेयःक्रव्यादोमृतदाहने ॥ वह्निनामालक्षहोमेकोटिहोमेहुताशनः ॥ वृषोत्सर्गेऽध्वरोनामशुचयेब्राह्मणःस्मृतः ॥ समुद्रेवाडवोह्यग्निःक्षयेसंवर्तकस्तथा ॥ ब्रह्मावैगार्हपत्यश्चईश्वरोदक्षिणस्तथा ॥ विष्णुराहवनीयःस्यादग्निहोत्रेत्रयोग्नयः ॥ ज्ञात्वैवमग्निनामानिगृह्यकर्मसमारभेत् ॥ इमानिसर्वसंस्कारशांतिकपौष्टिकाद्यनुष्ठानोपयुक्तानितत्रतत्रयोज्यान्यग्निनामानि ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥

## ॥ १०७ ॥ अथस्थालीपाकप्रयोगः ॥

श्रीः ॥ तत्रयजमानःकृतनित्यक्रियःशुचिःपरिहितधौतवासाःपीठोपविष्टःप्राङ्मुखोवाग्यतोद्विराचम्यदर्भपाणिःप्राणानायम्यदेशकालौसंकीर्त्यममोपात्तदुरितक्षयद्वाराश्रीपरमेश्वरप्रीत्यर्थममुककर्मकरिष्ये ॥ तदंगहोमंकर्तुंस्थंडिलादिकरिष्ये ॥ इतिसंकल्प्यगोमयादिलिप्तेशुद्धदेशेशुद्धमृदाऐशान्यारंभमुदक्संस्थंचतुरंगुलोन्नतमंगुलोन्नतंवाचतुर्दिक्षुमिलित्वाद्विसप्तत्यंगुलपरिधिकंफलितमष्टादशांगुलविस्तृतंहोमानुसारेणतदधिकंवानतुततोन्यूनंमध्योन्नतंस्थंडिलंकुर्यात् ॥ तद्गोमयेनप्रदक्षिणमुपलिप्यदक्षिणेष्टौउदीच्यांद्वेप्रतीच्यांचतुःप्राच्यामर्धमित्यंगुलानित्यक्त्वा दक्षिणोपक्रमामुदक्संस्थांप्रादेशमात्रामेकांलेखांतस्यादक्षिणोत्तरयोःप्रागायतेपूर्वरेखयाअसंसृष्टेप्रादेशसंमितेद्वेलेखेलिखित्वा तयोर्मध्येपरस्परमसंसृष्टाउदक्संस्थाःप्रागायताःप्रादेशसंमितास्तिस्रइतिषड्लेखायज्ञियशकलमूलेनदक्षिणहस्तेनोल्लिख्यलेखासुतच्छकलमुदगग्रंनिधाय स्थंडिलमद्भिरभ्युक्ष्यशकलंभंक्त्वाग्नेय्यांनिरस्यपाणिंप्रक्षाल्यवाग्यतोभवेत् ॥ ततस्तैजसेनासंभवेमृन्मयेनवापात्रयुग्मेनसंपुटीकृत्यसुवासिन्याश्रोत्रियागारात्स्वगृहाद्वासमृद्धंनिर्धूममग्निमाहृत्यस्थंडिलादाग्नेय्यांनिधाय ॥ जुष्टोदमूनाआत्रेयोवसुश्रुतोग्निस्त्रिष्टुप् ॥ एह्यग्नेराहूगणोगोतमोग्निस्त्रिष्टुप् ॥ अग्न्यावाहनेविनियोगः ॥ ॐ जुष्टोदमूनाअतिथिर्दुरोणइमंनोयज्ञमुपयाहिविद्वान् ॥ विश्वाअग्नेअभियुजोविहत्याशत्रूयतामाभरभोजनानि ॥ एह्यग्नइहहोतानिषीदादब्धःसुपुरएताभवानः ॥ अवतांत्वारोदसीविश्वमिन्वेयजामहेसौ

---

१ सचविवाहानंतरकर्तव्यगृहप्रवेशनीयहोमोत्तरभाविन्यांपौर्णमास्यामारंभणीयोनत्वमावास्यायां । चतुर्थीहोमात्प्रागपिपौर्णमासीचेत्तत्रारंभः मलमासगुरुशुक्रास्तबाल्यवार्धकग्रहपौषमासादावप्ययमारंभणीयः । पर्वनिर्णयःसविस्तरोऽन्यत्रज्ञेयः ॥

मनसार्यदेवान् ॥ इत्यक्षतैरावाह्याच्छादनंदूरीकृत्य ॥ समस्तव्याहृतीनांपरमेष्ठीप्रजापतिःप्रजापतिर्बृहती ॥ अग्निप्रतिष्ठापने विनियोगः ॥ ॐ भूर्भुवःस्वरित्यात्माभिमुखंपाणिभ्यांषट्सुलेखास्वमुकनामानमग्निंप्रतिष्ठापयामीत्यग्निंप्रतिष्ठाप्य ॥ प्रोक्षितेंधनानिनिक्षिप्यवेणुधमन्याप्रबोध्यध्यायेदेवम् ॥ चत्वारिशृंगागोतमोवामदेवोग्निस्त्रिष्टुप् ॥ अग्निमूर्तिध्यानेविनियोगः ॥ ॐ चत्वारिशृंगात्रयोअस्यपादाद्वेशीर्षेसप्तहस्तासोअस्य ॥ त्रिधाबद्धोवृषभोरोरवीतिमहोदेवोमर्त्यांऽआविवेश ॥ सप्तहस्तश्चतुःशृंगःसप्तजिह्वोद्विशीर्षकः ॥ त्रिपात्प्रसन्नवदनःसुखासीनःशुचिस्मितः ॥ स्वाहांतुदक्षिणेपार्श्वेदेवींवामेस्वधांतथा ॥ बिभ्रद्दक्षिणहस्तैस्तुशक्तिमन्नंस्रुचंस्रुवं ॥ तोमरंव्यजनंवामैर्घृतपात्रंचधारयन् ॥ मेषारूढोजटाबद्धोगौरवर्णोमहौजसः ॥ धूम्रध्वजोलोहिताक्षःसप्तार्चिःसर्वकामदः ॥ आत्माभिमुखमासीनएवंरूपोहुताशनः ॥ ततोयदिसमिदादौसमारोपितोग्निस्तर्हिप्रत्यवरोहणंकार्यम् ॥ तच्चैवम् ॥ प्रत्यवरोहेत्यस्यहिरण्यगर्भोग्निस्त्रिष्टुप् ॥ समारोपितस्याग्नेःप्रत्यवरोहणेविनियोगः ॥ ॐ प्रत्यवरोहजातवेदःपुनस्त्वंदेवेभ्योहव्यंवहनःप्रजानन् ॥ प्रजांपुष्टिंरयिमस्मासुधेह्यथाभवयजमानायशंयोः ॥ इतिमंत्रेणसमारोपिताग्निसमिधंस्थापितेग्नौप्रक्षिपेदिति ॥ एतदंतंसंस्थापितेग्नौहोमेकार्यं ॥ नित्यधारितहोमेतुनैतावत् ॥ ततःपार्वणस्थालीपाकेप्रधानदिनात्पूर्वदिनेसद्यस्कालायांपौर्णमास्यामशक्तौचप्रधानदिनएववाप्रातरौपासनंहुत्वान्वाधानंकुर्यात् ॥ तच्चेत्थं ॥ आचम्यप्राणानायम्यसमिद्द्वयंत्रयंवादायदेशकालौस्मृत्वा ममोपात्तदुरितक्षयद्वाराश्रीपरमेश्वरप्रीत्यर्थं दर्शपूर्णमासाभ्यांस्थालीपाकाभ्यांयक्ष्ये ॥ तत्रेदानींपूर्णमासस्थालीपाकेनयक्ष्ये ॥ दर्शेतुपूर्वसंकल्पितेनदर्शस्थालीपाकेनयक्ष्यइतिविशेषः ॥ तत्रदेवतापरिग्रहार्थमन्वाधानंकरिष्ये ॥ अस्मिन्नन्वाहितेग्नौजातवेदसमग्निमिध्मेनप्रजापतिंप्रजापतिंचाघारदेवतेआज्येनाग्नीषोमौचक्षुषी

आज्येन ॥ अग्निमग्नीषोमौचप्रधानदेवतेचरुद्रव्येण ॥ दर्शेतुअग्निमिंद्राग्नीचप्रधानदेवतेचरुद्रव्येण इतिविशेषः ॥ शेषेणस्विष्टकृतमग्निमिध्मसन्नहनेनरुद्रमयासमाग्निंदेवान्विष्णुमग्निंवायुंसूर्यंप्रजापतिंचैताःप्रायश्चित्तदेवताआज्येन ज्ञाताज्ञातदोषनिबर्हणार्थंत्रिवारमग्निंमरुतश्चाज्येनविश्वान्देवान्संस्रावेणांगदेवताःप्रधानदेवताःसर्वाःसन्निहिताःसंतुएवंसांगोपांगेनकर्मणाश्वोयक्ष्ये ॥ सद्यस्कालेतुसद्योयक्ष्येइतिसंकल्प्यतूष्णींसमस्तव्याहृतिभिर्वासमिद्धोमंकुर्यात् ॥ व्याहृतिपक्षे समस्तव्याहृतीनांपरमेष्ठीप्रजापतिःप्रजापतिर्बृहती अन्वाधानसमिद्धोमेविनियोगः ॥ ॐ भूर्भुवःस्वःस्वाहा ॥ प्रजापतयइदंनमम ॥ ( तंचाग्निंधारयेत् ॥ संकटेतुतुभ्यंताइत्यृचाज्याहुतिंहुत्वासमारोपयेत् ॥ तद्यथा ॥ तुभ्यंताविरूपोग्निर्गायत्री ॥ कृतान्वाधानाग्नेःसमारोपाधिकारार्थंप्रायश्चित्ताज्यहोमेविनियोगः ॥ ॐ तुभ्यंताअंगिरस्तमविश्वाःसुक्षितयःपृथक् ॥ अग्नेकामाययेमिरेस्वाहा ॥ अग्नयइदंनमम ) ॥ व्रतलोपाहुतिंहुत्वा[1] ॥ ततःप्रतिपदिप्रातरौपासनंहुत्वाग्निंपरिसमुह्यपरिस्तृणीयात् ॥ तच्चेत्थं ॥ अग्न्यायतनादष्टांगुलपरिमितेदेशेऐशानींदिशमारभ्यप्रदक्षिणंसमंतात्सोदकेनपाणिनात्रिःपरिमृज्यदशांगुलमितेदेशेप्राच्यादिषुपूर्वमुपरिनिहितदर्भैःपरिस्तृणीयात् ॥ तत्रप्राच्यांप्रतीच्यांचोदगग्रादर्भाः अवाच्यामुदीच्यांचप्रागग्राः पूर्वपश्चात्परिस्तरणमूलयोरुपरिदक्षिणपरिस्तरणं उत्तरपरिस्तरणंतुतदग्रयोरधस्तात् ॥ तेचदर्भाअनियतसंख्याएकैकस्यांदिशिचत्वारश्चत्वारइत्येवंषोडशवा ॥ ततोग्नेर्दक्षिणतोब्रह्मासनार्थंउत्तरतश्चपात्रासादनार्थंकांश्चित्प्रागग्रान्दर्भानास्तृणीयात् ॥ अग्नेरैशानतश्चिरंभसापरिषि

---

१ व्रतलोपेव्रात्यैःसहसंवेशनेवाउपोष्य त्वमग्नइत्यस्यवत्सोग्निर्गायत्री व्रतलोपजनितदोषपरिहारार्थमाज्यहोमे० ॥ ॐ त्वमग्नेव्रतपाअसिदेवआमर्त्येष्वा ॥ त्वंयज्ञेष्वीड्यःस्वाहा ॥ व्रतपायाग्नयइदं० ॥ यद्वानिर्वापादिपूर्वकंव्रतपायाग्नयेपार्वणस्थालीपाकेनसमानंतंत्रंचरुंप्रधानात्पूर्वंजुहुयात् ॥

च्य उत्तरास्तीर्णेषुदर्भेषुदक्षिणसव्यपाणिभ्यांक्रमेण चरुस्थालीप्रोक्षण्यौ दर्वीस्रुवौ प्रणीताज्यपात्रे इध्माबर्हिषी शूर्पकृष्णा जिने उलूखलमुसले चेतिद्वेद्वेउदगपवर्गप्राक्संस्थंचन्युब्जान्यासादयेत् ॥ आज्यमात्रहोमेतु प्रोक्षणीस्रुवौ प्रणीताज्यपात्रे इध्माबर्हिषी चेत्येतावतामेवासादनं ॥ ततःप्रोक्षणीपात्रमुत्तानंकृत्वातत्रानंतर्गर्भितसाग्रसमस्थूलप्रादेशमात्रकुशद्वयरूपेपवित्रेनिधाय शुद्धाभिरद्भिस्तत्पात्रंपूरयित्वागंधपुष्पादिक्षिप्त्वाहस्तयोरंगुष्ठोपकनिष्ठिकाभ्यामुत्तानाभ्यांपाणिभ्यामुदगग्रेपृथक्पवित्रेधृत्वाअपस्त्रिरुत्पूयपात्राण्युत्तानानिकृत्वा इध्मंविस्रस्यसर्वाणिपात्राणित्रिःप्रोक्षेत् ॥ ताअपःकिंचित्कमंडलौक्षिपेदित्येके ॥ ततोयथोक्तलक्षणमीशानदिगवस्थितंब्रह्माणमस्मिन्कर्मणिब्रह्माणंत्वामहंवृणइतितत्पाणिंपाणिनागृहीत्वावृणुयात् ॥ ब्रह्मावृतोस्मीत्युक्त्वाप्राङ्मुखोयज्ञोपवीत्याचम्यसमस्तपाण्यंगुष्ठोभूत्वाग्रेणाग्निंपरीत्यदक्षिणतउदङ्मुखःस्थित्वाआसनार्थदर्भेषुदक्षिणभागस्थमेकंदर्भमंगुष्ठानामिकाभ्यांगृहीत्वा निरस्तःपरावसुःइतिनैर्ऋत्यांनिरस्यापःस्पृष्ट्वा इदमहमर्वावसोःसदनेसीदामिइ

---

१ इध्माबर्हिषोरज्जुनिर्णयः ॥ त्रिभिस्त्रिभिःकुशदलैःसव्यंपाणिमधोदक्षिणंचोपरिकुर्वन् पूर्वदलाग्रैरुत्तरदलमूलैश्चत्रिसंधिंद्विगुणांरज्जुंकृत्वापुनर्दक्षिणमधःसव्यंचोपरिकुर्वंस्तथैवत्रिगुणयेदंतेप्रदक्षिणंग्रंथिंदद्यात् ॥ एवंषट्त्रिंशद्दर्भदलैरेकारज्जुर्भवति ॥ ततस्तस्यामुदग्रायांप्रादेशमात्रान्मुष्टिपरिमितान्दर्भान्निधायतयाबर्हिरावेष्ट्यचरज्ज्वग्रेणरज्जुमूलंसकृदावेष्ट्य तदग्रशेषंपूर्ववेष्टितरज्ज्वाअधस्तान्निनीयपरिस्तरणाद्यर्थदर्भैःसहाग्न्यायतनात्पश्चाद्भागोपरिनिदध्यात् ॥ ततोन्ययाताद्दृशैवकृतयारज्ज्वाउदगग्रयापालाशखादिरमसंभवेशमीवटादियज्ञियवृक्षमयमरत्निमात्रंवितस्तिमात्रंवापंचदशदारुकमिध्मं प्रागग्रंसकृदावेष्ट्यचरज्ज्वग्रेणरज्जुमूलंसकृदावेष्ट्यचपूर्ववन्निदध्यात् ॥ २ उत्तानेनतुहस्तेनकर्तव्यंप्रोक्षणंभवेत् ॥ अवाचीनेनहस्तेनकर्तव्यंस्यादवोक्षणं । मुष्टीकरोतियत्तोयमभ्युक्षणमितिस्मृतं । तिर्यग्भूतेनहस्तेनकृतंपर्युक्षणंतथा ॥

त्युक्त्वोदङ्मुखएववामोरूपरिदक्षिणपादंसंस्थाप्योपविश्ययजमानेनगंधाक्षतादिभिरर्चितःसन् ॥ ॐ बृहस्पतिर्ब्रह्माब्रह्मसदन
आशिष्यतेबृहस्पतेयज्ञंगोपायसयज्ञंपाहिसयज्ञपतिंपाहिसमांपाहीतिजपित्वासदायज्ञमनाएववर्तेत ॥ ततोयजमानःप्रणीता
पात्रमग्नेःप्रत्यङ्निधायतत्रप्रागग्रेपवित्रेनिधायोत्पूताभिरद्भिस्तत्पात्रंपूरयित्वागंधपुष्पाक्षतान्निक्षिप्य ब्रह्मन्नपःप्रणेष्यामी
तिपृच्छेत् ॥ ततोब्रह्माउपांशुर्भूर्भुवःस्वर्बृहस्पतिप्रसूतः॥ उच्चैः ॐ प्रणय इत्यनुजानीयात् ॥ कर्तापूर्णपात्रंमुखसममुद्धृत्याग्ने
रुत्तरतोदर्भेषुनिधायतेपवित्रेगृहीत्वान्यैर्दर्भैराच्छादयेत् ॥ ( ततःप्रत्यगग्नेःकुशेषुशूर्पंनिधायतत्रप्रागग्रेपवित्रेनिधाय अग्नये
त्वाजुष्टंनिर्वपामि इतिमंत्रावृत्त्याव्रीहीणांयवानांवाचतुरश्चतुरोमुष्टीन्निरुप्याग्नीषोमाभ्यांत्वाजुष्टंनिर्वपामीतितथैवनिरुप्यतेप
वित्रेनिरुप्तव्रीहीणामुपरिनिधायोत्पूताभिरद्भिरग्नयेत्वाजुष्टंप्रोक्षामीतिनिर्वापसंख्ययाप्रोक्षेत् ॥ एवमग्नीषोमाभ्यांत्वाजुष्टंप्रो
क्षामीतितथैवप्रोक्षेत् ॥ दर्शेतुअग्नीषोमस्थानेइंद्राग्निभ्यांत्वेत्यादिनिर्वापेप्रोक्षणेचविशेषः ॥ एवंनाममंत्रकहोमेनिर्वापःप्रोक्षणं
चयथाप्रधानदैवतंदेवतानामग्रहणेनकार्यम् ॥ समंत्रकहोमेतुश्रवणाकर्मादौतूष्णींचतुरश्चतुरोमुष्टीन्निर्वपेत्प्रोक्षेच्च ॥ ततः
पात्राणामुत्तरतःप्राग्ग्रीवमास्तीर्णेऊर्ध्वलोम्निकृष्णाजिनेनिहितेउलूखलेमुसलेनपल्यवहत्यशूर्पेणतुषादीन्संशोध्यत्रिःशुक्लीकुर्या
त् ॥ तांस्त्रिःप्रक्षालितान्पृथक्पात्रेएकपात्रेवाअविदग्धमनवस्रावितमंतरूष्मपक्वंसुश्रृतंचरुंपचेत् ॥ ततस्तेपवित्रेआज्यपात्रे
निधायतत्पात्रंपुरतःसंस्थाप्यतस्मिन्नाज्यमासिच्य अग्नेरुत्तरतःस्थितांगारान्भस्मनासहाग्नेरुदक्परिस्तरणाद्बहिर्निरुह्य तेष्वा
ज्यपात्रमधिश्रित्य ज्वलतादर्भोल्मुकेनावज्वल्यांगुष्ठपर्वमात्रंप्रक्षालितंदर्भाग्रद्वयमाज्येप्रक्षिप्य पुनर्ज्वलतातेनैवदर्भोल्मुकेन
चरुणासहाज्यंत्रिःपर्यग्निकृत्वा तदुमुल्कमपास्यापःस्पृष्ट्वाआज्यस्थालींभुविकर्षयित्वाउदगुद्वास्यअंगारान्प्रत्यूह्यापःस्पृष्ट्वातत्रस्थ

मेवाज्यं ॥ सवितुष्ट्वाहिरण्यस्तूपःसवितापुरउष्णिक् ॥ आज्यस्योत्पवनेविनियोगः ॥ ॐ सवितुष्ट्वाप्रसवउत्पुनाम्यच्छिद्रेण पवित्रेणवसोःसूर्यस्यरश्मिभिरितिमंत्रेणैकश्रुत्योच्चारितेनैकवारंद्विस्तूष्णीं उत्तानपाणिद्वयाङ्गुष्ठोपकनिष्ठिकाभ्यामंतयोरसंस्पृष्टगृहीताभ्यामुदगग्राभ्यांपवित्राभ्यांप्रागुत्पूय तेपवित्रेअद्भिःप्रोक्ष्याग्नौप्रहरेत् ॥ तूष्णीं ( स्कंदायस्वाहा स्कंदायेदंनमम इति मंत्रेणेतिकेचित् )॥अथाग्नेःपश्चात्परिस्तरणाद्बहिरात्मनोग्रतोभूमिंप्रोक्ष्यतत्रबर्हिःसन्नहनींरज्जुमुदगग्रांप्रसार्यतस्यांबर्हिःप्रागग्रमुदगपवर्गमविरलमास्तीर्यतस्मिन्नाज्यपात्रंनिधायस्रुवादिसंमार्जयेत् ॥ तद्यथा ॥ दक्षिणेनहस्तेनस्रुक्स्रुवौगृहीत्वासव्येनकांश्चिद्दर्भानादायसहैवाग्नौप्रताप्य स्रुचंनिधायस्रुवंवामहस्तेगृहीत्वा दक्षिणहस्तेनस्रुवस्यबिलंदर्भाग्रैःप्रादक्षिण्येनप्रागादिप्रागपवर्गंत्रिःसंमृज्याधस्ताद्दर्भाग्रैरेवाभ्यात्मंबिलपृष्ठंत्रिःसंमृज्य ततोदर्भाणांमूलैर्दंडस्याधस्ताद्बिलपृष्ठादारभ्ययावदुपरिष्टाद्बिलंतावत्त्रिःसंमृज्याद्भिःप्रोक्ष्यस्रुवंनिष्टप्याज्यस्थाल्याउत्तरतःस्रुगसंसृष्टंनिधायोदकंस्पृष्ट्वा तैरेवदर्भैर्जुहूंचैवमेवसंमृज्यस्रुवादुत्तरतोनिधायदर्भानद्भिःक्षालयित्वाग्नावनुप्रहरेत् ॥ ततःश्रृतंचरुंस्रुवगृहीतेनाज्येनाभिघार्योदगुद्वास्याग्न्याज्ययोर्मध्येननीत्वाज्याद्दक्षिणतोबर्हिषिसांतरमासाद्यपुनरप्यभिघार्य नवाभिघार्यहविःपृथक्करणायपात्रांतरंचर्वाज्ययोर्मध्येनिधायैकादशांगुलिमितेदेशेगंधाक्षतपुष्पैरग्निंसमंत्रमर्चयेत् ॥ विश्वानिनइतितिसृणामात्रेयोवसुश्रुतोग्निस्त्रिष्टुप् द्वयोरर्चनेअंत्यायाउपस्थानेविनियोगः ॥ ॐ विश्वानिनोदुर्गहाजातवेदः ॥ ॐ सिंधुंननावादुरितातिपर्षि ॥ ॐ अग्नेअत्रिवन्नमसागृणानः ॥ ॐ अस्माकंबोध्यविताततनूनां ॥ ॐ यस्त्वाहृदाकीरिणामन्यमानः ॥ ॐ अमर्त्यंमर्त्योजोहवीमि ॥ ॐ जातवेदोयशोअस्मासुधेहि ॥ ॐ प्रजाभिरग्नेअमृतत्वमश्यां ॥ ॐ यस्मैत्वंसुकृतेजातवेदउलोकमग्नेकृणवस्योनं ॥ अश्विनंसपुत्रिणंवीरवंतंगोमंतंरयिंनशतेस्वस्ति ॥ ततआत्मा

नंचालंकृत्यहस्तंप्रक्षाल्यइध्मबंधनरज्जुमिध्मस्थानेनिधायपाणिनेध्ममादायमूलमध्याग्रेषुस्रुवेणत्रिरभिघार्यमूलमध्ययोर्मध्यभा
गेगृहीत्वा ॥ अयंतेवामदेवोजातवेदाअग्निस्त्रिष्टुप् इध्महवनेविनियोगः ॥ ॐ अयंतइध्मआत्माजातवेदस्तेनेध्यस्ववर्धस्वचेद्ध
वर्धयचास्मान्प्रजयापशुभिर्ब्रह्मवर्चसेनान्नाद्येनसमेधयस्वाहा ॥ जातवेदसेग्नयइदंनमम ॥ ततःस्रुवेणाज्यमादायाग्नेरायतन
स्यवायव्यकोणमारभ्याग्नेयकोणपर्यंतंप्रजापतयइतिमनसास्मरन्स्वाहेत्युच्चार्यनैरंतर्येणाज्यधारामग्नाविध्मदारूपरिहुत्वा ॥
पुनराज्यमादायाग्नेरायतनस्यनैर्ऋतकोणतऐशानीपर्यंतंतथैवहुत्वात्यक्त्वाच ॥ स्रुवेणाज्यमादायअग्नयेस्वाहेत्यग्नेरुत्तरपार्श्वेपूर्व
भागेहुत्वा पुनराज्यंसोमायस्वाहेत्यग्निदक्षिणपार्श्वेतत्समप्रदेशेहुत्वा ॥ पूर्वनिहितपात्रेचरुमुद्धृत्यपृथक्कृत्य इदमग्नयेइदमग्नीषो
माभ्यामितिचरुभागद्वयमुत्तरसंस्थमभिमृश्यावदानधर्मेणजुहुयात् ॥ एवंनाममंत्रकहोमेयथादैवतंविभक्तस्यचरोरभिमर्शः ॥
समंत्रकहोमेतुनविभागोनाभिमर्शश्च ॥ अथावदानधर्मः ॥ स्रुवेणस्रुच्याज्यमुपस्तीर्यप्रथमप्रधानदेवताचरुभागमध्यादंगुष्ठप
र्वमात्रंतिरश्चीनाभिरंगुष्ठमध्यमानामिकाभिरुदगग्राभिर्नखस्पर्शमकुर्वन्नवदायदर्व्यामोप्यततश्चरुपूर्वभागंप्रागग्राभिस्ताभिस्त
थैवावदाय दर्व्यामोप्यपात्रस्थंहविरभिघार्य दर्वीस्थमवत्तंचाभिघार्यविधूमज्वालाग्नौ ॥ ॐअग्नयेस्वाहेत्याज्यभागयोर्मध्यदेशे
तत्प्रत्यग्देशेवाआच्छादयन्निवदर्व्यापार्श्वेनहुत्वाअग्नयइदंनममेतित्यक्त्वा ॥ पुनःपूर्ववदुत्तरहविर्भागादवदाय ॥ ॐ अग्नी
षोमाभ्यांस्वाहेतिपूर्वाहुतेःप्राग्भागेहुत्वाअग्नीषोमाभ्यामिदंनममेतित्यजेत् ॥ पंचावत्तीतुदर्व्यामुपस्तीर्यमध्यात्पूर्वार्धात्पश्चार्धा
च्चत्रिर्हविषोवदायाभिघार्यजुहुयात् ॥ दर्शेतुअग्नीषोमस्थानेइंद्राग्निभ्यांस्वाहाइंद्राग्निभ्यामिदंनममेतिविशेषः ॥ पुनर्दर्व्यामुप

---

१ पंचावत्तिनस्तु–जामदग्न्यावत्सबिदावार्ष्टिषेणास्तथैवच ॥ भार्गवच्यावनाऔर्वाःपंचावत्तिनईरिताः ॥ इतिज्ञेयाः ॥

स्तीर्यप्रथमहविर्भागस्योत्तरार्धतःपूर्वावदानतोभूयोनूचीनाभिरवांगुलिभिरवदायद्व्यामोप्याद्वितीयहविर्भागस्यतथैवावदाय पंचावत्तीतुहविर्भागद्वयेपिउत्तरार्धात्पूर्वार्धाच्चद्विर्द्विरवदाय पात्रस्थमनभिघार्यावत्तंतुद्विरभिघार्य ॥ यदस्येतिहिरण्यगर्भोग्निः स्विष्टकृदतिधृतिः स्विष्टकृद्धोमेविनियोगः ॥ ॐ यदस्यकर्मणोत्यरीरिचंयद्वान्यूनमिहाकरं ॥ अग्निष्टत्स्विष्टकृद्विद्वान्त्सर्वंस्विष्टंसुहुतंकरोतुमे ॥ अग्नयेस्विष्टकृतेसुहुतहुतेसर्वप्रायश्चित्ताहुतीनांकामानांसमर्धयित्रेसर्वान्नःकामान्त्समर्धयस्वाहा इतिएकश्रुत्योच्चार्यअग्नावैशानदेशेजुहुयात् ॥ स्विष्टकृतेग्नयइदंनमम ॥ इध्मबंधनरज्जुंविस्रस्य रुद्रायस्वाहारुद्रायेदंनमम[1] ॥ अपउपस्पृश्य स्रुवेणप्रायश्चित्ताज्याहुतीःसप्तजुहुयात् ॥ अयाश्चेतिविमदोयाअग्निःपंक्तिः ॥ प्रायश्चित्ताज्यहोमेविनियोगः ॥ ॐ अयाश्चाग्नेस्यनभिशस्तीश्चसत्यमित्वमयाअसि ॥ अयासावयंसाकृतोयासन्हव्यमूहिषेयानोधेहिभेषजंस्वाहा ॥ अयासेग्नयइदंनमम ॥ १ ॥ अतोदेवाःकाण्वोमेधातिथिर्देवागायत्री ॥ सर्वत्रप्राग्वद्विनियोगः ॥ ॐ अतोदेवाअवंतुनोयतोविष्णुर्विचक्रमे ॥ पृथिव्याःसप्तधामभिःस्वाहा ॥ देवेभ्यइदंनमम ॥ २ ॥ इदंविष्णुःकाण्वोमेधातिथिर्विष्णुर्गायत्री ॥ प्रायश्चित्ताज्यहोमेविनियोगः ॥ ॐ इदंविष्णुर्विचक्रमेत्रेधानिदधेपदं ॥ समूळहमस्यपांसुरेस्वाहा ॥ विष्णवइदंनमम ॥ ३ ॥ व्यस्तसमस्तव्याहृतीनांविश्वामित्रजमदग्निभरद्वाजप्रजापतयऋषयः ॥ अग्निवायुसूर्यप्रजापतयोदेवताः ॥ गायत्र्युष्णिगनुष्टुब्बृहत्यश्छंदांसि ॥ प्रायश्चित्ताज्यहोमेविनियोगः ॥ ॐ भूःस्वाहा ॥ अग्नयइदंनमम ॥ ॐ भुवःस्वाहा ॥ वायवइदंनमम ॥ ॐ स्वःस्वाहा ॥ सूर्यायेदंनमम ॥ ॐ भूर्भुवःस्वःस्वाहा ॥ प्रजापतयइदंनमम ॥ ७ ॥ ततोब्रह्माकर्तारंपरीत्याग्नेर्वायव्यदेशेतिष्ठन्ने



---

१ रुद्रायपशुपतयेस्वाहा रुद्रायेदंनममइतिकौस्तुभे ॥ अत्रकेचनपशुपतयेरुद्रायेदमितिविपर्यासेनपठंति ॥

ताएवसप्ताज्याहुतीर्जुहुयात् ॥ त्यागंयजमानोऽत्रकुर्यात् ॥ ततस्तत्रस्थोत्रह्मैवमंत्रविपर्यासादिनियतनिमित्तेसति ॥ अनाज्ञा
तमितिमंत्रत्रयस्यहिरण्यगर्भोग्निरनुष्टुप् ॥ ज्ञाताज्ञातदोषनिवर्हणार्थंप्रायश्चित्ताज्यहोमेविनियोगः ॥ ॐ अनाज्ञातंयदाज्ञातं
यज्ञस्यक्रियतेमिथु ॥ अग्नेतदस्यकल्पयत्वꣳहिवेत्थयथातथꣳस्वाहा ॥ यजमानः ॥ अग्नयइदंनमम ॥ ॐ पुरुषसंमितोयज्ञो
यज्ञःपुरुषसंमितः ॥ अग्नेतदस्यकल्पयत्वꣳहिवेत्थयथातथꣳस्वाहा ॥ अग्नयइदंनमम ॥ यत्पाकत्रेत्यास्यत्रितोग्निस्त्रिष्टुप् ॥
प्रायश्चित्ताज्यहोमेविनियोगः ॥ ॐ यत्पाकत्रामनसादीनदक्षानयज्ञस्यमन्वतेमर्तासः ॥ अग्निष्टद्धोताक्रतुविद्विजानन्यजिष्ठो
देवाꣳऋतुशोयजातिस्वाहा ॥ अग्नयइदंनमम ॥ यद्वोदेवाअभितपामरुतस्त्रिष्टुप् ॥ मंत्रतंत्रविपर्यासादिनिमित्तकप्रायश्चित्ता
ज्यहोमेविनियोगः ॥ ॐ यद्वोदेवाअतिपातयानिवाचाचप्रयुतीदेवहेळनं ॥ अरायोअस्माँअभिदुच्छुनायतेन्यत्रास्मन्मरुतस्त
न्निधेतनस्वाहा ॥ मरुद्भ्यइदंनमम ॥ ततःस्कन्नभिन्नाद्यनियतनिमित्तेसतिवक्ष्यमाणप्रकारेणतत्प्रतिपदोक्तजपहोमान्कुर्याद्ब्र
ह्मा ॥ ब्रह्मणोऽभावेयजमानएवैतान्प्रायश्चित्तादीन्कृत्वाऽन्यस्मैवरंदद्यात् ॥ ततोयजमानः सर्वकर्मप्रपूरणींभद्रद्रव्यदांपूर्णा
हुतिमाज्येनहोष्यामिइतिसंकल्प्य ॥ स्रुवेणाज्यंगृहीत्वास्रुचंसमबिलांपूरयित्वातस्यांस्रुवमूर्ध्वबिलंनिधायपुनरधोबिलंनिक्षिप्य
स्रुवाग्रेकुसुमाक्षतंनिधाय सव्यपाणिनास्रुक्स्रुवमूलेधृत्वादक्षिणपाणिनास्रुक्स्रुवंशंखमुद्रयागृहीत्वातिष्ठन्समपादऋजुकायःस्रु
वाग्रन्यस्तदृष्टिःप्रसन्नात्मा ॥ समुद्रादूर्मिरित्येकादशर्चस्यसूक्तस्यगौतमोवामदेवआपस्त्रिष्टुप्अंत्याजगती पूर्णाहुतौविनियोगः॥

---

१ कौस्तुभेप्रयोगरत्नेचेयमाहुतिर्मंत्रविपर्यासादिहानायज्ञाताज्ञातनिमित्ताहुतित्रयतःपूर्वंलिखितास्तिपरंत्वन्वाधानक्रमेणशिष्टाचाराच्चात्रैवविहिते
तिभाति ॥

ॐ समुद्रादूर्मिं० ऋक् ११ ॥ मधुमंतंतऊर्मिस्वाहा ॥ इतिपठन्यवपरिमितांधारांसंततांस्रुगग्रेणसशेषंहुत्वाअग्न्यइदंनममेत्यु
द्दिश्यत्यक्त्वा ॥ विज्योतिषेत्यस्यजारोवृशोग्निस्त्रिष्टुप् ॥ पूर्णाहुतिशेषाज्यहोमेविनियोगः ॥ ॐ विज्योतिषाबृहताभात्यग्नि
राविर्विश्वानिकृणुतेमहित्वा ॥ प्रादेवीर्मायाःसहतेदुरेवाःशिशीतेशृंगेरक्षसेविनिक्षेस्वाहा ॥ इत्यनेनचतथैवावशेषंहुत्वाग्नयइदं
नममेतित्यक्त्वाविश्वेभ्योदेवेभ्यःस्वाहेतिसंस्रावंहुत्वा विश्वेभ्योदेवेभ्यइदंनममेतित्यजेत् ॥ ततस्तंडुलकणान्समिद्दर्भशकला
न्यद्भिःप्रोक्ष्याग्नौप्रहरेत् ॥ पूर्णाहुत्याद्येतदंतंसमूलंप्रयोगपारिजातकारेणलिखितमपीदानींशिष्टानकुर्वंति ॥ अथावभृथस्था
नीयंपूर्णपात्रजलेनमार्जनंकुर्यात् ॥ तद्यथा ॥ पूर्वासादितंपूर्णपात्रमास्तीर्णेबर्हिषिदक्षिणपाणिनानिधायतत्रगंगादिपुण्यनदीः
स्मरन्दक्षिणपाणिनास्पृशन् ॥ पूर्णमसिपूर्णमेभूयाःसुपूर्णमसिसुपूर्णमेभूयाःसदसिसन्मेभूयाःसर्वमसिसर्वमेभूयाः ॥ अक्षिति
रसिमामेक्षेष्ठाः ॥ इतिजपित्वाकुशाग्रैःप्रागादिपंचदिक्षुजलंमंत्रैर्यथालिंगंसिंचेत् ॥ तेचमंत्राः ॥ प्राच्यांदिशिदेवाऋत्विजो
मार्जयंतां ॥ दक्षिणस्यांदिशिमासाःपितरोमार्जयंतां ॥ अपउपस्पृश्य ॥ प्रतीच्यांदिशिग्रहाःपशवोमार्जयंतां ॥ उदीच्यांदि
श्यापओषधिवनस्पतयोमार्जयंतां ॥ ऊर्ध्वायांदिशियज्ञःसंवत्सरःप्रजापतिर्मार्जयतां ॥ इत्येकश्रुत्यापठन्प्रतिदिशंसिक्त्वाकु
शाग्रैःस्वशिरसिमार्जयेत् ॥ आपोअस्मानित्यस्यदेवश्रवाआपस्त्रिष्टुप् ॥ मार्जनेविनियोगः ॥ ॐ आपोअस्मान्मातरःशुंधयंतुघृ
तेननोघृतप्वःपुनंतु ॥ विश्वंहिरिप्रंप्रवहंतिदेवीरुदिदाभ्यःशुचिरापूतएमि ॥ इदमापःसिंधुद्वीपआपोनुष्टुप् ॥ मार्जनेविनि
योगः ॥ ॐ इदमापःप्रवहतयत्किंचदुरितंमयि ॥ यद्वाहमभिदुद्रोहयद्वाशेपउतानृतं ॥ सुमित्र्यानआपओषधयःसंतु ॥ इत्ये
तैर्मंत्रांतेमार्जनंकृत्वा ॥ दुर्मित्र्यास्तस्मैसंतु योस्मान्द्वेष्टियंचवयंद्विष्मस्तंहन्मि ॥ इतिनिर्ऋतिदेशेकुशाग्रैरपःसिंचेत् ॥ ततो

ब्रह्मा यजमानवामपार्श्वस्थितपत्न्यंजलौपूर्णपात्रस्थंजलं ॥ ॐ माहंप्रजांपरासिचंयानःसयावरीस्थन ॥ समुद्रेवोनिनयानिस्वं पाथोअपीथेतिमंत्रमेकश्रुत्यापद्वयावाचयन्स्वयंवापठन्प्रत्यङ्मुखंनिषिच्यांजलिस्थजलैःपापापनोदार्थमात्मानंयजमानंपत्नींच प्रोक्षेत् ॥ पत्नीतज्जलंबर्हिषिनिषिंचेत् ॥ अथवायजमानएवस्ववामपाणावुत्तानेबर्हिर्निधायतत्रदक्षिणपाणिनापूर्णपात्रमादाय माहंप्रजामित्यनेनतज्जलंप्रत्यङ्मुखंनिषिच्यताआपःसमुद्रंगच्छंतीतिध्यात्वापाणिस्थजलैरात्मानंपत्नींचप्रोक्षेत् ॥ ततःकर्ताग्ने र्वायव्येस्थितःसंस्थाजपेनोपतिष्ठेत ॥ तद्यथा॥ अग्नेत्वंनइतिचतसृणांगौपायनालौपायनावाबंधुःसुबंधुःश्रुतबंधुर्विप्रबंधुश्चैकैक चाऋषयः ॥ अग्निर्देवता ॥ द्विपदाविराट्छंदः ॥ अग्न्युपस्थानेविनियोगः ॥ ॐ अग्नेत्वंनोअंतमउतत्राताशिवोभवावरूथ्यः॥ वसुरग्निर्वसुश्रवाअच्छानक्षिद्युमत्तमंरयिंदाः ॥ सनोबोधिश्रुधीहवमुरुष्याणोअघायतःसमस्मात् ॥ तंत्वाशोचिष्ठदीदिवःसु म्नायनूनमीमहेसखिभ्यः ॥ ॐ चमेस्वरश्चमेयज्ञोपचतेनमश्च ॥ यत्तेन्यूनंतस्मैतउपयत्तेतिरिक्तंतस्मैतेनमः ॥ अग्नयेनमः ॥ ॐ स्वस्ति ॥ श्रद्धांमेधांयशःप्रज्ञांविद्यांबुद्धिंश्रियंबलं ॥ आयुष्यंतेजआरोग्यंदेहिमेहव्यवाहन ॥ मानस्तोकइत्यस्यकुत्सोरुद्रोज गती ॥ विभूतिग्रहणेविनियोगः ॥ ॐ मानस्तोकेतनयेमानआयौमानोगोषुमानोअश्वेषुरीरिषः ॥ वीरान्मानोरुद्रभामितोर्व धीर्हविष्मंतःसदमित्त्वाहवामहे ॥ इतिस्रुवबिलपृष्ठेनैशानीगतांविभूतिंगृहीत्वा ॥ ॐ त्र्यायुषंजमदग्नेरितिललाटे ॥ कश्यपस्य त्र्यायुषमितिकंठे ॥ अगस्त्यस्यत्र्यायुषमितिनाभौ । यद्देवानांत्र्यायुषमितिदक्षिणस्कंधे ॥ तन्मेअस्तुत्र्यायुषमितिवामस्कंधे॥ सर्वमस्तुशतायुषमितिशिरसिधारयेत् ॥ केचित्तूपस्थानात्पूर्वंविभूतिधारणमाहुरिति ॥ ततःपरिस्तरणानिविसृज्याग्निंपरिस मुह्यपरिषिच्य विश्वानिनइत्यर्चयित्वानत्वाचपुष्पादिभिरलंकृत्यनैवेद्यंतांबूलंचनिवेद्य ब्रह्मणेयथोक्तदक्षिणांदक्षिणाभावेहत

शेषंघृतादिसहिरण्यंदत्वाब्रह्माभावेन्यस्मैब्राह्मणायदत्वापात्राणिप्रक्षाल्यपूर्वक्रमेणद्वंद्वशउत्सृज्य यस्यस्मृत्येतिश्रीविष्णुंनत्वा चम्यधृतपवित्रग्रंथिंविस्रस्ययस्यस्मृत्येतिविष्णुंनत्वाकर्मेश्वरार्पणंकृत्वाद्विराचामेत् ॥ इतिस्थालीपाकप्रयोगः ॥ ॥ छ ॥

## ॥ १०८ ॥ अथगृह्याग्नेःपुनःसंधानम् ॥

श्रीः ॥ पत्न्यासहकृतस्नानादिःकृतनित्यक्रियोदेशकालौसंकीर्त्यममगृह्याग्निविच्छेददिनादारभ्यैतावंतंकालंगृह्याग्निविच्छेदजनितदोषपरिहारद्वाराश्रीपरमेश्वरप्रीत्यर्थं गृह्याग्निविच्छेददिनादारभ्यैतावदब्दपर्यंतंप्रत्यब्दमेकैककृच्छ्रं यथाशक्तितत्प्रत्याम्नायगोनिष्क्रयीभूतरजतनिष्कनिष्कार्धनिष्कपादनिष्कपादार्धान्यतमद्रव्यदानेनाहमाचरिष्ये॥तथाएतावद्दिनेषुगृह्याग्निविच्छेदेनलुप्तसायंप्रातरौपासनहोमद्रव्यंतथालुप्तदर्शपौर्णमासस्थालीपाकादिकर्मपर्याप्तव्रीह्याज्यद्रव्यंतन्निष्क्रयंवादातुमहमुत्सृज्ये ॥ इतिसंकल्प्यकृत्वापुनर्देशकालौस्मृत्वाविच्छिन्नस्यगृह्याग्नेःपुनःसंधानंकरिष्यइतिसंकल्प्यस्थंडिलोपलेपनोल्लेखनाभ्युक्षणद्विजनामाग्निप्रतिष्ठापनानिकृत्वान्वाधानंकुर्यात् ॥ समिद्द्वयमादायपुनःसंधानहोमेदेवतापरिग्रहार्थमन्वाधानंकरिष्ये ॥ ॐस्मिन्नन्वाहितेग्नौजातवेदसमग्निमिध्मेनप्रजापतिंप्रजापतिंचाघारदेवतेआज्येनात्रप्रधानं त्रिरग्निंपवमानंसकृदग्निंप्रजापतिंचाज्येन

---

१ द्विभार्यस्याग्निद्वयसंसर्गात्पूर्वमभ्यनुगतौउभयविच्छेददिनाब्दगणनयापृथक्पृथक्कृच्छ्रप्रायश्चित्तंपृथक्पृथग्घोमद्रव्यदानंस्थालीपाकद्रव्यदानंचकृत्वापुनःसंधानद्वयेनाग्निमुत्पाद्याग्निद्वयसंसर्गविधायतत्रगर्भाधानहोमः । अग्निद्वयसंसर्गात्पूर्वमेकाभ्यनुमतौतन्मात्रप्रायश्चित्तंतद्धोमद्रव्यमात्रदानंचकार्यमतुस्थालीपाकद्रव्यदानं । भार्यांतरस्यासन्निधानेयस्यांगर्भाधानंतदग्निविच्छेदप्रायश्चित्तादिनागृह्यमुत्पाद्यतत्रहोमः । सर्वत्रपुनःसंधानेस्थालीपाकानारंभेस्थालीपाकादिद्रव्यदानंकृताकृतं ।

अर्यमाग्निंवरुणाग्निंपूषाग्निंप्रजापतिंचलाजद्रव्येणसूर्यासावित्रींचतुर्वारमाज्यद्रव्येण शेषेणस्विष्टकृतमित्यादिपरिसमूहनादि कृत्वा ॥ पात्रासादनेविशेषः ॥ प्रोक्षणींस्रुवंप्रणीतामाज्यपात्रंलाजशूर्पंइध्मंबर्हिश्च दधिप्राशनपक्षेदधिचासादयेत् ॥ आज्यसंस्कारादिकृत्वा ॥ तत्राज्येनसहलाजानामपिपर्यग्निकरणं ॥ आज्योत्पवनमात्रेकृतेलाजानांत्रिःप्रोक्षणं ॥ स्रुवसंमार्जनादि ॥ पत्न्यान्वारब्धइध्माधानाघारांतंकुर्यान्नचक्षुषी ॥ अग्नआयूंषीतितिसृणांशतंवैखानसाऋषयः ॥ अग्निःपवमानोदेवता ॥ गायत्रीछंदः ॥ पुनःसंधानप्रधानाज्यहोमेविनियोगः ॥ ॐ अग्नआयूंषिपवसआसुवोर्जमिषंचनः ॥ आरेबाधस्वदुच्छुनांस्वाहा ॥ अग्नयेपवमानायेदं० ॥ ॐ अग्निर्ऋषिःपवमानःपांचजन्यःपुरोहितः ॥ तमीमहेमहागयंस्वाहा ॥ अग्नयेपव० ॥ ॐ अग्नेपवस्वस्वपाअस्मेवर्चःसुवीर्यं ॥ दधद्रयिंमयिपोषंस्वाहा ॥ अग्नये० ॥ त्वमर्यमावसुश्रुतोग्निस्त्रिष्टुप् ॥ विनियोगःप्राग्वत् ॥ ॐ त्वमर्यमाभवसियत्कनीनांनामस्वधावन्गुह्यंबिभर्षि ॥ अंजंतिमित्रंसुधितंनगोभिर्यद्दंपतीसमनसाकृणोषिस्वाहा ॥ अग्नये० ॥ प्रजापतेहिरण्यगर्भःप्रजापतिस्त्रिष्टुप् ॥ विनियोगःप्राग्वत् ॥ ॐ प्रजापतेन० स्वाहा ॥ प्रजापतयइदं० ॥ अथपत्न्याःप्रक्षालितंजलौपतिराज्येनोपस्तीर्यद्विर्लाजानोप्यपंचावत्तीतुत्रिरोप्यशूर्पस्थानभिघार्य अंजलिस्थानप्यभिघार्य स्वयमुपविष्टएवतिष्ठंत्याअंजलिंस्वकराभ्यांधृत्वा अर्यमणंवरुणंपूषणमितितिसृणांवामदेवोर्यमाग्निर्वरुणाग्निःपूषाग्निरनुष्टुप्॥ अग्निपुनःसंधानलाजहोमेविनियोगः ॥ ॐ अर्यमणंनुदेवंकन्याअग्निमयक्षत॥ सइमांदेवोअर्यमाप्रेतोमुंचातुनामुतस्वाहेतिपठितमंत्रांतेअंजलिमविच्छिदंती अंगुल्यग्रैरंगुलिवामपार्श्वेनवापत्नीजुहुयात् ॥ एवमग्रेपि ॥ अर्यम्णेग्नयइदं० ॥ ॐ वरुणंनुदेवंकन्याअग्निमयक्षत॥ सइमांदेवोवरुणःप्रेतोमुंचातुनामुतस्वाहा वरुणायाग्नयइदं० ॥ ॐ पूषणंनुदेवंकन्याअग्निमयक्षत ॥ सइमांदेवःपूषाप्रेतोमुंचा

तुनामुतस्वाहा पूष्णेऽग्नय० ॥ ततःशूर्पकोणेनशिष्टान्सर्वान्लाजान्पतिःपत्नीवाभ्यातमंप्रजापतिंध्यायन्जुहुयात् ॥ प्रजापतय इदंनमम ॥ लाजानांस्विष्टकृन्नास्ति ॥ तिष्ठन्होमेकृतेउपविश्याज्यंपतिर्जुहुयात् ॥ आनःप्रजामितिचतसृणांसूर्यासावित्रीसूर्यासावित्रीआद्याजगतीद्वितीयात्रिष्टुवंत्येद्वेअनुष्टुभौ ॥ अग्निपुनःसंधानाज्यहोमे० ॥ ॐ आनःप्रजां० स्वाहा ॥ सूर्यासावित्र्याइदं० ॥ एवमग्रेपित्यागः ॥ ॐ अघोर० हा ॥ ॐ इमांत्व० हा ॥ ॐ सम्राज्ञी० हा ॥ समंजंत्वित्यस्यसूर्यासावित्रीसूर्यासावित्र्यनुष्टुप् ॥ दधिप्राशनेआज्यशेषेणहृदयांजनेवावि० ॥ ॐ समंजंतुवि० ॥ एतेनस्वयंदधिप्राश्नीयात् ॥ आज्यशेषेणहृदयांजनंकुर्यात् ॥ पत्न्यैचदधिप्रयच्छेत् ॥ साचतूष्णींप्राश्नीयात् ॥ स्वहृदयांजनपक्षेपत्न्याअपितूष्णींहृदयांजनं ॥ अथाज्येन यदस्यकर्मणइतिस्विष्टकृतंहुत्वाइध्मसंनहनादिकर्मशेषंसमापयेत् ॥ अत्रकारिका ॥ उपलेपादिकंकुर्यादाघारांतंविवाहवत् ॥ विवाहाज्याहुतीर्हुत्वालाजहोमोभवेदिह ॥ गृहप्रवेशनीयाश्चहुत्वास्याद्धृदयांजनं ॥ परिणीत्यादिनास्त्यत्रलाजानावपतिस्वयं ॥ इतिविच्छिन्नस्यगृह्याग्नेःपुनःसंधानं ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥

## ॥ १०९ ॥ अथभुवनेश्वरीशांतिः ॥

श्रीः ॥ रजोदर्शनानंतरंपंचमादिदिनेचंद्रताराद्यानुकूल्येशुचिदेशेसुस्नातयापत्न्यायुतःपतिःप्राङ्मुखउपविश्याचम्यप्राणानायम्यदेशकालौस्मृत्वा ममपत्न्याःप्रथमरजोदर्शनेऽमुकदुष्टमासादिसूचितसकलारिष्टनिरसनद्वाराश्रीपरमेश्वरप्रीत्यर्थंसग्रहमखांशौनकोक्तांशांतिंकरिष्यइतिसंकल्प्यगणेशपूजनपुण्याहवाचनमातृकापूजननांदीश्राद्धानिकृत्वा शांतंदांतंकुटुंबिनंमंत्रतंत्रज्ञमाचार्यं ब्रह्माणंजपहोमार्थमष्टौषड्वाचतुरोवाऋत्विजोवृत्वागंधादिनापूजयेत् ॥ ततआचार्यआचम्यप्राणानायम्यदेशाद्युच्चा

येयजमानानुज्ञयाआचार्यकर्मकरिष्यइतिसंकल्प्ययदत्रेतिगौरसर्षपविकिरणाद्याचार्यकर्मकृत्वा ॥ भुवनेश्वर्यादिप्रतिमात्रय
स्याग्न्युत्तारणंकुर्यात् ॥ ततोगृहैशानदेशेशुचौ ॐ महीद्यौरितिभूमिंस्पृष्ट्वातद्दक्षिणोत्तरयोश्चतथैवभूमिंस्पृष्ट्वाओषधयःसंवदंत
इतिद्रोणप्रमाणव्रीहिभिर्मध्येतद्दक्षिणोत्तरतश्चस्पृष्टदेशेमंत्रावृत्त्याराशित्रयंकृत्वा तेनैवक्रमेणराशित्रयेनवमकालकमभग्नंकुंभत्र
यमाकलशेष्वितिमंत्रावृत्त्यास्थापयेत् ॥ ततःप्रसुवआपइतिनवर्चस्यसूक्तस्यसिंधुक्षित्प्रैयमेधोनद्योजगती ॥ कलशेषूदकपूर
णेविनियोगः ॥ ॐ प्रसुवआपोमहिमानमुत्तमंकारुर्वोचातिसदनेविवस्वतः ॥ प्रसप्तसप्तत्रेधाहिचक्रमुःप्रसृत्वरीणामतिसिंधु
रोजसा ॥ प्रतेरदद्वरुणोयातवेपथःसिंधोयद्वाजाँऽअभ्यद्रवस्त्वं ॥ भूम्याअधिप्रवतायासिसानुनायदेषामग्रंजगतामिरज्य
सि ॥ दिविस्वनोयततेभूम्योपर्यनंतंशुष्ममुदियर्तिभानुना ॥ अभ्रादिवप्रस्तनयंतिवृष्टयःसिंधुर्यदेतिवृषभोनरोरुवत् ॥ अभि
त्वासिंधोशिशुमिन्नमातरोवाश्राअर्षंतिपयसेवधेनवः ॥ राजेवयुध्वानयसित्वमित्सिचौयदासामग्रंप्रवतामिनक्षसि ॥ इमंमेगं
गेयमुनेसरस्वतिशुतुद्रिस्तोमंसचतापरुष्ण्या ॥ असिक्न्यामरुद्वृधेवितस्तयार्जीकीयेशृणुह्यासुषोमया ॥ १ ॥ तृष्टामयाप्रथमं
यातवेसजूःसुसर्त्वारसयाश्वेत्यात्या ॥ त्वंसिंधोकुभयागोमतींक्रुमुंमेहत्न्वासरथंयाभिरीयसे ॥ ऋजीत्येनीरुशतीमहित्वापरि
ज्रयांसिभरतेरजांसि ॥ अदब्धासिंधुरपसामपस्तमाश्वानचित्रावपुषीवदर्शता ॥ स्वश्वासिंधुःसुरथाःसुवासाहिरण्ययीसुकृ
तावाजिनीवती ॥ ऊर्णावतीयुवतिःसीलमावत्युताधिवस्तेसुभगामधुवृधं ॥ सुखंरथंयुयुजेसिंधुरश्विनंतेनवाजंसनिषदस्मिन्ना
जौ ॥ महान्ह्यस्यमहिमापनस्यतेदब्धस्यस्वयशसोविरप्शिनः ॥ २ ॥ याःप्रवतइत्यस्यवसिष्ठोनद्यःशक्करी ॥ विनियोगःप्रा
ग्वत् ॥ ॐ याःप्रवतो० इत्युदकेनापूर्य ॥ गंधद्वारामितित्रिष्वपिगंधंप्रक्षिप्य याओषधीरितिसर्वौषधीः ओषधयःसमितिय

वान्क्षिपेत् ॥ ततोमध्यकुंभेयवव्रीहितिलमाषकंगुश्यामाकमुद्गान्क्षिप्त्वा गायत्र्योदुंबरकुशदूर्वारक्तोत्पलचंपकबिल्वविष्णुक्रां
तातुलसीबर्हिःशंखपुष्पीशतावर्यश्वगंधानिर्गुंडीरक्तपीतसर्षपापामार्गपलाशपनसजीवकप्रियंगुगोधूमव्रीह्यश्वत्थदधिदुग्धघृ
तपद्मपत्रनीलोत्पलसितरक्तपीतकुरंटकगुंजावचाभद्रमुस्तकाख्यानिद्वात्रिंशदौषधानिसर्वाणि यथासंभवंवाक्षिपेत् ॥ ततस्त्रि
षुकलशेषुकांडात्कांडादितिदूर्वाः ॥ अश्वत्थेवइतिअश्वत्थोदुंबरप्लक्षचूतन्यग्रोधपंचपल्लवान् ॥ स्योनापृथिवीतिगजाश्वस्थान
रथ्यावल्मीकसंगमह्रदगोष्ठस्थामृदःक्षिप्त्वा ॥ याःफलिनीरितिपूगीफलानि ॥ सहिरत्नानीतिकनककुलिशनीलपद्मरागमौक्ति
कानिपंचरत्नानि ॥ हिरण्यरूपइतिहिरण्यंचक्षिपेत् ॥ युवासुवासाइतिसूत्रेणवाससाचकलशकंठान्वेष्टयित्वागंधाक्षतपुष्प
मालाभिःकलशान्भूषयेत् ॥ ततःकलशत्रयोपरितेनैवक्रमेणसौवर्णराजतंकांस्यमयंताम्रमयंवैणवंमृन्मयंवायथादिपूरितंपात्र
त्रयंपूर्णादर्वीतिनिधायतदुपरिश्वेतंवस्त्रत्रयंन्यस्यतत्रचंदनादिनाष्टदलानिकुर्यात् ॥ तत्रमध्यमे ॥ गायत्र्याविश्वामित्रोभुवने
श्वरीगायत्री ॥ भुवनेश्वर्यावाहनादौविनियोगः ॥ ॐ तत्सवितु० ॥ भुवनेश्वरीमावाहयामीतियथाशक्तिसुवर्णनिर्मितांभुव
नेश्वरीप्रतिमामग्न्युत्तारणपूर्वकंस्थापयेत् ॥ तद्दक्षिणकुंभोपरिवस्त्रे ॥ इंद्राणीमास्वित्यस्यवृषाकपिरिंद्राणीपंक्तिः ॥ इंद्राण्या
वाहनादौविनि० ॥ ॐ इंद्राणीमासुनारिषु० ॥ इंद्राणीमावाहयामीतितथैवसौवर्णीमिंद्राणीप्रतिमांसंस्थापयेत् ॥ ततउत्तर
कलशोपरि ॥ इंद्रत्वाविश्वामित्रइंद्रोगायत्री ॥ इंद्रावाहनेविनियोगः ॥ ॐ इंद्रंत्वावृषभंवयं० ॥ इंद्रमावाहयामीतिसौवर्णी
मिंद्रप्रतिमांसंस्थापयेत् ॥ ततउक्तमंत्रैरुक्तक्रमेणदेवतात्रयस्यकांडानुसमयेनपदार्थानुसमयेनवाषोडशोपचारैःपूजांकुर्यात् ॥
ततोमध्यकुंभेआचार्योष्टसहस्रमष्टशतंवागायत्रींजप्त्वाश्रीसूक्तंजपेत् ॥ हिरण्यवर्णामितिपंचदशर्चस्यसूक्तस्यानंदकर्दमचिक्ली

तेंदिरासुताऋषयः ॥ श्रीरग्निश्चेत्युभेदेवते ॥ आद्यास्तिस्रोनुष्टुभः ॥ चतुर्थीप्रस्तारपंक्तिः ॥ पंचमीषष्ठ्यौत्रिष्टुभौ ॥ ततोष्टा वनुष्टुभोंत्याप्रस्तारपंक्तिः ॥ जपेविनियोगः ॥ ॐ हिरण्यवर्णामित्यादिसूक्तं ॥ ततएकऋत्विग्दक्षिणकुंभेरुद्रसूक्तानिजपेत् ॥ यथा ॥ कद्रुद्रायेतिनवर्चस्यसूक्तस्यघौरःकण्वोरुद्रोगायत्री अंत्यानुष्टुप्तृतीयामैत्रावरुणीजपेविनियोगः ॥ ॐ कद्रुद्रायप्रचे तसेमीळ्हुष्टमायतव्यंसे ॥ वोचेमशंतमंहृदे ॥ यथानोअदितिःकरत्पश्वेनृभ्योयथागवे ॥ यथातोकायरुद्रियं ॥ यथानोमित्रो वरुणोयथारुद्रश्चिकेतति ॥ यथाविश्वेसजोषसः ॥ गाथपतिंमेधपतिंरुद्रंजलाषभेषजं ॥ तच्छंयोःसुम्नमीमहे ॥ यःशुक्रइववसू र्योहिरण्यमिवरोचते ॥ श्रेष्ठोदेवानांवसुः ॥ १ ॥ शंनःकरत्यर्वतेसुगंमेषायमेष्ये ॥ नृभ्योनारिभ्योगवे ॥ अस्मेसोमश्रियम धिनिधेहिशतस्यनृणां ॥ महिश्रवस्तुविनृम्णं ॥ मानःसोमपरिबाधोमारातयोजुहुरंत ॥ आनइंदोवाजेभज ॥ यास्तेप्रजाअमृ तस्यपरस्मिन्धामन्नृतस्य ॥ मूर्धानाभासोमवेनआभूषंतीःसोमवेदः ॥ २ ॥ इमारुद्रायतवसइत्येकादशर्चस्यसूक्तस्यकुत्सोरुद्र आद्यानवजगत्योंत्यद्वेत्रिष्टुभौ ॥ जपेविनियोगः ॥ ॐ इमारुद्राय० (प०१४१)॥ आतेपितरितिपंचदशर्चस्यसूक्तस्यगृत्समदो रुद्रस्त्रिष्टुप् ॥ जपेविनियोगः ॥ ॐ आतेपि०(प०१४२)॥ इमारुद्रायस्थिरधन्वनइतिचतसृणांवसिष्ठोरुद्रस्तिस्रोजगत्योंत्यात्रि ष्टुप् ॥ जपेविनियोगः ॥ ॐ इमारुद्रायस्थिरधन्वनेगिरःक्षिप्रेषवेदेवायस्वधाम्ने ॥ अषाळ्हायसहमानायवेधसेतिग्मायुधाय भरताशृणोतुनः ॥ सहिक्षयेणक्षम्यस्यजन्मनःसाम्राज्येनदिव्यस्यचेतति ॥ अवन्नवंतीरुपनोदुरश्चरानमीवोरुद्रजासुनोभव ॥ यातेदिद्युदवसृष्टादिवस्परिक्ष्मयाचरतिपरिसावृणक्तुनः ॥ सहस्रंतेस्वपिवातभेषजामानस्तोकेषुतनयेषुरीरिषः ॥ मानोवधीरु द्रमापरादामातेभूमप्रसितौहीळितस्य ॥ आनोभजबर्हिषिजीवशंसेयूयंपातस्वस्तिभिःसदानः ॥ १ ॥ आवोराजानंवामदेवोरु

द्रस्त्रिष्टुप् ॥ जपेविनियोगः ॥ ॐ आवोराजानमध्वरस्यरुद्रंहोतारंसत्ययजंरोदस्योः ॥ अग्निंपुरातनयित्नोरचित्ताद्धिरण्यरूपम
वसेकृणुध्वं ॥ तमुष्टुहिभौमोत्रीरुद्रस्त्रिष्टुप् ॥ जपेविनियोगः ॥ ॐ तमुष्टुहियःस्विषुःसुधन्वायोविश्वस्यक्षयतिभेषजस्य ॥
यक्ष्वामहेसौमनसायरुद्रंनमोभिर्देवमसुरंदुवस्य ॥ भुवनस्यपितरमृजिश्वारुद्रस्त्रिष्टुप् ॥ जपेविनियोगः ॥ ॐ भुवनस्यपितरं
गीर्भिराभीरुद्रंदिवावर्धयारुद्रमक्तौ ॥ बृहंतमृष्वमजरंसुषुम्नमृधग्घुवेमकविनेषितासः ॥ त्र्यंबकंमैत्रावरुणिर्वसिष्ठोरुद्रोनुष्टुप्॥
जपेविनियोगः ॥ ॐ त्र्यंबकंयजामहेसुगंधिंपुष्टिवर्धनं ॥ उर्वारुकमिवबंधनान्मृत्योर्मुक्षीयमामृतात् ॥ अथान्यऋत्विगुत्तरकुंभे
एकादशावृत्तिभीरुद्रंन्यासष्यादिस्मरणपूर्वकंजप्त्वा ॥ नमकानुवाकानामग्नीरुद्रोमहाविराट् ॥ जपेविनियोगः ॥ शंनइंद्रा
ग्नीइतिसूक्तंजपेत् ॥ शंनइंद्राग्नीइतिपंचदशर्चस्यसूक्तस्यवसिष्ठोविश्वेदेवास्त्रिष्टुप् ॥ जपेविनियोगः ॥ ततःकुंभपश्चिमदेशेस्थं
डिलेवरदनामानमग्निंप्रतिष्ठाप्य तदीशान्यांवेद्यादौनवग्रहादींस्तत्तन्मंत्रैरावाह्यषोडशोपचारैःसंपूज्य तदीशान्यांप्राग्वत्कुंभं
संस्थाप्यतत्रवरुणमावाह्याग्निसमीपमेत्यान्वाधानंकुर्यात् ॥ यथा ॥ क्रियमाणेसग्रहमखदुष्टरजोदर्शनशांतिहोमेदेवतापरिग्रहा
र्थमन्वाधानंकरिष्ये ॥ अस्मिन्नन्वाहितेग्नावित्यादिचक्षुषीआज्येनेत्यंतमुक्त्वा नवग्रहान्प्रत्येकममुकसंख्याभिःसमित्तिलाज्या
हुतिभिः ॥ अधिदेवताप्रत्यधिदेवताश्चप्रत्येकममुकसंख्याभिः ॥ ऋतुसाद्गुण्यदेवताःऋतुसंरक्षकदेवताश्चअमुकसंख्याकाभिः
समि० ॥ भुवनेश्वरींप्रतिद्रव्यमष्टसहस्राष्टशताद्यन्यतमसंख्याभिर्दूर्वातिलमिश्रगोधूमपायसाज्याहुतिभिरिंद्राणीमिंद्रंचप्रत्ये
कमष्टशताष्टाविंशत्यन्यतमसंख्याभिर्दूर्वातिलमिश्रगोधूमपायसाज्याहुतिभिः शेषेणस्विष्टकृतमित्यादिसद्योयक्ष्यइत्युक्त्वा ॥
अन्येतु गायत्र्यैवतुहोतव्यंहविरत्रचतुष्टयं ॥ ततःस्विष्टकृतंहुत्वेतिशौनकेनेंद्राणींद्रयोर्होमानभिधानात्तयोर्होमोनास्तीत्याहुस्त

न्मतेऽन्वाधानादौतत्कीर्तनाभावः ॥ ततःपरिसमूहनपरिस्तरणादिपूर्णपात्रनिधानांतंकृत्वाभुवनेश्वरींद्राणींद्रेभ्योमुष्मैत्वेतिम
नसाध्यायन् ॥ तूष्णींचतुरश्चतुरोमुष्टीन्निरुप्याहुतिबहुत्वाच्चानिरुप्यगोदुग्धेपायसंश्रपयित्वाज्यसंस्काराद्याज्यभागांतंकुर्या
त् ॥ ततोयजमानोदक्षिणतउपविश्यअंगप्रधानदेवताउद्दिश्यएताभ्यइदंनममेतित्यजेत् ॥ ततःसर्त्विगाचार्यःनवग्रहेभ्योऽ
ष्टशताष्टाविंशत्यष्टान्यतमसंख्याकाघृताक्ताअर्कादिसमिधस्तिलाज्याहुतीश्चहुत्वाधिदेवताप्रत्यधिदेवताभ्यो विनायकादिपंच
भ्योलोकपालेभ्यस्तन्न्यूनसंख्ययाजुहुयात् ॥ ग्रहाणांयदाष्टौतदान्येभ्यश्चतस्रइतिसंप्रदायः ॥ ततोभुवनेश्वर्यैगायत्र्यादधि
मधुघृताक्ताभिस्त्रिसृभिर्दूर्वाभिरेकाहुतिरित्येवमष्टसहस्रमष्टशतंवा दूर्वाहुतीर्घृताक्ततिलमिश्रगोधूमाहुतीःपायसाहुतीर्घृताहुती
श्चजुहुयात् ॥ एवमिंद्राणींद्रयोःप्रागुक्तमंत्राभ्यांक्रमेणतदेवहविश्चतुष्टयंप्रत्येकमष्टशतसंख्यंभुवनेश्वर्याअष्टसहस्रपक्षेजुहुयात् ॥
तस्याअष्टशतपक्षेतुतयोरष्टाविंशतिरितिसंप्रदायः ॥ पक्षेतयोर्नहोमः ॥ ततःस्विष्टकृदादिप्रायश्चित्तहोमांतंकृत्वायजमानः
इंद्रादिदिक्पालेभ्योनवग्रहेभ्योभुवनेश्वरींद्राणींद्रेभ्यःक्षेत्रपालायचसदीपान्माषभक्तबलींस्तत्तन्मंत्रैर्दत्वापूर्णाहुतिंसमुद्रादूर्मि
रितितृचेनजुहुयात् ॥ समुद्रादूर्मिरितितृचस्यगोतमोवामदेवोग्निस्त्रिष्टुप् ॥ पूर्णाहुतिहोमेविनियोगः ॥ ॐ समुद्रादूर्मिः० ॥
स्वाहा ॥ अग्नयइदं० ॥ ततःप्रणीताविमोकंकृत्वाभुवनेश्वर्यादिकलशोदकंग्रहकलशोदकंचपात्रांतरेगृहीत्वातेनतत्स्थपंचपल्लवैः
सकुशदूर्वैर्धृतनववस्त्रंयजमानंधृतनववस्त्रकंचुकींचतद्वामस्थांऋतुमतींपत्नींसर्त्विगुदङ्मुखआचार्योभिषिंचेदेभिर्मंत्रैः ॥ आपो
हिष्ठेतिनवर्चस्यांबरीषःसिंधुद्वीपआपोगायत्री पंचमीवर्धमानासप्तमीप्रतिष्ठा अंत्येद्वेअनुष्टुभौ ॥ अभिषेकेविनियोगः ॥ आपो

१ बलिदानप्रकारःसविस्तरःपूर्वमात्स्यग्रहयज्ञेद्रष्टव्यः ॥ २ कौस्तुभेशांतिरत्नादौचसमुद्रादूर्मिरितिसूक्तेनपूर्णाहुतिविधानमस्ति ॥

हिष्ठा० ऋ० ९ ॥ यएकइद्धिदयतइतिगोतमोरहूगणइंद्रउष्णिक् ॥ यएकइद्धिदयतेवसुमर्तायदाशुषे ॥ ईशानोअप्रतिष्कुत इंद्रोअंग ॥ त्रिभिष्ट्वंदेवेतिसप्तर्चस्यवसिष्ठआद्यानांत्रयाणामग्निस्ततश्चतुर्णांविश्वेदेवाआद्यागायत्री द्वितीयानुष्टुप् ततस्तिस्रोगा यत्र्यः अंत्येद्वेअनुष्टुभौ ॥ त्रिभिष्ट्वंदेवसवितः० ऋ० ७ ॥ उभयंशृणवच्चनेतिप्रगाथोभर्गइंद्रोबृहती ॥ उभयंशृणवच्चनइंद्रो अर्वागिदंवचः ॥ सत्राच्यामघवासोमपीतयेधियाशविष्ठआगमत् ॥ स्वस्तिदाविशोभरद्वाजःशासइंद्रोनुष्टुप् ॥ स्वस्तिदाविशस्प तिर्वृत्रहाविमृधोवशी ॥ वृषेंद्रःपुरएतुनःसोमपाअभयंकरः ॥ त्र्यंबकंवसिष्ठोरुद्रोनुष्टुप् ॥ त्र्यंबकं० ॥ जातवेदसेकश्यपोजात वेदाअग्निस्त्रिष्टुप् ॥ ॐ जातवेदसे० ॥ समुद्रज्येष्ठाइतिचतसृणांवसिष्ठआपस्त्रिष्टुप् ॥ ॐ समुद्रज्येष्ठाः० ४ ॥ त्रायंतामितिति सृणांसप्तर्षयआपोनुष्टुप् ॥ त्रायंतामिह० ३ ॥ इमाआपइतितिसृणामैतरेयआपोनुष्टुप्जगत्यनुष्टुभः ॥ इमाआपः० ॥ देवस्य त्वेत्यस्यैतरेयःसदिताश्विनौपूषाचयजुः ॥ अभि० ॥ देवस्यत्वासवितुःप्रसवेश्विनोर्बाहुभ्यांपूष्णोहस्ताभ्यामग्नेस्तेजसासूर्यस्यव र्चसेंद्रस्येंद्रियेणाभिषिंचामि ॥ तमीशानंगोतमईशानोजगती ॥ तमीशानंजगतः० ॥ त्वमग्नेरुद्रोगृत्समदोग्निर्जगती ॥ त्वमग्ने रुद्रोअसुरोमहोदिवस्त्वंशर्धोमारुतंपृक्षईशिषे ॥ त्वंवातैररुणैर्यासिशंगयस्त्वंपूषाविधतःपासिनुत्मना ॥ तमुष्टुहिभौमात्रीरुद्र स्त्रिष्टुप् ॥ तमुष्टुहि० ॥ भुवनस्यपितरमृजिश्वारुद्रस्त्रिष्टुप् ॥ भुवनस्यपितरंगीर्भिराभीरुद्रंदिवावर्धयारुद्रमक्तौ ॥ बृहंतमृष्वम जरंसुषुम्नमृधग्घुवेमकविनेषितासः ॥ यातेरुद्रेतिकश्यपोरुद्रःस्वराडनुष्टुप् ॥ यातेरुद्रशिवातनूरघोरापापकाशिनी ॥ तयान स्तनुवाशंतमयागिरिशंताभिचाकशीहि ॥ यज्जाग्रतइतिषण्णांशिवसंकल्पमंत्राणांप्रजापतिर्मनस्त्रिष्टुप् ॥ यज्जाग्रतोदूरमुदैतुदैवं

१ एतन्मंत्रस्थानेइंद्रोअंगतृचेनेतिमूलवाक्यानुसारेणकौस्तुभे इंद्रोअंगेतितृचस्यगृत्समदइंद्रोगायत्री ॥ अभि० इंद्रोअंगमह०इत्यृक्त्रयंगृहीतमस्ति ॥

तदुसुप्तस्यतथैवैति ॥ दूरंगमंज्योतिषांज्योतिरेकंतन्मेमनःशिवसंकल्पमस्तु ॥ येनकर्माण्यपसोमनीषिणोयज्ञेकृण्वंतिविदथेषु धीराः ॥ यदपूर्वंयक्ष्ममंतःप्रजानांतन्मे० ॥ यत्प्रज्ञानमुतचेतोधृतिश्चयज्ज्योतिरंतरमृतंप्रजासु ॥ यस्मान्नऋतेकिंचनकर्मक्रियतेतन्मे० ॥ येनेदंभूतंभुवनंभविष्यत्परिगृहीतममृतेनसर्वं ॥ येनयज्ञस्तायतेसप्तहोतातन्मेमनःशिवसंकल्पमस्तु ॥ यस्मिन्नृचःसामयजूंषियस्मिन्प्रतिष्ठितारथनाभाविवाराः॥ यस्मिंश्चित्तंसर्वमोतंप्रजानांतन्मेमनःशिवसंकल्पमस्तु ॥ सुषारथिरश्वानिवयंमनुष्यान्नेनीयतेभीशुभिर्वाजिनइव ॥ हृत्प्रतिष्ठंयदजिरंयविष्ठंतन्मेम० ॥ इंद्रंत्वावृषभंवयमितिपंचानांविश्वामित्रइंद्रोगायत्री ॥ इंद्रंत्वावृषभंवयंसुतेसोमेहवामहे ॥ सपाहिमध्वोअंधसः ॥ इंद्रक्रतुविदंसुतंसोमंहर्यपुरुष्टुत ॥ पिबावृषस्वतातृपिं ॥ इंद्रप्रणोधितावानंयज्ञंविश्वेभिर्देवेभिः ॥ तिरस्तवानविश्पते ॥ इंद्रसोमाःसुताइमेतवप्रयंतिसत्पते ॥ क्षयंचंद्रासइंदवः ॥ दधिष्वाजठरेसुतंसोममिंद्रवरेण्यं ॥ तवद्युक्षासइंदवः ॥ ततःसुरास्त्वामभिषिंचंत्वितिपौराणैर्मंत्रैरभिषिंचेत् ॥ ततःकलशोदकेनान्येनचोदकेनसुस्नातौदंपतीशुक्लवासोगंधमाल्यादिधृत्वोपविशेतां तत्रपत्नीदक्षिणतः ॥ त्यक्तवासांस्याचार्यस्य ॥ ततोयजमानोग्निंसंपूज्यविभूतिंधृत्वाचार्यादीन्गंधपुष्पवस्त्रालंकारादिभिर्यथाशक्तिपूजयित्वाचार्यायधेनुंदक्षिणांचदद्यात्॥ ततोऽन्येभ्यऋत्विग्भ्योऽन्येभ्यश्चब्राह्मणेभ्योभूयसींदक्षिणांदद्यात् ॥ ततोग्रहपीठदेवतानांभुवनेश्वर्यादीनांचोत्तरपूजांपंचोपचारैःकृत्वाक्षमाप्ययांतुदेवगणाइतिविसृज्यआचार्यहस्तेप्रतिपाद्याग्निंसंपूज्यगच्छगच्छसुरश्रेष्ठेतिविसर्जयेत्॥ततोब्राह्मणामहाशांतिंपठेयुः ॥ सायथा ॥ आनोभद्राइतिदशानांगोतमोराहूगणोविश्वेदेवाआद्याःपंचजगत्यःषष्ठीविराट्स्थाना सप्तमीजगती . ततस्तिस्रस्त्रिष्टुभः ॥ स्वस्तिनोमिमीतामितिपंचानांस्वस्त्यात्रेयोविश्वेदेवाआद्यास्तिस्रस्त्रिष्टुभस्ततोद्वेअनुष्टुभौ ॥ शंनइंद्राग्नीतिपंचदशानां

वसिष्ठोविश्वेदेवास्त्रिष्टुप्॥शंवतीरितिपंचानांवसिष्ठोविश्वेदेवास्त्रिष्टुप्॥त्यमूष्वितितिसृणांतार्क्ष्योरिष्टनेमिस्तार्क्ष्यस्त्रिष्टुप्॥ तच्छं योःशंयुर्विश्वेदेवाःशक्करी ॥ सर्वेषांशांतिपाठेविनियोगः ॥ ॐ आनोभद्राः० १०॥ ॐ स्वस्तिनो० ५॥ ॐ शन्नइंद्राग्नी०१५॥ ॐ त्यमूषुवाजिनं० ३ ॥ तच्छंयोरावृणी० ९॥ ततोयजमानोनवग्रहप्रीत्यर्थंत्रीन्भुवनेश्वरींद्राणींद्रप्रीतयेचप्रत्येकंत्रींस्त्रीन्ब्रा ह्मणान्भोजयित्वासंकल्प्यवाविप्राशिषोगृहीत्वासुहृद्युक्तोभुंजीत ॥ इतिभुवनेश्वरीशांतिः ॥ ॥ छ ॥ ॥ छ ॥

## ॥ ११० ॥ अथगर्भाधानम् ॥

श्रीः ॥ यजमानःआचम्यप्राणानायम्यदेशकालौस्मृत्वा अस्याःममभार्यायाःप्रतिगर्भसंस्कारातिशयद्वाराऽस्यांजनिष्यमाणसर्व गर्भाणांबीजगर्भसमुद्भवैनोनिबर्हणद्वाराश्रीपरमेश्वरप्रीत्यर्थंगर्भाधानाख्यंकर्मकरिष्ये ॥ तदंगतयादौगणपतिपूजनंपुण्याहवा चनंमातृकापूजनंनांदीश्राद्धंचकरिष्ये ॥ इतिसंकल्प्यतानिकृत्वा ( नांदीश्राद्धेक्रतुदक्षसंज्ञकाविश्वेदेवाः )॥ प्राजापत्यहोमंक र्तुंस्थंडिलादिकरिष्ये॥ स्थंडिलसंस्कारादिमरुतनामाग्निप्रतिष्ठांतंकृत्वाग्निंध्यात्वासमिद्वयमादायक्रियमाणेगर्भाधानहोमेदेवता परिग्रहार्थमित्यादिचक्षुषीआज्येनेत्यंतमुक्त्वा प्रजापतिंचरुणाविष्णुंषड्वारमाज्येनप्रजापतिंचाज्येन शेषेणस्विष्टकृतमित्यादि सद्योयक्ष्यइत्यंतमुक्त्वासमिद्वयमग्नावाधायपरिसमूहनादिपूर्णपात्रनिधानांतंकृत्वा ॥ प्रजापतयेत्वाजुष्टंनिर्वपामिप्रोक्षामीत्या द्याज्यभागांतंकृत्वाऽवदानधर्मेणचरुमवदाय ॥ ॐ प्रजापतयेस्वाहा ॥ प्रजापतयइदंनमम ॥ विष्णुर्योनिमितितिसृणांत्वष्टावि ष्णुरनुष्टुप् ॥ गर्भधानप्रधानाज्यहोमेविनियोगः ॥ ॐ विष्णुर्योनिंकल्पयतुत्वष्टारूपाणिपिंशतु ॥ आसिंचतुप्रजापतिर्धातागर्भं दधातुतेस्वाहा ॥ विष्णवइदंनमम ॥ ॐ गर्भंधेहिसिनीवालिगर्भंधेहिसरस्वति॥ गर्भंतेअश्विनौदेवावाधत्तांपुष्करस्रजास्वाहा॥

विष्णवइदंनमम ॥ ॐ हिरण्ययीअरणीयंनिर्मंथतोअश्विना ॥ तंतेगर्भंहवामहेदशमेमासिसूतवेस्वाहा ॥ विष्णवइदंनमम ॥ नेजमेषेतितिसृणांत्वष्टाविष्णुरनुष्टुप् ॥ गर्भाधानप्रधानाज्यहोमेविनियोगः ॥ ॐ नेजमेषपरापतसुपुत्रःपुनरापत ॥ अस्यैमेपुत्र कामायैगर्भमाधेहियःपुमान्त्स्वाहा ॥ विष्णवइदंनमम ॥ ॐ यथेयंपृथिवीमह्युत्तानागर्भमादधे ॥ एवंतंगर्भमाधेहिदशमेमा सिसूतवेस्वाहा ॥ विष्णवइदंनमम ॥ ॐ विष्णोःश्रेष्ठेनरूपेणास्यांनार्यांगवीन्यां ॥ पुमांसंपुत्रानाधेहिदशमेमासिसूतवेस्वाहा ॥ विष्णवइदंनमम ॥ प्रजापतेहिरण्यगर्भःप्रजापतिस्त्रिष्टुप् ॥ गर्भाधानप्रधानाज्यहोमेविनियोगः ॥ ॐ प्रजापतेनत्वदेतान्यन्यो विश्वाजातानिपरितावभूव ॥ यत्कामास्तेजुहुमस्तन्नोअस्तुवयंस्यामपतयोरयीणांस्वाहा ॥ प्रजापतयइदं० ॥ एवंसप्ताज्याहुती र्हुत्वा ॥ अपनःशोशुचदघमित्यष्टर्चस्यसूक्तस्यकुत्सोग्निर्गायत्री ॥ पत्न्यामूर्धाभिमर्शनेविनियोगः ॥ ॐ अपनःशोशुचदघमग्ने शुशुग्ध्यारयिं ॥ अपनःशोशुचदघं ॥ सुक्षेत्रियासुगातुयावसूयाचयजामहे ॥ अपनःशो० ॥ प्रयद्भंदिष्ठएषांप्रास्माकासश्च सरयः ॥ अपनःशो० ॥ प्रयत्तेअग्नेसूरयोजायेमहिप्रतेवयं ॥ अपनःशो० ॥ प्रयदग्नेःसहस्वतोविश्वतोयंतिभानवः ॥ अपनः शो० ॥ त्वंहिविश्वतोमुखविश्वतःपरिभूरसि ॥ अपनःशो० ॥ द्विषोनोविश्वतोमुखातिनावेवपारय ॥ अपनःशो० ॥ सनःसिं धुमिवनावयातिपर्षास्वस्तये ॥ अपनःशोशुचदघं ॥ सूक्तांतेप्रागंगुलिनान्यञ्जुखेनहस्तेनपत्न्यामूर्धानमभिमृश्य ॥ याःफलिनी रित्यस्याथर्वणोभिषगोषधयोनुष्टुप् ॥ जपेविनियोगः ॥ ॐ याःफलिनीर्याअफलाअपुष्पायाश्चपुष्पिणीः ॥ बृहस्पतिप्रसूतास्ता नोमुंचंत्वंहसः ॥ एतांजपित्वा ॥ वधेनदस्युमितिपण्णांवसुश्रुतोग्निस्त्रिष्टुप् ॥ अग्न्युपस्थानेविनियोगः ॥ ॐ वधेनदस्युंप्रहिचा तयस्ववयःकृण्वानस्तन्वे१स्वायै ॥ पिपर्षियत्सहसस्पुत्रदेवान्सोअग्नेपाहिनृतमवाजेअस्मान् ॥ वयंतेअग्नउक्थैर्विधेमवयंहव्यैः

पावकभद्रशोचे ॥ अस्मेरयिंविश्ववारंसमिन्वास्मेविश्वानिद्रविणानिधेहि॥अस्माकमग्नेअध्वरंजुषस्वसहसःसूनोत्रिषधस्थहव्यं ॥ वयंदेवेषुसुकृतःस्यामशर्मणानस्त्रिवरूथेनपाहि॥ विश्वानिनोदुर्गहाजातवेदःसिंधुंननावादुरितातिपर्षि ॥ अग्नेअत्रिवन्नमसागृणानो३स्माकंबोध्यविताततूनां॥ यस्त्वाहृदाकीरिणामन्यमानोमर्त्यंमर्त्योजोहवीमि ॥ जातवेदोयशोअस्मासुधेहिप्रजाभिरग्नेअमृतत्वमश्यां ॥ यस्मैत्वंसुकृतेजातवेदउलोकमग्नेकृणवस्योनं ॥ अश्विनंसपुत्रिणंवीरवंतंगोमंतंरयिंनशतेस्वस्ति ॥ अग्निस्तुविश्रवस्तममितिद्वयोर्वसूयवोग्निरनुष्टुप् ॥ अग्न्युपस्थानेविनियोगः ॥ ॐ अग्निस्तुविश्रवस्तमंतुविब्रह्माणमुत्तमम् ॥ अतूर्तंश्रावयत्पतिंपुत्रंददातिदाशुषे ॥ अग्निर्ददातिसत्पतिंसासाहयोयुधानृभिः॥अग्निरत्यंरघुष्यदंजेतारमपराजितं॥इत्यष्टाभिरग्निमुपस्थाय॥ उदीर्ष्वेतिद्वयोःसूर्यासावित्रीसूर्यासावित्रीआद्यात्रिष्टुबंत्यानुष्टुप्॥ भार्यायादक्षिणनासापुटेश्वगंधाया (दूर्वायावा) रससेचनेविनियोगः ॥ ॐ उदीर्ष्वातःपतिवतीह्ये१षाविश्वावसुंनमसागीर्भिरीळे ॥ अन्यामिच्छपितृषदंव्यक्तांसतेभागोजनुषातस्यविद्धि॥ उदीर्ष्वातोविश्वावसोनमसेळामहेत्वा ॥ अन्यामिच्छप्रफर्व्यं१संजायांपत्यासृजस्वाहा ॥ इतिवामभागोपविष्टायाभार्यायादक्षिणनासाविलेश्वगंधादिरसंसिक्त्वातद्रसेउदरंगतेतामाचामय्योपेयात्॥ ततःस्विष्टकृदादिहोमशेषंसमाप्य॥ सूर्योनोदिवस्पात्विति पंचर्चस्यसूक्तस्यचक्षुःसूर्योगायत्री ॥ सूर्योपस्थानेविनियोगः॥ ॐ सूर्योनोदिवस्पातु० ॥ ऋ० ५ ॥ इदानींशिष्टानस्यंदत्वैवस्विष्टकृदादिहोमशेषंसमापयंति ॥ ॥(ततोरात्रौविहितःसमंत्रकोविधिरग्रेलिखितस्तन्मंत्रान्केवलमत्रपठंतिशिष्टाः)॥ उपगमनेचायंक्रमः ॥ ॐ गंधर्वस्यविश्वावसोर्मुखमसि इतिमंत्रेणहोमोक्तऋष्यादिभिर्विष्णुर्योनिमितितिसृभिर्नेजमेषेतितिसृभिस्तिसृ

१ अत्रैवसूर्योपस्थानंनारायणभट्टर्समतंपरंतुतैरेवइदानींशिष्टाअंतेकुर्वंतीत्युक्तत्वादंतएवोपन्यस्तमस्ति ॥

भिरंगुलीभिर्योनिमभिमृश्य ॥ तांपूषन्नित्यस्यसूर्यासावित्रीसूर्यासावित्रीत्रिष्टुप् ॥ जपेवि० ॥ ॐ तांपूषञ्छिवतमामेरयस्वयस्यां बीजंमनुष्या३ वपंति ॥ यानऊरूउशतीविश्रयातियस्यामुशंतःप्रहरामशेपं ॥ योगर्भमित्यस्यवसिष्ठःपर्जन्योगायत्री ॥ जपेवि० ॥ ॐ योगर्भमोषधीनांगवांकृणोत्यर्वतां ॥ पर्जन्यःपुरुषीणां ॥ अहंगर्भप्रजावान्प्राजापत्योभर्गइंद्रोवात्रिष्टुप् ॥ जपेविनि० ॥ ॐ अहंगर्भमदधामोषधीष्वहंविश्वेषुभुवनेष्वंतः ॥ अहंप्रजाअजनयंपृथिव्यामहंजनिभ्योअपरीषुपुत्रान् ॥ इतित्रीन्मंत्रान् जपित्वासकृदुपगच्छेत् ॥ ततःप्राणेतेरेतोदधाम्यसावित्यनुप्राण्य ॥ यथाभूमिरग्निगर्भायथाद्यौरिंद्रेणगर्भिणी ॥ वायुर्य थादिशांगर्भएवंतेगर्भंदधाम्यसाविति स्त्रीहृदयमभिमृश्याचामेत् ॥ मंत्रद्वयेपिअसावित्यस्यस्थानेप्रथमैकवचनांतंस्वनामवदे त् ॥ ) अस्मिन्कर्मणिशतंदशवाब्राह्मणाभोज्याः ॥ इतिगर्भाधानप्रयोगः ॥ ॥ छ ॥ ॥ छ ॥

## ॥ १११ ॥ अथनारायणबलिः ॥

श्रीः ॥ शुक्लैकादश्यांनदीतीरादिशुचिदेशेस्नानादिनित्यक्रियांतेप्राणायामादितिथ्यादिसंकीर्तनांते मदीयकुलाभिवृद्धिप्रतिबंध कप्रेतस्यप्रेतत्वनिवृत्तिद्वाराश्रीपर० नारायणबलिंकरिष्यइतिसंकल्प्य ॥ महीद्यौरित्यादिविधिनास्थापितकलशद्वयेसुवर्णादि जातीयप्रतिमयोर्विष्णुमावाहयामिवैवस्वतंयममावाहयामीत्यावाह्य पुरुषसूक्तेनयमायसोममितिषोडशोपचारैःपूजयेत् ॥ (अत्रकेचित्कुंभपंचकेब्रह्मविष्णुशिवयमप्रेतान्पूजयंति) ततस्तत्पूर्वतोदर्भेणतूष्णींलेखामुल्लिख्यतत्रदक्षिणाग्रान्कुशानास्तीर्यते षुशुंधतांविष्णुरूपीप्रेतइतिदशस्थानेषुदक्षिणसंस्थमपोनिनीय मधुघृतप्लुतान्दशपिंडान्सतिलान्काश्यपगोत्रचैत्रप्रेतविष्णुदैव तायंतेपिंडइतिदक्षिणामुखःप्राचीनावीतीदक्षिणाग्रेषुकुशेषुपराचीनपाणिनासव्यंजान्वाच्य विष्णुरूपंप्रेतंध्यायन्दद्यात् ॥ गंधा

दिभिस्तानभ्यर्च्यप्रवाहणांतंकृत्वानद्यादौक्षिपेत् ॥ तस्यामेवरात्रौ श्वःकरिष्यमाणश्राद्धेक्षणःक्रियतामित्येवमेकंत्रीन्पंचवेत्येव मयुग्मान्ब्राह्मणान्श्राद्धोद्देशेननिमंत्र्योपोषणंकुर्यात्॥ श्वोभूतेमध्याह्नेविष्णुमभ्यर्च्यविष्णुरूपिणंप्रेतमुद्दिश्य (विष्णुब्रह्मशिव यमप्रेतान्वोद्दिश्य ) एकोद्दिष्टविधिनापादप्रक्षालनादितृप्तिप्रश्नांतंकृत्वा ॥ ब्राह्मणसमीपेउल्लेखनाद्यवनेजनांतंतूष्णींकृत्वा वि ष्णवे ब्रह्मणे शिवाय सपरिवारायायमाय नाममंत्रैःविष्णोअयंतेपिंडइतिचतुरःपिंडान्दत्वा विष्णुरूपंप्रेतंध्यायन्काश्यपगोत्र देवदत्तविष्णुरूपप्रेतअयंतेपिंडइतिपंचमंपिंडंचदत्वार्चनादिप्रवाहणांतंकृत्वा आचांतान्दक्षिणादिभिःसंतोष्य तेष्वेकस्मैगुणव तेप्रेतबुद्ध्यावस्त्राभरणगोहिरण्यादीनिदत्वा भवंतःप्रेतायतिलोदकांजलिदानंकुर्वंत्विति ब्राह्मणान्वदेत् ॥ तेचपवित्रपाणयःसकु शतिलतुलसीपत्रयुततोयांजलिं प्रेतायकाश्यपगोत्रायविष्णुरूपिणेयंतिलोदकांजलिरितिदद्युः ॥ ततःअनेननारायणबलिकर्म णाभगवान्विष्णुरिमंदेवदत्तंप्रेतंशुद्धमपापंकर्मार्हंकरोत्विति तान्वाचयित्वाविसृज्यततःस्नात्वाभुंजीतेति ॥ निर्णयसिंधौतुकुंभ पंचकेविष्णुब्रह्मशिवयमप्रेतेतिपंचकंपूजयेत् ॥ स्वर्णरूप्यताम्रलोहमयाश्चत्वारःप्रेतोदर्भमयः ॥अग्निंप्रतिष्ठाप्यश्रपितचरुंनारा यणायपुरुषसूक्तेनषोडशाहुतिभिर्हुत्वादशपिंडांतेपुरुषसूक्ताभिमंत्रितशंखोदकेनप्रेतंप्रत्यृचंतर्पयेत् ॥ विष्ण्वादिचतुर्भ्योबलिंद द्यात्॥श्वोभूतेएकोद्दिष्टविधिनाश्राद्धपंचकंकरिष्यइतिसंकल्प्यविप्रपंचकेपाद्यादिपिंडदानांतेतर्पणादीतिविशेषउक्तः॥ शेषंपूर्व वत्॥प्रयोगमध्येतत्रतत्रश्राद्धीयविषयोविस्तरभियानसंगृहीतः॥ इति परिशिष्टोक्तनारायणबलेःस्मृत्यर्थसारानुसारीप्रयोगः ॥

## ॥ ११२ ॥ अथनागबलिः ॥



श्रीः ॥ ससुसिनीवाल्यांपौर्णमास्यांपंचम्यामाश्लेषायुक्तनवम्यांवाकार्यः ॥ कर्तापर्वदंप्रदक्षिणीकृत्यनत्यातदग्रेगोवृषनिष्क्रयंनि

ष्कंतदर्धंवानिधाय सभार्यस्यममेहजन्मनिजन्मांतरेवाज्ञानादज्ञानाद्वाजातसर्पवधदोषपरिहारार्थंप्रायश्चित्तमुपदिशंतुभवंतः॥
सर्वेधर्मविवेक्तारइतिश्लोकान्पठित्वामामनुगृह्णंतुभवंतइतिप्रणमेत्॥ तैश्चतुर्दशकृच्छ्रप्रायश्चित्तेनामुकप्रत्याम्नायद्वारापूर्वोत्तरां
गसहितेनाचरितेनतवशुद्धिर्भविष्यतीत्युपदिष्टोदेशकालौसंकीर्त्य पर्षदुपदिष्टंचतुर्दशकृच्छ्रप्रायश्चित्तंयथोक्तप्रत्याम्नायेनाचरि
ष्येइतिसंकल्पपूर्वकंवपनादिविधिनातदाचरेत्॥ वपनासंभवेद्विगुणःकृच्छ्रप्रत्याम्नायः॥ पूर्वोच्चरितएवंगुणविशिष्टायांपुण्यति
थौममसर्पवधदोषपरिहारार्थंब्राह्मणायलोहदंडदानं (तन्मूल्यदानंवा) करिष्यइतिसंकल्प्यब्राह्मणंसंपूज्यस्वस्त्यस्तु॰ इमंलोह
दंडंसर्पवधदोषहरंसदक्षिणंअमुकगोत्रायामुकशर्मणेब्राह्मणायतुभ्यमहंसंप्रददे प्रतिगृह्यतां देवस्यत्वासवितुः॰ प्रतिगृह्णामीति
विप्रः॥ ततोगुर्वाज्ञांलब्ध्वाप्रियंगुव्रीहिगोधूमतिलपिष्टेष्वेकतमपिष्टेनसर्पाकृतिंकृत्वाशूर्पेनिधायसर्पंप्रार्थयेत् ॥ एहिपूर्वमृत
सर्पअस्मिन्पिष्टेसमाविश ॥ संस्कारार्थमहंभक्त्याप्रार्थयामिसमाहितः ॥ ततः॥ भुजंगेशायविद्महेसर्पजातायधीमहि ॥ तन्नो
नागःप्रचोदयादितिआवाहनादिषोडशोपचारपूजांकृत्वा पुष्पांजलिंदत्वाप्रणिपत्य भोसर्पइमंबलिंगृहाणममाभ्युदयंकुरु इति
पायसादिनाबलिंसमर्प्य हस्तौपादौप्रक्षाल्याचामेत्॥ततःशुद्धभूमौस्थित्वाप्राणानायम्यसंकल्पंकुर्यात्॥ सभार्यस्यममेहजन्मनि
जन्मांतरेवाज्ञानादज्ञानाद्वाजातसर्पवधोत्थदोषपरिहारार्थंसर्पसंस्कारकर्मकरिष्येइतिसंकल्प्य स्थंडिलेलौकिकाग्निंप्रतिष्ठाप्या
न्वादध्यात् ॥ अस्मिन्सर्पसंस्कारहोमकर्मणिदेवतापरिग्रहार्थमन्वाधानंकरिष्ये अस्मिन्नन्वाहितेग्नावित्याद्याधारचक्षुष्यंतमु
क्त्वात्रप्रधानं अग्निं वायुं सूर्यं एताःप्रधानदेवताआज्येन भूर्भुवःस्वरितिसर्पमुखेप्रजापतिमाज्येन आज्यशेषेणसर्पंसद्योयक्ष्ये॥
समिधावग्रावाधाय ततोग्नेरग्निदिशिभूमौजलेनप्रोक्ष्यचितिंकृत्वाअग्निंचितिंचपरिसमूह्यआग्नेय्यप्रकैर्दर्भैःपरिस्तीर्यपरिषिच्य

षट्पात्राण्यासाद्येध्माधानाद्याघारचक्षुष्यंतंकुर्यात् ॥ ततःसर्पंगृहीत्वाचित्यामारोप्यापःश्रोत्रंचसपृष्ट्वाअग्निसमीपमेत्य ॥ ततः प्रधानहोमः ॥ व्यस्तसमस्तव्याहृतीनांविश्वामित्रजमदग्निभरद्वाजप्रजापतयऋषयःअग्निवायुसूर्यप्रजापतयोदेवताःगायत्र्युष्णिगनुष्टुब्बृहत्यश्छंदांसि सर्पसंस्थापनप्रधानाज्यहोमेवि० ॥ ॐ भूःस्वाहाअग्नयइदंनममेत्यादिव्यस्तव्याहृतित्रयेणाज्याहुतीरग्नौ हुत्वा ॥ समस्तव्याहृत्याचतुर्थींसर्पमुखेजुहुयात् ।' आज्यशेषंस्रुवेणैवसर्पदेहेनिषिंचेत् ॥ नात्रस्विष्टकृदादि ॥ स्रुवंतत्रैवनिधाययज्ञपात्राणिबर्हिषिनिदध्यात् ॥ ततश्चितिंप्रदक्षिणीकृत्यप्रणम्यक्षमाप्यहस्तगृहीतैश्चमसजलैःसमस्तव्याहृत्यासर्पपाणिनाभ्युक्ष्य॥अग्नेरक्षाणोवसिष्ठोग्निर्गायत्रीसर्पायाग्निप्रदानेविनि०॥ ॐअग्नेरक्षाणोअंहसःप्रतिष्मदेवरीषतः ॥ तपिष्ठैरजरोदह ॥ ततउपस्थानं ॥ ॐ नमोअस्तुसर्पेभ्योयेकेचपृथिवीमनु ॥ येअंतरिक्षेयेदिवितेभ्यःसर्पेभ्योनमः ॥ येदोरोचनेदिवोयेवासूर्यस्यरश्मिषु ॥ येषामप्सुषदःकृतंतेभ्यःसर्पे० ॥ याइषवोयातुधानानांयेवावनस्पतीँरनु ॥ येवावटेषुशेरतेतेभ्यःसर्पेभ्यो० ॥ अथपौराणमंत्राः ॥ कर्कोटकनमस्तेस्तुशंखपालनमोस्तुते ॥ नागराजमहादेवदिव्यरूपायतेनमः ॥ अफणाःफणिनोयेचसविषानिर्विषाश्चये ॥ सर्वेवटेशयाःसर्पाःपुण्यमूर्तेनमोस्तुते ॥ त्वयाभगवतेश्रीमद्वासुदेवायनिर्मितं ॥ स्वभोगेनैवपर्यंकमायतंभोगिनांवर ॥ त्वयेयंजगतीस्वामिन्स्वफणामंडलोपरि ॥ धृतैकदेशेह्यणुवत्तस्मैतुभ्यंनमोनमः ॥ इतिदह्यमानंसर्पमुपस्थाय ॥ त्राहित्राहि महाभोगिन्सर्पोपद्रवदुःखतः ॥ संततिंदेहिमेपुण्यांनिर्दुष्टांदीर्घदेहिनीम् ॥ प्रपन्नंपाहिमांभक्त्याकृपालोदीनवत्सल ॥ ज्ञानतोऽज्ञानतोवापिकृतःसर्पवधोमया ॥ जन्मांतरेतथैतस्मिन्मत्पूर्वैरथवाविभो ॥ तत्पापंनाशयक्षिप्रमपराधंक्षमस्वमे ॥ इतिप्रार्थ्य स्नात्वागत्य व्याहृतिभिःक्षीराज्येनाग्निंसंप्रोक्ष्यहुतेसर्पंजलेनाग्निंसिंचेत् ॥ नात्रास्थिसंचयनं ॥ इदंसर्वंसव्येनैवकार्यं ॥ ततः

स्नात्वाचम्यगृहंगच्छेत् ॥ कर्तासभार्यस्त्रिरात्रमाशौचंब्रह्मचर्यंचकुर्यात् ॥ बौधायनमतेत्वेकरात्रमाशौचं ॥ ततश्चतुर्थेहनिस चैलंस्नात्वाष्टौविप्रान्निमंत्र्यआचम्यप्राणानायम्यदेशकालौसंकीर्त्य नागबल्यंगविहितंब्राह्मणभोजनंकरिष्ये इतिसंकल्प्य ॥ सर्पस्वरूपिणेब्राह्मणायइदंतेपाद्यं एवंअनंतस्व० शेषस्व० कपिलस्व० नागस्व० कालिकस्व० शंखपालस्व० भूधरस्वरूपिणे० इतिक्रमेणतेषांपादौप्रक्षाल्यतानाचमय्यस्वयंचाचम्य विप्रान्प्राङ्मुखानुदङ्मुखान्वोपवेश्य ॥ सर्पस्वरूप० भूर्भुवःस्वरिदमा सनं आस्यतां ॥ एवमनंतादिभ्यः ॥ सर्पस्थानेक्षणःक्रियतां ॥ प्राप्नोतुभवान् ॥ एवमनंतस्थानेइत्यादि ॥ भोःसर्पस्वरूप अयंतेगंधः ॥ ततःपुष्पधूपदीपवस्त्रादि ॥ एवमन्येषामपिपूजनांतेचतुरस्रमंडलेषुपात्राणिनिधायपायसभक्ष्यादीन्परिविष्य सावित्र्याप्रोक्ष्यपरिषिच्य सर्पायेदमन्नममृतरूपंपरिविष्टंपरिवेक्ष्यमाणंचातृप्तेःस्वाहासंपद्यतांनमम ॥ एवंसर्वेषां ॥ आचांतेषु प्रागग्रदर्भेषु भोःसर्पअयंतेबलिर्नममेत्यादिनाममंत्रैःपिंडरूपान्पायसबलीन्दत्वावस्त्रादिभिरभ्यर्च्यविप्रेभ्यस्तांबूलंदक्षिणांचद त्वाविसर्जयेत् ॥ इदमपिसर्वंसव्येनैवकार्यं ॥ ततोमहीद्यौरित्यादिविधिनास्थापितकलशेसौवर्णनागंषोडशोपचारैरभ्यर्च्यप्रा र्थयेत्॥ ब्रह्मलोकेचयेसर्पाःशेषनागपुरोगमाः॥नमोस्तुतेभ्यःसुप्रीताःप्रसन्नाःसंतुमेसदा ॥ विष्णुलोकेचयेसर्पावासुकिप्रमुखा श्चये ॥ नमोस्तुतेभ्यःसुप्रीताःप्रसन्नाःसंतुमेसदा ॥ रुद्रलोकेचयेसर्पास्तक्षकप्रमुखास्तथा ॥ नमोस्तुतेभ्यः० ॥ खांडवस्य तथादाहेस्वर्गंयेचसमाश्रिताः ॥ नमोस्तुतेभ्यः० ॥ सर्पसत्रेचयेसर्पाआस्तिकेनाभिरक्षिताः ॥ नमोस्तुतेभ्यः० ॥ मलयेचैव येसर्पाःकर्कोटप्रमुखाश्चये ॥ नमोस्तुतेभ्यः० ॥ धर्मलोकेचयेसर्पावैतरण्यांसमाश्रिताः ॥ नमोस्तुतेभ्यः० ॥ येसर्पाःपर्वती येषुदरीसंधिषुसंस्थिताः ॥ नमोस्तुतेभ्यः० ॥ ग्रामेवायदिवारण्येयेसर्पाःप्रचरंतिहि ॥ नमोस्तुतेभ्यः० ॥ पृथिव्यांचैवये

सर्पायेसर्पाबिलसंस्थिताः ॥ नमोस्तुतेभ्यः० ॥ रसातलेचयेसर्पाअनंताद्यामहाबलाः ॥नमोस्तु० ॥ एवंस्तुत्वाचार्यंसंपूज्य कृतस्यसर्पसंस्कारकर्मणःसांगतासिद्ध्यर्थंइमंहेममयंनागंसकलशंसवस्त्रंसदक्षिणंतुभ्यमहंसंप्रददे ॥ अनेनस्वर्णनागदानेनअनंतादयोनागदेवताःप्रीयंतां ॥ ततस्तस्मैसवृषभांकृष्णांगांतन्निष्क्रयंवादद्यात् ॥ ततोदंपतीवस्त्रालंकारादिभिर्यथाविभवमन्यान्ब्राह्मणांश्चसंपूज्ययस्यस्मृत्याचनामोक्त्येत्युक्त्वा ॥ मयायत्कृतंसर्पसंस्काराख्यंकर्मतद्भवतांब्राह्मणानांवचनात् श्रीपरमेश्वरप्रसादात्सर्वपरिपूर्णमस्तु ॥ तथास्त्विततितेब्रूयुः ॥ ततःकर्मणःसांगतायैयथाशक्तिब्राह्मणान्संभोज्यभूयसींदत्वाकर्मसमापयेत् ॥ कृत्वासर्पस्यसंस्कारमनेनविधिनानरः ॥ विरोगोजायतेक्षिप्रंसंततिंलभतेशुभां ॥ इतिनागबलिः ॥ ॥ छ ॥ ॥ छ ॥

## ॥ ११३ ॥ अथदत्तपुत्रविधानम् ॥

श्रीः ॥ अथबह्वृचाधिकारिकःशौनकोक्तरीत्यापुत्रप्रतिग्रहप्रयोगः ॥ पूर्वेद्युःकृतोपवासः ॥ वाससीकुंडलेछत्रमुष्णींपंचांगुलीयकम् ॥ आचार्यंधर्मसंयुक्तंवैष्णववेदपारगम् ॥ बर्हिःकुशमयंचैवमिध्मंपालाशमेवच ॥ एतान्याहृत्यबंधूंश्चज्ञातीनाहूत्ययत्नतः ॥ पवित्रपाणिःप्राणानायम्यदेशकालौसंकीर्त्य ममाप्रजस्त्वप्रयुक्तपैतृकऋणापाकरणपुंनामनरकत्राणद्वाराश्रीपरमेश्वरप्रीत्यर्थंशौनकोक्तविधिनापुत्रप्रतिग्रहंकरिष्ये ॥ तदंगत्वेनस्वस्तिपुण्याहवाचनमाचार्यवरणमाचार्यस्यमधुपर्केणार्हणंविष्णुपूजनंब्राह्मणेभ्योबंधुवर्गेभ्यश्चान्नदानंचकरिष्ये ॥ तत्रादौनिर्विघ्नतासिद्ध्यर्थंगणपतिपूजनंकरिष्येइतिसंकल्य आचार्यवरणांतंकृत्वामधुपर्कांतेविष्णुंसंपूज्य पितॄणांकुलदेवतानांगुरूणांचप्रीत्यर्थंब्राह्मणान्बंधूंश्चभोजयेत्संकल्पयेद्वा ॥ ततआचार्यःदेशकालौसंकीर्त्य यजमानानुज्ञयापुत्रप्रतिग्रहांगत्वेनविहितहोमंकरिष्येइतिसंकल्प्य अग्निप्रतिष्ठापनांतंकृत्वान्वाधानंकुर्यात्॥चक्षुषीआज्येनेत्यं

तेअत्रप्रधानंसकृदग्निंषड्वारंसूर्यासावित्रींचरुणाअग्निंवायुंसूर्यंप्रजापतिंचाज्येन शेषेणस्विष्टकृतमित्याद्यन्वाधायाष्टाविंशति
मुष्टींस्तूष्णींनिरुप्यतावत्कृत्वःप्रोक्ष्यआज्योत्पवनांतंकृत्वा ब्राह्मणैःसहदातुःसमक्षंगत्वातंप्रत्यस्मैपुत्रंदेहीतिब्राह्मणद्वारायाच्ञां
कारयेत्॥ ततोदाताआचम्यप्राणानायम्यदेशकालौसंकीर्त्यश्रीपरमेश्वरप्रीत्यर्थंपुत्रदानंकरिष्यइतिसंकल्प्य गणपतिंसंपूज्यय
थाशक्तिचंदनादिनाप्रतिग्रहीतारंसंपूज्य ॥ येयज्ञेनेतिपंचानांनाभानेदिष्ठोमानवऋषिःविश्वेदेवादेवताआद्याश्चतस्रस्त्रिष्टुभः
पंचम्यनुष्टुप् पुत्रदानेविनियोगः ॥ ॐ येयुज्ञेनुदक्षिणयुासमक्ता० ऋचः ५ ॥ इत्यंतेइमंपुत्रंतवपैतृकऋणापाकरणपुंनामनर
कत्राणसिद्ध्यर्थंआत्मनश्चश्रीपरमेश्वरप्रीत्यर्थंतुभ्यमहंसंप्रददेनमम प्रतिगृह्णातुपुत्रंभवानित्यंतेप्रतिग्रहीतृहस्तेसाक्षतंजलंक्षिपे
त् ॥ ततःप्रतिग्रहीतादेवस्यत्वेतिमंत्रेणहस्तद्वयेनप्रतिगृह्यस्वांकेउपवेश्य ॥ अंगादंगात्संभवसिहृदयादधिजायसे ॥ आत्मावै
पुत्रनामासिसजीवशरदःशतमितिशिशुंमूर्धनिआजिघ्रेत्॥ ततोयुवंवस्त्राणीतिवस्त्रंपरिधाप्यतूष्णीमुष्णीषंबद्ध्वाकुंकुमादिनाति
लकंकृत्वाहिरण्यरूपइत्यादिनाकुंडलाभ्यामलंकृत्यछत्रेणाच्छादितंबालंनृत्यगीतवाद्यैः स्वस्तिनोमिमीतामित्यादिमंत्रैश्चस्वगृ
हमानीय हस्तौपादौप्रक्षाल्याचम्यअग्नेःपश्चिमतोमातुरुत्संगेस्वदक्षिणतोबालमुपवेश्यआचार्यदक्षिणतःस्वयमुपविशेत्॥ ततआ
चार्योबर्हिरास्तरणाद्याज्यभागांतेचरुमवदानविधिनावदाय ॥ यस्त्वाहृदाकीरिणेतिद्वयोरात्रेयोवसुश्रुतऋषिःअग्निर्देवतात्रिष्टु
प्छंदःपुत्रप्रतिग्रहांगहोमेवि० ॥ ॐ यस्त्वाहृदाकीरिणा० स्वस्तिस्वाहाइतिऋक्द्वयंक्रमेणपठित्वास्वाहेतिएकमेवावदानंजुहु
यात्॥ यजमानःअग्नयइदं० ॥ पुनरवदाय० ॥ तुभ्यमग्रइतिमंत्रस्यसूर्यासावित्रीसूर्यासावित्र्यनुष्टुप् पुत्रप्रतिग्रहांगहोमे० ॥
ॐ तुभ्यमग्रेपर्यवहन्० स्वाहासूर्यासावित्र्याइदं० १ ॥ पुनरवदाय ॥ सोमोददतिपंचानांसूर्यासावित्रीसूर्यासावित्रीदेव

ता आद्येद्वेअनुष्टुभौतृतीयाजगतीचतुर्थीत्रिष्टुप्पंचम्यनुष्टुप् पुत्रप्रतिग्रहांगहोमे० ॥ ॐ सोमोददद्गंधर्वाय० ऋचः ५ ॥ पुनः पुनरवदायपंचभिर्जुहुयात् ॥ सर्वत्रसूर्यासावित्र्याइदं० इतित्यागः ॥ ततोव्यस्तसमस्तव्याहृतिभिराज्यंहुत्वास्विष्टकृदादिहोमशेषंसमाप्यआचार्यायधेनुंदत्वादशत्रीन्वाब्राह्मणान्भोजयेत् ॥ कर्मणःसंपूर्णतांवाचयित्वाविप्राशिषोगृहीत्वाईश्वरार्पणंकुर्वीत ॥ इतिसंस्कारकौस्तुभसंगृहीतःशौनकोक्तःपुत्रप्रतिग्रहप्रयोगः ॥ ॥ छ ॥ ॥ छ ॥

## ॥ ११४ ॥ पुंसवनानवलोभनसीमंतोन्नयनानि ॥

श्रीः ॥ यजमानःआचम्यप्राणानयम्यदेशकालौस्मृत्वाअस्यांममभार्यायामुत्पत्स्यमानसर्वगर्भाणांबैजिकगार्भिकदोषपरिहारपुंरूपताज्ञानोदयप्रतिरोधिपरिहारद्वारापुंसवनमनवलोभनंच तथाममास्यांभार्यायांगर्भाभिवृद्धिपरिपंथिपिशितरुधिरप्रियालक्ष्मीभूतराक्षसीगतदूरनिरसनक्षेमसकलसौभाग्यनिदानभूतमहालक्ष्मीसमावेशनद्वारा प्रतिगर्भंबीजगर्भसमुद्भवैनोनिबर्हणजनकातिशयद्वाराचस्त्रीसंस्काररूपंसीमंतोन्नयनाख्यसंस्कारंचतंत्रेणकरिष्ये ॥ तदंगतयागणपतिपूजनंपुण्याहवाचनंमातृकापूजनंनांदीश्राद्धंचकरिष्येइतिसंकल्प्य तानिक्रमेणकुर्यात् ॥ (स्वस्तिवाचनेएतेषांपुंसवनानवलोभनसीमंतोन्नयनकर्मणांपुण्याहंभवंतोब्रुवंत्वितिउक्तकर्मभ्यःस्वस्तीति कर्माणिऋध्यंतामित्याद्यूहः ॥ नांदीश्राद्धेक्रतुदक्षसंज्ञकाविश्वेदेवाः ) ॥ तदंगहोमंकर्तुंस्थंडिलादिकरिष्ये ॥ विधिवदौपासनाग्निंपवमानंपुंसवनादिपृथक्त्वे ॥ त्रयाणांसहत्वेतुमंगलनामानमग्निंप्रतिष्ठाप्य क्रियमाणेपुंसवनानवलोभनसीमंतोन्नयनहोमेदेवतापरिग्रहार्थमन्वाधानंकरिष्ये ॥ अस्मिन्नन्वाहितेग्नावित्यादिचक्षुषीआज्येनेत्यंतमुक्त्वा प्रजापतिंचरुणाद्विर्धातारंद्वीराकांत्रिर्विष्णुंप्रजापतिंचाज्येनशेषेण स्विष्टकृतमित्याद्युक्त्वान्वाधायपरिसमूहनपरिस्तर

णादिप्रणीताप्रणयनावधिप्राक्तनतंत्रंकृत्वा ॥ प्रजापतयेत्वाजुष्टंनिर्वपामीतिचतुरोव्रीहिमुष्टीन्निरुप्यप्रोक्षणावघातादिर्बर्हिषिह
विरासादनांतंकृत्वास्वदक्षिणतःप्रत्यग्ग्रीवमुत्तरलोमानडुहंचर्मास्तीर्य आत्मानमग्निंचांतरापत्नीमाचांतसलिलांतीर्थप्रवेशेनानी
यचर्मण्युपवेश्यतयान्वारब्धइध्माधानाद्याज्यभागांतंकृत्वा प्रक्षालितेप्रसृतीकृतेदक्षिणेपत्नीपाणावंतजानुस्थितेप्रसृतिमितं
( समानरूपवत्सायागोरन्यस्यावाक्षीरेणनिर्मितं ) दधिनिक्षिप्य तदुपरिलिंगवद्यवंप्रागग्रंतत्पार्श्वयोरंडद्वयवन्माषद्वयंचनि
धाय किंपिबसीतित्रिःपतिःपत्नींपृच्छेत् ॥ साचपुंसवनमितित्रिरुक्त्वासयवमाषंतद्दधिनिःशेषंपीत्वाबहिराचामेत् ॥ पुनरेवं
द्विःप्रश्नप्रतिवचनपूर्वकंप्राश्याचामेत् ॥ इतिपुंसवनम् ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥

## ॥ ११५ ॥ अथानवलोभनम् ॥

श्रीः ॥ ततोदूर्वाःकन्ययादृषद्युपलेनपेषयित्वापिंडीकृत्यशुद्धवसनांचलेसंगृह्यप्रजावदाख्यंजीवपुत्रसंज्ञकंचसूक्तंजपित्वामंडला
गारच्छायायामुपविष्टायाःप्राङ्मुख्याःपत्न्याःपश्चिमतस्तिष्ठन्पतिस्तदाननमुन्नमय्यदक्षिणेनासाबिलेस्वांगुष्ठाग्रेणदूर्वारसमासिं
चेत् ॥ तत्रप्रजावदाख्यंसूक्तंयथा ॥ ॐ आतेगर्भोयोनिमैतुपुमान्बाणइवेषुधिं ॥ आवीरोजायतांपुत्रस्तेदशमास्यः ॥ करोमिते
प्राजापत्यमागर्भोयोनिमैतुते ॥ अनूनःपूर्णोजायतामश्लोणोपिशाचधीतः ॥ पुमांस्तेपुत्रोनारीतंपुमाननुजायतां ॥ तानिभद्रा
णिबीजान्यृषभाजनयंतुते ॥ यानिभद्राणिबीजान्यृषभाजयंतिनः ॥ तैस्त्वंपुत्रान्विंदस्वसाप्रसूर्धेनुकाभव ॥ कामःसमृध्यतांम
ह्यमपराजितमेवमे ॥ यंकामंकामयेदेवतंमेवायोसमर्धय ॥ अथजीवपुत्राख्यंसूक्तं ॥ अग्निरैतुप्रथमोदेवतानांसोस्यैप्रजांमुंचतु
मृत्युपाशात् ॥ तदयंराजावरुणोनुमन्यतांयथेयंस्त्रीपौत्रमघंनरोदात् ॥ इमामग्निस्त्रायतांगार्हपत्यःप्रजामस्यैनयतुदीर्घमायुः ॥

अशून्योपस्थाजीवतुमातापौत्रमानंदमभिप्रबुध्यतामियं ॥ मातेगृहेनिशिघोषउत्थादन्यत्रत्वद्रुदत्यःसंविशंतु ॥ मात्वंविकेश्युर
वआवधिष्ठाजीवपत्नीपतिलोकेविराजपश्यंतीप्रजांसुमनस्यमाना ॥ अप्रजास्त्वंपुत्रंमृत्युंपाप्मानमुतवाघं ॥ शीर्ष्णःस्रजमिवोन्मु
च्यद्विषद्भ्यःप्रतिमुंचामिपाशं ॥ देवकृतंब्राह्मणंकल्पमानंतेनहन्मियोनिषदःपिशाचान् ॥ क्रव्यादोमृत्यूनधरान्पातयामिदीर्घमा
युस्तवजीवंतुपुत्राः ॥ एतैर्दशभिर्मंत्रैर्नस्येदत्तेआचांतजलयापत्न्यास्पृष्टःप्राजापत्यचरुमवदानधर्मेणावदाय ॥ ॐ प्रजापतयेस्वाहे
त्येकामाहुतिंहुत्वा प्रजापतयइदं० ॥ यत्तेसुशीमइतिमंत्रस्यहिरण्यगर्भःप्रजापतिरनुष्टुप् ॥ भार्यायाहृदयालंभनेविनियोगः ॥
यत्तेसुशीमेहृदयेहितमंतःप्रजापतौ ॥ मन्येहंमांतद्विद्वांसंमाहंपौत्रमघंनियाम् ॥ इतिभार्याहृदयंपाणितलेनस्पृशेत् ॥ एतदनव०

## ॥ ११६ ॥ अथसीमंतोन्नयनम् ॥

श्रीः ॥ अथप्राग्ग्रीवेउपविष्टयापत्न्यान्वारब्धःस्रुवेणाज्याहुतीर्जुहुयात् ॥ यथा ॥ धाताददातुदाशुषइतिमंत्रद्वयस्यहिरण्यग
र्भोधातानुष्टुप् ॥ द्वितीयात्रिष्टुप् ॥ सीमंतोन्नयनप्रधानाज्यहोमेविनियोगः ॥ ॐ धाताददातुदाशुषेप्राचींजीवातुमक्षितां ॥
वयंदेवस्यधीमहिसुमतिंवाजिनीवतःस्वाहा ॥ धात्रइदंनमम ॥ ॐ धाताप्रजानामुतरायईशेधातेदंविश्वंभुवनंजजान ॥ धाता
कृष्टीरनिमिषाभिचष्टेधात्रइद्धव्यंघृतवज्जुहोतस्वाहा ॥ धात्रइदंनमम ॥ राकामहमितिद्वयोर्गृत्समदोराकाजगती ॥ विनियोगः
प्राग्वत् ॥ ॐ राकामहंसुहवांसुष्टुतीहुवेशृणोतुनःसुभगाबोधतुत्मना ॥ सीव्यत्वपःसूच्याच्छिद्यमानयाददातुवीरंशतदायमुक्थं१
स्वाहा ॥ राकायाइदंनमम ॥ ॐ यास्तेराकेसुमतयःसुपेशसोयाभिर्ददासिदाशुषेवसूनि ॥ ताभिर्नोअद्यसुमनाउपागहिसहस्रपोषं
सुभगेरराणास्वाहा ॥ राकायाइदंनमम ॥ नेजमेषेतितिसृणांत्वष्टाविष्णुरनुष्टुप् ॥ विनियोगःप्राग्वत् ॥ ॐ नेजमेषपरापत०॥

विष्णवइदंनमम ॥ ॐ यथेयंपृथिवी० ॥ विष्णवइदंनमम ॥ ॐ विष्णोःश्रेष्ठेन० ॥ विष्णवइदंनमम ॥ प्रजापतेहिरण्यगर्भः प्रजापतिस्त्रिष्टुप् ॥ विनियोगःप्राग्वत् ॥ ॐ प्रजापतेनत्वदेता० ॥ स्वाहा ॥ प्रजापतयइदंनमम ॥ ८ ॥ एवमष्टाज्याहुतीःस्रुवेणहुत्वा पत्न्याःपश्चिमतः प्राङ्मुखस्तिष्ठन्नपक्वफलयुग्मान्वितमौदुंबरस्तबकद्वयंत्रिशुक्लांशलल्लींकुशांकुरत्रयंचैकीकृतंपाणिनागृहीत्वातन्मूलेनपत्न्याःकेशललाटयोःसंधिमारभ्यामूर्धप्रदेशात् ॥ ॐ भूर्भुवःस्वरोमितिमंत्रेणत्रिश्चतुर्वाप्रत्युन्नयनंमंत्रमावर्तयन्त्सीमंतमुन्नयेत् ॥ ॐ भूर्भुवःस्वरितिमंत्रत्रयस्यप्रजापतिर्बृहती ॥ सीमंतव्यूहनेविनियोगः ॥ ततोयथाचारंसगोधूमामौदुंबरफलमालांतत्कंठेनिधायवीणागाथिनौद्विजौ सोमंराजानंसंगायेतामितिप्रेषयेत् ॥ तौच ॐ सोमोनोराजावतुमानुषीःप्रजानिविष्टचक्रासावितिमंत्रंअसावितिस्थानेगंगेइत्यादिसमीपस्थनद्याःसंबुद्ध्यंतंनामनिर्दिशंतौवीणयागायेताम् ॥ सामगानापरिज्ञानेमंत्रमात्रंत्रिःपठेताम् ॥ ततःस्विष्टकृदादिहोमशेषंसमाप्यब्रह्मणेऋषभंदक्षिणांतदभावेऽन्यस्मैविदुषेब्राह्मणायदत्वापतिपुत्रवतीभिर्वृद्धाभिरुपदिष्टंमंगलाचारंकारयेत् ॥ प्रतिसंस्कारंदशदशत्रींस्त्रीन्वाब्राह्मणान्भोजयेत् ॥ शक्तौशतं ॥ इतिपुंसवनानवलो०

## ॥ ११७ ॥ अथजातकर्मप्रयोगः ॥

श्रीः ॥ जातमात्रेपुत्रेपितातस्यमुखंनिरीक्ष्यनद्यादावुदङ्मुखःस्नात्वाचम्यसितचंदनमाल्यादिभिरलंकृतोनालच्छेदनात्पूर्वंसूति

---

१ विष्णुबलिप्रयोगःसविस्तरःप्रयोगरत्नेद्रष्टव्यः संप्रतिबहुत्रालस्यादिनेमंनाचरंतीतितत्रैवशिष्टानादरदर्शनान्नात्रविन्यस्तोग्रंथविस्तरभिया ॥
२ कुमार्याश्चैतज्जातकर्ममंत्रकंकार्यम् ॥ रात्रौसंध्यायांग्रहणेजाताशौचांतरमध्येपीदंकार्यम् ॥ मृताशौचमध्येजातश्चेत्तदंवाशौचांतेवाकार्यम् ॥ पितरिग्रामांतरंगतेपितृव्यादिर्गोत्रजोवाज्येष्ठक्रमेणेदंकुर्यात् ॥ मूलज्येष्ठाव्यतीपातादौतन्नाचरेत् ॥

कादिव्यतिरिक्तैरस्पृष्टमकृतस्तनपानंप्रक्षालितमलंकुमारंमातुरुत्संगेप्राङ्मुखमवस्थाप्यदेशकालौस्मृत्वा ममास्यकुमारस्यगर्भांबुपानजनितसकलदोषनिवर्हणायुर्मेधाभिवृद्धिबीजगर्भसमुद्भवैनोनिबर्हणद्वाराश्रीपरमेश्वरप्रीत्यर्थंजातकर्मकरिष्ये ॥ तदंगंगणपतिपूजनपूर्वकंस्वस्तिपुण्याहवाचनंमातृकापूजनंनांदीश्राद्धंचकरिष्येइतिसंकल्प्यतानिकृत्वा ॥ ततोविषममानेनमधुसर्पिषीमिश्रीकृत्यशिलातलेनिक्षिप्यतत्रसुवर्णरजोविमोकंयावदवघृष्यरजतकांस्यादिभाजनेनिधाय ॥ प्रतेददामीतिहिरण्यगर्भःसवितात्रिष्टुप् ॥ कुमारेणमधुसर्पिःप्राशनेवि० ॥ ॐ प्रतेददामिमधुनोघृतस्यवेदंसवित्राप्रसूतंमघोनां ॥ आयुष्मान्गुप्तोदेवताभिःशतंजीवशरदोलोकेअस्मिन् ॥ इतिमंत्रेणतेनैवहिरण्येनकुमारंपाययित्वातद्धिरण्यंप्रक्षाल्यकुमारस्यदक्षिणकर्णेनिधायतन्मुखसमीपेस्वमुखमानीय ॥ मेधांतइतिमंत्रस्यहिरण्यगर्भःसवितासरस्वत्यश्विनावनुष्टुप् ॥ कुमारदक्षिणकर्णेजपेविनियोगः ॥ ॐ मेधांतेदेवःसवितामेधांदेवीसरस्वती ॥ मेधांतेअश्विनौदेवावाधत्तांपुष्करस्रजौ ॥ इत्यृचंजपित्वा ॥ पुनस्तद्धिरण्यंसव्येकर्णेनिधायैतामेवऋचंजपेत् ॥ ततः ॥ ॐ अश्माभवपरशुर्भवहिरण्यमस्तृतंभव ॥ वेदोवैपुत्रनामासिसजीवशरदःशतं ॥ इतिमंत्रेणशिशोरंसौयुगपदभिमृशेत् ॥ इंद्रश्रेष्ठानिगृत्समदइंद्रस्त्रिष्टुप् ॥ शिशोरंसाभिमर्शनेविनियोगः ॥ ॐ इंद्रश्रेष्ठानिद्रविणानिधेहिचित्तिंदक्षस्यसुभगत्वमस्मे ॥ पोषंरयीणामरिष्टिंतनूनांस्वाद्मानंवाचःसुदिनत्वमह्नां ॥ अस्मेप्रयंधिविश्वामित्रइंद्रस्त्रिष्टुप्॥ विनियोगःप्राग्वत् ॥ ॐ अस्मेप्रयंधिमघवन्नृजीषिन्निंद्ररायोविश्ववारस्यभूरेः ॥ अस्मेशतंशरदोजीवसेधाअस्मेवीरान्छश्वतइं



१ जातकर्मणिनांदीश्राद्धंरात्रावपिभवति ॥ जातकर्मांगंपुत्रजन्मनिमित्तकंचनांदीश्राद्धंपृथगेव । तत्रपुत्रजन्मनिमित्तकंजातकर्मांगंचवृद्धिश्राद्धंतंत्रेणकरिष्येइतिसंकल्प्यसकृदेवकार्यं ।

द्रशिप्रिन् ॥ इतिमंत्रत्रयांतेअभिमर्शः ॥ ततोरक्षायुषोरभिवृद्ध्यर्थं ॥ ॐ अंगादंगात्संभवसिहृदयादधिजायसे ॥ आत्मावैपु
त्रनामासिसजीवशरदःशतं ॥ इतिमंत्रमुच्चार्यमूर्धानंत्रिराजिघ्रेत् ॥ ततःशिशोःकरिष्यमाणंनामतदैवस्मरेत् ॥ मातुर्दक्षिण
स्तनंप्रक्षाल्य ॥ ॐ इमांकुमारोजरांधयतुदीर्घमायुःप्रजीवसे ॥ अस्यैस्तनौप्रयुंजानाआयुर्वर्चोयशोबलं ॥ इतिमंत्रेणमात्राकुमा
रंपाययित्वाब्राह्मणेभ्योदक्षिणांदत्वाआशिषोगृह्णीयात् ॥ होमकरणपक्षेप्रबलनामानमग्निंप्रतिष्ठाप्यजातकर्महोमेदेवतापरिग्रहा
र्थमित्यादिचक्षुषीआज्येनेत्यंतमुक्त्वा अग्निमिंद्रंप्रजापतिंविश्वान्देवान्ब्रह्माणमाज्येनशेषेणस्विष्टकृतमित्यादिसद्योयक्ष्यइत्यंत
मुक्त्वाज्यंहुत्वा मधुसर्पिःपायनादिशिशुनामस्मरणांतंकृत्वाहोमशेषंसमाप्यस्तन्यंदद्यात् ॥ तमर्वतमितिपंचभिराशीर्वादः ॥

## ॥ ११८ ॥ अथषष्ठीपूजा ॥

श्रीः ॥ पंचमेषष्ठेचदिनेषष्ठएववापूर्वरात्रेपित्रादिराचम्यदेशकालौस्मृत्वाअस्यशिशोःसमातृकस्यआयुरारोग्यावाप्तिद्वारासक
लारिष्टशांतये श्रीपरमेश्वरप्रीत्यर्थंविघ्नेशस्यजन्मदानांषष्ठीदेव्याजीवंतिकायाःशस्त्रगर्भायाश्चयथामिलितोपचारैःपूजनमहंकरि
ष्ये॥ तथाचशांतिसूक्तजपाख्येकर्मणिआचार्यवरणंनिर्विघ्नतासिद्ध्यैगणपतिपूजनंचक० ॥ तानिकृत्वाक्षतपुंजेषुविघ्नेशंजन्मदाः
षष्ठीदेवींजीवंतिकांचावाह्यषोडशोपचारैःपृथक्तंत्रेणवापूजयेत् ॥ षष्ठ्यावाहनं ॥ आयाहिवरदेदेविमहाषष्ठीतिविश्रुते ॥ श
क्तिभिःसहबालंमेरक्षजागरवासरे ॥ इति ॥ शक्तिस्त्वंसर्वदेवानांलोकानांहितकारिणी ॥ मातर्बालमिमंरक्षमहाषष्ठिनमोस्तुते ॥
इत्युपचारार्पणं ॥ ( केचिदत्रशिवांसंभूतिंप्रीतिंसंततिंअनुसूयांक्षमांचपूजयेदित्याहुः ) ॥ आचार्योन्येचशांतिसूक्तानिपठेयुः ॥
प्रार्थना ॥ लंबोदरमहाभागसर्वोपद्रवनाशन ॥ त्वत्प्रसादादविघ्नेशचिरंजीवतुबालकः॥जननीसर्वभूतानांबालानांचविशेषतः॥

नारायणीस्वरूपेणबालंमेरक्षसर्वदा ॥ भूतप्रेतपिशाचेभ्योडाकिनीयोगिनीषुच ॥ मातेवरक्षबालंमेश्वापदेपन्नगेषुच ॥ गौरीपुत्रो यथास्कंदःशिशुत्वेरक्षितःपुरा ॥ तथाममाप्ययंबालःषष्ठिकेरक्षतेनमः ॥ ततोविप्रेभ्यश्चतांबूलखाद्यदक्षिणादिदद्यात् ॥ जननाशौचमध्येप्रथमपंचमषष्ठदशमदिनेषुदानेप्रतिग्रहेचनदोषः ॥ अन्नंतुनिषिद्धं ॥ अस्यांरात्रौजागरणंकुर्युः ॥ इतिषष्ठीपूजा ॥

## ॥ ११९ ॥ अथनामकरणप्रयोगः ॥

श्रीः ॥ यजमानःआचम्यप्राणानायम्यदेशकालौसंकीर्त्यममास्यशिशोःबीजगर्भसमुद्भवैनोनिबर्हणायुरभिवृद्धिव्यवहारसिद्धिद्वाराश्रीपरमेश्वरप्रीत्यर्थंनामकरणंकरिष्ये ॥ तदंगतयागणपतिपूजनपूर्वकंस्वस्तिपुण्याहवाचनंमातृकापूजनंनांदीश्राद्धंचकरिष्येइतिसंकल्प्य॥स्वस्तिवाचनेपुण्याहत्रयमुक्त्वाकरिष्यमाणंनामचतुर्थ्यंतमुक्त्वात्रिरेतन्नाम्नेस्वस्तिभवंतोब्रुवंत्वित्युक्ते विप्रैरेतन्नाम्नेस्वस्तिइतित्रिःप्रत्युक्तेशेषंस्वस्तिवाचनंसमाप्य ॥ इदमार्याःकुमारस्यनामाहंविदधामीतिविप्राननुज्ञाप्यतैर्विधीयतामित्यनुमोदितःसन्तंडुलान्कांस्यपात्रेप्रसार्यतदुपरिसुवर्णशलाकयाअमुककुलदेवताभक्तइतिनामलेख्यं॥ततोजन्मकालीनमासनाम ॥ कृष्णोनंतोच्युतश्चक्रीवैकुंठोथजनार्दनः ॥ उपेंद्रोयज्ञपुरुषोवासुदेवस्तथाहरिः ॥ योगीशःपुंडरीकाक्षोमासनामान्यनुक्रमात् ॥

---

१ पूर्वतनसंस्काराणांलोपेजातकर्मणःकालातिपत्तिदोषपरिहारायव्याहृतिहोमंकृत्वा गर्भाधानपुंसवनानवलोभनसीमंतोन्नयनलोपनिमित्तंचप्रत्येकमर्धकृच्छ्रंपादकृच्छ्रंवाकृत्वानामकरणेनसहजातकर्मापिकार्यम् ॥ २ केवलनामचिकीर्षायांस्वस्तिवाचनेपुण्याहत्रयमुक्त्वाअमुकनाम्नेसैस्वस्तिभवंतोब्रुवंत्वितित्रिर्वदेत् ॥ ब्राह्मणाश्चैतन्नाम्नेस्वस्तीतिब्रूयुः ॥ जातकर्मसहितनामकरणकरणपक्षेअस्यजातकर्मनामकर्मणोःपुण्याहं तथास्यजातकर्मणएतन्नाम्नेऽसैचस्वस्तिभवंतोब्रुवंतुतथैवप्रतिवचनमितिकौस्तुभे ॥

अत्रचैत्रादिर्मार्गशीर्षादिर्वाक्रमः ॥ ततोभिवादनीयंनामउपांशुकुर्यात् ॥ तन्नामौंजीबंधनान्मातापितरावेवजानीयातां ॥ उपनयनकालेचानेननाम्नाभिवादयेतिकुमारंप्रतिवाच्यं॥ ततस्त्रिपुरुषवाचिदेवतावाचिवानामस्वेष्टंवायुग्माक्षरंद्व्यक्षरंप्रतिष्ठाकामश्चतुरक्षरंब्रह्मवर्चसकामोविप्रादिवर्णक्रमेणशर्मवर्मगुप्तदासान्यतमपदांतंकुर्यात् ॥ ततोवकहडाचक्राख्यज्योतिःशास्त्रोक्तचक्रानुसारेणजन्मनक्षत्रपादप्रयुक्ताक्षरादिनाम ॥ ततोव्यावहारिकंस्वेष्टंनामेतिनामचतुष्टयंलिखित्वा ॥ नामदेवताभ्योनमइतिसंपूज्यामुकनाम्नात्वममुकोसिइतिस्वदक्षिणस्थमातुरुत्संगस्थस्यशिशोर्दक्षिणकर्णेकथयित्वा॥ तदस्तुमित्रावरुणा० गृहावैप्रतिष्ठा० इत्यादिमंत्रपाठांतेविप्रैर्नामसुप्रतिष्ठितमस्त्वित्युक्तेअमुकनाम्नाअमुकनामायंभवतोऽभिवादयतेइत्युक्त्वाविप्रानभिवादयेत् ॥ तेचायुष्मान्भवत्वमुकशर्मा३इतिवदेयुः ॥ ततःकर्तादेवताभ्योब्राह्मणेभ्यःपित्रादिभ्यश्चनत्वायथाविभवंविप्रान्भोजयेद्दक्षि

---

१ कौस्तुभेनाक्षत्रनामव्यवस्थेत्थं ॥ रोरेममृज्येचिषुवृद्धिरादौठात्पेचवांत्यश्रवशाश्वयुक्षु ॥ शेषेषुनाम्नोंःकपरःस्वरोंत्यःस्वाप्वोरदीर्घःसविसर्गइष्टः ॥ इति ॥ अस्यार्थः । रौहिणः रैवतः माघः मार्गशीर्षः ज्यैष्ठः चैत्रः इत्यादिवृद्धियुंजिषट् । प्रोष्ठपादः इतिमध्यवृद्धिकमेकं । अपभरणः आपभरणः श्रवणः श्रावणः शतभिषः शातभिषः अश्वयुक् आश्वयुजः इतिचतुर्णामादिवृद्धिविकल्पः ॥ श्रविष्ठः फल्गुनः अनुराधः तिष्यः आश्लेषः हस्तः विशाखः अषाढः कृत्तिकः इतिनवनामसिद्धिः ॥ आर्द्रकः मूलकः स्वातिः पुनर्वसुः एवंचतुष्टयं ॥ इत्येवनाक्षत्रनामानीतिरूपपादितम् ॥ अन्येप्रकाराग्रंथेष्वालोचनीयाः ॥

णांचदद्यात् ॥ ( कुमार्याअपिनामकरणममंत्रकंकार्यं ॥ विषमाक्षरंतुतन्नाम ) ॥ होमकरणपक्षेतुपार्थिवाग्नौजातकर्मवदेवप्रधानाहुतीर्हुत्वानामयथोक्तंकृत्वास्विष्टकृदादिहोमशेषतंत्रंकुर्यात् ॥ इतिनामकरणप्रयोगः ॥ ॥ छ ॥ ॥ छ ॥

## ॥ १२० ॥ अथसूर्यावलोकनम् ॥

श्रीः ॥ जननात्तृतीयेमासिजन्मदिनेजन्मनक्षत्रेवाइष्टदेवतापूजनपूर्वकमलंकृतेनशिशुनासोत्सवंसूर्यदर्शनंकारयित्वाचतुर्थमासेशुभकालेग्निंचंद्रंधेनुंचदर्शयेत् ॥ स्वस्तिनआत्रेयोविश्वेदेवास्त्रिष्टुप् ॥ शिशोरंकारोपणेविनियोगः ॥ ॐ स्वस्तिनोमिमीता० ॥ अनेनपित्रादिःशिशुमंकमारोप्य ॥ आशुःशिशानइतित्रयोदशर्चस्याप्रतिरथस्यसूक्तस्यऐंद्रोऽप्रतिरथइंद्रस्त्रिष्टुप् ॥ चतुर्थीबृहस्पतिदेवत्या ॥ त्रयोदश्यनुष्टुप् ॥ शिशोरायुष्याभिवृद्ध्यर्थंजपेविनियोगः ॥ ॐ आशुःशिशानोवृषभोनभीमोघना० ॥ ऋ० १३ ॥ ॐ असौयासेना० ऋक् २ ॥ तच्चक्षुर्वसिष्ठःसूर्यःपुरउष्णिक् ॥ कुमारस्यादित्यावेक्षणेविनियोगः ॥ ॐ तच्चक्षुर्देवहितं० ॥ इतिसूर्यंनिरीक्षयेत् ॥ इतिसूर्यावलोकनसंस्कारः ॥ ॥ इदंअग्रेतनंनिष्क्रमणंचसहतंत्रेणैवकुर्वंति ॥ ॥ छ ॥

## ॥ १२१ ॥ अथनिष्क्रमणप्रयोगः ॥

श्रीः ॥ ( सूर्यावलोकनतंत्रेण ) ततश्चतुर्थेमासिषष्ठेवाशुक्लपक्षेशुभतिथ्यादौपितासभार्यःसशिशुरभ्यंगस्नातः ॥ ममशिशोःआयुःश्रीवृद्धिबीजगर्भसमुद्भवैनोनिबर्हणद्वाराश्रीपरमेश्वरप्रीत्यर्थंनिष्क्रमणाख्यंकर्मकरिष्ये ॥ इतिसंकल्प्यतदंगतयास्वस्तिवाचना

---

१ स्त्रीणांभक्तेत्याबंतंदेवतानाम । मासनामसुचक्रिणीवैकुंठीवासुदेवीतिङीबंतानि हरिरित्यविकृतं अवशिष्टान्यष्टावाबंतानि । आश्वलायनैर्नाक्षत्रनाम स्त्रीणां नैव कार्यं । व्यावहारिकं तु यज्ञदाशर्मेति पुंवत् ॥

भ्युदयिकग्रहयज्ञान्कृत्वाइंद्राग्नियमनिर्ऋतिवरुणवायुकुबेरेशानानांप्राच्यादिदिशां चंद्रार्कवासुदेवगगनानांचयथाक्रमंतंडुल पुंजेषुपूजांकृत्वाब्राह्मणान्भोजयित्वातैःस्वस्त्ययनंवाचयित्वासायंसंध्यादिकंकृत्वा शिशुंसौवर्णैःकृत्रिमैर्वाभरणैर्यथाशक्तिअलं कृत्य पूर्वंनकृतंचेदिदानींशिशुनाग्निचंद्रधेनूनांदर्शनंकारयित्वाऽश्वादिवाहनस्थंशिशुंमातुलेनधात्र्यावावाहयित्वा भार्यापुत्रवि द्वद्ब्राह्मणज्ञातिबांधवपुरंध्रीगणदर्पणपूर्णकलशयुक्तकन्यागणपुष्पहरिद्राक्षतदीपमालाध्वजलाजमंगलवाद्यघोषयुक्तः ॥ ॐ क निक्रदज्जनुषं० ॥ ऋ० ३ ॥ ॐ प्रदक्षिणिदभि० ॥ ऋक् २ ॥ ॐ आवदंस्त्वं० ॥ ऋक् १ ॥ इत्यादिशकुंतादिसुमंगलसूक्तं पठन्गृहाद्बहिर्गत्वामंत्रमेतमुदीरयेत्॥ चंद्रार्कयोर्दिगीशानांदिशांचगनस्यच॥ निक्षेपार्थमिमंदद्मिते( ऽमुं )त्वांरक्षंतुसर्वदा ॥ अप्रमत्तंप्रमत्तंवादिवारात्रावथापिवा ॥ रक्षंतुसततंसर्वेदेवाःशक्रपुरोगमाः॥ एवंशिशुरक्षणार्थंदेवान्संप्रार्थ्यविष्णुशिवालययो रन्यतरद्बंधुगृहंवागत्वातत्रदेवंसुमंगलवाद्यघोषपुष्पोपहारादिभिःप्रपूज्य गोमयाद्यनुलिप्तचतुरस्रदेशेधान्यादिनिधायतत्रशि शुमासयित्वामंत्रेणरक्षांकुर्यात् ॥ मंत्रश्च ॥ त्र्यंबकमित्यस्यवसिष्ठोमृत्युंजयस्त्र्यंबकोनुष्टुप् ॥ शिशोरक्षायांविनियोगः ॥ ॐ हौं जूंसः ॐ भूर्भुवःस्वः ॐ त्र्यंबकंयजामहेसुगं० तात् ॥ ॐ स्वःभुवःभूः ॐ सःजूंहौं ॐ इत्येवंरूपंमृतसंजीवनीमंत्रंजपन्विभू त्याक्षतैर्वामूर्ध्निललाटेचरक्षांकृत्वा अपूपादिभिर्भूतेशानंगणेशमभ्यर्च्यशिशुंभक्ष्यादिभिस्तोषयित्वाशिषोवाचयित्वादेवताप्रणा मंप्रदक्षिणत्रयंचशिशुनाकारयित्वा मातुलाद्यासन्नबंधुगृहेपूर्ववन्नीत्वातत्रदानोपहारादिभिःशिशुंतोषयित्वास्वगृहंगत्वाब्राह्मणै राशिषोवाचयित्वातेभ्यःसुवासिनीभ्यश्चयथाशक्तिदक्षिणांदत्वाबंधुभिःसहभुंजीत ॥ कुमार्याअप्येतत्समानं ॥ होमोऽत्रकृता

कृतः ॥ होमपक्षेशिशोरलंकरणानंतरंलौकिकाग्निंप्रतिष्ठाप्यजातकर्मवदनादेशदेवताभ्योहुत्वाअग्निचंद्रदर्शनादिस्वगृहगमनांतं कृत्वास्विष्टकृदादिहोमशेषंसमाप्यब्राह्मणाशीर्वादादिकारयेदितिक्रमः ॥ इतिनिष्क्रमणप्रयोगः ॥ ॥ ७ ॥

## ॥ १२२ ॥ अथोपवेशनविधिः ॥

श्रीः ॥ पंचमेमासिशुक्लपक्षेज्योतिःशास्त्रोक्तशुभतिथ्यादौपूर्वाह्णेस्वस्तिवाचनंकृत्वावराहपृथिवीगुरुदेवद्विजान्पूजयित्वाभूभागमुपलिप्यतत्रमंडलंकृत्वा शंखतूर्यादिमांगलिकध्वनौक्रियमाणेभूमौशिशुमुपवेशयेदेतैर्मंत्रैः॥रक्षैनंवसुधेदेविसदासर्वगतंशुभे ॥ आयुःप्रमाणंनिखिलंनिक्षिपस्वहरिप्रिये ॥ अचिरादायुषस्त्वस्ययेकेचित्परिपंथिनः॥जीवितारोग्यवित्तेषुनिर्दहस्वाचिरेणतान् ॥ धारिण्यशेषभूतानांमातस्त्वमधिकाह्यसि ॥ कुमारंपाहिमातस्त्वंब्रह्मातदनुमन्यताम् ॥ इति ॥ ततोब्राह्मणान्पूजयित्वाशिषोवाचयित्वानीराजनाद्युत्सवंकुर्यात् ॥ एवंकुमार्याअपि ॥ इत्युपवेशनम् ॥ ॥ ७ ॥ ॥ ७ ॥

## ॥ १२३ ॥ अथान्नप्राशनप्रयोगः ॥

श्रीः ॥ यजमानःआचम्यप्राणानायम्यदेशकालौस्मृत्वाममास्यशिशोर्मातृगर्भमलप्राशनशुद्ध्यन्नाद्यब्रह्मवर्चसइंद्रियायुर्लक्षणफलसिद्धिबीजगर्भसमुद्भवैनोनिबर्हणद्वाराश्रीपरमेश्वरप्रीत्यर्थंअन्नप्राशनाख्यंकर्मकरिष्यइतिसंकल्प्य तदंगगणपतिपूजनस्वस्तिवाचनाभ्युदयिकेकृत्वाशिशुमलंकृत्यपूजोपहारादिभिरिष्टदेवतामभ्यर्च्य तत्पुरतःस्वदक्षिणेशुभवस्त्रोपरिमातुरुत्संगेप्राङ्मुखोपविष्टस्यशिशोःप्रथमान्नप्राशनंकारयेत् ॥ दधिमधुघृतमिश्रमन्नंकांचनेकांस्येवाभाजनेप्रक्षिप्य ॥ अन्नपतइत्यस्यनलकूबरोऽन्नपतिरुपरिष्टाद्बृहती ॥ शिशोरन्नप्राशनेवि० ॥ ॐ अन्नपतेन्नस्यनोदेह्यनमीवस्यशुष्मिणः ॥ प्रप्रदातारंतारिषऊर्जंनोधेहिद्विपदे

चतुष्पदे ॥ इतिमंत्रेणससुवर्णहस्तोन्नमादायप्रथमकवलंप्राशयित्वायथेष्टंभोजयित्वामुखंप्रक्षाल्यबालंभूमावुपवेश्यतदग्रेपुस्तकं शस्त्रवस्त्रादिशिल्पानिविन्यस्यजीविकापरीक्षांकुर्यात् ॥ शिशुःस्वेच्छयायत्प्रथमंस्पृशेत्सास्यजीविकेतिविद्यात्॥ होमकरणपक्षे जातकर्मवत्शुचिनामानमग्निंप्रतिष्ठाप्यप्रधानहोमांतेन्नप्राशनजीविकापरीक्षे ॥ ततःस्विष्टकृदादिहोमशेषंसमाप्ययथाशक्तिब्रा ह्मणान्भोजयित्वादक्षिणांदत्वाशिषोवाचयित्वाबंधुभिःसहस्वयंभुंजीत ॥ इत्यन्नप्राशनप्रयोगः ॥ ॥ छ ॥
सूर्यावलोकनादीन्यन्नप्राशनांतानिअन्नप्राशनकालेशिष्टाःसहैवानुतिष्ठंतितेषांचसहप्रयोगःकौस्तुभेआलोचनीयः ॥ तत्रसूर्याव लोकनसंकल्पंनिष्क्रमणसंकल्पंचकृत्वोपरिनिर्दिष्टवदन्नप्राशनसंकल्पंचकृत्वाक्रमेणप्रयोगत्रयंकार्यमितिविशेषः ॥ ॥ छ ॥

## ॥ १२४ ॥ अथवर्धापनविधिः ॥

श्रीः॥यजमानःआचम्यप्राणानायम्यदेशकालौस्मृत्वाममं (सूनोर्वा)अब्दपूर्तिजन्मदिवसेआयुरभिवृद्धिद्वाराश्रीपरमेश्वरप्रीत्य र्थंदूर्वाहोमंकरिष्ये॥ इतिसंकल्प्यविधिवदग्निं (बलवर्धननामकं) प्रतिष्ठाप्यपुनर्देशकालौसंकीर्त्यसमिधावादायाऽस्मिन्दूर्वाहो मेदेवतापरिग्रहेत्यादिचक्षुषीआज्येनेत्यंतमुक्त्वाप्रधानदेवतांमृत्युंजयमष्टोत्तरशतदूर्वाद्रव्येणशेषेणस्विष्टकृतमित्याद्याज्यभा गांतंकृत्वादधिमधुघृताक्तंकेवलाज्याक्तंवादूर्वात्रयंत्रयं॥ त्र्यंबकमित्यस्यवसिष्ठोमृत्युंजयरुद्र्यंबकोनुष्टुप् ॥ दूर्वाहोमेविनि० ॥ ॐ हौंजूंसः ॐ भूर्भुवःस्वः ॥ त्र्यंबकंयजामहेसुगंधिंपुष्टिवर्धनं ॥ उर्वारुकमिवबंधनान्मृत्योर्मुक्षीयमामृतात् ॥ ॐ स्वः भुवःभूः ॐ सःजूंहौं ॐ ॥ इत्यनेनमंत्रेणाष्टोत्तरशतंहुत्वास्विष्टकृदादिहोमशेषंसमापयेत् ॥ ततोविधिवद्ग्रहयज्ञंकृत्वाआयुष्यचरुहोमंसं

१ तस्मिन्कालेस्थापयेत्तत्परस्ताद्वस्त्रंशस्त्रंपुस्तकंलेखनींच ॥ स्वर्णंरौप्यंयश्चगृह्णातिबालस्तैराजीवंतस्यवृत्तिःप्रदिष्टा ॥ इतिमुहूर्तचिंतामणिः ॥

कल्पपूर्वकंकुर्यात् ॥ तत्रायंक्रमः ॥ देशकालौसंकीर्त्यआयुरभिवृद्धिद्वाराश्रीपरमेश्वरप्रीत्यर्थंआयुष्यचरुहोमंकरिष्ये ॥ इतिसं
कल्प्यस्थंडिलेबलवर्धननामानमग्निंप्रतिष्ठाप्य ॥ आयुष्यचरुहोमेदेवतापरिग्रहार्थमित्यादि चक्षुषीआज्येनेत्यंतमुक्त्वाविश्वान्दे
वान्दशवारमग्निंषोडचवारंजातवेदसमग्निमेकवारंचरुद्रव्येणशेषेणेत्याद्याज्यभागांतंकृत्वा ॥ आनोभद्राइतिदशर्चस्यसूक्तस्य
गौतमोविश्वेदेवाआद्याःपंचसप्तमीचजगत्यःषष्ठीविराट्स्थानाअष्टम्याद्यास्तिस्रस्त्रिष्टुभः॥ इमंस्तोममित्यस्यषोडशर्चस्यांगिरसः
कुत्सोग्निरादितश्चतुर्दशजगत्यःअंत्येद्वेत्रिष्टुभौ ॥ पूर्वोदेवाभवत्वित्यादित्रयःपादादेवदेवत्याः ॥ तन्नोमित्रोर्धर्चोलिंगोक्तदेवतो
ग्निदेवतश्च ॥ जातवेदसइत्यस्यमारीचःकश्यपोजातवेदाअग्निस्त्रिष्टुप् ॥ सर्वेषांचरुहोमेविनियोगः ॥ ॐ आनोभद्राःक्रतवो०
दिवेदिवेस्वाहा ॥ विश्वेभ्योदेवेभ्यइदंनमम ॥ एवंऋक् १० प्रत्यृचंत्यागः ॥ ॐ इमंस्तोममर्हते० वयंतवस्वाहा ॥ अग्नयइदं
नमम ॥ इति १६ ऋ० हुत्वा ॥ ॐ जातवेदसेसुनवाम० ग्निःस्वाहा ॥ जातवेदसेग्नयइदंनमम ॥ एतैःसप्तविंशतिमंत्रैरवदान
धर्मेणहुत्वास्विष्टकृदादिहोमशेषंसमाप्य ॥ वासुदेवं नक्षत्रदेवतां चंद्रं स्वनक्षत्रं वरुणंचषोडशोपचारैरभ्यर्च्यतत्प्रकाशकमंत्रै
र्घृतेनतेभ्योयथाशक्तिहोमंकृत्वा ग्रहयज्ञोक्तविधिनाभिषिक्तोयथाशक्तिगोभूहिरण्यादिदत्वादेवगुरुब्राह्मणसुहृद्बंधुजनपूजांस्व
वाहनायुधपीठछत्रपूजांकृत्वाविधिवन्नांदीश्राद्धंचकृत्वाब्राह्मणान्भोजयित्वा शुभमुहूर्तेगंधादिभिरलंकृत्यस्रग्भूषणधारणपूर्वकं
सुवर्णमयकटिसूत्रंनूतनवस्त्रंचधृत्वा पतिपुत्रवतीभिःस्त्रीभिर्नीराजितोब्राह्मणाशिषोगृहीत्वास्वयंहविष्याशीजितेंद्रियोवर्तेते
ति ॥ इदंसर्वंयावद्बाल्यंपित्रादिभिःकार्यम् ॥ पश्चात्तुप्रतिवर्षंस्वयमेवेति ॥ इत्यब्दपूर्तिविधिः ॥ अन्यत्रतु ॥ वर्षपर्यंतंप्रति
मासंततःप्रतिवर्षंमांगल्यस्नानंकृत्वाकुमुदादिदेवताःसंपूज्ययथाशक्तिब्राह्मणभोजनंदक्षिणांचदत्वा सुवासिनीभिर्नीराजितोभू

तमूतनवस्त्रोब्राह्मणेभ्यःशिशुभ्यश्चापूपपूरिकाःसाज्याःकुमुदादिप्रीतये आयुर्वृद्धयेचवायनानिदद्यात् ॥ जन्मर्क्षदेवताप्रीत्यैच दद्यात् ॥ वर्षांतेतुसुदृढद्वादशवंशपेटिकासुमोदकादिखाद्यंनिधायनूतनवस्त्राच्छादिताःपेटिकाजीवत्पतिपुत्राभ्योदत्वातदाशि षोगृह्णीयात् ॥ इदंसर्वंजीवंतीमातैवापत्यायुषेकुर्यात् ॥ ग्रंथांतरेतु ॥ गणेशब्रह्मानिष्टदेवतांमार्कंडेयंचप्रपूज्यप्रार्थयेत् ॥ चिर जीवीयथात्वंभोभविष्यामितथामुने ॥ रूपवान्वित्तवांश्चैवश्रियायुक्तश्चसर्वदा ॥ मार्कंडेयनमस्तेस्तुसप्तकल्पांतजीवन ॥ आ युरारोग्यसिद्ध्यर्थंप्रसीदभगवन्मुने ॥ चिरजीवीयथात्वंतुमुनीनांप्रवरद्विज ॥ कुरुत्वंमुनिशार्दूलतथामांचिरजीविनं ॥ मार्कं डेयमहाभागसप्तकल्पांतजीवन ॥ आयुरारोग्यसिद्ध्यर्थमस्माकंवरदोभव ॥ ततःसतिलंगुडसंमिश्रमंजल्यर्धमितंपयः ॥ मा र्कंडेयाद्वरंलब्ध्वापिबाम्यायुर्विवृद्धये ॥ इतिसतिलगुडमंजल्यर्धमितंदुग्धंपिबेत् ॥ अश्वत्थामाबलिर्व्यासोहनूमांश्चविभी षणः ॥ कृपःपरशुरामश्चसप्तैतेचिरजीविनः ॥ सप्तैतान्यःस्मरेन्नित्यंमार्कंडेयमथाष्टमं ॥ जीवेद्वर्षशतंसाग्रंसर्वव्याधिविवर्जि तः ॥ इतिवचनादश्वत्थामादीन्मार्कंडेयांतानष्टौस्मरेदिति ॥ इदंचवर्धापनंयदिजन्ममासोऽसंक्रांतस्तदाशुद्धमासएवकार्यंन त्वधिके ॥ विशेषशास्त्रार्थःकौस्तुभाद्याकरेभ्योवगंतव्यः ॥ इतिवर्धापनविधिः ॥ ॥ छ ॥ ॥ छ ॥

## ॥ १२५ ॥ अथचूडाकर्मप्रयोगः ॥

श्रीः ॥ यजमानःकृतमंगलस्नानंकुमारमलंकृत्यस्वदक्षिणस्थितमात्रंकेउपवेश्यदेशकालौस्मृत्वाअस्यकुमारस्यबीजगर्भसमुद्भवै नोनिबर्हणेनबलायुर्वर्चोभिवृद्धिद्वाराश्रीपरमेश्वरप्रीत्यर्थंचौलाख्यंकर्मकरिष्ये ॥ तदंगतयागणपतिपूजनपुण्याहवाचनमातृका पूजननांदीश्राद्धानिकरिष्येइतिसंकल्प्यतानिकृत्वा ॥ चौलहोमंकर्तुंस्थंडिलादिकर्मकरिष्येइत्यादिसभ्यनामाग्निप्रतिष्ठांतंकृत्वा

पुनर्देशकालौनिर्दिश्यक्रियमाणेचौलकर्महोमेदेवतापरिग्रहार्थमन्वाधानंकरिष्ये ॥ अस्मिन्नन्वाहितेग्नावित्याद्याघारावाज्येनेत्यं
तमुक्त्वा ॥ त्रिरग्निंपवमानंप्रजापतिंचैताःप्रधानदेवताआज्येनशेषेणस्विष्टकृतमित्याद्युक्त्वासमिद्द्वयमग्नावाधायपूर्णपात्रनिधा
नांतंषट्पात्रप्रयोगादितंत्रंकृत्वाग्नेरुदगास्तीर्णेषुदर्भेषुव्रीहियवमापतिलैः पृथक्पृथक्पूरितानिनवशरावाणिचत्वारिक्रमेणैकैक
शःप्राक्संस्थान्यासादयेत्॥माताप्रत्यगग्नेरासीनस्यकर्तुर्दक्षिणतःकुमारमुत्संगेकृत्वासीत ॥ततःकर्तामातुःपुरस्तात्पश्चाच्चाग्नेरान
डुहगोमययुतंशरावंशमीपर्णयुतंशरावंचनिदध्यात् ॥ ततोब्रह्माएकविंशतिकुशपिंजूलान्यादायमातुर्दक्षिणतस्तिष्ठेत् ॥ पिता
वातथातिष्ठेत् ॥ अस्मिन्पक्षेऽन्यएवचौलकर्ता ॥ ततःकुमारेणान्वारब्धःकर्ताआघारांतंकर्मकृत्वा ॥ अग्नआयूंषीतितिसृणां
शतंवैखानसाऋषयः ॥ अग्निःपवमानोदेवता ॥ गायत्रीछंदः ॥ चूडाकर्मप्रधानाज्यहोमेविनियोगः ॥ ॐ अग्नआयूंषिपवसआ
सुवोर्जमिषंचनः ॥ आरेबाधस्वदुच्छुनांस्वाहा ॥ अग्नयेपवमानायेदंनममेतित्यागः ॥ एवमग्रेपि ॥ ॐ अग्निर्ऋषिःपवमानः
पांचजन्यःपुरोहितः ॥ तमीमहेमहागयंस्वाहा ॥ अग्नयेपवमानायेदंनमम ॥ ॐ अग्नेपवस्वस्वपाअस्मेवर्चःसुवीर्यं ॥ दधद्रयिं
मयिपोषंस्वाहा ॥ अग्नयेपवमानायेदंनमम॥ ३ ॥ प्रजापतेहिरण्यगर्भःप्रजापतिस्त्रिष्टुप् ॥ चूडाकर्मप्रधानाज्यहोमेविनियोगः ॥
ॐ प्रजापतेन० ॥ प्रजापतयइदं० ॥ ४ ॥ ततःशीतमुष्णंचोभेजलेदक्षिणवामकराभ्यांक्रमेणपात्रयोःपृथग्गृहीत्वाशिशोःपश्चि
मदेशेस्थित्वातदुदकद्वयमन्यस्मिन्पात्रेपाणिभ्यां ॥ ॐ उष्णेनवायउदकेनेहीतिमंत्रेणयुगपन्निनीय तदेकदेशंगृहीत्वानवनीते
नदधिद्रप्सेनवामिश्रयित्वाकुमारस्यवामकर्णमारभ्यप्रदक्षिणं ॥ ॐअदितिःकेशान्वपत्वापउंदंतुवर्चसे इतिमंत्रावृत्त्याशिरस्त्रि
वारंक्लेदयेत् ॥ ततोब्रह्माहस्तस्थितैकविंशतिकुशपिंजूलमध्येत्रीणिकुशपिंजूलान्यादाय ॥ ॐ ओषधेत्रायस्वैनं इतिकुमाराभि

मुखंपश्चिमाग्राणितस्यदक्षिणेकेशभागेनिधाय ॥ ॐ स्वधितेमैनंहिंसीःइतितेषुताम्रमयंक्षुरंनिधाय ॥ ॐ येनावपत्सविताक्षुरेण सोमस्यराज्ञोवरुणस्यविद्वान् ॥ तेनब्रह्माणोवपतेदमस्यायुष्मान्जरदष्टिर्यथासत् ॥ इतिमंत्रेणसकेशानिकुशपिंजूलानिछित्वाप्रा गग्राणिकृत्वाशरावस्थशमीपर्णैरेकीकृत्यमातुःकरेदद्यात् ॥ साचतानिसकेशान्यानडुहेगोमयेप्रागग्राणिनिदध्यात् ॥ एवंद्विती यादिछेदनेषुकुशपिंजूलनिधानादिसमंत्रकंकार्यम् ॥ छेदनमंत्रेतुविशेषः ॥ ॐ येनधाताबृहस्पतेरग्नेरिंद्रस्यचायुषेवपत् ॥ तेनत आयुषेवपामिसुश्लोक्यायस्वस्तये ॥ इतिद्वितीये ॥ ॐ येनभूयश्चरात्र्यांज्योक्पश्यातिसूर्यं ॥ तेनतआयुषे० यइतितृतीये ॥ चतुर्थेतु येनावपत्० येनधाता० येनभूयश्चेतित्रयोपिमंत्राः ॥ एवमेवोत्तरेभागेपिआद्यानित्रीणिछेदनानिकुर्यात् ॥ नतुसर्वमं त्रैश्चतुर्थं ॥ ततः ॥ ॐ यत्क्षुरेणमर्चयतासुपेशसावप्तावपसिकेशान् ॥ शुंधिशिरोमास्यायुःप्रमोषीः ॥ इतिमंत्रेणाग्रतआरभ्या मूलंक्षुरधारांनिमृज्यनापितमाहूय शीतोष्णाभिरद्भिरबर्थंकुर्वाणोऽक्षण्वन्कुशलीकुरु इतिप्रैषेणानुशास्यतंप्रैषार्थंचावबोध्य नापितेनपूर्वावशेषितशीतोष्णांबुभिरार्द्रीकृतंकुमारशिरोयथाकुलाचारंकल्पितशिखंवापयित्वाकुमारंस्नापयित्वाभूषयित्वापूर्व वन्मातुरुत्संगेऽवस्थाप्य स्विष्टकृदादिहोमशेषंसमाप्य व्रीह्यादिपूर्णशरावचतुष्टयंनापितायदद्यात् ॥ भूयसींदक्षिणांदत्वाब्राह्म णेभ्योदशसंख्याकेभ्योभोजनंचसंकल्प्यकर्मसंपूर्णतांवाचयित्वा यस्यस्मृत्येत्युक्त्वाविष्णुंनमस्कृत्याशिषोब्राह्मणोक्ताःस्वयंकु मारश्चगृह्णीयात् ॥ एतत्सर्वंकुमार्याअप्यमंत्रकं ॥ होमस्तुसमंत्रकः ॥ इतिचूडाकर्मप्रयोगः ॥ ॥ छ ॥ ॥ छ ॥

## ॥ १२८ ॥ अथाक्षरारंभविधिः ॥

श्रीः ॥ पंचमेवर्षेबालःसुस्नातोधृतनूतनवस्त्राभरणमंगलतिलकःआचम्य इष्टदेवतांपित्रादींश्चनमस्कृत्यदेशकालौसंकीर्त्यमम

शुमतिवर्धनपूर्वकंविद्यावाप्तयेऽक्षरारंभंकरिष्ये ॥ आदौनिर्विघ्नतासिद्ध्यर्थंगणपतिपूजनंएतत्प्रधानदेवतापूजनंचकरिष्ये इति संकल्प्य गणपतिंसंपूज्यप्रार्थयेत् ॥ ततःस्वस्तिकासने गणेशं हरिं लक्ष्मीं सरस्वतीं सूत्रकारान् स्वविद्यांच पूगीफलेष्वक्षतपुंजेषुवातत्तन्नाममंत्रैरावाह्यपूजयेत् ॥ सरस्वतीपूजनेतुविशेषः ॥ शुचौसमेदेशेगोचर्ममात्रमुपलिप्यसैकतंस्थलंकृत्वापलाशशाखयामृदंखनित्वातस्यांसरस्वतीमावाहयेत् ॥ तत्रमंत्रः ॥ ॐ भुवनमातःसर्ववाङ्मयरूपेइहागच्छइत्यावाह्य प्रणवेनार्घ्यपाद्याचमनीयगंधपुष्पाक्षतधूपदीपपायसगुडौदननैवेद्यसमर्पणनमस्कारान्कृत्वाचार्यंशक्तितोवस्त्रालंकारादिभिः पूजयित्वासरस्वतीविघ्नेशाचार्यांस्त्रिःप्रदक्षिणीकृत्यप्रणवपूर्वकमक्षरमारभेत ॥ तत्रगुरुणादर्शितक्रमेण ॐ नमःसिद्धं इतिमातृकावर्णांलिखित्वासंपूज्यआचार्याभिवंदनंकृत्वासरस्वत्यादीनावाहनक्रमेणोद्वासयेत् ॥ विष्णुधर्मोत्तरेधात्रीपूजनमत्राधिकं ॥ इतिप्रथमाक्षरारंभविधिः ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥

## ॥ १२७ ॥ अथविनायकशांतिः ॥

श्रीः ॥ उक्तकालेपवित्रपाणिरधिकारीप्राणानायम्यदेशकालौसंकीर्त्यास्यकुमारस्योपनयनकर्मणोनिर्विघ्नफलसिद्ध्यर्थंअमुककामनासिद्ध्यर्थंवाविनायकशांतिंकरिष्यइतिसंकल्प्य ॥ तदंगत्वेनगणेशपूजनादिनांदीश्राद्धांतंकृत्वाचार्यंवृत्वाचतुरोऽष्टौवाऋत्विजोवृत्वायथाविभवंसंपूज्यप्रार्थयेत् ॥ ततआचार्योपिपवित्रपाणिःप्राणानायम्यदेशकालौसंकीर्त्याचार्यकर्मकरिष्यइति संकल्प्य यदत्रसंस्थितमितिसर्षपान्विकीर्यशुचीवइत्यद्भिर्भुवंप्रोक्ष्यस्वस्त्ययनंतार्क्ष्यमितिमंत्रद्वयेनप्रार्थ्य प्रतिमाद्वयस्याग्न्युत्तारणंकृत्वामध्यदेशेशुचौसुलिप्तेस्थंडिलेपंचवर्णैःपिष्टैःस्वस्तिकंकृत्वातस्मिन्प्राचीग्रीवमुत्तरलोमानडुहंरक्तमरक्तंवाचर्मास्तीर्य त

त्रश्रीपर्णीपीठंनिधायतच्छ्वेतवाससाच्छाद्य पूर्वादिक्रमेणचतसृषुदिक्षुस्वस्तिकानिकृत्वातेष्विमान्पदार्थान्क्रमेणकांडानुसमये
नकुर्यात् ॥ महीद्यौरितिभुवंस्पृष्ट्वा ओषधयःसमितिधान्यंनिक्षिप्य आकलशेष्वितिएकरूपमव्रणंकलशंनिधाय इमंमेगंगेइतिसं
गमोदकेनह्रदोदकेनवापूर्य ॥ उद्धृतासिवराहेणकृष्णेनशतबाहुना ॥ मृत्तिकेहनमेपापंयन्मयादुष्कृतंकृतमिति अश्वस्थानग
जस्थानवल्मीकसंगमह्रदमृदोनिक्षिप्य गंधद्वारामितिचंदनागुरुकेशरकस्तूरीकर्पूरगोरोचनानिनिःक्षिप्यचूर्णांगुग्गुलंचनिक्षि
प्य ॥ याओषधीरितिसर्वौषधीः ओषधयःसमितियवान् कांडात्कांडादितिदूर्वाः अश्वत्थेवइतिपंचपल्लवान् याःफलिनीरिति
फलम् सहिरत्नानीतिपंचरत्नानि हिरण्यरूपइतिहिरण्यं युवासुवासाइतिवस्त्रेणावेष्ट्यचंदनमाल्यभूषितंकृत्वापूर्णादर्वीतिपूर्ण
पात्रंनिधाय ॥ कलशस्यमुखेविष्णुः० ॥ यजमानस्यदुरितक्षयकारकाः ॥ देवदानवसंवादेमथ्यमानइतिचपठेत् ॥ दक्षिणप
श्चिमोत्तरकलशेष्वित्यंतेकर्मण्याचार्येणकृतेचत्वारऋत्विजःपवित्रपाणयः आचम्यप्राङ्मुखास्तत्त्वायामीतिवरुणमावाह्यषोड
शोपचारैरभ्यर्च्य ॥ पूर्वकलशेश्रीसूक्तं दक्षिणेमहित्रीणां पश्चिमकलशेनहितेक्षत्रं उत्तरकलशेवामदेव्यं आनोभद्राइतिबह्वृ
चाः ॥ शंनोवातःपवतामितितैत्तिरीयाःपठेयुः ॥ तदैवाचार्योभद्रासनप्राग्देशेहोमार्थंस्थंडिलंकृत्वातदीशान्यांवेद्यांपीठेवाव
स्त्रादौप्रतिमाद्वयेविनायकांबिकयोरावाहनादिभिर्नैवेद्यांतैरुपचारैःपूजांकुर्यात् ॥ तत्रमंत्रौ ॥ ॐ तत्पुरुषायविद्महेवक्रतुंडाय
धीमहि ॥ तन्नोदंतिःप्रचोदयात् ॥ ॐ सुभगायैविद्महेकाममालिन्यैधीमहि ॥ तन्नोगौरीप्रचोदयात् ॥ अपरार्केहेमाद्रिमते
प्रतिमयोःपरितोयथावकाशंप्रतिमास्वक्षतपुंजेषुवानमोंतैर्नाममंत्रैरन्यादेवताआवाह्यषोडशोपचारैःपूजयेत् ॥ तत्रमंत्राः ॥

व्योमकेशायनमः ॥ पार्वत्यैनमः ॥ भीमजाय० ॥ कृष्णस्यपित्रे० ॥ अर्काय० ॥ आराय० ॥ सिताय० ॥ धिषणाय० ॥ क्लेदपुत्राय० ॥ कोणाय० ॥ लक्ष्मवते० ॥ विधुंतुदाय० ॥ केतवे० ॥ बाहुलेयाय० ॥ नंदकस्यधारिणे० इति ॥ १५ ॥ ततोहोमार्थस्थंडिलेयजमानगृह्योक्तविधिनाऽग्निंप्रतिष्ठाप्यान्वादध्यात् ॥ तत्रचक्षुषीआज्येनेत्यंतेऽत्रप्रधानं ॥ मितंसंमितं शालंकटंकटंकूष्मांडंराजपुत्रंव्योमकेशंपार्वतींभीमजंकृष्णस्यपितरंअर्कंआरंसितंधिषणंक्लेदपुत्रंकोणंलक्ष्मवंतंविधुंतुदंकेतुंबाहु लेयंनंदकस्यधारिणंएताःएकैकयाचर्वाहुत्याशेषेणेत्यादि ॥ निर्वापकालेमितायत्वेत्यादिभिरेकविंशतिमंत्रैःप्रत्येकंचतुरावृत्तै श्चतुरशीतिवारंनिरुप्यतथैवप्रोक्ष्यबर्हिष्यासादनांतंकृत्वागव्याज्यलोलीकृतेनसिद्धार्थपिष्टेनोद्वर्तितांगस्यसर्वौषधैःसर्वगंधैश्च विलिप्तशिरसोयजमानस्य मंगलवेदघोषेणवस्त्राच्छादितोक्तपीठात्मकभद्रासनोपर्याचार्येणोपवेशनंकार्यं ॥ भद्रासनमुपविष्टो यजमानःऋत्विग्भिर्गृह्योक्तविधिनास्वस्तिवाचनंकुर्यात् ॥ तत्रजीवत्पतिपुत्राभिःसुवेषाभिःस्त्रीभिर्नीराजितस्ताभ्यःसकंचुका निवस्त्राणिदद्यात्शिष्टाचारात् ॥ ततआचार्योयजमानंदक्षिणतउदङ्मुखस्तिष्ठन्ऋत्विग्दत्तपूर्वादिकुंभत्रयेणक्रमेणैकैकमंत्रेण स्नापयेत् ॥ सहस्राक्षंशतधारमृषिभिःपावनंकृतं ॥ तेनत्वामभिषिंचामिपावमान्यःपुनंतुते ॥ भगंतेवरुणोराजाभगंसूर्योबृह स्पतिः ॥ भगमिंद्रश्चवायुश्चभगंसप्तर्षयोददुः ॥ यत्तेकेशेषुदौर्भाग्यंसीमंतेयच्चमूर्धनि ॥ ललाटेकर्णयोरक्ष्णोरापस्तद्घ्नंतुसर्व

---

१ अत्रव्योमकेशादिपंचदशनामस्थाने व्योमकेशंपार्वतींभीमजंवसुदेवंसूर्यंभौमंशुक्रंगुरुंबुधंशनिंचंद्रंराहुंकेतुंस्कंदंश्रीकृष्णमितितत्तन्नाम्नाप्रयोगः शांतिरत्नेकृतोस्ति ॥ २ सर्वौषधानिछंदोगपरिशिष्टे ॥ कुष्ठंमांसीहरिद्रेद्वेमुराशैलेयचंदने ॥ वचाचंपकमुस्ताचसर्वौषध्योदशस्मृताः ॥ सर्वगंधामदन रत्ने ॥ कुंकुमागरुकर्पूरकस्तूरीचंदनंतथा ॥ जातीफलमितिप्रोक्ताःसर्वगंधाःसदाबुधैः ॥ इति ॥

दा ॥ ततश्चतुर्भिर्मिलितैःकलशैर्ऋत्विग्धृतैर्बृहत्पराशरोक्तैर्मंत्रैरभिषेकंकारयेत् ॥ मंत्रान्स्वयंपठेदाचार्यः ॥ एतद्वैपावनंस्नानं सहस्राक्षमृषिस्मृतम् ॥ तेनत्वाशतधारेणपावमान्यःपुनंत्विमाः ॥ शक्रादिदशदिक्पालाब्रह्मेशाःकेशवादयः ॥ आपस्तेघ्नंतु दौर्भाग्यंशांतिंददतुसर्वदा ॥ सुमित्र्यानआपओषधयःसंतुदुर्मित्र्यास्तस्मैसंतुयोस्मान्द्वेष्टियंचवयंद्विष्मः ॥ समुद्रागिरयोन द्योमुनयश्चपतिव्रताः ॥ दौर्भाग्यंघ्नंतुतेसर्वेशांतिंयच्छंतुसर्वदा ॥ पादगुल्फोरुजंघास्यनितंबोदरनाभिषु ॥ स्तनोरोबाहुहस्ता ग्रग्रीवास्कंधांगसंधिषु ॥ नासाललाटकर्णभ्रूकेशांतेषुचयत्स्थितम् ॥ तदापोघ्नंतुदौर्भाग्यंशांतिंयच्छंतुसर्वदा ॥ इति ॥ तत आचार्यःप्राङ्मुखोयजमानस्यपश्चात्तिष्ठन्सव्यपाणिनागृहीतकुशत्रयांतर्हितेयजमानमूर्धनिऔदुंबरेणस्रुवेणसार्षपंतैलंजुहुयात् ॥ॐ मितायस्वाहा ॥ ॐ संमितायस्वाहा ॥ ॐ शालाय० ॥ ॐ कटंकटाय० ॥ ॐ कूष्मांडाय० ॥ ॐ राजपुत्रायस्वाहे ति ॥ यथामंत्रलिंगंत्यागंयजमानः ॥ शालकटंकटकूष्मांडराजपुत्रायेतिसमासांगीकारेणआहुतिचतुष्टयमित्यपरार्कः ॥ तत इध्माधानादिकृत्वापूर्वोक्तैःषड्भिर्मंत्रैरग्नावग्दानधर्मेणचरुहोमः व्योमकेशायस्वाहेत्येवंपंचदशाहुतयश्च ॥ ततःस्विष्टकृदादि प्रायश्चित्तहोमांतंकृत्वाचरुशेषेणाभिषेकशालायांलोकपालेभ्योबलीन्दद्यात् ॥ इंद्रायनमइत्यादिईशानांतमित्यष्टदिक्षु ॥ ब्रह्म णेनमः अनंतायनमःइतिईशानपूर्वयोर्मध्येबलिद्वयं ॥ अथयजमानःसुस्नातःशुक्लगंधानुलेपनमाल्यांबरधरआचार्यसहितआ स्तीर्णकुशेषुशूर्पेनिहितमुपहारंविनायकगायत्र्याविनायकायैतमुपहारंनिवेदयामीत्यंतयाविनायकायनिवेदयेत् ॥ सक्तुदवहता स्तंडुलाः, तिलपिष्टमिश्रौदनः, पक्वमत्स्याः २ अपक्वाः २ माषविकारास्तदाकारावा, पक्वमपक्वंचमांसंतादृशमाषविकारौ वा, चित्रंसुगंधिपुष्पं, चंदनादिसुगंधिद्रव्यं, त्रिविधासुरा गुडमधुपिष्टमिश्राणिसर्सैधवानिपात्रत्रयस्थितानिक्षीराणिवा,

मूलकं २, पूरिकाः २, अपूपाः २, उंडेरकस्रजः २, ( उंडेरकाः क्षुद्रापूपाः ) दध्योदनः, पायसं, गुडमिश्रितंतंडुलादि पिष्टं, लड्डुकाः २, इत्युपहाराः ॥ ईदृशमेवोपहारमंबिकागायत्र्यांबिकायैएतमुपहारंनिवेदयामीत्यंतयांबिकायैनिवेदयेत् ॥ ततआचमनफलतांबूलदक्षिणानीराजनपुष्पांजलिभिरभ्यर्च्यशिरसाभूमिंगत्वोक्तगायत्रीभ्यांविनायकमंबिकांचनमस्कुर्यात् ॥ गंधपुष्पदूर्वासर्षपयुतेनकुसुममात्रयुतेनवोदकेनांजलिमापूर्यपूर्वोक्तगायत्रीभ्यांप्रत्येकंपृथगर्घ्यंदत्वादूर्वासर्षपपुष्पपूर्णांजलीता भ्यांदत्वाविनायकमुपतिष्ठेत ॥ रूपंदेहियशोदेहिभगंभगवन्देहिमे ॥ पुत्रान्देहिधनंदेहिसर्वान्कामांश्चदेहिमे ॥ इति॥ ततोरूपं देहियशोदेहिभगंभगवतिदेहिमे० इतियथापाठमंत्रेणांबिकामुपतिष्ठेतेतिमहार्णवः ॥ बृहत्पाराशरेणोपस्थानेमंत्रांतरमुक्तम् ॥ सौभाग्यमंबिकेदेहिभगंरूपंयशोपिच ॥ स्त्रियंपुत्रांश्चकामांश्चतथाशौर्यंचदेहिमे ॥ गणेशमातरंबालेयत्किंचिन्मदभीप्सितम्॥ एकनाम्नैवतद्देविदेहिगौरिवरान्ममेति ॥ ततआस्तीर्णकुशेषुशूर्पेसर्वप्रकारमुपहारशेषंनिधायचतुष्पथभुवमुपलिप्यतत्रगुरुःशू र्पेनिदध्यात्॥ यजमानःप्रक्षालितपादआचांतोमंत्रोक्तदेवताभ्योबलिंदद्यात्॥ मंत्राः॥बलिंगृह्णंत्विमंदेवाआदित्यावसवस्तथा॥ मरुतश्चाश्विनौरुद्राःसुपर्णाःपन्नगाग्रहाः ॥ असुरायातुधानाश्चपिशाचामातरोरगाः ॥ शाकिन्योयक्षवेतालायोगिन्यःपूतनाः शिवाः ॥ जृंभकाःसिद्धगंधर्वानागाविद्याधरानगाः॥दिक्पालालोकपालाश्चयेचविघ्नविनायकाः ॥ जगतांशांतिकर्तारोब्रह्माद्या श्चमहर्षयः॥ माविघ्नंमाचमेपापंमासंतुपरिपंथिनः ॥ सौम्याभवंतुतृप्ताश्चभूतप्रेताःसुखावहाः ॥ इति॥ ततोयजमानोगृहमागत्य क्षालितपादआचम्यपूर्णाहुतिंहुत्वाआचार्यसंपूज्यसदक्षिणंवस्त्रयुग्मंतस्मैदद्यादृत्विग्भ्योयथाशक्तिहेमदक्षिणांदत्वाऽन्येभ्यश्च भूयसींदद्यात्॥ स्थापितदेवतानामुत्तरपूजाविसर्जनपूर्वकमाचार्यायसमर्पणंविधायपरिस्तरणविसर्जनादि विभूतिधारणांतंकु

त्वागच्छगच्छेत्यग्निंविसृज्यदशावरान्ब्राह्मणान्भोजयेदीश्वरार्पणंकुर्यात् ॥ विवाहाद्यारंभेविवाहकर्मणोनिर्विघ्नतासिद्ध्यर्थमिति ॥ उपसर्गनिवृत्तिकामःश्रीकामइतिवातत्तत्प्रसंगानुरोधेनसंकल्पवाक्योहः॥ इतिवैनायकीशांतिः ॥ ॥ ७ ॥

## ॥ १२८ ॥ अथकूष्मांडहोमः ॥

श्रीः॥यजमानःआचम्यप्राणानायम्यदेशकालौसंकीर्त्यममास्यकुमारस्यकरिष्यमाणउपनयने कन्यायाविवाहेवामंगलारंभात्पूर्वमध्येवाउपस्थितसूतकनिवृत्तिपूर्वकंशरीरशुद्ध्याप्राप्तकर्मण्यधिकारसिद्धिद्वाराश्रीपरमेश्वरप्रीत्यर्थंजमदग्निप्रोक्तंकूष्मांडहोमं करिष्ये ॥ तदंगंगणपतिपूजनादिकरिष्ये ॥ इतिसंकल्प्यकृत्वाचार्यंवृत्वाआचार्यस्तुयथास्वर्गेइत्यादिसंप्रार्थयेत् ॥ अथाचार्यआचम्यप्राणानायम्यदेशकालादिनिर्दिश्ययजमानेनकूष्मांडहोमकर्मणिवृतोहमाचार्यकर्मकरिष्येइतिसंकल्प्य आसनस्थलशुद्धिसर्षपविकिरणांतंकृत्वा ॥ तदंगहोमंकर्तुंस्थंडिलादिसकलंकर्मकरिष्यइतिसंकल्प्य ॥ स्थंडिलसंस्कारंकृत्वापावकनामानमग्निंप्रतिष्ठाप्यचत्वारिशृंगेत्यादिभिर्ध्यात्वान्वादध्यात् ॥ समिद्द्वयमादायक्रियमाणेकूष्मांडहोमेदेवतापरिग्रहार्थमित्यादिचक्षुषीआज्येनेत्यंतमुक्त्वात्रप्रधानं ‘चरुपक्षेसवितारंचरुणायक्ष्येअग्निंस्विष्टकृतंचरुणायक्ष्ये’ देवानादित्यान्। विश्वान्देवान्। द्यावापृथिव्यौसरस्वतींच । इंद्राग्नीमित्रावरुणौसोमंधातारंबृहस्पतिंच । जातवेदसं । अग्निंगार्हपत्यं । ज्योतिः । अग्निं । अग्निंगार्हपत्यं । अग्निं । अग्निंगार्हपत्यंद्विः । अग्निं । अग्निंगार्हपत्यं । अपःशुंधनीः । अपोहिरण्यवर्णाः । वरुणंद्विः । अग्नीवरुणौद्विः । अयासमग्निं । अग्निमिंद्रंच । उग्रंपश्याश्चराष्ट्रभृतमप्सरसौच । उग्रंपश्याश्चराष्ट्रभृतंयमंच । वरुणंचतुः । अग्नी

---

१ आरब्धमांगलिककर्मण्याशौचादिसंपातेसंस्कार्यमातूरजआद्यन्योपघातकप्राप्तौवाप्रसंगानुरोधेनसंकल्पेतत्तदूहः। प्रायश्चित्तीयेस्मिन्नेवहोमेपूर्वक्षौरादि।

वरुणौद्विः । संकुसुकंविकुसुकंनिर्ऋथंनिःस्वनंच । कृत्यांनिर्ऋतिंच । दुःशश्मानुशश्सघणानुघणांश्च । त्वष्टारं । आयुष्टमग्निं । आयुर्दामाग्निं । अग्निंवरुणमदितिंविश्वान्देवांश्च । अग्निंपवमानंत्रिः । अग्निंजातवेदसं । जातवेदसं । अग्निंवृत्रहणं । अग्निं । उषसंनिम्रुचंच । देवान् । जातवेदसमग्निं । अग्निं । ब्रह्माणंद्विः । वैश्वानरं ५१ चैताःप्रधानदेवताआज्येन । 'चरुपक्षे त्विषिंदेवींचतुः । अभ्यावर्तिनमग्निंचतुर्वारमाज्येन । अग्निंवैश्वानरंसमिधायक्ष्ये' ॥ शेषेणस्विष्टकृतमित्यादिप्रणीताप्रणयनांतंकृत्वा 'चरुपक्षेसवित्रेत्वाजुष्टंनिर्वपामीतिप्रोक्षामीतिचनिर्वापप्रोक्षणेकृत्वाज्यसंस्काराद्याज्यभागांतंकृत्वा अवदानधर्मेणचरुमवदायसावित्रींपुरोनुवाक्यामनूच्यसावित्र्यैवयाज्ययास्वाहांतयाजुहुयात् ॥ गायत्र्याविश्वामित्रःसवितागायत्री ॥ चरुहोमेवि० ॥ ॐ तत्सवितुर्वरेण्यंभर्गोदेवस्यधीमहि धियोयोनःप्रचोदयादोंतत्सवितु० प्रचोदयात्स्वाहा ॥ सवित्रइदंनमम॥ ततःस्विष्टकृतमवदायहव्यवाहमितिपुरोनुवाक्यामनूच्यस्विष्टमग्नइतियाज्ययाजुहुयात् ॥ द्वयोरनयोर्विश्वेदेवाऋषयःअग्निःस्विष्टकृद्देवताअनुष्टुप्विराट्छंदसी स्विष्टकृद्धोमेवि० ॥ ॐ हव्यवाहमभिमातिषाहंरक्षोहणंपृतनासुजिष्णुं ॥ ज्योतिष्मंतंदीद्यतंपुरंधिमग्निंश्स्विष्टकृतमाहुवेमोंस्विष्टमग्नेअभितत्पृणाहिविश्वादेवपृतनाअभिष्य ॥ उरुंनःपंथांप्रदिशन्विभाहिज्योतिष्मद्धेह्यजरंनआयुःस्वाहा ॥ अग्नयेस्विष्टकृतइदं ॥' अथप्रधानहोमः ॥ यद्देवाइत्यनुवाकत्रयस्यब्रह्मास्वयंभूर्ऋषिः ॥ देवादयोदेवताः ॥ पंक्त्यादीनिछंदांसि ॥ होमेविनियोगः ॥ ॐ यद्देवादेवहेळनंदेवासश्चकृमावयं ॥ आदित्यास्तस्मान्मामुंचतर्तस्यर्तेनमामितस्वाहा ॥ देवेभ्यआदित्येभ्यइदं० ॥ ॐ देवाजीवनकाम्यायद्वाचानृतमूदिम ॥ तस्मान्नइहमुंचतविश्वेदेवाःसजोषसःस्वाहा ॥ विश्वेभ्योदेवेभ्यइदं० ॥ ॐ ऋतेनद्या० ॥ पृथिवीऋतेनत्वंसरस्वति ॥ कृतान्नःपाह्येनसोयत्किंचानृ

तमूदिम्रस्वाहा ॥ द्यावापृथिवीभ्यांसरस्वत्यैचेदं० ॥ ॐ इंद्राग्नीमित्रावरुणौसोमोधाताबृहस्पतिः ॥ तेनोमुंचंत्वेनसोयदन्य कृतमारिमस्वाहा ॥ इंद्राग्नीमित्रावरुणसोमधातृबृहस्पतिभ्यइदं० ॥ ॐ सजातशंसादुतजामिशंसाज्ज्यायसःशंसादुत वाकनीयसः ॥ अनाधृष्टंदेवकृतंयदेनस्तस्मात्त्वमस्मान्जातवेदोमुमुग्धिस्वाहा ॥ जातवेदसइदं० ॥ ॐ यद्वाचायन्मनसाबाहु भ्यामूरुभ्यामष्ठीवद्भ्यांशिश्नैर्यदनृतंचकृमावयं ॥ अग्निर्मातस्मादेनसोगार्हपत्यःप्रमुंचतुचकृमयानिदुष्कृतास्वाहा ॥ अग्नये गार्हपत्यायेदं० ॥ ॐयेनत्रितोअर्णवान्निर्बभूवयेनसूर्यंतमसोनिर्मुमोच ॥ येनेंद्रोविश्वाअजहादरातीस्तेनाहंज्योतिषाज्योतिरान शानआक्षिस्वाहा ॥ ज्योतिषइदं० ॥ ॐ यत्कुसीदमप्रतीत्तंमयेहयेनयमस्यनिधिनाचरामि ॥ एतत्तदग्नेअनृणोभवामिजीवं न्नेवप्रतितत्तेदधामिस्वाहा ॥ अग्नयइदं०॥ ॐ यन्मयिमातागर्भेसत्येनश्चकरयत्पिता ॥ अग्निर्मातस्मादेनसोगार्हपत्यःप्रमुंचतु दुरितायानिचकृमकरोतुमामनेनसंस्वाहा ॥ अग्नयेगार्हपत्यायेदं० ॥ ॐ यदापिपेषमातरंपितरंपुत्रःप्रमुदितोधयन् ॥ अ हिंसितौपितरौमयातत्तदग्नेअनृणोभवामिस्वाहा ॥ अग्नयइदं० ॥ ॐ यदंतरिक्षंपृथिवीमुतद्यांयन्मातरंपितरंवाजिहिं सिम ॥ अग्निर्मातस्मादेनसोगार्हपत्यःप्रमुंचतुदुरितायानिचकृमकरोतुमामनेनसंस्वाहा ॥ अग्नयेगार्हपत्यायेदं० ॥ ॐ य दाशसानिशसायत्पराशसायदेनश्चकृमानूतनंयत्पुराणं ॥ अग्निर्मा० नेनसंस्वाहा ॥ अग्नयेगार्हपत्याये० ॥ ॐ अतिक्रामा मिदुरितंयदेनोजहामिरिप्रंपरमेसधस्थे ॥ यत्रयंतिसुकृतोनापिदुष्कृतस्तमारोहामिसुकृतांनुलोकंस्वाहा ॥ अग्नय० ॥ ॐ त्रितेदेवाअमृजसैतदेनस्त्रितएतन्मनुष्येषुमामृजे ॥ ततोमायदिकिंचिदानशेग्निर्मातस्मादेनसोगार्हपत्यःप्रमुंचतुदुरितायानि चकृमकरोतुमामनेनसंस्वाहा ॥ अग्नयेगार्हपत्यायेदं० ॥ ॐ दिविजाताअप्सुजातायाजाताओषधीभ्यः ॥ अथोयाअग्नि

जाआपस्तानःशुंधंतुशुंधनीःस्वाहा ॥ अद्भ्यःशुंधमीभ्यइदं० ॥ ॐ यदापोनक्तंदुरितंचरामयद्वादिवानूतनंयत्पुराणं ॥ हिरण्यवर्णास्ततउत्पुनीतनस्वाहा ॥ अद्भ्योहिरण्यवर्णाभ्यइदं० ॥ ॐ इमंमेवरुणश्रुधीहवमद्याचमृडय ॥ त्वामवस्युराचकेस्वाहा ॥ वरुणायेदं० ॥ ॐ तत्त्वायामिब्रह्मणावंदमानस्तदाशास्तेयजमानोहविर्भिः ॥ अहेडमानोवरुणेहबोध्युरुशꣳसमानआयुःप्रमोषीःस्वाहा ॥ वरुणायेदं० ॥ ॐ त्वंनोअग्नेवरुणस्यविद्वान्देवस्यहेडोवयासिसीष्ठाः ॥ यजिष्ठोवह्नितमःशोशुचानोविश्वाद्वेषाꣳसिप्रमुमुग्ध्यस्मत्स्वाहा ॥ अग्नीवरुणाभ्यामिदं० ॥ ॐ सत्वंनोअग्नेवमोभवोतीनेदिष्ठोअस्याउपसोव्युष्टौ ॥ अवयक्ष्वनोवरुणꣳरराणोवीहिमृडीकꣳसुहवोनएधिस्वाहा ॥ अग्नीवरुणाभ्यामिदं० ॥ ॐ त्वमग्नेअयास्ययासन्मनसाहितः ॥ अयासन्हव्यमूहिषेयानोधेहिभेषजꣳस्वाहा ॥ अयासेग्नयइदं० ॥ १ ॥ ॐ यददीव्यंनृणमहंबभूवादित्सन्वासंजगरजनेभ्यः ॥ अग्निर्मातस्मादिंद्रश्चसंविदानौप्रमुंचताꣳस्वाहा ॥ अग्नींद्राभ्यामिदं० ॥ ॐ यद्धस्ताभ्यांचकरकिल्बिषाण्यक्षाणांवग्नुमुपजिघ्नमानः ॥ उग्रंपश्याचराष्ट्रभृच्चतान्यप्सरसावनुदत्तामृणानिस्वाहा ॥ उग्रंपश्यायैराष्ट्रभृतेप्सरोभ्यइदं० ॥ ॐ उग्रंपश्येराष्ट्रभृत्किल्बिषाणियदक्षवृत्तमनुदत्तमेतत् ॥ नेन्नंऋणानृणवइत्समानोयमस्यलोकेअधिरज्जुरायस्वाहा ॥ उग्रंपश्यायैराष्ट्रभृतेयमायचेदं० ॥ ॐ अवतेहेडोवरुणनमोभिरवयज्ञेभिरीमहेहविर्भिः ॥ क्षयन्नस्मभ्यमसुरप्रचेतोराजन्नेनाꣳसिशिश्रथःकृतानिस्वाहा ॥ वरुणायेदं० ॥ ॐ उदुत्तमंवरुणपाशमस्मदवाधमंविमध्यमꣳश्रथाय ॥ अथावयमादित्यव्रतेतवानागसोअदितयेस्यामस्वाहा ॥ वरुणायेदं० ॥ इमंमेवरुणश्रुधी० ॥ वरुणायेदं० ॥ ॐ तत्त्वायामि० ॥ वरुणायेदं० ॥ ॐ त्वंनोअग्नेवरुणस्यविद्वा० ॥ अग्नीवरुणाभ्यामिदं० ॥ ॐ सत्वंनोअग्ने० ॥ अग्नीवरुणाभ्यामिदं० ॥ ॐ संकुसुकोविकुसुकोनिर्ऋथोयश्च

निःस्वनः ॥ तेयेस्वधक्ष्ममनागसोदूराद्दूरमचीचतः स्वाहा ॥ संकुसुकविकुसुकनिर्ऋथनिःस्वनेभ्यइदं० ॥ ॐ निर्यक्ष्ममचीच तेकृत्यांनिर्ऋतिंच ॥ तेनयो१स्मत्समृच्छातैतमस्मैप्रसुवामसिस्वाहा ॥ कृत्यायैनिर्ऋतयेचेदं० ॥ ॐ दुःशुःसानुशुःसाभ्यांघृणेना नुघृणेनच ॥ तेनान्यो१स्मत्समृच्छातैतमस्मैप्रसुवामसिस्वाहा ॥ दुःशःसानुशःसघणानुघणेभ्यइदं० ॥ ॐ संवर्चसापयसा संतनूभिरगन्महिमनसासःशिवेन ॥ त्वष्टानोअत्रविदधातुरायोनुमार्ष्टुतन्वो१यद्विलिष्टःस्वाहा ॥ त्वष्ट्रइदं० ॥ २ ॥ ॐ आयुष्टेविश्वतोदधदयमग्निर्वरेण्यः ॥ पुनस्तेप्राणआयातिपरायक्ष्मःसुवामितेस्वाहा ॥ आयुष्टेग्नयइदं० ॥ ॐ आयुर्दाअग्नेह विषोजुषाणोघृतप्रतीकोघृतयोनिरेधि ॥ घृतंपीत्वामधुचारुगव्यंपितेवपुत्रमभिरक्षतादिमःस्वाहा ॥ आयुर्देग्नयइदं० ॥ ॐ इममग्नआयुषेवर्चसेकृधितिग्ममोजोवरुणसःशिशाधि ॥ मातेवास्माअदितेशर्मयच्छविश्वेदेवाजरदष्टिर्यथासत्स्वाहा ॥ अग्न येवरुणायादितयेविश्वेभ्योदेवेभ्यइदं० ॥ ॐ अग्नआयूःषिपवसआसुवोर्जमिषंचनः ॥ आरेबाधस्वदुच्छुनाःस्वाहा ॥ अग्न येपवमानायेदं० ॥ ॐ अग्नेपवस्वस्वपाअस्मेवर्चःसुवीर्यं ॥ दधद्रयिंमयिपोषःस्वाहा ॥ अग्नयेपवमानायेदं० ॥ ॐ अग्निर्ऋषिः पवमानःपांचजन्यःपुरोहितः ॥ तमीमहेमहागयःस्वाहा ॥ अग्नयेपवमानायेदं० ॥ ॐ अग्नेजातान्प्रणुदानःसपत्नान्प्रत्यजा तान्जातवेदोनुदस्व ॥ अस्मेदीदिहिसुमनाअहेळन्छर्मन्तेस्यामत्रिवरूथउद्भौस्वाहा ॥ अग्नयेजातवेदसइदं० ॥ ॐ सहसाजा तान्प्रणुदानःसपत्नान्प्रत्यजातान्जातवेदोनुदस्व ॥ अधिनोब्रूहिसुमनस्यमानोवयःस्यामप्रणुदानःसपत्नान्स्वाहा ॥ जातवे दसइदं० ॥ ॐ अग्नेयोनोभितोजनोवृकोवारोजिघांःसति ॥ ताःस्त्वंवृत्रहन्जहिवस्वस्मभ्यमाभरस्वाहा ॥ अग्नयेवृत्रघ्नइ दं० ॥ ॐ अग्नेयोनोभिदासतिसमानोयश्चनिष्ट्यः ॥ तंवयःसमिधंकृत्वातुभ्यमग्नेपिदध्मसिस्वाहा ॥ अग्नयइदं० ॥ ॐ यो

नःशपादशपतोयश्चनःशपतःशपात् ॥ उषाश्चतस्मैनिम्रुक्कसर्वंपापꣳसमूहताꣳस्वाहा ॥ उषसेनिम्रुचइदं० ॥ ॐ योनःसपत्नो योरणोमर्तोभिदासतिदेवाः ॥ इध्मस्येवप्रक्षायतोमातस्योच्छेषिकिंचनस्वाहा ॥ देवेभ्यइदं० ॥ योमांद्वेष्टिजातवेदोयंचाहंद्वे ष्मियश्चमां ॥ सर्वाꣳस्तानग्नेसंदहयाꣳश्चाहंद्वेष्मियेचमाꣳस्वाहा ॥ जातवेदसेग्नयइदं० ॥ ॐ योअस्मभ्यमरातीयाद्यश्चनोद्वे षतेजनः ॥ निंदाद्योअस्मान्दिप्साच्चसर्वाꣳस्तान्मष्मषाकुरुस्वाहा ॥ अग्नयइदं० ॥ ॐ सꣳशितंमेब्रह्मसꣳशितंवीर्य१ंबलं ॥ सꣳशितंक्षत्रंमेजिष्णुयस्याहमस्मिपुरोहितःस्वाहा ॥ ब्रह्मणइदं० ॥ ॐ उदेषांबाहूअतिरमुद्वर्चोऽअथोबलं ॥ क्षिणोमिब्रह्म णामित्रानुन्नयामिस्वाꣳअहꣳस्वाहा ॥ ब्रह्मणइदं० ॥ ॐ पुनर्मनःपुनरायुर्मआगात्पुनश्चक्षुःपुनःश्रोत्रंमआगात्पुनःप्राणःपुन राकूतंमआगात्पुनश्चित्तंपुनराधीतंमआगात् ॥ वैश्वानरोमेदब्धस्तनूपाअवबाधतांदुरितानिविश्वास्वाहा ॥ वैश्वानरायेदंनम म ॥ ५१ ॥ इतिप्रधानहोमः ॥ ॐ सिꣳहेव्याघ्रउतयापृदाकौ ॥ त्विषिरग्नौब्राह्मणेसूर्येया ॥ इंद्रंयादेवीसुभगाजजान ॥ सानआगन्वर्चसासंविदानास्वाहा ॥ त्विष्यैदेव्याइदं० ॥ ॐ याराजन्येदुंदुभावायतायां ॥ अश्वस्यक्रंदेपुरुषस्यमायौ ॥ इंद्रंया० सानआगन्व० दानास्वाहा ॥ त्विष्यैदेव्या० ॥ ॐ याहस्तिनिद्वीपिनियाहिरण्ये ॥ त्विषिरश्वेषुपुरुषेषुगोषु ॥ इंद्रं० सान० ॥ त्विष्यै० ॥ ॐ रथेअक्षेषुवृषभस्यवाजे ॥ वातेपर्जन्येवरुणस्यशुष्मे ॥ इंद्रंयादेवीसुभगाजजान ॥ सानआगन्व र्चसासंविदानास्वाहा ॥ त्विष्यैदेव्याइ० ॥ ॐ अग्नेभ्यावर्तिन्नभिनआवर्तस्वायुषावर्चसासन्यामेधयाप्रजयाधनेनस्वाहा ॥ अभ्यावर्तिनेग्नयइदं० ॥ ॐ अग्नेअंगिरःशतंतेसंत्वावृतःसहस्रंतउपावृतः ॥ तासांपोषस्यपोषेणपुनर्नोनष्टमाकृधिपुनर्नोरयि माकृधिस्वाहा ॥ अभ्या० ॥ ॐ पुनरूर्जानिवर्तस्वपुनरग्नइषायुषा ॥ पुनर्नःपाहिविश्वतःस्वाहा ॥ अभ्या० ॥ ॐ सहरय्या

निर्वर्तस्वाग्नेपिन्वस्वधारया ॥ विश्वप्स्नियाविश्वतस्परिस्वाहा ॥ अभ्यावर्तिनेप्रय० ॥ ततउपस्थानं ॥ ॐ वैश्वानरायप्रतिवेद यामोयदीनृणंसंगरोदेवतासु ॥ सएतान्पाशान्प्रमुचन्प्रवेदसनोमुंचातुदुरितादवद्यात् ॥ वैश्वानरःपवयान्नःपवित्रैर्यत्संगरम भिधावाम्याशां ॥ अनाजानन्मनसायाचमानोयदत्रैनोअवतत्सुवामि ॥ अमीयेसुभगेदिविविचृतौनामतारके ॥ प्रे हामृतस्ययच्छतामेतद्बद्धकमोचनं ॥ विजिहीष्वलोकान्कृधिबंधान्मुंचासिबद्धकं ॥ योनेरिवप्रच्युतोगर्भःसर्वान्पथोअनुष्व ॥ सप्रजानन्प्रतिगृभ्णीतविद्वान्प्रजापतिःप्रथमजाऋतस्य ॥ अस्माभिर्दत्तंजरसःपरस्तादच्छिन्नंतंतुमनुसंचरेम ॥ ततंतंतुमन्वे केअनुसंचरंतियेषांदत्तंपित्र्यमायनवत् ॥ अबंध्वेकेददतःप्रयच्छाद्दातुंचेच्छकवांसःस्वर्गएषां ॥ आरभेथामनुसंरभेथांस मानंपंथामवथोघृतेन ॥ यद्वांपूर्तंपरिविष्टंयदग्नौतस्मैगोत्रायेहजायापतीसंरभेथां ॥ यदंतरिक्षंपृथिवीमुतद्यांयन्मातरंपितरं वाजिहिंसिम ॥ अग्निर्मातस्मादेनसोगार्हपत्यउन्नोनेषद्दुरितायानिचकृम ॥ भूमिर्मातादितिर्नोजनित्रंभ्रातांतरिक्षमभिशस्त एनः ॥ द्यौर्नःपितापितृयाच्छंभवासिजामिमित्वामाविवित्सिलोकात् ॥ यत्रसुहार्दःसुकृतोमदंतेविहायरोगंतन्वंस्वायाः ॥ अश्लोणांगैरहुताःस्वर्गेतत्रपश्येमपितरंचपुत्रं ॥ यदन्नमद्म्यनृतेनदेवादास्यन्नदास्यन्नुतवाकरिष्यन् ॥ यद्देवानांचक्षुष्यागोअ स्तियदेवकिंचप्रतिजग्राहमग्निर्मातस्मादनृणंकृणोतु ॥ यदन्नमद्मिबहुधाविरूपंवासोहिरण्यमुतगामजामविं ॥ यद्देवानां० कृणोतु ॥ ३ ॥ इत्युपस्थाय ॥ त्रयोदश्यासमिधमादध्यात् ॥ ॐ यन्मयामनसावाचाकृतमेनःकदाचन ॥ सर्वस्मात्तस्मा न्मेळितोमोग्धित्वंहिवेत्थयथातथंस्वाहा ॥ अग्नयेवैश्वानरायेदं० ॥ इतिसमिधंहुत्वाप्रधानहोमात्पूर्वंस्विष्टकृद्धोमाकरणपक्षे पूर्वावत्तेनहविषास्विष्टकृतंजुहोति ॥ पूर्वोक्तमंत्रौग्राह्यौ ॥ कर्मसमृद्ध्यर्थंजयादिहोमःकार्यः ॥ ततःस्वगृह्योक्तविधिनास्विष्ट

कृदादिहोमशेषसमापनाद्यर्चनाचार्यपूजनदक्षिणादानसमंत्रपंचमव्यप्राशनकर्मेश्वरार्पणाद्यंतंकर्मशेषंसमापयेत् ॥ अयंहोमो बौधायनमतेनपक्वचरुसहितोगुरुःजमदग्निप्रोक्तस्तद्रहितोलघुरिति ॥ इतिकूष्मांडहोमः ॥ ॥ ७ ॥ ॥ ७ ॥



## ॥ १२९ ॥ अथबृहस्पतिशांतिः ॥

श्रीः ॥ आचम्यपवित्रपाणिःप्राणानायम्यदेशकालौसंकीर्त्य ॥ अस्यकुमारस्योपनयनकाले ( कन्यकायाविवाहकालेवा ) बृहस्पत्यानुकूल्यसिद्धिद्वाराश्रीपरमेश्वरप्रीत्यर्थंबृहस्पतिशांतिंकरिष्ये ॥ इतिसंकल्प्यगणेशपूजनाद्याचार्यवरणांतंकुर्यात् ॥ तत आचार्यः यथाशक्तिनिर्मितप्रतिमायामग्न्युत्तारणांतंकृत्वा ॥ यदत्रसंस्थितंभूतमित्यादिदेशसंस्कारांतेहोमदेशस्येशानदेशेमही द्यौरितिस्पृष्ट्वाभुविओषधयइतिधान्यंप्रक्षिप्याकलशेष्वितिधवलकुंभंस्थाप्येमंमेगंगेइति तीर्थोदकेनापूर्याश्वत्थेवोनिषदनमिति अश्वत्थपल्लवान् गायत्र्यादिमंत्रैःपंचगव्यं देवस्यत्वा० भिषिंचामीतिकुशोदकंनिक्षिप्य युवासुवासाइतिपीतवस्त्रेणसंवेष्ट्यसहिरण्यानीतिपंचरत्नानिप्रक्षिप्ययाओषधीरितिवक्ष्यमाणान्सर्वान्निक्षिपेत् यूथिकांदमनंमधुपुष्पाणिपत्रं ( भाषायांपत्रजमितिप्रसिद्धं ) पलाशंसर्षपान्जटामांसींगुडूचींअपामार्गविडंगंशंखिनींवचांसहदेवीं विष्णुक्रांतांशतावरींकुष्टंमांसीं हरिद्रेद्वेमुराशैलेयचंदनंवचांकचोरंमुस्तांचेतिनिक्षिप्यपीतवस्त्रेणावेष्ट्य ॥ततश्चंदनादिनाकुंभमभ्यर्च्यपूर्णादर्वीतियथाविभवंसौवर्णादिपूर्णपात्रं निधायतत्राष्टदलोत्तरदलेहरिताक्षतनिर्मितदीर्घचतुरस्रपीठे हैमींबृहस्पतिप्रतिमांस्थापयित्वा स्थंडिलेऽग्निप्रतिष्ठापनादिअन्वाधानेचक्षुषीआज्येनेत्यंते बृहस्पतिमष्टोत्तरशतसंख्याभिरश्वत्थसमिद्भिस्तावतीभिराज्याहुतिभिस्तावतीभिःसर्पिर्मिश्रपायसाहुतिभिःतावतीभिश्चाज्ययवव्रीहितिलाहुतिभिश्च शेषेणस्विष्टकृतमित्यादिस्वसालोक्तविधिनाज्यभागांतंकृत्वाकुंभोपरिस्थापि

स्पतिमप्यामावाहनादिषोडशोपचारैर्बृहस्पतिंपूजयेत् ॥ तत्रविशेषः ॥ पीतवस्त्रयुग्मंपीतंयज्ञोपवीतंपीतंचंदनंपीताक्षतान् ॥ चंपकादिपीतपुष्पं ॥ बिल्वमज्जाधूपं ॥ घृतदीपं ॥ दध्योदनंनैवेद्यं ॥ दक्षिणायांपुष्परागोमाणिक्यंयथाशक्तिहेमवा ॥ पूजांतेऽग्निमाभिर्वारुणीभिःपावमानीभिश्चब्रह्मलोकाभिःकुंभानुमंत्रणं ॥ ततोयजमानोयथान्वाधानंबृहस्पतयइदंनममेतित्यागं कुर्यात् ॥ अथाचार्योबृहस्पतिमंत्रेणप्रणवादिनाऋष्यादिस्मरणपूर्वकंदधिमध्वाक्ताअष्टोत्तरशतमश्वत्थसमिधोजुहुयात् ॥ तावतीराज्याहुतीःसर्पिर्मिश्रलोकसिद्धपायसाहुतीःसाज्ययवव्रीहितिलाहुतीश्च ॥ ततःस्विष्टकृदादिहोमशेषंपरिस्तरणविसर्जनाभ्यर्चनांतंकुर्यात् ॥ ततोबृहस्पतेःगंधादिभिःपूर्वोक्तैःफलतांबूलांतैःपूजनंकृत्वासयजमानोनमस्कुर्यात् ॥ ततस्ताम्रपात्रेशुद्धोदकंप्रक्षिप्यतत्रपीतानिगंधाक्षतपुष्पाणिफलंचप्रक्षिप्यार्घ्यंदद्यात् ॥ गंभीरदृढरूपांगदेवेज्यसुमतेप्रभो ॥ नमस्तेवाक्पतेशांतगृहाणार्घ्यंबृहस्पतेइति ॥ ततोयजमानोबृहस्पतयेकृतकर्मार्पणंकुर्यात् ॥ भक्त्यायत्तेसुराचार्यहोमपूजादिकंकृतं ॥ तत्त्वंगृहाणशांत्यर्थंबृहस्पतेनमोनमःइति ॥ ततःप्रार्थयेत् ॥ जीवोबृहस्पतिःसूरिराचार्योगुरुरंगिराः ॥ वाचस्पतिर्देवमंत्रीशुभंकुर्यात्सदाममेति ॥ ततोविसर्जनंकृत्वाचार्यप्रणम्यसर्वोपचारसंयुक्तांगोयुक्तामिमांप्रतिमांतुभ्यमहंसंप्रददे ॥ इतिताहशप्रतिमांदद्यादभिषेकोत्तरंवाप्रतिमादानं ॥ कुंभोदकेनाचार्यःपुत्रदारसमेतंयजमानमभिषिंचेत् ॥ आपोहिष्ठेतितिसृणामांबरीषःसिंधुद्वीपआपोगायत्री ॥ समुद्रज्येष्ठाइतिचतसृणांवसिष्ठआपस्त्रिष्टुप् ॥ इदमापइत्यस्यसिंधुद्वीपआपोनुष्टुप् ॥ तामग्निवर्णामित्यस्यहिरण्यगर्भोदुर्गात्रिष्टुप् ॥ याओषधीरित्यस्याथर्वणोभिषगोषधयोनुष्टुप् ॥ अश्वावतीर्गोमतीरित्यस्यवसिष्ठउषसस्त्रिष्टुप् ॥ यद्देवा

देवहेडनंयद्दीव्यमायुष्टेविश्वतोदधदित्यापस्तंबशाखोक्तैरनुवाकैश्चतच्छंय्वोरावृणीमहइति ॥ ततोब्राह्मणांश्चसंपूज्यतेभ्योभूयसींदक्षिणांदत्वाशिषोवाचयित्वाकर्मेश्वरेसमर्प्ययथाशक्तिब्राह्मणान्भोजयेत् ॥ इतिबृहस्पतिशांतिः ॥ ॥ छ ॥

## ॥ १३० ॥ अथोपनयनम् ॥

श्रीः ॥ उपनयनकर्ताद्विराचम्यप्राणानायम्येष्टदेवतांगुर्वादींश्चनमस्कृत्यदेशकालौसंकीर्त्य॥ ममोपनेतृत्वाधिकारसिद्ध्यर्थंकृच्छ्रत्रयप्रायश्चित्तंद्वादशसहस्रगायत्रीजपंचकरिष्ये ॥ कुमारःममकामचारकामवादकामभक्षणादिदोषापनोदार्थंकृच्छ्रत्रयप्रायश्चित्तंप्रतिकृच्छ्रंतत्प्रत्याम्नायगोनिष्क्रयीभूतनिष्कपादार्धपरिमितरजतद्रव्यदानेन—अथवा प्रतिकृच्छ्रंतत्प्रत्याम्नायगोनिष्क्रयीभूतकार्षापणपरिमितताम्रमूल्यव्यावहारिकद्रव्यदानेन—अहमाचरिष्ये ॥ अस्यकुमारस्योपनयनेग्रहानुकूल्यसिद्धिद्वाराश्रीपरमेश्वरप्रीत्यर्थंग्रहयज्ञंकरिष्ये ॥ पूर्वतनसंस्कारलोपेस्यकुमारस्यगर्भाधानपुंसवनसीमंतविष्णुबलिजातकर्मनामकरणनिष्क्रमणान्नप्राशनचौलानांनवसंस्काराणांकालातिपत्तिप्रत्यवायपरिहारद्वाराश्रीपरमेश्वरप्रीत्यर्थंप्रतिसंस्कारं ॐ भूर्भुवःस्वःस्वाहेत्येकैकामाज्याहुतिं—तथाउक्तसंस्काराणांलोपजनितप्रत्यवायपरिहारद्वाराश्रीपरमेश्वरप्रीत्यर्थं प्रतिसंस्कारंपादकृच्छ्रंचौलस्यार्धकृच्छ्रंप्रतिपादकृच्छ्रमर्धकृच्छ्रंचतत्प्रत्याम्नाय० ॥ तानिकृत्वा ॥ अस्यकुमारस्यबीजगर्भसमुद्भवैनोनिबर्हणबलायुर्वर्चोभिवृद्धिद्वाराश्रीपरमेश्वरप्रीत्यर्थंचौलसंस्कारं—तथा अस्यकुमारस्यद्विजत्वसिद्ध्यावेदाध्ययनाधिकारसिद्ध्यर्थंश्वःसद्योवाउपनयनंकरिष्ये ॥ तदंगभूतंपणपतिपूजनपूर्वकंस्वस्तिवाचनंमातृकापूजनंनांदीश्राद्धंमंडपप्रतिष्ठां ( कुलदेवतास्थापनं ) पूजनंचक

शिष्ये ॥ [illegible] कुमिवेदिसंपूज्यतंत्रेण गणपतिपूजनस्वस्तिवाचनमातृकापूजननांदीश्रा
द्धग्रहयज्ञादीनिकृत्वामंडपदेवताप्रतिष्ठाकार्या ॥ अनंतरंवाग्रहयज्ञःकार्यः ॥ इत्युपनयनसंकल्पादि ॥ ॥ ६७ ॥

## ॥ १३१ ॥ अथमंडपदेवताप्रतिष्ठा ॥

...नीः ॥ साम्येत्थं ॥ दूर्वाशमीपल्लवकुलदेवतावृक्षपल्लवानाम्रादिप्रशस्तवृक्षपत्रवेष्टितान्सूत्रेणषोडावेष्टयेत् ॥ तत्रैकत्रमुसलमेक
त्रचछुरिकादिशस्त्रंमध्येप्रक्षिप्यवेष्टयेत् ॥ तानिषड्वंशपात्रेविधायतन्मध्येउदक्संस्थेषुचतुर्षुक्रमेणनंदिनींनलिनींमैत्रांउमांप
शुवर्धिनींभगवतींचावाह्य तंडुलपूर्णेहरिद्राखंडपूगीफलयुतेन्युब्जशरावपिहितेशरावेणसहसूत्रवेष्टितेहरिद्रादिरंजितेकलशेअवि
घ्नसंज्ञंगणपतिंचावाह्य तदस्तुगृहावैप्रतिष्ठाइतिप्रतिष्ठाप्यनीराज्यआसनाद्याचमनांतंकृत्वा तैलोद्वर्तनोष्णोदकैरभ्यंगस्नानंव
ण्णांवेष्टितानांकारयित्वागंधादिदक्षिणांतोचपारैःपूजयित्वानीराज्य सपत्नीकउत्थायआग्नेयकोणस्थमंडपस्तंभोपरिनंदिनींतद
स्तुगृहावैइतिप्रतिष्ठाप्य समुद्रज्येष्ठाआपोहिष्ठेतिमंत्राभ्यांप्रोक्ष्य गंधद्वारामितिगंधाक्षतान् दधिक्राव्णइतिदधि कांडात्कांडा
दितिदूर्वाःपुष्पाणिचसमर्पयेत् ॥ ततोनैर्ऋत्यवायव्यैशानस्तंभेषुमंडपमध्योपरिभागेकाष्ठेचक्रमेण नलिनीमैत्रोमापशुवर्धिनी
नामकवेष्टितानिउक्तवत्स्थापयित्वापूजयेत् ॥ याआपोदिव्याइतिनलिन्याःप्रोक्षणेमंत्रः ॥ यासांराजेतिमैत्रायाः ॥ यासुराजे
त्युमायाः ॥ समुद्रज्येष्ठाइत्यादिचत्वारोपिपशुवर्धिन्याः ॥ अन्यत्सर्वसमानं ॥ ततोवंशपात्रेणसहभगवतींगौर्यादिमातृका
स्थापितवंशपात्रंस्वयंगृहीत्वाअविघ्नकलशंचपत्न्याग्राहयित्वासहब्राह्मणःकनिक्रदज्जनुषमितिसूक्तंपठन्मंगलवाद्यघोषेणगृहांत
र्गत्वा ईशानदेशेतंडुलादिपुंजत्रयोपरित्रीण्यपितदस्तुगृहावैइतिस्थापयित्वा चंदनादिनासंपूज्यस्थापितदेवताप्रीत्यर्थंब्राह्मण

सुवासिनीभोजनंसंकल्प्यभूयसींदद्यात् ॥ ततोनीराजिताभ्यांदंपतीभ्यांसुहृदोवस्त्राणियुवंवस्त्राणि० अभिवस्त्रा० भद्रावस्त्रा० वसिष्वाहि० स्तुवस्त्रा० उभाउनूनं इत्यादिमंत्रैर्दद्युः ॥ ततोतिक्रांतजातकर्मादिसंस्कारानुष्ठानं ॥ इतिमंडपदेवताप्रतिष्ठा॥

## ॥ १३२ ॥ अथघटीस्थापनम् ॥

श्रीः ॥ तच्चदशपलमितताम्रघटितंषडंगुलोन्नतंद्वादशांगुलविस्तृतंघटीयंत्रंसंपाद्यआचम्यप्राणानायम्यदेशकालकीर्तनांतेममास्यकुमारस्याद्यकरिष्यमाणोपनयनेकन्यायाउद्वाहेवासुमुहूर्तकालज्ञानार्थंघटीयंत्रस्थापनंकरिष्येइतिसंकल्प्य गणपतिंसंपूज्य महीद्यौरित्यादिमंत्रैर्धान्यराश्युपरिताम्रपात्रंसंस्थाप्य इमंमेइत्युदकेनापूर्यमंत्रैर्गंधदूर्वापल्लवफलहिरण्यानिक्षिप्त्वावरुणमावाह्य गंधाद्युपचारैःसंपूज्यतत्रघटीयंत्रंनिक्षिपेत् ॥ तत्रमंत्रः ॥ यंत्राणांमुख्ययंत्रंत्वमितिधात्रापुराकृतं ॥ सौभाग्याद्यायुरारोग्यसुपुत्रधनहेतवे ॥ जलयंत्रकमेतस्मादिष्टसिद्धिप्रदंभवेत् ॥ विवाहेतु ॥ मुख्यंत्वमसियंत्राणांब्रह्मणानिर्मितंपुरा ॥ भवभावाय दंपत्योःकालसाधकारणं ॥ धर्मसिंधाविदंविवाहएवलिखितंशिष्टाउपनयनेपिकुर्वंतीत्यत्रोपन्यस्तं ॥ इतिघटीस्थापनं ॥ ॥

## ॥ १३३ ॥ अथयेयज्ञेनसूक्तम् ॥

श्रीः ॥ हरिः ॐ ॥ येयज्ञेनदक्षिणयासमक्ताइंद्रस्यसख्यममृतत्वमानश ॥ तेभ्योभद्रमंगिरसोवोअस्तुप्रतिगृभ्णीतमानवंसुमेधसः ॥ यउदाजन्पितरोगोमयंवस्वृतेनाभिंदन्परिवत्सरेवलं ॥ दीर्घायुत्वमंगिरसोवोअस्तुप्रतिगृभ्णी० ॥यऽऋतेनसूर्यमारोहयन्दिव्यप्रथयन्पृथिवींमातरंवि ॥ सुप्रजास्त्वमंगिरसोवोअस्तुप्रतिगृ० ॥ अयंनाभावदतिवल्गुवोगृहेदेवपुत्राऋषयस्तच्छृणोतन ॥ सुब्रह्मण्यमंगिरसोवोअस्तुप्र० ॥ विरूपासइदृषयस्तइद्गंभीरवेपसः ॥ तेअंगिरसःसूनवस्तेअग्नेःपरिजज्ञिरे ॥ १ ॥ येअग्नेःपरिज

ञ्जिरेविरूपासोदिवस्परि ॥ नवग्वोऽनुदशग्वोअंगिरस्तमःसचादेवेषुमंहते ॥ इंद्रेणयुजानिःसृजंतवाघतोव्रजंगोमंतमश्विनं ॥
सहस्रंमेददतोअष्टकर्ण्यः श्रवोदेवेष्वक्रत ॥ प्रनूनंजायतामयंमनुस्तोक्मेवरोहतु ॥ यःसहस्रंशताश्वंसद्योदानायमंहते ॥ नतम
श्नोतिकश्चनदिवइवसान्वारभं ॥ सावर्ण्यस्यदक्षिणाविसिंधुरिवपप्रथे ॥ उतदासापरिविषेस्मद्दिष्टीगोपरीणसा ॥ यदुस्तुर्वश्च
मामहे ॥ सहस्रदाग्रामणीर्मारिषन्मनुःसूर्येणास्ययतमानैतुदक्षिणा ॥ सावर्णेर्देवाःप्रतिरंत्वायुर्यस्मिन्नश्रांताअसनामवाजं॥२॥
परावतोयेदिधिषंतआप्यंमनुप्रीतासोजनिमाविवस्वतः ॥ ययातेर्येनहुष्यस्यबर्हिषिदेवाआसतेतेअधिब्रुवंतुनः ॥ विश्वाहिवोन
मस्यानिवंद्यानामानिदेवाउतयज्ञियानिवः ॥ येस्थजाताअदितेरद्भ्यस्परियेपृथिव्यास्तेमइहश्रुताहवं ॥ येभ्योमातामधुमत्पि
न्वतेपयःपीयूषंद्यौरदितिरद्रिबर्हाः ॥ उक्थशुष्मान्वृषभरान्त्स्वप्नसस्ताँऽआदित्याँऽअनुमदास्वस्तये ॥ नृचक्षसोअनिमिषंतोऽ
अर्हणाबृहद्देवासोऽअमृतत्वमानशुः ॥ ज्योतीरथाऽअहिमायाअनागसोदिवोवर्ष्माणंवसतेस्वस्तये ॥ सम्राजोयेसुवृधोयज्ञमाय
युरपरिह्वृतादधिरेदिविक्षयं ॥ ताँऽआविवासनमसासुवृक्तिभिर्महोऽआदित्याँऽअदितिंस्व० ॥३॥ कोवःस्तोमंराधतियंजुजोष
थविश्वेदेवासोमनुषोयतिष्ठन ॥ कोवोध्वरंतुविजाताअरंकरद्योनःपर्षदत्यंहःस्व० ॥ येभ्योहोत्रांप्रथमामायेजेमनुःसमिद्धाग्नि
र्मनसासप्तहोतृभिः ॥ तआदित्याऽअभयंशर्मयच्छतसुगानःकर्तसुपथास्वस्तये ॥ यईशिरेभुवनस्यप्रचेतसोविश्वस्यस्थातुर्जग
तश्चमंतवः ॥ तेनःकृतादकृतादेनसस्पर्यद्यादेवासःपिपृतास्व० ॥ भरेष्विंद्रंसुहवंहवामहेंहोमुचंसुकृतंदैव्यंजनं ॥ अग्निंमित्रंवरु
णंसातयेभगंद्यावापृथिवीमरुतःस्व० ॥ सुत्रामाणंपृथिवींद्यामनेहसंसुशर्माणमदितिंसुप्रणीतिं ॥ दैवींनावंस्वरित्रामनागसम
स्रवंतीमारुहेमास्व० ॥ ४ ॥ विश्वेयजत्राऽअधिवोचतोतयेत्रायध्वंनोदुरेवायाऽअभिह्रुतः ॥ सत्ययावोदेवहूत्याहुवेमशृण्वतो

देवाऽअवसेस्व० ॥ अपामीवामपविश्वामनाहुतिमपारातिंदुर्विदत्रामघायतः ॥ आरेदेवाद्वेषोअस्मद्युयोतनोरुणः शर्मयच्छतास्व० ॥ अरिष्टःसमर्तोविश्वएधतेप्रप्रजाभिर्जायतेधर्मणस्परि ॥ यमादित्यासोनयथासुनीतिभिरतिविश्वानिदुरितास्व० ॥ यंदेवासोवथवाजसातौयंशूरसातामरुतोहितेधने ॥ प्रातर्यावाणंरथमिंद्रसानसिमरिष्यंतमारुहेमास्व० ॥ स्वस्तिनःपथ्यासुधन्वसुस्वस्त्य१प्सुवृजनेस्वर्वति ॥ स्वस्तिनःपुत्रकृथेषुयोनिषुस्वस्तिरायेमरुतोदधातन ॥ स्वस्तिरिद्धिप्रपथेश्रेष्ठारेक्णस्वत्यभियावाममेति ॥ सानोअमासोअरणेनिपातुस्वावेशाभवतुदेवगोपा ॥ एवाप्लतेःसूनुरवीवृधद्वोविश्वआदित्याऽअदितेमनीषी ॥ ईशानासोनरोअमर्त्येनास्ताविजनोदिव्योगयेन ॥ ५ ॥ ततोबृहस्पतेप्रथमंसूक्तंतदस्तुगृहावैध्रुवाद्यौरित्यादिपठनीयं ॥

## ॥ १३४ ॥ उपनयनप्रयोगः ॥

श्रीः ॥ अथापरेद्युःकृतनित्यक्रियःकृतमंगलस्नानमलंकृतंकुमारंमात्रुत्संगेभोजयित्वा कर्तादेशकालौसंकीर्त्य अस्यकुमारस्योपनयनंकर्तुंतत्प्राच्यांगभूतंवापनादिकरिष्येइतिसंकल्प्यकृतवापनंस्नापितंबद्धशिखंकुमारंमंगलतिलकंकुर्युः ॥ अत्रमौहूर्तिकंसंपूज्यतदुक्तेशुभमुहूर्तेआचार्योवेद्यांप्राङ्मुखउपविष्टस्तं (मंगलाष्टकपद्यपाठपुरःसरं) स्वसमीपमानीयतन्मुखंसम्यगीक्षेत ॥ कृतनमस्कारंचतंस्वांकेकुर्वीत ॥ अथाचारतःयेयज्ञेनेतिसूक्तेनबृहस्पतेप्रथममित्यनेनतदस्तुगृहावैइतिमंत्रैर्ब्राह्मणाउभयोःशिरस्यक्षतान्क्षिपेयुः॥ ॥ ततस्तंस्वदक्षिणतउपवेश्यस्थंडिलोपलेपनादिसमुद्भवनामाग्निप्रतिष्ठांतंकृत्वा ॥ समिद्द्वयमादायक्रियमाणेउपनयनहोमेदेवतापरिग्रहार्थमन्वाधानंकरिष्ये ॥ अस्मिन्नन्वाहितेग्नावित्याद्याघारावाज्येनेत्यंतमुक्त्वात्रप्रधानं ॥ त्रिरग्निंपव

१ अकृतचूडेकुमारेब्दादावतिक्रांतंचौलंकुर्यात् । २ अत्रब्रह्मचारिभ्योन्नदानाचारः । ३ अत्रास्यद्विजत्वसिद्ध्यामायन्त्युपदेशंकर्तुमितितिविशेषःकौस्तुभे ।

मानंप्रजापतिंघ्याज्येन शेषेणस्विष्टकृतमित्याद्याज्यसंस्कारांतंकृत्वा कौपीनार्थंत्रिवृतंकार्पाससूत्रंकटावावध्यकौपीनंपरिधाप्य॥ युवंवस्त्राणीत्यस्यौचथ्योदीर्घतमामित्रावरुणौत्रिष्टुप्॥ वासोधारणेविनियोगः ॥ ॐ युवंवस्त्राणिपीवसावसाथेयुवोरच्छिद्रामं तवोहसर्गाः ॥ अवातिरतमनृतानिविश्वऽऋतेनमित्रावरुणासचेथे॥ इतिमंत्रेणशुक्लंवासःपरिधाप्यान्येनकाषायवाससातेनैव मंत्रेणतथैवप्रावारयेत् ॥ मित्रस्यचक्षुरित्यस्यवामदेवोऽजिनंत्रिष्टुप् ॥ अजिनधारणेविनियोगः ॥ ॐ मित्रस्यचक्षुर्धरुणंबलीय स्तेजोयशस्वीस्थविरंसमिद्धं ॥ अनाहनस्यंवसनंजरिष्णुपरीदंवाज्यजिनंदधस्व ॥ इत्यजिनंधारयित्वा ततोगायत्र्यादशकृत्वोमं त्रिताद्भिरुपवीतंप्रोक्ष्यधारयेत् ॥ यज्ञोपवीतमितिमंत्रस्यपरब्रह्मपरमात्मात्रिष्टुप्॥ श्रौतस्मार्तकर्मानुष्ठानसिद्ध्यर्थंयज्ञोपवीतधा रणेविनियोगः॥ॐयज्ञोपवीतंपरमंपवित्रंप्रजापतेर्यत्सहजंपुरस्तात्॥ आयुष्यमग्र्यंप्रतिमुंचशुभ्रंयज्ञोपवीतंबलमस्तुतेजः॥ इति मंत्रंवाचयित्वादक्षिणबाहुमुद्धार्यउपवीतंधारयित्वा कुमारमात्मनोग्रेश्चमध्येनयज्ञपात्रोत्तरभागंगमयित्वा ॥ तत्रविधिवदा

---

१ केशवनारायणमाधवेति नामभिराचमनम्, गोविंदनाम्ना दक्षिणकरमार्जनम्, विष्णुनाअधरंमृजेत्, मधुसूदनेनओष्ठंमृजेत्, त्रिवि-क्रमेण ओष्ठावुन्मार्जयेत्, वामनेन उदकाभिमंत्रणंकृत्वा, श्रीधरेण वामहस्तप्रक्षालनम्, हृषीकेशेन दक्षिणपादस्पर्शनम्, पद्मनाभेन वाम-पाद०, दामोदरेण मस्तकप्रोक्षणम्, संकर्षणेन ऊर्ध्वोष्ठस्पर्शअंगुल्यग्रैः, वासुदेवेन दक्षिणनासामंगुष्ठतर्जनीभ्यांस्पृशेत्, प्रद्युम्नेन वामनासामं-गुष्ठतर्जनीभ्यां, अनिरुद्धेन दक्षिणनेत्रंअंगुष्ठानामिकाभ्यांस्पृशेत, पुरुषोत्तमेन वामनेत्रंतथा, अधोक्षजेन दक्षिणकर्णस्पर्शः अंगुष्ठकनिष्ठिकाभ्यां, नारसिंहेन वामकर्णस्पर्शस्तथा, अच्युतेन नाभिस्पर्शःअंगुष्ठकनिष्ठिकाभ्यां, जनार्दनेन हृदयस्पर्शःतलेन, उपेंद्रेण मूर्धानंपाणिनास्पृशेत्, हरिणा दक्षिणभुजस्पर्शःअंगुल्यग्रैः, श्रीकृष्णेन वामभुजस्पर्शस्तथा ॥ इतिविधिवदाचमनम् ॥

चमय्य पुनस्तीर्थेनतथैवानीयस्वदक्षिणतउपवेश्यबर्हिरास्तरणाद्याघारहोमांतंकृत्वा ॥ अग्नआयूंषीतितिसृणांशतंवैखानसाऋषः ॥ अग्निःपावमानोदेवता ॥ गायत्रीछंदः॥ उपनयनप्रधाज्यहोमेविनियोगः ॥ ॐ अग्नआयूंषिपवस० स्वाहा ॥ अग्नयेपवमानायेदं० ॥ ॐ अग्निर्ऋषिः० स्वाहा ॥ अग्नयेपवमानायेदं० ॥ ॐ अग्नेपव० स्वाहा ॥ अग्नयेपवमानायेदं० ॥ प्रजापतेहिरण्यगर्भःप्रजापतिस्त्रिष्टुप् ॥ उपनयनप्रधानाज्यहोमेनियोगः ॥ ॐ प्रजापतेनत्व० स्वाहा ॥ प्रजापतयइं० ॥ अथाचार्यउत्तरतोग्नेःप्राङ्मुखस्तिष्ठेत् ॥ कुमारोप्यग्न्याचार्ययोर्मध्येनगत्वाचार्याभिमुखस्तिष्ठेत् ॥ अथाचार्यःकुमारस्यशुचित्वसिद्ध्येसवितृदेवतातृप्तयेचांजलिक्षारणंकरिष्ये ॥ शुद्धोदकेनशिष्यांजलिमापूर्यस्वस्यांजलिमन्येनपूरयित्वा ॥ तत्सवितुरित्यस्यश्यावाश्वःसवितानुष्टुप् ॥ अवक्षारणेविनियोगः ॥ ॐ तत्सवितुर्वृणीमहेवयंदेवस्यभोजनं ॥ श्रेष्ठंसर्वधातमंतुरंभगस्यधीमहि ॥ अनेनस्वांजल्युदकंशिष्यांजलावक्षार्यतज्जलंकुमारांजलिनैवावक्षारयेत् ॥ ततःशिष्यत्वसिद्ध्यर्थंबटोर्हस्तंसांगुष्ठंगृह्णीयात् ॥ तत्रमंत्रः ॥ ॐ देवस्यत्वासवितुःप्रसवेश्विनोर्बाहुभ्यांपूष्णोहस्ताभ्यांहस्तंगृह्णामि[1]अमुकशर्मन् ॥ पुनःपूर्ववदुदकपूरणाद्यवक्षारयेत् ॥ द्वितीयेहस्तग्रहणेमंत्रविशेषः ॥ ॐ सवितातेहस्तमग्रभीत् अमुकशर्मन् ॥ पुनरपिपूर्ववत्पूरयित्वावक्षार्य ॐ अग्निराचार्यस्तव अमुकशर्मन् इतितृतीये ॥ अथाचार्योब्रह्मचारिणासहनिष्क्रम्य ॐ देवसवितरेषतेब्रह्मचारीतंगोपायसमामृतेत्युक्त्वा ॥ संरक्षणार्थंव्रतपतयेआदित्यायबटुंददामीतिमनसास्मरन्ब्रह्मचारिणमादित्यमीक्षयेत् ॥ ततोन्योन्याभिमुखौतिष्ठेतां ॥ अथाचार्यः कस्यब्रह्मचार्यसिप्राणस्यब्रह्मचार्यसिकस्त्वाकमुपनयतेकायत्वापरिददामि इतिमंत्रंजपन्कुमारंप्रजाप

१ अत्रामुकशर्मन्इतिअभिवादनीयंनामशर्मातंसंबुध्यानिर्दिशेत् ॥ नामविचारःपूर्वोक्तनामकरणप्रयोगानुसारेणचूचेचोलेत्यृक्षपादभेदेनवाज्ञेयः ॥

तथेमनसासमर्प्य ॥ युवासुवासाइत्यस्यकौशिकोविश्वामित्रोयूपस्त्रिष्टुप् ॥ पूर्वार्धर्चस्यप्रदक्षिणावर्तनेउत्तरार्धर्चस्यपाणिभ्यां बटुहृदयालंभनेविनियोगः ॥ ॐ युवासुवासाःपरिवीतआगात्सउश्रेयान्भवतिजायमानः ॥ इतिबटुंप्रदक्षिणमावर्तनेनप्राङ्मुखमवस्थाप्य ॥ तदंसयोरुपरिस्वपाणीगमयित्वा ॥ ॐ तंधीरासःकवयउन्नयंतिस्वाध्यो३मनसादेवयंतः ॥ इतिपाणिभ्यांबटुहृदयंस्पृशेत् ॥ ततआत्मानमग्निंचांतराबटुंनीत्वाप्रत्यगग्नेःस्वयमुपविश्यस्वस्यदक्षिणतःप्राङ्मुखंतमुपवेशयेत् ॥ ततोबटुरग्नेःपरिसमूहनपर्युक्षणेकृत्वा ॥ अग्नयेसमिधमित्यस्यहिरण्यगर्भोग्निर्बृहती ॥ समिदाधानेविनियोगः ॥ॐ अग्नयेसमिधमाहार्षंबृहतेजातवेदसे ॥ तयात्वमग्नेवर्धस्वसमिधाब्रह्मणावयंस्वाहा ॥ अग्नयइदंनमम ॥ दक्षिणंपाणिंप्रक्षाल्याग्नौप्रताप्य ॥ ॐ तेजसामासमनज्मिइतिमुखमवाङ्निमृज्यपाणिंप्रक्षाल्यैवंपुनर्द्विः ॥ ततस्तिष्ठन्प्रणतिमुद्रांकृत्वा ॥ मयिमेधामितिषण्णांहिरण्यगर्भऋषिः ॥ पूर्वेषांत्रयाणामग्नींद्रसूर्यादेवताः ॥ उत्तरत्रयाणामग्निर्देवता ॥ गायत्रीछंदः ॥ अग्न्युपस्थानेविनियोगः ॥ ॐ मयिमेधांमयिप्रजांमय्यग्निस्तेजोदधातु ॥ मयिमेधांमयिप्रजांमयींद्रइंद्रियंदधातु ॥ मयिमेधांमयिप्रजांमयिसूर्योभ्राजोदधातु ॥ यत्तेअग्नेतेजस्तेनाहंतेजस्वीभूयासं ॥ यत्तेअग्नेवर्चस्तेनाहंवर्चस्वीभूयासं ॥ यत्तेअग्नेहरस्तेनाहंहरस्वीभूयासं ॥ इतिषण्मंत्रैरग्निमुपस्थाय ॥ मानस्तोकइतिकुत्सोरुद्रोजगती ॥ विभूतिग्रहणेविनियोगः ॥ ॐ मानस्तोकेतनयेमानआयौमानोगोषुमानोअश्वेषुरीरिषः ॥ वीरान्मानोरुद्रभामितोवधीर्हविष्मंतःसदमित्त्वाहवामहे ॥ इत्यनेनभस्मादाययथाचारं त्र्यायुषंजमदग्नेरितिललाटे ॥ कश्यपस्यत्र्यायुषमितिकंठे ॥ अगस्त्यस्यत्र्यायुषमितिनाभौ ॥ यद्देवानांत्र्यायुषमितिदक्षिणस्कंधे ॥ तन्मेअस्तुत्र्यायुषमितिवामस्कंधे॥ सर्वमस्तुशतायुषमितिशिरसिधृत्वापुनःपरिसमूहनपर्युक्षणेकृत्वाकृतांजलिस्तिष्ठन् ॥ ॐ समेस्वरश्चमे

यज्ञोपपतेनमश्च ॥ यस्तेन्यूनंतस्मैतउपयत्तेतिरिक्तंतस्मैतेनमः ॥ अग्नयेनमः ॥ ॐ स्वस्ति ॥ श्रद्धांमेधांयशःप्रज्ञांविद्यांबुद्धिंश्रियंब
लम् ॥ आयुष्यंतेजआरोग्यंदेहिमेहव्यवाहन ॥ इत्यग्निमुपस्थाय ॥ अग्नेरुत्तरतोगत्वाप्रत्यङ्मुखीभूयाचार्याभिमुखोभूत्वादक्षि
णंजानुभूतलेनिधायपाणिभ्यांयथासव्यदक्षिणंश्रोत्रेसंस्पृश्यव्यस्तपाणिराचार्यस्य दक्षिणपादंस्वदक्षिणहस्तेनसव्यंचसव्यहस्ते
नजानुप्रभृतिपादपर्यंतंस्पृष्ट्वाऽमुकगोत्रोमुकशर्माहंभोअभिवादयेइत्यभिवादयेत् ॥ आचार्येण आयुष्मान्भवसौम्यदेवदत्त ३
इतिप्रयुक्ताशीर्वादः सावित्र्युपदेशंवांछन् अधीहिभोःसावित्रींभोअनुब्रू ३ हि इत्याचार्यमुक्त्वा स्ववामपाणिमुत्तानीकृत्य
दक्षिणपाणिंन्यङ्मुखीकृत्यसंधायपाणिपृष्ठमंगुलीश्चांगुष्ठौचदृढीकृत्यकृतंब्रह्मांजलिंदक्षिणांकेनिधायाचार्यांतिकमासीत ॥ अ
थाचार्यस्तदंजलिंतत्परिधानीयवाससाच्छाद्यस्वपाणिभ्यांतदंजलिंपरिगृह्य ॥ प्रणवस्यपरब्रह्मऋषिः परमात्मादेवता दैवीगाय
त्रीछंदः ॥ व्याहृतीनांपरमेष्ठीप्रजापतिःप्रजापतिर्बृहती ॥ गायत्र्याविश्वामित्रःसवितागायत्री ॥ उपनयनोपदेशेविनियोगः ॥
प्रणवव्याहृतिपूर्विकांगायत्रींपच्छोऽर्धर्चशःसर्वांअशक्तौयथाशक्तिवात्रिवारंस्वयमुक्त्वावाचयेत् ॥ ततःममव्रतइत्यस्यप्रजापति
र्बृहस्पतिस्त्रिष्टुप् ॥ बटोर्हृदयेऊर्ध्वांगुलिपाणिनिधानेविनियोगः ॥ ॐ ममव्रतेहृदयंतेदधामिममचित्तमनुचित्तंतेअस्तु ॥ मम
वाचमेकव्रतोजुषस्वबृहस्पतिष्ट्वानियुनक्तुमह्यं ॥ इतिस्वपाणिमूर्ध्वांगुलिंबटुहृदयेनिधाय ॥ तस्यरक्षार्थंशुद्ध्यर्थंचमेखलामाबध्नी
यात् ॥ इयंदुरुक्तादितिद्वयोर्वामदेवोमेखलात्रिष्टुप् ॥ मेखलाबंधनेविनियोगः ॥ ॐ इयंदुरुक्तात्परिबाधमानाच्छर्मवरूथंपु
नतीनआगात् ॥ प्राणापानाभ्यांबलमाभरंतीप्रियादेवानांसुभगामेखलेयं ॥ ऋतस्यगोप्त्रीतपसःपरस्पीघ्नतीरक्षःसहमानाअ
रातीः ॥ सानःसमंतमनुपरीहिभद्रयाभर्तारस्तेमेखलेमारिषाम ॥ इतिमंत्रंवाचयित्वामेखलांत्रिरावर्त्यनाभिप्रदेशेग्रंथित्रयंकु

यात् ॥ तदाबटुःसरहस्यांगसहितवेदत्रयेणावृतोहमितिमन्येत ॥ ततआचार्यः ॥ स्वस्तिनइत्यस्यस्वस्त्यात्रेयोविश्वेदेवाख्रि ष्टुप् ॥ दंडदानेविनियोगः ॥ ॐ स्वस्तिनोमिमीतामश्विनाभगःस्वस्तिदेव्यदितिरनर्वणः ॥ स्वस्तिपूषाअसुरोदधातुनःस्वस्ति द्यावापृथिवीसुचेतुना ॥ इतिमंत्रेणदंडंदद्यात् ॥ ततोबटोस्तद्ग्रहणेमंत्रः ॥ अदांतंदमयित्वामांमार्गेसंस्थापयन्स्वयं ॥ दंडःक रेस्थितोयस्मात्तस्माद्रक्षयतोभयं ॥ इतिवाचयेत् ॥ ततःकुमारस्याचारमादिशेत् ॥ ब्रह्मचार्यसि ॥ अपोशान ॥ आचमनंकुरु ॥ मूत्रपुरीषादौशुद्ध्यर्थमित्यर्थः ॥ कर्मकुरु ॥ संध्योपासनादीत्यर्थः ॥ दिवामास्वाप्सीः ॥ आचार्याधीनोवेदमधीष्व ॥ सायं प्रातर्भिक्षेथाः ॥ सायंप्रातःसमिधमाधेहि ॥ द्वादशवर्षाणिवेदग्रहणांतंवाब्रह्मचर्यंचर ॥ अप्रत्याख्यायिनमग्रेभिक्षेथाः ॥ अ प्रत्याख्यायिनींवा ॥ ततःस्विष्टकृदादिहोमशेषंसमाप्याग्निंमेधाजननांतंरक्षेत् ॥ तत्रैवसायंप्रातरग्निकार्यंकुर्यात् ॥ ततोनुप्रव चनीयहोमब्राह्मणभोजनपर्याप्तांतंडुलरूपांभिक्षांयाचयेत् तत्क्रमः ॥ भिक्षापात्रमादायादौमातरंभवतीभिक्षांददात्विति भि क्षांभवतीददात्वितिवा ॥ पितरंभवान्भिक्षांददात्विति भिक्षांभवान्ददात्वितिवा ॥ एवंमातुःस्वसारंस्वभगिनीमन्यानपिबां धवानप्रत्याख्यायिनोप्रत्याख्यायिनीश्चयाचित्वाभैक्षमाचार्यायनिवेद्यमध्याह्नसंध्यांकुर्यान्नवा ॥ ब्रह्मयज्ञस्तुद्वितीयदिनमार भ्यगायत्र्याकार्यः ॥ अस्मिन्कर्मणिशतंब्राह्मणाभोज्याः ॥ इत्युपनयनप्रयोगः ॥ ॥ छ ॥ ॥ छ ॥

## ॥ १३५ ॥ अथानुप्रवचनीयहोमः ॥

श्रीः ॥ सायंसंध्योत्तरंकृतोपनयनहोमाग्नेःपश्चिमतोब्रह्मचारिणासहोपविश्याचम्यप्राणानायम्यदेशकालौसंकीर्त्य उपनयनांग भूतमनुप्रवचनीयहोमंकरिष्ये ॥ इतिसंकल्प्य ॥ अग्निंध्यात्वासमिद्द्वयमादायक्रियमाणेऽनुप्रवचनीयहोमेदेवतापरिग्रहार्थमि

त्याद्याघाराद्याज्येनेत्यंतमुक्त्वा ॥ अत्रप्रधानंसदसस्पतिंसवितारंऋषींश्चचरुद्रव्येण ॥ शेषेणस्विष्टकृतमित्यादिपूर्णपात्रनिधानांतंकृत्वा भिक्षान्नस्यदेवतात्रयार्थंतूष्णींचतुरश्चतुरोमुष्टीन्निरुप्यतथैवप्रोक्ष्य हविःश्रपणाघारहोमांतंकृत्वा अवदानधर्मेणचरुमवदाय ॥ सदसस्पतिमित्यस्यकाण्वोमेधातिथिःसदसस्पतिर्गायत्री ॥ अनुप्रवचनीयप्रधानचरुहोमेविनियोगः ॥ ॐ सदसस्पतिमद्भुतंप्रियमिंद्रस्यकाम्यं ॥ सनिंमेधामयासिषंस्वाहा ॥ सदसस्पतयइदंनमम ॥ तत्सवितुरित्यस्यगाथिनोविश्वामित्रः सवितागायत्री ॥ अनुप्रव० ॥ ॐ तत्सवितु० स्वाहा ॥ सवित्रइदंनमम ॥ ऋषिभ्यःस्वाहा ॥ ऋषिभ्यइदंन० ॥ इतिचर्वाहुतित्रयंहुत्वास्विष्टकृदादिहोमशेषंसमाप्यहविःशेषेणान्येनवान्नेनत्रीन्त्र्यवरान्वाब्राह्मणान्भोजयेत् ॥ इत्यनुप्रवचनीयहोमः ॥

## ॥ १३६ ॥ अथप्रदोषगर्जितादिशांतिः ॥

श्रीः ॥ कर्ताआचमनादिदेशकालकीर्तनांते ब्रह्मौदनपाकात्पूर्वंप्रदोषकालिकगर्जितेनसूचितस्यब्रह्मचारिकर्तृकाध्ययनविघ्नस्यनिरसनद्वाराश्रीपर० शांतिंकरिष्ये ॥ तदंगगणपतिपूजनपुण्याहवाचनाचार्यवरणांतेआचार्यःप्रादेशकरणांतेस्थंडिलेग्निंप्रतिष्ठाप्यान्वादध्यात् ॥ तत्रचक्षुषीआज्येनेत्यंतेप्रधानंसवितारंघृताक्तपायसेनाष्टोत्तरशतसंख्याभिराहुतिभिः शेषेणस्विष्टकृतमित्यादिमरुतश्चाज्येनेत्यंते गायत्र्यासवितारमाज्येनविश्वान्देवानाज्यसंस्रावेणेत्यादिगृहसिद्धपायसाधिश्रपणाद्याज्यभागहोमांतेगायत्र्या १०८ संख्ययापायसंहुत्वा ॥ इमांधियमितिद्वादशर्चस्यसूक्तस्यायास्योबृहस्पतिस्त्रिष्टुप् ॥ जपे० ॥ ततःस्विष्टकृ

१ अनुप्रवचनीयहोमारंभात्पूर्वंगर्जितवृष्ट्यादिसंभावनायांद्विवैवचरुश्रपणांतंकृत्वास्तमितेजुहुयात् । पाकात्पूर्वंगर्जितेतुशांत्युत्तरंपाकः ।
२ इमांधियंसप्तशीर्ष्णीमितिसूक्तमष्टमाष्टकेद्वितीयेऽध्यायेपंचदशषोडशवर्गद्वयात्मकंज्ञेयं ॥

दार्वियह्रोदेवाइत्वाहुत्यंतेगायत्र्याज्याहुतिंहुत्वाकर्मशेषंसमापयेत् ॥ यजमानआचार्यसंपूज्यगांदत्वाब्राह्मणभोजनंसंकल्प्यभूयसींदत्वाशांतिंवाचयित्वाकर्मसमापयेत् ॥ वृष्ट्युत्पातयोरपीयमेवशांतिःकार्या ॥ तत्रसंकल्पेअकालवृष्ट्याअमुकोत्पातेनेतिवाययाथयथमूह्यं ॥ इतिप्रदोषगार्जितादिशांतिः ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥

## ॥ १३७ ॥ उपनयनाग्निनाशेप्रायश्चित्तम् ॥

श्रीः ॥ ध. सिं. ॥ नष्टस्याग्नेःपुनरुत्पत्तिंकरिष्येइतिसंकल्पः ॥ नष्टस्योपनयनाग्नेःपुनरुत्पत्तिहोमेविनियोगः ॥ उपनयनाहुतिभिरग्निमुत्पाद्यतत्रमेधाजननपूर्वभाव्यग्निकार्याणिकृत्वामेधाजननंकार्यं ॥ अनुप्रवचनपूर्वभाव्यग्निकार्यमनुप्रवचनीयहोमश्चनकार्यः ॥ कौस्तुभेतु–गायत्र्युपदेशवर्जकटिसूत्रधारणाद्याःसर्वेमाणवकसंस्काराअनुप्रवचनहोमश्चकार्यइतिसूपपादितमस्ति ॥ आचतुर्थाद्विवाहाग्निर्नश्येद्ब्रह्मौदनावधि ॥ कार्यांतैर्दशभिर्हुत्वाप्रत्यृचंजुहुयाद्धृतं ॥ कायांताऋचस्तु–हिरण्यगर्भःसम० यआत्मदा० यःप्राणतो० यस्येमे० येनद्यौरुग्रा० यंक्रंदसी०आपोहयत्०यश्चिदापो० मानोहिंसी० प्रजापतेन० १०इति ॥ ब्रह्मौदनात्प्रागुपनीतवह्नौनष्टेसमाधायपुनश्चवाह्निं ॥ कृत्वाज्यसंस्कारकपूर्वहोमंनब्रह्मयज्ञोऽजिनदंडमेखलाः ॥ इति ॥ अथाग्न्युपघातनिमित्तानि ॥ श्वशूकररासभकाकसृगालमर्कटशूद्रांत्यजपतितकुणपसूतिकारजस्वलापुरीषादिजुगुप्सितस्पर्शादिभिःस्युः ॥

## ॥ १३८ ॥ अथमेधाजननप्रयोगः ॥

श्रीः ॥ चतुर्थदिवसेआचम्यप्राणानायम्यदेशकालौसंकीर्त्य ममास्यकुमारस्योपनयनव्रतसमाप्तिवेदग्रहणसामर्थ्यलक्षणमेधा

सिद्धिद्वाराश्रीपरमेश्वरप्रीत्यर्थंमेधाजननाख्यंकर्मकरिष्ये ॥ इतिसंकल्प्यपुण्याहवाचनंकृत्वाअकृत्वावा मेधापरनामकब्रह्मवृक्षपूजांकरिष्ये ॥ वेद्यांपलाशशाखांप्रतिष्ठाप्यतत्रमेधायैनमइतिमंत्रेणावाहनाद्युपचारान्कृत्वायावकसक्तुमिश्रमन्नंमोदकांश्च निवेद्यपुनश्चपूर्ववदभ्यर्च्यब्रह्मचारिणाप्रणमय्यशुद्धजलपात्रोदकेनसेचनंकुर्वताबटुनात्रिःप्रदक्षिणंकारयन्मंत्रंवाचयेत् ॥ ॐ सुश्रवःसुश्रवाअसियथात्वंसुश्रवःसुश्रवाअस्येवंमांसुश्रवःसौश्रवसंकुरु ॥ यथात्वंदेवानांयज्ञस्यनिधिपोस्येवमहंमनुष्याणांवेदस्यनिधिपोभूयासं ॥ प्रतिप्रदक्षिणंमंत्रावृत्तिंप्रणामंचकारयेत् ॥ ततोब्रह्मचारीस्नात्वानवान्यज्ञोपवीताजिनमेखलादंडानुपनयनवत्समंत्रकंधृत्वापुराणानिपलाशसन्निधौविसृज्यपूर्वधृतवाससीगुरवेदत्वामेधामह्यमितिसूक्तंविप्रैःपाठयित्वाअस्यकर्मणःपुण्याहंभवंतोब्रुवंत्वितिस्वस्तिवाचनंकुर्यात् ॥ ॐ मेधांमह्यमंगिरसोमेधांसप्तर्षयोददुः ॥ मेधामिंद्रश्चाग्निश्चमेधांधाताददातुमे ॥ मेधांमेवरुणोराजामेधांदेवीसरस्वती ॥ मेधांमेअश्विनौदेवावाधत्तांपुष्करस्रजा ॥ यामेधाअप्सरस्सुगंधर्वेषुचयन्मनः ॥ दैवीयामानुषीमेधासामामाविशतादिमाम् ॥ यन्मेनोक्तंतद्रमतांशकेयंयदनुब्रुवे ॥ निशामतन्निशामहैमयिव्रतंसहव्रतेषुभूयासंब्रह्मणासंगमेमहि ॥ शरीरंमेविचक्षणंवाङ्मेमधुमद्दुहा ॥ अवृद्धमहमसौसूर्योब्रह्मणानीस्थःश्रुतंमेमाप्रहासीः ॥ मेधांदेवींमनसारेजमानांगंधर्वजुष्टांप्रतिनोजुषस्व ॥ मह्यंमेधांवदमह्यंश्रियंवदमेधावीभूयासमजराजरिष्णु ॥ सदसस्पतिमद्भुतंप्रियमिंद्रस्यकाम्यं ॥ सनिंमेधामयासिषं ॥ यांमेधांदेवगणाःपितरश्चोपासते ॥तयामामेधयामेमेधाविनंकुरु ॥ मेधाव्य१हंसुमनाःसुप्रतीकःश्रद्धामनाःसत्यमतिःसुशेवः ॥ महायशाधारयिष्णुःप्रवक्ताभूयासमस्येस्वधायांप्रयोगे ॥ इतिमेधाजननांतउपनयनप्रयोगः॥

१ इयंवेदिर्गृहस्यैशान्यामुपनयनवेद्यांवासर्वतोद्वादशांगुलात्रिमेखलाकार्या । तत्रपलाशशाखांतदभावेसमूलमार्द्रकुशस्तंबंवारोपयेत् । सं० कौ० ।

## ॥ १३९ ॥ अथमहानाम्नीव्रतम् ॥

श्रीः ॥ जन्मप्रभृतित्रयोदशेवर्षेचौलोचितोदगयनादिकालेपूर्वदिनेब्रह्मचारिणासहाचार्यःसुस्नातोदेशकालोच्चारणांतेएनंब्रह्म
चारिणंमहानाम्नीरध्यापयिष्यमाणोमहानाम्नीव्रतसिद्धिद्वाराश्रीपरमेश्वरप्रीत्यर्थंहोमंकरिष्यइतिसंकल्प्य गणपतिपूजनादि
नांदीश्राद्धांतंकृत्वा परेद्युःकारितवपनस्नानंबद्धशिखंब्रह्मचारिणंसुमुहूर्तेस्वदक्षिणतउपवेश्यविधिवदग्निंप्रतिष्ठाप्य महानाम्नी
व्रतांगहोमेदेवतापरिग्रहार्थमित्यादि कायत्वापरिददामीत्यंतमुपनयनवत्कुर्यात् ॥ तत्रप्रावरणंकाषायंवासःप्रधानहोमेचमहा
नाम्नीव्रतप्रधानाज्यहोमेविनियोगइतिविशेषः । परिददामीतिप्रजापतयेमनसाबटुंसमर्प्यआसनेउपविश्योपनयनोक्तविधिना
मेखलादंडदानंकारयित्वापुराणयज्ञोपवीतादीनिजलेनिक्षिप्यस्विष्टकृदादिहोमशेषंसमाप्यब्रह्मचारिणंप्रतिवदेत् महानाम्नीव्र
तंसंवत्सरंचरेति ॥ सचरिष्यामीत्युक्त्वासंवत्सरंकेशादिधारणंभिक्षाचरणादिव्रतंचरेत् ॥ पूर्णेब्देउदगयनेशुक्लपक्षेबटुसहितो
गुरुर्विविक्तदेशंगत्वातिथ्यादिसंकीर्त्यास्यबटोर्महानाम्नीश्रवणांगभूतव्रतपरिपूर्तिद्वाराश्रीप० होमंकरिष्ये ॥ उपलेपनाद्यग्निप्र
तिष्ठांतेचक्षुषीआज्येनेत्यंतेत्रप्रधानं अग्निं संराधनीं अग्निं अग्निं असूयंतीमनुमतिं प्रदातारं अग्निं वायुं सूर्यंचैतादेवताःकृ
सरान्नेनशेषेणेत्यादिपूर्णपात्रनिधानांते बटुर्होमायस्वभोजनायचपर्याप्ततंडुलान्भिक्षार्जितान्स्थालीपाकविधिनातूष्णींषट्त्रिं
शत्संख्ययानिरुप्यतथैवप्रोक्ष्यस्थाल्यांश्रपयित्वा शृतःस्थालीपाकइतिज्ञापयेत् । ततआचार्योबटुंप्रतिव्रतलोपान्पृच्छेत् ॥
तेनोत्तरेदत्तेलोपगौरवेप्रायश्चित्तंकारयित्वापुनःसंवत्सरव्रतंकारयेत् ॥ शुचिनातेनान्वारब्धआज्यसंस्काराद्याज्यभागांतंकृत्वा
वदानधर्मेणनवभिर्मंत्रैरेकश्रुत्येनजुहुयात् ॥ अग्नावग्निश्चरतिप्रविष्टऋषीणांपुत्रोअधिराजएषः तस्मैजुहोमिहविषाघृतेनमादेवा

नांमोमुहद्भागधेयंमोअस्माकंमामुहद्भागधेयंस्वाहा अग्नयइदं० ॥ यातिरश्चीनिपद्यतेहंविधरणीइति तांत्वाघृतस्यधारयायजे सम्राधनीमहंस्वाहा सम्राधन्याइदं० ॥ यस्यैत्वाकामकामायवयंसम्राज्ञ्यजामहे तमस्मभ्यंकामंदत्वाथेदंत्वंघृतंपिबस्वाहा अ ग्नयइदं०॥ अयंनोअग्निर्वरिवःकृणोत्वयंमृधःपुरएतुप्रभिंदन् अयंशत्रूंजयतुजर्हृषाणोयंवाजंजयतुवाजसातौस्वाहा अग्नय० ॥ असूयंत्यैचानुमत्यैस्वाहा असूयंत्याअनुमत्याइदं०॥ प्रदात्रेस्वाहा प्रदात्रइदं०॥ व्यस्तसमस्तव्याहृतिभिश्चतस्रआहुतीर्हुत्वास्वि ष्टकृदर्थंस्रुच्यवदायतांबर्हिषिनिधायब्रह्मचारिणमाह एतंस्थालीपाकंसर्वमशानेति । सचसर्वमश्नीयात् । भुक्तवंतमाचांतंप्रति ब्रूयात् उपतिष्ठस्वादित्यमिति ॥ ब्रह्मचारीततोपूर्णमंजलिंसिंचेत् ॥ त्वंव्रतानांव्रतपतिरसिव्रतंचरिष्यामितच्छकेयंतेनशकेयंते नराध्यासमित्युपतिष्ठमानः एकरात्रंसंमीलिताक्षोवाग्यतआसित्वातदनंतरदिनेआचार्येणसहसंगमिष्याम्मीतिध्यायेत् ॥ तत आचार्योमीलिताक्षोवाग्यतःबटोर्मुखसहितंशिरोवामकर्णदेशमारभ्यत्रिःप्रदक्षिणंतत्परिहिताहतवाससासंवेष्ट्ययथानतद्वासःप तेत्तथोपायंकृत्वाब्रूयादाचार्यः एतंकालमेवंभूतोस्वपन्भवेति । एतमित्यस्यस्थानेब्रह्मचर्यादिसंकल्पानुसारेणैकरात्रमित्यादिव रेत् नकालमित्यस्यलोपः ॥ ब्रह्मचारीउक्तकालेवश्यकर्तव्यसंध्यावंदनादेरितरत्स्नानभोजनस्वापगमनादिकुर्यात् ॥ आचार्यः प्रैषांतेस्विष्टकृदादिहोमशेषंसमापयेत्संकल्पांतेआचार्योनुवक्ष्यतीतिनिश्चयोत्तरंबहिर्ग्रामादीशान्यांदिशिजनसंचाररहितेशुचौ देशेग्निंप्रतिष्ठाप्यतस्योत्तरतोसिमुदककमंडलुमश्मानंचनिधाय तस्यप्रत्यगुदग्देशेवत्सतरींबध्नीयात् यथाग्निसमीपउच्चार्यमाणः शब्दोवत्सतर्यानसम्यक्श्रूयेत ॥ ततोग्नेःपश्चात्प्रागग्रेषुदर्भेषुआचार्यऐशानीदिगभिमुखउपविशेत् ॥ ततःशिष्योमुखदेशाद्वस्त्र मपसार्यमुखंप्रक्षाल्यकंठस्नानंकृत्वाग्निमाचार्यंचप्रदक्षिणीकृत्याचार्यविधिवत्संगृह्यपश्चादाचार्यस्यतदासनप्रागग्रदर्भेष्वेवमूल

देशेस्वपृष्ठमाचार्यपृष्ठेनसंधायप्रत्यग्दक्षिणांदिशमभिसमीक्षमाणोंकधारणयोपविशेत् ॥ ततोमनसागुरुंवदेत् ॥ ॐ महाना
म्नीर्भोअनुब्रूहीति गुरुरियताकालेनानेनैतदुक्तमितिज्ञात्वातदहर्व्रतलोपान्पृष्ट्वानुतापिनेश्रद्दधानायब्रह्मचारिणेस्वयंनिमीलि
ताक्षोमहानाम्नीर्विदामघवन्विदेत्याधानवर्चः एवाह्येवैवाह्यग्नाइत्यादीनिनवपुरीषपदानिचप्रणवादीनित्रिरुपदिशेत् । शिष्यो
पित्रिःपठेत् ॥ ततोगुरुःशिरोवेष्टनंशिष्यस्योन्मुच्यब्रूयात्आदित्यमीक्षस्वेति ॥ बटुर्मित्रस्यत्वाचक्षुषाप्रतीक्षइतिमंत्रद्वयेनादि
त्यमवेक्षेत ॥ ततोमित्रस्यत्वाचक्षुषानुवीक्षइतिससंभारादिशोनुवेक्षेतपुनरादित्यमीक्षस्वेतिउक्तस्तमीक्षेत ॥ मित्रस्यत्वाचक्षुषा
प्रतिपश्यामियोस्मान्द्वेष्टियंचवयंद्विष्मस्तंचक्षुषोर्हेतुर्ऋच्छत्विति ॥ ततोष्टाभिर्मंत्रैर्भुवमभिमृशेत् ॥ अग्नइळा० संदृशि ॥ भद्रं
कर्णेभीराहूगणोगोतमोविश्वेदेवास्त्रिष्टुप् भूमिस्पर्शनेवि०॥ भद्रंकर्णे० १ शंनइंद्राग्नीवसिष्ठोविश्वेदेवास्त्रिष्टुप् १ स्तुषेजनंभारद्वा
जऋजिश्वोविश्वेदेवास्त्रिष्टुप् १ कयानइतितिसृणांवामदेवइंद्रोगायत्री ३ स्योनापृथिविमेधातिथिर्भूमिर्गायत्री १ ॥ ततोव
त्सतरींगुरवेदत्वाईश्वरार्पणंकृत्वातंडुलभिक्षापूर्वकमुपनयनवद्विवेत्रब्रह्मौदनहोमंकुर्यात् ॥ तत्रमहानाम्न्यध्ययनांगभूतमनुप्रव
चनीयहोमंकरिष्यइतिसंकल्प्याघारावाज्येनेत्यंते सदसस्पतिंमहानाम्नीःऋषींश्चरुणाशेषेणेत्यादिपूर्णपात्रनिधानांतेकृतेभैक्षतं
डुलानांतूष्णींनिर्वापादिश्रपणांतेशृतोब्रह्मौदनइतिनिवेदयेत् ॥ ततोगुरुःशिष्येणान्वारब्धआज्यसंस्काराद्याघारांतंकृत्वा ॥
सदसस्पतिमित्यस्यकाण्वोमेधातिथिःसदसस्पतिर्गायत्री महानाम्नीप्र० होमेवि० सदसस्पति० सदसस्पतयइदं १ ॥ महानाम्नी
भ्यःस्वाहा महानाम्नीभ्य० २ ॥ ऋषिभ्यःस्वाहा ऋषिभ्यइ० ३ ॥ इतितिस्रआहुतीर्दत्वाकर्मशेषंसमाप्यचरुशेषेणब्राह्मणान्भो
जयित्वादक्षिणांदत्त्वावेदसमाप्तिरस्त्वितिवदेत् ॥ तेचवेदसमाप्तिरस्त्वितिवदेयुःईश्वरार्पणंकृत्वाततोभुंजीत॥इतिमहानाम्नी॥

## ॥ १४० ॥ अथमहाव्रतम् ॥

श्रीः ॥ उदगयनादिकालेप्रथमहोमांतेपूर्ववज्जातेसंवत्सरंमहाव्रतमाचरेतिप्रेषितबटुनासंवत्सरंव्रतेकृतेग्रामाद्बहिःशुचिदेशेप्राग
ग्रदर्भेषुप्राङ्मुखउपविशेत् ॥ शिष्योविधिवदभिवादनपूर्वकंमहाव्रतंभोअनुब्रूहीतिवाचावदेत् ॥ अथतंप्राङ्मुखमुपवेश्यअथम
हाव्रतमित्याद्यारण्यकंत्रिर्ब्रूयात् ॥ शिष्योपित्रिःपठित्वापूर्ववन्मंत्रद्वयेनादित्यमीक्षेत ॥ ततःपूर्ववदग्नइळेत्यादिभिर्भूमिस्पर्शनं
ततःशिष्यकर्तृकंनिवेदनांतमाचार्यकर्तृकश्चहोमःपूर्ववत् ॥ महानाम्नीस्थानेमहाव्रतायस्वाहेत्याहुतिः ॥ इतिमहाव्रतम् ॥

## ॥ १४१ ॥ अथोपनिषद्व्रतम् ॥

श्रीः ॥ सर्वंमहाव्रतवत्संवत्सरमुपनिषद्व्रतंचरेतिबटुंप्रैषः ॥ उपनिषदंभोअनुब्रूहीतितदुक्तिः ॥ अनुप्रवचनीयहोमेउपनिषदेस्वा
हेतिमध्यमाहुतिः ॥ आचार्याभावेशिष्यःस्वयमेवमहाव्रताद्यध्ययनादिकंकुर्यात् ॥ इत्युपनिषद्व्रतम् ॥ ॥ छ ॥

## ॥ १४२ ॥ अथगोदानव्रतम् ॥

श्रीः ॥ तच्चजन्मतःषोडशेवर्षेचौलार्हतिथ्यादिकालेतद्वद्देवकार्यं ॥ अस्यब्रह्मचारिणोगोदानव्रतंकरिष्यइतिसंकल्प्यगणेशपूजा
दिनांदीश्राद्धांतेसूर्याग्निंप्रतिष्ठाप्य नांकेसंस्कार्यस्योपवेशनंमातुरुत्तरतोबटुःतदुत्तरतस्तदन्वारब्धआचार्यआज्यहोमांतंकृत्वा
शीतोष्णजलानयनादिकुर्यात्॥अदितिःश्मश्रूणिवपत्वित्यूहितमंत्रेणवामश्मश्रुदेशमारभ्यप्रदक्षिणंश्मश्रूणामेवत्रिःछेदनं दक्षि
णोत्तरश्मश्रुभागयोरेवकुशपत्रनिधानादीनिसप्तछेदनानि सकुशश्मश्रूणामेवछेदनादिगोमयनिधानांतंक्षुरावमार्जनमंत्रेवप्तावप
सिश्मश्रूणि शुंधिशिरोमुखंमास्यायुरित्यूहः॥नापितप्रैषेविशेषःअक्षण्वन्कुशलीकेशश्मश्रुलोमनखान्युदक्संस्थानिकुर्विति॥नापे

तस्ताभिरद्भिः श्मश्रूणामुदक्संस्थवापनंकृत्वातथैवशिरसिकेशानामुपपक्ष्मादिलोम्नांवपनंनखनिकृंतनंचकुर्यात्॥ ततःस्नातंबटुं दक्षिणतउपवेश्यहोमशेषंसमाप्यपात्रदानांतेगुरुणाकृतेहःशेषंवाग्यतोबटुस्तिष्ठन्नेवनयेत् ॥ संध्यावंदनांतेगुरोरंतिकेवरंददामी तिवाचंविसृज्यगोमिथुनंदक्षिणांदद्यात् ॥ ततःपरेद्युर्गुरुणागोदानव्रतमाचरेत्युक्तःकेशादिधारणंकुर्वन्संवत्सरंब्रह्मचारिव्रतंकु र्यात् ॥ इतिगोदानव्रतम् ॥ ॥ छ ॥ ॥ छ ॥

## ॥ १४३ ॥ अथब्रह्मचारिव्रतलोपप्रायश्चित्तम् ॥

श्रीः ॥ ब्रह्मचारीद्विराचम्यप्राणानायम्यदेशकालौसंकीर्त्यममशौचाचमनसंध्यावंदनदर्भभिक्षाग्निकार्यराहित्यशूद्रादिस्पर्शन कौपीनकटिसूत्रयज्ञोपवीतमेखलादंडाजिनत्यागदिवास्वापछत्रधारणपादुकाध्यारोहणमालाधारणोद्वर्तनानुलेपनांजनजलक्री डाद्यूतनृत्यगीतवाद्याद्यभिरतिपाखंडादिसंभाषणपर्युषितभोजनादिब्रह्मचारिव्रतलोपजनितसकलदोषपरिहारार्थं आज्यहोम पूर्वकंकृच्छ्रत्रयममुकप्रत्याम्नायेनाहमाचरिष्ये ॥ अथवाशौचाचमनादिसर्वब्रह्मचर्यनियमव्रतलोपप्रायश्चित्तद्वाराश्रीपरमेश्वर प्रीत्यर्थंहोमपूर्वकंकृच्छ्रत्रयमाचरिष्ये इतिवासंकल्प्य स्थंडिलकरणादिलौकिकाग्नि ( विट ) प्रतिष्ठांतंकृत्वान्वाधानंकुर्यात्॥ क्रियमाणेब्रह्मचर्यव्रतलोपप्रायश्चित्तहोमेदेवतापरिग्रहार्थमन्वाधानंकरिष्यइत्यादिचक्षुषीआज्येनेत्यंतमुक्त्वा अत्रप्रधानं अग्निं वायुं सूर्यं प्रजापतिं अग्निंपृथिवींमहांतं वायुमंतरिक्षंमहांतं आदित्यंदिवंमहांतं चंद्रमसंनक्षत्राणिदिशोमहांतं अग्निं विश्व वेदसं विभावसुंशतक्रतुं अग्निं अग्निं अग्निं वायुं सूर्यं प्रजापतिंचैकैकयाज्याहुत्याशेषेणस्विष्टकृतमित्याद्याज्यभागांतंकृत्वा॥ ॐ भूःस्वाहा अग्नयइदं० ॥ ॐ भुवःस्वाहा वायवइदं० ॥ ॐ स्वःस्वाहा सूर्यायेदं० ॥ ॐ भूर्भुवःस्वःस्वाहा प्रजापतयइ

दं० ॥ ॐ भूरग्नयेचपृथिव्यैचमहतेचस्वाहा अग्नयेपृथिव्यैमहतेचेदंनमम ॥ ॐ भुवोवायवेचांतरिक्षायचमहतेचस्वाहा वायवें
तरिक्षायमहतेचेदं० ॥ ॐ सुवरादित्यायचदिवेचमहतेचस्वाहा आदित्यायदिवेमहतेचेदं० ॥ ॐ भूर्भुवःसुवश्चंद्रमसेचनक्ष
त्रेभ्यश्चदिग्भ्यश्चमहतेचस्वाहा चंद्रमसेनक्षत्रेभ्योदिग्भ्योमहतेचेदं० ॥ ॐ पाहिनोअग्नएनसेस्वाहा अग्नयइदं० ॥ ॐ पाहि
नोविश्ववेदसेस्वाहा विश्ववेदसइदं० ॥ ॐ यज्ञंपाहिविभावसोस्वाहा विभावसवइदं० ॥ ॐ सर्वंपाहिशतक्रतोस्वाहा शत
क्रतवइदं० ॥ ॐ पुनरूर्जानिवर्तस्वपुनरग्नइषायुषा ॥ पुनर्नःपाहिविश्वतःस्वाहा अग्नयइदं० ॥ ॐ सहरय्यानिवर्तस्वाग्नेपि
न्वस्वधारया ॥ विश्वप्स्न्याविश्वतस्परिस्वाहा अग्नयइदं० ॥ ॐ भूःस्वाहा अग्नयइदं० ॥ ॐ भुवःस्वाहा वायवइदं० ॥
ॐ स्वःस्वाहा सूर्यायेदं० ॥ ॐ भूर्भुवःस्वःस्वाहा प्रजापतयइदं० ॥ एवमष्टादशाज्याहुतीर्हुत्वाकृच्छ्रप्रत्याम्नायत्वेनकल्पित
गोदानसहस्रतिलहोमायुतगायत्रीजपादिष्वन्यतमंचरित्वास्विष्टकृदादिहोमशेषंसमापयेत् ॥ एतदल्पधर्मलोपेप्रायश्चित्तं ॥
बहुधर्मलोपेतुप्रायश्चित्तविशेषऋग्विधानेशौनकेनोक्तः ॥ तंबोधियराजपेन्मंत्रंलक्षंचैवशिवालये ॥ ब्रह्मचारीस्वधर्मंचन्यूनंचेत्पू
र्णमेवतदिति ॥ महानाम्न्यादिव्रतलोपपक्षेप्रत्येकंगायत्र्याशतमष्टाविंशतिमष्टौवाज्याहुतीर्हुत्वा ॥ एकैकंकृच्छ्रंचरित्वाशुभदि
नेमहानाम्नीव्रतंकृत्वातथैवमहाव्रतादित्रयंकृत्वागुरवेदक्षिणांदत्वातदनुज्ञातःसमावर्तनंकुर्यात् ॥ महानाम्न्यादिव्रतेषुलुप्तेषुता
रतम्येनत्रीनषड्द्वादशवाकृच्छ्रान्कृत्वापुनर्व्रतंप्रारभेतेतिस्मृत्यर्थसारे ॥ इतिब्रह्मचारिव्रतलोपप्रायश्चित्तम् ॥ ॥ छ ॥

## ॥ १४४ ॥ अथसमावर्तनम् ॥

श्रीः ॥ ब्रह्मचारीकृतनित्यक्रियःकृतमातरपितृकार्यःआचम्यप्राणानायम्यदेशकालौसंकीर्त्यममगृहस्थाद्याश्रमांतरप्राप्तिद्वाराश्री

परमेश्वरप्रीत्यर्थंसमावर्तनंकरिष्ये ॥ तदंगभूतंगणपतिपूजनंपुण्याहवाचनंमातृकापूजनंनांदीश्राद्धंचकरिष्येइतिसंकल्प्य नांदीश्राद्धांतंकृत्वासमिधमुपरिनिधाय स्थंडिलोल्लेखनादिसूर्यनामाग्निप्रतिष्ठापनांतंकृत्वापुनर्देशकालौनिर्दिश्यक्रियमाणेसमा वर्तनहोमेदेवतापरिग्रहार्थमित्याद्याघारावाज्येनेत्यंतमुक्त्वात्रप्रधानंत्रिरग्निंपवमानंप्रजापतिंचैताःप्रधानदेवताआज्येन अग्नि मूर्ध्वसमिधाविश्वान्देवान्दशसमिद्भिः शेषेणस्विष्टकृतमित्यादिपूर्णपात्रनिधानांतंकृत्वाउदगग्नेरास्तीर्णेषुदर्भेषुव्रीहियवमाष तिलैःपृथक्पूरितानिचत्वारिशरावाणिक्रमेणैकैकशःप्राक्संस्थान्यासादयेत् ॥ क्षुरादिसंभारांश्चाग्नेरुत्तरतआसादयेत् ॥ ततः प्रत्यगग्नेरासीनस्यकर्तुर्दक्षिणतोमाताप्राङ्मुख्यासीत ॥ तस्याःपुरतोऽग्नेःपश्चादेकस्मिन्शरावेशमीपर्णान्यपरस्मिन्नानडुहंगोम यंचासादयेत् ॥ ततो ब्रह्मैकविंशतिकुशपिंजूलानिदधानोमातुर्दक्षिणतस्तिष्ठेत् ॥ ततोब्रह्मचारीआघारांतंकृत्वा ॥ अग्नआयूं षीतितिसृणांशतंवैखानसाऋषयः अग्निःपवमानोदेवता गायत्रीछंदःसमावर्तनप्रधानाज्यहोमेविनियोगः ॥ ॐअग्नआयूंषिपव सुआसुवोर्जमिषंचनः ॥ आरेबाधस्वदुच्छुनांस्वाहा ॥ अग्नयेपवमानायेदंनमम ॥ ॐ अग्निर्ऋषिःपवमानःपांचजन्यःपुरोहितः ॥ तमीमहेमहागयंस्वाहा ॥ अग्नयेपवमाना० ॥ ॐअग्नेपवस्वस्वपाअस्मेवर्चःसुवीर्यं ॥ दधद्रयिंमयिपोषंस्वाहा ॥ अग्नयेपवमाना० ॥ प्रजापतेहिरण्यगर्भःप्रजापतिस्त्रिष्टुप् ॥ समावर्तनप्रधा० ॥ ॐ प्रजापतेन० रयीणांस्वाहा ॥ प्रजापतयइदंनमम ॥ ततोब्रह्मा चौलवच्छीतोष्णांबुनीएकीकृत्यनवनीतेनदधिद्रप्सेनवामिश्रयित्वाब्रह्मचारिणोवामश्मश्रुप्रदेशमारभ्यप्रदक्षिणं ॥ ॐ अदितिः श्मश्रूणिवपत्वापउंदंतुवर्चसेइतिमंत्रावृत्त्यात्रिवारंश्मश्रूण्येवक्लेदयित्वाकुशपिंजूलत्रयमादायब्रह्मचारिणोदक्षिणश्मश्रुभागेप श्चिमाग्रंनिदध्यात् ॥ तदाब्रह्मचारी ॥ ॐओषधेत्रायस्वमांइतिजपेत् ॥ ततोब्रह्मातेषुकुशांकुरेषुक्षुरंनिदध्यात् ॥ तदाब्रह्मचारी ॥

ॐस्वधितेमामाहिंसीः ॥ ॐयेनावपत्सविताक्षुरेणसोमस्यराज्ञोवरुणस्यविद्वान् ॥ तेनब्रह्माणोवपतेदंमआयुष्मान्जरदष्टिर्यथासं ॥ इतिजपेत् ॥ ततोब्रह्मासश्मश्रुकांस्तान्कुशांश्छित्त्वाप्रागग्रान्शमीपर्णैःसहैकीकृत्यमातुःकरेदद्यात् ॥ साचतानानडुहेगोमयेनिदध्यात् ॥ एवंपुनस्त्रिः ॥ छेदनमंत्रेविशेषः ॥ ॐयेनधाताबृहस्पतेरग्नेरिंद्रस्यचायुषेवपत् ॥ तेनमआयुषेवपामिसुश्लोक्यायस्वस्तये ॥ इतिद्वितीये ॥ ॐ येनभूयश्चरात्र्यांज्योक्चपश्यामिसूर्यं ॥ तेनमआयुषेवपामिसुश्लोक्यायस्वस्तये ॥ इतितृतीये॥ चतुर्थेतु ॥ ॐ येनावपत्सविता० ॥ ॐ येनधाता० ॥ ॐ येनभूयश्चेतित्रयोपिमंत्राः ॥ एवमेवोत्तरश्मश्रुभागेप्याद्यानित्रीणिछेदनानिकुर्यात् नतुसर्वैर्मंत्रैश्चतुर्थं ॥ ततः ॐ यत्क्षुरेणमर्चयतासुपेशसावप्तावपसिश्मश्रूणि ॥ शुंधिशिरोमुखंमामआयुःप्रमोषीरित्यग्रतआरभ्यामूलंक्षुरधारांनिमृज्यनापितमाहूय शीतोष्णाभिरद्भिरब्वर्थंकुर्वाणोक्षण्वन्कुशलीकेशश्मश्रुलोमनखान्युदक्संस्थानिकुर्वितिप्रैषेणानुशास्यतंप्रैषार्थंचावबोध्य नापितेनपूर्वावशेषितशीतोष्णांबुभिरार्द्रीकृत्यकेशश्मश्रुलोमनखान्युदक्संस्थानिवापयित्वा करंजबीजपिष्टेनस्वशरीरमुद्वर्त्यशीतोष्णैरुदकैःस्नात्वा द्विराचम्यपुनर्वह्नेरंतिकंगत्वावस्त्रद्वयंधारयेत् ॥ तत्रमंत्रः ॥ युवंवस्त्राणीत्यस्यौचथ्योदीर्घतमामित्रावरुणौत्रिष्टुप् ॥ वासोधारणेवि० ॥ ॐ युवंवस्त्राणिपीवसावसाथेयुवोरच्छिद्रामंतवोहसर्गाः ॥ अवातिरतमनृतानिविश्वऋतेनमित्रावरुणासचेथे ॥ इतिएकंवस्त्रंसमंत्रंपरिधायमंत्रावृत्त्यान्यद्वस्त्रंप्रावृणुयात् ॥ ततोद्विराचम्यपाणिनांजनमादाय ॥ ॐ अश्मनस्तेजोसिचक्षुर्मेपाहि इतिमंत्रावृत्त्यासव्यदक्षिणेचक्षुषीक्रमेणांक्त्वा॥ ॐ अश्मनस्तेजोसिश्रोत्रंमेपाहि ॥ अत्रदक्षिणंपूर्वंपश्चात्सव्यंमंत्रमावृत्योक्त्वाकुंडलेधृत्वा कुंकुमाद्यनुलिप्तपाणिभ्यांमुखादिसर्वांगान्यनुलिप्यकरौप्रक्षाल्य ॥ ॐ अनार्तोस्यनार्तोहंभूयासं इत्यनेनशिरसिस्रजंबद्ध्वा ॥ ॐ देवानांप्रतिष्ठेस्थःसर्वतोमापातं

इत्युपानहावारुह्य ॥ ॐ दिवश्छद्मासि इतिमंत्रेणछत्रंधृत्वा ॥ ॐ वेणुरसिवानस्पत्योसिसर्वतोमापाहि इतिवैणवंदंडंगृहीत्वा ॥ आयुष्यमितिसूक्तेनसुवर्णमणिंकंठेबध्नीयात् ॥ आयुष्यमितिसूक्तस्यसनकसनंदनसनातनादयऋषयः ॥ हिरण्यंदेवता ॥ आद्याश्चतस्त्रोनुष्टुभःपंचमीत्रिष्टुप्षष्ठ्यनुष्टुप्सप्तम्यतिशक्करीअष्टमीनवम्यौत्रिष्टुभौदशम्यनुष्टुबेकादशीपंक्तिः ॥ कंठेमणिधारणेविनियोगः ॥ ॐ आयुष्यंवर्चस्यंरायस्पोषमौद्भिदं ॥ इदंहिरण्यंवर्चस्वज्जैत्रायाविशतादिमाम् ॥ उच्चैर्वाजिपृतनाषाट्सभासाहंधनंजयं ॥ सर्वाःसमग्राऋद्धयोहिरण्येस्मिन्समाहिताः ॥ शुनमहंहिरण्यस्यपितुर्नामेवजग्रभ ॥ तेनमांसूर्यत्वचमकरंपुरुषुप्रियं ॥ सम्राजंचविराजंचाभिष्टिर्याचमेध्रुवा ॥ लक्ष्मीराष्ट्रस्ययामुखेतयामामिंद्रसंसृज ॥ अग्नेःप्रजातंपरियद्धिरण्यममृतंजज्ञेअधिमर्त्येषु ॥ यएनद्वेदसइदेनदर्हतिजरामृत्युर्भवतियोबिभर्ति ॥१॥ यद्वेदराजावरुणोयदुदेवीसरस्वती ॥ इंद्रोयद्वृत्रहावेदतन्मेवर्चसआयुषे ॥ नतद्रक्षांसिनपिशाचास्तरंतिदेवानामोजःप्रथमजंह्येतत् ॥ योबिभर्तिदाक्षायणाहिरण्यंसदेवेषुकृणुतेदीर्घमायुःसमनुष्येषुकृणुतेदीर्घमायुः ॥ यदाबध्नन्दाक्षायणाहिरण्यंशतानीकायसुमनस्यमाना ॥ तन्नआबध्नामिशतशारदायायुष्मानजरदष्टिर्यथासत् ॥ घृतादुल्लुप्तंमधुमत्सुवर्णंधनंजयंधरुणंधारयिष्णु ॥ ऋणक्सपत्नादधरांश्चकृण्वदारोहमांमहतेसौभगाय ॥ प्रियंमाकुरुदेवेषुप्रियंराजसुमाकुरु ॥ प्रियंविश्वेषुगोप्त्रेषुमयिधेहिरुचारुचं ॥ अग्निर्येनविराजतिसूर्योयेनविराजति ॥ विराज्येनविराजतितेनास्मान्ब्रह्मणस्पतेविराजसमिधंकुरु ॥ ततःप्रादक्षिण्येनोष्णीषेणशिरःसंवेष्ट्यउपानहौसंत्यज्यउपरिनिहितांप्रागुक्तांसमिधंगृहीत्वातिष्ठन्नेव ॥ स्मृतंचमइत्यादिमंत्राणांप्रजापतिर्ऋषिःअग्निर्देवताअष्टीछंदः ॥ समिदाधाने० ॥ ॐ स्मृतंचमेअस्मृतंचमेतन्मउभयव्रतं ॥ निंदाचमेअनिंदाचमेतन्मउभयव्रतं ॥ विद्याचमेअविद्याचमेतन्मउभयव्रतं ॥ श्रद्धाचमेअश्र

द्धाचमेतन्मउभयव्रतं ॥ प्रज्ञाचमेअप्रज्ञाचमेतन्मउ० ॥ इष्टंचमेअनिष्टंचमेतन्मउ० ॥ दत्तंचमेअदत्तंचमेतन्मउ० ॥ अधी तंचमेअनधीतंचमेतन्म० ॥ कृतंचमेअकृतंचमेत० ॥ सत्यंचमेअसत्यंचमेत० ॥ श्रुतंचमेअश्रुतंचमेत० ॥ व्रतंचमेअव्रतंच मेतन्मउभयव्रतं ॥ यदग्नेसेंद्रस्यसप्रजापतिकस्यसऋषिकस्यसऋषिराजन्यस्यसपितृकस्यसपितृराजन्यस्यसमनुष्यस्यसमनुष्य राजन्यस्यसाकाशस्यसातीकाशस्यसानूकाशस्यसप्रतीकाशस्यसदेवमनुष्यस्यसगंधर्वाप्सरस्कस्यसहारण्यैश्चपशुभिर्ग्राम्यैश्चयंम आत्मनआत्मनिव्रतंतन्मेसर्वव्रतमिदमहमग्नेसर्वव्रतोभवामिस्वाहा अग्नयइदंनमम ॥ इतिहुत्वा ॥ उपविश्यान्याः दशसमिधोम माग्नेइतिसूक्तेनप्रत्यृचमृगंतेप्रावादध्यात्पश्चात्स्वाहाकारमुच्चारयेत् ॥ ममाग्नेवर्चइतिदशर्चस्यसूक्तस्यविहव्यऋषिःविश्वेदेवादेव ता त्रिष्टुप्छंदः अंत्याजगती ॥ समिदाधानेविनियोगः ॥ ॐ ममाग्नेवर्चोविहवेष्वस्तुवयंत्वेंधानास्तन्वंपुषेम ॥ मह्यंनमंतांप्र दिशश्चतस्रस्त्वयाध्यक्षेणपृतनाजयेमस्वाहा ॥ विश्वेभ्योदेवेभ्यइदंनमम ॥ १ ॥ एवमग्रेपिसर्वत्र ॥ ॐ ममदेवाविहवेसंतुस र्वइंद्रवंतोमरुतोविष्णुरग्निः ॥ ममांतरिक्षमुरुलोकमस्तुमह्यंवातःपवतांकामेअस्मिन्स्वाहा ॥२॥ ॐ मयिदेवाद्रविणमायजंतां मय्याशीरस्तुमयिदेवहूतिः ॥ दैव्याहोतारोवनुषंतपूर्वेरिष्टाःस्यामतन्वासुवीराःस्वाहा ॥ ३ ॥ ॐ मह्यंयजंतुममयानिहव्याकू तिःसत्यामनसोमेअस्तु ॥ एनोमानिगांकतमच्चनाहंविश्वेदेवासोअधिवोचतानःस्वाहा ॥ ४ ॥ ॐ देवीःषळुर्वीरुरुनःकृणोत विश्वेदेवासइहवीरयध्वं ॥ माहास्महिप्रजयामातनूभिर्मारधामद्विषतेसोमराजन्स्वाहा ॥ ५ ॥ ॐ अग्नेमन्युंप्रतिनुदन्परेषाम

---

१ अत्रैवमुक्तेपिममाग्नइत्यादिदशमंत्रैःस्वाहाकारसमकालमेवदशसमिधोजुहुयात् । एवंच 'ममाग्नेदशभिर्हुत्वास्वाहाकारमृगंततः' इत्यस्याःकारिकायाः 'पूर्वमग्नौसमिधंहुत्वापश्चात्स्वाहाकारमुच्चारयेत्' इत्यर्थकल्पनमसमंजसं । सर्वत्रऋगंतस्वाहाकारयोरविच्छेदादितिकौस्तुभकाराशयः ॥

दब्धोगोपाःपरिपाहिनस्त्वं ॥ प्रत्यंचोयंतुनिगुतःपुनस्तेऽमैषांचित्तंप्रबुधांविनेशत्स्वाहा ॥ ६ ॥ ॐ धाताधातॄणांभुवनस्यय स्पतिर्देवंत्रातारमभिमातिषाहं ॥ इमंयज्ञमश्विनोभाबृहस्पतिर्देवाःपांतुयजमानंन्यर्थात्स्वाहा ॥७॥ ॐउरुव्यचानोमहिषःश र्मयंसदस्मिन्हवेपुरुहूतःपुरुक्षु ॥ सनःप्रजायैहर्यश्वमृळयेंद्रमानोरीरिषोमापरादाःस्वाहा ॥ ८ ॥ ॐ येनःसपत्नाअपतेभवंत्विं द्राग्निभ्यामवबाधामहेतान् ॥ वसवोरुद्राआदित्याउपरिस्पृशंमोग्रंचेत्तारमधिराजमक्रन्त्स्वाहा ॥ ९ ॥ ॐ अर्वांचमिंद्रममुतो हवामहेयोगोजिद्धनजिदश्वजिद्यः ॥ इमंनोयज्ञंविहवेजुषस्वास्यकुर्मोहरिवोमेदिनंत्वास्वाहा ॥ १० ॥ इति ॥ ततःस्विष्टकृ दादिहोमशेषंसमापयेत् ॥ ततःस्नातकोनैमित्तिकंविनानक्तंनग्नश्चनस्नास्यामिनग्नांस्त्रियंनेक्षिष्ये अन्यत्रमैथुनात् वर्षतिनधावि ष्यामि वृक्षंनारोक्ष्यामि कूपंनावरोक्ष्यामि नबाहुभ्यांनदींतरिष्यामि प्राणसंशयंनाभ्यापत्स्ये इत्येवंसंकल्पयेत् ततःकौपीनं मेखलांचविसृजेत् ॥ ( समावर्तनानंतरंपूर्वमृतानांत्रिरात्रमाशौचं ) ॥ इतिसमावर्तनं ॥ ॥ छ ॥

## ॥ १४५ ॥ अथश्रीपूजनादिशांतिः ॥

श्रीः ॥ यजमानःआचम्यपवित्रपाणिःप्राणानायम्यदेशकालौसंकीर्त्य अस्यकुमारस्योपनयने ( कन्यायाउद्वाहेवा ) संस्कार्यज ननीरजोदोषोपस्थितिसूचितसकलानिष्टनिरासपूर्वकशुभफलप्राप्तिद्वाराश्रीपरमेश्वरप्रीत्यर्थंश्रीपूजनादिशांतिंकरिष्ये ॥ आदौ निर्विघ्नतासिद्ध्यर्थंगणपतिपूजनंपुण्याहवाचनंचकरिष्येइतिसंकल्प्यकृत्वा ॥ गोत्रोच्चारपूर्वकमाचार्यंवृत्वासंपूज्यआचार्यःक

१ चौलेचव्रतबंधेचविवाहेयज्ञकर्मणि ॥ भार्यारजस्वलायस्यप्रायस्तस्यनशोभनं ॥ आपदि ॥ श्रियंसंपूज्यविधिवत्ततोमंगलमारभेत् ॥ अलाभेसुमुहूर्ते स्यरजोदोषेचसंगते ॥ श्रियंसंपूज्यतत्कुर्यात्पाणिग्रहणमंगलं ॥ वधूवरमात्रोर्देवतोत्थापनात्प्राग्रजसिशुद्ध्यंतेऽसंभवेपूर्ववाऐरिणीदानदेवतोत्थापनेकार्ये ॥

मेसंकल्प्यप्रादेशकरणांतंकृत्वा रंगवल्ल्याद्यलंकृतेऐशानप्रदेशेमहीद्यौः० इत्यादिभिर्मंत्रैर्विधिवत्कलशंसंस्थाप्यतदुपरिपूर्णादर्वी तिपात्रंनिधायतदुपर्यग्न्युत्तारणपूर्वकंसौवर्णप्रतिमायां ॥ हिरण्यवर्णामित्यस्यआनंदकर्दमचिक्लीतेंदिरासुताःश्रीरनुष्टुप् श्र्यावा हनेविनियोगः ॥ ॐ हिरण्यवर्णां० ऋ० १ ॥ ॐ भूर्भुवःस्वःश्रियैनमःश्रियमावाहयामिइत्यावाह्यश्रीसूक्तेनषोडशोपचारैः पूजयेत् ॥ ततःस्थंडिलेोल्लेपनाद्यग्निप्रतिष्ठांतंकृत्वासमिद्द्वयमादाय क्रियमाणेश्रीपूजनशांतिहोमेदेवतापरिग्रहार्थमित्यादिचक्षु षीआज्येनेत्यंतमुक्त्वात्रप्रधानं ॥ श्रियंश्रीसूक्तेनप्रत्यृचंपायसाहुत्याशेषेणस्विष्टकृतमित्याद्याज्यभागांतंकृत्वा प्रधानहोमः ॥ यथा—हिरण्यवर्णामितिपंचदशर्चस्यसूक्तस्यआनंदकर्दमचिक्लीतेंदिरासुताऋषयः श्रीरग्निश्चेत्युभेदेवते आद्यास्तिस्रोऽनुष्टुभः चतुर्थीप्रस्तारपंक्तिःपंचमीषष्ठ्यौत्रिष्टुभौ ततोष्टावनुष्टुभः अंत्याप्रस्तारपंक्तिः श्रीमहालक्ष्मीप्रीत्यर्थेपायसहोमेविनियोगः ॥ ॐ हिरण्यवर्णां० इत्यादिपंचदशर्ग्भिःप्रत्यृचमेकैकांपायसाहुतिंहुत्वा स्विष्टकृदादिहोमशेषंसमाप्यस्थापितकलशोदकेनश्री सूक्तेनयजमानमभिषिच्यआवाहितदेवताःपंचोपचारैःसंपूज्य आचार्यायगांदक्षिणांदत्वापीठदानादिचकृत्वायस्यस्मृत्येतिवि ष्णुस्मरणंपूर्वकंकर्मेश्वरार्पणंकृत्वायथाशक्तिभूयसींदक्षिणांदत्वाशिषोग्राह्याः ॥ अस्मिन्कर्मणिदशत्रयोवाब्राह्मणाभोज्याः ॥

इतिश्रीपूजनादिशांतिः ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥

## ॥ १४६ ॥ अथप्रतिकूलदोषशांतिः ॥

श्रीः ॥ कर्ताआचमनादिदेशकालस्मरणांते ममपुत्रस्यकन्यायावाविवाहनिश्चयोत्तरंअमुकस्यमृत्युवशेनोपस्थितप्रतिकूलदोष सूचितसकलारिष्टपरिहारपूर्वकंदीर्घायुःपुत्रपौत्रादिसुखैश्वर्यप्राप्तिद्वाराश्रीपरमेश्वरप्रीत्यर्थंगर्गोक्तांशांतिंकरिष्ये ॥ तदंगगणप

तिपूजनपुण्याहवाचनाचार्यवरणानिकृत्वाआचार्यःप्रादेशकरणांतेपीठादौप्रतिमासुमध्ये ॥ हिरण्यवर्णामितिपंचदशर्चस्यानंद कर्दमचिक्लीतेंदिरासुताःश्रीरनुष्टुप् पंचमीषष्ठ्यौत्रिष्टुभौचतुर्थ्यंत्येप्रस्तारपंक्ती श्रीपूजनेवि० इतिश्रीसूक्तेनश्रियं ॥ इदंविष्णुः काण्वोमेधातिथिर्विष्णुर्गायत्री ॥ विष्ण्वावाहने०॥ गौरीर्मिमायौचथ्योदीर्घतमाउमाजगती ॥ उमावाहनेवि०॥ त्र्यंबकंमैत्रावरुणिर्वसिष्ठोरुद्रोनुष्टुप् ॥ रुद्रावा० ॥ परंमृत्योःसंकुसुकःकालस्त्रिष्टुप् ॥ मृत्व्यावाहनेवि० ॥ इतिदेवताआवाह्यषोडशोपचारैः संपूज्यतत्पश्चिमतःस्थंडिलेग्निंप्रतिष्ठाप्यध्यात्वान्वाधानेचक्षुर्षीआज्येनेत्यंतेअग्निंप्रधानदेवंदूर्वातिलाज्यचरुभिःप्रतिद्रव्यमष्टोत्तरशतसंख्याहुतिभिःअग्निंवायुंसूर्यंप्रजापतिंचाज्येनशेषेणेत्याज्यभागहोमांते ॥ ॐभूःस्वाहामृत्युर्नश्यतुसुखायवर्धतांस्वाहा इतिमंत्रेणोक्तद्रव्यैरुक्तसंख्यहोमंकृत्वासमस्तव्याहृतिभिराज्यंहुत्वास्विष्टकृद्धोमादिशेषंसमाप्यदेवतोत्तरपूजांकुर्यात् ॥ ततोयजमानआचार्यंसंपूज्यगांविसर्जितदेवतापीठंचतस्मैदत्त्वाविप्रान्संभोज्यभूयसींदत्त्वाशांतिंवाचयित्वाकर्मसमापयेत् ॥ इतिप्रति०

## ॥ १४७ ॥ अथवाग्दानप्रयोगः ॥

श्रीः ॥ वरपित्रादिप्रहिताश्चत्वारोष्टौवाप्रशस्तवेषाःपुरंध्रीभिर्मंगलगीततूर्यैश्चसहशकुनदर्शनपूर्वकन्यागृहमेत्यशुभेसवस्त्रपीठासनेप्राङ्मुखींसालंकारांसुवेषांकन्यामुपवेश्यतद्धस्तेफलतांबूलादिदत्वातत्पित्रादिपुरतःश्रीगणपत्यादिस्मरणपूर्वकं प्राङ्मुखाःप्रत्यङ्मुखावा अमुकप्रवरान्वितामुकगोत्रोत्पन्नायामुकप्रपौत्रायामुकपौत्रायामुकपुत्रायामुकनाम्नेवरायअमुकप्रवरोपेताममुकगोत्रोत्पन्नाममुकप्रपौत्रीममुकपौत्रीममुकपुत्रीममुकनाम्नींकन्यांभार्यात्वायवृणीमहेइतिब्रूयुः ॥ अथदाताभार्याज्ञातिबंध्वनुमतिंकृत्वावृणीध्वमितित्विदेत् ॥ एवंपुनर्द्विःप्रयुज्यप्रदास्यामीतिचोच्चैस्त्रिर्वदेत् ॥ ततोवरपित्रादिर्गंधाक्षतशुभवस्त्रयुग्मभूषणतांबूल

पुष्पादिभिःकन्यांपूजयेत्संप्रदायागतमंत्रैः ॥ ततःकन्यादाताप्राङ्मुखःकन्यावामतउपविश्य आचम्यदेशकालौस्मृत्वा करिष्य माणविवाहांगभूतंवाग्दानमहंकरिष्ये ॥ तदंगंगणपतिपूजनंवरुणपूजनंचकरिष्यइतिसंकल्प्य गणानांत्वेतिगणपतिंपूजयित्वा महीद्यौरित्यादिमंत्रैःकलशपूजनादिचकृत्वा स्वस्थानेकन्यापूजयितारमुपवेश्यस्वयंतत्प्राच्यांप्रत्यङ्मुखउपविश्यतंगंधतांबूल दानादिनापूजयेत्सचदातारं ॥ ततोदाताआचारतोहरिद्राखंडंपंचदृढपूगफलानिचगंधाक्षतालंकृतानिगृहीत्वाऽमुकप्रवरान्वि तायामुकगोत्रोत्पन्नायामुकप्रपौत्रायामुकपौत्रायामुकपुत्रायामुकनाम्नेवराय अमुकप्रवरान्वितामुकगोत्रोत्पन्नाममुकप्रपौत्रीम मुकपौत्रीममुकस्यममपुत्रीममुकनाम्नीमिमांकन्यांज्योतिर्विदादिष्टेसुमुहूर्तेदास्ये इतिवाचासंप्रददइतिचोक्त्वा ॥ अव्यंगेऽपति तेऽक्लीबेदशदोषविवर्जिते ॥ इमांकन्यांप्रदास्यामिदेवाग्निद्विजसन्निधावितिवरपित्रादिवस्त्रप्रांतेतानिपूगफलानिप्रक्षिप्यप्रति ष्ठामंत्रेणतदस्त्वित्यादिनावस्त्रेबद्धाग्रंथिंचंदनेनचर्चयेदित्याचारप्राप्तं ॥ ततोहरिद्राखंडंपंचपूगफलानितथैववरपित्रादिर्गृही त्वामुकगोत्रामुकवरविषयेभवंतोनिश्चिताभवंत्वितिदातृवस्त्रप्रांतेप्रक्षेपादिकुर्यात् ॥ ततोदाता ॥ वाचादत्तामयाकन्यापुत्रा र्थेस्वीकृतात्वया ॥ कन्यावलोकनविधौनिश्चितस्त्वंसुखीभवेतिवरपितरंप्रतिपठेत् ॥ सच ॥ वाचादत्तात्वयाकन्यापुत्रार्थेस्वीकृ तामया ॥ वरावलोकनविधौनिश्चितस्त्वंसुखीभवेतिदातारंप्रतिपठेत् ॥ भ्रात्रादौस्वीकर्तरिभ्रात्रर्थेमित्रार्थेमित्याद्यूहःकार्यः ॥ ततोब्राह्मणाः ॥ शिवाआपःसंतु॥ सौमनस्यमस्तु ॥ अक्षतंचारिष्टंचास्तु ॥ दीर्घमायुःश्रेयःशांतिःपुष्टिस्तुष्टिश्चास्तु ॥ एतद्वः सत्यमस्त्वित्युक्त्वा ॥ ॐ समानीवआकूतिःसमानाहृदयानिवः ॥ समानमस्तुवोमनोयथावःसुसहासति ॥ ॐ प्रसुग्मंताधिय सानस्यसक्षणिर्वरेभिर्वराँअभिषुप्रसीदतः ॥ अस्माकमिंद्रउभयंजुजोषतियत्सोम्यस्यांधसोबुबोधति ॥ इतिमंत्रौपठेयुः ॥ ततो

दातापात्रस्थसिततंडुलपुंजेशचीमावाह्यषोडशोपचारैःपूजयेत्तांचकन्यैवंप्रार्थयेत् ॥ देवेंद्राणिनमस्तुभ्यंदेवेंद्रप्रियभामिनि ॥ विवाहंभाग्यमारोग्यंपुत्रलाभंचदेहिमेइति ॥ ततःपुरंध्रीभिर्नीराजनादिमांगलिकंकार्यं ॥ विप्राश्चगंधतांबूलादिनापूजिताआशीर्मंत्रान्पठेयुः ॥ तेच ॥ ॐ हिंकृण्वतीवसुपत्नीवसूनांवत्समिच्छंतीमनसाभ्यागात् ॥ दुहामश्विभ्यांपयोअघ्न्येयंसावर्धतांमहतेसौभगाय ॥ ॐ समिद्धस्यश्रयमाणःपुरस्ताद्ब्रह्मवन्वानोअजरंसुवीरं ॥ आरेअस्मदमतिंबाधमानउच्छ्रयस्वमहतेसौभगाय ॥ ॐ वनस्पतेशतवल्शोविरोहसहस्रवल्शाविवयंरुहेम ॥ यंत्वामयंस्वधितिस्तेजमानःप्रणिनायमहतेसौभगाय ॥ ॐ इंदुर्देवानामुपसख्यमायन्त्सहस्रधारःपवतेमदाय ॥ नृभिस्तवानोअनुधामपूर्वमगन्निंद्रंमहतेसौभगाय ॥ ॐ अस्यपिबक्षुमतःप्रस्थितस्येंद्रसोमस्यवरमासुतस्य ॥ स्वस्तिदामनसामादयस्वार्वाचीनोरेवतेसौभगाय ॥ ॐ घृतादुल्लुप्तंमधुमत्सुवर्णंधनंजयंधरुणंधारयिष्णु ॥ ऋणक्सपत्नादधरांश्चकृण्वदारोहमांमहतेसौभगाय ॥ इतिसौभगायपदान्ताःषट् ॥ ॐ तदस्तुमित्रावरुणा० इत्याशीर्वादमंत्रांतेकर्मसमाप्यआचारादुभौसंमील्यगृहान्गच्छेयुः ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥

## ॥ १४८ ॥ अथविवाहपूर्वदिनकृत्यम् ॥

श्रीः ॥ वधूपितावरपिताचविवाहदिनात्पूर्वेद्युर्विवाहदिनएववासंस्कार्येणसहकृताभ्यंगस्नानोऽहतवासाःप्राङ्मुखउपविश्यस्वदक्षिणेपत्नींतद्दक्षिणेसंस्कार्यमुपवेश्य आचम्यप्राणानायम्येष्टदेवतांगुर्वादींश्चनमस्कृत्यदेशकालौसंकीर्त्यममास्यअमुकशर्मणःपुत्रस्यदैवपित्र्यऋणापाकरणहेतुभूतधर्मप्रजोत्पादनसिद्धिद्वाराश्रीपरमेश्वरप्रीत्यर्थंविवाहसंस्काराख्यंकर्मकरिष्ये॥कन्याविवा

१ पुत्रोद्वाहेपिसमावर्तनादुद्वाहांताब्दगणनयाप्रत्यब्दमेककृच्छ्रादितारतम्येनानाश्रमित्वप्रयुक्तंप्रायश्चित्तंकेचिदिच्छंतितत्रसदसत्सद्भिर्विचारणीयं ॥

हेपूर्वसंस्कारलोपेतुममास्याःकन्यकायाःजातकर्मनामकरणसूर्यावलोकननिष्क्रमणोपवेशनान्नप्राशनचौलसंस्काराणांलोपज
न्यप्रत्यवायपरिहारार्थंप्रतिसंस्कारंपादकृच्छ्रंप्रायश्चित्तंचूडाकर्मणिअर्धकृच्छ्रं तत्प्रत्याम्नायगोनिष्क्रयीभूतयथाशक्तिरजतदाने
नाहमाचरिष्ये ॥ गर्भाधानसीमंतयोर्लोपेतयोरप्यूहः ॥ ततोममास्याःकन्यकायाःभर्त्रासहधर्मप्रजोत्पादनगृह्यपरिग्रहधर्माच
रणेष्वधिकारसिद्धिद्वाराश्रीपरमेश्वरप्रीत्यर्थंविवाहसंस्काराख्यंकर्मकरिष्ये ॥ अथवाअस्यामुकशर्मणःपुत्रस्यअमुकनाम्न्याःक
न्यायावाश्वःकरिष्यमाणविवाहांगभूतंगणपतिपूजनपूर्वकंस्वस्तिवाचनंमातृकापूजनंनांदीश्राद्धंग्रहानुकूल्यार्थंग्रहयज्ञंमंडपदे
वताकुलदेवतादिप्रतिष्ठांचकरिष्ये तैलहरिद्राधिष्ठात्रींचपूजयिष्यइतिसंकल्प्यपूर्वोक्तोपनयनोक्तरीत्याकुर्यात् ॥ ॥ छ ॥

## ॥ १४९ ॥ अथसीमांतपूजनम् ॥

श्रीः ॥ अथकन्यादातावरगृहमागतःआचम्यप्राणानायम्यदेशकालौसंकीर्त्यकरिष्यमाणकन्याविवाहांगत्वेनवरस्यसीमांतपूज
नंकरिष्यइतिसंकल्प्य गणेशवरुणपूजनेकृत्वा अस्मिन्राष्ट्रेश्रियमितिपत्नीप्रक्षिप्तजलेनतदीयदक्षिणवामपादौप्रक्षाल्याचमर्घ्य
गंधपुष्पनीराजनवस्त्रैर्यथासंभवंसंपूज्ययथाचारंदुग्धादिप्राशनंकारयेत् ॥ इतिसीमांतपूजा ॥ ॥ छ ॥

## ॥ १५० ॥ अथवरस्यवधूगृहगमनम् ॥

श्रीः ॥ वरःकृतनित्यक्रियोविधिवत्कृतस्वस्तिवाचनोब्राह्मणैःसहसात्विकाहारंभुक्त्वाअभुक्त्वावाईषद्धौतंनवंश्वेतंसदशंपरेणा

धृतंवस्त्रयुगुलंधृत्वालंकृतःस्रग्वीष्टदेवतांपित्रादींश्चनमस्कृत्यतैरनुमोदितोयथाविभवमश्वादियानमारुह्यधृतसितच्छत्रःस्वर्चि
तैर्ज्ञातिबांधवैः ॥ ॐ कनिक्रदज्जनुषंप्रब्रुवाणइयर्तिवाचमरितेवनावं ॥ सुमंगलश्चशकुनेभवासिमात्वाकाचिदभिभाविश्व्याविदत् ॥ मात्वांश्येनउद्वंधीन्मासुपर्णोमात्वाविददिषुमान्वीरोऽअस्ता ॥ पित्र्यामनुप्रदिशंकनिक्रदत्सुमंगलोभद्रवादीवदेह ॥ अवंक्रंददक्षिणतोगृहाणांसुमंगलोभद्रवादीशकुंते ॥ मानस्तेनईशतमाघशंसोबृहद्वदेमविदथेसुवीराः ॥ १ ॥ प्रदक्षिणिदभिगृणंतिकारवोवयोवदंतऋतुथाशकुंतयः ॥ उभेवाचौवदतिसामगाऽइवगायत्रंचत्रैष्टुभंचानुराजसि ॥ उद्गातेवंशकुनेसामगायसिब्रह्मपुत्रइवसवनेषुशंससि ॥ वृषेववाजीशिशुमतीरपीत्यासर्वतोनःशकुनेभद्रमावदविश्वतोनःशकुनेपुण्यमावद ॥ आवदंस्त्वंशकुनेभद्रमावदतूष्णीमासीनःसुमतिंचिकिद्धिनः ॥ यदुत्पतन्वदसिकर्करिर्यथाबृहद्वदेमविदथेसुवीराः ॥ २ ॥ भद्रंवददक्षिणतोभद्रमुत्तरतोवद ॥ भद्रंपुरस्तान्नोवदभद्रंपश्चात्कपिंजर ॥ भद्रंवदपुत्रैर्भद्रंवदगृहेषुच ॥ भद्रमस्माकंनोवदभद्रंनोऽअभयंकृधि ॥ भद्रमधस्तान्नोवदभद्रमुपरिष्टान्नोवद ॥ भद्रंभद्रंनऽआभरभद्रंनःसर्वतोवद ॥ असपत्नंपुरस्तान्नःशिवंदक्षिणतस्कृधि ॥ अभयंसततंपश्चाद्भद्रमुत्तरतोगृहे ॥ यौवनानिमहयसिजिग्युषामिवदुंदुभिः ॥ शकुंतकप्रदक्षिणंशतपत्राभिनोवद ॥ ३ ॥ इत्यादिसुमंगलसूक्तपठनपरैर्ब्राह्मणैःपुरंध्रीभिःपूर्णकलशदर्पणकन्यापुष्पाक्षतदीपमालाध्वजलाजैर्मंगलगीततूर्यैश्चसहवधूगृहंगत्वात
द्वारदेशेप्राङ्मुखःस्थितोनीराजनपूर्णकुंभयुतैःपुरंध्रीजनैःप्रत्युद्यातोनीराजितोंतर्गृहंप्रविश्यतदंगणेमंडपाधःसोत्तरच्छदेहरित
दर्भास्तीर्णेचतुष्पादभद्रपीठेप्राङ्मुखउपविशेत् ॥ तत्रैवचमधुपर्कार्हणंकन्यादात्राविधेयम् ॥ इतिवरस्यवधूगृहगमनम् ॥ ॥

## ॥ १५१ ॥ अथमधुपर्कः ॥

श्रीः ॥ पाद्यार्थमर्घ्यार्थमंत्रवत्रिराचमनीयार्थंशुद्धाष्टाचमनीयार्थंचजलपात्रचतुष्टयंमधुपर्ककांस्यपात्रंगांविष्टरंचसंपाद्य कर्ता आचम्यप्राणानायम्यदेशकालौस्मृत्वाकन्यार्थिनेगृहागतायास्मै[2]स्नातकायवरायकन्यादानांगभूतंमधुपर्ककरिष्ये ॥ कन्यार्थिनमित्यादिद्वितीयांतमुक्त्वामधुपर्केणार्हयिष्ये इतिवा ॥ विष्टरो[3]विष्टरोविष्टरइतिविष्टरंवरहस्तेदद्यात् ॥ वरस्तु ॥ अहंवर्ष्मेत्यस्यवामदेवोविष्टरोनुष्टुप् ॥ विष्टरोपवेशनेविनियोगः ॥ ॐ अहंवर्ष्मसजातानांविद्युतामिवसूर्यः ॥ इदंतमाधितिष्ठामियोमाकश्चाभिदासति ॥ इत्युदगग्रेविष्टरउपविशेत् ॥ ततोर्चकेनपाद्यंपाद्यंपाद्यमितित्रिर्निवेदितंपाद्यंवरोगृह्णीयात् ॥ ततोर्चकस्तेनोदकेनपत्नीप्रक्षिप्तेनास्मिन्राष्ट्रइतिवरस्यदक्षिणसव्यपादौप्रक्षालयेत् ॥ ततोवरोलौकिकोदकेनाचम्य अर्घ्यमर्घ्यमर्घ्यमिति पूर्ववत्रिर्निवेदितंगंधमाल्यफलयुतमर्घ्यमंजलिनाप्रतिगृह्य आचमनीयमाचमनीयमाचमनीयमितित्रिर्निवेदितंपात्रंप्रतिगृह्यभूमौनिधायतस्यैकदेशंगृहीत्वा ॥ ॐ अमृतोपस्तरणमसीतिपीत्वा लौकिकोदकेनाचम्य ॥ आनीयमानंमधुपर्कंवरः ॥ ॐ मित्रस्यत्वाचक्षुषाप्रतीक्षइत्यवेक्ष्य दात्रामधुपर्कोमधुपर्कोमधुपर्कइतित्रिर्निवेदितंमधुपर्कं[4] ॐ देवस्यत्वासवितुःप्रसवेश्विनोर्बाहुभ्यां

---

१ सर्वत्रप्राङ्मुखोदाताप्रतिग्राहीह्युदङ्मुखः ॥ कन्यादानेविपर्यासोमधुपर्केस्तुपश्चिमः ॥ परिशिष्टे—वरस्ययाभवेवच्छाखातच्छाखागृह्यचोदितः ॥ मधुपर्कःप्रदातव्योह्यन्यशाखेपिदातरीति ॥ दध्यलाभेपयोजलंवा ॥ मध्वलाभेसर्पिर्गुडोवाप्रतिनिधिःकल्प्यः ॥ २ वरस्यद्वितीयोद्वाहेतुस्नातकपदलोपः ॥ ३ पंचविंशतिदर्भाणांवेण्यग्रेग्रंथिभूषितः ॥ विष्टरेसर्वयज्ञेषुलक्षणंपरिकीर्तितं ॥ पंचाशताभवेद्ब्रह्मातदर्धेनतुविष्टरः ॥ ऊर्ध्वकेशोभवेद्ब्रह्मालंबकेशस्तुविष्टरः ॥ दक्षिणावर्तकोब्रह्मावामावर्तस्तुविष्टरः ॥ इतिविष्टरलक्षणं ॥ ४ प्रत्युपचारंप्रतिगृह्यतांप्रतिगृह्णामीतिवचनप्रतिवचनेस्तःकौस्तुभे ॥

पूष्णोहस्ताभ्यांप्रतिगृह्णामीत्यंजलिनाप्रतिगृह्यांजलिस्थमेव ॥ मधुवाताइतितिसृणांराहूगणोगोतमोविश्वेदेवागायत्री ॥ मधुप
र्कावेक्षणेविनियोगः ॥ ॐ मधुवाताऋतायतेमधुक्षरंतिसिंधवः ॥ माध्वीर्नःसंत्वोषधीः ॥ मधुनक्तमुतोषसोमधुमत्पार्थिवंरजः ॥
मधुद्यौरस्तुनःपिता ॥ मधुमान्नोवनस्पतिर्मधुमाँअस्तुसूर्यः ॥ माध्वीर्गावोभवंतुनः ॥ इत्यवेक्ष्यतत्पात्रंसव्यहस्तेगृहीत्वांगुष्ठोप
कनिष्ठिकाभ्यांमधुपर्कंत्रिःप्रदक्षिणमालोड्यांगुलिगतंमधुपर्कलेपं ॐ वसवस्त्वागायत्रेणछंदसाभक्षयंतुइतिपुरस्तान्निमृजेत् ॥
ॐ रुद्रास्त्वात्रैष्टुभेनछंदसाभक्षयंतुइतिदक्षिणतः ॥ ॐ आदित्यास्त्वाजागतेनछंदसाभक्षयंतुइतिपश्चात् ॥ ॐ विश्वेत्वादेवा
आनुष्टुभेनछंदसाभयक्षयंतुइत्युत्तरेनिमृज्य ॥ भूतेभ्यस्त्वाभूतेभ्यस्त्वाभूतेभ्यस्त्वाइतिमध्यात्किंचित्किंचिद्गृहीत्वात्रिरूर्ध्वंक्षि
प्त्वामधुपर्कपात्रंभूमौनिधायमधुपर्कैकदेशंगृहीत्वा ॥ ॐ विराजोदोहोसीतिप्राश्य लौकिकोदकेनाचम्य पुनर्गृहीत्वा ॥ ॐ
विराजोदोहमशीय इतिप्राश्य पूर्ववदाचम्य पुनर्गृहीत्वा ॥ ॐ मयिदोहःपद्यायैविराजःइतिप्राश्य पूर्ववदाचम्य ॥ मधुपर्क
शेषमुदगुपविष्टायब्राह्मणायदद्यात्लोकविद्विष्टत्वादप्सुवाक्षिपेत् ॥ ततःपूर्वनिवेदिताचमनीयैकदेशं ॐ अमृतापिधानमसीति
पीत्वालौकिकोदकेनाचम्यआचमनीयजलशेषंसर्वंगृहीत्वा ॐ सत्यंयशःश्रीर्मयिश्रीःश्रयतांइतिप्राश्यलौकिकोदकेनद्विराचामे
त् ॥ ततोदातागौर्गौर्गौरितित्रिर्निवेदितांगांनिष्क्रयंवा ॥ मातारुद्राणामित्यस्यभार्गवोजमदग्निर्गौस्त्रिष्टुप् ॥ गोरुत्सर्जनेविनि
योगः ॥ ॐ मातारुद्राणांदुहितावसूनांस्वसादित्यानाममृतस्यनाभिः ॥ प्रनुवोचंचिकितुषेजनायमागामनागामदितिंवधिष्ट

---

१ आलोडनसंजातांगुलिलेपस्यैवदिक्चतुष्टयेप्यपनयनंनतुपुनःपुनर्ग्रहणं। ताभ्यामेवमध्यात्पुनःपुनस्त्रिर्गृहीत्वाभूतेभ्यस्त्वेतित्रिरावृत्तेरूर्ध्वंक्षिपेत्।
२ स्वयंगृहीतस्यपरेणवाहस्तेप्रक्षिप्तस्यप्राशनत्रयमेतत्।

ॐ उत्सृजतइतिविसृजेत् ॥ ततोदातागंधमाल्यवस्त्रयुगोपवीतयुगाभरणादिभिर्यथाविभवंवरंपूजयेत् ॥ ततोवरेणसहागतां स्तद्बंधूनपिपूजयेत् ॥ इतिमधुपर्कः ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥



## ॥ १५२ ॥ अथगौरीहरपूजा ॥

श्रीः ॥ अथकन्यास्नातापरिहिताहतवस्त्रागृहांतःसूत्रवेष्टितोपलसहितदृषदुपरिहरिद्रानिर्मितौ गौरीहरौसौभाग्यादिकामनया पूजयित्वा ॥ ( अविच्छिन्नसौभाग्यशुभसंततिधनधान्यादिसिद्ध्यर्थंगौरीहरौपूजयिष्ये ॥ तत्रकोणचतुष्टयस्थापितकलशश्रेणी नांमध्येउक्तदृषद्यन्योन्यालिंगितगौरीहरप्रतिमांसौवर्णींकात्यायनीमहालक्ष्मीशचीभिःसहपूजयेत् ॥ ध्यानमंत्रः ॥ सिंहासन स्थांदेवेशींसर्वालंकारसंयुतां ॥ पीतांबरधरंदेवंचंद्रार्धकृतशेखरं ॥ करेणाधःसुधापूर्णकलशंदक्षिणेनतु ॥ वरदंचाभयंवामेना श्लिष्यतदनुप्रियां ॥ पूजामंत्रः ॥ गौरीहरमहेशानसर्वमंगलदायक ॥ पूजांगृहाणदेवेशसर्वदामंगलंकुरु ॥ इति ॥ कन्यादेह प्रमाणेनसप्तविंशतितंतुभिःकृतयावर्तिकयादीपंप्रज्वालयेत् धर्मं० ) इंद्राणींचतत्रैवाक्षतपुंजेपूजयित्वाप्रार्थयेत् ॥ देवेंद्राणि नमस्तुभ्यंदेवेंद्रप्रियभामिनि ॥ विवाहंभाग्यमारोग्यंपुत्रलाभंचदेहिमे इति ॥ ततोगौरींसौभाग्यादिप्रार्थयमानातत्रैवतिष्ठेत् ॥ अथकन्यादानादि ॥ गृहांतःपूर्वापरभागयोर्हस्तांतरालंविहायप्रस्थमितसिततंडुलैर्द्वौराशीकृत्वामध्येकुंकुमादिकृतस्वस्तिकां कितमंतःपटमुदग्दशंधारयित्वा पूर्वराशौप्रत्यङ्मुखंवरंपश्चिमराशौप्राङ्मुखींकन्यांतंडुलगुडजीरकयुतांजलीउभाववस्थाप्यद्वि जाःसत्येनोत्तभितेतिसूक्तंपठेयुःपुरंध्र्योमंगलगीतीःकुर्युः ॥ इतिगौरीहरपूजादि ॥ ॥ छ ॥ ॥ छ ॥

## ॥ १५३ ॥ अथसत्येनोत्तभितासूक्तम् ॥

श्रीः ॥ सत्येनोत्तभिताभूमिःसूर्येणोत्तभिताद्यौः ॥ ऋतेनादित्यास्तिष्ठंतिदिविसोमोअधिश्रितः ॥ सोमेनादित्याबलिनः सोमेनपृथिवीमही ॥ अथोनक्षत्राणामेषामुपस्थेसोमआहितः ॥ सोमंमन्यतेपपिवान्यत्संपिंषंत्योषधिं ॥ सोमंयंब्रह्माणोविदुर्न तस्याश्नातिकश्चन ॥ आच्छद्विधानैर्गुपितोबार्हतैःसोमरक्षितः ॥ ग्राव्णामिच्छृण्वन्तिष्ठसिनतेअश्नातिपार्थिवः ॥ यत्त्वादेवप्रपि बंतिततआप्यायसेपुनः ॥ वायुःसोमस्यरक्षितासमानांमासआकृतिः ॥ १ ॥ रैभ्यासीदनुदेयीनाराशंसीन्योचनी ॥ सूर्याया भद्रमिद्वासोगाथयैतिपरिष्कृतं ॥ चित्तिराउपबर्हणंचक्षुराअभ्यंजनं ॥ द्यौर्भूमिःकोशआसीद्यदयात्सूर्यापतिं ॥ स्तोमाआस न्प्रतिधयःकुरीरंछंदओपशः ॥ सूर्यायाअश्विनावराग्निरासीत्पुरोगवः ॥ सोमोवधूयुरभवदश्विनास्तामुभावरा ॥ सूर्यांयत्पत्ये शंसंतींमनसासवितादददात् ॥ मनोअस्याअनआसीद्द्यौरासीदुतच्छदिः ॥ शुक्रावनड्वाहावास्तांयदयात्सूर्यागृहं ॥ २ ॥ ऋ क्सामाभ्यामभिहितौगावौतेसामनावितः ॥ श्रोत्रंतेचक्रेआस्तांदिविपंथाश्चराचरः ॥ शुचीतेचक्रेयात्याव्यानोअक्षआहतः ॥ अनोमनस्मयंसूर्यारोहत्प्रयतीपतिं ॥ सूर्यायावहतुःप्रागात्सवितायमवासृजत् ॥ अघासुहन्यंतेगावोर्जुन्योःपर्युह्यते ॥ यदश्वि नापृच्छमानावयातंत्रिचक्रेणवहतुंसूर्यायाः ॥ विश्वेदेवाअनुतद्वामजानन्पुत्रःपितरावबृणीतपूषा ॥ यदयातंशुभस्पतीवरेयंसू र्यामुप ॥ क्वैकंचक्रंवामासीत्क्वदेष्ट्रायतस्थथुः ॥ ३ ॥ द्वेतेचक्रेसूर्येब्रह्माणऋतुथाविदुः ॥ अथैकंचक्रंयद्गुहातदद्धातयइद्विदुः ॥ सूर्यायैदेवेभ्योमित्रायवरुणायच ॥ येभूतस्यप्रचेतसइदंतेभ्योकरंनमः ॥ पूर्वापरंचरतोमाययैतौशिशूक्रीळंतौपरियातोअध्वरं ॥ विश्वान्यन्योभुवनाभिचष्टऋतूँरन्योविदधज्जायतेपुनः ॥ नवोनवोभवतिजायमानोह्नांकेतुरुषसामेत्यग्रं ॥ भागंदेवेभ्योविदधा

त्यायन्प्रचंद्रमास्तिरतेदीर्घमायुः ॥ सुकिंशुकंशल्मलिंविश्वरूपंहिरण्यवर्णंसुवृतंसुचक्रं ॥ आरोहसूर्येअमृतस्यलोकंस्योनं
पत्येवहतुंकृणुष्व ॥ ४ ॥ उदीर्ष्वातःपतिवतीह्ये३षाविश्वावसुंनमसागीर्भिरीळे ॥ अन्यामिच्छपितृषदंव्यक्तांसतेभागोज
नुषातस्यविद्धि ॥ उदीर्ष्वातोविश्वावसोनमसेळामहेत्वा ॥ अन्यामिच्छप्रफर्व्यं१संजायांपत्यासृज ॥ अनृक्षराऋजवःसंतुपं
थायेभिःसखायोयंतिनोवरेयं ॥ समर्यमासंभगोनोनिनीयात्संजास्पत्यंसुयममस्तुदेवाः ॥ प्रत्वामुंचामिवरुणस्यपाशाद्येनत्वा
बध्नात्सवितासुशेवः ॥ ऋतस्ययोनौसुकृतस्यलोकेरिष्टांत्वासहपत्यादधामि ॥ प्रेतोमुंचामिनामुतःसुबद्धाममुतस्करं ॥ यथेय
मिंद्रमीढ्वःसुपुत्रासुभगासति ॥ ५ ॥ पूषात्वेतोनयतुहस्तगृह्याश्विनात्वाप्रवहतांरथेन ॥ गृहान्गच्छगृहपत्नीयथासोवशिनी
त्वंविदथमावदासि ॥ इहप्रियंप्रजयातेसमृध्यतामस्मिन्गृहेगार्हपत्यायजागृहि ॥ एनापत्यातन्वं१संसृजस्वाधाजिव्रीविदथमा
वदाथः ॥ नीललोहितंभवतिकृत्यासक्तिर्व्यज्यते ॥ एधंतेअस्याज्ञातयःपतिर्बंधेषुबध्यते ॥ परादेहिशामुल्यंब्रह्मभ्योविभजा
वसु ॥ कृत्यैषापद्वतीभूत्व्याजायाविशतेपतिं ॥ अश्रीरातनूर्भवतिरुशतीपापयामुया ॥ पतिर्यद्वध्वो३वाससास्वमंगमभिधि
त्सते ॥ ६ ॥ येवध्वश्चंद्रंवहतुंयक्ष्मायंतिजनादनु ॥ पुनस्तान्यज्ञियादेवानयंतुयतआगताः ॥ माविदन्परिपंथिनोयआसीदं
तिदंपती ॥ सुगेभिर्दुर्गमतीतामपद्रांत्वरातयः ॥ सुमंगलीरियंवधूरिमांसमेतपश्यत ॥ सौभाग्यमस्यैदत्वायाथास्तंविपरेतन ॥
तृष्टमेतत्कटुकमेतदपाष्ठवद्विषवन्नैतदत्तवे ॥ सूर्यांयोब्रह्माविद्यात्सइद्वाधूयमर्हति ॥ आशसनंविशसनमथोअधिविकर्तनं ॥ सूर्या
याःपश्यरूपाणितानिब्रह्मातुशुंधति ॥ ७ ॥ गृभ्णामितेसौभगत्वायहस्तंमयापत्याजरदष्टिर्यथासः ॥ भगोअर्यमासवितापुरं
धिर्मह्यंत्वादुर्गार्हपत्यायदेवाः ॥ तांपूषंछिवतमामेरयस्वयस्यांबीजंमनुष्या३वपंति ॥ यानऊरूउशतीविश्रयातेयस्यामुशंतः

ग्रहरामशेषं ॥ तुभ्यमग्रेपर्यवहन्सूर्यांवहतुनासह ॥ पुनःपतिभ्योजायांदाअग्नेप्रजयासह ॥ पुनःपत्नीमग्निरदादायुषासहवर्चसा॥
दीर्घायुरस्यायःपतिर्जीवातिशरदःशतं ॥ सोमःप्रथमोविविदेगंधर्वोविविदउत्तरः ॥ तृतीयोअग्निष्टेपतिस्तुरीयस्तेमनुष्यजाः ॥
॥ ८ ॥ सोमोददद्गंधर्वायगंधर्वोददद्ग्नये ॥ रयिंचपुत्रांश्चादादग्निर्मह्यमथोइमां ॥ इहैवस्तंमावियौष्टंविश्वमायुर्व्यश्नुतं ॥ क्री
ळंतौपुत्रैर्नप्तृभिर्मोदमानौस्वेगृहे ॥ आनःप्रजांजनयतुप्रजापतिराजरसायसमनक्त्वर्यमा ॥ अदुर्मंगलीःपतिलोकमाविशशंनोभ
वद्विपदेशंचतुष्पदे ॥ अघोरचक्षुरपतिघ्न्येधिशिवापशुभ्यःसुमनाःसुवर्चाः ॥ वीरसूर्देवकामास्योनाशंनोभवद्विपदेशंचतुष्पदे ॥
इमांत्वमिंद्रमीढ्वःसुपुत्रांसुभगांकृणु ॥ दशास्यांपुत्रानाधेहिपतिमेकादशंकृधि ॥ सम्राज्ञीश्वशुरेभवसम्राज्ञीश्वश्र्वांभव ॥ ननां
दरिसम्राज्ञीभवसम्राज्ञीअधिदेवृषु ॥ समंजंतुविश्वेदेवाःसमापोहृदयानिनौ ॥ संमातरिश्वासंधातासमुदेष्ट्रीदधातुनौ ॥ ९ ॥
इतिसूक्तंपठेयुःपुरंध्र्योमंगलगीतीःकुर्युः ॥ ॥ कन्यावरयोःपित्रादिर्ज्योतिर्विदंवस्त्रादिनापूजयेत् तदत्ताःसपूगीफलकुंकुमाक्ष
ताःकन्यावरयोरंजलौदद्यात् ॥ वधूवरौचमनसेष्टदेवतांध्यायंतौसमाहितौतिष्ठेतां ॥ अथज्यौतिषिकेणमंगलपद्यपाठपूर्वकं
स्वोक्तकालेतदेवलग्नमितिपठित्वासुमुहूर्तमस्तु ॐ प्रतिष्ठेत्युक्तेसद्योंतःपटमुदगपसार्यकन्यावराभ्यांपरस्परशिरसोरंजलिस्थतं
डुलाद्यवकिरणंपरस्परनिरीक्षणंचकारणीयं ॥ तदावरः ॥ ॐ अभ्रातृघ्नींवरुणापतिघ्नींबृहस्पते ॥ इंद्रापुत्रघ्नींलक्ष्म्यंतामस्यै
सवितुःसुवइतिजपन्कन्यांवीक्षेत ॥ ॐ अघोरचक्षुरपतिघ्न्येधिशिवापशुभ्यःसुमनाःसुवर्चाः ॥ वीरसूर्देवकामास्योनाशंनोभ
वद्विपदेशंचतुष्पदे ॥ इतिजपित्वादर्भाग्रेणतस्याभ्रुवोर्मध्यं ॐ भूर्भुवःस्वरितिपरिमृज्यदर्भंनिरस्यापउपस्पृशेत् ॥ ततस्त्रिवा
रंपंचवारंवापरस्परंशिरसिस्रक्चवाइत्यादिखंडवाक्यांतेवधूपूर्वकमक्षतारोपणंकारणीयम् ॥

## ॥ १५४ ॥ अथऋक्चवेखंडवाक्यानि ॥

श्रीः ॥ ऋक्चवाइदमग्रेसामचास्तांसैवनामऋगासीदमोनामसामसावाऋक्सामोपावदन्मिथुनंसंभवावप्रजात्याइतिनेत्यब्रवी
त्सामज्यायान्वाअतोममहिमेतितेद्वेभूत्वोपावदतां तेनप्रतिचनसमवदततास्तिस्रोभूत्वोपावदंस्तत्तिसृभिःसमभवद्यत्तिसृभिः
समभवत्तस्मात्तिसृभिःस्तुवंति तिसृभिरुद्गायंति तिसृभिर्हिसामसंमितंतस्मादेकस्यबह्व्योजायाभवंतिनैकस्यैबहवःसहपतयो
यद्वैतत्साचामश्चसमभवतांतत्सामाभवत्तत्साम्नःसामत्वंसामन्भवतियएवंवेदयोवैभवतियःश्रेष्ठतामश्नुते सेसामन्भवत्यसाम
न्यइतिहिनिंदंतितेवैपंचान्यद्भूत्वा पंचान्यद्भूत्वाकल्पेतामाहावश्चहिंकारश्चप्रस्तावश्चप्रथमाचऋगुद्गीथश्चमध्यमाचप्रतिहा
रश्चोत्तमाचनिधनंचवषट्कारश्चतेयत्पंचान्यद्भूत्वापंचान्यद्भूत्वाकल्पेतांतस्मादाहुःपांक्तोयज्ञःपांक्ताः पशवइतियदुविराजंदशि
नीमभिसमपद्येतांतस्मादाहुर्विराजियज्ञोदशिन्यांप्रतिष्ठितइत्यात्मावैस्तोत्रियः प्रजानुरूपःपत्नीधाय्यापशवः प्रगाथोगृहाःसू
क्तंसवाअस्मिंश्चलोकेऽमुष्मिंश्चप्रजयाचपशुभिश्चगृहेषुवसतियएवंवेद ॥ १ ॥ स्तोत्रियंशंसत्यात्मावैस्तोत्रियस्तंमध्यमयावाचा
शंसत्यात्मानमेवतत्संस्कुरुतेनुरूपंशंसतिप्रजावाअनुरूपःसउच्चैस्तरामिवानुरूपःशंस्तव्यःप्रजामेवतच्छ्रेयसीमात्मनःकुरुतेधा
य्यांशंसतिपत्नीवैधाय्यासानीचैस्तरामिवधाय्याशंस्तव्याप्रतिवादिनीहास्यगृहेषुपत्नीभवतियत्रैवंविद्वान्नीचैस्तरांधाय्यांशंसति
प्रगाथंशंसतिसस्वरवत्यावाचाशंस्तव्यःपशवोवैस्वरःपशवःप्रगाथःपशूनामवरुध्याइंद्रस्यनुवीर्याणिप्रवोचमितिसूक्तंशंसतितद्वा
एतत्प्रियमिंद्रस्यसूक्तंनिष्कैवल्यंहैरण्यस्तूपमेतेनवैसूक्तेनहिरण्यस्तूपआंगिरसइंद्रस्यप्रियंधामोपागच्छत्सपरमंलोकमजयदुपेंद्र
स्यप्रियंधामगच्छतिजयतिपरमंलोकंयएवंवेदगृहावैप्रतिष्ठासूक्तंतत्प्रतिष्ठिततमयावाचाशंस्तव्यंतस्माद्यद्यपिदूरइवपशूँल्लभतेगृ

हानेवैनानाजिगमिषतिगृहाहिपशूनांप्रतिष्ठाप्रतिष्ठा ॥२॥ उत्तमाप्रतिष्ठातद्वैवंक्षत्रंसाश्रीस्तदाधिपत्यंतद्ब्रध्नस्यविष्टपंतत्प्रजापते
रायतनंतत्स्वाराज्यमृध्नोत्येतमेवैताभिरेकविंशस्यैकविंशत्या ॥३॥ याज्ययायजतिप्रत्तिर्वैयाज्यापुण्यैवलक्ष्मीःपुण्यामेवतल्लक्ष्मीं
संभावयतिपुण्यांलक्ष्मींसंस्कुरुते ॥४॥ यद्यावांचोद्यावापृथिवीयंशंसतिद्यावापृथिवीवैप्रतिष्ठेइयमेवेहप्रतिष्ठासावमुत्रतद्यद्द्या
वापृथिवीयंशंसतिप्रतिष्ठयोरेवैनंतत्प्रतिष्ठापयति ॥५॥ द्वंद्वमिंद्रेणदेवताःशस्यंतेद्वंद्वंवैमिथुनंतस्माद्द्वंद्वान्मिथुनंप्रजायतेप्रजात्यै
प्रजायतेप्रजयापशुभिर्यएवंवेदाथहैतेपोत्रीयाश्चनेष्ट्रीयाश्चचत्वारऋतुयाजाःषळृचःसाविराड्दशिनीतद्विराजियज्ञंदशिन्यांप्रति
ष्ठापयंतिप्रतिष्ठापयंति ॥६॥ महीद्यौःपृथिवीचनस्तेहिद्यावापृथिवीविश्वशंभुवेतिद्यावापृथिवीयेशंसतिद्यावापृथिवीवैप्रतिष्ठेइय
मेवेहप्रतिष्ठासावमुत्रतद्यद्द्यावापृथिवीयेशंसतिप्रतिष्ठयोरेवैनंतत्प्रतिष्ठापयति ॥७॥ धारयन्धारयन्निति शंसतिप्रस्रंसाद्वाअंत
स्यबिभायतद्यथापुनराग्रंथंपुनर्निग्रंथमंतंबध्नीयान्मयूखंवांततोधारणायनिहन्यात्तादृक्तद्यद्धारयन्धारयन्निति शंसतिसंतत्यैसं
ततैरव्यहैरव्यवच्छिन्नैर्यंतियएवंविद्वांसोयंतियंति ॥८॥ दक्षिणाअनुसुब्रह्मण्यासंतिष्ठतेवाग्वैसुब्रह्मण्यान्नंदक्षिणान्नाद्यएवतद्वा
चियज्ञमंततःप्रतिष्ठापयंतिप्रतिष्ठापयंति ॥ ९ ॥ हिरण्यकशिपावासीनआचष्टेहिरण्यकशिपावासीनःप्रतिगृणातियशोवैहिर
ण्यंयशसैवैनंतत्समर्धयत्योमित्यृचःप्रतिगरएवंतथेतिगाथायाऽओमितिवैदैवंतथेतिमानुषंदैवेनचैवैनंतन्मानुषेणचपापादेनसः
प्रमुंचतितस्माद्योराजाविजितीस्यादप्ययजमानआख्यापयेतैवैतच्छौनःशेपमाख्यानंनहास्मिन्नल्पंचनैनःपरिशिष्यतेसहस्रमा
ख्यात्रेदद्याच्छतंप्रतिगरित्रएतेचैवासनेश्वेतश्चाश्वतरीरथोहोतुःपुत्रकामाहाप्याख्यापयेरँल्लभंतेहपुत्राँल्लभंतेहपुत्रान् ॥ १० ॥
देवसवितर्देवयजनंमेदेहिदेवयज्यायाऽइतिदेवयजनंयाचतिसयत्तत्रयाचितउत्तरांसर्पत्योंतथाददामीतिहैवतदाहतस्यहनका

चनरिष्टिर्भवतिदेवेनसवित्राप्रसूतस्योत्तरोत्तरिणींहश्रियमश्नुतेश्नुतेहप्रजानामैश्वर्यमाधिपत्यं ॥ ११ ॥ तेएतेअभ्यनूच्येतेअग्ने गायत्र्यभवत्सयुग्वेतिकल्पतेहवाअस्मैयोगक्षेमउत्तरोत्तरिणींहश्रियमश्नुतेश्नुतेहप्रजानामैश्वर्यमाधिपत्यम् ॥ १२ ॥ साम्राज्यं भौज्यंस्वाराज्यंवैराज्यंपारमेष्ठ्यंराज्यंमाहाराज्यमाधिपत्यमयंसमंतपर्यायीस्यात्सार्वभौमःसार्वायुषआंतादापरार्धात्पृथिव्यैस मुद्रपर्यंतायाएकराळिति ॥ १३ ॥ ध्रुवाद्यौर्ध्रुवापृथिवीध्रुवासःपर्वताइमे ॥ ध्रुवंविश्वमिदंजगद्ध्रुवोराजाविशामयं ॥ ध्रुवंतेरा जावरुणोध्रुवंदेवोबृहस्पतिः ॥ ध्रुवंतइंद्रश्चाग्निश्चराष्ट्रंधारयतांध्रुवं ॥ तदस्तुमित्रावरुणातदग्नेशंयोरस्मभ्यमिदमस्तुशस्तं ॥ अशीमहिगाधमुतप्रतिष्ठांनमोदिवेबृहतेसादनाय ॥ इतिऋक्कवत्यादिखंडवाक्यानि ॥ ७ ॥ ॥ ७ ॥

## ॥ १५५ ॥ अथकन्यादानम् ॥

श्रीः ॥ ततः ॐ अनृक्षराऋजवःसंतुपंथायेभिःसखायोयंतिनोवरेयं ॥ समर्यमासंभगोनोनिनीयात्संजास्पत्यंसुयममस्तुदेवाः॥ इतिवरंप्राङ्मुखंवधूंचप्रत्यङ्मुखींकृत्वातद्दक्षिणतःसपत्नीकउदङ्मुखउपविश्यआचम्यप्राणानायम्यदेशकालौसंकीर्त्यअमुकप्रव रान्वितोमुकगोत्रोमुकशर्माहंममसमस्तपितॄणांनिरतिशयसानंदब्रह्मलोकावाप्त्यादिकन्यादानकल्पोक्तफलावाप्तये अनेनवरेणा स्यांकन्यायामुत्पादयिष्यमाणसंतत्याद्वादशावरान्द्वादशापरांश्चपुरुषान्पवित्रीकर्तुमात्मनश्चश्रीलक्ष्मीनारायणप्रीतयेब्राह्मवि वाहविधिनाकन्यादानमहंकरिष्येइतिकुशाक्षतयुतजलेनसंकल्प्य ॥ तत्रजलशुद्ध्यर्थंवरुणपूजांउदकाभिमंत्रणंचकरिष्ये ॥ प्रागग्रानुदगग्रान्वादर्भानास्तीर्यतेषुजलपूर्णकलशंनिधायव्रीहियवानोप्यगंधपुष्पादिभिरलंकृत्यदूर्वापल्लवैर्मुखमवस्तीर्याब्लिंगा भिर्ऋग्भिरभिमंत्रयेत् ॥ तत्रवरुणंपूजयेदितिशिष्टाचारः ॥ ततःसपत्नीकउत्थायोदङ्मुखएवकन्यासंप्रगृह्य ॥ कन्यांकनकसं

यन्नांकनकाभरणैर्युतां ॥ दास्यामिविष्णवेतुभ्यंब्रह्मलोकजिगीषया ॥ विश्वंभरःसर्वभूतःसाक्षिण्यःसर्वदेवताः ॥ इमांकन्यांप्र
दास्यामिपितॄणांतारणायच ॥ इत्युक्त्वास्वदक्षिणस्थभार्यादत्तपूर्वकल्पितजलधारामविच्छिन्नांनवकांस्योपरिधृतकन्यांजल्यु
परिस्थवरांजलिदक्षिणहस्तेक्षिपन्वदेत् ॥ कन्यातारयतु ॥ पुण्यंवर्धतां ॥ शिवाआपःसंतु ॥ सौमनस्यमस्तु ॥ अक्षतंचारिष्टं
चास्तु ॥ दीर्घमायुःश्रेयःशांतिःपुष्टिस्तुष्टिश्चास्तु ॥ यच्छ्रेयस्तदस्तु ॥ यत्पापंतत्प्रतिहतमस्तु ॥ पुण्याहंभवंतोब्रुवंतु ॥ स्वस्ति
भवंतोब्रुवंतु ॥ ऋद्धिंभवंतोब्रुवंतु ॥ श्रीरस्त्विविभवंतोब्रुवंतु ॥ अमुकप्रवरान्वितामुकगोत्रोमुकशर्माहंममसमस्तेत्यादिप्रीतये
इत्यंतमुक्त्वा ॥ अमुकप्रवरान्वितामुकगोत्रोत्पन्नायामुकप्रपौत्रायामुकपौत्रायामुकपुत्रायामुकशर्मणेश्रीधररूपिणेकन्यार्थिने
वराय ॥ अमुकप्रवरोपेतामुकगोत्रोत्पन्नाममुकप्रपौत्रीममुकपौत्रीममुकशर्मणोममपुत्रीममुकनाम्नींकन्यां श्रीरूपिणींप्रजापति
दैवत्यांप्रजोत्पादनार्थंतुभ्यमहंसंप्रददेनमम ॥ कन्यांप्रतिगृह्णातुभवान्इतिवरहस्तेसकुशाक्षतजलंक्षिपन्प्रजापतिःप्रीयतामिति
मनसास्मरेत् ॥ एवंपुनःकन्यातारयत्वित्यादिद्विः ॥ ततोवरः ॐ स्वस्तीत्युक्त्वाकन्यायादक्षिणांसमभिमृश्य ॥ ॐ कइ॒दं
कस्मा॑अदा॒त्काम॒ःकामा॑यादा॒त्कामो॑दा॒ताकाम॒ःप्रति॑ग्रही॒ताकामं॑समु॒द्रमावि॑श॒कामे॑नत्वा॒प्रति॑गृह्णा॒मि॒कामै॒तत्ते॑वृ॒ष्टिर॑सि॒द्यौस्त्वा॑

१ कन्यादानेनममेतिनवाच्यमितिकेचित् इतिदानचंद्रिका । पितामहोदानकर्ताचेत्पौत्रीमित्यतःपूर्वममेतिवदेन्नपुत्रीमित्यतःपूर्वं । प्रपितामहः
प्रपौत्रीमित्यत्रममेतिवदेत् । भ्रात्रादिःपुरुषत्रयकीर्तनमेवकुर्यात्क्वापिममेतिनवदेत् । मातुलादिरन्योवादातास्वगोत्रंविशेषणत्वेनोक्त्वामुकशर्मणःसम
स्तपितॄणामितिकन्यापितृनामषष्ठ्यंतमुक्त्वाकन्याविशेषणत्वेनतद्गोत्रादिवदेत् । ममवंशकुलेजातेत्यत्रममेतिस्थानेकन्यापितृनामवदेत् । दत्तकन्या
दानेममवंशकुलेदत्तेत्येवश्लोकोहः । इतिधर्मसिंधुकौस्तुभौ । कन्यादानांगत्वेनगवादिदानमंत्रास्तत्रैवालोचनीयाः ।

ददातुपृथिवीप्रतिगृह्णातु ॥ धर्मप्रजासिद्ध्यर्थंकन्यांप्रतिगृह्णामीतिवदेत् ॥ ततोदाता ॥ गौरींकन्यामिमांविप्रयथाशक्तिविभूषितां ॥ गोत्रायशर्मणेतुभ्यंदत्तांविप्रसमाश्रय ॥ कन्येममाग्रतोभूयाःकन्येमेदेविपार्श्वयोः ॥ कन्येमेपृष्ठतोभूयास्त्वद्दानान्मोक्षमाप्नुयाम् ॥ ममवंशकुलेजातापालितावत्सराष्टकम् ॥ तुभ्यंविप्रमयादत्तापुत्रपौत्रप्रवर्धिनी ॥ (न्यूनवयस्कायांपालितासप्तवर्षकमित्याद्यूहःकार्यः ) धर्मेचार्थेचकामेचनातिचरितव्यात्वयेयम् ॥ वरःनातिचरामीतिवदेत् ॥ ततोदाताउपविश्यदेशकालौस्मृत्वाकृतस्यकन्यादानस्यप्रतिष्ठासंसिद्ध्यर्थमिदंसुवर्णमग्निदैवतंदक्षिणात्वेनतुभ्यमहंसंप्रददे इतिसजलंसुवर्णंवरहस्तेदत्वानममेतिवदेत् ॥ वरः ॐ स्वस्ति ॥ ततोदाताजलभाजनभोजनगोमहिष्यश्वगजदासीदासभूवाहनालंकारादियथाविभवंसंकल्पपूर्वकंवरायदद्यात् ॥ अथवरः ॥ यत्कक्षीवांसंवननंविश्वेदेवाअनुष्टुप् ॥ वधूकुक्ष्यभिमर्शनेविनियोगः ॥ ॐ यत्कक्षीवांसंवननंपुत्रोअंगिरसाभवत् ॥ तेननोद्यविश्वेदेवाःसप्रियांसमजीजनन् ॥ इत्यनेनकन्यायादक्षिणकुक्षिमभिमृशेत् ॥ अथपुरोधाःपूर्वाभिमंत्रितकलशजलंकांस्यपात्रेआसिच्य ॥ अनाधृष्टमित्यस्यवामदेवआपोबृहती ॥ उदकाभिमंत्रणेविनियोगः ॥ ॐ अनाधृष्टमस्यनाधृष्यंदेवानामोजोअभिशस्तिपाः ॥ अनभिशस्त्यंचसासत्यमुपगेषांस्वितेमाधाः ॥ इत्युदकमभिमंत्र्यसहिरण्यपवित्रयासकुशदूर्वापल्लवयौदुंबर्यार्द्रयाशाखयावधूवरावभिषिंचेत् ॥ तत्रमंत्राः ॥ आनःप्रजामितिचतसृणांसूर्यासावित्रीसूर्यासावित्रीआद्याजगतीद्वितीयात्रिष्टुप्अंत्येद्वेअनुष्टुभौ ॥ अभिषेकेविनियोगः ॥ ॐ आनःप्रजांजनयतुप्रजापतिराजरसायसमनक्त्वर्यमा ॥ अदुर्मंगलीःपतिलोकमाविशशंनोभवद्विपदेशंचतुष्पदे ॥ अघोरचक्षुरपतिघ्न्येधिशिवापशुभ्यःसुमनाःसुवर्चाः॥ वीरसूर्देवकामास्योनाशंनोभवद्विपदेशंचतुष्पदे ॥ इमांत्वमिंद्रमीढ्वःसुपुत्रांसुभगांकृणु ॥ दशास्यांपुत्रानाधेहिपतिमेकादशं

कृधि ॥ सम्राज्ञीश्वशुरेभवसम्राज्ञीश्वश्र्वांभव ॥ ननांदरिसम्राज्ञीभवसम्राज्ञीअधिदेवृषु ॥ समुद्रज्येष्ठाइतिचतसृणांवसिष्ठ आपस्त्रिष्टुप् ॥ अभिषेकेविनियोगः ॥ ॐ समुद्रज्येष्ठाः० ऋ० ४ ॥ आपोहिष्ठेतितिसृणामांबरीषःसिंधुद्वीपआपोगायत्री ॥ अभिषेकेविनियोगः ॥ ॐ आपोहिष्ठामयो० ऋ० ३ ॥ देवस्यत्वासवितुः० भूर्भुवःस्वःअमृताभिषेकोस्तु ॥ ततोदुग्धाक्तेन द्विगुणशुक्लसूत्रेणदंपतीकंठदेशेकटिदेशेचैशानीमारभ्यपंचवारंचतुर्वारंवाप्रदक्षिणंवेष्टयेत्पुरोधाएतैर्मंत्रैः ॥ ॐ परित्वागिर्वणो गिरइमाभवंतुविश्वतः ॥ वृद्धायुमनुवृद्धयोजुष्टाभवंतुजुष्टयः ॥ तान्वोमहोमरुतएवयाव्नोविष्णोरेषस्यप्रभृथेहवामहे ॥ हिर ण्यवर्णान्ककुहान्यतस्रुचोब्रह्मण्यंतःशंस्यंराधईमहे ॥ दशावनिभ्योदशकक्ष्येभ्योदशयोक्त्रेभ्योदशयोजनेभ्यः ॥ दशाभीशुभ्यो अर्चताजरेभ्योदशधुरोदशयुक्तावहद्भ्यः ॥ तेअद्रयोदशयंत्रासआशवस्तेषामाधानंपर्येतिहर्यतं ॥ तऊसुतस्यसोम्यस्यांधसोंशोः पीयूषंप्रथमस्यभेजिरे ॥ तेसोमादोहरीइंद्रस्यनिंसतेंशुंदुहंतोअध्यासतेगवि ॥ तेभिर्दुग्धंपपिवान्सोम्यंमध्विंद्रोवर्धतेप्रथतेवृषा यते ॥ वृषावोअंशुर्नकिलारिषाथनेळावंतःसदमित्स्थनाशिताः ॥ रैवत्येवमहसाचारवस्थनयस्यग्रावाणोअजुषध्वमध्वरं ॥ त तःकंठदेशस्थंसूत्रमधोनिष्कास्यकुंकुमाक्तमूर्णायुक्तंचकृत्वातेनहरिद्राखंडंबध्वातद्वधूवामहस्तप्रकोष्ठेवरोबध्नीयात् ॥ ॐ नी ललोहितंभवतिकृत्यासक्तिर्व्यज्यते ॥ एधंतेअस्याज्ञातयःप्रतिर्बंधेषुवध्यते ॥ इतिमंत्रेण ॥ ततःकटिदेशस्थंसूत्रमुपरिनिष्का स्यतादृशंकृत्वात्वरदक्षिणहस्तप्रकोष्ठेवधूर्बध्नीयात्तेनैवमंत्रेण ॥ ततःतैजसपात्रेगव्यक्षीरेघृतमासिच्यपात्रांतरेणार्द्रशुक्लतंडुला नादायवरःप्रक्षालितपाणिःप्रक्षालितवध्वंजलौक्षीरघृतंहस्तद्वयांगुलिभिर्द्विरुपस्तीर्यद्विवारंतंडुलानोप्यतेनतथैवद्विरभिघारये त् ॥ ततोवरांजलावप्येवमेवदात्रान्येनवापूरितेदातातदंजल्योःसुवर्णंनिधायवरांजलिंकन्यांजल्युपरिनिधाय ॥ कन्यातार

यतु ॥ दक्षिणाःपांतु ॥ बहुदेयंचास्तु ॥ पुण्यंवर्धतां ॥ शांतिःपुष्टिस्तुष्टिश्चास्तु ॥ तिथिकरणमहूर्तनक्षत्रसंपदस्त्वित्युच्चार्य कन्यामुद्धृत्यतयांजलिस्थानक्षतान् भगोमेकामःसमृध्यतामितिवरमूर्धन्यारोपयेत् ॥ ततोवरःस्वांजलिस्थान् यज्ञोमेकामः समृध्यतामितिकन्याशिरसिक्षिपेत् ॥ एवंपुनर्द्विः ॥ तत्रद्वितीयेश्रियोमेकामइतिवधूः ॥ धर्मोमेकामइतिवरः ॥ तृतीयेप्रजामेकामइतिवधूः ॥ यशोमेकामइतिवरः ॥ ततःकन्यावरांजलौद्विरुपस्तीर्यद्विस्तंडुलानोप्यद्विरभिघारयेत् ॥ ततोदात्रान्येनवापूर्ववत्कन्यांजलावापूरितेदातापूर्ववद्धिरण्यंनिधायकन्यांजलिंवरांजलौनिधायपूर्ववत्कन्यातारयत्वित्यादिवाक्यषट्कंवदेत् ॥ ततोवरःयज्ञोमेकामःसमृध्यतां ॥ कन्यातुभगोमेकामःइति ॥ एवंपुनर्द्विः ॥ तत्रद्वितीयेधर्मोमेइतिवरः ॥ श्रियोमेइतिवधूः ॥ तृतीयेयशोइतिवरः ॥ प्रजामेइतिवधूः ॥ अथवरोवध्वंजलिंपूर्ववदापूर्यस्वांजलिमन्येनपूरयित्वोभौवधूपूर्वकंतूष्णीमक्षतानारोपयेतां ॥ अथवरःस्वशिरःस्थपुष्पमेकंक्षीरेणाप्लाव्यतेनकन्याललाटेतिलकंकुर्यात् ॥ सापिस्वशिरःपुष्पेणतथैववरललाटेतिलकंकृत्वापुष्पमालांवरकंठेनिदध्यात् वरोपिकन्याकंठे ॥ ततोवरपक्षसुवासिनीवधूवरौप्राङ्मुखावुपवेश्याचारप्राप्तंअष्टपुत्रीसंज्ञकंवस्त्रद्वयंसकंचुकंकृष्णमणिसूत्रयुतंवध्वैसमर्प्य तामेकंपरिधाप्यापरमुत्तरीयंकुर्यात् ॥ ततोवरस्तत्सूत्रं ॥ मांगल्यतंतुनानेनभर्तृजीवनहेतुना ॥ कंठेबध्नामिसुभगेसाजीवशरदःशतं ॥ इतिमंत्रेणेष्टदेवतांस्मरन्वधूकंठेबध्नीयात् भूषणैश्चायुष्यंवर्चस्यमितिसूक्तंपठन्भूषयेत् ॥ ( ततोविवाहव्रतनिर्विघ्नतार्थंगणानांत्वाआतूनइंद्रेतिमंत्राभ्यांहरिद्राखंडपूगीफललडुकादिनिधायषोडशोपचारैःसंपूज्यपुनःपूर्वोक्तमंत्राभ्यांदंपत्योरुत्तरीयांतयोःपृथग्बध्नीयात् ॥ प्र०र० ) ततःपुरोधानीललो

१ ब्रह्मविष्णवीशरूपंतुरंभवत्त्रितंतुकं ॥ त्रिसरंरुक्मजंस्त्रीणांमांगल्याभरणंविदुः ॥ वामहस्तेएकसरंकंठेतुत्रिसरंस्मृतमिति ॥

द्दितमितिमंत्रेणतयोरुत्तरीयांतौमिथोबध्नीयात् ॥ ततःसभार्योदातावृद्धाःपुरंध्र्योज्ञातिबांधवाश्चक्रमादाशीर्भिराद्राक्षतारोपणंकुर्युः ॥ ( अत्रकौस्तुभेप्रयोगरत्नेचमहालक्ष्म्यादिपूजनपूर्ववायनदानाद्युक्तमस्ति ॥ ततोवधूवरौपरस्परहस्तधारणेनोक्तलक्षणांवेदिंमंत्रघोषेणगच्छेतां ) ॥ इतिकन्यादानप्रयोगः ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥

## ॥ १५६ ॥ अथविवाहहोमः ॥

श्रीः ॥ वरोवेद्यांप्राङ्मुखउपविश्यस्वदक्षिणतोनियमितवाचंवधूंचोपवेश्यद्विराचम्यप्राणानायम्यदेशकालौसंकीर्त्य प्रतिगृहीतायामस्यांवध्वांभार्यात्वसिद्धयेगृह्याग्निसिद्धयेचविवाहहोमंकरिष्ये ॥ तदंगस्थंडिलोल्लेपनादियोजकनामाग्निप्रतिष्ठापनांतंकृत्वाग्नेःप्रत्यग्दृषदंसोपलांप्रतिष्ठाप्यप्रागुदीच्यांधान्यराशेरुपर्युदकपूर्णंकुंभंनिधायतंपल्लवैरपिधाय गंधपुष्पैरलंकृत्योदगग्नेःप्राक्संस्थंसप्ततंडुलराशीनुपकल्प्य समिद्द्वयमादायदेशकालौसंकीर्त्यक्रियमाणेविवाहहोमेदेवतापरिग्रहार्थमित्याद्याघारावाज्येन ॥ अत्रप्रधानंत्रिरग्निंपवमानंसकृदग्निंप्रजापतिंचाज्येनअर्यमाग्निंवरुणाग्निंपूषाग्निंप्रजापतिंचलाजद्रव्येणशेषेणस्विष्टकृतमित्यादि षट्पात्रासादनांतंकृत्वापात्रपश्चिमतोलाजशूर्पमासाद्यआज्याधिश्रपणांतंकृत्वाज्यंलाजैःसहत्रिःपर्यग्निकृत्वाज्योत्पवनेकृतेलाजांस्त्रिःप्रोक्ष्यबर्हिरास्तरणाद्याघारहोमांतंकृत्वा ॥ आज्यभागौनस्तः ॥ अथप्रधानहोमः ॥ अग्नआयूंषीतितिसृणांशतंवैखानसाऋषयःअग्निःपवमानोदेवतागायत्रीछंदःविवाहप्रधानाज्यहोमे० ॥ ॐ अग्नआयूंषि० नांस्वाहा० अग्नयेपवमानायेदं० ॥ एवंप्रत्येकंत्यागः ॥ ॐ अग्निर्ऋषिःप० स्वाहा० ॥ ॐ अग्नेपवस्वस्व० स्वाहा ॥ त्वमर्यमावसुश्रुतोग्निस्त्रिष्टुप् ॥ विवाहप्रधा० ॥ ॐ त्वमर्यमाभवसियत्कनीनांनामस्वधावन्गुह्यंबिभर्षि ॥ अंजंतिमित्रंसुधितंनगोभिर्यद्दंपतीसमनसाकृणोषिस्वाहा ॥

अग्नयइदं० ॥ प्रजापतेहिरण्यगर्भःप्रजापतिस्त्रिष्टुप् ॥ विवाहप्रधा० ॥ ॐ प्रजापतेन० स्वाहा० ॥ प्रजापतयइदं० ॥ एवं पंचाज्याहुतीर्हुत्वाप्राङ्मुखोपविष्टायाःपुरतःप्रत्यङ्मुखस्तिष्ठन् ॥ गृभ्णामीतिसूर्यासावित्रीसूर्यासावित्रीत्रिष्टुप् वधूपाणिग्रहणे विनियोगः ॥ ॐ गृभ्णामितेसौभगत्वायहस्तंमयापत्याजरदष्टिर्यथासः ॥ भगोअर्यमासवितापुरंधिर्मह्यंत्वादुर्गार्हपत्यायदेवाः ॥ इतिमंत्रेणभार्यायाउत्तानंसांगुष्ठंदक्षिणपाणिमुत्तानेनदक्षिणहस्तेनगृह्णीयात् ॥ ततोवधूमुत्थाप्यतयाकरौक्षालयित्वा तस्याअंजलावाज्यमुपस्तीर्यवधूभ्रात्रातत्स्थानीयेनवातिष्ठताशूर्पस्थलाजान्मुष्ट्याद्विरोप्यस्वयंपंचावत्तीचेत्त्रिवारमोप्यशूर्पस्थानभिघार्यांजलिस्थानपिसकृदभिघार्य ॥ अर्यमणंनुवामदेवोर्यमाग्निरनुष्टुप् विवाहप्रधानलाजहोमेविनियोगः ॥ ॐअर्यमणंनुदेवंकन्याअग्निमयक्षत ॥ सइमांदेवोअर्यमाप्रेतोमुंचातुनामुतस्वाहेतिमंत्रंपठित्वोपविष्टस्तिष्ठंत्याधृतांजलिरंजल्यविच्छेदेनांगुल्यग्रैरंजलिपार्श्वेनहावयेत् ॥ वरःअर्यम्णेअग्नयइदं० ॥ ततोदृषदुपलवर्जमग्निमुदकुंभंपात्राणिचवधूंप्रदक्षिणंपरिणयन्स्वयमग्रेगच्छन्जपेत् ॥ ॐ अमोहमस्मिसात्वंसात्वमस्यमोहंद्यौरहंपृथिवीत्वंसामाहमृक्त्वंतावेहविवहावहै ॥ प्रजांप्रजनयावहैसंप्रियौरोचिष्णूसुमनस्यमानौजीवेवशरदःशतं ॥ ततोवधूंप्राङ्मुखींद्वाभ्यामपिपादाभ्यांदृषदं ॥ इममश्मानंवामदेवोवधूरनुष्टुप् ॥ अश्मारोहणेविनियोगः ॥ ॐ इममश्मानमारोहाश्मेवत्वंस्थिराभव ॥ सहस्वपृतनायतोभितिष्ठपृतन्यतः ॥ इतिमंत्रेणारोहयेत् ॥ पुनःपूर्ववदंजल्युपस्तरणादिकृत्वा ॥ वरुणंनुवामदेवोवरुणाग्निरनुष्टुप् विवाहप्रधानलाजहो० ॥ ॐ वरुणंनुदेवंकन्याअग्निमयक्षत ॥ सइमांदेवोवरुणःप्रेतोमुंचातुनामुतस्वाहा ॥ वरुणायाग्नयइदं० ॥ पुनरमोहमस्मीतिपूर्ववत्परिणीयइममश्मानमित्यश्मानमारोहयेत् ॥ पुनःपूर्ववदंजल्युपस्तरणादि ॥ पूषणंनुवामदेवःपूषाग्निरनुष्टुप् ॥ विवाहप्रधानलाजहो० ॥ ॐ

पूषणंनुदेवंकन्याअग्निमयक्षत ॥ सइमांदेवःपूषाप्रेतोमुंचातुनामुतस्वाहा ॥ पूष्णेऽग्नयइदं० ॥ पूर्ववदमोहमस्मीत्याद्यश्मारोहणंच ॥ ततोवरोऽवशिष्टांल्लाजानात्माभिमुखंशूर्पकोणेनजुहुयात्प्रजापतयइतिस्मृत्वास्वाहेत्युच्चार्यप्रजापतयइदंनममेत्युक्त्वा ॥ अत्रपरिणयनाश्मारोहणेनस्तः ॥ अथाग्नेरुदीच्यांसप्ततंडुलराशीन्पश्चिमतोवध्वादक्षिणपादेनवरःक्रमेणाभ्युत्क्रामयेन्मंत्रैः ॥ ॐ इषएकपदीभवसामामनुव्रताभव ॥ पुत्रान्विंदावहैबहूंस्तेसंतुजरदष्टयः ॥ इतिप्रथमं ॥ ऊर्जेद्विपदीभवेत्यादिद्वितीयं ॥ रायस्पोषायत्रिपदीभवेत्यादितृतीयं ॥ मायोभव्यायचतुष्पदीभवेत्यादिचतुर्थं ॥ प्रजाभ्यःपंचपदीभवेत्यादिपंचमं ॥ ऋतुभ्यःषट्पदीभवेत्यादिषष्ठं ॥ सखासप्तपदीभवेत्यादिसप्तमंराशिं ॥ ततःपूर्वस्थापितकुंभंकेनचिदानाय्यतत्रस्थएववरःस्वशिरसावधूशिरःसंयोज्यकलशस्थमुदकमादायात्मशिरःवधूशिरश्चशांतिरस्त्वित्यादिपंचदशमंत्रैरभिषिच्यस्वासनेउपविश्याज्येनस्विष्टकृदादिहोमशेषंसमाप्यपूर्वबद्धोत्तरीयांतौविस्रस्यध्रुवारुंधतीसप्तर्षिप्रभृतीन्वध्वासहदृष्ट्वा जीवपत्नीप्रजांविंदेयेतिवध्वावाचयेत् ॥ ततोवधूर्वाङ्नियमंविसृजेत् ॥ दिनविवाहेसायंसंध्यामुपास्यरात्रिविवाहेसायंसंध्यामनुपास्यैवध्रुवादिदर्शनं ॥ एतदादिविवाहाग्निंरक्षेत् ॥ रक्षितोग्निश्चतुर्थीकर्मपर्यंतंगृहप्रवेशनीयहोमात्पूर्वमनुगतश्चेद्विवाहहोमःपुनःकार्यः ॥ गृहप्रवेशनीयोत्तरंगतौहोमद्वयमपिपुनःकार्यं ॥ केचित्तुद्वादशरात्रपर्यंतंवृत्त्युक्तायाश्चेत्याज्याहुतिमेवाहुः ॥ इतिविवाहहोमः ॥

## ॥ १५७ ॥ अथगृहप्रवेशनीयहोमः ॥[1]

श्रीः ॥ वरःदेशकालौसंकीर्त्यममविवाहाग्नेर्गृह्यत्वसिद्धिद्वाराश्रीपरमेश्वरप्रीत्यर्थंगृहप्रवेशनीयहोमंकरिष्येइतिसंकल्प्य ॥ स्थंडि

---

१ अयमर्धरात्रोत्तरंविवाहहोमेपरेद्युःप्रातःकार्यः । अर्धरात्रात्पूर्वंविवाहहोमेतुतदैवविवाहहोमोत्तरंपृथगेवकार्यः । औपासनंत्वेतस्मात्पूर्वमेव ॥

लकरणाद्यग्निप्रतिष्ठांतंकृत्वा प्रत्यगग्नेःस्वदक्षिणदेशेप्राग्ग्रीवमुपरिलोमकमानडुहंचर्मास्तीर्यतस्मिन्वधूमुपवेश्यतयान्वारब्धः क्रियमाणेगृहप्रवेशनीयहोमेदेवतापरिग्रहार्थमित्यादिचक्षुषीआज्येनेत्यंतमुक्त्वा ॥ सूर्यासावित्रींचतुर्वारमाज्येनशेषेणस्विष्ट कृतमित्यादिपत्न्यान्वारब्धआज्यभागांतंकृत्वा ॥ आनःप्रजामितिचतसृणांसूर्यासावित्रीसूर्यासावित्री ॥ आद्याजगतीद्विती यात्रिष्टुप्अंत्येद्वेअनुष्टुभौ ॥ गृहप्रवेशनीयप्रधानाज्यहोमेविनियोगः ॥ ॐ आनंःप्रजांजंनयतु० ॥ १ ॥ सर्वत्रसूर्यासावित्र्या इदंनमम ॥ ॐ अघोरचक्षुरपं० ॥ २ ॥ सूर्यासावि० ॥ ॐइमांत्वमिंद्रमीढ्वः० ॥ ३ ॥ सूर्यासावि० ॥ ॐ सम्राज्ञीश्वशुरे० ॥ ४ ॥ सूर्या० इतिचतस्रआज्याहुतीर्हुत्वा ॥ समंजन्त्वित्यस्यसूर्यासावित्रीसूर्यासावित्र्यनुष्टुप् ॥ दधिप्राशनेआज्यशेषेणहृ दयांजनेवाविनियोगः ॥ ॐ समंजंतुविश्वेदेवाःसमापोहृदयानिनौ ॥ संमातरिश्वासंधातासमुदेष्ट्रींदधातुनौ ॥ इत्यनेनदधि प्राश्यपत्नीमपिप्राशयेत् हुतशिष्टाज्येनस्वस्यपत्न्याश्चहृदयांजनंवाकार्यम् ॥ ततोहस्तंप्रक्षाल्यस्विष्टकृदादिहोमशेषंसमाप्यपति पुत्रवतीभिःकृतनीराजनौदंपतीद्विजाशिषोगृह्णीयातां ॥ इतिगृहप्रवेशनीयहोमः ॥ ॥ छ ॥ ॥ छ ॥

## ॥ १५८ ॥ अथविवाहचतुर्थदिनकृत्यम् ॥

श्रीः ॥ ततोवरस्त्रिरात्रव्रताचरणांतेविवाहकालेवध्वापरिहितंवस्त्रं परिणीतायाअस्यावध्वाःसोमाद्युपभुक्तदोपनिबर्हणार्थं वधू वस्त्रदानंकरिष्यइतिसंकल्प्यसत्येनोत्तभितेतिसूक्तेनतदर्थविदेब्राह्मणायदद्यात् ॥ ततोव्रतसंपूर्त्यर्थंयथाशक्तिब्राह्मणभोजनंसं



---

१ अत्रऋगंतेस्वाहाकारंपठन्नाज्याहुतीर्जुहुयादिति प्र० र० । तत्रऋगंतशब्दःपूर्वसमावर्तनेममाग्नेइत्यत्रस्फुटीकृतोद्रष्टव्यः । २ गृह्याग्नितः सायंप्रातरौपासनहोमप्रयोगोत्रापेक्षितःपरंतुसपूर्वनित्यविधौगतएव । नष्टाग्नेःपुनःसंधानप्रयोगोपिप्रसंगमनुसृत्यगर्भाधानप्रयोगारंभेसंगृहीतोस्ति ।

कल्प्यतदामामाचादिनावाकुर्यात् ॥ ततोविवहाच्चतुर्थदिनेभद्रादिरहितेऽभुक्तः कन्यादातासभार्योदेशकालौसंकीर्त्यविवाहस्य
संपूर्णफलावाप्तयेवरस्यतत्पितृमात्रादीनांतत्पक्षीयाणांचयथाविभववस्त्रादिभिःपूजनमहंकरिष्ये ॥ तथाचउंमामहेश्वरप्रीति
द्वाराकन्यादानफलसंपूर्णतावाप्तयेवंशाभिवृद्धयेचऐरिणीपूजनंवरमात्रेऐरिणीदानंचकरिष्ये ॥ ( वसंतपूजनंचकरिष्ये ॥
इतिसंकल्प्यविधिवद्गणपतिपूजनंकृत्वा रंगवल्ल्यादियुतभूमौमध्येपंचरंगनिर्मितंस्वस्तिकंचतुर्विदिक्षुचत्वारिस्वस्तिकानिचवि
लिख्यतेषुतंडुलराशीन्कृत्वातदुपरिमध्येईशानादिक्रमेणचतुर्दिक्षुचाक्षतयुतपंचकलशान्निधायकौसुंभसूत्रेणकलशान्ग्रंथयित्वा
मुखेष्वाम्रपल्लवान्निधाय तदुपरिघृतपाचितपोलिकाःसंस्थाप्यतदुपरिपिष्टदीपपंचकंद्वयंवाप्रतिकलशंनिधायतत्रवसंतंपूजये
त् ॥ तांसुतइतिषळर्चस्यसूक्तस्यवामदेवोबृहदुक्थऋषिः ॥ वसंतरूपींद्रोदेवता ॥ त्रिष्टुप्छंदः ॥ वसंतपूजनेविनियोगः ॥
ॐ तांसुतेकीर्तिंमघवन्महित्वायत्त्वाभीतेरोदसीअह्वयेताम् ॥ प्रावोदेवाँआतिरोदासमोजःप्रजायैत्वस्यैयदशिक्षइंद्र ॥ य
द्चरस्तन्वावावृधानोबलानींद्रप्रब्रुवाणोजनेषु ॥ मायेत्सातेयानियुद्धान्याहुर्नाद्यशत्रुंनन्नुपुराविवित्से ॥ कउनुतेमहिमनः
समस्यास्मत्पूर्वऋषयोंतमापुः ॥ यन्मातरंचपितरंचसाकमजनयथास्तन्वः[1]स्वायाः ॥ चत्वारितेअसुर्याणिनामादाभ्यानिम
हिषस्यसंति ॥ त्वमंगतानिविश्वानिवित्सेयेभिःकर्माणिमघवन्चकर्थ ॥ त्वंविश्वादधिषेकेवलानियान्याविर्याचगुहावसूनि ॥
काममिन्मेमघवन्माविताारीस्त्वमाज्ञातात्वमिंद्रासिदाता ॥ योअदधाज्ज्योतिषिज्योतिरंतर्योअसृजन्मधुनासंमधूनि ॥ अध
प्रियंशूषमिंद्रायमन्मब्रह्मकृतोबृहदुक्थादवाचि ॥ इतिसूक्तेनवसंतंसंपूज्य ॥ इंद्रादिदेवतानांचप्रीतिदोनंदवर्धनः ॥ कालरू

---

१ अत्रप्रयोगेधनुश्चिह्नांतर्गतंवसंतपूजनंअग्रेतनंगजपूजनंचक्वचिद्देशेकुर्वंतिपारंपर्यागतशिष्टाचारान्नसर्वत्र ॥ आकरेषुनेदंदृश्यते ॥

पीसविश्वात्मावसंतःकामदोस्तुमे ॥ प्रसूनदेहरूपायअनंगत्रासकारिणे ॥ कालरूपायदेवायवसंतायनमोनमः ॥ इतिमंत्राभ्यांनमस्कृत्यपुष्पांजलिंदद्यात् ॥ ततोवरपिताकन्यांपूजयेत् ॥ अभिवस्त्रेतिपट्टकूलादिदत्वाआयुष्यमितिसूक्तेनसुवर्णालंकारादियाःफलिनीरितिपुष्पमालादिदत्वासुमंगलीरियंवधूरितिसीमंतेसिंदूरंनिक्षिप्य ॥ मांगल्यतंतुनानेनभर्तृजीवनहेतुना ॥ कंठेबध्नामिसुभगेसाजीवशरदःशतं ॥ इतिकंठेमंगलसूत्रंबध्नीयात् ॥) ततःकन्यापिताऐरिणीपूजनंकुर्यात् ॥ सवस्त्रफलतांबूलंदंपत्योर्वंशवर्धनं ॥ ऐरिण्याख्यंवंशपात्रंपक्वान्नैःपरिपूरितं ॥ करकैरुद्रसंख्याकैःसुवर्णपरिपूरितैः ॥ एतावदैरिणीरूपंकर्तव्यंकिलसूरिभिः ॥ एवंसंपाद्य ॥ ऐरिणित्वमुमादेवीमहेशोगिरिजापतिः ॥ अतस्त्वांपूजयिष्यामिऐरिणींसर्वकामदां ॥ सवस्त्रांचसदीपांचशूर्पैःषोडशभिर्युतां ॥ वरमात्रेप्रदास्यामिकन्यादानस्यसिद्धये ॥ इतिसंकल्प्यतत्रउमामहेश्वरौषोडशोपचारैःपूजयित्वाइदंऐरिण्याख्यवंशपात्रंषोडशशूर्पयुतंवरमात्रेतत्स्थानापन्नायैवासंप्रददेनममेत्युक्त्वावंशपात्रंदत्वामंत्रान्पठेत् ॥ वंशोवंशकरःश्रेष्ठोवंशोवंशसमुद्भवः ॥ अनेनवंशदानेनतुष्टऋद्धिंकरोतुमे ॥ वंशपात्रमिदंपुण्यंवंशजातसमुद्भवम् ॥ वंशानामुत्तमंदानमतःशांतिंप्रयच्छमे ॥ वंशपात्राणिसर्वाणिमयासंपादितानिवै ॥ उमाकांतायदत्तानिममगोत्राभिवृद्धये ॥ वंशवृद्धिकरंदानंसौभाग्यादिसमन्वितं ॥ वस्त्रेणाच्छादितंपूगफलहेमसमन्वितम् ॥ सर्वपापक्षयकरंनानाद्रव्यैस्तुपूरितं ॥ दानानामुत्तमंदानमतःशांतिंप्रयच्छमे ॥ इति ॥ ततःकन्यांवरपितृमात्रुत्संगयोःपृथगुपवेश्यपृथक्तौप्रार्थयेत् ॥ अष्टवर्षात्वियंकन्यापुत्रवत्पालितामया ॥इदानींतवपुत्रायदत्तास्नेहेनपाल्यतां ॥ इति ॥ ततःस्वस्तिनोमिमीतामितिसूक्तेनकंचुकीसहितंऐरिणीपात्रंवरपक्षीयाणांशिरसिदिवेदिवेसदृशीरितिसूक्तेननिधाय शिरसउत्तार्यभूमौनिधायपुनःशिरसिभूमौचेतिपंचवारंत्रिवारंवाप्रत्ये

कंकार्यं एवंवरस्यापि ॥ ( ततोदिग्गजौपूजयेत् ॥ देशकालौस्मृत्वावधूवरयोःसौभाग्यादिविवृद्ध्येगजपूजांकरिष्ये ॥ आतू नइंद्रेतिनवर्चस्यकाण्वःकुसीदीविनायकोगायत्री ॥ गजपूजनेविनियोगः ॥ ॐ आतूनंइंद्रक्षुमंतं० ऋक्० ९ इति गोधूमनि मितंप्राक्शिरसमुत्तराभिमुखंमत्तमातंगसंज्ञकंगजंयथाविभवंवस्त्रादिभिःसंपूज्य ॥ नागानामिहनागेशमत्तमातंगसंज्ञक ॥ वरवध्वोःसुखप्राप्त्यैप्रसन्नोभवसर्वदा ॥ इतिमंत्रेणप्रार्थ्य ॥ लवणनिर्मितंप्राक्शिरसंउत्तराभिमुखंदक्षिणभागस्थंभद्रमातंगंत थैवसंपूज्य ॥ ऐरातमहाभागभद्रमातंगसंज्ञक ॥ वरवध्वोःसुखप्राप्त्यैप्रसन्नोभवसर्वदा ॥ इतिप्रार्थयेत् ॥ ततोवरोमत्तमातंगे प्राङ्मुखस्तिष्ठेत् ॥ कन्यापिभद्रमातंगेउत्तराभिमुखीतिष्ठेत् ॥ ततोवधूंवामहस्तेधृत्वापश्चाद्भागेनानीयमत्तमातंगेअवस्थाप्य स्वयंचप्राग्भागेनगत्वाभद्रमातंगेस्थित्वा ) सौभाग्यादिविवृद्ध्येब्राह्मणसुवासिनीभ्योवायनानिदत्वाब्राह्मणेभ्योयथाशक्तिभूय सींदक्षिणांचदत्वाकर्मउमामहेश्वरार्पणंकुर्यात् ॥ इतिविवाहचतुर्थदिनकृत्यं ॥ ॥ छ ॥ ॥ छ ॥

## ॥ १५९ ॥ अथवधूगृहप्रवेशः ॥

श्रीः ॥ ज्योतिःशास्त्रोक्तेप्रतिशुक्रादिवर्जितेशुभकालेनवोढयावध्वामंगलतूर्यैःसह ॥ ॐ इहप्रियंप्रजयातेसमृध्यतामस्मिन्गृहे गार्हपत्यायजागृहि ॥ एनापत्यातन्वं१संसृजस्वाधाजिव्रीविदथमावदाथः ॥ इतिसूक्तेनकनिक्रददित्यादिमांगलिकमंत्रघोषकै र्द्विजैःसहवधूंपाणौगृहीत्वागृहंप्रविश्य सवधूकोवरःआचम्यप्राणानायम्यदेशकालौनिर्दिश्यअनयानवोढयावध्वासहकृतगृहप्र वेशांगभूतंगणपतिपूजनपूर्वकंस्वस्तिपुण्याहवाचनंश्रीमहालक्ष्मीपूजनंचकरिष्ये इतिसंकल्प्य गणपतिपूजनंपुण्याहवाचनंचकृ त्वाकांस्यपात्रेसिततंदुलान्प्रसार्यतत्रस्वर्णशलाकयाकुलदेवतानामस्वेष्टंपत्न्याःस्थापनीयंनामचविलिख्यतदस्तु० गृहावै० इत्या

दिभिःप्रतिष्ठाप्य ॐनामानितेशतक्रतोविश्वाभिर्गीर्भीरीमहे॥इंद्राभिमातिषाह्ये ॥ भूर्भुवःस्वःनामाधिष्ठात्र्यैमहालक्ष्म्यैनमइति महालक्ष्मींषोडशोपचारैर्यथाचारंसंपूज्यलिखितक्रमेणनामवाचयित्वाविप्राशिषोगृहीत्वातेभ्योदक्षिणांदद्यात्॥वधूगृहप्रवेशः॥

## ॥ १६० ॥ अथदेवकोत्थापनमंडपोद्वासने ॥

श्रीः ॥ उक्तकालेमंडपांतःसपत्नीकउपविश्याचम्यप्राणानायम्यदेशकालौसंकीर्त्य॥ विवाहांगत्वेनस्थापितदेवतानामुत्थापनंमंडपोद्वासनंतदंगंगणपतिपूजनंपुण्याहवाचनंचकरिष्येइतिसंकल्प्यसर्वादेवताःप्रत्येकंप्रत्यहवत्पूजयित्वा ॥ॐउत्तिष्ठब्रह्मणस्पते देवयंतस्त्वेमहे ॥ उपप्रयंतुमरुतःसुदानवइंद्रप्राशूर्भवासचा ॥ ॐ अभ्यारमिदद्रयोनिषिक्तंपुष्करेमधु ॥ अवतस्यविसर्जने ॥ इतिविसृज्यभगवत्यादीनांमंडपांतस्तैलाभ्यंगोद्वर्तनोष्णोदकस्नानपूर्वकंपूजनंविधाय॥ वेष्टनसूत्रमुन्मुच्यस्वस्तिवाचनंकुर्यात्॥ तत्राभिषेकांतेपुरोधास्तच्छाखादिवंशपात्रेनिधायतदुपरिप्रक्षिप्ताभिषेकजलंसकुटुंबेयजमानशिरसिकिंचित्स्रावयन् ॥ॐ प्रेतिचेतिचेत्येतद्धैसर्वंस्वस्त्ययनंयत्प्रेतिचेतिचेतितद्योस्यप्रियस्यात्तमेतेनानुमंत्रयेतप्रेतिचेतिचेतिस्वस्त्येवगच्छतिस्वस्तिपुनरागच्छतीति ब्राह्मणंपठेत् ॥ एवंत्रिःकुर्यात् ॥ ततःकर्तास्वशिरसिबद्धांजलिरस्मद्गोत्रेषट्सुषट्सुमासेषुशोभनमस्त्वितिभवंतोब्रुवंत्विति द्विजान्प्रार्थयेत् ॥ तेचतथास्त्वितिब्रूयुः ॥ ततोद्विजान्संपूज्यतदाशिषोगृहीत्वासकुटुंबोभुंजीत ॥ इति ॥ ॥ छ ॥

## ॥ १६१ ॥ अथाग्निद्वयसंसर्गप्रयोगः ॥

श्रीः ॥ द्वितीयादिविवाहव्रतांतेशुभदिनेप्राणायामदेशकालस्मरणादिकृत्वाममविवाहद्वयेनजातयोर्द्वयोर्गृह्याग्न्योःसंसर्गमहंक

१ समेचदिवसेकुर्याद्देवकोत्थापनंबुधः ॥ षष्ठेचविषमंनेष्टंमुक्त्वापंचमसप्तमौ ॥ समेषुषष्ठंविषमेषुपंचमसप्तमातिरिक्तंदिनंनाग्नेष्टमित्यर्थः ॥

रिष्ये ॥ इतिसंकल्प्योदक्संस्थयोर्द्वयोःस्थंडिलयोरुपलेपादिपूर्वकंक्रमेणगृह्याग्नीप्रतिष्ठाप्यप्रथमाग्नावन्वादध्यात् ॥ तत्रक्रमः॥ क्रियमाणेग्निद्वयसंसर्गकर्मण्यन्वाधानंकरिष्ये ॥ अस्मिन्नित्याद्याज्यभागांतमुक्त्वाअग्निंप्रधानदेवतांनवभिराज्याहुतिभिर्य क्ष्ये ॥ शेषेणस्विष्टकृतमित्याद्याज्यभागांतंकृत्वाआद्ययापत्न्यासमन्वारब्धोनवाहुतीर्जुहुयात् ॥ अग्निमीळइतिनवानांमधुच्छं दाअग्निर्गायत्री ॥ अग्निद्वयसंसर्गप्रधानाज्यहोमेविनियोगः ॥ ॐ अ॒ग्निमी॑ळे॰ इतिनवभिःस्वाहांताभिर्नवाहुतीर्हुत्वाप्रत्याहु त्यग्नयइदंनममेतित्यक्त्यास्विष्टकृदादिहोमशेषमुपस्थानांतंसमाप्यअग्नेत्वंनइतिचतसृभिश्चोपस्थाय तमग्निं अयंतेयोनिर्ऋत्वि यइत्यस्यगाथिनोविश्वामित्रोग्निरनुष्टुप् ॥ अग्निसमारोपणेविनियोगः ॥ ॐ अ॒यंते॒योर्नि॑र्ऋ॒त्वियो॒यतो॑जा॒तोअरो॑चथाः ॥ तंजा॒ नन्नग्नआ॒सीदाथा॑नोवर्धया॒गिरः॑ ॥ इतिसमिधिसमारोप्यद्वितीयाग्नौ प्रत्यवरोहयेत् ॥ द्वितीयाग्नौ ॥ प्रत्यवरोहेत्यस्यहिरण्य गर्भोग्निस्त्रिष्टुप् ॥ अग्निप्रत्यवरोहणेविनि॰ ॥ ॐ प्रत्य॑वरोहजातवेदः॒पुन॒स्त्वंदे॒वेभ्यो॒ह॒व्यंव॑हनःप्रजा॒नन् ॥ प्र॒जांपु॒ष्टिंर॒यिम॒स्मा सुधे॒ह्यथा॑भव॒यजं॑मानाय॒शंयोः ॥ इतितंप्रत्यवरोह्यान्वाधानेपूर्ववदाज्यभागांतमुक्त्वात्रप्रधानं ॥ षड्वारमग्निंचतुर्गृहीताज्ये नशेषेणस्विष्टकृतमित्यादिआज्यभागांतंकृत्वा ततःस्रुचिस्रुवेणचतुर्वारंप्रभूतमाज्यंगृहीत्वा पत्नीभ्यामन्वारब्धस्तेनाज्येनावय वशःषडाहुतीर्जुहुयान्मंत्रैः ॥ तेच ॥ अग्नावग्निर्हिरण्यगर्भोग्निःशक्वरी ॥ अग्निद्वयसंसर्गप्रधानाज्यहोमेविनियोगः ॥ ॐ अ॒ ग्नाव॒ग्निश्च॑रति॒प्रवि॑ष्ट॒ऋषी॑णांपु॒त्रोअ॑धिरा॒जए॒षः ॥ तस्मै॑जुहोमिह॒विषा॑घृ॒तेन॒मादे॒वानां॑मोमुहद्भाग॒धेयं॒मोअ॒स्माकं॑मोमुहद्भाग॒धेयं॒ स्वाहा॑ ॥ १ ॥ अग्नयइदंनममेतिसर्वत्रत्यागः ॥ अग्निनाग्निर्मधुच्छंदाअग्निर्गायत्री ॥ अग्निद्वयसंसर्गप्रधानाज्यहोमेवि॰ ॥ ॐ अ॒ग्निना॒ग्निःसमि॑ध्यतेक॒विर्गृ॒हप॑ति॒र्युवा॑ ॥ ह॒व्य॒वाड्जु॒ह्वा॑स्य॒ःस्वाहा॑ ॥ २ ॥ अस्तीदमधिमंथनमितितिसृणांविश्वामित्रोग्नि

रनुष्टुप् ॥ अंत्येद्वेत्रिष्टुभौ ॥ वि० प्राग्वत् ॥ ॐ अस्तीदमधिमंथनमस्तिप्रजननंकृतं ॥ एतांविश्पत्नीमाभराग्निंमंथामपूर्वथा स्वाहा ॥ ३ ॥ ॐ अरण्योर्निहितोजातवेदागर्भइवसुधितोगर्भिणीषु ॥ दिवेदिवईड्योजागृवद्भिर्हविष्मद्भिर्मनुष्येभिरग्निः स्वाहा ॥ ४ ॥ ॐ उत्तानायामवभराचिकित्वान्त्सद्यःप्रवीतावृषणंजजान ॥ अरुषस्तूपोरुशदस्यपाजइळायास्पुत्रोवयुनेजनि ष्टस्वाहा ॥ ५ ॥ पाहिनोअग्नएकयेतिप्रगाथोभर्गोग्निर्बृहती ॥ विनियोगःप्राग्वत् ॥ ॐ पाहिनोअग्नएकयापाह्यु१ तद्वितीय या ॥ पाहिगीर्भिस्तिसृभिरूर्जांपतेपाहिचतसृभिर्वसोस्वाहा ॥ ६ ॥ गृह्यपरिशिष्टमतेस्रुवेणैवअष्टाहुतयः ॥ ताश्च ॥ अग्नि नाग्निःसमिध्यतइत्युक्तयैका ॥ १ ॥ त्वंह्यग्नेअग्निनेत्यस्यविरूपोग्निर्गायत्री ॥ विनियोगःप्राग्वत्॥ ॐ त्वंह्यग्नेअग्निनाविप्रोवि प्रेणसन्त्सता ॥ सखासख्यासमिध्यसेस्वाहा ॥ २ ॥ पाहिनोअग्नइतितृचस्यप्रगाथोभर्गोग्निर्बृहती ॥ विनियोगःप्राग्वत् ॥ ॐ पाहिनोअग्नइत्युक्ता ॥ ॐ पाहिविश्वस्माद्रक्षसोअराव्णःप्रस्मवाजेषुनोव ॥ त्वामिद्धिनेदिष्ठंदेवतातयआपिंनक्षामहे वृधेस्वाहा ॥ ॐ आनोअग्नेवयोवृधंरयिंपावकशंस्यं ॥ रास्वाचनउपमातेपुरुस्पृहंसुनीतीस्वयशस्तरंस्वाहा ॥ अस्तीदमिति तृचउक्तः ॥ सर्वत्राग्नयइदंनममेतित्यागः ॥ एवंहुत्वास्विष्टकृदादिहोमशेषंसमाप्यआयतनेग्निंनिधाययथापूर्वंपरिचरेत् ॥ इतिअग्निद्वयसंसर्गप्रयोगः ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥

## ॥ १६२ ॥ अथाशौचेहोमविधिः ॥

श्रीः ॥ जननशावाशौचयोर्ऋत्विगादिनासायंप्रातर्होमौकारयेत् ॥ स्वयंचद्रव्यत्यागंकुर्यात् ॥ ऋत्विगाद्यन्याभावेतुआशौचपा तात्पूर्वंहोमांतेवक्ष्यमाणप्रकारेणाग्निसमारोपणंकृत्वासूतकनिवृत्तौस्नात्वाकृतनित्यक्रियोऽग्निंप्रतिष्ठाप्यप्राणानायम्यदेशकालौ

संकीर्त्यममनित्यहोमातिक्रमजन्यदोषपरिहारार्थंप्रायश्चित्तपूर्वकंअतिक्रान्तहोमान्करिष्यइतिसंकल्प्य परिसमूहनादिकृत्वाअ ग्नेःपश्चिमतःसपवित्रेपात्रेआज्यमासिच्य अंगारानायतनादुत्तरतोबहिःकृत्यतेष्वाज्यपात्रंनिधायतृणेनावज्वल्यदर्भाग्रद्वयंक्षि प्त्वातेनैवाज्यंत्रिःपर्यग्निकृत्वोल्मुकंनिरस्यकर्षन्निवोदगुद्वास्य अंगारानग्नावतिसृज्यसवितुष्ट्वेतिमंत्रेणसकृद्भिस्तूष्णीमेवंत्रिरुत्पू यपवित्रेप्रोक्ष्याग्नौप्रहृत्याज्यंपश्चिमतोदर्भेष्वासाद्यस्रुक्स्रुवयोःसंमार्जनंकृत्वाज्यंस्रुवेणस्रुचिचतुर्गृहीत्वा ॥ ॐ मनोज्योतिर्जुष तामाज्यंविच्छिन्नंयज्ञꣳसमिमंदधातु ॥ याइष्टाउषसोनिम्रुचश्चताःसंदधामिहविषाघृतेनस्वाहा ॥ मनसेज्योतिषइदंनममेतिहु त्वानित्यहोमार्थंपूर्ववत्तंडुलान्संस्कृत्यहोमवत्परिसमूहनादिसमित्प्रक्षेपणांततंत्रपूर्वकं अतीतकालादारभ्यक्रमेणद्वेद्वेआहुतीहु त्वातत्कालहोमंचकृत्वा अग्निंसूर्यंप्रजापतिंचोपस्थायपरिसमूहनाद्यंगजातंसकृत्कुर्यात् ॥ इत्याशौचेहोमविधिः ॥ ॥ छ ॥

## ॥ १६३ ॥ अथापत्कालेकर्तव्योहोमद्वयसमासप्रयोगः ॥

श्रीः ॥ पूर्ववत्सायंकालीनमाहुतिद्वयंहुत्वापरिसमूहनादिकृत्वाकंचित्कालंनिमील्यानिमील्यवापुनःपरिसमूहनादिसमित्प्रक्षेप णांतंकृत्वाश्वःकर्तव्यप्रातराहुतिद्वयमपकृष्यहुत्वोपस्थानंकुर्यात् ॥ एकैवचेत्समित्सायंहोमादावेव ॥ उपस्थानेमंत्राः ॥ हवि ष्पांतमितिपंचर्चस्यवामदेव्यःसूर्यवैश्वानरौत्रिष्टुप् ॥ उपस्थानेविनियोगः ॥ ॐ हविष्पांतमजरंस्वर्विदिदिविस्पृश्याहुतंजुष्टम ग्नौ ॥ तस्यभर्मणेभुवनायदेवाधर्मणेकंस्वधयापप्रथंत ॥ गीर्णभुवनंतमसापगूळहमाविःस्वरभवज्जातेअग्नौ ॥ तस्यदेवाःपृथि वीद्यौरुतापोरणयन्नोषधीःसख्येअस्य ॥ देवेभिर्न्विषितोयज्ञियेभिरग्निंस्तोषाण्यजरंबृहंतं ॥ योभानुनापृथिवींद्यामुतेमामाततं नरोदसीअंतरिक्षं ॥ योहोतासीत्प्रथमोदेवजुष्टोयंसमांजन्नाज्येनावृणानाः ॥ सपतत्रीत्वरंस्थाजगद्यच्छ्वात्रमग्निरकृणोज्जातवे

दाः ॥ यज्जातवेदोभुवनस्यमूर्धन्नतिष्ठोअग्नेसहरोचनेन ॥ तंत्वाहेममुतिभिर्गीर्भिरुक्थैःसयज्ञियोअभवोरोदसिप्राः ॥ एतैर्मंत्रैः प्राजापत्यैश्चोपस्थायपरिसमूहनाद्यंगजातंसकृत्कुर्यात् ॥ इत्यापत्कालेकर्तव्यहोमद्वयसमासप्रयोगः ॥ ॥ छ ॥

## ॥ १६४ ॥ अथगुर्वापदिपक्षहोमः ॥

श्रीः ॥ तत्रप्रतिपदिसायंकालेसमित्प्रक्षेपणांतंकृत्वाहुतिप्रमाणेनतंडुलान्पात्रद्वयेप्रतिपात्रंचतुर्दशवारंगृहीत्वाप्रथमपात्रस्थानग्नयेस्वाहेतिसर्वान्जुहुयात् ॥ ततःप्रजापत्यर्थंगृहीतान्प्रजापतिपदंचतुर्थ्यंतंमनसाध्यायन्स्वाहेतिहुत्वोपस्थानादिसकृत्कुर्यात् ॥ एवंद्वितीयायांप्रातःसमित्प्रक्षेपणादिपूर्ववत्कृत्वा सूर्यायस्वाहेतिपूर्ववद्धुत्वासायंकालीनोत्तराहुतिवद्द्वितीयाहुतिंचहुत्वोपस्थानाद्यंगजातंसकृत्कुर्यात् ॥ पक्षमध्येवापत्तावागामिचतुर्दशीसायंकालीनहोमांतान्शेषहोमान्सायंसमस्येत् ॥ पर्वप्रातर्होमांतांश्चप्रातःशेषहोमान्समस्येत् ॥ सर्वथापर्वसायंहोमःप्रतिपत्प्रातर्होमश्चपृथगेवहोतव्यौ ॥ अत्रपूर्ववदग्निंरक्षेत् ॥ आपन्निवृत्तौतुतदारभ्यसायंप्रातर्होमान्यथाकालंकुर्यात् ॥ इतिगुर्वापदिपक्षहोमविचारः ॥ ॥ छ ॥ ॥ छ ॥

## ॥ १६५ ॥ अथाग्निसमारोपविधिः ॥

श्रीः ॥ कालहोमानंतरं ॥ अयंतेगाथिनोविश्वामित्रोग्निरनुष्टुप् ॥ अग्निसमारोपणेविनियोगः ॥ ॐ अयंतेयोनिर्ऋत्वियोयतोजातोअरोचथाः ॥ तंजानन्नग्नआसीदाथानोवर्धयागिरः ॥ इतिमंत्रेणाश्वत्थसमिधंप्रताप्यतत्राग्निंसमारोपयेत् ॥ यद्वा ॥ यातेअग्नेयज्ञियातनूस्तयेह्यारोहात्मात्मानं ॥ अच्छावसूनिकृण्वन्नस्मेनर्यापुरूणि ॥ यज्ञोभूत्वायज्ञमासीदस्वांयोनिं ॥ जातवे

द्रोभुवआजायमानःसक्षयएहिं ॥ इतिमंत्रेणपाणीप्रताप्यआत्मनिसमारोपयेत् ॥ तत्रप्रादुष्करणकालेअरणिसमारोपेअरणी
निर्मथ्य ॥ ॐ प्रत्यवरोहजातवेदःपुनस्त्वंदेवेभ्योहव्यंवहनःप्रजानन् ॥ प्रजांपुष्टिंरयिमस्मासुधेह्यथाभवयजमानायशंयोः ॥
इत्यनेनस्थंडिलेग्निंप्रतिष्ठापयेत् ॥ अश्वत्थसमित्समारोपणपक्षेपुनर्होमकालेविधिवदग्निंप्रतिष्ठाप्यप्रत्यवरोहेतिमंत्रेणतांसमिध
मग्नौजुहुयात् ॥ एवमग्निःसिद्धोभवति ॥ ततोहोमःकार्यः ॥ आत्मसमारोपपक्षेसर्वदाऽस्पृश्यस्पर्शनंजलेनिमज्जनस्नानंस्त्रीगम
नंवाकुर्वन्मूत्रपुरीषोत्सर्गेशौचमकृत्वाचिरकालमतिष्ठंश्चहोमकाले आत्मसमारूढमग्निमुच्छ्वासरूपेणप्रत्यवरोहेतिमंत्रेणलौकि
काग्नौनिदध्यात् ॥ एवंयथाधिकारमग्निंप्रतिष्ठाप्यकालद्वयेएककालेवापूर्ववज्जुहुयात् ॥ इदंसमारोपणंद्वादशरात्रपर्यंतमेवकु
र्यात् ॥ पुरुषस्यैवप्रवासकालेकर्तव्यम् ॥ प्रवासश्चसाग्निकेनद्रव्यार्जनादिदृष्टकार्यार्थमेवकेवलेनपुरुषेणकार्यःनतुतीर्थयात्रा
द्यदृष्टार्थकार्यार्थं ॥ तत्रहोमांतेपूर्वोक्तमंत्रैरुपस्थाय पुनःप्रवासार्थंअभयंवोभयंमेस्त्वितिमंत्रेणाग्निमुपस्थायद्विमासमध्यवर्ति
कालेष्वन्यतमकालपर्यंतंप्रोष्यपुनःस्वगृहसमीपमेत्य ॐ गृहामाविभीतोपवःस्वस्त्येवोस्मासुचप्रजायध्वंमाचवोगोपतीरिरिति
मंत्रेणगृहंनिरीक्ष्य ॐ गृहानहंसुमनसःप्रपद्येवीरघ्नोवीरवतःसुवीरान् ॥ इरांवहंतोघृतमुक्षमाणास्तेष्वहंसुमनःसंविशानि ॥
इतिमंत्रेणगृहंप्रविश्य ॐ शिवंशग्मंशंयोःशंयोरितिपुनस्त्रिरनुवीक्ष्यहोमकालेउपस्थानांतंकृत्वा ॐ अभयंवोभयंमेस्त्वितिपुन
रग्निमुपतिष्ठेत ॥ ततोज्येष्ठपुत्रशिरउभाभ्यांपाणिभ्यांपरिगृह्य ॥ ॐ अंगादंगात्संभवसिहृदयादधिजायसे ॥ आत्मावैपुत्रना
मासिसजीवशरदःशतमितिमंत्रंजपित्वामूर्धनित्रिराजिघ्रेत् ॥ प्रत्याघ्राणंमंत्रावृत्तिः ॥ एवमितरेषांचपुत्राणांक्रमेणकृत्वाप्रस्त

दुहितॄणांतूष्णीमेवशिरोजिघ्रेत् ॥ एतत्पुत्रेपिप्रोष्यागतेभवति ॥ अवगतमप्यप्रियंप्रवासादागतंप्रतितदहर्ननिवेदयेयुः ॥
इत्यग्निसमारोपविधिः ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥

## ॥ १६६ ॥ अथाग्रयणहोमः ॥

श्रीः ॥ शरदिपौर्णमास्याममावास्यायांवापर्वणिल्दलाभेकृत्तिकादिविशाखांतदेवनक्षत्रेष्वन्यतमेचंद्रानुकूल्येआग्रयणंकार्यं ॥
प्रातरौपासनहोमंकृत्वासंकल्पपूर्वकमाभ्युदयिकंश्राद्धंविधायपवित्रेधृत्वाप्राणाना० देशकालौसंकीर्त्यममरोगजरानिवृत्तिश्रीय
शोन्नप्रासिद्धाराश्री०र्थंनित्यविधिरूपमाग्रयणंकरिष्येइतिसंकल्प्यास्मिन्नाग्रयणाख्येकर्मणिदेवतापरिग्रहार्थमन्वाधानंकरिष्ये
इत्यादिचक्षुषीआज्येनेत्यंतमुक्त्वात्रप्रधानं इंद्राग्नीविश्वान्देवान्द्यावापृथिव्यौचरुद्रव्येणशेषेणस्विष्टकृतमित्यादिसद्योयक्ष्य
इत्यंतमुक्त्वासमिद्द्वयंत्रयंवाग्नावाधायपरिसमूहनादिपूर्णपात्रनिधानांतंप्राक्तनंतंत्रंकृत्वाप्रत्यगग्नेःशूर्पेपवित्रवति तूष्णींचतुरश्च
तुरोमुष्टीन्निरुप्यतत्संख्ययातथैवप्रोक्ष्यावघातादिचरुश्रपणांतंकृत्वाज्यसंस्काराद्याज्यभागांतंकृत्वावदानधर्मेणचरुमवदाय ॥
ॐ सजूर्ऋतुभिःसजूर्विधाभिःसजूरिंद्राग्निभ्यांस्वाहा ॥ इंद्राग्निभ्यामिदंनममेतित्यक्त्वापुनरवदाय ॥ ॐ सजूर्ऋतुभिःसजूर्वि
धाभिःसजूर्विश्वेभ्योदेवेभ्यःस्वा० विश्वे० ॥ पुनरवदाय ॐ सजूर्ऋतुभिःसजूर्वि० द्यावापृथिवीभ्यांस्वा०द्यावा०॥ एवंतिस्र
आहुतीर्हुत्वास्विष्टकृद्धुत्वावशिष्टंपात्रांतरेकृत्वाततपात्रं सव्यपाणौधृत्वा ॥ ॐ प्रजापतयेत्वागृहंगृह्णामिमह्यंश्रियैमह्यंयशसेम
ह्यमन्नाद्याय इतिमंत्रेणदक्षिणेनपाणिनाअभिमृश्य ॥ ॐभद्रान्नःश्रेयःसमनैष्टदेवास्त्वयावशेनसमशीमहित्वा॥ सनोमयोभूःपि
तोआविशेहशंनोभवद्विपदेशंचतुष्पदेइतिमंत्रेणप्राश्यद्विराचम्यतत्रैवोपविष्टः ॥ ॐअमोसिप्राणतदृतंब्रवीम्यमासिसर्वानसिप्र

विष्टः ॥ समेजरांरोगमपनुद्यशरीरादमामएधिमामृधामइंद्र ॥ इतिमंत्रेणात्मनोनाभिमालभेत ॥ ततःपत्नीमध्यमहविःशेषम
मंत्रकंप्राश्नीयात् ॥ ततोयजमानइध्मसन्नहनहोमादिपरिषेचनांतंकर्मशेषंसमाप्यधृतपवित्रग्रंथिंविस्रस्यशुचिदेशेक्षिपेत् ॥
इदमाग्रयणंयदाश्वयुज्यांपौर्णमास्यांक्रियतेतदैककालत्वादाश्वयुजीकर्मणासमानतंत्रताभवति ॥ तत्राश्वयुजीकर्मप्रधानहोमंकृ
त्वाऽऽग्रयणप्रधानहोमः ॥ द्वयोश्चर्वोरेकंस्विष्टकृदित्यादिज्ञेयम् ॥ यवाग्रयणंनकार्यं ॥ श्यामाकैस्तुप्रस्तरंकुर्यान्नाग्रयणं ॥
शास्त्रांतरेदृष्टत्वात् ॥ इदंचाग्रयणमकृत्वानवान्नभक्षणस्यनिषिद्धत्वात् ॥ दुर्भिक्षेपुरातनधान्यालाभेनवधान्यभक्षणाधिका
रार्थंमलमासेपिकार्यं ॥ अनापदितुशुद्धएव ॥ आग्रयणाकरणेप्रायश्चित्तंकारिकायां ॥ अकृताग्रयणोश्नीयान्नवान्नंयदिवैततः ॥
वैश्वानरायकर्तव्यश्चरुःपूर्णाहुतिस्तुवा ॥ इति प्रयोगरत्ने स्मार्ताग्रयणप्रयोगः ॥ ॥ छ ॥ ॥ छ ॥

## ॥ १६७ ॥ अथपिंडपितृयज्ञः ॥

श्रीः ॥ सचाऽनाहिताग्निनापिकार्यः ॥ एवमनाहिताग्निर्नित्येश्रपयित्वातिप्रणीयजुहुयादितिसूत्रात् ॥ नित्येऔपासनाग्नावि
त्यर्थः ॥ तस्यचायमाहिताग्नितोविशेषः ॥ हविःश्रपणंकृत्वातिप्रणयनंकर्तव्यम् ॥ ततोतिप्रणीतस्योपसमाधानपरिस्तरणंच
कृत्वाततोर्वागतिप्रणीतादित्यादिसमानम् ॥ यस्मिन्नहोरात्रेपर्वप्रतिपदोःसंधिस्तत्रापराह्णेयागदिनेवापिंडपितृयज्ञःकार्यः ॥
अहोरात्रतिथिसंधौतुयागपूर्वदिनएवेतिवृत्तिकृत् ॥ उक्तापराह्णेऔपासनाग्निंप्रज्वाल्यशुचिःप्राणानायम्यधृतपवित्रोदेशकालौ
स्मृत्वा पितृतृप्तिद्वाराश्रीपरमेश्वरप्रीत्यर्थंपिंडपितृयज्ञंकरिष्ये इतिसंकल्प्याग्नेयाभिमुखोग्निंध्यात्वापरिसमुह्याग्नेय्यग्रकैर्दर्भैःप
रिस्तीर्याग्नेरीशान्यांवायव्यांवाग्नेयाग्रकान्दर्भानास्तीर्यपर्युक्ष्यतेषुचरुस्थालीशूर्पस्फ्योलूखलमुसलस्रुवध्रुवकृष्णाजिनसकृदाच्छि

न्नकुशेध्ममेक्षणजलपूर्णकमंडलूनितियथायोग्यंन्यग्बिलान्येकैकशआग्नेयसंस्थान्यासादयेत् काष्ठखड्गःस्फ्यः ॥ आज्यधारणा
र्थांगंध्रुवा ॥ शेषंप्रसिद्धं ॥ पात्राण्युत्तानानिकृत्वाकमंडलुजलेनप्रोक्ष्यस्थालींशूर्पंचादायाग्नेर्दक्षिणतोवस्थितव्रीहिमच्छकटंद
क्षिणतआरुह्यस्थालींशूर्पेनिधायव्रीहिभिःपूरयित्वा यथास्थालीमुखोपरिस्थाःशूर्पेपतंतितथानिमृज्य स्थाल्यास्यदेशतःपतिता
न्व्रीहीन्शकटेप्रास्याग्नेःपश्चिमतोवायव्यग्रीवेआस्तीर्णेकृष्णाजिनउलूखलंनिधाय तत्रस्थालीस्थान्व्रीहीन्निधायाग्नेयाभिमुख्या
तिष्ठंत्यापत्न्यावहतान्सकृत्फलीकृतानविविच्यसकृत्प्रक्षालितान्जीवतंडुलान्श्रपयेत् ॥ चरुमनुद्वास्यैवाग्नेरेकंप्रदीप्तमुल्मुकंगृ
हीत्वाग्नेराग्नेय्यांदिशिकृतेशुचिस्थंडिले ॥ येरूपाणिप्रतिमुंचमानाअसुराःसंतःस्वधयाचरंति॥परापुरोनिपुरोयेभरंत्यग्निष्टाँल्लोका
त्प्रणुदात्वस्मात्इतिमंत्रेणनीत्वातमतिप्रणीताख्यमग्निमाग्नेयाग्रकैःकुशैःपरिस्तीर्यदक्षिणाभिमुखःअपहताअसुरारक्षांसिवेदिष
दइतिमंत्रेणौपासनातिप्रणीतयोरंतरालेस्फ्येनसव्योत्तरपाणिद्वयगृहीतेनकुशमूलेनवाग्नेयाभिमुखांलेखामुल्लिख्यतामद्भिरभ्यु
क्ष्यसकृदाच्छिन्नबर्हिषाच्छाद्यानुत्पूतमाज्यंविलापितमुत्पूतंनवनीतंवाध्रुवायामासिच्याग्नेर्दक्षिणतः कुशेष्वासाद्यस्रुवंसंमृज्यते
नध्रुवास्थमाज्यमादायचरुमभिघार्योदगुद्वास्यातिप्रणीताग्नेःपश्चाद्दर्भेष्वासाद्यतद्दक्षिणतोभ्यंजनांजनकशिपूपबर्हणान्यासाद
येत् ॥ ततोतिप्रणीताग्नेःपश्चिमतउपविश्यार्चयित्वाप्राचीनावीत्यभिघारितमरत्निमितंपंचदशदारुकमिध्मंपितृतीर्थेनतूष्णीम
ग्नावभ्याधायस्रुवेणाज्यमादायमेक्षणमुपस्तीर्यउद्धृतचरुंद्विधाविभज्योत्तरभागमध्यादंगुष्ठपर्वमात्रंमेक्षणेनावदाय पुनःपूर्वभा
गादवदायपात्रस्थमवत्तंचाभिघार्य सोमायपितृमतेस्वधानमइत्यतिप्रणीताग्नेर्दक्षिणभागेपराचीनपाणिर्हुत्वा सोमायपितृम
तइदंनममेतित्यजेत्॥ पुनःपूर्ववद्दक्षिणभागस्थचरोरवदायाग्नयेकव्यवाहनायस्वधानमइत्यग्नेरुत्तरभागेपूर्ववद्धुत्वाअग्नयेकव्य

वाहनायेदंनममेतित्यक्त्वोपवीतीतूष्णींमेक्षणमग्नावनुप्रहरेत् ॥ स्वधानमस्थानेस्वाहाकारेणवाहोमस्तदाहुत्योर्व्यत्ययउपवीतिता च मेक्षणानुप्रहरणपर्यंतं॥ यथाग्नयेकव्यवाहनायस्वाहेतिप्रथमाहुतिः॥सोमायपितृमतेस्वाहेतिद्वितीया त्यागश्चआहुतिवत्॥ ततःप्राचीनावीती ॥ पूर्वकृतलेखायांस्थापितकमंडलुजलंदक्षिणहस्तेनपितृतीर्थेनाग्नेयापवर्गं शुंधंतांपितरःशुधंतांपितामहाः शुंधंतांप्रपितामहाः इतिमंत्रैस्त्रिर्निनयेत् ॥ ततोहुतशेषेणसाज्येनत्रीन्पिंडान्कृत्वातस्यांलेखायां प्राचीनावीती पराचीनपाणिःपितृतीर्थेनतान्पिंडानाग्नेयापवर्गंपित्रादिभ्योदद्यात् ॥ तद्यथा ॥ एतत्तेऽमुकशर्मन्येचत्वामत्रानुतेभ्यश्चेतिपित्रेएवंपितामहप्रपितामहयोरपि ॥ ततः अत्रपितरोमादयध्वंयथाभागमावृषायध्वमितिसकृत्पिंडाननुमंत्र्यसव्येनपार्श्वनेवावृत्योदङ्मुखोभूत्वा यथाशक्तिप्राणान्नियम्याऽऽवृत्त्यअमीमदंतपितरोयथाभागमावृषायीषतइ।तेपुनस्ताननुमंत्र्य उपवीती चरुशेषमवघ्रायाचम्य प्राचीनावीतीपूर्ववच्छुंधंतांपितरइत्याद्यैस्त्रिभिःकमंडलुजलंपिंडांतेनिनीयाऽमुकशर्मन्नभ्यंक्ष्वेतित्रिभ्योपिपिंडेष्वभ्यंजनंतैलंघृतंवादर्भेणदत्त्वाऽमुकशर्मन्नंक्ष्वेतितथैवांजनंदद्यात् ॥ अथ एतद्वःपितरोवासोमानोतोन्यत्पितरोयुङ्ध्वं इतिप्रतिपिंडंमन्त्रावृत्त्यानववासोदशांपंचाशद्वर्षाधिकंवयश्चेत्स्वप्रकोष्ठहृदयान्यतरंलोमवादत्त्वा कशिपूपबर्हणेनिवेद्य सव्योत्तराभ्यांकृतांजलिराग्नेयाभिमुखःपिंडानुपतिष्ठेतमंत्रैः ॥ तद्यथा ॥ नमोवःपितरइषेनमोवःपितरऊर्जेनमोवःपितरःशुष्मायनमोवःपितरोघोरायनमोवःपितरोजीवायनमोवःपितरोरसाय ॥ स्वधावःपितरोनमोवःपितरोनमएतायुष्माकंपितरइमाअस्माकंजीवावोजीवंतइहसंतःस्याम ॥ मनोन्वाहुवामहेनाराशंसेनसोमेन ॥ पितृणांचमन्मभिः ॥ आतंएतुमनःपुनःक्रत्वेदक्षायजीवसे ॥ ज्योक्सूर्यंदृशे ॥ पुनर्नःपितरोमनोददातुदैव्योजनः ॥ जीवंव्रातंसचेमहि ॥ ४ ॥ इतिचतसृभिर्मंत्रैरुपस्थाय ॥ अथ

परेतनपितरःसोम्यासोगंभीरेभिःपथिभिःपूर्विणेभिः ॥ दत्त्वायास्मभ्यंद्रविणेहभद्रंरयिंचनःसर्ववीरंनियच्छत ॥ इतिमंत्रेणपिंडानाग्नेयाभिमुखंसकृदुत्तानेनहस्तेनचालयेत् ॥ ततः ॥ अग्नेतमद्याश्वंनस्तोमैःक्रतुंनभद्रंहृदिस्पृशं ॥ ऋध्यामातओहैः ॥ इतिऔपासनाग्निसमीपंगत्वा ॥ यदंतरिक्षंपृथिवीमुतद्यांयन्मातरंपितरंवाजिहिंसिम ॥ अग्निर्मातस्मादेनसोगार्हपत्यःप्रमुंचतुकरोतुमामनेनसं ॥ इतिमंत्रंगार्हपत्यपदरहितंजपेत् ॥ केचित्तुद्वाभ्यामपिमंत्राभ्यामग्न्युपस्थानमाहुः ॥ अथवीरंमेदत्तपितरइतिमंत्रेणमध्यमंपिंडमादायसुपुत्रप्रास्यैपत्न्याप्राशयेत् ॥ आधत्तपितरोगर्भंकुमारंपुष्करस्रजं ॥ यथायमरपाअसत् ॥ इतिमंत्रेण अयंमंत्रःपत्न्या इतरौपिंडावप्स्वतिप्रणीतेवाक्षिपेत् ॥ आसादितानांद्वादशपात्राणांमध्येसकृदाच्छिन्नबर्हिरिध्ममेक्षणानांविनियुक्तत्वात् ॥ अवशिष्टानियानिनवतेषांद्वंद्वशउत्सर्गः ॥ अवशिष्टमेकंतृणेनसहोत्सृजेत् ॥ अत्रपित्रादिनामाज्ञानेतत्तन्नामस्थानेएततइत्यस्यानंतरंतत्पितामहप्रपितामहइतिशब्दाःक्रमेणपिंडदानमंत्रेप्रयोज्याः ॥ एकस्यद्वयोर्वानामाज्ञानेपियथास्थानं ततादिशब्दप्रयोगोऽन्यत्रनामप्रयोगः ॥ अत्रपित्रादीनांमध्येएकस्यद्वयोर्वाजीवनेतत्पिंडदानकालेपूर्वोक्तपिंडदानमंत्रेणस्वाहाकारांतेनजीवदुद्देशेनाग्नौसव्यपाणिनापिंडहोमः ॥ त्रयाणामपिजीवनेपितृमातृजीवनेवात्रयोपिपिंडाहोतव्याः ॥ अथवापिंडदानरहितोहोमांतएवपिंडपितृयज्ञः ॥ अनारंभोवापिंडपितृयज्ञस्य ॥ अन्येतुनजीवंतमपिदद्यादितिश्रुतेः ॥ पितरितदादित्रिकेवाजीवतित्रिभ्योपिहोमएवनभूमौपिंडदानम् ॥ जीवत्पितामहस्यपित्रेपिंडंदत्त्वाद्वयोर्होमः ॥ जीवत्प्रपितामहस्याद्ययोःपिंडःप्रपितामहस्यहोमः ॥ होमेचयज्ञोपवीतितासर्वत्र ॥ इत्याद्याकरतोज्ञेयम् ॥ अत्रचरुश्रपणहोमयोरधिकरणविकल्पमाहापस्तंबः ॥ सोयमेवंविहितस्यानाहिताग्नेरौपासनेश्रपणंहोमश्चातिप्रणीतेवाजुहुयादिति ॥ एतद्व्याख्यारुद्रदत्तीया ॥ अना

हिताग्नेर्दक्षिणाग्निस्थानीयऔपासनेश्रपणहोमौभवतः ॥ अथवा औपासनएवश्रपयित्वाततोग्निंदक्षिणाप्रांचंप्रणीयतस्मिन्जु हुयादित्यर्थइति ॥ एवंचौपासनेएवहोमः ॥ अतिप्रणीतस्त्वदृष्टार्थइतिकेचित् ॥ अन्येतुनित्येश्रपयित्वातिप्रणीयजुहुयादि त्याश्वलायनीयाद्वाक्यसमभिव्याहारात्सन्निधानादतिप्रणीतदृष्टार्थत्वाच्चातिप्रणीतएवहोमइति ॥ हरदत्तभाष्यमप्येवम् ॥ अत्रबहुलेख्यमपिपद्धतित्वान्नलिखितम् ॥ सयुक्तिकत्वात्तुअतिप्रणीतेहोमइत्युक्तम् ॥ यद्वा यथासंप्रदायंविचार्यकार्यम् ॥ सकृदाच्छिन्नकुशाख्यपिंडबर्हिरभावेकाशादिग्राह्यम् ॥ तदुक्तंविष्णुधर्मोत्तरे ॥ पिंडनिर्वपणंकार्यंकुशाभावेविचक्षणैः ॥ का शेषुराजदूर्वासुपवित्रेपरमेस्मृते इति ॥ राजदूर्वाअतिदीर्घदूर्वाः ॥ योनाहिताग्निरौपासनाग्निमान्मृतपितृकः सवक्ष्यमाणं पार्वणश्राद्धपिंडपितृयज्ञंव्यतिषङ्गेणकुर्यात् ॥ व्यतिषंगोनामद्वयोर्विच्छिद्यसहानुष्ठानात्मकस्तत्रविषयः ॥ तत्रपार्वणश्राद्धं पिंडपितृयज्ञंचव्यतिषंगेणकरिष्ये इतिसंकल्प्येध्माधानांततत्प्राक्तनंपितृयज्ञंकृत्वाब्राह्मणपच्छौचादिआच्छादनांतंश्राद्धंपुन रिध्माधानादिपितृयज्ञआमेक्षणानुप्रहरणमथपार्वणमत्रानुज्ञानादथोभयशेषंक्रमेणसमापयेदितिक्रमः ॥ आहिताग्निस्तुसर्वा धान्यर्धाधानीवादक्षिणाग्नावेवपिंडपितृयज्ञंकृत्वापार्वणश्राद्धंपृथगेवकुर्यात् ॥ तत्प्रकारंतुश्राद्धप्रयोगेवक्ष्यामः ॥ ॥ इतिप्रयोगरत्नेपिंडपितृयज्ञप्रयोगः ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥

## ॥ १६८ ॥ अथाग्निसंसर्गदोषेप्रायश्चित्तम् ॥

श्रीः ॥ स्वगृह्याग्निरन्यगृह्याग्निनासंसृष्टश्चेदग्नीविभज्योभौसमित्समारोपणंकुर्यातां ॥ ततःपूर्वहोतासमिधोग्निमवरोप्यदेशका लौसंकीर्त्यसमिद्वयमादायास्मिन्नन्वाहितेग्नावित्यादिचक्षुषीआज्येनेत्यंतमुक्त्वाअग्निंविविचिंप्रधानदेवतांचरुद्रव्येण शेषेणस्वि

ष्टकृतमितिसद्योयक्ष्ये इत्यंतमुक्त्वासमिद्धयमग्नावाधायपरिसमूहनादिपूर्णपात्रनिधानांतंकृत्वा।अग्नयेविविचयेत्वाजुष्टंनिर्वपा
मीतिचतुरोमुष्टीन्निरुप्यप्रोक्षणाद्याज्यभागांतंकृत्वाअग्नयेविविचयेस्वाहेतिहुत्वास्विष्टकृदादिहोमशेषंसमापयेत् ॥ अनुपक्रांत
दर्शपूर्णमासश्चेत्पूर्ववदाज्यंसंस्कृत्यस्रुवेणद्वादशवारंस्रुचिगृहीत्वा अग्नयेविविचयेस्वाहेतिस्रुचापूर्णाहुतिंहुत्वाकालहोमंचरेत् ॥
पश्चाद्धोतातुअग्नयेपथिकृतेजुहुयात् ॥ शवाग्निनासंसृष्टश्चेदग्नयेशुचयेस्वाहेतिजुहुयात् ॥ पचनाग्निनासंसृष्टश्चेदग्नयेसंवर्गाय
स्वाहेतिजुहुयात् ॥ वैद्युतेनसंसृष्टश्चेदग्नये"सुमतेस्वाहेतिजुहुयात् ॥ इतिअग्नेःसंसर्गदोषप्रायश्चित्तम् ॥ ॥ छ ॥

## ॥ १६९ ॥ अथार्कविवाहः ॥

श्रीः ॥ अथात्रानंतभट्टकृतःप्रयोगः ॥ वरःकृतनित्यक्रियोरविशनिवारयोर्हस्तनक्षत्रेऽन्यस्मिन्वाशुभेऽह्निग्रामात्प्राच्यामुदीच्यां
वाअर्कंगत्वादेशकालौसंकीर्त्य ॥ ममतृतीयमानुषीविवाहस्यशुभतासिद्ध्यर्थंअर्कविवाहंकरिष्ये ॥ तदंगतयागणेशपूजनंस्वस्ति
वाचनंमातृकापूजनंनांदीश्राद्धंचकरिष्ये ॥ इतिसंकल्प्यनांदीश्राद्धांतंसमाप्य आचार्यंवृणुयात् ॥ अमुकगोत्रोमुकशर्माहंअमु
कगोत्रममुकशर्माणंअस्मिन्नर्कविवाहकर्मणिआचार्यत्वेनत्वावृणेइतिवृत्वाततआचार्योवरोवा आकृष्णेनेतिमंत्रेणार्केछायासहि
तंसूर्यमावाह्यषोडशोपचारैःसंपूज्यगुडौदनंनैवेद्यंसमर्प्यवस्त्रेणतंतुभिश्चावेष्ट्यपूजोत्तरंप्रार्थयेत् ॥ त्रिलोकवासिन्सप्ताश्वछायया
सहितोरवे ॥ तृतीयोद्वाहजंदोषंनिवारयसुखंकुरु ॥ ततोवरोजलमादायत्रिःप्रदक्षिणंपरिषिंचेदेभिर्मंत्रैः ॥ ममप्रीतिकरायेयंम
त्स्रृष्टापुरातनी ॥ अर्कजाब्रह्मणासृष्टाअस्माकंप्रतिरक्षतु ॥ नमस्तेमंगलेदेविनमःसवितुरात्मजे ॥ त्राहिमांकृपयादेविपत्नीत्वं
मइहागता ॥ अर्कत्वंब्रह्मणासृष्टःसर्वप्राणिहितायच ॥ वृक्षाणामादिभूतस्त्वंदेवानांप्रीतिवर्धनः ॥ तृतीयोद्वाहजंपापंमृत्युं

चाशुविनाशय ॥ ततःकन्यांप्रयच्छेत्याचार्यंप्रार्थयेत् ॥ ततआचार्योवाग्दानंकुर्यात् ॥ तच्चेत्थं ॥ काश्यपावत्सारनैध्रुवेतित्रि
प्रवरान्वितकाश्यपगोत्रोत्पन्नांआदित्यस्यप्रपौत्रींसवितुःपौत्रींममामुकशर्मणःपुत्रीमर्कनाम्नींकन्यां अमुकप्रवरान्वितायामुकगो
त्रोद्भवायअमुकप्रपौत्रायामुकपौत्रायामुकपुत्रायामुकनाम्नेवरायदास्ये इतित्रिर्वाग्दानंकृत्वावरस्यमधुपर्कपूजांकुर्यात् ॥ ततो
वरःसुमुहूर्तेमंगलपाठपूर्वकमर्कंनिरीक्ष्यस्वस्तिनोमिमीतामितिसूक्तंपठेत् ॥ ततआचार्येणार्ककन्यादानंकारयेत् ॥ तत्रायंक्रमः॥
वाग्दानवद्गोत्राद्युच्चार्यआत्मनश्छायासहितसवितृप्रीतयेइमामर्ककन्यांतुभ्यमहंसंप्रददेनममेत्युक्त्वावरहस्तेसाक्षतंजलंक्षिप्त्वा
मंत्रंपठेत् ॥ अर्ककन्यामिमांविप्रयथाशक्तिविभूषितां ॥ गोत्रायशर्मणेतुभ्यंदत्तांविप्रसमाश्रयइति ॥ वरःस्वस्तीत्युक्त्वास्वशाखो
क्तांकामस्तुतिंपठेत् ॥ आचार्यःकृतस्यैतदर्ककन्यादानकर्मणःसंपूर्णतासिध्यर्थंइमांदक्षिणांतुभ्यमहंसंप्रददेइतिहिरण्यंदद्यात् ॥
ततःतत्रकन्याप्रतिनिधिराचार्यःकर्मणि ॥ वरःकंकणबंधनमक्षतारोपणंचार्कस्यवकुर्यात् ॥ ततोवरःपरित्वेत्यादिभिर्गायत्र्या
त्रिरावृत्यापंचकृत्वोर्कंवरंचसूत्रेणावेष्ट्यतत्सूत्रंद्वेधाकृत्वाएकंगायत्र्यार्कस्यस्कंधेवरोबद्ध्वाअपरंवरहस्तेआचार्योबध्नीयाद्बृहत्सा
मेतिमंत्रेण ॥ बृहत्सामक्षत्रभृद्वृद्धवृष्ण्यंत्रिष्टुभौजःशुभितमुग्रवीरं ॥ इंद्रस्तोमेनपंचदशेनमध्यमिदंवातेनसगरेणरक्ष ॥ ततोवरआ
चार्योवार्कस्याष्टदिक्षुमहीद्यौरित्यादिमंत्रावृत्त्याकलशान्संस्थाप्यकलशकंठान्सूत्रेणावेष्ट्यहरिद्रागंधयुक्तजलेनापूर्यप्रतिकुंभंइदं
विष्णुरितिमंत्रेणविष्णुप्रतिमाःसंस्थाप्यषोडशोपचारैःसंपूज्याऽर्कोत्तरतःस्थंडिलेयोजकसंज्ञमग्निंप्रतिष्ठाप्यान्वाधानंकुर्यात् ॥
अस्मिन्नन्वाहितेग्नावित्याद्याघारदेवतेआज्येनेत्यंतमुक्त्वाअत्रप्रधानं बृहस्पतिमग्निंवायुंसूर्यंप्रजापतिंचाज्येनशेषेणस्विष्टकृत
मित्याद्याघारांतेसंगोभिरित्यस्यांगिराबृहस्पतिस्त्रिष्टुप् ॥ अर्कविवाहप्रधानाज्यहोमेविनियोगः ॥ ॐ संगोभिरांगिरसोनक्ष

माणोभगइवेदर्यमणंनिनाय ॥ जनैर्मित्रोनदंपतीअनक्तिबृहस्पतेवाजयाशूँरिवाजौस्वाहा ॥ बृहस्पतयइदं ॥ यस्मैत्वावामदेवः कामःसम्राडनुष्टुप् ॥ यस्मैत्वाकामकामायवयंसम्राड्यजामहे ॥ तमस्मभ्यंकामंदत्वाथेदंत्वंघृतंपिबस्वाहा ॥ अग्नयइदं० ॥ ततोव्यस्तसमस्तव्याहृतिभिराज्यंहुत्वाकर्मशेषंसमापयेत् ॥ ततःआचार्यसंपूज्यतस्मैगोयुगंयथाशक्तिभूयसींदक्षिणांचदत्वा ॥ ममप्रीतिकरायेयमितिमंत्रेणार्कपुनस्त्रिःप्रदक्षिणीकृत्यप्रार्थयेत् ॥ मयाकृतमिदंकर्मस्थावरेषुजरायुणा॥ अर्कापत्यानिनोदेहि तत्सर्वंक्षंतुमर्हसि ॥ ततोमहाशांतिंपठित्वाकलशप्रतिमाद्याचार्यायदत्त्वापुण्याहवाचनंकुर्यात् ॥ अस्मिन्कर्मणिदशब्राह्मणाभोज्याः ॥ ततश्चतुर्थदिनेसद्योवापुनरर्केपूर्ववत्सूर्यंसंपूज्यविसृज्यमानुषींपरिणयेत् ॥ इत्यर्कविवाहः ॥ ॥ छ ॥

## ॥ १७० ॥ अथगोप्रसवशांतिः ॥

श्रीः ॥ कर्ताआचम्यप्राणानायम्यदेशकालौसंकीर्त्यास्यबालकस्यामुकदुष्टकालोत्पत्तिसूचितारिष्टनिवृत्तिद्वाराश्रीपरमेश्वरप्रीत्यर्थंगोमुखप्रसवाख्यांशांतिंकरिष्ये ॥ तदंगत्वेनगणेशपूजांकरिष्येइतिसंकल्प्यतंसंपूज्याचार्यवरणंतत्पूजनंचकुर्यात् ॥ आचार्योयदत्रसंस्थितमितिसर्षपविकिरणंशुचीवइतिपंचगव्येनापोहिष्ठेत्यद्भिश्चदेशप्रोक्षणं स्वस्त्ययनंतार्क्ष्यमितिप्रार्थनंचविधायगृहस्येशानभागेगोमयेनोपलिप्यश्वेतरजोभिःकर्णिकायुक्तंमहत्पंकजंकृत्वातत्रव्रीहीन्निक्षिप्यतेषुशूर्पेप्रागग्रेरक्तवस्त्रेप्रसारितेतत्रतिलविकिरणंचकृत्वाप्राङ्मुखमवाक्पादंशिशुंसंस्थाप्यरक्तवस्त्रेणाच्छाद्यसशिशुशूर्पंसूत्रेणवेष्टयित्वातस्मिन्गोमुखसान्निध्यंकृत्वा ॥ विष्णुर्योनिमितितिसृणांत्वष्टाविष्णुरनुष्टुप् गोमुखप्रसवभावनेविनियोगः ॥ ॐ विष्णुर्योनिंकल्पयतुत्वष्टारूपाणिपिंशतु ॥ आसिंचतुप्रजापतिर्धातागर्भंदधातुते ॥ गर्भंधेहिसिनीवालिगर्भंधेहिसरस्वति ॥ गर्भंतेअश्विनौदेवावाधत्तांपुष्करस्र

जा ॥ हिरण्ययीअरणीयंनिर्मंथतोअश्विना ॥ तंतेगर्भंहवामहेदशमेमासिसूतवे ॥ विष्णोःश्रेष्ठेनरूपेणास्यांनार्यांगवीन्यां ॥ पुमांसंपुत्रानाधेहिदशमेमासिसूतवे ॥ इतिसूक्तेनचिंतनंकृत्वातेनैवावृत्त्यापंचगव्यंविधायशिशुंस्नापयित्वा ॥ गवामंगेपुतिष्ठंतिभुवनानिचतुर्दश ॥ यस्मात्तस्माच्छिवंमेस्यादिहलोकेपरत्रचेतिगोःसर्वांगेषुवामांगेष्वेववास्पृशेत् ॥ ततआचार्यो विष्णोःश्रेष्ठेनेत्यस्यत्वष्टाविष्णुरनुष्टुप् बालादानेविनि० ॥ विष्णोःश्रेष्ठेनेतिशिशुंगृहीत्वामात्रेदद्यात् ॥ मातातंबालमादायगोमुखसमीपेनीत्वापश्चिमभागस्थासतीगोपुच्छदेशेपित्रेदद्यात् ॥ ततआचार्यःपितृहस्तेनमात्रेदापयेत् नवेवस्त्रेशिशुंसंस्थाप्याच्छादनमपसार्यपुत्रमुखेक्षणंकुर्यात् ॥ ततःपंचगव्येनाचार्यःशिशुंप्रोक्षेत् ॥ आपोहिष्ठेतितिसृणांसिंधुद्वीपआपोगायत्रीशिशोरभिषेकेवि० ३ ॥ ततःपिताहस्तद्वयेनपरिग्रहणपूर्वकं अंगादंगाद्धिरण्यगर्भोधातानुष्टुप् अवघ्राणेवि० ॥ अंगादंगात्संभवसिहृदयादधिजायसे ॥ आत्मावैपुत्रनामासिसजीवशरदःशतंइतिमंत्रेणशिशोर्मूर्धनित्रिरवघ्राय प्रत्याघ्राणंमंत्रावृत्तिः ( मंत्रेसइतिपुंनिर्देशात्कन्यायास्तूष्णीमाघ्राणं ) यथास्थानेशिशुस्थापनंकृत्वाशाखाध्यायिभिःस्वशाखोक्तविधिनापुण्याहंवाचयेत् ॥ तांगांदरिद्रब्राह्मणायविधिनादद्यात् ॥ ततोयजमानोवस्त्रस्वर्णधान्यानियथाशक्त्यर्कादिप्रीत्यर्थंआचार्यायदत्वान्येभ्योब्राह्मणेभ्योभूयसीं

---

१ मातुरुत्संगेकृत्वेतिकेचित् ॥ २ तत्रविष्णुवरुणयक्ष्माणःप्रीयंतां ॥ कृतगोजननकर्मणेस्वस्तीतिविशेषः ॥ तदसंभवेतु कृतस्यास्यगोमुखप्रसवस्यपुण्याहंभवंतोब्रुवंतु एवंस्वस्ति ऋद्धि श्रीः कल्याणमितित्रिस्त्रिर्वाचयित्वा ॥ ३ आचार्यादिऋत्विग्भ्योदद्यात् तानिचादक्षिणानि तत्रमंत्राः । गवामंगेषु० इतिगोः ॥ शरण्यंसर्वलोकानां० इतिवस्त्रस्य० ॥ हिरण्यगर्भेतिस्वर्णस्य ॥ धान्यंकरोतिदातारमिहलोकेपरत्रच ॥ तस्मात्प्रदीयतेधान्यमतःशांतिं० इतिधान्यस्य ॥ शां. र. ॥

दक्षिणांदद्यात् ॥ ततआचार्यःगोमुखप्रसवशांतिहोमंकरिष्येइतिसंकल्प्यस्थंडिलेवरदनामाग्निप्रतिष्ठापनांतेऽधिप्रत्यधिदेवता
रहितान्ग्रहानाग्नाद्यान्वादध्यात् ॥ चक्षुपीआज्येनेत्यंतेऽत्रप्रधानं अपःद्वादशोत्तरशतसंख्याकाभिःसंयुक्तदधिमध्वाज्याहुति
भिर्द्वात्रिंशत्संख्याभिर्वा विष्णुंअष्टाविंशतिसंख्याकाभिर्दधिमध्वाज्याहुतिभिःप्रत्येकमष्टाभिर्वा यक्ष्माणंअष्टचत्वारिंशत्सं
ख्याभिःदधिम० आदित्यादिनवग्रहान्प्रत्येकमष्टसंख्याभिर्दधिम० ॥ शेषेणेत्याद्याज्यभागांतेस्थंडिलस्यैशानदिशिग्रहपीठो
त्तरतोमहीद्यौरित्यादिविधिनाधान्योपरिघटस्थापनंकृत्वा तस्मिन्पंचगव्यंतिलान्क्षीरद्रुमकषायान्पंचरत्नानिक्रमेणनिक्षिप्य
वस्त्रयुग्मेनसंछाद्यगंधपुष्पादिभिःकलशमभ्यर्च्य कृताग्न्युत्तारणप्रतिमासुविष्णुवरुणयक्ष्माणःपूजयेत् ॥ तद्विष्णोर्मेधातिथि
र्विष्णुर्गायत्री ॥ ॐ तद्विष्णोः० ऋक् ॥ तत्त्वायामिशुनःशेपोवरुणस्त्रिष्टुप् गोप्रसवप्रधानपूजनेवि० ॥ ॐ तत्त्वायामिब्रह्म
णा० ॥ ऋक् ॥ अक्षीभ्यामित्यस्यविवृहायक्ष्मानुष्टुप् यक्ष्मावाहनेवि० ॥ ॐ अक्षीभ्यांते० ॥ इतियक्ष्माणंचावाह्यसंपूज्य ॥
( अत्रयक्ष्मपूजनंनेत्येके ) पूजांतेकुंभंस्पृष्ट्वाभिमंत्रयेत् ॥ यतइंद्रेतिषण्णांभर्गइंद्रोबृहती ॥ समानांसतोबृहतीपंक्तिः ॥
कुंभाभिमंत्रणेवि०॥ ॐ यतइंद्रभयामहेततोनोअभयंकृधि॥ मघवन्छग्धितवतन्नऊतिभिर्विद्विषोविमृधोजहि ॥ त्वंहिराधस्पते
राधसोमहःक्षयस्यासिविधतः ॥ तंत्वावयंमघवन्निंद्रगिर्वणःसुतावंतोहवामहे ॥ इंद्रस्पळुतवृत्रहापरस्पानोवरेण्यः ॥ सनोरक्षिष
च्चरमंसमध्यमंसपश्चात्पातुनःपुरः ॥ त्वंनःपश्चादधरादुत्तरात्पुरइंद्रनिपाहिविश्वतः ॥ आरेअस्मत्कृणुहिदैव्यंभयमारेहेतीरदे
वीः ॥ अद्याद्याःश्वश्वइंद्रत्रास्वपरेचनः ॥ विश्वाचनोजरितृन्सत्पतेअहादिवानक्तंचरक्षिपः ॥ प्रभंगीशूरोमघवातुवीमघःसं
मिश्लोवीर्यायकं ॥ उभातेबाहूवृषणाशतक्रतोनियावज्रंमिमिक्षतुः ॥ ऋचः ६ ॥ एतैर्मंत्रैरभिमंत्र्य ॥ ततआचार्यःस्रुवेणमि

लितदधिमध्वाज्यहोमंकुर्यात् ॥ आपोहिष्ठेतितिसृणांसिंधुद्वीपआपोगायत्री ॥ गोप्रसवप्रधानहोमे० ॥ ( सत्यपिवरुणहोम स्यवारुणत्वेऽब्भ्यइत्येवत्यागःपार्वणहोमेपूर्णमासायेदमितिवत् ) ॥ अप्सुमे० ऋष्यादिपूर्ववत् ॥ अतएवानुष्टुभोग्रहणं ॥ तद्विष्णोरित्यस्यमेधातिथिर्विष्णुर्गायत्री ॥ गोप्रसवप्रधानहोमे० ॥ तद्विष्णोः० विष्णवइदं० ॥ अक्षीभ्यांतइतिषण्णांविवृ हायक्ष्मानुष्टुप् ॥ गोप्रसवप्रधानहोमेवि० ॥ ॐ अक्षीभ्यांतेनासिकाभ्यांकर्णाभ्यांछुबुकादधि ॥ यक्ष्मंशीर्षण्यंमस्तिष्का ज्जिह्वायाविवृहामितेस्वाहा ॥ यक्ष्मणइदं० ॥ ॐ ग्रीवाभ्यस्तउष्णिहाभ्यःकीकसाभ्योअनूक्यात् ॥ यक्ष्मंदोषण्य१मंसाभ्यां बाहुभ्यांविवृहामितेस्वाहा ॥ यक्ष्मणइदं० ॥ ॐ आंत्रेभ्यस्तेगुदाभ्योवनिष्ठोर्हृदयादधि ॥ यक्ष्मंमतस्नाभ्यांयक्नः प्लाशिभ्यो विवृहामितेस्वाहा ॥ यक्ष्मणइदं० ॥ ॐ ऊरुभ्यांतेअष्ठीवद्भ्यांपार्ष्णिभ्यांप्रपदाभ्यां ॥ यक्ष्मंश्रोणिभ्यांभासदाद्भंससोविवृहामि तेस्वाहा ॥ यक्ष्मणइदं०॥ ॐ मेहनाद्वनंकरणाल्लोमभ्यस्तेनखेभ्यः ॥ यक्ष्मंसर्वस्मादात्मनस्तमिदंविवृहामितेस्वाहा ॥ यक्ष्मण इदं० ॥ अंगादंगाल्लोम्नोलोम्नोजातंपर्वणिपर्वणि ॥ यक्ष्मंसर्वस्मादात्मनस्तमिदंविवृहामितेस्वाहा ॥ यक्ष्मणइदं० ॥ ततःआकृष्णे नेत्यादिभिर्दध्यादिहोमः ॥ सवित्रेसोमायेदमितित्यागः ॥ सर्वत्रप्रत्यृचंअष्टाविंशतिरष्टौवाहुतयः ॥ प्रणीताप्रणयनसंस्थाज पांतेपरिस्तरणविसर्जनादिआचार्यायथाशक्तिदक्षिणादत्वास्थापितदेवतानामुत्तरपूजाविसर्जनांतेतत्प्रतिमांआचार्यहस्तेप्रति पाद्याग्निंसंपूज्य विभूतिधारणांतेगच्छगच्छेतितंविसृज्यदशत्रीन्वाब्राह्मणान्भोजयेत् कर्मणःसंपूर्णतांवाचयित्वेश्वरार्पणंकुर्या त् ॥ इतिगोप्रसवशांतिप्रयोगः ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥

---

१ अत्रयक्ष्महोमेसूक्तावृत्तिरेवेष्टा । सूक्तइतिमूलेदर्शनात् । तंत्रावृत्तिस्तुनदुष्यति इति शां. र. ॥

## ॥ १७१ ॥ अथमूलजननशांतिः ॥

श्रीः ॥ मूलोत्पत्तौतुद्वादशाहेअव्यवहितागामिमूलनक्षत्रयुतेशुभदिनेवागोप्रसवशांतिमुक्तविधिनाकृत्वादेशकालकीर्तनांतेस्यकुमारस्यमूलप्रथमचरणजन्मसूचितसकलारिष्टपरिहारद्वाराश्रीपरमेश्वरप्रीत्यर्थंशौनकोक्तप्रकारांसग्रहमखांशांतिंकरिष्ये इति संकल्प्य गणपतिपूजादिऋत्विग्वरणांतंकुर्यात् ॥ द्वितीयादिचरणोत्पत्तौसंकल्पेतथोहोबोद्धव्यः ॥ ब्रह्मसदस्यौकृताकृतौ ॥ ऋत्विजोष्टौचत्वारोवावृत्वायथाविभवंपूजयेत् ॥ ततआचार्यःपवित्रपाणिःप्राणानायम्ययथाचारंसंकल्प्यसुसमीकृतपुण्यदेशे यदत्रसंस्थितमितिसर्षपान्विकीर्य एतोन्विंद्रंस्तवामेतितिसृभिर्ऋग्भिर्जलमभिमंत्र्यतेनापोहिष्ठेतितृचेनतांभूमिंप्रोक्ष्यप्रतिमाग्न्युत्तारणंकृत्वामंडपाभावेप्रोक्षितभूमौऐशान्यांस्वस्तिकंविरच्य महीद्यौरितिभुवंस्पृष्ट्वाओषधयःसमितिद्रोणपरिमितव्रीहीन्प्रक्षिपेत् ॥ यथोक्तलक्षणंकलशंयुवासुवासाइतिप्रक्षालितवस्त्रावगुंठितंकृत्वातीर्थवारिणेमंमेगंगेइत्यापूर्य शरासःकुशरासइतिहिरण्यरूपइतिकूर्चंहेमसमायुक्तंविधाय चूतपल्लवैःसंयुक्तंस्वस्तिकेव्रीहिषुविन्यस्य सपल्लवाःक्षीरद्रुमशाखाअश्वत्थेवइतिनिक्षिप्य सहिरत्नानीतिपंचरत्नानि याओषधीरितिसर्वौषधीःप्रक्षिप्य गंधद्वारामितिगंधं याःफलिनीरितिपुष्पफले ओषधयइतियवान् कांडात्कांडादितिदूर्वाः स्योनेतिमृदः आपोहिष्ठेतितृचेनपंचगव्यंनिक्षिप्य पूर्णादर्वीतिपूर्णपात्रंनिधाय तस्मात्कलशाच्चतुर्दिक्षु महीद्यौरित्यादिमंत्रावृत्त्याचतुर्णांकलशानांपूर्णपात्रनिधानांतंकृत्वा मध्यकलशेस्थितसाष्टदलवाससिहेमप्रतिमायां ॥ यातेरुद्रेतिमंत्रस्यकश्यपोरुद्रःस्वराडनुष्टुप् रुद्रावाहनेविनियोगः ॥ ॐ यातेरुद्रशिवातनूरघोरापापकाशिनी ॥ तयानस्तनुवाशंतमयागिरिशंताभिचाकशीहि ॥ एतेनमंत्रेणरुद्रमावाह्यतेनैवसंपूज्य ॥ चतुर्ष्विमंमेवरुणतत्वायामित्वन्नोअग्नेसत्वंनोअग्नइति

क्रमेणवरुणमावाह्यपंचोपचारैःसंपूज्य ॥ यजुर्वेदीयजमानश्चेत्कंचिदृत्विजंमध्यकुंभेषडंगैकादशिनीजपेयोजयेत् ॥ सचरुद्रक
लशंस्पृशन्जपेत् ॥ बह्वृचोयजमानश्चेद्रुद्रसूक्तजपेकंचिद्योजयेत् ॥ छंदोगश्चेद्रुद्रसामजपेसामगांस्त्रीन्योजयेत् ॥ तेपिकलशंस्पृ
शंतोजपेयुः ॥ सूक्तसामजपयोरेकादशाष्टद्वित्र्येकसंख्यानांविकल्पः ॥ कद्रुद्रायेतिनवर्चस्यघौरःकण्वोरुद्रोगायत्रीअंत्यानुष्टुप् ॥
इमारुद्रायेत्येकादशर्चस्यसूक्तस्यकुत्सोरुद्रोजगतीअंत्येत्रिष्टुभौ ॥ आतेपितरितिपंचदशर्चस्यसूक्तस्यगृत्समदोरुद्रस्त्रिष्टुप् ॥ सर्वे
षांजपेविनियोगः ॥ ॐ कद्रुद्रायप्रचेतसे० ऋचः ९ ॥ ॐ इमारुद्रायतवसेकपर्दिने० ऋचः ११ ॥ ॐ आतेपितर्मरुतांसुम्न
मेतु० ऋचः १५ ॥ ( सूक्तांतरसत्वेपिनतज्जपःबहुवचनस्यत्रिषूपपत्तेः ) ॥ आवोराजानमितित्रयाणांसाम्नांवामदेवोरुद्रआद्य
स्यत्रिष्टुप्द्वयोर्गायत्री जपेवि० ॥ ॐ आवोराजानमध्वरस्यरुद्रं० ऋचः ३ ॥ ततआशुःशिशानइत्यादिचतुर्णामन्येषामपितत्रै
वजपःकार्यः तत्रत्यजपसंदेशपाठात् ॥ आशुःशिशानइतित्रयोदशर्चस्यसूक्तस्याप्रतिरथइंद्रश्चतुर्थ्याबृहस्पतिर्द्वादश्याआपोत्या
यामरुतस्त्रिष्टुप्अंत्यानुष्टुप् ॥ त्वमग्नेरुद्रइत्यनुवाकस्यहव्यवाडग्नयात्मारुद्रआद्याजगतीशिष्टानियजूंषि ॥ रक्षाणोअग्नेइत्यस्य
वामदेवोग्निस्त्रिष्टुप् ॥ रक्षोहणमितिपंचविंशर्चस्यसूक्तस्यपायुरग्निस्त्रिष्टुप् चतस्रोंत्याअनुष्टुभः सर्वेषांजपेविनियोगः ॥ अत्राऽ
पिशक्त्यापूर्वोक्तसंख्यास्वीकारः ॥ ततस्त्र्यंबकमंत्रस्याऽष्टोत्तरसहस्रंजपंतत्रैवकश्चित्कुर्यात् पावमानीनांतिसृणामृचाच ॥
आसांमधुच्छंदाःपवमानःसोमोगायत्री ॥ अन्येषुकलशेषुशांतिजपमृत्विजःकुर्युः ॥ यद्वाकुंभपंचकस्थानेकुंभद्वयंसंस्थाप्यतत्रै
कादिमरुद्रकुंभेरुद्रादिसर्वजपः ॥ अन्यकुंभेतदुत्तरस्थेवरुणमावाह्यशांतिजपः ॥ यद्वाचतुःप्रस्रवणएकवक्त्रःकुंभःपंचकुंभस्था
नेस्थापनीयः ॥ तत्रमुखेमध्यमकुंभकार्यंचतुर्षुप्रस्रवणेषुकुंभचतुष्टयकार्यंकर्तव्यमितिव्यवस्था ॥ ततःस्थापितकुंभोत्तरतोरक्त

वर्णैःशुक्लैर्वाव्रीहितंडुलैश्चतुर्विंशतिदलोपेतंसकर्णिकंपंकजंविधाय तत्कर्णिकायां महीद्यौरितिभूमिंस्पृष्ट्वाओषधयःसमितिव्री
हीन्निक्षिप्य सौवर्णराजतंमृन्मयंवाकुंभंपूर्वोक्तमंत्रेणशुद्धवस्त्रवेष्टितंकृत्वा तत्रेमंमेगंगेइति तीर्थजलमानीयव्रहिंसिखादीनि
शतमूलानि तदभावेविष्णुक्रांतासहदेवीतुलसीशतावरीर्निक्षिप्योक्तमंत्रैर्यवादिप्रक्षेपंकृत्वागंधाद्यलंकृतंकूर्चहेमोपेतंकुंकुमसर्वौ
षधिसंयुतंविधाय आकलशेष्वितिकर्णिकायांस्थापयेत् ॥ ततःपूर्ववत् याओषधीरित्यादिमंत्रैर्यवादिप्रक्षेपंकृत्वा पूर्णादर्वीति
निहितपूर्णपात्रेसाष्टदलंवस्त्रंनिधाय निष्कतदर्धतदर्धान्यतरमानहेमनिर्मितांनिर्ऋतिप्रतिमांप्रतिमांतराणिचपंचामृतेनप्रक्षा
ल्य तत्रवस्त्रेनिर्ऋतिप्रतिमांतद्दक्षिणतउत्तरतश्चेंद्रप्रतिमामपांप्रतिमां पूर्वादिदलेषुविश्वेदेवप्रतिमास्तदभावेफलानितंडुलपुंजा
न्वानिधाय प्राच्यादिस्थानेषुलोकपालप्रतिमाःफलानिवानिधाय प्रतिमासुदेवताआवाहयेत् यथा ॥ मोषुणोघौरःकण्वोनि
र्ऋतिर्गायत्री निर्ऋत्यावा० ॥ तद्दक्षिणे इंद्रंवोमधुच्छंदाइंद्रोगायत्री इंद्रावा० ॥ उत्तरेअप्सुमेमेधातिथिरापोनुष्टुप् अबावा
ह० ॥ विश्वान्देवानावाहयामि विष्णुं वसून् वरुणं अजैकपादं अहिर्बुध्न्यं पूषणं अश्विनौ यमं अग्निं प्रजापतिं सोमं रुद्रं
अदितिं बृहस्पतिं सर्पान् पितॄन् भगं अर्यमणं सवितारं त्वष्टारं वायुं इंद्राग्नी मित्रं इत्यावाहनांतेग्रहमखरीत्यालोकपाला
नावाह्यनैर्ऋतिप्रदेशेस्थंडिलाद्यग्निस्थापनांतंकृत्वा स्थापितकुंभैशानदेशेग्रहानावाह्यसंपूज्यतदैशान्यांकलशप्रार्थनांतंकुर्यात् ॥
ततोन्वाधानम् ॥ चक्षुषीआज्येनेत्यंतेआदित्यादिनवग्रहान्प्रत्येकंअर्कादिजातीयसमिच्चर्वाज्याहुतिभिरेतत्संख्याभिः अधि
देवताप्रत्यधिदेवताविनायकादिक्षेत्रपालांताःलोकपालांश्चपूर्वोक्ताहुतिभिरेतत्संख्याभिः ॥ निर्ऋतिंप्रत्येकंअष्टोत्तरशतसंख्या
भिर्घृतसंमिश्रपायससमिदाज्यचर्वाहुतिभिः ॥ ( समिदाद्याहुतीनांशक्तितोन्यूनसंख्याकरणपक्षेतथैवनिर्देशः ) ॥ इंद्रमपश्चप्र

तिद्रव्यमष्टाविंशतिसंख्याभिरुक्ताहुतिभिर्विश्वेदेवाद्याश्चतुर्विंशतिदेवताः अष्टाष्टसंख्याभिःपायसाहुतिभिः रक्षोहणमग्निंविं
शत्यधिकशतसंख्याभिःकृसराहु० सवितारंदुर्गांत्र्यंबकंकवीन्दुर्गांवास्तोष्पतिंअग्निंक्षेत्राधिपतिंमित्रावरुणौअग्निंचएतादेवताः
प्रत्येकमष्टाष्टसंख्याभिःकृसराहुतिभिः श्रियंप्रतिद्रव्यंविंशत्यधिकशतसंख्याभिःसमिदाज्यचर्वाहुतिभिःसोमंत्रयोदशवारंपाय
साहुतिभिः रुद्रंचतुर्गृहीताज्येन अग्निंपृथिवींमहांतं वायुमंतरिक्षंमहांतं आदित्यंदिवंमहांतं चंद्रमसंनक्षत्राणिदिशोमहांतंचाज्ये
न शेषेणेत्यादिपात्रासादनेपायसचरुकृसरार्थस्थालीनांस्रुवाणामाज्यस्थालीनांशूर्पाणांचासादनादिप्रणीतास्थापनांतंकृत्वा नि
र्ऋत्यादीनांवक्ष्यमाणतत्तन्मंत्रैःपूजांकुर्यात् ॥ निर्ऋतयेवस्त्रयुग्मंरक्तचंदनंकृष्णसितादिपुष्पाणिमेषशृंगधूपःआज्यदीपःपोलि
कौदनसुरामांसात्मकंपुरुषाहारपर्याप्तंनैवेद्यं ॥ तत्रब्राह्मणेनसुरास्थानेसैंधवमिश्रंक्षीरंमांसस्थानेलवणमिश्रंपायसंदेयम् ॥
अन्यैःसंभवेमुख्यमेवोभयम् ॥ पुष्पांजल्यंतेपूजनेकृतेनिर्ऋतिमिंद्रमपश्चोद्दिश्यशूर्पयोःपायसार्थेचर्वर्थेचद्वादशमुष्टीन्तूष्णींनि
रुप्य पायसार्थेनिरुप्तेषण्णवतिमुष्टीन्तूष्णींनिरुप्य पुनःशूर्पांतरेकृसरार्थेचतुश्चत्वारिंशत्संख्यान्मुष्टीन्निरुप्य चर्वर्थेपुनश्चतुरः
पायसार्थेद्विपंचाशन्मुष्टीन्निरुप्य तत्तत्संख्ययाप्रोक्ष्य क्रमेणावहत्यपात्रत्रयेहविस्त्रयंश्रपयेत् ॥ ततोयथान्वाधानंत्यागः ॥
यथा एतत्संख्याहुतिपर्याप्तंसमिद्द्रव्यंचरुराज्यंच आदित्यायसोमायेत्यादि एवमधिदेवतादिभ्यस्त्यागः ॥ ततोऽष्टोत्तरशतसं
ख्याहुतिपर्याप्तंघृतसंमिश्रपायसंनिर्ऋतये ॥ समिदादिषुसैवसंख्यान्यूनसंख्यावायापूर्वसंकल्पितातदनुसारित्यागः ॥ इयदाहु
तिपर्याप्तंसमिदाज्यचर्वात्मकंद्रव्यत्रयंनिर्ऋतये, अष्टाविंशत्याहुतिपर्याप्तंउक्तद्रव्यचतुष्टयंइंद्राय, एवमन्यः, अष्टाष्टसंख्याहु
तिपर्याप्तंपायसंविश्वेभ्योदेवेभ्यः विष्णवे वसुभ्यो वरुणाय अजायैकपदे अहयेबुध्नियाय पूष्णे अश्विभ्यां यमाय अग्नये प्रजा

यमाय सोमाय रुद्राय अदितये बृहस्पतये सर्पेभ्यो भगाय अर्यम्णे सवित्रे त्वष्ट्रे वायवे इंद्राग्निभ्या मित्राय, विंशत्यधिकशता हुतिपर्याप्तंकृसरंहविःरक्षोघ्नेऽग्नये, अष्टाष्टसंख्याहुतिपर्याप्तंकृसरद्रव्यं सवित्रे दुर्गायै त्र्यंबकाय कविभ्यो दुर्गायै वास्तोष्पतये अग्नये क्षेत्राधिपतये मित्रावरुणाभ्यांअग्नयेच, विंशत्यधिकशतसंख्याहुतिपर्याप्ताःसमिधःतावदाज्यंतावांश्चरुःश्रियै, त्रयोद शाहुतिपर्याप्तंपायसंसोमाय, चतुर्गृहीताज्यंरुद्रायस्वराजे, एकैकाहुतिपर्याप्तमाज्यं अग्नयेपृथिव्यैमहते वायवेंतरिक्षायमहते आदित्यायदिवेमहते चंद्रमसेनक्षत्रेभ्योदिग्भ्योमहतेच एवंत्यागेकृतेसाचार्यात्विजस्तथैवजुहुयुः तत्रादावुक्तसंख्ययाग्रहहो मंकृत्वा ॥ मोषुणोघौरःकण्वोनिर्ऋतिर्गायत्री होमेविनि० ॥ ॐ मोषुणः॒परापरा॒० ॥ इंद्रंवोमधुच्छंदाइंद्रोगायत्रीहोमे० ॥ अ प्सुमेमेधातिथिरापोनुष्टुप्होमेवि० ॥ एतैर्मंत्रैःप्रणवादिस्वाहांतैःयज्ञियतरुसमिधःसंकल्पानुसारिसंख्याकादधिमधुघृताक्ताहो तव्याः पायसचरूचतुरवत्ताधवदानविधिनाहविर्गृहीत्वाजुहुयात् ( विधिमदित्याकरोक्तेःपायसहोमेसमाप्तेसमिदादिहोमारं भः )॥ ततः ॐ विश्वेभ्योदेवेभ्यःस्वाहेत्येवंउक्तचतुर्विंशतिनाममंत्रैःप्रत्येकमष्टाष्टसंख्ययापायसहोमः ॥ कृणुष्वेतिपंचदशर्च स्यवामदेवोरक्षोहाग्निस्त्रिष्टुप् कृसरहोमेवि० ॥ ॐ कृणुष्वपाज॒ःप्रसि॑तिं० ऋचः १५ प्रत्यृचमष्टाष्टसंख्ययाहोमः ॥ गायत्र्या प्यष्टौतदाहुतयः ८ ॥ जातवेदसेकश्यपोदुर्गात्रिष्टुप् कृसरहोमे० ॥ जा॒तवे॑दसे० ८ ॥ त्र्यंबकंवसिष्ठोरुद्रोनुष्टुप् कृसरहो०८॥ सीरायुंजंतीत्यस्यबुधःकवयोगायत्री कृसरहोमे० ॥ ॐ सीरा॑युंजंति० ८ ॥ तामग्निवर्णांसौभरिर्दुर्गात्रिष्टुप् कृसरहो० ॥ ॐ तामग्निवर्णांतपसाज्वलंतीं० ८ ॥ वास्तोष्पतेवसिष्ठोवास्तोष्पतिस्त्रिष्टुप् कृसरहो० ॥ वास्तो॑ष्पते॒प्रति॑० ८ ॥ अग्निंदूतंमेधाति थिरग्निर्गायत्री कृसरहोमे० ॥ ॐ अ॒ग्निंदू॒तं० ८ ॥ क्षेत्रस्यपतिनावामदेवःक्षेत्राधिपतिरनुष्टुप् कृसरहोमे० ॥ ॐ क्षेत्र॑स्य॒पतिं

नावर्यं० ८ ॥ गृणानाजमदग्निर्मित्रावरुणौगायत्री कृसरहोमे० ॥ ॐ गृणानाजमदग्निना० ८ ॥ अग्निंदूतंपुरोदधइत्यस्यविरू
पोग्निर्गायत्री कृसरहोमे० ॥ ॐ अग्निंदूतंपुरोदधे० ८ ॥ ततःहिरण्यवर्णामितिपंचदशर्चस्यसूक्तस्यआनंदकर्दमचिक्लीतेंदिरा
सुताऋषयःश्रीर्देवताआद्यास्तिस्रोनुष्टुभःचतुर्थीप्रस्तारपंक्तिःपंचमीषष्ठ्यौत्रिष्टुभौततोष्टावनुष्टुभःअंत्याप्रस्तारपंक्तिःहोमेविनि
योगः ॥ ॐ हिरण्यवर्णांहरिणीं० ऋचः १५ ॥ प्रत्यृचंसमिदाज्यचरून्अष्टसंख्ययाजुहुयात् ॥ त्वंनःसोमविश्वतइत्यस्यप्रगा
थःसोमस्त्रिष्टुप् पायसहोमे० ॥ ॐ त्वंनःसोमविश्वतो० १३ ॥ यातेरुद्रेत्यस्यकश्यपोरुद्रःस्वराडनुष्टुप् आज्यहोमे० ॥ ॐ या
तेरुद्रशिवा० ॥ अनेनचतुर्गृहीतंहुत्वास्रुवेणचतस्रआज्याहुतीर्जुहुयात् ॥ ॐ भूरग्नयेचपृथिव्यैचमहतेचस्वाहा ॥ भुवोवायवे
चांतरिक्षायचमहतेचस्वाहा ॥ सुवरादित्यायचदिवेचमहतेच० ॥ भूर्भुवःसुवश्चंद्रमसेचनक्षत्रेभ्यश्चदिग्भ्यश्चमहतेचस्वाहेति॥
ततःस्विष्टकृत्यायसाज्यचरूणांसकृत्सकृदवदायाज्यंद्विर्गृहीत्वा ॥ यदस्येति० ॥ ततःप्रायश्चित्तहोमांतेकृतेदिक्पालग्रहविना
यकादिभ्योरुद्रायनिर्ऋतयेइंद्रायान्यःक्षेत्रपालायचसदीपमाषभक्तबलिदानंकार्यं ॥ आचार्योयजमानोवापूर्णाहुतिंजुहुयात् ॥
समुद्रादूर्मिरित्येकादशर्चस्यसूक्तस्यवामदेवोग्निस्त्रिष्टुप् अंत्याजगतीपूर्णाहुतिहोमेवि० ॥ ॐ समुद्रादूर्मिर्मधुमाँउदार० ऋचः
११ ॥ प्रजापतेहिरण्यगर्भःप्रजापतिस्त्रिष्टुप् पूर्णाहुतिहोमे० ॥ प्रजापतेन० ऋक् १ ॥ पूर्णादर्वीतिविश्वेदेवाःशतक्रतुरनुष्टु
प् पूर्णाहुति० ॥ ॐ पूर्णादर्विपरापत० ऋक् १ ॥ सप्ततेअग्नेसप्तवानग्निर्जगती पूर्णाहुतिहोमे० ॥ ॐ सप्ततेअग्ने० १ ॥ अ
ग्नयेप्रजापतयेशतक्रतवेसप्तवतेग्नयइदं० ॥ ततःप्रणीतानिनयनसंस्थाजपपरिस्तरणविसर्जनपरिसमूहनपर्युक्षणानिकृत्वागृह्या
ग्नौएतच्छांतिकरणपक्षेतत्समारोपः ॥ ततोरुद्रकलशंदक्षिणतःस्पृशन्त्र्यंबकमितिमंत्रंशतकृत्वोजपेत् ॥ यजमानस्यजपत्वा

दिनिमित्तकंचपूर्ववद्रुद्रैकादशिन्यादिजपमपिजपेत् अत्राप्येकादशादिसंख्याविकल्पःपूर्ववत् ॥ अथरुद्रकुंभनिर्ऋतिकुंभगत
देवताःपंचोपचारैःसंपूज्य भवत्प्रसादेनयजमानाभिषेकंकरिष्यइतिताःप्रार्थयेत् ॥ अस्मिन्समयेभूतिमिच्छताग्रहपूजनंका
र्यम् ॥ सर्वकलशोदकंकस्मिंश्चित्पात्रेआदायविनायकशांतिवत्स्वस्तिकचर्मपीठनिर्मितेभद्रासनेउपविष्टंधृतनववस्त्रंसर्वौषध्यनुलि
प्तांगंयजमानं तद्वामभागोपविष्टांतादृशींसापत्यांपत्नींचसर्त्विगाचार्योभिषिंचेत् ॥ कश्यपोक्तंशतच्छिद्रांतर्धारणंकृताकृतम् ॥
अभिषेकमंत्राः ॥ अक्षीभ्यामितिषण्णांविवृहायक्ष्मानुष्टुप् अभिषेकेवि० ॥ ॐ अ॒क्षीभ्यां॑ते॒नासि॑का० ऋचः ६ ॥ त्रिभि
ष्ट्वंदेवेतिसप्तानांयसिष्ठऋषिःआद्यानांत्रयाणामग्निश्चतुर्णांविश्वेदेवाःआद्यागायत्रीद्वितीयानुष्टुप्तिस्रोगायत्र्योंत्येद्वेऽनुष्टुभौ अ
भिषेके० ॥ ॐ त्रि॒भिष्ट्वंदे॑वसवितः० ऋचः ७ ॥ आपोहिष्ठेतिनवर्चस्यसूक्तस्यांबरीषःसिंधुद्वीपआपोगायत्री पंचमीवर्धमाना
सप्तमीप्रतिष्ठाअंत्येद्वेअनुष्टुभौअभिषेके० ॥ ॐ आपो॒हि॒ष्ठाम॑यो॒० ऋचः ९ ॥ आपइद्वेतिद्वयोःसप्तर्षयोविश्वेदेवाअनुष्टुप् अ
भिषेके० ॥ ॐ आप॒इद्वाउ॑भेष॒जी० ऋचौ २ ॥ सहस्राक्षेणेतितृचस्ययक्ष्मनाशनोयक्ष्मात्रिष्टुबंत्यानुष्टुप् अभिषेके० ॥ ॐ स॒
ह॒स्रा॒क्षेण॑श॒तशा॑रदेन० ॥ ऋचः ३ ॥ देवस्यत्वेतित्रिभिर्याजुषैः ॥ यज्जाग्रतइतिषण्णांप्रजापतिर्मनस्त्रिष्टुप् अभिषेके० ॥ ॐ
यज्जाग्र॑तो० ॥ ऋचः ६ ॥ अथ योसौवज्रधरोदेवोमहेंद्रोगजवाहनः ॥ मूलजातशिशोर्दोषंमातापित्रोर्व्यपोहतु ॥ योसौश
क्तिधरोदेवोहुतभुङ्मेषवाहनः ॥ सप्तजिह्वश्चदेवोग्निर्मूलदोषंव्यपोहतु ॥ योसौदंडधरोदेवोधर्मोमहिषवाहनः ॥ मूलजातशिशो
र्दोषंव्यपोहतुयमोमम ॥ योसौखड्गधरोदेवोनिर्ऋतीराक्षसाधिपः ॥ प्रशामयतुमूलोत्थंदोषंगंडांतसंभवम् ॥ योसौपाशधरोदे
वोवरुणश्चजलेश्वरः ॥ नक्रवाहःप्रचेतानोमूलोत्थाघंव्यपोहतु ॥ योसौदेवोजगत्प्राणोमारुतोमृगवाहनः ॥ प्रशामयतुमूलोत्थं

दोषंबालस्यशांतिदः ॥ योसौनिधिपतिर्देवःखड्गभृद्वाजिवाहनः ॥ मातापित्रोःशिशोश्चैवमूलदोषंव्यपोहतु ॥ योसौपशुपतिर्देवःपिनाकीवृषवाहनः ॥ आश्लेषामूलगंडांतदोषमाशुव्यपोहतु ॥ विघ्नेशःक्षेत्रपोदुर्गालोकपालानवग्रहाः ॥ सर्वदोषप्रशमनंसर्वेकुर्वंतुशांतिदाः ॥ इतिमंत्रैःसुरास्त्वामित्यादिभिश्चाभिषिंचेत् ॥ तच्छंयोःशंयुर्विश्वेदेवाःशक्वरी अभिषेके० ॥ तच्छंयोरावृणीमहे० ॥ ततस्तूष्णींवस्त्रवेष्टितमुखाभ्यांरुद्रनिर्ऋतिकुंभाभ्यांअभिषिक्तोयजमानःशुक्लवस्त्रगंधमाल्यधरःसपत्नीकःसापत्योविभूतिधारणंकृत्वानिर्ऋतिरुद्रकलशस्थदेवताःसंपूज्यविसृज्यग्रहाणामुत्तरपूजांविसर्जनंचकृत्वा आचार्यादींश्चंदनादिनासंपूज्य आचार्यायसवत्सांपयस्विनींगांदद्यात् ॥ निर्ऋतिप्रतिमांसोपस्करांतत्कलशंतथाग्रहप्रतिमाग्रहप्रीत्यर्थंदक्षिणाश्च ॥ ततोरुद्रजापिनेकृष्णोनड्वान्देयःरुद्रप्रतिमाःसोपस्करास्तत्कुंभांश्च इतरेभ्योपियथाशक्तिदक्षिणांदद्यात् ॥ धेन्वनडुहोरसंभवेतुदशकार्षापणाधेनावष्टावनडुहिस्मृताःइतिमूल्यंदेयम् ॥ तदसंभवेयथाशक्तिदद्यात् ॥ तत्राचार्यदत्तार्धंब्रह्मणेतद्दत्तार्धंसदस्यायतद्दत्तार्धंप्रत्येकमृत्विग्भ्योदेयम् ॥ ततस्तेभ्योमूलजननसूचितसर्वारिष्टनिवृत्तिरस्त्वित्याशिषंगृहीत्वाप्रणम्यक्षमापयेत् ॥ ततःपायसादिनाशतंतदर्धंदशवाब्राह्मणान्भोजयेत् ॥ तैश्चब्राह्मणैःसर्वशांतिपाठपूर्वकंभुक्त्वाशिषोदेयाः ॥ यजमानोनिर्ऋतिःप्रीयतामितितान्क्षमापयेत् ॥ ततईश्वरार्पणंकुर्यादितिमूलजननशांतिः ॥ ॥ छ ॥ ॥ छ ॥

## ॥ १७२ ॥ अथाश्लेषाजननशांतिः ॥

श्रीः ॥ यजमानःआचम्यप्राणानायम्यदेशकालाद्युच्चार्यगोमुखप्रसवंकृत्वाऽस्यशिशोराश्लेषाजननसूचितसर्वारिष्टपरिहारद्वाराश्रीपरमेश्वरप्रीत्यर्थंमनूक्तविधिनासग्रहमखामाश्लेषाशांतिंकरिष्येइतिसंकल्प्य॥ गणेशपूजनादिऋत्विग्वरणांतंकुर्यात् ॥ अ

द्युत्तारणसर्षपविकिरणाद्यंते मूलशांत्युक्तप्रकारेणकुंभपंचकेचतुःप्रस्रवणपंचवक्त्रैककुंभेवारुद्रवरुणयोरावाहनादिपूजनंविधा
यरुद्रैकादशिनीजपरक्षोहणमितिसूक्तजपांते रुद्रकुंभोत्तरभागेगोमयेनोपलिप्तेधात्वादिभिःपरितःशोभितेशुक्लतंडुलैरक्तपीतसि
तकृष्णपिष्टकैर्वाचतुर्विंशतिदलान्वितंपंकजंविधाय तत्कर्णिकायांभूमिंमहीद्यौरित्यभिमृश्य ओषधयइतिव्रीहीन्निक्षिप्याकल
शेष्विंतिस्थापितकलशमिमंमेगंगइतितीर्थोदकेनापूर्य गंधद्वारामितिगंधपुष्पाभ्यां युवासुवासाइतिवस्त्रवेष्टनेनचसंपूज्य कांडा
त्कांडादितिदूर्वाभिश्च अश्वत्थेवइतिपंचपल्लवैः स्योनेतिसप्तमृद्भिः आपोहिष्ठेतिपंचगव्येनचसंयोज्य याःफलिनीरितिफलानि
पंचरत्नानियवान्सर्वौषधीश्चप्रक्षिप्यपूर्णादर्वीतिनिहितपूर्णपात्रेसाष्टदलवस्त्रेआश्लेषादेवताप्रतिमायां ॥ नमोअस्तुवामदेवःस
र्पाअनुष्टुप्सर्पावाहनेवि० ॥ ॐ नमोअस्तुसर्पेभ्यइतिसर्पानावाह्यध्यायेत् ॥ सर्पोरक्तस्त्रिनेत्रश्चद्विभुजःपीतवस्त्रकः ॥ फल
कासिधरस्तीक्ष्णोदिव्याभरणभूषितःइति ॥ तद्दक्षिणोत्तरदेशयोःपुष्यमघेअधिप्रत्यधिदेवतेआवाह्य चतुर्विंशतिदलेषुपूर्वदल
मारभ्यप्रादक्षिण्येनपूर्वाफल्गुनीमारभ्यपुनर्वसुपर्यंतानिनक्षत्राणिआवाहयेत् ॥ तत्रपुष्यावाहने ॥ ॐ बृहस्पतिःप्रथ
मंजायमानः ॥ तिष्यंनक्षत्रमभिसंबभूव ॥ श्रेष्ठोदेवानांपृतनासुजिष्णुः ॥ दिशोनुवासर्वाअभयंनोअस्तु ॥ तिष्यःपुरस्तादुतम
ध्यतोनः ॥ बृहस्पतिर्नःपरिपातुपश्चात् ॥ बाधेतांद्वेषोअभयंकृणुतां ॥ सुवीर्यस्यपतयःस्यामेतितैत्तिरीयशाखोक्तोमंत्रः ॥ तथा
मघावाहने ॥ ॐ उपहूताःपितरोयेमघासु ॥ मनोजवसःसुकृतःसुकृत्याः ॥ तेनोनक्षत्रेहवमागमिष्ठाः ॥ स्वधाभिर्यज्ञंप्रयतंजुषं
ताम् ॥ येअग्निदग्धायेनग्निदग्धाः ॥ येमुंलोकंपितरःक्षियंति ॥ यांश्चविद्मयाँउचनप्रविद्म ॥ मघासुयज्ञँसुकृतंजुषंतामि
ति ॥ तथापूर्वाफल्गुन्याद्यावाहनानितत्रत्यैरेव ॥ गवांपतिःफल्गुनीनामसित्वमित्यादिवाक्याष्टकैःकर्तव्यानि ॥ यद्वानाममं

त्रैःपूर्वाफल्गुनीभ्यांनमः ॥ पूर्वाफल्गुन्यावावाहयामि उत्तराफल्गुनीभ्यां० हस्तायनमः० चित्रायै० निष्ठ्यायै० विशाखाभ्यां० अनूराधेभ्यो० ज्येष्ठायै० मूलाय० पूर्वाषाढाभ्यां० उत्तराषाढाभ्यां० श्रोणायै० श्रविष्ठाभ्यो० शतभिषजे० पूर्वाप्रोष्ठपदाभ्यो० उत्तराप्रोष्ठपदाभ्यो० रेवत्यै० अश्वयुग्भ्यां० अपभरणीभ्यो० कृत्तिकाभ्यो० रोहिण्यै० मृगशीर्षाय० आर्द्रायै० पुनर्वसुभ्यां० इत्येतैः ॥ ततआवाहितदेवताउक्तमंत्रैःषोडशोपचारैःसंपूज्य आचार्योयजमानशाखोक्तेनविधिनास्वशाखोक्तविधिनावाऽग्निंप्रतिष्ठाप्यग्रहपूजांवरुणपूजांतंकृत्वाऽन्वादध्यात् ॥ तत्रग्रहपीठस्थदेवतानांमूलशांतिवन्निर्देशंकृत्वा ॥ सर्पान्प्रतिद्रव्यमष्टोत्तरशतसंख्याभिर्घृतसंमिश्रपायससमिदाज्यचर्वाहुतिभिः तिष्यंमघाश्चप्रतिद्रव्यमष्टाविंशतिभिस्तदाहुतिभिः ( सर्पाणामष्टाविंशतिश्चेदितरयोरष्टावष्टौ ) पूर्वाफल्गुन्यादिचतुर्विंशतिदेवताःप्रत्येकमष्टाष्टसंख्याभिःपायसाहुतिभिः रक्षोहप्रभृतिदेवतानिर्देशोमूलशांतिवत् ॥ शेषेणेत्यादिपायसकृसरचरूणांश्रपणं आज्यभागांतेयथान्वाधानंत्यागंयजमानः तत्तन्मंत्रैर्होमंचसर्त्विगाचार्यःकुर्यात् ॥ आज्यहोमेषुप्रत्याहुतिउत्तरतःस्थापितजलकुंभेसंपाताख्यशेषंप्रक्षिपेत् ॥ सर्पेभ्योहोमस्तु इदᳪसर्पेभ्योहविरस्तुजुष्टं ॥ आश्रेषायेषामनुयंतिचेतः ॥ येअंतरिक्षंपृथिवींक्षियंति ॥ तेनःसर्पासोहवमागमिष्ठाः ॥ येरोचनेसूर्यस्यापिसर्पाः ॥ येदिवंदेवीमनुसंचरंति ॥ येषामाश्रेषाअनुयंतिकामं ॥ तेभ्यःसर्पेभ्योमधुमज्जुहोमीतितैत्तिरीयोक्तवाक्याष्टकेनकार्यः ॥ इदंसर्पेभ्योजुहुयादितिमानवोक्तेः मदनरत्नोदाहृतसंहितायामस्यामेवशांतौहोमाधिकारे इदंसर्पेभ्यइतिचवाक्यान्यष्टौतुसार्पभेइत्युक्तसंवादलाभाच्च ॥ अतएवेदंहविरितियोजनयेदमित्यस्यमानववाक्यैवैयर्थ्यमापादयन्न्योनमोमान्येभ्यः ॥ सर्पतिष्यमघाहोमोवदानसंपदापायसचर्वोःकार्यः ॥ प्रायश्चित्तहोमांतेविनायकादिभ्योबलिदानांतंकृत्वारुद्रायसर्पेभ्यस्तिष्यायम

घाभ्यः क्षेत्रपालायचसदीपबलीन्दद्यात् ॥ ततआचार्योद्वादशगृहीतादिविधिनामूलशांतिवत्पूर्णाहुतिंहुत्वासंपातंकुंभेक्षिपेत् ॥ ततःप्रणीतानिनयनादितत्पर्युक्षणांतम् ॥ ततोरुद्रकुंभंदक्षिणतःस्पृष्ट्वात्र्यंबकजपादिमूलशांतिवत् ॥ ततोरुद्रसर्पादिदेवतानांपंचोपचारैरुत्तरपूजांकृत्वाऽभिषेकानुज्ञांतद्वदेवादायसंपातोदकमितरकुंभजलानिचादायाऽभिषिंचेत् ॥ सर्त्विगाचार्यःअक्षीभ्यामित्यादियज्जाग्रतइत्यंतंमूलशांतिवत् श्लोकेषुविशेषः ॥ योसौवज्रधरोदेवोमहेंद्रोगजवाहनः ॥ सार्पजातशिशोर्दोषंमातापित्रोर्व्यपोहतु ॥ योसौशक्तिधरोदेवोहुतभुङ्मेषवाहनः ॥ सप्तजिह्वश्चदेवोग्निःसार्पदोषंव्यपोहतु ॥ योसौदंडधरोदेवोधर्मोमहिषवाहनः ॥ सार्पजातशिशोर्दोषंव्यपोहतुयमोमम ॥ योसौखड्गधरोदेवोनिर्ऋतीराक्षसाधिपः ॥ प्रशामयतुसार्पोत्थंदोषंगंडांतसंभवम् ॥ योसौपाशधरोदेवोवरुणश्चजलेश्वरः ॥ नक्रवाहःप्रचेतानःसार्पोत्थाघंव्यपोहतु ॥ योसौदेवोजगत्प्राणोमारुतोमृगवाहनः ॥ मातापित्रोःशिशोश्चैवसार्पदोषंव्यपोहतु ॥ योसौनिधिपतिर्देवःखड्गभृद्वाजिवाहनः ॥ प्रशामयतुसार्पोत्थंदोषंबालस्यशांतिदः॥ योसौपशुपतिर्देवःपिनाकीवृषवाहनः॥ आश्लेषामूलगंडांतदोषमाशुव्यपोहतु॥ विघ्नेशःक्षेत्रपोदुर्गालोकपालानवग्रहाः॥ सर्वदोषप्रशमनंसर्वेकुर्वंतुशांतिदाः ॥ आश्लेषाऋक्षजातस्यमातापित्रोर्धनस्यच ॥ भ्रातुर्ज्ञातिकुलस्थानांदोषंसर्वंव्यपोहतु ॥ योसौवागीश्वरोनामअधिदेवोबृहस्पतिः ॥ मातापित्रोःशिशोश्चैवगंडांतंसव्यपोहतु ॥ पितरःसर्वभूतानांरक्षंतुपितरःसदा ॥ सार्पनक्षत्रजातस्यवित्तंचज्ञातिबांधवान् ॥ सुरास्त्वामभिषिंचंतु० ॥ तच्छंयोरा०शतच्छिद्रांतर्धानेनमूलवदभिषेकांतेआचार्यरुद्रजापिभ्यांधेनुकृष्णानडुहावन्येभ्योदक्षिणायादानंमूलवत्कृत्वाग्रहाणामुत्तरपूजांविधायसर्पेभ्योऽक्षतफलपुष्पयुतमर्घ्यंदद्यात् ॥

मंत्रः ॥ सर्पाधीशनमस्तुभ्यंनागानांचगणाधिप ॥ गृहाणार्घ्यमयादत्तंसर्वारिष्टप्रशांतये ॥ इति ॥ ततोब्राह्मणभोजनसंकल्या
दिआशीर्ग्रहणांतंमूलवदिति ॥ इत्याश्लेषाजननशांतिः ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥

## ॥ १७३ ॥ अथज्येष्ठाजननशांतिः ॥

श्रीः ॥ कर्ताआचम्यप्राणानायम्यदेशकालौनिर्दिश्यअस्यशिशोर्ज्येष्ठाजननसूचितसर्वारिष्टपरिहारद्वाराश्रीपरमेश्वरप्रीत्यर्थंस
ग्रहमखांगगर्गोक्तांज्येष्ठाजननशांतिंकरिष्येइतिसंकल्प्य गणेशपूजनादिऋत्विग्वरणांतंकुर्यात् ॥ आचार्यःसर्षपविकिरणभूप्रो
क्षणप्रतिमाग्न्युत्तारणानिकृत्वा ॥ महीद्यौरित्यादिविधिनास्थापितकलशंशालितंडुलैःपूरयित्वा तत्रपूर्णादर्वीतिनिहितपूर्णपा
त्रेसाष्टदलवस्त्रेकर्षतदर्धतदर्धान्यतरमानहेमनिर्मितांशच्यासहैरावतारोहणवज्रांकुशद्विभुजांइंद्रप्रतिमांनिधायेंद्रमावाहनाद्यु
पचारैःपूजयेत् ॥ इंद्रायेंदोमरुत्वतइत्यस्यकश्यपइंद्रोगायत्री पूजनेविनि० ॥ ॐ इंद्रायेंदोमरुत्वतेपवस्वमधुमत्तमः ॥ ऋत
स्ययोनिमासदं ॥ भूर्भुवःस्वःइंद्रायनमःइंद्रमावाहयामिइतिइंद्रमावाह्यलोकपालांश्चावाह्यतत्समन्वितमिंद्रमुक्तमंत्रेणपूजयन्ना
समाप्तिमौनीभवेत् ॥ वस्त्रार्पणकालेरक्तवस्त्रद्वयं नैवेद्यकालेशष्कुल्यादिनानाभक्ष्यानैवेद्यंकुर्यात् ॥ पूजांतेतस्यचतुर्दिक्षुकुंभ
चतुष्टयंतत्पूर्वमध्यभागेचशतच्छिद्रंमहीद्यौरित्याद्यावृत्त्यानिधायेमंमेगंगइतिचतुरउदकेनापूर्य तेषुगायत्र्यादिभिःपंचगव्यंगो
मूत्रादिआप्यायस्वेत्यादिभिःपंचामृतंक्षीरादि सहिरत्नानीतिपंचरत्नानि स्योनेतिसप्तमृत्तिकाः अश्वत्थेवइतिपंचपल्लवान्तत्क
षायसहितान् हिरण्यरूपइतिहेम शरासइतिकुशान् कांडात्कांडादितिदूर्वाः याओषधीरितिसर्वौषधीःप्रादक्षिण्येनमंत्रावृत्त्या
निक्षिप्य युवासुवासाइतिवस्त्रयुग्मवेष्टितेषुतेषुपूर्णपात्राणिनिधाय तेषुक्रमेणवरुणपूजांकुर्यात् ॥ प्रथमकलशे ॥ त्वंनोअग्नइ

त्यस्यवामदेवोवरुणस्त्रिष्टुप् वरुणावाहनेवि० ॥ ॐ त्वंनोअग्नेवरुणस्यविद्वान्देवस्यहेळोवयासिसीष्ठाः ॥ यजिष्ठोवह्नितमःशोशु
चानोविश्वाद्वेषांसिप्रमुमुग्ध्यस्मत् ॥ ॐ भूर्भुवःस्वर्वरुणायनमः वरुणमावाहयामि ॥ द्वितीये ॥ सत्वंनइत्यस्यवामदेवोवरुणस्त्रि
ष्टुप् वरुणावाहने० ॥ ॐ सत्वंनोअग्नेवमोभवोतीनेदिष्ठोअस्याउषसोव्युष्टौ ॥ अवयक्ष्वनोवरुणंरराणोवीहिमृळीकंसुहवोनएधि॥
तृतीये ॥ समुद्रज्येष्ठाइत्यस्यवसिष्ठोवरुणस्त्रिष्टुप् वरुणावाहने० ॥ ॐ समुद्रज्येष्ठाः० १ ॥ चतुर्थे ॥ इमंमेगंगइत्यस्यसिंधु
क्षित्प्रैयमेधोवरुणोजगती वरुणावाहनेवि० ॥ ॐ इमंमेगंगे० १ ॥ प्रतिकुंभंवस्त्रयुग्मंवस्त्रार्पणसमयेऽर्पयेत् ॥ ततश्चतुर्षुकुंभेषु
ऋत्विजश्चत्वारिसूक्तानिजपेयुः ॥ आनोभद्राइतिदशर्चस्यसूक्तस्यगोतमोविश्वेदेवाःआद्यापंचमीसप्तमीचजगत्यः षष्ठीविराट्
शेषास्त्रिष्टुभः प्रथमकलशेजपेविनियोगः ॥ ॐ आनोभद्राःक्रतवो० सूक्तम् ऋ० १० ॥ भद्राअग्नेरितिद्वादशर्चस्यसुमित्रोग्निः
आद्येद्वेजगत्यौ अंत्यास्त्रिष्टुभः द्वितीयकलशेजपे० ॥ ॐ भद्राअग्नेर्वध्र्यश्वस्यसंदृशोवामीप्रणीतिःसुरणाउपेतयः ॥ यदींसुमि
त्राविशोअग्रइंधतेघृतेनाहुतोजरतेदविद्युतत् ॥ घृतमग्नेर्वध्र्यश्वस्यवर्धनंघृतमन्नंघृतम्वस्यमेदनं ॥ घृतेनाहुतउर्वियाविपप्रथेसूर्य
इवरोचतेसर्पिरासुतिः ॥ यत्तेमनुर्यदनीकंसुमित्रःसमीधेअग्नेतदिदंनवीयः ॥ सरेवच्छोचसगिरोजुषस्वसवाजंदर्षिसइहश्रवो
धाः ॥ यंत्वापूर्वमीळितोवध्र्यश्वःसमीधेअग्नेसइदंजुषस्व ॥ सनस्तिपाउतभवातनुपादात्रंरक्षस्वयदिदंतेअस्मे ॥ भवाद्युम्नीवा
ध्र्यश्वोतगोपामात्वातारीदभिमातिर्जनानां ॥ शूरइवधृष्णुश्च्यवनःसुमित्रःप्रनुवोचंवाध्र्यश्वस्यनाम ॥ समज्र्यापर्वत्याꣳवसूनि
दासावृत्राण्यार्याजिगेथ ॥ शूरइवधृष्णुश्च्यवनोजनानांत्वमग्नेपृतनायूँरभिष्याः ॥ १ ॥ दीर्घतंतुर्बृहदुक्षायमग्निःसहस्रस्तरीःश
तनीथऋभ्वा ॥ द्युमान्द्युमत्सुनृभिर्मृज्यमानःसुमित्रेषुदीदयोदेवयत्सु ॥ त्वंधेनुःसुदुघाजातवेदोसश्चतेवसमनासबर्धुक् ॥ त्वंनृ

भिर्दक्षिणावद्भिरग्नेसुमित्रेभिरिध्यसेदेवयद्भिः ॥ देवाश्चित्तेअमृताजातवेदोमहिमानंवाध्र्यश्वप्रवोचन् ॥ यत्संपृच्छंमानुषीर्वि
शआयन्त्वंनृभिरजयस्त्वावृधेभिः ॥ पितेवपुत्रमबिभरुपस्थेत्वामग्नेवध्र्यश्वःसपर्यन् ॥ जुषाणोअस्यसमिधंयविष्ठोतपूर्वाअवनो
र्व्राधतश्चित् ॥ शश्वदग्निर्वध्र्यश्वस्यशत्रून्नृभिर्जिगायसुतसोमवद्भिः ॥ समनंचिददहश्चित्रभानोवव्राधंतमभिनद्वृधश्चित् ॥ अ
यमग्निर्वध्र्यश्वस्यवृत्रहासनकात्प्रेद्धोनमसोपवाक्यः ॥ सनोअजामीरुतवाविजामीनभितिष्ठशर्धतोवाध्र्यश्व ॥ २ ॥ सहस्रशीर्षे
तिसूक्तस्यपुरुषोनारायणोनुष्टुप् अंत्यात्रिष्टुप् तृतीयकलशेजपे० ॥ ॐ सहस्रशीर्षा० ऋचः १६ ॥ ततःकद्रुद्रायेतिनवर्चस्य
सूक्तस्यघोरःकण्वोरुद्रोगायत्री अंत्यानुष्टुप् चतुर्थकलशेजपे० ॥ ॐ कद्रुद्रायप्र० ऋचः ९ ॥ आचार्यऐंद्रकलशे ॥ इंद्रायेंदो
मरुत्वतइत्येतमष्टोत्तरशतादिसंख्ययाजपित्वा ॥ इंद्रंविश्वाइत्यष्टर्चस्यसूक्तस्यजेतेंद्रोनुष्टुप् जपे० ॥ ॐ इंद्रंविश्वाअवीवृध
न्समुद्रव्यचसंगिरः ॥ रथीतमंरथीनांवाजानांसत्पतिंपतिं ॥ सख्येतइंद्रवाजिनोमाभेमशवसस्पते ॥ त्वामभिप्रणोनुमोजेता
रमपराजितं ॥ पूर्वीरिंद्रस्यरातयोनविदस्यंत्यूतयः ॥ यदीवाजस्यगोमतःस्तोतृभ्योमंहतेमघं ॥ पुरांभिंदुर्युवाकविरमितौजा
अजायत ॥ इंद्रोविश्वस्यकर्मणोधर्तावज्रीपुरुष्टुतः ॥ त्वंवलस्यगोमतोपावरद्रिवोबिलं ॥ त्वांदेवाअबिभ्युपस्तुज्यमानासआवि
षुः ॥ तवाहंशूररातिभिःप्रत्यायंसिंधुमावदन् ॥ उपातिष्ठंतगिर्वणोविदुष्टेतस्यकारवः ॥ मायाभिरिंद्रमायिनंत्वंशुष्णमवातिरः ॥
विदुष्टेतस्यमेधिरास्तेषांश्रवांस्युत्तिर ॥ इंद्रमीशानमोजसाभिस्तोमाअनूषत ॥ सहस्रंयस्यरातयउतवासंतिभूयसीः ॥ इत्यष्टर्चमिं
द्रसूक्तंजपित्वाकद्रुद्रायेतिरुद्रसूक्तजपंत्र्यंबकमितिमृत्युंजयजपंचाष्टोत्तराष्टाविंशत्यादिसंख्ययाकुर्यात् ॥ ततःस्थंडिलेऽग्निंवि
धायग्रहांश्चप्रतिष्ठाप्याऽन्वादध्यात् ॥ अत्रप्रधानं ग्रहानेतत्संख्याभिःसमिच्चर्वाज्याहुतिभिः तदंगदेवताअप्येतत्संख्याभिरुक्ता

हुतिभिः इंद्रंपलाशसमिदाज्यचर्वाहुतिभिःप्रतिद्रव्यमष्टोत्तरशतसंख्याभिः प्रजापतिमष्टोत्तरशततिलाहुतिभिःशेषेणेत्यादिआ ज्यभागांतेअष्टोत्तरशताहुतिपर्याप्तंसमिदाज्यचर्वात्मकंद्रव्यत्रयमिंद्रायनमम तावत्संख्याहुतिपर्याप्तास्तिलाःप्रजापतयेनममइ तित्यागोत्तरंवाग्यतःसर्त्विगाचार्योद्रव्यत्रयेणोक्तसंख्यंहोमंकुर्यात् ॥ एतद्धोमांते इंद्रायेंदोकश्यपइंद्रोगायत्री ॥ यतइंद्रभर्ग इंद्रोबृहती जपे० ॥ इतिमंत्रद्वयजपांतेसमस्तव्याहृतिभिःतिलानष्टोत्तरशतंजुहुयात् ॥ आज्यतिलचरुशेषैःस्विष्टकृतंहुत्वाप्रा यश्चित्तहोमांतंकुर्यात् ॥ ततोबलिदानंलोकपालादिभ्योंतेइंद्रायक्षेत्रपालायच ततःपूर्णाहुतिः प्रणीताविमोकःसंस्थाजपश्चप रिस्तरणविसर्जनादिपर्युक्षणांतं ॥ ततोभार्याशिशुसहितंयजमानमासनेसमुपवेश्याऽभिषेकः ॥ नहितेक्षत्रमितिदशर्चस्यसूक्त स्यशुनःशेपोवरुणस्त्रिष्टुप् ॥ अभिषेके० ॥ ॐ नहितेक्षत्रंनसहोन० ऋचः १० ॥ यच्चिद्धीत्येकविंशर्चस्यसूक्तस्यआजीगर्तिःशुनः शेपोवरुणोगायत्री अभिषेके० ॥ ॐ यच्चिद्धितेविशोयथा० ऋचः २१ ॥ इदंकवेरित्येकादशर्चस्यसूक्तस्यगृत्समदोवरुणस्त्रि ष्टुप् अभिषेके० ॥ ॐ इदंकवेरादित्यस्यस्वराजोविश्वानिसांत्यभ्यस्तुमह्ना ॥ अतियोमंद्रोयजथायदेवःसुकीर्तिंभिक्षेवरुण स्यभूरेः ॥ तवव्रतेसुभगासःस्यामस्वाध्योवरुणतुष्टुवांसः ॥ उपायनउषसांगोमतीनामग्नयोनजरमाणाअनुद्यून् ॥ तवस्यामपु रुवीरस्यशर्मन्नुरुशंसस्यवरुणप्रणेतः ॥ यूयंनःपुत्राअदितेरदब्धाअभिक्षमध्वंयुज्यायदेवाः ॥ प्रसीमादित्योअसृजद्विधर्ताँऋतं सिंधवोवरुणस्ययंति ॥ नश्राम्यंतिनविमुचंत्येतेवयोनपप्तूरघुयापरिज्मन् ॥ विमच्छ्रथायरशनामिवागऋध्यामतेवरुणखामृत स्य ॥ मातंतुश्छेदिवयतोधियंमेमामात्राशार्यपसःपुरऋतोः ॥ १ ॥ अपोसुम्यक्षवरुणभियसंमत्संम्राळृतावोनुमागृभाय ॥ दा मेववत्साद्विमुमुग्ध्यंहोनहित्वदारेनिमिषश्चनेशे ॥ मानोवधैर्वरुणयेतइष्टावेनःकृण्वंतमसुरभ्रीणंति ॥ माज्योतिषःप्रवसथानि

गन्मविषूमृधःशिश्रथोजीवसेनः ॥ नमःपुरातेवरुणोतनूनमुतापरंतुविजातब्रवाम ॥ त्वेहिकंपर्वतेनश्रितान्यप्रच्युतानिदूळभव्रतानि ॥ परऋणासावीरधमत्कृतानिमाहंराजन्नन्यकृतेनभोजं ॥ अव्युष्टाइन्नुभूयसीरुषासआनोजीवान्वरुणतासुशाधि ॥ योमेराजन्युज्योवासखावास्वप्नेभयंभीरवेमह्यमाह ॥ स्तेनोवायोदिप्सतिनोवृकोवात्वंतस्माद्वरुणपाह्यस्मान् ॥ माहंमघोनोवरुणप्रियस्यभूरिदान्नआविदंशूनमापेः ॥ मारायोराजन्सुयमादवस्थांबृहद्वदेमविदथेसुवीराः ॥ २ ॥ ऋचः ११ ॥ समुद्रज्येष्ठाइतिचतसृणांवसिष्ठआपस्त्रिष्टुप् अभिषेके० ॥ ॐ समुद्रज्येष्ठाःसलिलस्य० ऋचः ४ ॥ इमंमेवरुणेत्यस्यशुनःशेपोवरुणोगायत्री अभिषेके० ॥ ॐइमंमेवरुण० ऋक् ॥ द्यौःशांतासादित्येनशांतेति० पृथिवीशांतिरंतरिक्षंशांतिरिति० तयाहंशांत्येति याजुषमंत्रैश्चत्रिभिरभिषिक्तोयजमानःपत्न्यासहशुक्लवस्त्रचंदनकुसुमानिधृत्वारूपंरूपमितिचित्रंदेवानामितितच्चक्षुरितिमंत्रैरवलोकितमाज्यंसदक्षिणंब्राह्मणायदत्वाइंद्रपुरोभागेस्थित्वागंधादिपंचोपचारैःसंपूज्य आचमनतांबूलेनिवेद्यगंधपुष्पफलयुक्तमर्घ्यंनिवेदयेत् ॥ मंत्रः ॥ नमस्तेसुरनाथायनमस्तुभ्यंशचीपते ॥ गृहाणार्घ्यंमयादत्तंगंडदोषप्रशांतयेइति ॥ ततआचार्यायसुशीलांपयस्विनींरक्तवर्णांसवत्सांहेमशृंगादिसर्वालंकारभूषितांगांगोदानविधिनादद्यात् ॥ मंत्रेविशेषः ॥ यक्षगंधर्वसिद्धैश्चपूजितोसिशचीपते ॥ दानेनानेनदेवेशगंडदोषंप्रशामयेति ॥ अस्यागोर्दक्षिणात्वान्नदक्षिणांतरम् ॥ ततोष्टोत्तरशतब्राह्मणान्भोजयेत् ॥ तेभ्योयथाशक्तिदक्षिणांदत्वाप्रणिपत्यक्षमध्वंममापराधानितिक्षमाप्येंद्रंप्रार्थयेत् ॥ अज्ञानादथवाज्ञानाद्वैकल्याद्वाधनस्यच ॥ यन्न्यूनमतिरिक्तंवातत्सर्वंक्षंतुमर्हसिइति ॥ ततोविसर्जनं ॥ आचार्यहस्तेसोपस्करांप्रतिमांदत्वाऽग्निंसंपूज्यविभूतिंधृत्वागच्छगच्छेतितंविसृज्यज्येष्ठाशांतिसुकृतंयन्मयालब्धंतेनदेवेंद्रनामेश्वरःप्रीयतामिति ॥ इतिज्येष्ठाशांतिविधिः ॥

## ॥ १७४ ॥ अथकृष्णचतुर्दशीजननशांतिः ॥

श्रीः ॥ कर्ताआचम्यप्राणानायम्यदेशकालौसंकीर्त्यअस्यशिशोःकृष्णचतुर्दश्याअमुकांशजननसूचितसर्वारिष्टनिरसनद्वाराश्रीपरमेश्वरप्रीत्यर्थंसग्रहमखांगगोंकांकृष्णचतुर्दशीजननशांतिंकरिष्ये ॥ तदंगत्वेनगणपतिपूजनंस्वस्तिपुण्याहवाचनंआचार्यर्त्विग्वरणंचकरिष्ये ॥ वृतानांपूजनं ॥ अभ्युत्तारणं ॥ आचार्यःकर्मकरिष्येइतिसंकल्प्य ॥ यदत्रसंस्थितमित्यादिस्वस्त्ययनंतार्क्ष्यमित्यंतेस्थंडिलपूर्वभागेमहीद्यौरित्यादिमंत्रावृत्त्यापदार्थानुसमयेनमध्येशतच्छिद्रं तस्यआग्नेय्यादिविदिक्षुचतुरःकलशांश्चस्थाप्यशतच्छिद्रेस्योनापृथिवीतिसप्तमृदःअश्वत्थेवइतिपंचपल्लवान् सहिरत्नानीतिपंचरत्नानि रुवतिभीमेतिपंचत्वचः ओषधयःसमितिपंचधान्यानि हिरण्यरूपइतिसुवर्णं याओषधीरितिसर्वौषधीःशतावरींनिक्षिप्य युवासुवासाइतिश्वेतवस्त्रैःश्वेतपुष्पैश्चसंवेष्ट्यपूर्णादर्वीति पूर्णपात्रनिधानांतेरुद्रप्रतिमांकर्षतदर्धतदर्धान्यतरपरिमितहेमनिर्मितांवराभयांकितहस्तद्वयांवृषभारूढांस्थापयित्वा त्र्यंबकंवासिष्ठोरुद्रोनुष्टुप् रुद्रावाहनेविनि० ॥ ॐ त्र्यंबकंयजामहे० ऋक् १ ॥ शुद्धस्फटिकसंकाशंश्वेतमाल्यांबरावृतंतंध्यात्वा एकादशिन्यभिषेकघटितोपचारैरुद्रंसंपूज्य आग्नेय्यादिचतुर्षुकलशेषुइमंमेगंगेइत्यपःगंधद्वारामितिगंधमोषधयइतियवान् अश्वत्थेवइतिपंचपल्लवान् कांडात्कांडादितिदूर्वाः सहिरत्नानीतिपंचरत्नानि हिरण्यरूपइतिहिरण्यं याःफलिनीरितिफलम् युवासुवासाइतिवस्त्रवेष्टनं पूर्णादर्वीतिपूर्णपात्रनिधानं एतावत्कांडानुसमयेनकृत्वा आग्नेयकुंभेइमंमेवरुणइतिसर्वेसमुद्राइतिचसमुद्रादिसहितंवरुणमावाहयेत् ॥ इमंमेवरुणशुनःशेपोवरुणोगायत्री वरुणावाहनेवि० ॥ ॐ इमंमेवरुणश्रुधीहवमद्याचमृळय ॥ त्वामवस्युराचके ॥ ॐ भूर्भुवःस्ववर्रुणायनमःवरुणमावाहयामीति समुद्रादिसहितंवरुणंसंपू

ज्य उत्तरकलशेष्वपिसमुद्रानावाह्यनदीसहितवरुणपूजनेक्रमेणतत्त्वायामित्वंनोअग्नेसत्वंनोअग्नेइत्यादयोमंत्राः ॥ नैर्ऋतेतत्त्वा यामिशुनःशेपोवरुणस्त्रिष्टुप् ॥ ॐ तत्त्वायामि० ॥ वायव्ये त्वंनोअग्नेइत्यस्यवामदेवोवरुणस्त्रिष्टुप् ॥ वरुणावाहनेवि० ॥ ॐ त्वंनोअग्नेवरुणस्यविद्वान्देवस्यहेळोवयासिसीष्ठाः ॥ यजिष्ठोवह्नितमःशोशुचानोविश्वाद्वेषांसिप्रमुमुग्ध्यस्मत् ॥ ऐशाने ॥ सत्वंनोअग्नइत्यस्यवामदेवोवरुणस्त्रिष्टुप् ॥ पूजनेवि० ॥ ॐ सत्वंनोअग्नेवमोभवोतीनेदिष्ठोअस्याउषसोव्युष्टौ ॥ अवयक्ष्वनो वरुणंरराणोवीहिमृळीकंसुहवोनएधि ॥ सर्वपूजांतेदेवदानवइतिप्रतिकलशंप्रार्थना ॥ तत्रक्रमेणचतुर्षुकलशेषुसूक्तजपः ॥ आनोभद्राइतिदशर्चस्यसूक्तस्यगोतमोविश्वेदेवादेवता आद्याःपंचसप्तमीचजगत्यः षष्ठीविराट्स्थानाशेषास्त्रिष्टुभःजपेविनि यो० ॥ आनोभद्राःक्रतवोयंतु० ऋचः १० ॥ भद्राअग्नेरितिद्वादशर्चस्यसुमित्रोग्निर्देवताआद्येद्वेजगत्यौअंत्यास्त्रिष्टुभः जपे विनि० ॥ ॐ भद्राअग्नेर्वध्र्यश्वस्य० ऋचः १२॥सहस्रशीर्षेतिषोडशर्चस्यसूक्तस्यपुरुषोनारायणोऽनुष्टुबंत्यात्रिष्टुप् जपेवि०॥ सहस्रशीर्षा० ऋचः १६ ॥ कद्रुद्रायेतिनवर्चस्यसूक्तस्यकण्वोरुद्रोगायत्रीअंत्यानुष्टुप् जपेवि० ॥ ॐ कद्रुद्रायप्रचेतसे० इति सूक्तम् ॥ ततोग्निंवेद्यांग्रहांश्चप्रतिष्ठाप्यान्वाधानंकुर्यात् ॥ समिद्द्वयमादायात्रप्रधानम् ॥ आदित्यादिग्रहान्अष्टाष्टसंख्याभिः अर्कादिजातीयसमिदाहुतिभिश्चर्वाहुतिभिराज्याहुतिभिश्च अधिदेवताप्रत्यधिदेवताद्याग्रहपीठदेवता एकैकसंख्याकाभिःस मिच्चर्वाज्याहुतिभिः रुद्रंप्रत्येकमष्टोत्तरशतसंख्याकाभिरश्वत्थप्लक्षपलाशखदिरजातीयसमिदाहुतिभिश्चर्वाहुतिभिराज्याहुति भिः संमिश्राभिस्तिलमाषसर्षपाहुतिभिश्च अग्निवायुसूर्यप्रजापतीनष्टोत्तरशतसंख्याभिस्तिलाहुतिभिःशेषेणस्विष्टकृतमित्या द्याज्यभागांतेकृते यजमानोयथादैवतंत्यागंकुर्यात् ॥ तदनंतरंहोमांतेस्विष्टकृदादिनवाहुत्यंतेबलिदानंपूर्णाहुतिःप्रणीतानिम

यनांतंसंस्थाजपः दंपत्योरभिषेकः धौतवस्त्रचंदनादिधारणंआज्यंरूपंरूपमित्यवलोक्यसदक्षिणंदत्वाकृतंकर्मरुद्रार्पणंकृत्वा आचार्यायवस्त्रयुग्मसहितोपस्करगोनिष्क्रयदानंऋत्विग्भ्यःहिरण्यनिष्क्रयदानं स्थापितदेवतानांपूजनविसर्जने आचार्यहस्ते प्रतिपादनंचअग्नेःपूजनविसर्जनेयथाशक्तिब्राह्मणभोजनस्यसंकल्पः ॥ इतिकृष्णचतुर्दशीजननशांतिः ॥ ॥ छ ॥

## ॥ १७५ ॥ अथसिनीवालीकुहूजननशांतिः ॥

श्रीः ॥ कर्ताआचम्यप्राणानायम्यदेशकालौनिर्दिश्यअस्यशिशोःसिनीवालीजननसूचितसर्वारिष्टपरिहारद्वाराश्रीपरमेश्वरप्रीत्यर्थंसिनीवालीजननशांतिंकरिष्ये ॥ इतिसंकल्प्यगणेशपूजनाद्याचार्यवरणांतंकुर्यात् ॥ कुहूजननेकुहूजननसूचितेत्यूहः ॥ वेधद्वयरहितोदर्शः ॥ ततआचार्यःसर्षपविकिरणादिप्रार्थनांतंकृत्वोक्तप्रतिमानामग्न्युत्तारणंकृत्वा स्थंडिलपूर्वभागेविदिक्षुआग्नेयीमारभ्यमहीद्यौरित्यादिमंत्रैःपदार्थानुसमयेनचतुरःकुंभानासाद्यमध्येशतच्छिद्रंसंस्थाप्यचतुर्षुजलसेचनगंधक्षेपांते तत्सवितुरित्यादिभिःपंचगव्यानिस्योनापृथिवीतिसप्तमृदः सहिरत्नानीतिपंचरत्नानि रुवतिभीमेतिपंचत्वचः ओषधयःसंवदंतइतिसप्तधान्यानिहिरण्यंरूपइतिहिरण्यंप्रक्षिप्य ॥ पंचस्वपिपूर्णादर्वीतिपूर्णपात्रनिधानांतेमध्यमेयथाशक्तिनिर्मितामुक्तलक्षणां रुद्रप्रतिमांनिधाय ॥ त्र्यंबकंवसिष्ठोरुद्रोनुष्टुप् रुद्रावाहनेवि० ॥ ॐ त्र्यंबकंयजा० ॥ इतिमंत्रेणरुद्रंश्वेतगंधपुष्पादिभिःसंपूज्यतद्दक्षिणतः ॥ यतइंद्रेतिभर्गइंद्रोबृहती इंद्रावाहने० ॥ ॐ यतइंद्रभयामहेततोनोअभयंकृधि ॥ मघवञ्छग्धितवतन्नऊतिभिर्विद्विषोविमृधोजहि ॥ ॐ भूर्भु० इतिइंद्रंसंपूज्य ॥ येचेहेतिशंखःपितरस्त्रिष्टुप् पित्रावाहने० ॥ ॐ येचेहपितरोयेचनेहयांश्चविद्मयाँउचनप्रविद्म ॥ त्वंवेत्थयतितेजातवेदःस्वधाभिर्यज्ञंसुकृतंजुषस्व ॥ ॐ भूर्भु० इत्युत्तरतःपितॄनावाह्यसंपू

ज्यचतुर्षुकुंभेषुवरुणंसंपूज्य आनोभद्राइतिपठेदृग्वेदी ॥ यजुर्वेदीनमोव्राचइति ॥ गवामंगेष्वितिगांदद्यात् ॥ शरण्यंसर्वलो
कानांलज्जायारक्षणंपरं ॥ सुवेषधारिवस्त्रत्वमतःशांतिंप्रयच्छमेइतिवस्त्रम् ॥ हिरण्यगर्भगर्भस्थमितिसुवर्णम् ॥ सर्वभूताश्रया
भूमिर्वराहेणसमुद्धृता ॥ अनंतसस्यफलदाअतःशांतिंप्रयच्छमेइतिभूमिं ॥ ततोदशदानानि गोभूतिलहिरण्याज्यवासोधान्य
गुडानिच ॥ रौप्यंलवणमित्याहुर्दशदानानिपंडिताः ॥ गांभुवंचोक्तमंत्राभ्यांपुनर्दत्वातिलान्दद्यात् ॥ महर्षेर्गोत्रसंभूताःक
श्यपस्यतिलाःस्मृताः ॥ तस्मादेषांप्रदानेनममपापंव्यपोहत्विति ॥ उक्तमंत्रेणपुनर्हिरण्यंदत्वाज्यंदद्यात् ॥ कामधेनुषुसंभूतं
सर्वक्रतुषुसंस्थितम् ॥ देवानामाज्यमाहारमतःशांतिंप्रयच्छमे ॥ उक्तमंत्रेणवासःपुनर्दत्वाधान्यंदद्यात् ॥ सर्वदेवमयंधान्यं
सर्वोत्पत्तिकरंमहत् ॥ प्राणिनांजीवनोपायमतःशांतिंप्रयच्छमेइति ॥ यथादेवेषुविश्वात्माप्रवरश्चजनार्दनः ॥ सामवेदस्तुवे
दानांमहादेवस्तुयोगिनाम् ॥ प्रणवःसर्वमंत्राणांनारीणांपार्वतीयथा ॥ तथारसानांप्रवरःसदैवेक्षुरसोमतः ॥ ममतस्मात्परां
शांतिंददस्वगुडसर्वदेतिगुडम् ॥ प्रीतिर्यतःपितॄणांचविष्णुशंकरयोःसदा ॥ शिवनेत्रोद्भवंरूप्यमतःशांतिंप्रयच्छमेइतिरूप्य
म् ॥ यस्मादन्नरसाःसर्वेनोत्कृष्टालवणंविना ॥ शंभोःप्रीतिकरंनित्यमतःशांतिंप्रयच्छमेइतिलवणम् ॥ इतिदशदानानि ॥
ततःक्षीरंदद्यात् ॥ क्षीरजातास्तथाशंखाःक्षीरादमृतसंभवः ॥ क्षीरात्क्षीरोदवत्कीर्तिःक्षीरेप्राणस्यसंभवः ॥ तस्मात्क्षीरप्रदाने
नअतःशांतिंप्रयच्छमेइति ॥ आज्यगुडावुक्तमंत्राभ्यांपुनर्दत्वाज्यपूर्णेकांस्यपात्रेरूपंरूपमितिसहकुटुंबःप्रतिरूपंवीक्ष्यदद्यात् ॥
आज्यंतेजःसमुद्दिष्टमाज्यंपापहरंस्मृतम् ॥ आज्यंसुराणामाहारआज्येदेवाःप्रतिष्ठिताइति ॥ आचार्योग्निंप्रतिष्ठाप्यग्रहाना
वाह्यसंपूज्यान्वाधानंकुर्यात् ॥ चक्षुषीआज्येनेत्यंतेऽत्रप्रधानम् ॥ ग्रहानर्कादिसमिदाज्याहुतिभिःविवक्षितसंख्याभिः ॥

त्र्यंबकंअश्वत्थप्लक्षपलाशखदिरसमिदाहुतिभिः प्रत्येकमष्टोत्तरशतसंख्याभिराज्याहुतिभिश्चर्वाहुतिभिः सर्षपतिलमाषाहुतिभिश्चप्रत्येकंतावतीभिः इंद्रंपितृंश्चप्रत्येकमष्टाविंशतिसंख्याभिरष्टसंख्याभिर्वोक्तद्रव्याहुतिभिः रुद्रंत्र्यंबकमितिमंत्रेण २८ वा ८ तिलाहुतिभिः प्रजापतिं २८ वा ८ तिलैः शेषेणेत्यादिअन्वाधानंत्यागेकृतेप्रायश्चित्तहोमांतेबलिदानम् ॥ मूर्धानमितिपूर्णाहुतिश्च ॥ ततोग्रहकुंभसहितचतुःकुंभजलयुतशतच्छिद्रेणमातृपितृशिशूनामभिषेकः तत्त्वायामीतितिभिरेषांशुनःशेपोवरुणस्त्रिष्टुप् अभिषेके० ॥ ॐ तत्त्वायामि० ॥ तदिन्नक्तंतद्दिवामह्यमाहुस्तदयंकेतोहृदआविचष्टे ॥ शुनःशेपोयमह्वद्गृभीतःसोअस्मान्राजावरुणोमुमोक्तु ॥ शुनःशेपोह्यह्वद्गृभीतस्त्रिष्वादित्यंद्रुपदेषुबद्धः ॥ अवैनंराजावरुणःससृज्याद्विद्वाँअदब्धोविमुमोक्तुपाशान् ॥ इत्यादिभिरभिषिच्य ॥ ततोविभूतिधारणांतेषोडशोपचारैरुद्रस्येतरेषांपंचोपचारैःपूजनम् ततोविसृज्यताःप्रतिमाआचार्यहस्तेप्रतिपाद्याऽग्निंसंपूज्यविसृज्ययथाशक्तिद्विजानुज्ञयाब्राह्मणानन्यांश्चांधपंग्वादीन्भोजयेदिति ॥ इतिसिनीवालीकुहूजननशांतिः ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥

## ॥ १७६ ॥ अथदर्शजननशांतिः ॥

श्रीः ॥ कर्ताकृतनित्यक्रियःपवित्रपाणिःसपत्नीकःस्वासनेउपविश्यदेशकालसंकीर्तनांते अस्यबालस्यदर्शजननसूचितसर्वारिष्टनिरसनद्वाराश्रीपरमेश्वरप्रीत्यर्थंदर्शजननशांतिंकरिष्ये ॥ अखंडाऽमाजननेइत्थंसंकल्पः ॥ अमायाःखंडतिथित्वेउत्तरविद्धामाजननेकुहूजननशांतिंकरिष्येइतिसंकल्पेविशेषः ॥ ततोगणेशपूजनपुण्याहवाचनाचार्यर्त्विग्वरणाचार्यादिपूजनानिकुर्यात् ॥ ततआचार्योयदत्रसंस्थितमित्यादिस्वस्त्ययनंतार्क्ष्यमितिप्रार्थनांतंकुर्यात् ॥ ततःकुंडात्स्थंडिलाद्वापूर्वेसर्वतोभद्रपर्याप्तंस्थल

मतिक्रम्यमहीद्यौरित्यादिनाकुंभस्थापनादिजलसेचनांतंकृत्वा तत्रआप्यायस्वेत्यादिमंत्रैःक्षीरदधिघृतानिप्रक्षिप्य गायत्र्या गंधद्वारामितिचगोमूत्रगोमयेप्रक्षिप्य न्यग्रोधोदुंबराश्वत्थचूतनिंबमूलानांत्वचोरुवतिभीमइति तत्पल्लवानश्वत्थेवइति पंचरत्नानिसहिरत्नानीतिनिक्षिप्य युवासुवासाइतिवस्त्रयुग्मेनावेष्ट्य ॥ सर्वेसमुद्राःसरितस्तीर्थानिजलदानदाः ॥ आयांतुयजमानस्यदुरितक्षयकारकाः ॥ इतिसमुद्रादिदेवतासहितंवरुणमावाह्यसंपूज्यकलशोदकं आपोहिष्ठेतितृचेनकयानश्चित्रइत्यृचायत्किंचेदमितिसमुद्रज्येष्ठाइतिचऋग्भ्यांअभिमंत्र्य ॥ तत्पश्चिमेअग्नेःपूर्वभागेकृष्णनीलरक्तादिवर्णतंडुलैःयथोचितंपूरितंशृंखलावल्लीभद्रादिगर्भसर्वतोभद्रंसंवत्सरकृत्यांतर्गतानंतव्रतोद्यापनोक्तरीत्याकृत्वा तत्रब्रह्मादिप्रसिद्धदेवतापूजांतेमध्येसुवर्णप्रतिमायांपितॄनावाहयेत् ॥ येचेहेतिशंखःपितरस्त्रिष्टुप् पित्रावाहने० ॥ ॐ येचे॒हपि॒तरो॒० १ ॥ दक्षिणतः रजतप्रतिमायांसोमम् ॥ उत्तरतःताम्रप्रतिमायांसूर्यंचावाहयेत् ॥ आप्यायस्वगोतमःसोमोगायत्री सोमावाहने० ॥ ॐ आप्यायस्व० ऋक् १ ॥ सवितापश्चातादितिनाभागःसवितात्रिष्टुप् सूर्यावाहने० ॥ ॐ सवि॒ताप॒श्चाता॑त्० ऋक् १ ॥ ततोदेवतात्रयंसंपूज्याऽग्निंप्रतिष्ठाप्यसर्वतोभद्रस्यैशान्यांग्रहप्रतिष्ठापनादिवरुणपूजांतंकृत्वाऽन्वादध्यात् ॥ चक्षुषीआज्येनेत्यंतेआदित्यादिग्रहान् चिकीर्षितसंख्याभिःसमिच्चर्वाज्याहुतिभिःपितॄनष्टाविंशतिसंख्याकाभिःसमिच्चर्वाज्याहुतिभिः सोमंसूर्यंचप्रत्येकंअष्टोत्तरशतसंख्याकाभिस्तदाहुतिभिः शेषेणस्विष्टकृतमित्यादि ॥ ततःआज्येनसहचरोःपर्यग्निकरणादिकालेकुर्यात् ॥ आज्यभागांतेआयुरारोग्यमितिमंत्राभ्यांयजमानेनहोमसंकल्पपूर्वकंत्यागेकृतेसर्त्विगाचार्यःप्रधानहोमंकुर्यात् ॥ तदंतेस्विष्टकृतःपूर्वंहिरण्यवर्णामितिआयुष्यंवर्चस्यमि ( त्येकादशर्चस्यसनकादयोहिरण्यमनुष्टुप्पंचम्यष्टमीनवमीचत्रिष्टुभःसप्तमीशक्वर्यत्याजगती ) ति

सूक्ताभ्यांसमुद्रज्येष्ठाइत्यृचाचसबालौपितरावभिषिच्यस्विष्टकृदादिकुर्यात् ॥ ततोबलिदानपूर्णाहुतीकृत्वाहोमशेषंसमापये
त् ॥ ततोयजमानःहिरण्यरजतेसदक्षिणांकृष्णांधेनुंचआचार्यायदत्वाऋत्विग्भ्यश्चयथाशक्तिदक्षिणांदत्वास्थापितदेवतोत्तरपू
जाविसर्जनेकृत्वाप्रतिमांआचार्यायप्रतिपाद्य अग्निंसंपूज्यविसृज्यशांतीःपाठयित्वाब्राह्मणान्भोजयित्वातेभ्योदक्षिणादानांते
स्वस्तिभवंतोब्रुवंत्वितिवाचयेत् ॥ तेचस्वस्तीतिवदेयुः ॥ इतिदर्शजननशांतिः ॥ ॥ छ ॥ ॥ छ ॥

## ॥ १७७ ॥ अथव्यतीपातसंक्रमणजननशांतिः ॥

श्रीः ॥ गोमुखप्रसवमुक्तविधिनाकृत्वादेशकालौसंकीर्त्याऽस्यशिशोर्व्यतीपातजन्मसूचितसर्वारिष्टपरिहारद्वाराश्रीपरमेश्वरप्री
त्यर्थंव्यतीपातशांतिंकरिष्यइतिसंकल्प्य ॥ गणेशपूजनाद्युक्तलक्षणाचार्यवरणंकुर्यात् ॥ वृतायतस्मैपट्टवस्त्रयुगंकुंडलयुगमंगु
लीयकंचदद्यात् ॥ आचार्योयदत्रसंस्थितमितिसर्षपविकिरणंशुचीवइतिपंचगव्येनआपोहिष्ठेत्यद्भिश्चगृहपूर्वदिग्भागंप्रोक्ष्यस्व
स्त्ययनंताक्ष्यमितिमंत्राभ्यांप्रार्थ्य तत्रैवगोमयलिप्तेरंगवल्ल्याद्यलंकृतेसमदेशेमहीद्यौरितिभुवमभिमृश्य ओषधयःसमितिपंच
द्रोणपरिमितव्रीहिराशिंकृत्वातदुपरिसार्धद्रोणद्वयमिततंडुलराशिंतदुपरि सपादद्रोणमिततिलराशिंचकृत्वोपरिभागंसमंकृ
त्वातत्राऽष्टदलंकृत्वाआकलशेष्वितितत्राऽव्रणंकुंभंप्रतिष्ठाप्य इमंमेगंगेइतितीर्थोदकेनापूर्य स्योनापृथिवीतिसप्तमृदः याओ
षधीरितिसर्वौषधीरश्वत्थेवइतिपंचपल्लवान् गायत्र्यागंधद्वारामाप्यायस्वदधिक्राव्णःशुक्रमसीतिपंचगव्यानि गंधद्वारामिति
गंधंसहिरत्नानीतिपंचरत्नानितत्रनिक्षिप्य वस्त्रयुग्मेनावेष्ट्यतदुपरिसूक्ष्मवस्त्रयुतंपूर्णपात्रंपूर्णादर्वीतिनिधायतदुपरिनिष्कतद
र्धतदर्धान्यतरमानेनहेममिर्मितांसूर्यप्रतिमांनिधायतत्रसूर्यमावाहनाद्युपचारैःपूजयेत् ॥ व्याहृतीनांपरमेष्ठीप्रजापतिःप्रजाप

तिर्बृहती उत्सूर्यइतिमंत्रस्यमैत्रावरुणिर्वसिष्ठःसूर्यस्त्रिष्टुप् पूजनेवि०॥ भूर्भुवःस्वः ॐ उत्सूर्योबृहदर्ची० ऋक् १ ॥ तद्दक्षिणतोग्नि
मावाहयेत् ॥ अग्निंदूतंकाण्वोमेधातिथिरग्निर्गायत्री अग्निपूजने० ॥ ॐ भूर्भुवःस्वः अग्निंदूतं० ऋक् १ ॥ उत्तरतोरुद्रमा
वाहयेत् ॥ त्र्यंबकंवसिष्ठोरुद्रोनुष्टुप् रुद्रपू० ॥ ॐ भूर्भुवःस्वः त्र्यंबकंयजामहे० ऋक् १ ॥ एवमेवसंक्रांतिशांतौसंक्रांतिशां
तिंकरिष्यइतिसंकल्पेविशेषः ॥ व्यतीपातसंक्रमणयोर्जन्मनितुव्यतीपातसंक्रांतिशांतीतंत्रेणकरिष्येइतिसंकल्पः ॥ तिस्रोदेव
ताःषोडशोपचारैःवस्त्रयुग्मसहितैः पंचोपचारैर्वासंपूज्यगंधपुष्पाद्यर्चितेफलनैवेद्यंसमर्प्यप्रधानप्रतिमांस्पृशन्सर्वसौरमंत्रान्
जपेत् ॥ उदुत्यमितित्रयोदशर्चस्यसूक्तस्यकाण्वःप्रस्कण्वोनवाद्यागायत्र्योंत्याश्चतस्रोनुष्टुभः ॥ चित्रंदेवानामितिषळर्चस्यसूक्त
स्यआंगिरसःकुत्सस्त्रिष्टुप् ॥ इंद्रंमित्रमितिद्वयोरौचथ्योदीर्घतमास्त्रिष्टुप्॥ हंसःशुचिषदित्यस्यगौतमोवामदेवोजगती ॥ यस्त्वा
सूर्यइत्यस्यात्रिरनुष्टुप् ॥ यदद्यसूर्येत्येकस्याउत्सूर्यइतितिसृणांउद्वेतीतिसार्धचतसृणां उदुत्यद्दर्शतमितितिसृणांमैत्रावरुणिर्वसि
ष्ठः उदुत्यद्दर्शतमितिबृहतीशीर्ष्णःशीर्ष्णःसतोबृहतीतच्चक्षुरितिपुरउष्णिक् ॥ बण्महाँअसीतिद्वयोर्भार्गवोजमदग्निःपूर्वाबृहती
उत्तरासतोबृहती ॥ नमोमित्रस्येतिद्वादशर्चस्यसूक्तस्याभितपाःसूर्योजगतीदशमीत्रिष्टुप् ॥ सूर्योनोदिवइतिपंचर्चस्यसूक्तस्यसौ
र्यश्चक्षुर्गायत्री ॥ विभ्राड्बृहदितिचतसृणांसौर्योविभ्राड्जगती विभ्राजमितिप्रस्तारपंक्तिः ॥ आयंगौरितितृचस्यसर्पराज्ञी
गायत्री ॥ सर्वेषांसूर्योदेवता जपेवि० ॥ ततोरुद्रप्रतिमांस्पृशन्मृत्युंजयमंत्रमष्टोत्तरसहस्रमष्टोत्तरशतमष्टाविंशतिवारंवाजपे
त् ॥ ततश्चत्वारऋत्विजश्चतुर्दिक्षुकुंभंस्पृष्ट्वाक्रमेणसूक्तानिजपेयुः ॥ पूर्वस्याम् आनोभद्राइतिसूक्तस्यराहूगणोगोतमऋषिःवि
श्वेदेवादेवताआद्याःपंचसप्तमीचजगत्यःषष्ठीविराट्स्थानाशेषास्त्रिष्टुभः जपेवि० ॥ ॐ आनोभद्राः० ऋचः १० ॥ दक्षिणस्या

म् भद्राअग्नेरितिद्वादशर्चस्यवाभ्र्यश्वःसुमित्रऋषिः अग्निर्देवताआद्येद्वेजगत्यौअंत्यास्त्रिष्टु... ...जपेवि० ॥ ॐ भद्राअग्नेर्वध्र्य श्वस्य० ऋचः १२ ॥ प्रतीच्यांसहस्रशीर्षेतिषोडशर्चस्यसूक्तस्य नारायणऋषिःपुरुषोदेवता...जपेवि० ॥ ॐ सहस्रशीर्षा० ऋचः १६ ॥ उत्तरस्याम् त्र्यंबकंवसिष्ठोरुद्रोनुष्टुप् जपेवि० ॥ ॐ त्र्यंबकंयजा० ॥ अथकुंभपश्चिमदेशेस्थंडिलेऽग्निंस्वगृह्योक्तविधिनाप्रतिष्ठाप्यकुंभस्योत्तरतोग्रहाणामावाहनादिपूजांकृत्वातदीशान्यांकलशस्थापनंकृत्वाऽग्नेःपश्चिमतउपविश्यान्वादध्यात् ॥ चक्षुषीआज्येनेत्यंतेऽत्रप्रधानम् ॥ आदित्यादिग्रहांश्चिकीर्षितसंख्याकाभिःअर्कादिजातीयसमिच्चर्वाज्याहुतिभिः ॥ ग्रहपीठदेवताअमुकसंख्याभिःसमिच्चर्वाज्याहुतिभिः ॥ सूर्यंप्रत्येकमष्टोत्तरशतसंख्याभिःसमिदाज्यचर्वाहुतिभिः ॥ अग्निंरुद्रंचप्रत्येकमष्टाविंशतिसंख्याभिस्तदाहुतिभिः ॥ मृत्युंजयंअष्टोत्तरशतसंख्याभिस्तिलाहुतिभिः ॥ शेषेणेत्यादि० प्रायश्चित्ताहुत्यंतेबलिदानंततःपूर्णाहुतिःप्रणीताविमोकःसंस्थाजपेनोपस्थानंच ॥ ततोधृतनूतनवस्त्रयोर्दंपत्योःसबालयोरभिषेकः ॥ समुद्रज्येष्ठाइतिचतसृणांवसिष्ठआपस्त्रिष्टुप् अभिषेके० ॥ आपोहिष्ठेतितिसृणांसिंधुद्वीपआपोगायत्री अभिषेके० ॥ अक्षीभ्यांतइतिषण्णांविवृहायक्ष्मानुष्टुप् अभिषेके० ॥ स्वादिष्ठयेतिदशानांमधुच्छंदाः पवमानःसोमोगायत्री अभिषेके० ॥ ॐ उत्सूर्यो० अग्निंदूतं० त्र्यंबकं० पूजाकालेउक्तमेषामृष्यादि ॥ सुरास्त्वामभिषिंचंत्वित्यादिपौराणमंत्रैश्चाभिषेकांतेऽभिषेकवासआचार्यायसमर्पयेत् ॥ सपत्नीकःश्वेतवस्त्रचंदनादिधृत्वाभूषणमालादिनालंकृत्यआज्यमवेक्ष्यतत्पात्रंसदक्षिणंब्राह्मणाय दत्वा वस्त्रहेमांगुलीयकैःआचार्यंसंपूज्यव्यतीपातजननदोषशांत्यर्थंगोवस्त्रस्वर्णानितुभ्यंसंप्रददेइतिआचार्यायतानिदत्वातद

र्थंप्रच्छादनपटंतथैवदद्यात् ॥ ऋत्विग्भ्योयथाशक्तिदक्षिणांदत्वादीनांधकृपणेभ्योभूयसींदत्वाशतंब्राह्मणान्ऋत्विग्भिःसहमि
ष्टान्नैर्भोजयित्वाकर्मेश्वरार्पणंकृत्वाबंधुभिःसहभुंजीत ॥ इतिव्यतीपातसंक्रांतिशांतिः ॥ ॥ छ ॥ ॥ छ ॥

## ॥ १७८ ॥ अथवैधृतिजननशांतिः ॥

श्रीः ॥ वैधृतिशांतौतुसंकल्पेवैधृतेरुल्लेखः ॥ आवाहनेमध्येसव्याहृतिकेनत्र्यंबकमितिमंत्रेणरुद्रमावाह्यदक्षिणेउत्सूर्योबृहदर्ची
षीतिसूर्यंउत्तरतश्चाप्यायस्वेतिसोममावाह्यपूजनम् ॥ रुद्रप्रतिमांस्पृष्ट्वामृत्युंजयमंत्रमष्टोत्तरसहस्रमष्टोत्तरशतमष्टाविंशतिवा
रंवाजपः ॥ सूर्यप्रतिमांस्पृष्ट्वासर्वसौरजपः ॥ सोमप्रतिमांस्पृष्ट्वाआप्यायस्वेतिजपः ॥ अन्वाधानेरुद्रंसमिच्चर्वाज्यैःप्रत्येकमष्टो
त्तरशतसंख्याहुतिभिः ॥ सूर्यसोमौप्रत्येकमष्टाविंशतिसंख्याभिस्तदाहुतिभिः ॥ मृत्युंजयमष्टोत्तरसहस्रशतविंशत्यन्यतरसं
ख्याभिस्तिलाहुतिभिः ॥ शेषेणेत्यादितथैवहोमःकार्यइतिविशेषः ॥ अंतेकर्मेश्वरार्पणंकुर्यात् ॥ इतिवैधृतिशांतिः ॥ ॥

## ॥ १७९ ॥ अथभद्राजननशांतिः ॥

श्रीः ॥ कर्ताउक्तकालेगोमुखप्रसवंकृत्वादेशकालौसंकीर्त्यअस्यशिशोःभद्राजननसूचितसकलारिष्टपरिहारद्वारा० सग्रहमखां
गर्गोक्तांशांतिकं० इतिसंकल्प्यगणेशपूजनादिनांदीश्राद्धांतेआचार्यादीन्वृणुयात् ॥ ततआचार्यःप्रादेशकरणांतेगृहस्यपूर्वभा
गेस्थंडिलात्प्राच्यांमहीद्यौरित्यादिमंत्रावृत्त्यामध्येएकंपूर्वादिदिक्षुचतुरइत्येवंपंचकुंभान्संस्थाप्य तत्रजलपूरणादिपूर्णपात्रनि
धानांतेप्रतिमासुदेवताआवाहयेत् ॥ मध्यकुंभे भद्राअग्नेःसुमित्रोभद्राजगती ॥ भद्रावा० ॥ इतिभद्रां ॥ पूर्वेआकृष्णेनरज

सा० इतिसूर्यं ॥ दक्षिणे कद्रुद्रायकण्वोरुद्रोगायत्री ॥ इतिरुद्रं ॥ पश्चिमे गणानांत्वागृत्समदो० इतिगणपतिं ॥ उत्तरे ऋष भंमाऋषभऋषभोनुष्टुप् इतिऋषभंचावाह्यसर्वान्संपूज्यपुष्पमालादिभिःकलशान्भूषयित्वाग्निंग्रहांश्चप्रतिष्ठाप्यान्वादध्यात् ॥ ग्रहोत्कीर्तनांते भद्रां सूर्यं रुद्रंगणपतिंऋषभंचैताःप्रधानदेवताःसमिच्चर्वाज्यतिलैःप्रत्येकंप्रतिद्रव्यंअष्टोत्तरसहस्राष्टोत्तरशताष्टाविंशतिसंख्याकाभिर्वाहुतिभिःशेषेणेत्यादिप्रायश्चित्तहोमांतेबलिदानंपूर्णाहुतिंचकृत्वासंस्रावहोमादिशेषंसमाप्य धृतनववस्त्रंपत्नीशिशुसहितंयजमानं समुद्रज्येष्ठाइत्यादिवारुणैर्ग्रहादिमंत्रैश्चाभिषिंचेत् ॥ ततोयजमानोधृतनवशुक्लांबरोभिषेकवस्त्रमाचार्यायदत्वाविभूतिंधृत्वोत्तरपूजांकृत्वाचार्यंसंपूज्यतस्मैगांपीठंचदत्वानिरीक्षिताज्यंदत्वा ब्राह्मणभोजनंसंकल्प्यभूयसींदत्वाशिषोगृहीत्वाकर्मसमापयेत् ॥ इतिभद्राजननशांतिः ॥ ॥ छ ॥ ॥ छ ॥

## ॥ १८० ॥ अथाधोमुखजननशांतिः ॥

श्रीः ॥ जन्मतोद्वादशाहेजन्मनक्षत्रेन्यस्मिन्वाशुभदिनेकर्तागोमुखप्रसवंकृत्वादेशकालौसंकीर्त्य अस्यशिशोःअधोमुखजननसूचितसर्वारिष्टपरिहारद्वारा श्रीपरमेश्वरप्रीत्यर्थंसग्रहांबृहच्छौनकोक्तांशांतिंकरिष्यइतिसंकल्प्यगणेशपूजादिऋत्विग्वरणांतंकुर्यात् ॥ अत्रऋत्विजश्चत्वारः ॥ ततोगृहस्यैशानभागेस्थंडिलंकृत्वाआचार्यःप्रादेशांतेतत्पूर्वभागेमहीद्यौरितिस्थापितकलशे पूर्णपात्रेसुवर्णप्रतिमायां त्र्यंबकंवसिष्ठो० इतिरुद्रमावाह्यवस्त्रादिभिःसंपूज्याग्निंग्रहांश्चप्रतिष्ठापयेत् ॥ ततएकऋत्विक्रुद्रकुंभं स्पृष्ट्वाचत्वारिरुद्रसूक्तानिमंत्रचतुष्टयसहितानिएकादशवारंरुद्रंवाजपेत् ॥ ततआचार्योन्वाधानेग्रहोत्कीर्तनांते ॥ रुद्रंप्रधानं समिदाज्यतिलचरुभिःप्रतिद्रव्यंअष्टोत्तरसहस्राहुतिभिः १०८।२८ वा शेषेणेत्यादिप्रणीताप्रणयनांतेतूष्णींनिर्वापप्रोक्षणेकृ

त्वाचरुंश्रपयित्वाज्यसंस्कारादिग्रहहोमांतेउक्तमंत्रेणप्रधानहोमंकृत्वास्विष्टकृदादिबलिपूर्णाहुतिसंस्रावादिशेषंसमापयेत् ॥ अथमाताबालंकार्पासराशौनिधायपराङ्मुखीभवेत् ॥ विप्रास्तंगृहीत्वास्याभिमुख्यैमात्रेदद्युः ॥ तत्रमंत्रः ॥ बालेऽस्माभिरयं बालोयुष्मद्दत्तःप्रगृह्यच ॥ दीर्घायुरपिबालोयंपूर्ववत्कुलवर्धनः ॥ ततोयजमानंपत्नीशिशुसहितंकलशोदकेनसमुद्रज्येष्ठाइत्या दिभिरभिषिंचेत् ॥ ततोयजमानोग्निंसंपूज्यविभूतिंधृत्वोत्तरपूजांविधायाचार्यादिभ्योयथाशक्तिदक्षिणांदत्वापीठंदत्वाब्राह्मण-भोजनंसंकल्प्यभूयसींदत्वाशिषोगृहीत्वाकर्मेश्वरार्पणंकुर्यात् ॥ इत्यधोमुखजननशांतिः ॥ ॥ छ ॥ ॥ छ ॥

## ॥ १८१ ॥ अथैकनक्षत्रजननशांतिः ॥

श्रीः ॥ जनकनक्षत्रोत्पत्तौउक्तसमयेगोमुखप्रसवंकृत्वाएकोदरनक्षत्रोत्पत्तौतभकृत्वादेशकालौसंकीर्त्य ॥ अस्यशिशोःपित्रेक नक्षत्रोत्पत्तिसूचितसर्वारिष्टपरिहारद्वाराश्रीपरमेश्वरप्रीत्यर्थंशांतिमभिषेकंपूजितनक्षत्रप्रतिमाग्रेयथाशक्तिदानंचकरिष्येइति संकल्प्य ॥ गणपतिंसंपूज्यआचार्यंचतुरऋत्विजश्चवृत्वापुण्याहंवाचयीत ॥ मात्रेकनक्षत्रेत्याद्यूहेनान्यत्रसंकल्पः ॥ ततआचा र्योयदत्रसंस्थितमितिसर्षपविकिरणप्रोक्षणप्रार्थनादिकृत्वास्थंडिलादैशान्यांकलशंमहीद्यौरित्यादिनासंस्थाप्य तत्ररक्तवस्त्रा च्छादितेनक्षत्रतद्देवतान्यतरप्रतिमांकृताग्र्युत्तारणांमंत्रेणावाहनाद्युपचारैःपूजयेत् ॥ वस्त्रार्पणेतद्युग्ममर्पयेत् ॥ पूजांतेऽग्निं व्याहृतिभिःप्रतिष्ठाप्यान्वाधानेचक्षुषीआज्येनेत्यंतेअदोनक्षत्रमिमांदेवतांवा प्रत्येकमष्टोत्तरशतसंख्याभिःसमिच्चर्वाज्याहुति भिःशेषेणेत्यादिप्रायश्चित्तहोमांतंप्रणीताविमोकादि ॥ आचार्यःकलशोदकेनतयोरभिषेकंकुर्यात् ययोरेकनक्षत्रजन्म ॥ ततः पूजितप्रतिमाग्रेआचार्यायवस्त्रालंकारगाःदद्यात् ॥ ज्योतिर्निबंधोक्त्यास्वर्णरूप्यमयौहरिहरौसंपूज्यतौवादद्यात् ॥ विविध

स्वास्यविश्वस्यपितरौविश्वतोमुखौ ॥ प्रीयेतांमूर्तिदानेनदेवौहरिहरावुभाविति ॥ माषत्रयसुवर्णमृत्विग्भ्योदत्वाउत्तरपूजावि सर्जने आचार्यहस्तेप्रतिमाप्रतिपादनंधान्यवस्त्रादिभिःसहयानशय्यासनादीनांब्राह्मणांतरेभ्योदानंकृत्वातैःसहाचार्यमृत्वि जोभोजयित्वापूर्णतांवाचयित्वातेभ्यःशुभाआशिषःप्रतिगृह्यकर्मेश्वरार्पणंकुर्यात् ॥ इत्येकनक्षत्रजननशांतिः ॥ ॥ छ ॥

## ॥ १८२ ॥ अथग्रहणजननशांतिः ॥

श्रीः ॥ सूर्यग्रहणेप्रसूतौतत्कालस्थितनक्षत्रस्यथाधिष्ठात्र्यग्न्यादिदेवतातस्याःसूर्यस्यचयथाशक्तिहेम्नाप्रतिमेविधायराहोःसीसे ननागाकृतिंकृत्वाशौचांतेगोमुखप्रसवंकृत्वा ममभार्यायाःसूर्यग्रहणकालीनप्रसूतिसूचितसर्वारिष्टपरिहारद्वाराश्रीपरमेश्वरप्री त्यर्थंसग्रहमखांशांतिंकरिष्येइतिसंकल्प्य ॥ गणेशपूजनाद्याचार्यवरणपूजांतंकुर्यात् ॥ चंद्रग्रहेतुसूर्यस्थानेराजतंचंद्रबिंबंकु र्यात् ॥ अन्यद्द्वयंपूर्ववत् ॥ संकल्पेसूर्यस्थानेचंद्रपदप्रयोगः ॥ ततआचार्योयदत्रेत्याद्यंतेशुचिदेशंगोमयेनोपलिप्य तत्रनवंस दशंक्षालितंश्वेतवस्त्रंप्रसार्यतत्रोक्तदेवतानांरूपत्रयंनिधाय आकृष्णेनांगिरसोहिरण्यस्तूपःसवितात्रिष्टुप् ॥ पूजनेवि० ॥ ॐ आकृष्णेनरजं० ॥ मध्येसूर्यंरक्तवर्णैर्वस्त्रगंधाक्षतपुष्पैर्धूपदीपादिभिश्चपूजयेत् ॥ तद्दक्षिणतोराहुंकृष्णवर्णैर्गंधादिभिर्धूपादिभिश्च पूजयेत् ॥ स्वर्भानोरित्यस्यात्रिःस्वर्भानुस्त्रिष्टुप् राहुपूजनेवि० ॥ ॐ स्वर्भानोरधयदिंद्रमायाअवोदिवोवर्तमानाऽअवाहन् ॥ गूळ्हंसूर्यंतमसापव्रतेनतुरीयेणब्रह्मणाविन्ददत्रिः ॥ नक्षत्रदेवतामग्निर्नःपातुकृत्तिकाइतितैत्तिरीयपठिततत्तद्वाक्याष्टकेनपूजये त्सूर्यस्योत्तरतः ॥ चंद्रग्रहेतुमध्येचंद्रपूजनम् ॥ आप्यायस्वगोतमःसोमोगायत्री चंद्रपूजनेवि० ॥ ॐ आप्यायस्व० ॥ इति मंत्रेणश्वेतगंधादिभिर्धूपादिभिश्चेतिविशेषः ॥ अन्यदेवतयोःपूजनंपूर्ववत् ॥ ततोऽग्निस्थापनंग्रहपूजाकलशस्थापनांतंकृत्वाऽ

न्वाधानंकुर्यात् ॥ चक्षुषीआज्येनेत्यंतेग्रहान्वाधानंकृत्वा सवितारंअर्कसमिदाज्यचरुतिलैःप्रत्येकमष्टोत्तरशताहुतिभिः ॥ स्वर्भानुंदूर्वासहिताज्यादीनांतावतीभिराहुतिभिः ॥ नक्षत्रदेवतामग्निंपलाशवृक्षसमित्सहिताज्यादीनांतावतीभिराहुतिभिः ॥ शेषेणेत्यादि ॥ चंद्रग्रहेअर्कस्थानेचंद्रस्यार्कसमित्स्थानेपालाशसमिधांनिर्देशः ॥ गृह्यसिद्धाग्नेस्यपर्यग्निकरणादि ॥ यथान्वाधानंत्यागः ॥ प्रायश्चित्तांतेबलिपूर्णाहुतीसंस्थाजपांते पंचगव्यपंचरत्नपंचत्वक्पंचपल्लवैरोषधिकल्कैश्चमिश्रितलौकिकजलैर्ग्रहकलशोदकैश्चसहितैरभिषेकः ॥ आपोहिष्ठेतितृचस्यसिंधुद्वीपआपोगायत्री अभिषेके० ॥ इमंमेगंगेइत्यस्यसिंधुक्षित्प्रैयमेधोनद्योजगती ॥ पितरःपितामहाःपरेवरेइतियाजुषमंत्रेण ॥ तत्त्वायामिशुनःशेपोवरुणस्त्रिष्टुप् ॥ अभिषेके० ॥ अभिषेकांतेआचार्यंसंपूज्यतस्मैप्रतिमात्रयंदक्षिणांचदद्यात् ॥ ततोग्रहाणांपूजनविसर्जनेप्रतिमाप्रतिपादनंब्राह्मणभोजनसंकल्पश्चेति ॥ इति ग्रहणजननशांतिः ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥

## ॥ १८३ ॥ अथनक्षत्रगंडांतशांतिः ॥

श्रीः ॥ षण्मासोत्तरंद्वादशेवाहनिप्रथमतोगोप्रसवंकृत्वा ॥ देशकालौसंकीर्त्यममाऽस्यशिशोःरेवत्यश्विनीसंध्यात्मकगंडांतजननसूचितसर्वारिष्टनिरसनद्वाराश्रीपरमेश्वरप्रीत्यर्थंनक्षत्रगंडांतशांतिंकरिष्येइतिसंकल्प्य ॥ गणेशपूजनादियजुर्वेदविद्दैवज्ञाचार्यर्त्विग्वरणांतंकुर्यात् ॥ ततस्तांश्चंदनशुक्लमाल्यैःक्षौमशुक्लवासोभ्यांपूजयेत् ॥ ततआचार्योनिर्मितस्यापिनिमित्तानुसारिपरिमाणकांस्यपात्रस्यपुनर्निर्माणमाप्यायस्वेतिमंत्रेणकुर्याच्चंद्रप्रतिमाग्न्युत्तारणंच ॥ ततोयदत्रेतिसर्षपविकिरणादिनाभूसंस्कारं

कृत्वाउपलिप्तेदेशेकांस्यपात्रेपायसंपयोवानिक्षिप्य तत्रनवनीतपूर्णशंखंनिधायतत्रराजतंचंद्रबिंबंस्थापयित्वा सोमोयमितिध्या नपूर्वकंसमाहितचेताआप्यायस्वेतिमंत्रेणावाहनादिषोडशोपचारैस्तत्रचंद्रपूजनंकुर्यात् ॥ तत्रश्वेतंसदशंवस्त्रद्वयंसमर्पणीयं पुष्पाणिश्वेतानिसहस्रमर्पणीयानि मौक्तिकंदक्षिणातदसंभवेइष्टमन्यत् ॥ पूजांतेतमेवमंत्रंसविश्वासंचंद्रंध्यायन् सहस्रंसप्रणव मृष्यादिस्मरणपूर्वकंजपेत् ॥ तदुत्तरतस्ताम्रकलशंमहीद्यौरित्यादिविधिनास्थापयित्वा तत्ररजतप्रतिमायांबृहस्पतिमंत्रेणवा गीश्वरंसंपूज्यतदुत्तरतःक्रमेणतेनैवविधिनानिहितकुंभचतुष्टये अश्वत्थेवोनिषदनमित्याम्रपल्लवप्रक्षेपांतंकृत्वाचतुर्षुक्रमेणद्रवी भूतानिकुंकुमचंदनकुष्ठगोरोचनानिसिंचेत् ॥ तेषुवरुणंपूजयेत् ॥ ततःपश्चिमदेशेस्थंडिलाद्यग्निप्रतिष्ठापनांतंकृत्वा स्थापितक लशोत्तरभागेग्रहावाहनादिवरुणपूजांतंकृत्वाऽन्वाधानादिग्रहमखंपूर्णाहुत्यंतंकुर्यात् ॥ अभिषेककालेवारुणकलशचतुष्टयस्थो दकेनदिवागंडांतजातंबालंपित्रासहरात्रिजातंमात्रासहसंध्ययोर्जातमुभाभ्यांसहाभिषिंचेत् ॥ सहस्राक्षेणेतिमंत्रस्यत्र्यक्ष्मनाश नःप्राजापत्यइंद्रस्त्रिष्टुप् अभिषेकेवि० ॥ ॐ सहस्राक्षेण० ऋक् १ ॥ ततःसर्वकलशोदकैः समुद्रज्येष्ठाइत्यादिभिः सुरा स्त्वामित्यादिभिर्मंत्रैश्चाभिषेकांतेसुस्नातःसपत्नीकःकर्ता धृतश्वेतचंदनादिर्विभूतिधारणंकृत्वा आचार्यायशंखदानंकुर्यात् ॥ इमंसचंद्रंशंखंसवस्त्रयुगंसमौक्तिकंनवनीताद्युपस्करसहितंगंडदोषापनुत्तयेदैवज्ञाययजुर्वेदविदेतुभ्यमहंसंप्रददइति ॥ तत्सांग तासिद्ध्यर्थंसहिरण्यांधेनुंदद्यात् ॥ ततोवागीश्वरंताम्रपात्रसहितंतुभ्यंगंडदोषशांत्यर्थंसंप्रददइतिबृहस्पतिप्रतिमादानंतदंगत्वे नयथाशक्तिदक्षिणादानंच ॥ ततःस्थापितेतरदेवतानांउत्तरपूजापूर्वकंविसर्जनमाचार्यहस्तेप्रतिपादनंच ॥ ततःसहस्राक्षेणेति मंत्रस्यायुर्वृद्ध्यर्थंयथाशक्तिजपोदशावरब्राह्मणभोजनंचकुर्यात् ॥ इतिनक्षत्रगंडांतशांतिः ॥ ॥ छ ॥ ॥ छ ॥

## ॥ १८४ ॥ अथतिथ्यादिगंडांतशांतिः ॥

श्रीः ॥ तिथिगंडपूर्वार्धजन्मनिकर्तास्नातःपुत्रमनालोक्याऽस्यशिशोस्तिथिगंडपूर्वार्धजन्मसूचितसर्वारिष्टनिरसनद्वाराश्रीपरमेश्वरप्रीत्यर्थंअनडुद्दानंकरिष्येइतिसंकल्प्यनालच्छेदनात्पूर्वंगंडदोषेब्राह्मणपूजनपूर्वकंअनड्वाहंदद्यात् ॥ असंभवेकार्षापणाष्टकंवा ॥ सूतकांतेशुभदिनेवास्नातोऽनडुद्दानमित्यस्यस्थानेगर्गोक्तांशांतिमित्यूहेनसंकल्प्यगणेशपूजादिआचार्यवरणांतंकुर्यात् ॥ सचयदत्रेत्यादिनाभूशुद्धिकलशस्थापनेकृत्वा कलशेयाओषधीः सहिरत्नानिस्योनापृथिविरुवत्यश्वत्थेवइतिशतौषधीरत्नानिमृदंत्वचःपल्लवांश्चनिक्षिप्य पूर्णादर्वीतिस्थापितपूर्णपात्रेस्थापितहैमवरुणप्रतिमायांतत्वायामीतिमंत्रेणवरुणंपूजयेत् ॥ ततोऽग्निंप्रतिष्ठाप्यग्रहान्संपूज्यान्वादध्यात् ॥ चक्षुषीआज्येनेत्यादिग्रहोत्कीर्तनांतेऽत्रप्रधानम् ॥ वरुणंप्रतिद्रव्यमष्टोत्तरशतसंख्याभिःसमिधांचरोराज्यतिलयवानांचाहुतिभिः शेषेणेत्यादिबलिदानपूर्णाहुतिप्रणीताविसर्गांते कलशद्वयोदकेनसमुद्रज्येष्ठेत्यादिभिःपित्रादित्रयाणामभिषेकोयवव्रीहिमाषतिलमुद्गानांदक्षिणात्वेनदानंविसर्जनादि यथाशक्तिब्राह्मणभोजनंचेति ॥ तिथिगंडोत्तरार्धजन्मनिनतुतात्कालिकदानं ॥ शांतौमातुःशिशोश्चाभिषेकइतिविशेषः ॥ लग्नगंडपूर्वार्धजन्मनिकांचनमितिविशेषः ॥ नक्षत्रगंडस्योत्तरादिनिषिद्धभागस्यचपूर्वार्धजन्मनिधेनोस्तिलपात्रादेश्चदानम् ॥ शांतौनक्षत्रप्रतिमायास्तत्तद्वाक्याष्टकेनपूजनम् ॥ उत्तरार्धेजन्मनिनदानंदक्षिणाकाले ॥ उत्तरादौतिलपात्रादेर्दानं ॥ इतरत्रयवव्रीह्यादेरभिषेकव्यवस्थाचपूर्ववत् ॥ इतितिथ्यादिगंडांतशांतिः ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥

## ॥ १८५ ॥ अथविषनाडीजननशांतिः ॥

श्रीः ॥ कर्ताशौचांतेदेशकालौसंकीर्त्यविषनाड्यांएतच्छिशुजननसूचितसर्वारिष्टपरिहारद्वाराश्रीपरमेश्वरप्रीत्यर्थंवृद्धगर्गोक्तां सग्रहमखांशांतिंकरिष्यइतिसंकल्प्य गणेशपूजनाद्याचार्यर्त्विग्वरणांतंकुर्यात् ॥ आचार्योयदत्रसंस्थितमितिस्थलशुद्धिंकृत्वायथाशक्तियथालक्षणंनिर्मितानांहैमीनांरुद्रादिप्रतिमानांचतसृणामग्न्युत्तारणंकृत्वा पूर्वभागेमहीद्यौरितिभुवंस्पृष्ट्वातत्रओषधयःसंवदंतइतिचतुःप्रस्थपरिमितान्व्रीहीन्प्रक्षिप्य तैःस्थंडिलंपरिकल्प्यतत्रकलशस्थापनोदकपूरणेसमंत्रेकृत्वायाओषधीरितिसर्वौषधीःप्रक्षिप्य स्योनेतिसप्तमृदः अश्वत्थेवइतिपंचपल्लवान् कांडात्कांडादितिदूर्वाः हिरण्यरूपइतिहिरण्यं याःफलिनीरितिफलंयुवासुवासाइतिवस्त्रद्वयेनावेष्ट्य सहिरत्नानीतिपंचरत्नानिनिक्षिप्य गंधद्वारामितिगंधादिनाकलशंसंपूज्यपूर्णादर्वीतिपूर्णपात्रंनिधाय तत्रप्रतिमाचतुष्टयंनिधायतास्वावाहनादिषोडशोपचारैर्देवताःपूजयेत् ॥ कद्रुद्रायेत्यस्यकण्वोरुद्रोगायत्री ॥ यमायसोमंयमोनुष्टुप् ॥ अग्निर्मूर्धाविरूपोग्निर्गायत्री ॥ परंमृत्योरित्यस्यसंकुसुकोमृत्युस्त्रिष्टुप् ॥ पूजांतेस्थंडिलेपश्चिमभागस्थेऽग्निंप्रतिष्ठाप्यस्थापितोत्तरभागेग्रहपूजनकलशस्थापनांतंकृत्वाऽन्वादध्यात् ॥ चक्षुषीआज्येनेत्यंतेग्रहपीठदेवतान्वाधानंप्रसिद्धरीत्याकृत्वा रुद्रंप्रतिद्रव्यमष्टोत्तरशतसंख्याभिःसमिच्चरुघृताहुतिभिः ॥ यममग्निंमृत्युंचतावतीभिस्तद्द्रव्याहुतिभिः ॥ एताएवदेवतास्तिलाहुतिभिश्चतत्संख्याभिः ॥ शेषेणेत्यादिप्रणीताप्रणयनांतेआज्यनिर्वापः आज्येनसहगृहसिद्धान्नस्यपर्यग्निकरणंसंमार्गांतेचरोरग्नावधिश्रपणमभिघारणंचकृत्वोदगुद्वासनादिआज्यभागांतंग्रहपीठदेवतानांयथान्वाधानंत्यागे कृते प्रत्येकमष्टोत्तरशतसंख्याहुतिपर्याप्तंसमिच्चरुघृतात्मकद्रव्यत्रयंरुद्रायएवंयमायअग्नयेमृत्यवे एवंतत्संख्याहुतिपर्याप्तंति

लद्रव्यंरुद्रादिभ्योनममेतितित्यागेकृते ऋत्विक्सहितआचार्यस्तत्तन्मंत्रैर्जुहुयात् ॥ प्रायश्चित्तहोमांतेलोकपालेभ्योग्रहपीठदेवता भ्यश्चबलिदानंरुद्रयमाग्निमृत्युभ्यश्चांतेक्षेत्रपालायच ॥ पूर्णाहुत्यंतेप्रणीताविमोकः ॥ कलशद्वयोदकेनाभिषेकः समुद्रज्येष्ठे त्यादिभिर्मंत्रैः ॥ प्रीयतांभगवानीशःपिनाकीसर्वतोमुखः ॥ तवमूर्तिप्रदानेनसर्वाभीष्टप्रदोभव ॥ ईश्वरपीनोयमःकालोदंडह स्तःप्रसन्नधीः ॥ रक्तदृङ्नीलकायश्चमहिषस्थःशिवंकुरु ॥ पिंगभ्रूश्मश्रुकेशांतःसाक्षसूत्रकमंडलुः ॥ सप्तार्चिःशक्तिधारीचम मपापंव्यपोहतु ॥ दंष्ट्राकरालवदनोनीलांजनसमाकृतिः ॥ रक्ताक्षोसिगदापाणिर्मृत्युर्मांपातुसर्वदा ॥ इत्यादिभिश्चतुर्भिः श्लोकैश्च ॥ ततएतैरेवश्लोकैःसमाहितएकैकांदेवतामाचार्यायदद्यात् ॥ ततस्तस्मैगोभूहिरण्यवस्त्रादितन्निष्क्रयंवादद्यात् ॥ कृतस्यकर्मणःसांगतायैइमांदक्षिणांतुभ्यमहंसंप्रददेइति ॥ एवमृत्विग्भ्योपियथाशक्तिदक्षिणादानं ततोग्रहपीठदेवतानांपूज नविसर्जने आचार्यहस्तेप्रतिपादनंब्राह्मणभोजनंच ॥ इतिविषनाडीजननशांतिः ॥ ॥ ७ ॥ ॥ ७ ॥

## ॥ १८६ ॥ अथयमलजननशांतिः ॥

श्रीः ॥ ममभार्यायायमलजननसूचितसर्वारिष्टपरिहारद्वाराश्रीपरमेश्वरप्रीत्यर्थंइष्ट्यायक्ष्येइतिश्रौताग्निमतःगृह्याग्निमतस्तुमा रुतस्थालीपाकेनयक्ष्यइतिसंकल्पः ॥ अकृतप्रत्यारंभस्यतत्स्थानेपूर्णाहुतिंहोष्यामीति ॥ अग्निशून्यस्तुसग्रहमखंकात्यायनोक्तं प्रायश्चित्तंकरिष्येइतिसंकल्प्यगणेशपूजनाद्याचार्यवरणांतंकुर्यात् ॥ आचार्योयदत्रेत्यादिनाभूशुद्धिंविधायप्रागादिक्रमेणई शान्यंतासुदिक्षुमहीद्यौरित्यादिविधिनाकलशाष्टकपूरणांतंकृत्वाहिरण्यरूपइतिहिरण्यंकषायादिसहितंप्रक्षिप्य कांडात्कांडा दितिदर्वाःयाओषधीरितिसर्वौषधीश्चप्रक्षिप्य गंधादिप्रक्षेपादिवरुणपूजांतंकुर्यात् ॥ अथकलशोदकैराचार्योदंपत्योरभिषेकं

कुर्यात् ॥ आपोहिष्ठेतितिसृणामांबरीषःसिंधुद्वीपआपोगायत्री ॥ कयानइत्यस्यवामदेवइंद्रोगायत्री ॥ आनस्तुतइतिपंचा
नांवामदेवइंद्रस्त्रिष्टुप् ॥ मोष्वितिपंचानांवसिष्ठोवरुणोगायत्रीअंत्याजगती इदमापइत्यस्यसिंधुद्वीपआपोऽनुष्टुप् ॥ अपनः
शोशुचदघमित्यष्टर्चस्यसूक्तस्यकुत्सोग्निर्गायत्री ॥ अभिषेके० ॥ एवमभिषिक्तौदंपतीश्वेतैर्वस्त्रचंदनपुष्पैःसौवर्णभूषणैश्चाऽलं
कृत्यदर्भेषूपवेशयति ॥ तौतत्रोदङ्मुखौतिष्ठतः ॥ तत्समीपेप्राङ्मुखआचार्यःस्थंडिलेऽग्निंप्रतिष्ठाप्यैशान्यांग्रहपूजाकलशस्था
पनांतंकृत्वाऽन्वाधानंकुर्यात् ॥ चक्षुषीआज्येनेत्यादिग्रहोत्कीर्तनांते ॥ अपस्तिसृभिः इंद्रंसप्तभिः वरुणंपंचभिः अपएकया
अग्निमष्टाभिराज्याहुतिभिः॥ अग्निंसोमंपवमानंपावकंमारुतंमरुतःयमंअंतकंमृत्युंचएकैकयाचर्वाहुत्या शेषेणेत्यादि ॥ तूष्णीं
षट्त्रिंशद्वारंनिर्वापप्रोक्षणे ॥ यथान्वाधानमाज्याहुतिषुत्यागः ॥ अग्नयेस्वाहेत्यवदानसंपदानवाहुतयः ॥ यथालिंगंत्यजता
पिअग्न्याद्यात्मनामरुतोध्येयाः ॥ प्रयाजेषुसमिध्यइतित्यागेपिसमिदाद्यात्मनानिरुक्तोक्ताग्निध्यानवत् ॥ ततःस्विष्टकृदादिब
लिदानांतेपूर्णाहुतिःपूर्णपात्रनिनयनंग्रहकलशेनाभिषेकःआचार्यायदक्षिणादानंस्थापितदेवतानांपूजनादिआचार्यहस्तेप्रतिपा
दनांतंचकृत्वा ब्राह्मणान्भोजयित्वास्वस्तिभवंतोब्रुवंत्वितिवाचयीत आशिषोगृहीत्वेश्वरार्पणंकुर्यादिति ॥ इतियमलजनन०

## ॥ १८७ ॥ अथत्रिकप्रसवशांतिः ॥

श्रीः ॥ एकादशेद्वादशेअन्यस्मिन्वाशुभेऽहनिसभार्योदेशकालौसंकीर्त्यममसुतत्रयजन्मानंतरंसुताजननसूचितसर्वारिष्टपरिहा
रद्वाराश्रीपरमेश्वरप्रीत्यर्थंसग्रहमखांशांतिंकरिष्ये॥ सुतात्रयजननोत्तरंसुतजननेतथोहःकार्यः ॥ ततोगणेशपूजनाद्याचार्यर्त्वि
ग्वरणतत्पूजांतेआचार्यायदत्त्रेत्याद्यग्न्युत्तारणंचकृत्वा ॥ ततःस्थंडिलपूर्वभागेग्रहपूजाकलशस्थापनवरुणपूजनांतंकृत्वा तदुत्त

रतंउदकसंस्थानांपंचकलशानांमहीद्यौरित्यादिविधिनायथाशक्तिधान्योपरिस्थापितानामुपरियथाशक्तिहेमनिर्मिताःब्रह्मविष्णु
महेशेंद्ररुद्रप्रतिमाःस्थापयित्वातासुदेवताःपूजयेत् ॥ ब्रह्मजज्ञानंवामदेवोब्रह्मात्रिष्टुप् ॥ इदंविष्णुरित्यस्यमेधातिथिर्विष्णुगाय
त्री ॥ तत्पुरुषायेत्यस्यहिरण्यगर्भोमहेशोगायत्री ॥ यतइंद्रेत्यस्यभर्गइंद्रोबृहती ॥ कद्रुद्रायेत्यस्यघौरःकण्वोरुद्रोगायत्री ॥ पूजांते
रुद्रकलशंस्पृष्ट्वाचत्वारिरुद्रसूक्तानिकश्चिदृत्विग्जपेत् ॥ कद्रुद्रायेतिनवर्चस्यकण्वोरुद्रोगायत्र्यंत्यानुष्टुप् ॥ इमारुद्रायतवसइत्ये
कादशर्चस्यसूक्तस्यकुत्सोरुद्रःआद्यानवजगत्यःअंत्येद्वेत्रिष्टुभौ ॥ आतेपितरितिपंचदशर्चस्यसूक्तस्यगृत्समदोरुद्रस्त्रिष्टुप् ॥ इमा
रुद्रायस्थिरधन्वनइतिचतसृणांवसिष्ठआद्यास्तिस्रोजगत्यःअंत्यात्रिष्टुप् ॥ जपेवि० ॥ प्रत्येकमेकादशवारंसूक्तानांजपः ॥ तदंते
आनोभद्राइत्यादिशांतिसूक्तानिजपेत् ॥ ततोऽग्निप्रतिष्ठापनादि अन्वाधानेचक्षुषीआज्येनेत्यंतेप्रसिद्धग्रहपीठगतदेवतान्वाधा
नंकृत्वा ब्रह्माणंविष्णुंमहेशंइंद्रंरुद्रंचप्रत्येकंसमिदाज्यतिलचरूणांप्रतिद्रव्यमष्टोत्तरसहस्राहुतिभिः१०८।२८ वाशेषेणेत्यादि ॥
आज्यभागांतेयथान्वाधानंत्यागः ॥ ततःप्रधानहोममुक्तमंत्रैराचार्यर्त्विक्कर्तृकग्रहहोमपुरःसरंकुर्यात् ॥ प्रायश्चित्तहोमांतेबलिः
पूर्णाहुतिश्च ॥ ततःप्रणीताविमोकसंस्थाजपपरिस्तरणविमोकांतेषट्कलशोदकेनसमुद्रज्येष्ठाइत्यादिमंत्रैःसहकुटुंबयजमाना
भिषेकः ॥ ततआचार्यायसहिरण्यधेनुंदत्वाऋत्विग्भ्योयथाशक्तिदानंचकृत्वास्थापितदेवतानामुत्तरपूजनविसर्जनांतेतत्प्रति
माआचार्यहस्तेप्रतिपाद्यकांस्यपात्रंरूपंरूपमितिदत्वा ब्राह्मणभोजनंसंकल्प्यशांतिंपठित्वापरमेश्वरार्पणंकुर्यात् ॥ इति

## ॥ १८८ ॥ अथसदंतजननशांतिः ॥

श्रीः ॥ अस्यशिशोःप्रथममूर्ध्वदंतजननसूचितसर्वारिष्टपरिहारद्वाराश्रीपरमेश्वरप्रीत्यर्थंशांतिंकरिष्ये ॥ निमित्तांतरेसदंतज

ननसूचितेत्यूहः द्वितीयमासदंतजननसूचितेत्येवमूहश्च कल्प्यः ॥ गणेशपूजनाद्याचार्यवरणांतेआचार्योयदत्रेत्यादिप्रतिमाना मम्युत्तारणंचकृत्वाहोमदेशोत्तरभागेगजपृष्ठेनौकायांसौवर्णपीठेवास्वस्तिकचर्मयोगेभद्रासनत्वेनकल्पिते बालमुपवेश्यसर्वौष धिसर्वगंधादियुक्तजलैःस्नापयित्वा होमदेशपूर्वभागेस्थापितकलशोपरिधातारंवह्निंसोमंवायुंपर्वतान्केशवंचषट्प्रतिमासुसंपू ज्याऽग्निंप्रतिष्ठाप्यग्रहान्संपूज्याऽन्वादध्यात् ॥ अत्रप्रधानंग्रहान्वाधानांते धातारंसकृच्चरुणा वह्न्याद्यादेवताएकैकयाज्या हुत्याशेषेणेत्यादि ॥ धात्रेत्वाजुष्टंनिर्वपामीतिप्रोक्षामीतिसमंत्रेनिर्वापप्रोक्षणे ॥ ग्रहानुद्दिश्यत्यागहोमांतेधात्रेस्वाहेत्यवदानध र्मेणसकृदाहुतिः ॥ ॐ वह्नयेस्वाहा ॥ ॐ सोमाय० ॥ ॐ समीरणाय० ॥ ॐ पर्वतेभ्यः ॥ ॐ केसवाय० ॥ इतिस्रुवेणा ज्याहुतयः॥ यथालिंगंत्यागः॥ चर्वाज्याभ्यांस्विष्टकृद्बलिपूर्णाहुत्यंतेकलशद्वयोदकेनाभिषेकः॥ यथाशक्त्याचार्यायदक्षिणादा नंतद्धस्तेप्रतिमाप्रतिपादनांतेभूयसींदक्षिणामन्येभ्योयथाशक्तिदत्वासप्ताहंब्राह्मणान्भोजयेत् ॥ अष्टमेहनिशक्त्यनुसारेणकां चनादिदानंतेभ्यःकार्यं ॥ दिनाष्टकंब्रह्मचर्यादिव्रतचर्यांतेपरमेश्वरार्पणंकुर्यादितिसदंतजननादिशांतिः ॥ षष्ठेऽष्टमेवामासेदं तोत्पत्तौतुतदनुसारिसंकल्पपूर्वकंबृहस्पतेरेवमंत्रेणतत्पूजनविधिनापूजनंदधिमधुघृताक्तानांअश्वत्थसमिधामष्टोत्तरशतं तन्मं त्रेणहोमःआज्येनस्विष्टकृदादितत्कलशोदकेनाभिषेकःब्राह्मणभोजनांतेईश्वरार्पणं ॥ इतिसदंतोत्पत्तिशांतिः ॥ ॥ श्री ॥

## ॥ १८९ ॥ अथसिंहार्केगोप्रसवशांतिः ॥

श्रीः ॥ कर्तादशाहोत्तरंशुभदिनेस्नात्वाआचमनादिदेशकालस्मरणांतेममपत्न्याःपौषेप्रथमप्रसूति—( ममगृहेसिंहस्थेरवौगोप्र सूतिसूचित— माघेमहिषीप्रसूतिसूचित— श्रावणेदिवावडवाप्रसूति )—सूचितसर्वारिष्टपरिहारद्वारासग्रहांशौनकोक्तांशांतिंक

रिष्य इतिसंकल्प्यगणेशपूजनस्वस्तिवाचनादिऋत्विग्वरणांतंकुर्यात् ॥ ततआचार्यःकर्मसंकल्प्यप्रादेशकरणांते गृहस्यैशानभागेमहीद्यौरित्यादिविधिनाकलशंसंस्थाप्यवस्त्रयुग्मेनावेष्ट्यपूर्णपात्रे सौवर्णराजतताम्रान्यतमप्रतिमयोः कद्रुद्रायकण्वोरुद्रो० इतिरुद्रं ॥ आकृष्णेनहिरण्य० इतिसूर्यंचाधाद्यपूजयेत् ॥ ततएकऋत्विक्होमसमाप्त्यंतंरुद्रसूक्तान्यपरश्चसौरमंत्रान्जपेत् ॥ पूर्वामृष्यादिव्यतीपातशांतौद्रष्टव्यं ॥ यद्वातत्तन्मूलमंत्रजपःकार्यः ॥ ततोग्निंग्रहांश्चप्रतिष्ठाप्यान्वादध्यात् ॥ ग्रहादिकीर्तनांतेत्रप्रधानं रुद्रं सूर्यंच तिलाज्यचरुभिःप्रत्येकंप्रतिद्रव्यं १०८।२८ वासंख्याकाहुतिभिः शेषेणेत्यादिग्रहादिहोमांतेपूजामंत्राभ्यांप्रधानहोमंकुर्यात् ॥ ततःस्विष्टकृदादिप्रायश्चित्तहोमांतेबलिदानंपूर्णाहुतिंचकृत्वासंस्रावहोमादिशेषंसमाप्यस्थापितकलशोदकेनसकुटुंबंयजमानंसमुद्रज्येष्ठादिमंत्रैरभिषिंचेत् ॥ ततोयजमानोविभूतिंधृत्वोत्तरपूजांविधायाचार्यंसंपूज्यतस्मैप्रसूतांगांमहिषींवादत्वाऋत्विग्भ्योदक्षिणामाचार्यायविसर्जितदेवतापीठंचदत्वायथाशक्तिब्राह्मणान्संभोज्यभूयसींदद्यात् ॥ ॥

## ॥ १९० ॥ अथप्रसववैकृतशांतिः ॥

श्रीः ॥ वृद्धगर्गः ॥ यत्रगर्भेविपर्यासोमानुषाणांगवामपि ॥ अद्भुतानिप्रसूयंतेतत्रदेशस्यविप्लवः ॥ अत्राऽपिदिव्यजाशांतिः कार्यापंचदशींबुधैः ॥ पंचदशींप्राप्येतिशेषः ॥ पर्वणीत्यर्थः ॥ मानुषामानुषाणांचगोजाश्वमृगपक्षिणाम् ॥ जायंतेजातिभेदाश्चसदंताविकृतास्तथा ॥ बहुशीर्षाअशीर्षावाबहुकर्णाअकर्णकाः ॥ एकशृंगाद्वित्रिशृंगास्तथैवत्रिचतुर्भुजाः ॥ दीर्घकर्णामहाकर्णागजकर्णाश्चमानवाः ॥ वानरश्वापदव्याघ्रमार्जारतनुधारिणः ॥ जायंतेपुरुषायत्रतत्रसंग्राममादिशेत् ॥ राजश्रेष्ठकुलेनाशोधनस्यचकुलस्यच ॥ कमलायत्रजायंतेनारीणांगजवाजिनाम् ॥ ब्रह्मशांतिंततःकुर्यात्सर्वत्रप्रशस्यसिता ॥ अष्टोत्तरसहस्रा

णिचरुंवैजुहुयाद्धृतम् ॥ समिधांतुपलाशानांतर्पयेत्पूर्ववद्द्विजान् ॥ दासीदाससमायुक्तोगोधान्यफलसंयुतम् ॥ कांचनंवृषभं वस्त्रंदद्याद्विप्रायदक्षिणाम् ॥ अशिराजायतेजंतुस्तथाद्वित्रिशिराअपि ॥ सूर्याद्भुतंविजानीयात्पूजयित्वादिवाकरम् ॥ दध्या ज्यमधुसंयुक्ताःसमिधस्त्वर्कसंभवाः ॥ यद्वाजनःप्रसृतिभिर्जुहुयाद्धृतमेवच ॥ धेनुंसुवर्णवस्त्रंचदद्याद्धात्रेषदक्षिणाम् ॥ सर्वे दोषाविनश्यंतितत:संपद्यतेशुभम् ॥ मृगीजनयतेसर्पान्मंडूकांश्चाप्यमानुषान् ॥ बृहस्पत्यद्भुतमिदंतद्वारेतंप्रपूजयेत् ॥ उदुं बरस्यसमिधोदधिसर्पिःसमन्विताः ॥ दोषोपशमनार्थायजुहुयान्नियमेस्थितः ॥ वस्त्रंसुवर्णधेनुंचदद्याद्विप्रायदक्षिणाम् ॥ स्त्रीगर्भपातोयमलंप्रसूयंतेऽथवास्त्रियः ॥ सदंताश्चैवजायंतेजातमात्राहसंतिच ॥ बुधाद्भुतंविजानीयात्तद्वारेतंप्रपूजयेत् ॥ वस्त्रंगांचसुवर्णंचदद्याद्विप्रायदक्षिणाम् ॥ अद्भुतसागरेनारदः ॥ भानौसिंहगतेचैवयस्यगौःसंप्रसूयते ॥ मरणंतस्यनिर्दिष्टंष ड्भिर्मासैर्नसंशयः ॥ तत्रशांतिंप्रवक्ष्यामियेनसंपद्यतेशुभम् ॥ प्रसूतांतत्क्षणादेवतांगांविप्रायदापयेत् ॥ ततोहोमंप्रकुर्वीतघृता क्तैराजसर्षपैः ॥ अयुतोहोमोव्याहृतिभिःकार्यइति ॥ तथा ॥ अस्यवामस्येतिसूक्तेनतद्विष्णोरितिमंत्रतः ॥ जुहुयाच्चतिला ज्येनशतमष्टोत्तराधिकम् ॥ मृत्युंजयेनमंत्रेणजुहुयाच्चतथायुतं ॥ श्रीसूक्तेनततःस्नायाच्छांतिसूक्तेनवापुनरिति ॥ यत्कांत्या सूर्यचंद्राद्याअभवन्मोदकांतयः ॥ श्रीकांतस्यमुदेतस्यप्रोक्ताजननशांतयः ॥ इतिसंस्कारकौस्तुभस्थाजननशांतयःसमाप्ताः ॥

## ॥ इतिद्वितीयंसंस्कारादिप्रकरणंसंपूर्णं ॥ २ ॥

# ॥ अथव्रतोद्यापनादिमिश्रप्रकरणम् ॥ ३ ॥

## ॥ १९१ ॥ अथसर्वतोभद्रमंडलम् ॥

श्रीः ॥ हेमाद्रौस्कांदे ॥ प्रागुदीच्यांगतारेखाःकुर्यादेकोनविंशतिं ॥ खंडेंदुस्त्रिपदःकोणेश्रृंखलाःपंचभिःपदैः ॥ एकादशपदावल्लीभद्रंतुनवभिःपदैः ॥ चतुर्विंशत्पदावापीपरिधिर्विंशतिःपदैः ॥ मध्येषोडशभिःकोष्ठैःपद्ममष्टदलंस्मृतम् ॥ श्वेतेंदुःश्रृंखलाकृष्णावल्लींनीलेनपूरयेत् ॥ भद्रारुणासितावापीपरिधिःपीतवर्णकः ॥ बाह्यांतरदलश्वेताकर्णिकापीतवर्णका ॥ परिध्यावेष्टितंपद्मंबाह्येसत्वंरजस्तमः ॥ तन्मध्येस्थापयेद्देवान्ब्रह्माद्यांश्चसुरासुरान् ॥ इतिसर्वतोभद्ररेखाकोष्ठवर्णपूरणादिशास्त्रार्थः॥

## ॥ १९२ ॥ अथलिंगतोभद्राणि ॥

श्रीः ॥ अथद्वादशलिंगतोभद्रम् ॥ लैंगे ॥ प्रागुदीच्यांगतारेखाःषट्त्रिंशद्विप्रकल्पयेत् ॥ पदानिद्वादशशतंपंचविंशतिरेवच ॥ खंडेंदुस्त्रिपदःकोणेश्रृंखलाषट्पदैःस्मृता ॥ त्रयोदशपदावल्लीभद्रंतुनवभिःपदैः ॥ त्रयोदशपदावापीलिंगमष्टादशैःस्मृतम् ॥ लिंगत्रयस्यपंक्तौतुशोभाकोष्ठाश्चतुर्दश ॥ तेषामुपरिपंक्तौतुकोष्ठाःसप्तदशैवतु ॥ पूजापंक्तिस्तुविज्ञेयापरितःपरिकल्पिता ॥ पूजापंक्त्यंतरापंक्तौकोष्ठाद्व्यशीतिसंख्यया ॥ परिधिःसतुविज्ञेयोंऽतरामंडलयोर्द्वयोः ॥ परिध्यंतरकोष्ठेषुसर्वतोभद्र

---

१ इदंसर्वतोभद्रमंडलंविविधानिलिंगतोभद्राणिचयथावत्चक्रन्यासरंगरंजनादिनारंभेदत्तानिसंतितानितेषांयत्रयत्रोपयोगस्तत्रतत्रग्राह्याणि ।

मालिखेत् ॥ विशेषश्चात्रविज्ञेयःशृंखलाषट्पदाभवेत् ॥ त्रयोदशपदावल्लीभद्रंतुनवभिःपदैः ॥ पंचविंशत्पदावापीपरिधिःषो
डशात्मकः ॥ मध्येनवपदंपद्मंकर्णिकाकेसरान्वितम् ॥ सत्वंरजस्तमोवर्णाःपरितोमंडलस्यतु ॥ त्रयःपरिधयःकार्यास्तत्रद्वारा
णिकारयेत् ॥ सितेंदुःशृंखलाकृष्णावल्लीनीलाप्रकीर्तिता ॥ भद्रंचैवारुणंज्ञेयंवापीस्याच्छ्वेतवर्णिका ॥ लिंगानिकृष्णवर्णानि
पार्श्वतोद्वादशैवतु ॥ परिधिःपीतवर्णःस्यात्कमलंपंचवर्णकम् ॥ ॥ अथाष्टलिंगतोभद्रमाग्नेये ॥ चतुर्विंशतिरालेख्यारे
खाःप्राक्दक्षिणायताः ॥ कोणेषुशृंखलाःपंचपदावल्लयस्तुपार्श्वतः ॥ पदैर्नवभिरालेख्याश्चतुर्भिर्लघुशृंखलाः ॥ लघुवल्लयःपदैः
षड्भिस्ततोष्टादशभिःपदैः ॥ कृत्वालिंगानिवाप्यःस्युस्त्रयोदशभिरंतरा ॥ ततोवीथिद्वयेनैवपीठंकुर्याद्विचक्षणः ॥ तस्यपादाः
पंचपदैर्द्वाराण्यपितथैवच ॥ एकाशीतिपदंमध्येपद्मंस्वस्तिकमुच्यते ॥ कोणेषुशृंखलाःकार्याःपदैस्त्रिभिरतःपरम् ॥ पदैश्चतुर्भि
र्दिक्षुस्युर्भद्राण्येषांसमंततः ॥ एकादशपदावल्ल्योमध्येष्टदलमालिखेत् ॥ पद्मंनवपदंह्येवंलिंगतोभद्रमुच्यते ॥ शृंखलाःकृष्ण
वर्णेनवल्लीर्नीलेनपूरयेत् ॥ रक्तेनशृंखलालघ्वीर्वल्लीःपीतेनपूरयेत् ॥ लिंगानिकृष्णवर्णानिश्वेतेनाप्यथवापिकाः ॥ पीठंसपादं
श्वेतेनपीतेनद्वारपूरणम् ॥ मध्येस्युःशृंखलारक्तावल्लीर्नीलेनपूरयेत् ॥ भद्राणिपीतवर्णानिपीतापंकजकर्णिका ॥ दलानिश्वेत
वर्णानियद्वाचित्राणिकल्पयेत् ॥ तिस्रोरेखाबहिःकार्याःसितरक्तासिताःक्रमादिति ॥ ॥ अथचतुर्लिंगतोभद्रम् ॥ ॥
लैंगे ॥ रेखास्त्वष्टादशप्रोक्ताश्चतुर्लिंगसमुद्भवे ॥ कोणेंदुस्त्रिपदःश्वेतस्त्रिपदैःकृष्णशृंखला ॥ वल्लीसप्तपदानीलाभद्रंरक्तंचतु
ष्पदम् ॥ भद्रपार्श्वेमहारुद्रंकृष्णमष्टादशैःपदैः ॥ शिवस्यपार्श्वतोवापींकुर्यात्पंचपदांसितां ॥ एकंपदंतथापीतंभद्रवाप्योस्तुम
ध्यतः ॥ शिरसिशृंखलायाश्चकुर्यात्पीतंपदत्रयम् ॥ लिंगानांस्कंधतःकोष्ठाविंशतीरक्तवर्णकाः ॥ परिधिःपीतवर्णस्तुपदैःषोड

शभिःस्मृतः ॥ पदैस्तुनवभिःपश्चाद्रक्तंपद्मंसकर्णिकं ॥ ॥ एकलिंगतोभद्रम् ॥ गौरीतिलके ॥ तिर्यगूर्ध्वगतारेखाःकार्याः
स्निग्धास्त्रयोदश ॥ कोणेंदुस्त्रिपदःकार्यःशृंखलास्त्रिपदाःस्मृताः ॥ वल्लीतुत्रिपदानीलाभद्रंरक्तंप्रकल्पयेत् ॥ पदैर्द्वादशभिः
स्पष्टमुत्तरेपूर्वदक्षिणे ॥ पश्चिमायांमहारुद्रमष्टाविंशतिकोष्ठकैः ॥ लिंगपार्श्वेतथामूर्ध्निअष्टौकोष्ठाःसुपीतकाः ॥ लिंगमेकंतथा
गौर्यस्तिस्रःस्युरत्रमंडले ॥ पूजयेन्मंडलंचैतत्तस्यगौरीप्रसीदति ॥ इतिपृथक्पृथक्चत्वारिलिंगतोभद्राणि ॥ ॥ छ ॥

## ॥ १९३ ॥ अथव्रतोद्यापनविधिः ॥

श्रीः ॥ यजमानःआचम्यप्राणानायम्यदेशकालौसंकीर्त्यश्रुति०प्राप्त्यर्थंश्रीपरमेश्वरप्रीत्यर्थंमयाकृतस्यअमुकव्रतस्यसंपूर्णफला
वाप्तयेअमुकव्रतोद्यापनाख्यंकर्मकरिष्ये ॥ आदौनिर्विघ्नतासिद्ध्यर्थंमहागणपतिपूजनंस्वस्तिपुण्याहवाचनंमातृकापूजनंनांदी
श्राद्धंआचार्यवरणंचकरिष्येइतिसंकल्प्यतानिकृत्वाआचार्यंवृणुयात्प्रार्थयेच्च ॥ आचार्यस्तुयथास्वर्गेशक्रादीनांबृहस्पतिः ॥
तथात्वंममयज्ञेस्मिन्नाचार्योभवसुव्रत ॥ ततोब्रह्मसदस्यौहोमानुसारेणवृत्वापूजयेत् ॥ अथाचार्योदर्भेषुदर्भपाणिःआचम्यप्राणा
नायम्य देशकालौस्मृत्वामुकगोत्रेणामुकशर्मणायजमानेनामुकव्रतोद्यापनकर्मणिवृतोहंआचार्यकर्मकरिष्येइतिसंकल्प्यशरीर
शुद्ध्यर्थंपवनपावनभूशुद्ध्यादिपुरुषसूक्तन्यासंचकृत्वायदत्रेतिसर्षपान्विकीर्यशुचीवेत्यादिभिःपंचगव्येनाद्भिश्चभुवंप्रोक्ष्यस्वस्त्य
यनमित्यादिप्रादेशांतंकुर्यात् ॥ ततोविष्णुव्रतेसर्वतोभद्रेशैवेचतदुक्तलिंगतोभद्रेब्रह्मादिमंडलदेवताःस्थापयेत् ॥ ॥ छ ॥

## ॥ १९४ ॥ अथब्रह्मादिमंडलदेवताः ॥

श्रीः ॥ मध्येब्रह्माणं ॥ ब्रह्मजज्ञानंवामदेवोब्रह्मात्रिष्टुप् ब्रह्मावाहनेविनियोगः ॥ ॐ ब्रह्मजज्ञानंप्रथमंपुरस्ताद्विसीमतःसुरु

चोवेनआवः ॥ सबुध्नियाउपमाअस्यविष्ठाःसतश्चयोनिमसतश्चविवः ॥ भूर्भुवःस्वर्ब्रह्मणेनमःब्रह्माणमावाहयामि ॥ भोब्रह्मन् इहागच्छेहतिष्ठपूजांगृहाणवरदोभव ॥ १ ॥ उत्तरेसोमं ॥ आप्यायस्वगोतमःसोमोगायत्री ॥ सोमावाहने० ॥ ॐ आप्यायस्वसमेतुतेविश्वतःसोमवृष्ण्यं ॥ भवावाजस्यसंगथे ॥ भूर्भु० ॥ सोमाय० सोमं० ॥ भोसोमइहाग० ॥ २ ॥ ईशान्यामीशानं ॥ अभित्वाशुनःशेपईशानोगायत्री ॥ ईशानावाहने० ॥ ॐ अभित्वादेवसवितरीशानंवार्याणां ॥ सदावन्भागमीमहे ॥ भूर्भु० ईशानाय० ईशानंआ० ॥ भोईशानइहा० ॥ ३ ॥ पूर्वेइंद्रं ॥ इंद्रंवोमधुच्छंदाइंद्रोगायत्री ॥ इंद्रावाहने० ॥ ॐ इंद्रंवोविश्वतस्परिहवामहेजनेभ्यः ॥ अस्माकमस्तुकेवलः ॥ भूर्भु० इंद्रायन० इंद्रंआवाह० ॥ भोइंद्रइहागच्छ०॥ ४ ॥ आग्नेय्यामग्निं ॥ अग्निंदूतंमेधातिथिरग्निर्गायत्री अग्न्यावाहनेवि० ॥ अग्निंदूतंवृणीमहेहोतारंविश्ववेदसं ॥ अस्ययज्ञस्यसुक्रतुं ॥ भूर्भु० अग्नयेन० ॥ अग्निमावाह० ॥ भोअग्नेइहा० ॥ ५ ॥ दक्षिणेयमं ॥ यमायसोमंयमोयमोनुष्टुप् ॥ यमावाहने० ॥ ॐ यमायसोमंसुनुतयमायजुहुताहविः ॥ यमंहयज्ञोगच्छत्यग्निदूतोअरंकृतः ॥ भूर्भु० ॥ यमायन० यमंआ० ॥ भोयमइहागच्छ० ॥ ६ ॥ नैर्ऋत्यांनिर्ऋतिं ॥ मोषुणःकण्वोनिर्ऋतिर्गायत्री ॥ निर्ऋत्यावाहनेवि० ॥ ॐ मोषुणःपरापरानिर्ऋतिर्दुर्हणावधीत् ॥ पदीष्टतृष्णयासह ॥ भूर्भु० निर्ऋतये० निर्ऋतिंआ० ॥ भोनिर्ऋतेइहागच्छ० ॥ ७ ॥ पश्चिमेवरुणं ॥ तत्त्वायामिशुनःशेपोवरुणस्त्रिष्टुप् ॥ वरुणावा० ॥ तत्त्वायामिब्रह्मणावंदमानस्तदाशास्तेयजमानोहविर्भिः ॥ अहेळमानोवरुणेहबोध्युरुशंसमानआयुःप्रमोषीः ॥ भूर्भु० वरुणाय० वरुणंआ० भोवरुणइ० ॥ ८ ॥ वायव्यांवायुं ॥ वायोशतंवामदेवोवायुरनुष्टुप् ॥ वाय्वावाहने० ॥ ॐ वायोशतंहरीणांयुवस्वपोष्याणां ॥ उतवातेसहस्रिणोरथआयातुपाजसा ॥ भूर्भुव० वायवे०

वायुंआवा० ॥ भोवायोइहागच्छ० ॥ ९ ॥ वायुसोममध्येअष्टवसून् ॥ ज्मयाअत्रवसिष्ठोवसवस्त्रिष्टुप् ॥ वस्वावाहने० ॥ ॐ ज्मयाअत्रवसवोरंतदेवाउरावंतरिक्षेमर्जयंतशुभ्राः ॥ अर्वाक्पथउरुज्रयःकृणुध्वंश्रोतादूतस्यजग्मुषोनोअस्य ॥ भूर्भुव० अष्टवसुभ्यो० अष्टवसून्आवा० ॥ भोअष्टौवसवःइहागच्छतइहतिष्ठतपूजांगृह्णीतवरदाभवत ॥ १० ॥ सोमेशानमध्येएकादशरुद्रान् ॥ आरुद्रासःश्यावाश्वएकादशरुद्राजगती ॥ एकादशरुद्रावाहने० ॥ ॐ आरुद्रासइंद्रवंतःसजोषसोहिरण्यरथाः सुवितायगंतन ॥ इयंवोअस्मत्प्रतिहर्यतेमतिस्तृष्णजेनदिवउत्साउदन्यवे ॥ भूर्भु० एकादशरुद्रेभ्योनमः एकादशरुद्रान् आ० ॥ भोएकादशरुद्राःइहागच्छतइहतिष्ठतपूजांगृह्णीतवरदाभवत ॥ ११ ॥ ईशानेंद्रयोर्मध्येद्वादशादित्यान् ॥ त्यांनुमत्स्योमान्योवाद्वादशादित्यागायत्री॥द्वादशादित्यावाहनेवि०॥ॐ त्यांनुक्षत्रियाँऽअवआदित्यान्यांचिषामहे ॥ सुमृळीकाँअभिष्टये ॥ भूर्भु० द्वादशादित्येभ्योन० द्वादशादित्यानावाह० ॥ भोद्वादशादित्याःइहागच्छतइहतिष्ठतपूजांगृह्णीतवरदाभवत ॥ १२ ॥ इंद्राग्निमध्येश्विनौ ॥ अश्विनावर्तिर्गोतमोश्विनावुष्णिक् अश्व्यावाह० ॥ ॐ अश्विनावर्तिरस्मदागोमद्दस्राहिरण्यवत् ॥ अर्वाग्रथंसमनसानियच्छतं ॥ भूर्भुवः० अश्विभ्यांनमः अश्विनौआवा० ॥ भोअश्विनौइहागच्छतंइहतिष्ठतं पूजांगृह्णीतंवरदौभवतं ॥ १३ ॥ अग्नियममध्येविश्वेदेवान्सपैतृकान् ॥ ओमासोमधुच्छंदाविश्वेदेवागायत्री ॥ विश्वेदेवावाहने० ॥ ॐ ओमासश्चर्षणीधृतोविश्वेदेवासआगत ॥ दाश्वांसोदाशुषःसुतं ॥ भूर्भु० विश्वेभ्योदेवेभ्योनमःविश्वान्देवान्आवाह० ॥ भोविश्वेदेवाःइहागच्छतइहतिष्ठतपूजांगृह्णीतवरदाभवत ॥ १४ ॥ यमनिर्ऋतिमध्येसप्तयक्षान् ॥ अभित्यंवामदेवःसप्तयक्षाअष्टी ॥ सप्तयक्षावा० ॥ ॐ अभित्यंदेवंसवितारमोण्योःकविक्रतुमर्चामिसत्यसवंरत्नधामभिप्रियंमतिंक

विं ॥ ऊर्ध्वायस्यामतिर्भाअदिद्युतत्सवीमनिहिरण्यपाणिरमिमीतसुक्रतुःकृपास्वः ॥ भूर्भु० सप्तयक्षेभ्यो० सप्तयक्षान्आ० ॥
भोसप्तयक्षाःइहागच्छतइहतिष्ठतपूजांगृह्णीतवरदाभवत ॥ १५ ॥ निर्ऋतिवरुणमध्येभूतनागान् ॥ आयंगौःसार्पराज्ञीसर्पा
गायत्री ॥ सर्पावाहने० ॥ आयंगौःपृश्निरक्रमीदसदन्मातरंपुरः ॥ पितरंचप्रयन्त्स्वः ॥ भूर्भुव० सर्पेभ्योनमःसर्पान्आवा०॥
भोसर्पाःइहागच्छतइहतिष्ठतपूजांगृह्णीतवरदाभवत ॥ १६ ॥ वरुणवायुमध्येगंधर्वाप्सरसः ॥ अप्सरसामृष्यशृंगोगंधर्वोप्सर
सोनुष्टुप् ॥ गंधर्वाप्सरआवाहने० ॥ ॐ अप्सरसांगंधर्वाणांमृगाणांचरणेचरन् ॥ केशीकेतस्यविद्वान्त्सखास्वादुर्मदिन्तमः ॥
भूर्भुव० गंधर्वाप्सरोभ्योनमःगंधर्वाप्सरसआवा० ॥ भोगंधर्वाप्सरसःइहागच्छतइहतिष्ठतपूजांगृह्णीतवरदाभवत ॥ १७ ॥
ब्रह्मसोममध्येस्कंदंनंदीश्वरंशूलंमहाकालंच ॥ यदक्रंदोदीर्घतमास्कंदस्त्रिष्टुप् ॥ स्कंदावाहने० ॥ ॐ यदक्रंदःप्रथमंजायमान
उद्यन्त्समुद्रादुतवापुरीषात् ॥ श्येनस्यपक्षाहरिणस्यबाहूउपस्तुत्यंमहिजातंतेअर्वन् ॥ भूर्भु० स्कंदाय० स्कंदंआवा० ॥ भो
स्कंदइहागच्छइह० ॥ १८ ॥ ऋषभमृषभोनंदीश्वरोनुष्टुप् ॥ नंदीश्वरावाहने० ॥ ॐ ऋषभंमासमानानांसपत्नानांविषासहिं॥
हंतारंशत्रूणांकृधिविराजंगोपतिंगवां ॥ भूर्भु० नंदीश्वराय० नंदीश्वरंआवा० ॥ भोनंदीश्वरइहागच्छ० ॥ १९ ॥ कद्रुद्राय
घौरःकण्वःशूलोगायत्री शूलावाह० ॥ ॐ कद्रुद्रायप्रचेतसेमीह्ळुष्टमायतव्यसे ॥ वोचेमशंतमंहृदे ॥ भूर्भु० शूलायन० शूलं
आवा० ॥ भोशूलइहागच्छइह० ॥ २० ॥ कुमारंमाताकुमारोमहाकालस्त्रिष्टुप् ॥ महाकालावाह० ॥ ॐ कुमारंमातायुवतिः
समुब्धंगुहाबिभर्तिनददातिपित्रे ॥ अनीकमस्यनमिनज्जनासःपुरःपश्यंतिनिहितमरतौ ॥ भूर्भु० महाकालाय० महाकालं
आ० ॥ भोमहाकालइहा० ॥ २१ ॥ ब्रह्मेशानमध्येदक्षं ॥ अदितिर्बृहस्पतिर्दक्षोनुष्टुप् ॥ दक्षावाहने० ॥ ॐ अदितिर्ह्यज

निष्टद्क्षयादुहितातवं ॥ तांदेवाअन्वंजायंतभद्राअमृतबंधवः ॥ भूर्भुं० दक्षाय० दक्षंआवा० ॥ भोदक्षइहागच्छ० ॥ २२॥ ब्रह्मेंद्रमध्येदुर्गांविष्णुंच ॥ तामग्निवर्णांसौभरिर्दुर्गात्रिष्टुप् ॥ दुर्गावाहने० ॥ ॐ तामग्निवर्णांतपसाज्वलंतींवैरोचनींकर्मफले षुजुष्टां ॥ दुर्गांदेवींशरणमहंप्रपद्येसुतरसितरसेनमः ॥ भूर्भुं० दुर्गायैन० दुर्गांआवा० ॥ भोदुर्गेइहागच्छइहतिष्ठपूजांगृहा णवरदाभव ॥ २३ ॥ इदंविष्णुर्मेधातिथिर्विष्णुर्गायत्री ॥ विष्णवावाहने० ॥ ॐ इदंविष्णुर्विचक्रमेत्रेधानिदधेपदं ॥ समू ळ्हमस्यपांसुरे ॥ भूर्भुं० विष्णवेन० विष्णुंआवाह० ॥ भोविष्णोइहा० ॥ २४ ॥ ब्रह्माग्निमध्येस्वधां ॥ उदीरतांशंखःस्वधा त्रिष्टुप् ॥ स्वधावाहनेवि० ॥ ॐ उदीरतामवरउत्परासउन्मध्यमाःपितरःसोम्यासः ॥ असुंयईयुरवृकाऋतज्ञास्तेनोवंतुपितरो हवेषु ॥ भूर्भुं० स्वधायैनमःस्वधांआवा० ॥ भोस्वधेइहाग० ॥ २५ ॥ ब्रह्मयममध्येमृत्युरोगान् ॥ परंमृत्योसंकुसुकोमृत्युरो गास्त्रिष्टुप् मृत्युरोगावाह० ॥ ॐ परंमृत्योअनुपरेहिपंथांयस्तेस्वइतरोदेवयानात् ॥ चक्षुष्मतेशृण्वतेतेब्रवीमिमानःप्रजांरी रिषोमोतवीरान् ॥ भूर्भुं० मृत्युरोगेभ्योनमः मृत्युरोगान्आ० ॥ भोमृत्युरोगाःइहागच्छतइहतिष्ठतपूजांगृह्णीतवरदाभवत ॥ २६ ॥ ब्रह्मनिर्ऋतिमध्येगणपतिं ॥ गणानांत्वाशौनकोगृत्समदोगणपतिर्जगती ॥ गणपत्यावाहने० ॥ ॐ गणानांत्वाग णपतिंहवामहेकविंकवीनामुपमश्रवस्तमं ॥ ज्येष्ठराजंब्रह्मणांब्रह्मणस्पतआनःशृण्वन्नूतिभिःसीदसादनं ॥ भूर्भुवःस्वःगणपत ये० गणपतिंआवा० ॥ भोगणपतेइहागच्छ० ॥ २७ ॥ ब्रह्मवरुणमध्येअपः ॥ शंनोदेवीःसिंधुद्वीपआपोगायत्री ॥ अबावा हने० ॥ ॐ शंनोदेवीरभिष्टयआपोभवंतुपीतये ॥ शंयोरभिस्रवंतुनः ॥ भूर्भुं० अद्भ्योनमःअपःआवा० भोआपःइहागच्छत इहतिष्ठत० ॥ २८ ॥ ब्रह्मवायुमध्येमरुतः ॥ मरुतोयस्यगोतमोमरुतोगायत्री ॥ मरुदावाहने० ॥ ॐ मरुतोयस्यहिक्षयेपा

थाद्विवोर्विमहसः ॥ ससुगोपातमोजनः ॥ भूर्भु० मरुद्भ्योन० मरुतःआवा० ॥ भोमरुतःइहागच्छत० ॥ २९ ॥ ब्रह्मणः पादमूलेकर्णिकाधःपृथिवीं ॥ स्योनापृथिविमेधातिथिर्भूमिर्गायत्री ॥ भूम्यावा० ॥ ॐ स्योनापृथिविभवानृक्षरानिवेशनी ॥ यच्छानःशर्मसप्रथः ॥ भूर्भु० भूम्यैन० भूमिंआवा० ॥ भोभूमेइहागच्छ० ॥ ३० ॥ तत्रैवगंगादिसर्वनद्यः ॥ इमंमेगंगेसिंधुक्षित्प्रैयमेधानद्योजगती ॥ गंगादिनद्यावाहनेवि० ॥ ॐ इमंमेगंगेयमुनेसरस्वतिशुतुद्रिस्तोमंसचतापरुष्ण्या ॥ असिक्न्यामरुद्वृधेवितस्तयार्जीकीयेशृणुह्यासुषोमया ॥ भूर्भु० गंगादिनदीभ्योन० गंगादिनदीःआवाह० भोगंगादिनद्यःइहागच्छतइह तिष्ठतपूजांगृह्णीतवरदाभवत ॥ ३१ ॥ तत्रैवसप्तसागराः ॥ धाम्नोधाम्नोवामदेवःसप्तसागराअष्टी ॥ सप्तसागरावाहनेविनियोगः ॥ ॐ धाम्नोधाम्नोराजन्नितोवरुणनोमुंच ॥ यदापोअघ्न्याइतिवरुणेतिशपामहेततोवरुणनोमुंच ॥ मयिवापोमोषधीर्हिंसीरतोविश्वव्यचाभूस्त्वेतोवरुणनोमुंच ॥ भूर्भु० सप्तसागरेभ्यो० सप्तसागरानावा० ॥ भोसप्तसागराःइहागच्छत० ॥३२॥ तदुपरिमेरवेनमःमेरुंआवा० ॥ सोमसमीपेगदायैनमःगदांआवा० ॥ ईशानसमीपेत्रिशूलायनमःत्रिशूलमावा० ॥ इंद्रसमीपेवज्राय० वज्रंआ० ॥ अग्निसमीपेशक्तये० शक्तिमावा० ॥ यमसमीपेदंडायनमः दंडमावा० ॥ निर्ऋतिसमीपेखड्गाय० खड्गंआवा० ॥ वरुणसमीपेपाशाय० पाशंआवा० ॥ वायुसमीपेअंकुशाय० अंकुशंआवा० ॥ तद्बाह्येउत्तरादिक्रमेण ॥ गौतमायनमः गौतमंआवा० ॥ भरद्वाजाय० भरद्वाजंआ० ॥ विश्वामित्राय० विश्वामित्रंआ० ॥ कश्यपायनमःकश्यपंआ० ॥ जमदग्नयेनमःजमदग्निंआ० ॥ वसिष्ठाय० वसिष्ठंआ० ॥ अत्रयेनमःअत्रिंआ० ॥ अरुंधत्यै० अरुंधतींआ० ॥ ततः पूर्वादिक्रमेणमातृः । ऐंद्र्यैन० ऐंद्रींआ० ॥ कौमार्यैन० कौमारींआ० ॥ ब्राह्म्यैनमःब्राह्मींआ० ॥ वाराह्यैन० वाराहींआ० ॥

चामुंडायै०चामुंडांआ०॥ वैष्णव्यैन० वैष्णवींआ०॥ माहेश्वर्यै० माहेश्वरींआ०॥ वैनायक्यैन० वैनायकींआ०॥ इतिसर्वतो भद्रदेवताः॥ लिंगतोभद्रेप्येताएवदेवताःस्थापयेत् ॥ केचिल्लिंगतोभद्रेपुनरन्यादेवताःस्थापयंतिताश्चोच्यंते ॥ पूर्वादिदिक्षु ॥ असितांगभैरवायनमः असितांगभैरवंआवा०॥ रुरुभैरवाय०रुरुभैरवंआ०॥ चंडभैरवाय०चंडभैरवंआ०॥ क्रोधभैरवायनमः क्रोधभैरवंआ० ॥ उन्मत्तभैरवाय० उन्मत्तभैरवंआ० ॥ कपालभैरवाय० कपालभैरवंआ० ॥ भीषणभैरवा० भीषणभैरवं आ० ॥ संहारभैरवा० संहारभैरवंआवाहयामि ॥ ( पुनःपूर्वादिषु ॥ भवाय. शर्वाय. ईशानाय. पशुपतये. रुद्राय. उग्राय. भीमाय. महते.॥ पुनः पूर्वादिषु॥ अनंताय. वासुकये. तक्षकाय. कुलिशाय. कर्कोटकाय. शंखपालाय. कंबलाय. अश्वतराय.॥ ईशानपूर्वाद्यंतरालेषु ॥ शूलिने. चंद्रमौलिने. वृषध्वजाय. त्रिलोचनाय. शक्तिधराय. महेश्वराय. शूलपाणये. ) इत्यावाह्य ॐ तदस्तुमित्रावरुणातदग्नेशंयोरस्मभ्यमिदमस्तुशस्तं ॥ अशीमहिगाधमुतप्रतिष्ठांनमोदिवेबृहतेसादनाय ॥ गृहावैप्रतिष्ठासू क्तंतत्प्रतिष्ठिततमयावाचाशंस्तव्यंतस्माद्यद्यपिदूरइवपशूँल्लभतेगृहानेवैनानाजिगमिषतिगृहाहिपशूनांप्रतिष्ठाप्रतिष्ठा॥ॐ नर्यप्र जांमेगोपाय॥ अमृतत्वायजीवसे॥ जातांजनिष्यमाणांच॥ अमृतेसत्यप्रतिष्ठितां॥ एताब्रह्मादिदेवताःसुप्रतिष्ठिताःसंतु॥ ॐ ब्र ह्मजज्ञानंप्रथमंपुरस्ताद्विसीमतःसुरुचोवेनआवः॥ सबुध्नियाउपमाअस्यविष्ठाःसतश्चयोनिमसतश्चविवः ॥ अनेनमंत्रेणपूजयेत् ॥

## ॥ १९५ ॥ अथपौराणमंडलदेवताः ॥

श्रीः ॥ त्वंवैचतुर्मुखोब्रह्मास्वर्गेलोकपितामहः ॥ आगच्छमंडलेचास्मिन्ममसर्वार्थसिद्धये ॥ १ ॥ मध्येब्रह्माणंआवाहयामि ॥ भोब्रह्मन्नस्मिन्मंडलेइहागच्छइहतिष्ठपूजांगृहाणसुप्रसन्नोवरदोभव ॥ क्षीरोदार्णवसंभूतंलक्ष्मीबंधुंनिशाकरं ॥ मंडलेस्थापया

म्यत्रसोमंसर्वार्थसिद्धये ॥ २ ॥ उत्तरस्यांसोमं० ॥ ईशानीपालकंश्रेष्ठंसर्वलोकभयंकरं ॥ मंडलेस्थापयामीहईशान्यांसर्वसिद्धये ॥ ३ ॥ ईशान्यामीशानं० ॥ सर्वलोकाधिपंश्रेष्ठंदेवर्षीणांचपालकं ॥ पूर्वदिक्पालकंदेवराजंवैस्थापयाम्यहं ॥ ४ ॥ पूर्वे इंद्रं० ॥ त्रिपादंमेषवाहंचत्रिशिखंचत्रिलोचनं ॥ आग्नेय्यांस्थापयाम्यत्रअग्निंपुरुषमुत्तमं ॥ ५ ॥ आग्नेय्यामग्निं ॥ अंतकः सर्वलोकानांधर्मराजइतिश्रुतः ॥ अतस्त्वांस्थापयाम्यत्रदक्षिणस्यांस्थिरोभव ॥ ६ ॥ दक्षिणस्यांयमं० ॥ नैर्ऋत्यांवसतिर्यस्यघोररूपीसदाहियः ॥ निर्ऋतिंस्थापयाम्यत्रनैर्ऋत्यांमंडलेशुभे ॥ ७ ॥ नैर्ऋत्यांनैर्ऋतिं० ॥ अपांपतिंपाशधरंयादसांपतिकं शुभं ॥ वरुणंस्थापयाम्यत्रवारुण्यांमंडलेशुभे ॥ ८ ॥ पश्चिमायांवरुणं० ॥ आशुगंसर्वबोधंचगंधवाहंसुशीतलं ॥ मंडलेस्थापयामीहवायव्यांवायुमुत्तमं ॥ ९ ॥ वायव्यांवायुं० ॥ ध्रुवोध्वरश्चसोमश्चआशुगश्चानिलोऽनलः ॥ प्रत्यूषश्चप्रभासश्चवस्वष्टकमिहस्थिरं ॥ १० ॥ वायुसोमयोर्मध्येवसून् ॥ त्रिनेत्ररुद्ररूपायत्रिजटायमहात्मने ॥ नमस्कृत्वास्थापयामिमंडलोपरिमध्यतः ॥ ११ ॥ सोमेशानयोर्मध्येरुद्रं० ॥ ' आदित्यंभास्करंचैवप्रभाकरदिवाकरौ ॥ सूर्यंग्रहपतिंब्रध्नंतेजोरूपधरंहरिं ॥ सप्ताश्वंदेवमूर्तिंचत्रिदैवत्यंक्रमेणच ॥ इत्यादिद्वादशादित्यान्मंडलेस्थापयाम्यहं ॥ १२ ॥ ईशानेंद्रयोर्मध्येद्वादशादित्यान् ॥ १२ ॥ अश्विनौदेववैद्यौचसर्गस्थित्यंतकारिणौ ॥ मंडलेस्थापयित्वातौपूजयामिसुसिद्धये ॥ १३ ॥ इंद्राग्न्योर्मध्येअश्विनौ० ॥ दैवे कर्मणिपित्र्येचयौमुख्यौसर्वदाशुभौ ॥ मंडलेस्थापयामीहसुखानुष्ठानसिद्धये ॥ १४ ॥ अग्नियमयोर्मध्येविश्वान्देवान्सपैतृकान् ॥ यदृच्छयापर्यटंतोयक्षराजामहीतले ॥ कौतुकंप्रेक्षितुंघोरामंडलेसंतुसुस्थिराः ॥ १५ ॥ यमनिर्ऋत्योर्मध्येयक्षान् ॥ ' अवंतीवासुकिश्चैवकालियोमणिभद्रकः ॥ शंखश्चशंखपालश्चकालकोटिधनंजयौ ॥ धृतराष्ट्रश्चनागेशाःस्वीकुर्वंतुममार्चनं ॥

मंडलेपूजयाम्यत्रसर्वारिष्टप्रशांतये ॥ १६ ॥ निर्ऋतिवरुणयोर्मध्येनागान् ॥ उर्वशीप्रमुखाःसर्वाःसर्वेशाःशक्रपूजिताः ॥ गंधर्वैश्चसदायांतुमंडलेस्मिन्सुशोभनाः ॥ १७ ॥ वरुणवाय्वोर्मध्येगंधर्वाप्सरसः ॥ त्र्यंबकंचत्रिपुरुषंनीलकंठंसदाशिवं ॥ मंडलेस्थापयामीहसुखानुष्ठानसिद्धये ॥ १८ ॥ ब्रह्मसोमयोर्मध्येरुद्रं० ॥ षडाननंचतुर्हस्तंस्कंदंशैलसुतात्मजं ॥ इहैवपूजयिष्यामिसर्वकामार्थसिद्धये ॥ १९ ॥ तत्रैवस्कंदं० ॥ शिवद्वारगतस्त्वंचशिववाहनमुत्तमं ॥ पार्वत्याःप्रीतिकृन्नित्यमिहागच्छस्थिरोभव ॥ २० ॥ तत्रैवनंदीश्वरं० ॥ अदितिर्देवमातात्वंदक्षपुत्रिसुशोभने ॥ मंडलेस्मिन्समागच्छयावत्पूजांस्थिराभव ॥२१॥ ब्रह्मेशानयोर्मध्येअदितिं० ॥ दक्षोसिसर्वकार्येषुमहान्यज्ञकरप्रियः ॥ ऋषीणांसर्वदादक्षमंडलेस्मिन्स्थिरोभव ॥ २२ ॥ तत्रैवदक्षं० ॥ तामग्निवर्णांज्वलंतींतपसासर्वदाशुभां ॥ भक्तानांवरदांनित्यंदुर्गामावाहयाम्यहं ॥ २३ ॥ तत्रैवब्रह्मेशानयोर्मध्येनवदुर्गां०॥ कृष्णायगोपिनाथायचक्रिणेमुरवैरिणे ॥ नमस्तुभ्यंजगद्धात्रेमंडलेस्मिन्स्थिरोभव ॥२४॥ ब्रह्मेशानयोर्मध्येविष्णवेनमःविष्णुं० ॥ त्वंस्वाहात्वंस्वधात्वंहिवषट्कारस्वरात्मिका ॥ अतस्त्वांपूजयिष्यामिमंडलेस्मिन्स्थिराभव ॥ २५॥ ब्रह्माग्न्योर्मध्येस्वधां ॥ मृत्युरोगानंतकस्यप्रेष्यान्प्राणहरान्क्षणात् ॥ मंडलेस्थापयामीहपूजार्थलोकनाशकान् ॥ २६ ॥ ब्रह्मयमयोर्मध्येमृत्युरोगान् ॥ कुंकुमाभंसदानंदंभक्तसंकटनाशनं ॥ चतुर्भुजंत्रिनेत्रंचमंडलेस्थापयाम्यहं ॥ २७ ॥ ब्रह्मनिर्ऋतिमध्येगणपतिं०॥ पावनाःसर्वलोकानांनिमग्नाःशुद्धिकारकाः ॥ सर्वपापहराःश्रेष्ठामंडलेस्थापयाम्यहं ॥ २८ ॥ ब्रह्मवरुणयोर्मध्येअपः ॥ सुगंधिनश्चशैत्याढ्यामंदमंदवहाःसदा ॥ तानहंस्थापयामीहमरुतोमंडलेशुभे ॥ २९ ॥ ब्रह्मवाय्वोर्मध्येमरुतः ॥ पृथिव्याधार्यतेविश्वंद्र्वाहंसागरैर्नगैः ॥ अतस्त्वांस्थापयामीहमंडलेब्रह्मणःपदे ॥ ३० ॥ ब्रह्मणःपादमूलेपृथ्वीं० ॥ गंगासिंधुसरस्वतीचय

मुनागोदावरीनर्मदाकावेरीशरयूमहेंद्रतनयाचर्मण्वतीवेदिका ॥ शिप्रावेत्रवतीमहासुरनदीख्याताचयागंडकीपूर्णाःपूर्णजलैः समुद्रसहिताआयांतुमेमंडले ॥ ३१ ॥ तत्रैवगंगादिसप्तनदीभ्योनमः ॥ समुद्रःसर्वतोयेषुश्रेष्ठोवैहरिवल्लभः ॥ मंडलेस्थापयामीहतन्नदीशंसुखाप्तये ॥ ३२ ॥ तत्रैवसप्तसमुद्राः ॥ ततोद्वारपालान्चतुर्दिक्षुस्थापयेत् ॥ तदुपरिमेरुंनाममंत्रेणावाहयेत् ॥ ( मेरवेनमः मंदारायनमः सह्याद्रिप० विंध्याद्रिप० द्रोणागिरि० हिमाचल० ब्रह्मगिरि० ) ॥ वाह्यपरिधौ ॥ सोमसमीपेगदायैनमःगदांआवाहया० ईशानसमीपेत्रिशूलायन० त्रिशूलं० इंद्रसमीपेवज्राय० वज्रं० अग्निसमीपेशक्तये० शक्तिं० यमसमीपेदंडाय० दंडं० निर्ऋतिसमीपेखड्गाय० खड्गं० वरुणसमीपेपाशाय० पाशं० वायुसमीपेअंकुशाय०अंकुशं० ॥ तद्बाह्ये ॥ उत्तरेगौतमाय० ईशान्येभरद्वाजाय० पूर्वेविश्वामित्राय० आग्नेय्यांकश्यपाय० दक्षिणेजमदग्नये० नैर्ऋत्यांवसिष्ठाय० पश्चिमायांअत्रये० वायव्यांअरुंधत्यै० ॥ तद्बाह्येपूर्वादिदिक्षु ॥ पूर्वेऐंद्र्यै० आग्नेय्यांकौमार्यै० दक्षिणेब्राह्म्यै० नैर्ऋत्यां वाराह्यै० पश्चिमायांचामुंडायै० वायव्यांवैष्णव्यै० उत्तरेमाहेश्वर्यै० ईशान्यांवैनायक्यै० ॥ असितांगभैरवायनमः रुरुभैरवाय० चंडभैरवाय० क्रोधभैरवाय० उन्मत्तभैरवाय० कपालभैरवाय० भीषणभैरवाय० संहारभैरवाय० संहारभैरवमावाहयासि ॥ इत्यावाह्य ॥ त्वंवैचतुर्मुखोब्रह्मास्वर्गेलोकपितामहः ॥ आगच्छमंडलेचास्मिन्ममसर्वार्थसिद्धये ॥ इति सर्वान्षोडशोपचारैःपूजयेत् ॥ इति पौराणमंडलदेवताः ॥ ॥ छ ॥ ॥छ॥ ॥ छ ॥

## ॥ १९६ ॥ अथमुख्यदेवतापूजनम् ॥

श्रीः ॥ देशकालौनिर्दिश्यश्रुति० अमुकव्रतोद्यापनांगत्वेनविहितंमुख्यदेवतास्थापनंपूजनंचकरिष्ये ॥ ततोमंडलमध्ये महीद्यौ

रितिभूमिंस्पृष्ट्वा ओषधयइतिधान्यराशिंकृत्वा आकलशेष्वितिकलशंसंस्थाप्यइमंमेइत्युदकेनापूर्य ॥ तत्रगंधद्वारामितिगंधं कांडात्कांडादितिदूर्वाः अश्वत्थेवइतिपल्लवान् याःफलिनीरितिफलं सहिरत्नानीतिपंचरत्नानि हिरण्यरूपइतिहिरण्यंचप्रक्षिप्य युवासुवासाइतिवस्त्रेणसूत्रेणवावेष्ट्यतत्रपूर्णादर्वीतिपूर्णपात्रंनिधाय तत्त्वायामीतिकलशेवरुणमावाह्यगंधाद्युपचारैरभ्यर्च्यकलशस्यमुखे० देवदानवसंवादे० इत्यादिभिःप्रार्थयेत् ॥ततस्तत्रसुवर्णप्रतिमायांअग्न्युत्तारणपूर्वकंव्रतोक्तदेवतायाःप्राणप्रतिष्ठांकृत्वातस्यांव्रतोक्तमंत्रेणदेवतामावाह्यपुरुषसूक्तेनषोडशोपचारैःपूजयेत् अनंतरंतांरात्रिंतत्तद्व्रतकथापुराणगीतादिनानयेत् ॥छ॥

## ॥ १९७ ॥ अथव्रतोद्यापनहोमः ॥

श्रीः ॥ आचार्यःप्रातर्नित्यविधिंनिर्वर्त्यस्थापितदेवताःपूजयेत् ॥ देवतास्थापनात्पश्चिमतोहोमानुसारेण स्थंडिलंनिर्मायतत्रस्वशाखोक्तविधिनास्थंडिलसंस्कारपूर्वकंबलवर्धननामकमग्निंप्रतिष्ठाप्यध्यात्वान्वादध्यात् ॥ क्रियमाणेअमुकव्रतोद्यापनहोमेदेवतापरिग्रहार्थमन्वाधानंकरिष्येअस्मिन्नन्वाहितेग्नावित्यादिचक्षुषीआज्येनेत्यंतमुक्त्वा ॥ अत्रप्रधानं ॥ अमुकदेवतांअमुकमंत्रेणअमुकद्रव्येणअमुकसंख्याकाहुतिभिः ॥ आवरणदेवताइंद्राद्यष्टौलोकपालांश्चएकैकयाहुत्यातैरेवद्रव्यैर्यक्ष्ये ॥ ब्रह्मादिमंडलदेवताश्चएकैकयाहुत्याआज्येनयक्ष्ये ॥ शेषेणस्विष्टकृतमित्यादिचक्षुष्यंतेकृतेयजमानःइदमुपकल्पितहवनीयद्रव्यंयायायक्ष्यमाणदेवताभ्यःपरित्यक्तंनममेत्युद्देशत्यागौकुर्यात् ॥ ततःसर्त्विगाचार्यःप्रधानहोमंकृत्वाब्रह्मादिमंडलदेवतानांतत्तन्मंत्रैर्नाममंत्रैर्वाज्यहोमंकुर्यात् ॥ तत्रक्रमः ॥ आदौप्रणवःसर्वत्र ॥ ॐ ब्रह्मणेनमःस्वाहा ॥ सोमायनमः० ॥ ईशानायनमः०॥

---

१ अनेकव्रतानांसमुच्चयेनकरणपक्षेशिवव्रतार्थेविष्णुव्रतार्थेचपृथक्पृथक्स्थंडिलंकृत्वातत्रतत्तद्धोमःकार्यः ।

इंद्रायन० अग्नयेन० ॥ यमायन० ॥ निर्ऋतयेन० ॥ वरुणायन० ॥ वायवेन० ॥ अष्टवसुभ्योन० ॥ एकादशरुद्रेभ्यो नमः० ॥ द्वादशादित्येभ्योन० ॥ अश्विभ्यांन० ॥ विश्वेभ्योदेवेभ्योन० ॥ सप्तयक्षेभ्योन० ॥ सर्पेभ्योनमःस्वा० ॥ गंधर्वाप्सरोभ्योन० ॥ स्कंदायनमः० ॥ नंदीश्वरायनमः० ॥ शूलायनमः० ॥ महाकालायन० ॥ दक्षायन० ॥ दुर्गायैनमःस्वा० ॥ विष्णवेन० ॥ स्वधायैन० ॥ मृत्युरोगेभ्योन० ॥ गणपतयेन० ॥ अद्भ्योन० ॥ मरुद्भ्योन० ॥ भूम्यैन० ॥ गंगादिसर्वनदीभ्योन० ॥ सप्तसागरेभ्योन० ॥ मेरवेन० ॥ गदायैन० ॥ त्रिशूलायन० ॥ वज्रायन० ॥ शक्तयेन० ॥ दंडायनमः० ॥ खड्गायन० ॥ पाशायन० ॥ अंकुशायन० ॥ गौतमायन० ॥ भरद्वाजायन० ॥ विश्वामित्रायनमः० ॥ कश्यपायन० ॥ जमदग्नयेन० ॥ वसिष्ठायन० ॥ अत्रयेन० ॥ अरुंधत्यैन० ॥ ऐंद्र्यैन० ॥ कौमार्यैन० ॥ ब्राह्म्यैनमःस्वा० ॥ वाराह्यैन० ॥ चामुंडायैन० ॥ वैष्णव्यैन० ॥ माहेश्वर्यैनमः० ॥ वैनायक्यैनमःस्वाहा ॥ इतोलिंगतोभद्रदेवताः ॥ असितांगभैरवायनमःस्वाहा ॥ रुरुभैरवायनमः० ॥ चंडभैरवायन० ॥ क्रोधभैरवायनमः० ॥ उन्मत्तभैरवायन० ॥ कपालभैरवायन० ॥ भीषणभैरवायन० ॥ संहारभैरवायनमःस्वाहा ॥ स्विष्टकृदादिप्रायश्चित्तहोमांतेयजमानान्वारब्धआचार्योधामंतइतिपूर्णाहुतिंहुत्वाअद्भ्यइदं० ॥ ततोहोमशेषंसमाप्यस्थापितकलशोदकेनसकुटुंबंयजमानंसमुद्रज्येष्ठाइत्यादिभिर्व्रतदेवताकमंत्रैश्चाभिषिंचेत् ॥ ततोयजमानःआचार्यंसंपूज्यतस्मैसवत्सांगांदत्वाऋत्विग्भ्यश्चयथाशक्तिदक्षिणांदत्वाश्रेयःस्वीकृत्यस्थापितदेवतानामुत्तरपूजांकृत्वाग्निंसंपूज्य देवतापीठंसदक्षिणमाचार्यायदत्वायथाशक्तिब्राह्मणान्भोजयित्वातेभ्योभूयसींदक्षिणांदत्वाब्राह्मणैर्व्रतंसंपूर्णतांवाचयित्वाविष्णुंस्मृत्वाकर्मेश्वरार्पणंकृत्वासुहृद्युतोभुंजीत ॥ इतिसर्वसामान्यव्रतोद्यापनप्रयोगः ॥

## ॥ १९८ ॥ अथशुक्लैकादशीव्रतोद्यापनम् ॥

श्रीः ॥ देशकालौसंकीर्त्यममअखिलपापक्षयपूर्वकंधर्मार्थकाममोक्षचतुर्विधपुरुषार्थसिद्धिद्वाराश्रीपरमे० अमुककामनयावाम याचरितशुक्लैकादशीव्रतोद्यापनंकरिष्ये ॥ तदंगविहितंगणेशपूजनाद्याचार्यवरणांतंकृत्वाआचार्यःपूर्वोक्तप्रकारेणसर्वतोभद्रे ब्रह्मादिदेवताआवाह्यसंपूज्यतदुपरिअक्षतपुंजेकेशवादिद्वादशनामांकितं अक्षतपूर्णताम्रमयंतंडुलपूर्णराजतपूर्णपात्रसहि तंकलशंप्रतिष्ठाप्यतत्रअष्टदलपद्मेदेवताआवाहयेत् ॥ प्रणवस्यपरब्रह्मऋषिः परमात्मादेवता दैवीगायत्रीछंदः व्याहृतीनांक्र मेणजमदग्निभरद्वाजभृगवऋषयः अग्निवायुसूर्यादेवताः दैवीगायत्रीदैव्युष्णिक्दैवीबृहत्यश्छंदांसि पुरुषावाहनेविनियोगः ॥ तत्रकर्णिकायाम् भूःपुरुषंआवाहयामि ॥ भुवःपुरुषंआ० ॥ स्वःपुरुषंआ० ॥ भूर्भुवःस्वःपुरुषंआवाहयामि ॥ ततःसुवर्णप्रति मायांसहस्रशीर्षानारायणःपुरुषोनुष्टुप् ॥ पुरुषावाहने० ॥ सहस्रशीर्षा० ऋक् १ ॥ लक्ष्मीयुतंपुरुषंमध्येआवाहयामिस्थाप यामिपूजयामिनमः ॥ परितः अग्निं इंद्रं प्रजापतिं विश्वान्देवान् ब्रह्माणं वसुदेवं रामं श्रियं नाममंत्रेणआवाह्य ॥ ततः पूर्वदक्षिणपश्चिमोत्तरदलाभ्यंतरेषु स्त्रीचतुःसहस्रसहितांरुक्मिणीं १ स्त्रीचतुःसहस्रसहितांसत्यभामां २ स्त्रीचतुःसहस्रस हितांजांबवतीं ३ स्त्रीचतुःसहस्रसहितांकालिंदीं ४ चावाह्य ॥ ततआग्नेयादिकोणेषु ॥ शंखं चक्रं गदां पद्मं आवाह्य॥ पुरतः ॥ सामध्वनिशरीरस्त्वंवाहनंपरमेष्ठिनः॥ विषपापहरोनित्यमतःशांतिंप्रयच्छमे ॥ इतिगरुडंआवाह्य ॥ परितः पूर्वादिक्रमेणइं द्राद्यष्टौलोकपालान्तत्तन्मंत्रैर्नाममंत्रैर्वावाह्य तदस्तुमित्रा० गृहावै० इतिप्रतिष्ठाप्यपूर्वोक्तप्रकारेणपूजयेत् ॥ पुष्पानंतरअं गपूजांकुर्यात् ॥ दामोदरायनमः पादौपूजयामिमाधवाय० जानुनीपू०कामपतये० गुह्यंपू०वामनाय०कटिंपू०पद्मनाभाय०

नाभिंपू० विश्वमूर्तये० उदरंपू० ज्ञानगम्याय० हृदयंपू० श्रीकंठाय० कंठंपू० सहस्रबाहवे० बाहूपू० योगिने० चक्षुषीपू० उरगाय० ललाटं० नाकसुरेश्वराय० नासांपू० श्रवणेशाय० श्रवणेपू० सर्वकामदाय० शिखांपू० सहस्रशीर्ष्णे० शिरःपू० सर्वरूपिणे० सर्वांगंपूजयामि ॥ धूपं० दीपं नमस्कारोत्तरंविशेषार्घ्यंदद्यात् ॥ नारायणजगन्नाथलक्ष्मीकांतदयानिधे ॥ गृहाणार्घ्यंमयादत्तंव्रतसंपूर्तिहेतवेइति ॥ ततःपरेहनिप्रातराचार्यआवाहितदेवताःसंपूज्यकर्मसंकल्प्यान्वादध्यात् ॥ चक्षुषी आज्येनेत्यंतेत्रप्रधानंपुरुषंपुरुषसूक्तेनप्रत्यृचंआज्येनअमुकावृत्तिसंख्यया अग्निंइंद्रंप्रजापतिंविश्वान्देवान्ब्रह्माणंचाज्येनएकवारं वसुदेवंरामंश्रियंविष्णुंनाममंत्रेणघृताक्तपायसद्रव्येणएकवारं पुनःविष्णुंविष्णोर्नुकमितिषण्मंत्रैःप्रत्यृचंघृताक्तपायसद्रव्येणअग्निंवायुंसूर्यंप्रजापतिंचएकवारंघृताक्तपायसद्रव्येण केशवादिदामोदरांतद्वादशदेवताःनाममंत्रैःएकवारंपायसद्रव्येण स्त्रीचतुःसहस्रसहितांरुक्मिणीं स्त्रीचतुःसहस्रसहितांसत्यभामां स्त्रीचतुःसहस्रसहितांजांबवतीं स्त्रीचतुःसहस्रसहितांकालिंदीं शंखंचक्रंगदांपद्मंगरुडंइंद्राद्यष्टौलोकपालान्ब्रह्मादिमंडलदेवताश्चएकैकयाज्याहुत्यायक्ष्ये ॥ शेषेणस्विष्टकृतमित्यादि आज्यभागांतंकृत्वाप्रधानदेवताहोमयेत् ॥ ॐ सहस्रशीर्षा० ऋक् १६॥ अग्नये० इंद्राय० प्रजापतये० विश्वेभ्योदेवेभ्यः० ब्रह्मणेइत्याज्येन ॥ अथघृताक्तपायसेन वसुदेवाय० रामाय० श्रियै० विष्णवे० विष्णोर्नुकं तदस्यप्रियं प्रतद्विष्णुरितितिसृणांदीर्घतमाविष्णुस्त्रिष्टुप् हवनेवि० ॥ ॐ विष्णोर्नुकं० तदस्यप्रियं० प्रतद्विष्णु० ॥ परोमात्रयाविचक्रमेत्रिर्देवइतितिसृणांवसिष्ठोविष्णुस्त्रिष्टुप् हवनेवि० ॥ ॐ परोमात्रया० विचक्रमे० त्रिर्देवः० ॥ ॐ भूःस्वाहा ॥ भुवःस्वहा ॥ स्वःस्वाहा ॥ भूर्भुवःस्वःस्वाहा ॥ अथकेवलंपायसेन ॥ ॐ केशवायनमःस्वाहा ॥ प्रणवःस्वाहाकारश्चसर्वत्र ॥ नारायणाय० माधवाय०

गोविंदाय० विष्णवे० मधुसूदनाय० त्रिविक्रमाय० वामनाय० श्रीधराय० हृषीकेशाय० पद्मनाभाय० दामोदराय० ॥ अथकेवलाज्येनस्त्रीचतुःसहस्रसहितायैरुक्मिण्यै० स्त्रीचतुःस० सत्यभामायै० स्त्रीचतुःस० जांबवत्यैन० स्त्रीचतुःसहस्रसहितायैकालिंद्यै० शंखाय० चक्राय० गदायै० पद्माय० गरुडाय० ॥ इंद्राय० अग्नये० यमाय० निर्ऋतये० वरुणाय० वायवे० सोमाय० ईशानाय० तत्तन्मंत्रैर्वाहुत्वाततोब्रह्मादिमंडलदेवतास्तत्तन्मंत्रैर्नाममंत्रैर्वाकेवलाज्येनहोमयेत् ॥ ततःस्विष्टकृतं ॥ ततोयजमानोदेवायप्रापणंनिवेदयेत् ॥ प्रापणशब्देनहविःपदार्थाःपक्वान्नादयश्च ॥ त्वामेकमाद्यंपुरुषंपुराणंनारायणंविश्वसृजंयजामः ॥ त्वय्यैषभागोविहितोविधेयोगृहाणहव्यंजगतामधीशइतिनिवेद्यतिष्ठेत् ॥ ततःअग्निंत्रिवारंचतुर्वारंवाप्रदक्षिणीकृत्यभिंधिविश्वाअपद्विषइतिधरण्यांजानुनीनिपात्यध्रुवसूक्तंपुरुषसूक्तंचजप्त्वाअष्टौपदानिप्रतिदिशंगच्छेत् एभिर्मंत्रैः ॥ कृष्णायवासुदेवायहरयेपरमात्मने ॥ शरण्यायाप्रमेयायगोविंदायनमोनमः ॥ नमःस्थूलायसूक्ष्मायव्यापकाव्यापकायच ॥ अनंतायजगद्धात्रेब्रह्मणेनंतमूर्तये ॥ अव्यक्तायाऽखिलेशायचिद्रूपायगुणात्मने ॥ नमोमूर्तायसिद्धायपरायपरमात्मने ॥ देवदेवायवंद्यायपरायपरमेष्ठिने ॥ कर्त्रेविश्वस्यगोप्त्रेचतत्संहर्त्रेचतेनमः ॥ अथदेवायनिवेदितप्रापणमानीयमूर्ध्निकृत्वा ॥ केवैष्णवाःकेवैष्णवाःकेवैष्णवाइतिउच्चैर्वदेत् ॥ ततःसमानाःप्रतिवदेयुः ॥ वयंवैष्णवाः वयंवैष्णवाः इतित्रिः ॥ ततस्तेभ्यःसमानेभ्योहविर्दत्वास्वयं ॐ नमोभगवतेवासुदेवायेतिमंत्रेणइदममृतमहंप्राश्नामिइतिप्राश्य ॥ आचम्यप्राणानायम्ययजमानःआचार्योवासिद्धयेस्वाहेतिअग्नौआज्यंजुहुयात् ॥ ततःयतइंद्रभयामहेइत्यनेनआत्मानमभिमंत्रयेत् ॥ ततआचार्यःशुल्वहरणंकृत्वाप्रायश्चित्तादिहोमशेषंसमापयेत् ॥ ततोयजमानःसांगतासिद्ध्यर्थेआचार्यादीन्विध्युक्तप्रकारेणसं

पूज्यदक्षिणादिभिःप्रतोष्यआचार्यायश्वेतांसवत्सांसालंकारांगांदद्यात् ॥ ततोयजमानःद्वादशसंख्याकान्ब्राह्मणान्केशवादि द्वादशदेवतास्वरूपान्विभाव्य केशवादिद्वादशनामभिःयथाविभवंसंपूज्यतेभ्यःपक्वान्नपूरितान्वस्त्रतांबूलदक्षिणादिसहिता न्द्वादशकलशान् केशवादिद्वादशनामांकितान्दद्यात्तत्रमंत्रः ॥ पक्वान्नपूरितंकुंभंदक्षिणावस्त्रसंयुतं ॥ ददामिद्विजवर्यायदे वोनःप्रीयतामिति ॥ देवपदस्थानेकेशवादिनाम्नांऊहःकार्यः ॥ ततःपीठदानम् ॥ ततआचार्यःपात्रांतरेउद्धृतकलशोदकेनसप त्नीकंयजमानंसमुद्रज्येष्ठाइत्यादिवैदिकैर्मंत्रैःसुरास्त्वामित्यादिपौराणिकैर्मंत्रैर्वैष्णवसूक्तैश्चाभिषिंचेत् ॥ ततःस्नातोयजमानः अग्निंसंपूज्य यस्यस्मृत्या० मंत्रहीनमितिक्षमाप्य अभ्यारमिदद्वयो० यांतुदेवगणाःसर्वेइतिविसर्जयेत् ॥ कृतस्यकर्मणःसांग तासिद्ध्यर्थंसदन्नेनदक्षिणादिनाब्राह्मणान्प्रतोष्यआशिषोगृहीत्वाव्रतसंपूर्णतांवाचयेत् ॥ जपच्छिद्रंतपश्छिद्रंयच्छिद्रंव्रतकर्म णि ॥ सर्वंभवतुमेऽच्छिद्रंब्राह्मणानांप्रसादतः ॥ इतिसंप्रार्थ्य ॥ तेऽच्छिद्रंभवत्वितिवदेयुः ॥ ततस्तान्नमस्कृत्यइष्टजनैःसो त्सवोभुंजीत ॥ इतिशुक्लैकादशीव्रतोद्यापनम् ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥

## ॥ १९९ ॥ अथकृष्णैकादश्युद्यापनम् ॥

श्रीः ॥ यजमानःदेशकालौसंकीर्त्यआत्मनःपापक्षयपूर्वकंएकविंशतिपुरुषानुद्धर्तुकामनयालक्ष्मीनारायणप्रीतयेचआचरितस्य कृष्णैकादशीव्रतस्यसांगतासिद्ध्यर्थंकृष्णैकादशीव्रतोद्यापनंकरिष्येइतिसंकल्प्य॥ पूर्वोक्तप्रकारेणगणेशपूजामारभ्यआचार्यवर णांतंकर्मकुर्यात् ॥ ततआचार्यःपूर्वोक्तप्रकारेणसर्वतोभद्रेब्रह्मादिदेवताआवाह्यसंपूज्यतदुपरिसंकर्षणादिद्वादशनामांकितंति लपूर्णराजतपूर्णपात्रयुतंकलशंप्रतिष्ठाप्यतत्रअष्टदलंविलिख्यकर्णिकायां ॥ भूःपुरुषमित्याद्यावाह्यमध्येसहस्रशीर्षेतिसौवर्णालि

क्ष्मीनारायणप्रतिमामावाह्य ॥ ततःपूर्वादिदिक्षुप्रत्येकंस्त्रीचतुःसहस्रसहितांरुक्मिणींसत्यभामांजांबवतींकालिंदींचावाह्य ॥ ततःआग्नेयादिविदिक्षुगणपतिंदुर्गांक्षेत्राधिपतिंवास्तोष्पतिंचावाह्य ॥ पुनःपूर्वादिदिक्षुब्रह्मजज्ञानमितिब्रह्माणंविष्णोर्नुक मितिविष्णुंबलभद्रम् प्रद्युम्नं त्र्यंबकमितित्र्यंबकम् वसुदेवं रामं अनिरुद्धं वामभागे श्रियं पुरतः राजतंगरुडं ॥ पुनःआग्नेयादिकोणेषु शंखं चक्रं गदां पद्मं ॥ पुनःपूर्वादिक्रमेण विमलां उत्कर्षिणीं ज्ञानां क्रियां योगां प्रह्वां सत्यां ईशा नां पृष्ठभागे अनुग्रहाम् ॥ पुनः पूर्वादिक्रमेण इंद्राद्यष्टौलोकपालान् तत्तन्मंत्रैर्नाममंत्रैर्वाआवाह्यपूर्वोक्तप्रकारेणषोडशोप चारैःसंपूज्य पुराणश्रवणादिनारात्रिंनिनयेत् ॥ प्रातःपुनःपीठदेवताःसंपूज्य पूर्वोक्तप्रकारेणअग्निंप्रतिष्ठाप्यअन्वादध्यात् ॥ अत्रप्रधानम् ॥ संकर्षणादिश्रीकृष्णांतद्वादशदेवताःघृताक्तपायसेनएकैकयाहुत्यापुरुषंविष्णुंअष्टोत्तरसहस्रसंख्याकघृताक्तति लाहुतिभिःअष्टोत्तरशतसंख्याभिर्वा अग्निं वायुं सूर्यं प्रजापतिं प्रत्येकंस्त्रीचतुःसहस्रसहितांरुक्मिणींसत्यभामांजांबवतींकालिं दींएकवारंपायसेन वसुदेवंरामंश्रियंविष्णुंविष्णोर्नुकमितिषण्मंत्रैःप्रत्यृचंपायसेन गणपतिंदुर्गांक्षेत्राधिपतिंवास्तोष्पतिंब्रह्मा णंबलभद्रंप्रद्युम्नंत्र्यंबकंअनिरुद्धंगरुडंशंखंचक्रंगदांपद्मंविमलाद्याअनुग्रहांतादेवताःइंद्राद्यष्टौलोकपालान् ब्रह्मादिमंडलदेवता श्चैकैकयाज्याहुत्यायक्ष्ये ॥ शेषेणस्विष्टकृतमित्यादि आज्यभागांतंकृत्वाप्रधानदेवताहोमयेत् ॥ ॐ संकर्षणायनमःस्वाहा वासुदेवाय० प्रद्युम्नाय० अनिरुद्धाय० पुरुषोत्तमाय० अधोक्षजाय० नारसिंहाय० अच्युताय० जनार्दनाय० उपेंद्राय० हरये० श्रीकृष्णाय० घृताक्तपायसेनएकवारं ॥ सहस्रशीर्षा० घृताक्ततिलैः ॐ भूःस्वाहा भुवःस्वाहा स्वःस्वहा भूर्भुवःस्वः स्वाहा ॥ प्रत्येकंस्त्रीचतुःसहस्रसहितायैरुक्मिण्यै० सत्यभामायै० जांबवत्यै०कालिंद्यै० वसुदेवाय० रामाय० श्रियै० वि

ष्णोर्नुवं:० तदस्यप्रि० प्रतद्विष्णु० परोमात्रया० विचक्रमे० त्रिर्देवः० केवलपायसेन० ॥ अथाज्येन गणपतये० दुर्गायै० क्षेत्राधिपतये० वास्तोष्पतये० तत्तन्मंत्रैर्वा० ब्रह्मणे० वलभद्राय० प्रद्युम्नाय० त्र्यंबकाय० अनिरुद्धाय० गरुडाय० शंखाय० चक्राय० गदायै० पद्माय० विमलायै० उत्कर्षिण्यै० ज्ञानायै० क्रियायै० योगायै० प्रह्वायै० सत्यायै० ईशानायै० अनुग्रहायै० इंद्रायेत्यादिलोकपालेभ्यः ब्रह्मादिमंडलदेवताभ्यश्च हुत्वाततःस्विष्टकृतंहुत्वाप्रायश्चित्तहोमांतंकर्मनिर्वर्त्य॥ आचार्यायकृष्णांगांदत्वाद्वादशब्राह्मणान्संकर्षणादिकृष्णांतद्वादशनामभिःसंपूज्यतेभ्यः दक्षिणादियुतान्तिलपूर्णान्संकर्षणादिद्वादशनामांकितान्कलशान्दद्यात् पीठंदत्वासदन्नेनब्राह्मणान्यथाविभवंसंभोज्यदक्षिणादिभिःप्रतोष्यव्रतसंपूर्णतांवाचयित्वाआशिषोगृहीत्वाइष्टजनैःसहभुंजीत ॥ इतिकृष्णैकादशी ॥ ॥ छ ॥ ॥ छ ॥

## ॥ २०० ॥ अथहरितालिकाव्रतम् ॥

श्रीः ॥ भाद्रतृतीयायांतिथ्याद्युल्लिख्यममपत्न्यासमस्तपापक्षयपूर्वकसप्तजन्मसौभाग्यादिविविधभोगप्राप्तिद्वाराउमामहेश्वरप्रीत्यर्थंआचरितहरितालिकाव्रतसंपूर्णफलावाप्तयेतदुद्यापनंकरिष्ये ॥ तदंगगणपतिपूजनादिकृत्वाचार्यंवृणुयात् ॥ ततोवृताचार्यःउक्तविधिनालिंगतोभद्रेद्रोणपरिमितव्रीहिस्थकलशेरौप्यप्रतिमायांत्र्यंबकंयजामहइतिशिवं सुवर्णप्रतिमायांगौरीर्मिमायेतिगौरींपुरतश्चरौप्यमय्यांऋषभंमाइतिवृषभंसंस्थाप्यषोडशोपचारैःपूजयेत् ॥ तत्रमंत्रः ॥ मंदारमालाकुलितालकायैकपालमालांकितशेखराय ॥ दिव्यांबरायैचदिगंबरायनमःशिवायैचनमःशिवाय ॥ तन्मंत्रैर्वा ॥ ततःप्रार्थयेत् ॥ नमःशिवायसांबायपंचवक्रायशूलिने ॥ नंदिभृंगिमहाकालगणयुक्तायशंभवे ॥ शिवायैहरकांतायैप्रकृत्यैसृष्टिहेतवे ॥ नमस्तेब्रह्मरूपिण्यै

जगद्धात्र्यैनमोनमः ॥ येनकामेनदेवित्वंपूजितासिमहेश्वरि ॥ तंपूर्णंकुरुमेकामंसौभाग्यंचप्रयच्छमे ॥ इतिप्रार्थ्यततःसुवासिनीःसंपूज्यरात्रिंनिनयेत् ॥ प्रातरावाहितदेवताःसंपूज्याग्निंप्रतिष्ठाप्यान्वादध्यात् ॥ अत्रप्रधानं उमांमहेश्वरंचावाहनमंत्रैः प्रत्येकंप्रतिद्रव्यमष्टोत्तरशत १०८ संख्याकाभिः तिल १ यवा २ ज्या ३ हुतिभिः ब्रह्मादिमंडलदेवताःपरिवारदेवताश्चैकैकयाज्याहुत्यायक्ष्येशेषेणेतिआवाहनोक्तमंत्रैर्होमांतेस्विष्टकृदादिहोमशेषंसमाप्यसंपूजिताचार्यायगांदत्वा षोडशाष्टौवायुग्मानियथाविभवंसंपूज्यसौभाग्यद्रव्यवस्त्रदक्षिणायुतानिषोडशशूर्पवायनानि ॥ सौभाग्यारोग्यकामाहंसर्वसंपत्समृद्धये ॥ गौरीगिरीशतुष्ट्यर्थंवायनंतेददाम्यहं॥इतिदत्वाद्विजान्संपूज्यतेषामाशिषोगृहीत्वाकर्मेश्वरार्पणंकुर्यात्॥इतिहरितालिकाव्रतम्॥

## ॥ २०१ ॥ अथपरशुरामजयंतीव्रतम् ॥

श्रीः ॥ वैशाखशुक्लतृतीयायांनिशाद्ययामव्यापिन्यांतिथ्यादिसंकीर्त्यअखिलपापक्षयपूर्वकंचतुर्विधपुरुषार्थसिद्धिद्वाराश्रीपरमेश्वरप्रीत्यर्थंआचरितपरशुरामजयंतीव्रतोद्यापनंकरिष्येइतिसंकल्प्य॥ वृताचार्यःसर्वतोभद्रस्थकलशेहैमंपरशुरामंविष्णोर्नुकमितिमंत्रेणसंपूज्यरात्रौजागरणंकृत्वा ॥ प्रातरग्निंप्रतिष्ठाप्यपरशुरामंघृताक्तपायसद्रव्येणअष्टोत्तरशतसंख्याकाहुतिभिःब्रह्मादिमंडलदेवताश्चएकैकयाज्याहुत्यायक्ष्ये ॥ ततःपीठंगांचदत्वाब्राह्मणान्भोजयेत् ॥ इतिपरशुरामजंयंती ॥ ॥ छ ॥

## ॥ २०२ अथसंकष्टचतुर्थीव्रतम् ॥

श्रीः ॥ मासपक्षाद्युल्लिख्यविद्याधनपुत्रारोग्यमुक्तिसंकटनाशकामेनस्त्रीभर्त्रादिकामनयाचरितसंकष्टीव्रतोद्यापनंकरिष्ये॥वृता

चार्यःउक्तप्रकारेणसर्वतोभद्रस्थकलशेहैमंगणेशंप्रतिष्ठाप्यपूजयेत् ॥ अथध्यानम् ॥ लंबोदरंचतुर्बाहुंत्रिनेत्रंरक्तवर्णकम् ॥ नानारत्नैःसुवेषाढ्यंप्रसन्नास्यंविचिंतये ॥ आवाहनंगणेशायआसनंविघ्ननाशिने ॥ पाद्यंलंबोदरायेतिअर्घ्यंचंद्रार्धधारिणे ॥ विश्वप्रियायाचमनंस्नानंचब्रह्मचारिणे ॥ वस्त्रंचशूर्पकर्णायउपवीतंकुजायच ॥ चंदनंरुद्रपुत्रायपुष्पंचगुणशालिने ॥ विकटायेतिधूपंचदीपंरुद्रप्रियायच ॥ नैवेद्यंविघ्ननाशायतांबूलंसिद्धिदायच ॥ फलंसंकष्टनाशायएकदंतायदक्षिणाम् ॥ नीराजनंवामनायप्रदक्षिणांहरसूनवे ॥ पुष्पांजलिंकुमारायनमोविद्याधरायच ॥ ततःशूर्पंपायससंपूर्णंरक्तवस्त्रेणवेष्टितं गणेशायनिवेदयेत् ॥ ततश्चंद्रायार्घ्यं ॥ तदानींपंचम्यांवाहोमंकुर्यात् ॥ प्रधानंगणपतिंगणानांत्वेतिमंत्रेणतद्गायत्र्यावादूर्वा १ रक्ताक्षत २ आज्य ३ मोदक ४ पायस ५ द्रव्यैः केवलमोदकैर्वा ॥ प्रतिद्रव्यंअष्टोत्तरसहस्रमष्टोत्तरशतमष्टाविंशतिर्वातत्संख्याकाहुतिभिर्यक्ष्ये ॥ ब्रह्मादिदेवताश्चैकैकयाज्याहुत्या एवंहोमंसमाप्य ॥ एकविंशतिब्राह्मणानेकविंशतिनामभिःवस्त्रादिनापूज्यपक्वान्नैःसंतर्पयेत् ॥ गणंजयः गणपतिः हेरंबः धरणीधरः महागणतिः यक्षेश्वरः क्षिप्रप्रसादनः अमोघसिद्धिः अमृतः मंत्रः चिंतामणिः निधिः सुमंगलः बीजं आशापूरकः वरदः शिवः काश्यपः नंदनः वाचांसिद्धिः ढौंढिनायकः ॥ ततःआचार्यायशूर्पस्थैकविंशतिमोदकवायनंरक्तवस्त्रवेष्टितंदद्यात् ॥ मंत्रः ॥ विप्रवर्यनमस्तुभ्यंमोदकान्वैददाम्यहं ॥ आपदुद्धरणार्थायगृहाणद्विजसत्तम ॥ गणेशंप्रार्थयेत् ॥ अबुद्धमतिरिक्तंवाद्रव्यहीनंमयाकृतं ॥ तत्सर्वंपूर्णतांयातुविघ्नराजनमोस्तुते ॥ ततोगांसोपस्करंपीठंचआचार्यायदत्वाआशिषोगृहीत्वाइष्टजनैःसहभुंजीत ॥ इतिसंकष्टचतुर्थीव्रतम् ॥ ॥ छ ॥ ॥ छ ॥

## ॥ २०३ ॥ अथशुक्लचतुर्थ्यांविनायकव्रतम् ॥

श्रीः ॥ गणपतिर्देवता ॥ सुवर्णप्रतिमा ॥ गणानांत्वेतिमंत्रः ॥ ॐ विनायकायनमः इतिनाममंत्रोवा ॥ दूर्वा १ पायस २ लड्डुका ३ हवनद्रव्याणि ॥ होमांतेएकविंशतिब्राह्मणपूजनं ॥ इतिशुक्लचतुर्थ्यांविनायकव्रतविधिः ॥ ॥ ६ ॥

## ॥ २०४ ॥ अथऋषिपंचमीव्रतम् ॥

श्रीः ॥ भाद्रपदशुक्लपंचम्यांऋषिपंचमीव्रतम् ॥ मध्याह्नव्यापिन्यांदिनद्वयेतद्व्याप्तावव्याप्तौवापूर्वविद्धायांकार्यम् ॥ नद्यादौ प्रातःदंतधावनपूर्वकंस्नात्वा ॥ ममज्ञानतोज्ञानतोवारजस्वलावस्थायांकृतसंपर्कजनितदुर्योनित्वदोषपरिहारद्वाराशुभफलप्राप्त्यर्थंआचरितऋषिपंचमीव्रतोद्यापनंकरिष्ये ॥ वृताचार्यःसर्वतोभद्रेसप्तकलशेषुएकस्मिन्वाहैमीःअरुंधतीसहिताःसप्तर्षिप्रतिमाःपूजयेत् ॥ ॐ ऋषेमंत्रकृतांस्तोमैःकश्यपोद्वर्धयन्गिरः ॥ सोमंनमस्यराजानंयोजज्ञेवीरुधांपतिरिंद्रायेंदोपरिस्रव ॥ कश्यपायनमः कश्यपंआवाहयामि ॥ ॐ अत्रिर्यद्वामवरोहन्नृबीसमजोहवीन्नाधमानेवयोषा ॥ श्येनस्यचिज्जवसानूतनेनागच्छतमश्विनाशंतमेन ॥ अत्रयेनमः अत्रिंआवाहयामि ॥ ॐ एवानःस्पृधःसमजासमत्स्विंद्ररारंधिमिथतीरदेवीः ॥ विद्यामवस्तोरवसागृणंतोभरद्वाजाउततइंद्रनूनं ॥ भरद्वाजायनमः भरद्वाजंआवाहयामि ॥ ॐ प्रसूतोभक्षमकरंचरावपिस्तोमंचेमंप्रथमःसूरिरुन्मृजे । सुतेसातेनयद्यागमंवांप्रतिविश्वामित्रजमदग्नीदमे ॥ विश्वामित्रायनमः विश्वामित्रंआवाहयामि ॥ ॐ अभित्वागोतमागिराजातवेदोविचर्षणे । द्युम्नैरभिप्रणोनुमः ॥ गौतमायनमः गौतमंआवाहयामि॥ ॐ गृणानाजमदग्निनायोना

वृतस्यसीदतं । पातंसोममृतावृधा ॥ जमदग्नयेनमः जमदग्निंआवाहयामि ॥ ॐ उतासिमैत्रावरुणोवसिष्ठोर्वश्याब्रह्मन्मन सोधिजातः । द्रप्संस्कन्नंब्रह्मणादैव्येनविश्वेदेवाःपुष्करेत्वाददंत ॥ वसिष्ठायनमः वसिष्ठंआवाहयामि ॥ ॐ अत्रेर्यथानुसू यास्याद्वसिष्ठस्याप्यरुंधती । कौशिकस्ययथासतीतथात्वमपिभर्तरि ॥ अरुंधत्यैनमः अरुंधतीं आवाहयामि ॥ तदस्तुमित्रा० गृहावै० सुप्रतिष्ठितमस्तु ॥ आवाहनादिप्रत्युपचारं देवाएतस्यामवदंतपूर्वेसप्तऋषयस्तपसेयेनिषेदुः । भीमाजायाब्राह्मणस्यो पनीतादुर्धांदधातिपरमेव्योमन् ॥ सहस्तोमाःसहच्छंदस० इतिवा नाममंत्रैर्वापूजयेत् ॥ ततःवायनंदत्वाक्षमापयेत् ॥ न्यू नातिरिक्तकर्माणिमयायानिकृतानिच ॥ क्षमध्वंतानिसर्वाणियूयंसर्वेतपोधनाः ॥ ततःकथाश्रवणादिनारात्रिंनिनयेत् ॥ प्रातः अग्निंप्रतिष्ठाप्यअन्वादध्यात् ॥ प्रधानंअरुंधतीसहितकश्यपादिसप्तर्षीन्पूजामंत्रेण तिल १ व्रीहि २ यव ३ सर्पिर्द्रव्यैः ४ तिलपा यसाभ्यांवाप्रतिद्रव्यमष्टोत्तरशत १०८ मष्टाविंशतिर्वा २८ तत्संख्याकाहुतिभिः ब्रह्मादिदेवताश्चएकैकयाज्याहुत्यायक्ष्ये शेषेण स्विष्टकृतं ॥ ततःपुनःप्रतिमापूजांकृत्वासपत्नीकान्सप्तब्राह्मणान्वस्त्रादिनासंपूज्यतेभ्यः क्रमेणदक्षिणाप्रतिमायुतकलशान्द द्यात् ॥ मंत्रः ॥ प्रतिगृह्णद्विजश्रेष्ठप्रतिमादिसमन्वितम् ॥ कलशंऋषिसंप्रीत्यैव्रतसंपूर्तिहेतवे ॥ यदैककुंभेसर्वप्रतिमापूजनंतदासर्व प्रतिमायुतंकलशमाचार्यायदद्यात् ॥ अन्येभ्यःदक्षिणावस्त्रयुतान्पक्वान्नपूरितान्कलशान्दद्यात् ॥ ततःसप्तभ्यःसप्तगाआचा र्यायएकांगांदत्वाप्रार्थयेत् सप्तर्षयःशुभाःश्रेष्ठाःसर्वेषांचशुभप्रदाः ॥ सर्वपापंचमेघ्नंतुज्ञानतोज्ञानतःकृतम् ॥ एतेसप्तर्षयःसर्वे भक्त्यासंपूजितामया ॥ यथोक्तफलदाःसंतुव्रतस्यफलदायकाःइति ॥ आशिषोगृहीत्वाब्राह्मणान्संतर्प्यस्वयंभुंजीत ॥ इतिऋ०

## ॥ २०५ ॥ अथोपांगललिताव्रतम् ॥

श्रीः ॥ प्रातःदंतधावनपूर्वकंनद्यादौस्नात्वाशुक्लंवासःपरिधायमंडपिकादिकंकृत्वातिथ्यादिसंकीर्त्य ॥ मयापुत्रपौत्रविद्यारोग्य सुखविजयपुष्ट्यादिकामेन स्त्रीतु अवैधव्यकामनयाउपांगललिताप्रीत्यर्थंअष्टवर्षात्मकाचरितोपांगललिताव्रतोद्यापनंकरिष्य इतिसंकल्प्य ॥ वृताचार्यःएकलिंगोद्भवेकलशोपरिसौवर्णींललिताप्रतिमांपौराणमंत्रैःश्रीसूक्तेनचपूजयेत् ॥ ध्यानम् ॥ नील कौशेयवसनांहेमाभांकमलासनाम् ॥ भक्तानांवरदांनित्यंललितांचिंतयाम्यहं ॥ पुष्पांजल्यंतेसाग्राअष्टचत्वारिंशत्परिमितादू र्वाहस्तेनादाय ॥ बहुप्ररोहासततममृताहरितालता ॥ यथेयंललितेमातस्तथामेस्युर्मनोरथाः ॥ इतिमंत्रेणाष्टाचत्वारिंशद्वारं समर्पयेत् ॥ ततःप्रदक्षिणानमस्कारः ॥ प्रातःपुनःसंपूज्यदेव्यैअष्टौवटकान्समर्प्यअग्निंप्रतिष्ठाप्यअन्वादध्यात् ॥ प्रधानंउपां गललितांगौरीर्मिमायेतिमंत्रेणअष्टोत्तरशत १०८ दूर्वाहुतिभिः नमोदेव्यैमहादेव्यैइतिमंत्रेणअष्टोत्तरशततिल १ सर्पिः २ पंच खाद्ययुतपायसा ३ हुतिभिर्यक्ष्ये ब्रह्मादिमंडलदेवतार्थंकैकयाज्याहुत्यायक्ष्ये ॥ एवंहोमंसंपाद्यअष्टौब्राह्मणान्वस्त्रादिभिःसं पूज्यतेभ्यःपक्वान्नपूरितान्दक्षिणासहितानष्टौकलशान्दद्यात् ॥ ततआचार्यंवस्त्रालंकारादिभिःसंपूज्यसदक्षिणंविंशतिवटक सहितंवायनंदद्यात् ॥ तत्रमंत्रः ॥ पक्वान्नफलसंयुक्तंसघृतंदक्षिणान्वितम् ॥ उपांगललिताप्रीत्यैब्राह्मणायददाम्यहम् ॥ ततः देवीं ॥ सवाहनाशक्तियुतावरदापूजितामया ॥ मातर्मामनुगृह्याथगम्यतांनिजमंदिरम् ॥ इतिविसृज्यसोपस्करंपीठंगांचआ चार्यायदत्वाब्राह्मणान्सदन्नेनभोजयित्वाआशिषोगृहीत्वास्वयंविंशतिवटकान्भुंजीत ॥ इतिउपांगललिताव्रतम् ॥ ॥ ४ ॥

## ॥ २०६ ॥ अथमुक्ताभरणसप्तमीव्रतम् ॥

श्रीः ॥ देशकालौसंकीर्त्यममसकलपापक्षयपूर्वकपुत्रपौत्रधनधान्यसौख्यातिशयप्राप्तिद्वाराश्रीसदाशिवप्रीत्यर्थंमुक्ताभरणसप्तमीव्रतंकरिष्येइतिसंकल्प्यपूजांसमाप्यप्रार्थयेत् ॥ महादेवमहाराजप्रीत्यापापप्रणाशन ॥ अस्माकंकुर्वतांपूजांसाधुवासाधुयोजितां ॥ ज्ञानतोऽज्ञानतोवापिभवतीविहिताचया ॥ संपूर्णयतुविश्वेशोविमलाकोमलास्तुमां ॥ ततःदेवस्यपुरतः ॥ यावज्जीवंमयात्मातुशिवस्यचनिवेदितः ॥ इत्येवंसमयंकृत्वासौवर्णंराजतंसौत्रंवादोरकंदेवाग्रतःसंपूज्यमंत्रेणदोरकंगृह्णीयात् ॥ देवदेवजगन्नाथसर्वसौभाग्यदायक ॥ गृह्णीयांदोररूपंत्वांपुत्रपौत्रप्रवर्धनम् ॥ ततःहस्तेबंधनमंत्रः ॥ सप्तसामोपगीतंत्वांधारयामिजगद्गुरो ॥ सूत्रग्रंथिस्थितंनित्यंधारयामिस्थिरोभवेत्यनेनमंत्रेणहस्तेबद्ध्वा ॥ ततः ॥ दहसर्वाणिपापानितुष्टिंकुरुदयानिधे ॥ प्रसन्नःसन्नुमाकांतदीर्घायुःपुत्रदोभव ॥ इतिजीर्णदोरकोत्तारणंकृत्वाब्राह्मणायएकादशशतसंख्याकान्मंडकान्व्रतदक्षिणायुतान्कृत्वावायनंदत्वा तदेवद्रव्यंस्वयंभुंजीत ॥ एवंप्रतिमासंशुक्लसप्तम्यांकार्यम् ॥ वर्षांतेहैमींराजतींवामुद्रिकांताम्रपात्रोपरिसंस्थाप्यब्राह्मणेभ्योदद्यात् ॥ आचार्यायविशेषेणसौवर्णमंगुलीयकंपुष्पकुंकुमतांबूलांजनसूत्रयुतंसदक्षिणांगांचदद्यात् ॥ ब्राह्मणान्भोजयित्वास्वयंभुंजीत ॥ संतानवृद्धिंलब्ध्वातुशिवलोकेमहीयते ॥ इतिमुक्ताभरणसप्तमी ॥ ॥ छ ॥

## ॥ २०७ ॥ अथजन्माष्टमीव्रतम् ॥

श्रीः ॥ प्रातःदंतधावनपूर्वकंस्नात्वादेशकालौसंकीर्त्यममअखिलपापक्षयपूर्वकधर्मार्थकाममोक्षचतुर्विधपुरुषार्थसिद्धिद्वाराअमु

ककामनयावाआचरितजन्माष्टमीव्रतोद्यापनंकरिष्ये ॥ वृताचार्यःवेद्यांसर्वतोभद्रेप्रस्थतिलोपरिस्थकलशोपरिपूर्णपात्रेरौप्यमये पर्यंके सौवर्णींदेवकीं तदुत्संगेवामनंस्तनपायिनंसौवर्णंश्रीकृष्णं इदंविष्णुरितिविष्णोर्नुकमितिवामंत्रेण परितः वसुदेवं बल देवं नंदं यशोदां सुभद्रां रोहिणीं विधुं मत्स्यादिदशरूपाणि आदित्यादिग्रहान् अश्विन्यादिसप्तविंशतिनक्षत्राणि देवान् नागान् यक्षान् विद्याधरान् यमुनां कालियं कंसं गाः योगनिद्रां सात्यकिं उद्धवं अक्रूरं उग्रसेनादियादवान् शंखं चक्रं गदां पद्मं त्रुटिं कालात्मानं अहोरात्रं मासं संवत्सरं सर्वात्मानं द्वारपालान् पुण्यशीलं सुशीलं जयं विजयं पुरतः गरुडं एवंनाममंत्रैरावाह्यपुरुषसूक्तेनपूजयेत् ॥ ध्यानं ॥ कृष्णंचतुर्भुजंदेवंशंखचक्रगदाधरम् ॥ पीतांबरयुगोपेतंलक्ष्मीयुक्तंविभूषि तम् ॥ लसत्कौस्तुभशोभाढ्यंमेघश्यामंसुलोचनम् ॥ ध्यायामिपुंडरीकाक्षंजगदानंदकारकम् ॥ अंगपूजा ॥ कृष्णायनमः पादौपू० संकर्षणाय गुल्फौ कालात्मने जानुनी विश्वकर्मणे जंघे विश्वनेत्राय कटिं पद्मनाभाय नाभिं परमात्मने हृदयं श्रीकंठाय कंठं सर्वास्त्रधारिणे बाहू वाचस्पतये मुखं केशवाय ललाटं सर्वात्मने शिरः ॥ पूजांसमाप्यस्तोत्रंपठेत् ॥ देवस्य जातकर्मषष्ठीपूजादिकृत्वा ॥ पुरतःअभयावचाशुंठीगुडूचीपिप्पलीशस्त्राणिनिक्षिप्यार्घ्यंदद्यात् ॥ चंद्रोदये ॥ जातःकंसवधा र्थायभूभारोत्तारणायच ॥ कौरवाणांविनाशायदैत्यानांनिधनायच ॥ पांडवानांहितार्थायधर्मसंस्थापनायच ॥ गृहाणार्घ्यं मयादत्तंदेवक्यासहितोहरे ॥ इतिकृष्णायार्घ्यं ॥ अंगणेभूमौराजतंचंद्रबिंबंसंपूज्यतस्यार्घ्यंजानुभ्यामवनींगत्वा ॥ क्षीरोदार्ण वसंभूतलक्ष्मीबंधोनिशाकर ॥ गृहाणार्घ्यंमयादत्तंरोहिण्यासहितःशशिन् ॥ रोहिण्यर्घ्यं ॥ दक्षस्यदुहितासाध्वीरोहिणीनाम नामतः ॥ सोमेनसहितेदेविगृहाणार्घ्यंनमोस्तुते ॥ ततःप्रार्थना ॥ त्राहिमांसर्वगश्रीशहरेसंसारसागरात् ॥ त्राहिमांसर्वपाप

म्रदुःखशोकार्णवात्प्रभो ॥ यद्बाल्येयच्चकौमारेयौवनेयच्चवार्धके ॥ तत्पुण्यंवृद्धिमाप्नोतुपापंहरहलायुधेति ॥ ततोरात्रौजागरणंकुर्यात् ॥ प्रातःस्नात्वादेवंसंपूज्यअग्निंप्रतिष्ठाप्य अन्वादध्यात् ॥ प्रधानंविष्णुंइदंविष्णुरितिमंत्रेण पायस १ तिल २ व्रीहि ३ यव ४ द्रव्यैःप्रतिद्रव्यंअष्टोत्तरशत १०८ संख्याकाहुतिभिः पुनःपंचखाद्येन विष्णोर्नुकमितिमंत्रेणअष्टोत्तरशत १०८ संख्यया पुनःपुरुषसूक्तेनप्रत्यृचंएकैकयाज्याहुत्या महाव्याहृतिभिश्चअष्टाविंशतिसंख्याज्याहुतिभिः परिवारदेवताब्रह्मादिदेवताश्चएकैकयाज्याहुत्या शेषेणस्विष्टकृतं ॥ ततआचार्यंसंपूज्यत्रिभत्रेसतिभूशय्यारौप्यवस्त्रकांचनादिदत्वापीठंचदद्यात् ॥ श्रीकृष्णःप्रतिगृह्णातिश्रीकृष्णोवैददातिच ॥ श्रीकृष्णस्तारकोभाभ्यांश्रीकृष्णायनमोनमः ॥ कृष्णायानंतरूपायदास्यामिप्रतिमामिमां ॥ द्रव्यंविष्णुसमुद्भूतमतःशांतिंप्रयच्छमे ॥ व्रतपूर्तयेगांचदद्यात् ॥ ॥ छ ॥ ॥ छ ॥

## ॥ २०८ ॥ अथरामनवमीव्रतम् ॥

श्रीः ॥ तिथ्यादिसंकीर्त्यआत्मनःअखिलपापक्षयपूर्वकचतुर्विधपुरुषार्थसिद्धिद्वाराममआचरितस्यरामनवमीव्रतस्यसांगतासिद्ध्यर्थंतदुद्यापनंकरिष्ये ॥ ततःपूर्ववत्वृताचार्यः सर्वतोभद्रस्थकलशेसाक्षतपूर्णपात्रेषट्कोणंपद्मंविलिख्य तत्रमध्येहैमंरामंषडक्षरेणत्रयोदशाक्षरेणवामूलमंत्रेण ॥ मूलमंत्रस्तु श्रीरामरामरामेतिषडक्षरमंत्रः १ ॥ श्रीरामजयरामजयजयरामेतित्रयोदशाक्षरः २ ॥ अपरोवैदिकस्तु ॥ ॐ भद्रोभद्रयासचमानआगात्स्वसारंजारोऽअभ्येतिपश्चात् ॥ सुप्रकेतैर्द्युभिरग्निर्वितिष्ठन्रुशद्भिर्वर्णैरभिराममस्थात् ॥ इतिमंत्रेणरामंतद्वामतःहैमींसीतां ॥ ॐ जनकात्मजायैनमःइतिनाममंत्रेणचप्रतिष्ठाप्य ॥ परितःषट्कोणेषुक्रमेणदशरथं कौसल्यां लक्ष्मणं भरतं शत्रुघ्नं मारुतिं च नाममंत्रैः प्रतिष्ठाप्य पुरुषसूक्तेनपूजयेत् ॥

पुष्पोत्तरंअंगपूजा ॥ श्रीरामचंद्रायनमः पादौपूजयामि राजीवलोचनाय० गुल्फौ० रावणांतकाय० जानुनी० विश्वामित्रप्रियाय० नाभिं० परमात्मने० हृदयं० श्रीकंठाय० कंठं० सर्वास्त्रधारिणे० बाहू० विश्वमूर्तये० मुखं० पद्मनाभाय० जिह्वां० दामोदराय० दंतान्० सीतापतये० ललाटं० ज्ञानगम्याय० शिरः० सर्वात्मने० सर्वांगं० ॥ नमस्कारमंत्रः ॥ नमोदेवाधिदेवायरघुनाथायशार्ङ्गिणे ॥ चिन्मयानंदरूपायसीतायाःपतयेनमइति ॥ अर्घ्यमंत्रः ॥ दशाननवधार्थायधर्मसंस्थापनायच ॥ राक्षसानांविनाशायदैत्यानांनिधनायच ॥ परित्राणायसाधूनांजातोरामःस्वयंहरिः ॥ गृहाणार्घ्यंमयादत्तंमात्रादिसहितोनघ ॥ इति ॥ ततःपुराणपठनादिनारात्रिंनयेत् ॥ प्रातःअग्निंप्रतिष्ठाप्यअन्वादध्यात् ॥ अत्रप्रधानं रामंआज्य १ पायस २ द्रव्याभ्यां प्रत्येकं अष्टोत्तरशत १०८ संख्याहुतिभिःमूलमंत्रेण जानक्यादिसप्तदेवताः उक्तद्रव्येणअष्टाविंशति २८ संख्याहुतिभिः ॥ ब्रह्मादिदेवताश्चएकैकयाज्याहुत्यायक्ष्ये ॥ एवंहोमंसंपाद्य आचार्यंसंपूज्यप्रतिमांदद्यात् ॥ तत्रमंत्रः ॥ इमांस्वर्णमयींरामप्रतिमांसमलंकृताम् ॥ श्रीरामप्रीतयेदास्येप्रीतोभवतुराघवइति ॥ ततःव्रतपूर्तयेगांचदत्वासदन्नेनब्राह्मणान्संतर्प्यदक्षिणादिभिःप्रतोष्यआशिषोग्राह्याः ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥

## ॥ २०९ ॥ अथरामनामलेखनव्रतम् ॥

श्रीः ॥ तिथ्यादिसंकीर्त्यआत्मनःअनेकपातकक्षयपूर्वकसकलमनोरथावाप्तिद्वाराश्रीरामचंद्रप्रीत्यर्थंमयालिखितंयत्कोटिलक्षामुकावधिकंरामनामतत्संपूर्णतासिद्ध्यर्थेतदुद्यापनाख्यंकर्मकरिष्येइतिसंकल्प्य ॥ पूर्ववत्वृताचार्यःसर्वतोभद्रस्थकलशेसाक्षतपू

र्णपात्रेषोडशमाषात्मकराजतसिंहासनेसुवर्णस्यपलेनतदर्धेनवानिर्मितंरामं वामतःसीतां दक्षिणतः लक्ष्मणं पुरतः हनूमंतंच सौवर्णप्रतिमासुमूलमंत्रेणनाममंत्रेणचआवाह्य पुरुषसूक्तेनचपूजयेत् ॥ परितःसप्तधान्योपरिवारिपूर्णानष्टौकलशान्पूर्वादि क्रमेणसंस्थाप्यतेषुलोकेशांस्तत्तन्मंत्रैरावाह्यपूजयेत्॥ प्रातःअग्निंप्रतिष्ठाप्यान्वादध्यात् ॥ अत्रलेखनदशांशेनशतांशेनवाहोमः॥ अत्रप्रधानं रामंआज्यद्रव्येणलेखनदशांशेनशतांशेनवामूलमंत्रेण परिवारदेवताःब्रह्मादिदेवताश्चएकैकयाज्याहुत्यायक्ष्ये ॥ एवंहोमंसंपाद्यआचार्यसंपूज्यपीठंदद्यात् ॥ तत्रमंत्रः ॥ सीतासौमित्रिहनुमद्युतंरामंसदक्षिणं ॥ ददामिद्विजवर्यायरामोमेप्री यतामिति॥ ततःव्रतसंपूर्तयेगांचदत्त्वाघृतपूरितकांस्यपात्रंतिलपात्रंचयथाशक्तिदशदानानिदत्त्वायोगिराजंबटुकत्रयंचअन्या नपिसद्विजान्सदन्नेनसंतर्प्यदक्षिणादिनाप्रतोष्यआशिषोगृहीत्वाइष्टजनैःसहभुंजीत॥ इतिरामनामलेखनव्रतम् ॥ ॥ ध ॥

## ॥ २१० ॥ अथादुःखनवमीव्रतम् ॥

श्रीः ॥ तिथ्यादिसंकीर्त्यआत्मनःसकलदुःखनाशपूर्वकमभीष्टकामनासिद्धिद्वाराश्रीगौरीप्रीत्यर्थंअदुःखनवमीव्रतंकरिष्ये॥इति संकल्प्य ॥ गोमयेनोपलिप्यभूमौवेदींगुडेनलिप्तांइक्षुच्छादितांअपूपपायसादियुतांउपरिमंडपिकायुतांकृत्वातत्रपीठेगौरींगौरी र्मिमायेतिनमोदेव्याइतिवामंत्रेणसंपूज्यरात्रिंजागरणादिनानयेत्॥ तद्दिनेहिंसादिरहितमुपोषणंकार्यम् ॥ अशक्तश्चेद्दुग्धफ लादिभक्ष्यंअत्यंताशक्तश्चेद्धविष्यान्नं॥ प्रातःदेवींसंपूज्यसपत्नीकंब्राह्मणंसंपूज्यपंचफलान्वितंवायनंसोपस्करंदद्यात् ॥ तत्रमं त्रः॥ गौर्यादुःखविनाशिन्याव्रतसंपूर्तिहेतवे ॥ वायनंद्विजवर्यायसहिरण्यंददाम्यहं ॥ इतिअदुःखनवमीव्रतम् ॥ ॥ ध ॥

## ॥ २११ ॥ अथगोपद्मव्रतम् ॥

श्रीः ॥ कार्तिकशुक्लैकादश्यांद्वादश्यांवाकार्यम् ॥ तिथ्यादिसंकीर्त्यआत्मनोयमदंडनिरासपूर्वकपुत्रपौत्रसौभाग्याद्यभिवृद्धिद्वाराश्रीगोपालप्रीत्यर्थंपंचवर्षाचरितगोपद्मव्रतोद्यापनंकरिष्ये ॥ वृताचार्यःसर्वतोभद्रस्थकलशेहैमंचतुर्भुजंगोपालंइदंविष्णुरितिमंत्रेणसंपूज्यप्रार्थयेत् ॥ नमस्तेदेवदेवेशनमस्तेगरुडध्वज ॥ नमस्तेविष्णवेतुभ्यंव्रतस्यफलदायक ॥ प्रातरग्निंप्रतिष्ठाप्यअन्वादध्यात् ॥ प्रधानं गोपालं समित् १ तिल २ पायस ३ आज्य ४ यव ५ द्रव्यैः प्रतिद्रव्यमष्टोत्तरशत १०८ संख्याकाहुतिभिः ॥ ब्रह्मादिदेवताश्चैकैकयाज्याहुत्यायक्ष्ये ॥ ततःक्रमेणद्रव्याणांहोमेमंत्राः ॥ ॐ त्रीणिपदा० अतोदेवा० इदंविष्णु० विष्णोर्नुकं० तत्सवितुर्व० ॥ ततोवायनंप्रतिवर्षंक्रमेणसहैववात्रयस्त्रिंशत्संख्याकद्रव्ययुतंदद्यात् ॥ प्रथमेपायसं द्वितीयेमंडकान् तृतीयेमाषवटकान् चतुर्थेअपूपान् पंचमेलड्डुकान् ॥ वायनमंत्रः ॥ वायनंतेद्विजश्रेष्ठददामिव्रतपूर्तये ॥ दक्षिणादिसमायुक्तंगोपालःप्रीयतामिति ॥ ततःपंचमिथुनानिवस्त्रादिनासंपूज्यआचार्यायगांचदत्वा॥एवमेवलक्षगोपद्मव्रतं हवनेविशेषः तद्दशांशेनशतांशेनवापूर्वोक्तपंचद्रव्यैर्मिलित्वाकार्यम् ॥ वायनंचपूर्वोक्तमंत्रेणैवदद्यात् ॥ अन्यत्समानं ॥ इतिगोपद्मव्रतम् ॥

## ॥ २१२ ॥ अथश्रवणद्वादशीव्रतम् ॥

श्रीः ॥ प्रातर्नद्यादौ वरोवरेण्योवरदोवराहोधरणीधरः ॥ अपवित्रंपवित्रंमांकरोतुभगवान्हरिः ॥ इत्यनेनतिलान्विलिप्यस्नात्वानित्यकर्मनिर्वर्त्यसंकल्पयेत् ॥ तिथ्यादिसंकीर्त्यआत्मनःअखिलपापक्षयपूर्वकपिशाचादिदुर्योनिनिरसनद्वाराश्रीविष्णुलो

ऽप्राप्त्यर्थंआचरितश्रवणद्वादशीव्रतोद्यापनंकरिष्येइतिसंकल्प्य ॥ वृताचार्यःचतुर्द्वारोपशोभितमंडपांतर्वेदिकायांपीठदेवताः पूजयेत् ॥ आधारशक्त्यैनमः विमलायै० उत्कर्षिण्यै० ज्ञानशक्त्यै० क्रियाशक्त्यै० प्रह्वायै० सत्यायै० मायायै० मध्येपरम देवतायै० परितइंद्रादिलोकपालांस्तदुपरितत्पूर्णपात्रयुतेकलशे गणपतिं० दुर्गां० क्षेत्रपालं० वास्तोष्पतिं० परितआदित्या दिनवग्रहदेताश्चसंपूज्य ॥ तदुपरिसर्वतोभद्रंप्रसार्यतत्रब्रह्मादिदेवताःसंपूज्य तदुपरिकुशकृष्णाजिनंप्रसार्य तत्रद्रोणपरिमित तिलपर्वतंकृत्वातदलाभेगोधूमाः तत्रतिलपूरितपूर्णपात्रयुतकलशेद्वादशारयुतपद्मेहैमंवामनंत्रीणिपदेतिमंत्रेणसंपूज्यांगपूजां कुर्यात् ॥ मत्स्यायनमः पादौपू० कूर्माय० जानुनी० वराहाय० गुह्यं० नृसिंहाय० नाभिं० वामनाय० उदरं० परशुरामाय० दक्षिणभुजं० दाशरथिरामाय० वामभुजं० कृष्णाय० मुखं० बौद्धाय० कर्णौ० कल्किने० शिरः० ॐ नमोभगवतेवासु देवायसर्वांगंपूज० दधिभक्तनैवेद्यंदत्वाप्रार्थयेत् ॥ नमस्तेदितिपुत्रायनमस्तेकश्यपात्मज ॥ त्रिविक्रमायदेवायवामनायनमो नमः ॥ ततोन्यग्रोधंकद्रुद्रायेत्रिमंत्रेणसंपूज्य ॥ शिक्यदध्यन्नेनयुतंजलपूरितंकरकंचसंपूजयेत् ॥ तत्रक्रमेणमंत्रौ ॥ शिक्यो सिदधिभक्तोसिलंबितोसिमयोपरि ॥ सूत्रेणैवाश्रितोसित्वंवामनःप्रीयतामिति ॥ करकंपूजयिष्यामिसरितांसंगमेजलैः ॥ पंचरत्नसमायुक्तंतेनतुष्यतुवामनः ॥ ततःसर्वान्प्रार्थयेत् ॥ पर्जन्योवरुणःसूर्यःकेशवःसलिलंशिवः ॥ त्वष्टायमोवैश्रवणःस दापापंहरंतुमे ॥ कथाश्रवणादिनारात्रिंनयेत् ॥ प्रातरग्निंप्रतिष्ठाप्यअन्वादध्यात् ॥ अत्रप्रधानं वामनं पायस १ घृत २ समित् ३ तिलैः ४ प्रतिद्रव्यमष्टोत्तरशत १०८ संख्याकाहुतिभिःपीठदेवताःब्रह्मादिदेवताश्चैकैकयाज्याहुत्यायक्ष्ये ॥ होम मंत्राश्च इरावतीतिमंत्रेणपायसं त्रीणिपदेत्याज्यं इदंविष्णुरितिसमित् विष्णोःकर्माणीतितिलाः ॥ ततोद्वादशसंख्याकान्वि

प्रान्वस्त्रादिनासंपूज्यदध्यन्नोपवीतगोपीचंदनयुतान्सुगंधजलपूरितान्द्वादशकरकांस्तेभ्योदद्यात्तत्रमंत्रः ॥ सुगंधिजलसंपूर्णं दधिभक्तयुतंद्विज ॥ करकंतेप्रदास्यामिवामनःप्रीयतामिति ॥ ततः वामनःप्रतिगृह्णातिवामनोवैददातिच ॥ वामनस्तारकोभाभ्यांवामनायनमोनमः ॥ इत्यनेनसोपस्करपीठमाचार्यायदद्यात् ॥ व्रतपूर्तयेगांचदत्वाविप्रान्भोजयेत् ॥ इतिश्रवणद्वादशी ॥

## ॥ २१३ ॥ अथप्रदोषव्रतम् ॥

श्रीः ॥ तिथ्यादिसंकीर्त्यआत्मनःअखिलपापक्षयशत्रुपराजयपूर्वकायुरारोग्यैश्वर्यपुत्रपौत्राद्यभिवृद्धिद्वाराश्रीउमामहेश्वरप्रीत्यर्थंआचरितप्रदोषव्रतोद्यापनंकरिष्ये ॥ कृताचार्यःउक्तप्रकारेणलिंगतोभद्रस्थताम्रकलशेरौप्यपूर्णपात्रयुतेसौवर्णसांबसदाशिवं पुरतोराजतंवृषभंतत्तन्मंत्रैःप्रतिष्ठाप्य ॥ परितःअसितांगभैरवाय १ रुरुभैरवाय २ चंडभैरवाय ३ क्रोधभैरवाय ४ उन्मत्तभैरवाय ५ भीषणभैरवाय ६ संहारभैरवाय ७ कपालभैरवाय ८ ॥ इतिप्रतिष्ठाप्यपूजयेत् ॥ मूलमंत्रेणन्यासंकृत्वापंचब्रह्ममंत्रैःसद्योजातादिभिःपूजयेत् ॥ प्रकारांतरेणपूजनं विष्णुं० १ब्रह्माणं० २भास्करं० ३ सोमं० ४पूर्वादिक्रमतःप्रथमावरणे ॥ जयं १ विजयं २ गणपतिं ३ दुर्गां ४ द्वितीये ॥ नंदीश्वरं १ क्षेत्रपालं २ वास्तोष्पतिं ३ वायुं ४ तृतीये ॥ सप्तर्षीन् चतुर्थे ॥ भूतनाथं पंचमे ॥ इंद्रादीन्षष्ठे ॥ कपालिनंसप्तमे ॥ गंधर्वान्अष्टमे ॥ सद्योजातेत्यासनं वामदेवायेतिपाद्यं अघोरायेत्यर्घ्यं तत्पुरुषायेत्याचमनीयं ईशानायेतिस्नानं त्र्यंबकमितिवस्त्रं यज्ञोपवीतंउत्तरीयंच नमःसोमायेतिगंधं नमःशंभवे इत्यक्षतान् इमारुद्रायेतिपुष्पाणि एवापित्रेइतिबिल्वदलानि मानस्तोकेइतिधूपं आतेपितरितिदीपं त्वादत्तेतिनैवेद्यं कद्रुद्रायेतितांबूलं इमारुद्रायस्थिरधन्वनेइतिदक्षिणाम् सहिक्षयेणक्षम्येतिमंत्रपुष्पम् यातेदिद्युदितिनमस्कारः पुनर्नाममंत्रेणअष्टौ

प्रदक्षिणानमस्कारांश्चकुर्यात् ॥ भवाय १ महादेवाय २ रुद्राय ३ नीलकंठाय ४ शशिमौलिने ५ उग्राय ६ भीमाय ७ ईशानाय ८ ॥ ततोर्घ्यंरजतादिपात्रेक्षीरकुशघृतदधितंडुलसिद्धार्थगंधपुष्पादिक्षिप्त्वासजलंदद्यात् ॥ भयरोगादिदारिद्र्यपाप क्षुदपमृत्यवः ॥ ऋणशोकमनस्तापानश्यंतुममसर्वदा ॥ ततःप्रार्थयेत् ॥ प्रसीददेवदेवेशप्रसीदपरमेश्वर ॥ प्रसीदसोमसर्वज्ञप्र सीदकरुणाकर ॥ प्रातरग्निंप्रतिष्ठाप्यान्वादध्यात् ॥ प्रधानं उमामहेश्वरंपलाशसमित् १ बिल्वपत्र २ पायस ३ आज्य ४ द्रव्यैः प्रत्येकमष्टोत्तरशत १०८ संख्याकाहुतिभिः ( पक्षे शिवंगौरींच त्र्यंबकंगौरीर्मिमायेतिमंत्राभ्यांप्रत्येकं पायसाज्या भ्यांवा ) पीठदेवताःब्रह्मादिदेवताश्चैकैकयाज्याहुत्यायक्ष्ये ॥ ततःपीठंगांचदत्वाब्राह्मणान्भोजयेत् ॥ भूयसींदक्षिणांदत्वाशि षोग्राह्याः ॥ इतिप्रदोषव्रतम् ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥

## ॥ २१४ ॥ अथानंतचतुर्दशीव्रतम् ॥

श्रीः ॥ तिथ्यादिसंकीर्त्यआत्मनोनिखिलपापनिर्मुक्तिपूर्वकोत्तमसिद्धिपुत्रपौत्रसहितविविधभोगधनधान्यपरमगतिप्राप्तिकाम नयाचतुर्दशवर्षाचरितानंतव्रतोद्यापनंकरिष्ये इतिसंकल्प्य नित्यवत्स्वयंदेवंसंपूजयेत् ॥ ततोवृताचार्यःसर्वतोभद्रेब्रह्मादि देवताआवाह्यतदुपरिकलशंप्रतिष्ठाप्यतत्रयमुनामावाह्यश्रीसूक्तेननाममंत्रेणवासंपूज्य ॥ तदुपरिअक्षतपूरितपूर्णपात्रंनिधाय तत्राष्टदलंविरच्य तत्रसुवर्णनिर्मितं चतुर्दशग्रंथियुतंअनंतंसहस्रशीर्षेतिमंत्रेणस्थापयेत् ॥ तदुत्तरतःसप्तधान्योपरिविस्तृतश य्यायांस्वर्णनिर्मितंलक्ष्मीसहितंहैमंहलमुसलयुतंअनंतंदेवं इदंविष्णुरितिमंत्रेणस्थापयेत् ॥ स्वर्णदोरकप्रतिमयोःपुरुषसूक्तेन श्रीमदनंतायनमइतिनाममंत्रेणवापूजावार्षिकवत्कार्या ॥ अथग्रंथिदेवताःपूजयेत्क्रमेण ॥ विष्णुः १ अग्निः २ आदित्यः ३

सहस्राक्षः ४ पितामहः ५ इंद्रः ६ पिनाकी ७ विघ्नेशः ८ स्कंदः ९ सोमः १० वरुणः ११ पवनः १२ पृथ्वी १३ वसवः १४ ॥ ततःशय्यायांप्रतिमायाःपरितः शंखं १ चक्रं २ गदां ३ पद्मं ४ ॥ तद्बहिःनाममंत्रेण अनंतं १ कपिलं २ दक्षं ३ मनुं ४ प्रजापतिं ५ संकर्षणं ६ कालं ७ वनमालिनं ८ त्रिविक्रमं ९ अहोरात्रं १० अर्धमासं ११ मासं १२ ऋतून् १३ अयने १४ संवत्सरं १५ इदुवत्सरं १६ अनुवत्सरं १७ वत्सरं १८ प्रजाध्यक्षं १९ अजितं २० सर्वभूतं २१ प्रद्युम्नं २२ अनिरुद्धं २३ श्रीधरं २४ पुरुषोत्तमं २५ वामनं २६ पद्मनाभं २७ विश्वरूपम् २८ त्रिविक्रमम् २९ विष्णुम् ३० अच्युतम् ३१ ॥ तद्बहिःअष्टवसून् ८ ॥ तद्बहिःएकादशरुद्रान् ११ तद्बहिःद्वादशादित्यान् १२ तद्बहिःनवग्रहान् ९ तद्बहिःअष्टभैरवान् ८ तद्बहिःमेषादिद्वादशराशीन् १२ तद्बहिःअश्विन्यादिनक्षत्राणि २८ तद्बहिःब्राह्म्यादिसप्तमातृः ७ तद्बहिःचैत्रादिद्वादशमासान् १२ तद्बहिर्दीप्त्यादिशक्तीः तद्बहिर्विष्कंभादियोगान् २७ आवाह्य ॥ पीठपरितःफलपक्वान्नपूरितान्चतुर्दशकुंभांश्चतुर्दशनामभिःस्थापयेत्पूजयेच्च ॥ तेचमंत्राः अनंतायनमः १ संकर्षणाय २ कमलाय ३ शेषाय ४ वासुदेवाय ५ विश्वनाथाय ६ विश्वरूपाय ७ पद्मनाभाय ८ दामोदराय ९ जगन्नाथाय १० चतुर्भुजाय ११ श्रीकंठाय १२ केशवाय १३ सर्वात्मने १४ ॥ नमस्तेदेवदेवेशनमस्तेधरणीधर॥ नमस्तेसर्वनागेंद्रअनंतायनमोनमइतिप्रार्थना ॥ ॥ अत्रप्रधानं श्रीमदनंतमश्वत्थसमित् १ तिल २ व्रीहि ३ यव ४ घृत ५ पायस ६ द्रव्यैः प्रत्येकमष्टोत्तरशत १०८ संख्याकाहुतिभिः पीठदेवताःआवरणदेवताश्चैकैकयाज्याहुत्यापायसाज्याहुत्यावा ब्रह्मादिदेवताश्चैकैकयाज्याहुत्यायक्ष्ये ॥ स्थापनमंत्रैर्होमः ॥ केचिद्द्विवैवहोममिच्छंति ॥ प्रातर्ब्राह्मणभोजनमात्रंदिवैवसर्ववा ॥ ततःपीठंसंपूज्यवस्त्रादिनाआचार्यसं

पूज्यपीठंदद्यात् ॥ तत्रमंत्रः ॥ प्रतिगृह्णद्विजश्रेष्ठसमस्तफलदायक ॥ त्वत्प्रसादादहंविप्रमुच्येयंभवबंधनात् ॥ अनंतःप्रतिगृ
ह्णातिअनंतोवैददातिच ॥ अनंतस्तारकोभाभ्यामनंतायनमोनमः ॥ ततःचतुर्दशब्राह्मणान्वस्त्रादिनासंपूज्यपक्वान्नादिना
भोजयेत् ॥ इत्यनंतचतुर्दशीव्रतम् ॥ ॥ छ ॥ ॥ छ ॥

## ॥ २१५ ॥ अथवैकुंठचतुर्दशीव्रतम् ॥

श्रीः ॥ तिथ्यादिसंकीर्त्यआत्मनःसर्वपापक्षयपूर्वकशिवपदप्राप्तिकामनयाऽचरितवैकुंठचतुर्दशीव्रतोद्यापनंकरिष्ये ॥ वृताचा
र्यःलिंगतोभद्रस्थकलशेहैमंविश्वेश्वरंपूजयेत् ॥ प्रातरग्निंप्रतिष्ठाप्यघृताक्ततिलैःअष्टोत्तरशतं ॐ नमःशिवायेतिमंत्रेणहुत्वाव्रत
पूर्तयेगांपीठदानंआचार्यपूजनंब्राह्मणेभ्योदक्षिणावायनादिदत्वासंभोज्याशिषोगृह्णीयात् ॥ इतिवैकुंठचतुर्दशीव्रतम् ॥ ॥

## ॥ २१६ ॥ अथशिवरात्रिव्रतम् ॥

श्रीः ॥ तिथ्यादिसंकीर्त्यआत्मनःसर्वपापक्षयपूर्वकमक्षयभोगमोक्षप्राप्त्यर्थंआचरितशिवरात्रिव्रतोद्यापनंकरिष्ये ॥ वृताचार्यः
अन्यैर्द्वादशब्राह्मणैःसहपूजामारभेत् ॥ द्वादशलिंगोद्भवेपीठेउक्तविधिनाब्रह्मादिदेवताःसंपूज्य ॥ तत्रमध्यमकुंभेउमामहेश्व
रंत्र्यंबकमितिमंत्रेणप्रतिष्ठाप्यपुरतोराजतंवृषभंचप्रतिष्ठापयेत् ॥ द्वादशब्राह्मणाःद्वादशलिंगस्थकलशेषुद्वादशप्रतिमाःपूज
येयुः ॥ तत्रप्राच्यां महेशं अघोरं पशुपतिं ॥ दक्षिणस्यां पंचवक्त्रं उग्रं रुद्रं ॥ पश्चिमायां भवं शर्वं शंभुं ॥ उत्तरस्यां शिवं
भीमं भीमपराक्रमं ॥ प्रतिकलशंपरितोलोकपालान् ॥ अत्रप्रधानं ॥ उमामहेश्वरं पायस १ बिल्वपत्र २ तिल ३ दूर्वा ४

घृत ५ द्रव्यैः प्रत्येकंअष्टोत्तरशत १०८ संख्याकाहुतिभिः ॥ द्वादशकलस्थदेवताःअष्टाष्टसंख्याकाहुतिभिःतैरेवद्रव्यैः॥ परि
वारदेवताःब्रह्मादिदेवताश्चैकैकयाज्याहुत्यायक्ष्ये ॥ एवंहोमंसंपाद्यदेवतांपूजयेत् ॥ शंभोप्रसीददेवेशसर्वलोकेश्वरप्रभो ॥ तव
रूपप्रदानेनममसंतुमनोरथाः ॥ चतुर्दशनामानि ॥ अजैकपादहिर्बुध्न्योभवःशर्वउमापतिः ॥ रुद्रःपशुपतिःशंभुर्वरदःशिवई
श्वरः ॥ महादेवोहरोभीमोनामान्येवंचतुर्दश ॥ एतैर्होमःप्रकर्तव्यःकुंभदानेपितान्स्मरेत् ॥ ( पक्षे उमायुक्तशिवोदेवता
त्र्यंबकंगौरीर्मिमायेतिमंत्रौतिलव्रीहिपायसयवद्रव्याणि ॥ अजैकपादादिनामभिश्चतुर्दशाहुतिसंख्याकोबिल्वपत्रैर्होमः ) ॥
अन्यत्समानं ॥ इतिशिवरात्रिव्रतम् ॥ ॥ छ ॥ ॥ छ ॥

## ॥ २१७ ॥ अथवटसावित्रीव्रतम् ॥

श्रीः ॥ तिथ्यादिसंकीर्त्यममभर्तुःपुत्रादीनांचआयुरारोग्यैश्वर्यादिप्राप्तिपूर्वकमिहजन्मनिजन्मांतरेचआत्मनःअवैधव्यप्राप्तये
आचरितवटसावित्रीव्रतोद्यापनंकरिष्येइतिसंकल्प्य ॥ वृताचार्योवटमूलेगृहेवामृदावेदींविधायतत्रसर्वतोभद्रंविरच्यतत्रब्रह्मा
दिदेवताःसंपूज्यतत्रकलशद्वयंप्रतिष्ठाप्यतत्रैकस्मिन्कलशे हैमंब्रह्मजज्ञानमितिमंत्रेणब्रह्माणं गायत्रीमंत्रेणहैमींसावित्रींचप्रति
ष्ठाप्यतदुत्तरतोद्वितीयकुंभेपलादधिकरजतस्यराजतपर्यंकेहैमीः सत्यवत्सावित्री यम नारद प्रतिमाः नाममंत्रैरावाह्य पुरतःका
ष्ठभारंकुठारंचहैमंराजतंवानिधायपूजयेत्॥ अशक्तावेकस्मिन्कलशेसर्वेषांपूजनं॥ अर्घ्यंदद्यात्॥ ॐकारपूर्विकेदेविवीणापुस्तक
धारिणि॥ वेदमातर्नमस्तुभ्यमवैधव्यंप्रयच्छमे॥ पतिव्रतेमहाभागेभर्तुश्चप्रियवादिनि॥ अवैधव्यंचसौभाग्यंदेहित्वंममसुव्रते॥
पुत्रान्पौत्रांश्चसौख्यंचगृहाणार्घ्यंनमोस्तुते ॥ प्रातरग्निंप्रतिष्ठाप्यअन्वादध्यात् ॥ सावित्रींगायत्रीमंत्रेणपायस १ घृत २ दूर्वा

३ तिल ४ व्रीहि ५ द्रव्यैःप्रत्येकमष्टोत्तरशतसंख्याकाहुतिभिः ॥ ब्रह्माणं धर्मराजं नारदंचव्याहृतिमंत्रेण तिल १ व्रीहि २ यव ३ द्रव्यैः प्रत्येकमष्टोत्तरशत १०८ संख्याकाहुतिभिः ॥ ब्रह्मादिदेवताश्चैकैकयाज्याहुत्यायक्ष्ये ॥ शूर्पवायनमंत्रः ॥ सोपस्करंद्विजश्रेष्ठव्रतसंपूर्तिकारकम् ॥ वायनंतेप्रयच्छामिसावित्रीप्रीयतामिति ॥ रात्रावरुंधतींदृष्ट्वासंपूज्यार्घ्यंदद्यात् ॥ अरुंधतिनमस्तेस्तुवसिष्ठस्यप्रियेशुभे ॥ पुत्रान्देहिसुखंदेहिगृहाणार्घ्यंनमोस्तुते ॥ इतिदत्वाभुंजीत ॥ इतिवटसावित्रीव्रतम् ॥

## ॥ २१८ ॥ अथकोजागरव्रतम् ॥

श्रीः ॥ तिथ्यादिसंकीर्त्यआत्मनःस्वकुलस्यचाखंडलक्ष्मीप्राप्तिपूर्वकसुखादिप्राप्तयेलक्ष्मीप्रीत्यर्थंकोजागरव्रतंकरिष्ये ॥ रात्रौमंडलेसक्तुमिवतितउनेतिमंत्रेणलक्ष्मीं० इंद्रंनरोनेमधिताहवंतेयत्पार्यायुनजंतेधियस्ताः ॥ शूरोनृषाताशवसश्चकानआगोमतिव्रजेभजात्वंनः ॥ इतिमंत्रेण मत्तैरावतस्थमिंद्रमावाह्यपूजयेत् ॥ परितोदीपान्घृतेनतैलेनवालक्षंतदर्धंतदर्धंवायथाशक्तिवादत्वावीथीचतुष्पथेवादत्वानारिकेलोदकमात्रंप्राश्याक्षैर्दीव्यन्नुत्सवेनरात्रिंनिनयेत् ॥ प्रातर्घृतशर्करापायसादिनाब्राह्मणान्संतर्प्यदक्षिणांदत्वाऽशिषोगृहीत्वाइष्टजनैःसहभुंजीत ॥ इतिकोजागरव्रतम् ॥ ॥ ॥ ॥

## ॥ २१९ ॥ अथसोमवत्यमावास्याव्रतम् ॥

श्रीः ॥ तिथ्यादिसंकीर्त्यआत्मनःअवैधव्यपुत्रपौत्रप्राप्तिपूर्वकमतुलसौभाग्यसिद्धिद्वाराश्वत्थरूपीनारायणप्रीत्यर्थंआचरितस्यसोमवत्यमावास्याव्रतस्यसांगतासिद्ध्यर्थंतदुद्यापनाख्यंकर्मकरिष्ये इतिसंकल्प्य वृताचार्यःसर्वतोभद्रस्थकलशेरौप्यमयपीठेसौवर्णाश्वत्थाधोहैमंलक्ष्मीनारायणंइदंविष्णुरितिमंत्रेणप्रतिष्ठाप्यपूजयेत् ॥ मूलतोब्रह्मरूपायेतिपुरुषसूक्तेनवापूजयेत् ॥ प्रातर

ग्निंप्रतिष्ठाप्यान्वादध्यात् ॥ अत्रप्रधानं ॥ लक्ष्मीनारायणमश्वत्थसमित् १ पायस २ तिल ३ द्रव्यैः प्रत्येकमष्टोत्तरशत १०८ संख्याकाहुतिभिःब्रह्मादिमंडलदेवताश्चैकैकयाज्याहुत्यायक्ष्ये ॥ आचार्यपूजनंपीठदानंवायनदानंब्राह्मणभोजनंचकुर्यात् ॥

## ॥ २२० ॥ अथपिठोरीव्रतम् ॥

श्रीः ॥ तिथ्यादिसंकीर्त्यआत्मनःस्वकुलस्यचसंतत्यविच्छेदपूर्वकपुत्रपौत्रलक्ष्मीसुखाद्यभिवृद्धयेसप्तवर्षावध्याचरितपिठोरीव्रतस्यसंपूर्णतासिद्ध्यर्थचतुःषष्टियोगिनीस्वरूपासप्तमातृकाप्रीत्यर्थंतदुद्यापनाख्यंकर्मकरिष्ये ॥ वृताचार्यः सर्वतोभद्रेसप्तकलशेषु ब्राह्म्यादिसप्तमातरः ॥ ॐ जज्ञानंसप्तमातरोवेधामशासतश्रिये ॥ अयंध्रुवोर्रयीणांचिकेतयत् ॥ इत्यनेनआवाह्यपूजयेत् ॥ तदुत्तरेकलशेचतुःषष्टियोगिनीरावाहयेत् ॥ प्रधानं ॥ सप्तमातृःअष्टोत्तरशतमाज्याहुतिभिःयोगिनीर्ब्रह्मादयश्चैकैकयाज्या

१ चतुःषष्टियोगिन्यस्तु—दिव्ययोगिनीं १ महायोगिनीं २ सिद्धयोगिनीं ३ गणेश्वरीं ४ प्रेताक्षीं ५ डाकिनीं ६ कालीं ७ कालरात्रीं ८ निशाचरीं ९ ॐकारीं १० रुद्रवेतालीं ११ ह्रींकारीं १२ भूतडांवरीं १३ ऊर्ध्वकेशीं १४ विरूपाक्षीं १५ शुष्कांगीं १६ नरभोजनां १७ भराडीं १८ वीरभद्रां १९ धूम्राक्षीं २० कलहप्रियां २१ राक्षसीं २२ घोररक्ताक्षीं २३ विरूपां २४ भयंकरीं २५ भासुरीं २६ रौद्रवेतालीं २७ श्रीपर्णीं २८ त्रिपुरांतकां २९ भैरवीं ३० ध्वंसनीं ३१ क्रोधिनीं ३२ दुर्मुखीं ३३ प्रेतवाहिनीं ३४ कंटकीं ३५ त्राटकीं ३६ यमदूतीं ३७ करालीं ३८ खट्वांगीं ३९ दीर्घलंबोष्ठीं ४० मालिनीं ४१ मंत्रयोगिनीं ४२ कालाग्निगृहिणीं ४३ चक्रीं ४४ कंकालीं ४५ भुवनेश्वरीं ४६ स्फाराक्षीं ४७ कार्मुकीं ४८ लौकिकीं ४९ काकदृष्टिं ५० भक्षणीं ५१ अधोमुखीं ५२ प्रेरणीं ५३ व्याघ्रीं ५४ कंकणीं ५५ प्रेतभक्षणीं ५६ वीरकौमारिकां ५७ चंडां ५८ वाराहीं ५९ मुंडधारिणीं ६० कामाक्षीं ६१ उड्डाणीं ६२ जालंधरां ६३ महालक्ष्मीं ६४ ॥ इति ॥

हुत्वा ॥ पीठदानमंत्रः ॥ सोपस्करंचकलशंगृहाणद्विजसत्तम ॥ प्रीयंतांमातरोमह्यंलोकानांस्थितिहेतवः ॥ इतित्रिपिठोरीव्रतम् ॥

## ॥ २२१ ॥ अथसूर्यव्रतम् ॥

श्रीः ॥ तिथ्यादिसंकीर्त्यआत्मनोरोगक्षयपुत्रलाभादिप्राप्तिपूर्वकाभीष्टकामनासिद्ध्यर्थंवर्षात्मकसूर्यव्रतोद्यापनंकरिष्ये ॥ उक्त प्रकारेणवृताचार्योमध्याह्नेसर्वतोभद्रेकलशंप्रतिष्ठाप्यतदुपरिपूर्णपात्रंनिधायतत्रद्वादशारंकमलंरौप्यमयंरथं तदुपरिहैमंसंज्ञा सहितंसहस्रकिरणंआकृष्णेनेतिमंत्रेणप्रतिष्ठाप्य परितोद्वादशदलेषुद्वादशमासाधिपान्क्रमेणपूजयेत् ॥मित्रं १ विष्णुं २ वरुणं ३ सूर्यं ४ भानुं ५ तपनं ६ इंद्रं ७ रविं ८ गभस्तिं ९ यमं १० हिरण्यरेतसं ११ दिवाकरं १२ ॥ अर्घ्यमंत्रः ॥ नमःसहस्रकिर णसर्वव्याधिविनाशन ॥ गृहाणार्घ्यमयादत्तंसंज्ञयासहितोरवे ॥ अन्वादध्यात् ॥ संज्ञासहितंसहस्रकिरणंपायसद्रव्येणाष्टोत्तर शतसंख्याकाहुतिभिःद्वादशपरिवारदेवताःब्रह्मादिदेवताश्चैकैकयाज्याहुत्यायक्ष्ये ॥ ततोद्वादशब्राह्मणान्संतर्पयेत् ॥ इति ॥

## ॥ २२२ ॥ अथाशादित्यव्रतम् ॥

श्रीः ॥ तिथ्यादिसंकीर्त्यआत्मनःसकलरोगनिरसनपूर्वकपुत्रपौत्रसकलाभीष्टसिद्धिद्वारासवितृप्रीत्यर्थंआशादित्यव्रतंकरिष्ये ॥ तत्रमंत्रः ॥ यथाशाविमलाःसर्वास्तवभास्करभानुभिः ॥ तथाशाविमलामह्यंकुरुनित्यंममार्घ्यतः ॥ नमोस्तुतेपापविनाशनाय विश्वात्मनेसप्ततुरंगमाय ॥ सामर्ग्यजुर्धामनिधेविधात्रेभवाब्धिपोतायनमःसवित्रे ॥ अनेनमंत्रेणमासाधिपनाममंत्रेणचपूजा कार्या ॥ मासाधिपनामानि सूर्यः १ धाता २ वरुणः ३ माधवः ४ हरिः ५ रविः ६ रुद्रः ७ भर्गः ८ स्वर्णरेताः ९ अर्यमा

१० भानुः ११ भास्करः १२ ॥ वृताचार्यःसर्वतोभद्रेरक्तवस्त्रवेष्टितंताम्रकलशंतत्रपूर्णपात्रेद्वादशारंकमलंविरच्यतन्मध्येरौप्यरथेहैमंसवितारं आकृष्णेनेतिमंत्रेणसंस्थाप्यपरितोद्वादशदलेषुपूर्वोक्तान्द्वादशमासाधिपान्प्रतिष्ठाप्यउक्तप्रकारेणपूजयेत् ॥ ततोग्निंप्रतिष्ठाप्यहोमयेत् ॥ प्रधानंसवितारंपायस १ द्रव्येणाष्टोत्तरशत १०८ संख्याकाहुतिभिः ॥ मासाधिपद्वादशदेवताः ब्रह्मादिदेवताश्चैकैकयाज्याहुत्यायक्ष्ये ॥ अत्रपायसपूरितताम्रपात्रदानमुक्तं ॥ होमःकृताकृतः ॥ इत्याशादित्यव्रतम् ॥

## ॥ २२३ ॥ अथसोमवारव्रतम् ॥

श्रीः ॥ तिथ्यादिसंकीर्त्यआत्मनःअशेषपापक्षयपूर्वकसत्पुत्रप्राप्तिधनधान्यैश्वर्यादिवृद्धिद्वाराऽमुककामनयावाचरितस्यसोमवारव्रतस्यसांगतासिद्ध्यर्थतदुद्यापनंकरिष्ये ॥ वृताचार्यःलिंगतोभद्रंविरच्यतत्रब्रह्मादिदेवताआवाह्य तदुपरिकलशंपूर्णपात्रेहैमंशिवंत्र्यंबकमितिमंत्रेण हैमींगौरींचगौरीर्मिमायेतिमंत्रेणपुरतोराजतंवृषभंऋषभंमाइतिमंत्रेणप्रतिष्ठाप्य पुरतः पूर्वादिक्रमेण अनंतं १ सूक्ष्मं २ शिवं ३ उत्तमं ४ त्रिमूर्तिं ५ रुद्रं ६ श्रीकंठं ७ शिखंडिनं ८ ॥ पुनराग्नेयादिविदिक्षु गणेशं १ मातॄः २ दुर्गां ३ क्षेत्रपालं ४ ॥ पुनःपूर्वादिदिक्षु लोकेशां तत्तन्मंत्रैःप्रतिष्ठाप्यपूजयेत् ॥ प्रातरग्निंप्रतिष्ठाप्यान्वादध्यात् ॥ सोमंशिवं त्र्यंबकमितिमंत्रेणपलाशसमिद्भिः आप्यायस्वेतिमंत्रेणपृषदाज्येन त्वंसोमासीतिमंत्रेण यव १ व्रीहि २ पायस ३ तिल ४ आज्य ५ द्रव्यैःप्रत्येकमष्टोत्तरशत १०८ संख्याकाहुतिभिः ॥ गौरींचत्रिमध्वाक्तदूर्वाभिस्तावतीभिःपरिवारदेवताब्रह्मादिदेवताश्चैकैकयाज्याहुत्यायक्ष्ये ॥ ततःपीठंव्रतपूर्त्यैधवलांगांचआचार्यायदत्वाआशिषोगृहीत्वास्वयंभुंजीत॥इतिसोमवारव्रतं॥

## ॥ २२४ ॥ अथशिवामुष्टिव्रतम् ॥

श्रीः ॥ तिथ्यादिसंकीर्त्यममेहजन्मनिअखिलपापक्षयपूर्वकदुःखदारिद्र्यनाशविपुलसुखसौभाग्यैश्वर्यपुत्रपौत्रादिप्राप्त्यर्थंश्रीशिवप्रीत्यर्थंपंचवर्षात्मकंपंचधान्येनशिवमुष्टिव्रतंकरिष्ये ॥ मंत्रपुष्पांतेधान्यंसमर्प्य ॥ वृताचार्यः एकलिंगोद्भवपीठेकलशंसंस्थाप्यराजतंपूर्णपात्रंनिधायतत्रहैमींउमेशप्रतिमांराजतंवृषभंसंस्थाप्यलोकेशानावाह्यपूर्ववत्पूजयेत् ॥ सुवर्णनिर्मितंधान्यंकृत्वापंचसंख्ययात्रीणिएकैकंवासमर्पयेत् ॥ सुवर्णबिल्वदलानिअथवारौप्यमयानिकृत्वाधान्यसंख्ययासमर्पयेत् ॥ अग्निंप्रतिष्ठाप्यान्वादध्यात् ॥ अत्रप्रधानं ॥ उमेशंसमित् १ तिल २ आज्य ३ द्रव्यैःगायत्रीमंत्रेणअष्टोत्तरशतसंख्याहुतिभिःलोकपालान्ब्रह्मादिदेवताश्चैकैकयाज्याहुत्यायक्ष्ये ॥ ततःशिवायपंचरत्नादिसमर्पयेत् ॥ इतिशिवामुष्टिव्रतम् ॥ ॥ छ ॥

## ॥ २२५ ॥ अथमंगलागौरीव्रतम् ॥

श्रीः ॥ तिथ्यादिसंकीर्त्यआत्मनोऽवैधव्यपुत्रपौत्राद्यैहिकनानाविधभोगप्राप्तिपूर्वकगौरीलोकप्राप्त्यर्थंआचरितंयत्पंचवर्षात्मकंमंगलागौरीव्रतंतत्संपूर्णफलावाप्तयेतदुद्यापनंकरिष्ये ॥ वृताचार्यःएकलिंगोद्भवेब्रह्मादिदेवतास्थापनपूर्वकंदृषदुपरिकलशंप्रतिष्ठाप्यतत्रहैमींगौरींगौरीर्मिमायेतिमंत्रेणप्रतिष्ठाप्यपूजयेत् ॥ परितःपिष्टजान्डमर्वाकारान्षोडशतंतुवर्तियुतान्दीपान्प्रज्वालयेत् ॥ प्रातरग्निंप्रतिष्ठाप्यान्वादध्यात् ॥ गौरीं घृत १ तिल २ अक्षता ३ बिल्वदल ४ द्रव्यैःप्रतिद्रव्यमष्टोत्तरशत १०८ सं

---

१ प्रथमेशालितंदुलान् १ द्वितीयेयवान् २ तृतीयेगोधूमान् ३ चतुर्थेचणकान् ४ पंचमेमुद्गान् ५एकैकंपंचप्रस्थंप्रस्थंवाअशक्तौनिष्किंचनेतुन्यूनंग्राह्यं ॥

ख्याकाहुतिभिः ब्रह्मादिदेवताश्चैकैकयाज्याहुत्यायक्ष्ये ॥ दंपतीसंपूज्यसौभाग्यद्रव्यवस्त्रदक्षिणाफलतांबूलादिसहितंपक्वान्नपूरितवंशपात्रं उपायनमिदंद्रव्यमितिमंत्रंपठंस्तद्दत्वाततआचार्यसंपूज्यरौप्यपात्रेसुवर्णवर्तिसंयुतंदीपंकृत्वाचार्यायदत्वासोपस्करंपीठंव्रतपूर्तयेगांचदत्वाताम्रपात्रंपक्वान्नपूरितंवस्त्रादियुतंमात्रेदत्वापरमान्नेनभूदेवान्संतर्पयेत् ॥ इतिमंगलागौरीव्रतम् ॥ ॥

## ॥ २२६ ॥ अथभौमवारव्रतम् ॥

श्रीः ॥ तिथ्यादिसंकीर्त्यअभीष्टकामनासिद्ध्यर्थंआचरितंयद्भौमवासरव्रतंतत्संपूर्णफलावाप्तयेतदुद्यापनंकरिष्येइतिसंकल्प्यवृताचार्यउक्तविधिनासर्वतोभद्रेकलशप्रतिष्ठांतंकृत्वा तत्रहैमंमंगलमुक्तपूजाविधिनासंपूज्य ( ॐ ह्रींश्रीमंगलायनमःअयंमूलमंत्रः ॥ अंगारकायविद्महेभूमिपुत्रायधीमहि ॥ तन्नोभौमःप्रचोदयात्इयंगायत्री ॥ अग्निर्मूर्धेतिवैदिकोमंत्रः ) सुवर्णपुष्पैर्विशेषपूजांकृत्वा ॥ मंगलोभूमिपुत्रश्चऋणहर्ताधनप्रदः ॥ स्थिरासनोमहाकायःसर्वकर्मावरोधकः ॥ लोहितोलोहिताक्षश्चसामगानांकृपाकरः ॥ धरात्मजःकुजोभौमोभूतिदोभूमिनंदनः ॥ अंगारकोयमश्चैवसर्वरोगापहारकः ॥ वृष्टिकर्तापहर्ताचसर्वकामफलप्रदः ॥ अत्रप्रधानं ॥ मंगलंगुडाज्यमिश्रिततिलद्रव्येणाष्टोत्तरसहस्रसंख्याकाहुतिभिःमूलमंत्रेणगायत्र्यावावैदिकेनवाएकविंशतिपरिवारदेवताःतेनैवद्रव्येणाष्टाष्टसंख्याकाहुतिभिःब्रह्मादिदेवताश्चैकैयाज्याहुत्यायक्ष्ये ॥ मंगलोभूमिपुत्रश्चेत्याद्याएकविंशतिदेवतास्तासांनाममंत्रेणहोमः ॥ मंगलःप्रतिगृह्णातिमंगलोवैददातिच ॥ मंगलस्तारकोभाभ्यांमंगलायनमोनमः ॥ इति ॥

## ॥ २२७ ॥ अथशनैश्चरव्रतम् ॥

श्रीः ॥ तिथ्यादिसंकीर्त्यआत्मनःअखिलदुःखदौर्भाग्यनिरसनपूर्वकंइहजन्मनिजन्मांतरेचअतुलसुखपुत्रपौत्रधनधान्याद्यभि

वृद्ध्यर्थंशनैश्चरव्रतंकरिष्ये ॥ शनैश्चरंदीर्घदेहंदंडपाशधरंतथा ॥ पिंगाक्षंस्थूलदेहंचध्यायामिरविनंदनम् ॥ इतिध्यात्वा ॥ शमग्निरग्निरितिवैदिकेन शनैश्चरायनमइतिनाममंत्रेणवापूजयेत् ॥ अत्रप्रधानंशनैश्चरंशमीसमित्१तिल२आज्य३द्रव्यैःप्रत्येकमष्टोत्तरशतसंख्याहुतिभिः ब्रह्मादिदेवताश्चैकैकयाज्याहुत्या ॥ ततोविप्रंसंपूज्यप्रस्थतिलानांवायनंसदक्षिणंदत्वादेवंविसृजेत् ॥

## ॥ २२८ ॥ अथशिवलक्षपूजाव्रतम् ॥

श्रीः ॥ तिथ्यादिसंकीर्त्यममअनेकजन्मार्जितदुरितादिनिवृत्तिपूर्वकंऐहिकपुत्रपौत्रादिविविधसुखप्राप्त्यनंतरशिवलोकनिवासकामनयाकृतंयल्लक्षपूजाविधानंतत्संपूर्णफलावाप्तयेतदुद्यापनाख्यंकर्मकरिष्ये ॥ ततोवृताचार्यःवेदिकालिंगतोभद्रस्थकलशेधान्यपूरितपूर्णपात्रेमध्येसौवर्णमहेशंनमःशंभवेचमयोभवेचेतिमंत्रेणसंस्थाप्य तद्वामभागेसौवर्णींगौरींचगौरीर्मिमायेतिमंत्रेणसंस्थाप्य पुरतोराजतंवृषभंऋषभंमेतिमंत्रेणसंस्थाप्यपरिवारदेवताःस्थापयेत् ॥ पूर्वादिदिक्षु अधर्मं० अवैराग्यं० अनैश्वर्यं० महेश्वरं० ॥ तद्बहिः ऐशान्यांईशानवक्राय० पूर्वेतत्पुरुषाय० दक्षिणेअघोरवक्राय० पश्चिमेसद्योजातवक्राय० उत्तरेवामदेववक्राय ॥ पूर्वादिषु वामायै० श्रेष्ठायै० काल्यै० उन्मन्यै० ॥ पुनःपूर्वामारभ्यैशानीपर्यंतं अजैकपदे० अहिर्बुध्न्याय० भवाय० शर्वाय० उमापतये० रुद्राय० पशुपतये० शंभवे० वरदाय० शिवाय० ईश्वराय० ॥ पुनःपूर्वे नंदिकालौ० दक्षिणेभृंगिचंडौ० पश्चिमेवृषस्कंदौ० उत्तरे देशकालौ० ततइंद्रादिलोकेशान् एवंसंस्थाप्यपूजयेत् ॥ प्रधानम् ॥ सोमंमहेशंतिलद्रव्येणायुतसंख्याकाहुतिभिःसहस्रपरिमिताभिर्वापरिवारदेवतामंडलदेवताश्चएकैकयातिलाहुत्याज्याहुत्यावायक्ष्ये ॥ शेषेणेत्यादिसमानं ॥

## ॥ २२९ ॥ अथविष्णुलक्षपूजाव्रतम् ॥

श्रीः ॥ तिथ्यादिसंकीर्त्यअखिलनानाविधपातकशमनपूर्वकमैहिकामुष्मिकनिरतिशयानंदप्राप्तिद्वारालक्ष्मीनारायणप्रीत्यर्थंतुलस्यादिलक्षव्रतोद्यापनंकरिष्ये ॥ वृताचार्योवेदिकायांसर्वतोभद्रेब्रह्मादिदेवतास्थापनपूर्वकंकलशंप्रतिष्ठाप्य तत्रसौवर्णंचतुर्भुजंलक्ष्म्यालिंगितवामांगंनारायणंसहस्रशीर्षेतिमंत्रेणसंस्थाप्यपुरतःसौवर्णंराजतंवागरुडं ॥ सामध्वनिशरीरस्त्वंवाहनंपरमेष्ठिनः ॥ विषपापहरोनित्यमतःशांतिंप्रयच्छमेइति ॥ ततईशान्यादिविदिक्षुशंखंचक्रंगदांपद्मंच ॥ ततःपरितोलोकेशान्संस्थाप्यपूजयेत् ॥ प्रातरग्निंप्रतिष्ठाप्यान्वादध्यात् ॥ अत्रप्रधानं लक्ष्मीनारायणं ॐ नमोनारायणायेतिमंत्रेणमधुलाजमिश्रिततिल १ पायस २ घृत ३ चरु ४ द्रव्यचतुष्टयेनप्रतिद्रव्यमष्टोत्तरसहस्राहुतिभिरष्टोत्तरशताहुतिभिर्वातथाचतुष्टयेनअयुताहुतिभिःसहस्राहुतिभिर्वासहस्रनाममंत्रैर्यक्ष्येपरिवारदेवतामंडलदेवताश्चैकैकयाज्याहुत्यायक्ष्ये ॥ वायनमंत्रः ॥ जलशायीब्रह्मपितायद्गर्भेसचराचरं ॥ अनंतभोगशयनःप्रीयतांमेजनार्दनः ॥ इतिदत्वागांपयस्विनींचदत्वाधिकफलप्राप्तयेसोपस्करांशय्यांचदत्वापंचाधिकान्द्विजान्सदन्नेनभोजयेदिति ॥ एवमेवविधानेनगणेशांबिकयोर्नृप ॥ तत्तन्मंत्रेणपूजातुतत्तन्नामसहस्रकैः ॥ गणेशेलड्डुकैर्होमंपंचखाद्यैरथापिवा ॥ पायसेनतुदेव्याश्चतिलैर्वाकेवलैरपि ॥ एवंकृत्वाविधानेनस्वर्गलोकेमहीयते ॥ इतिविष्णुलक्षपूजा ॥

## ॥ २३० ॥ अथलक्षप्रदक्षिणाव्रतम् ॥

श्रीः ॥ तिथ्यादिसंकीर्त्यआत्मनोऽखिलपापरोगपीडानिरसनपूर्वकाभीष्टसिद्धिद्वाराश्रीपरमेश्वरप्रीत्यर्थंविष्णोरमुकदेवस्येतिवा अमुककामनयाकृताःप्रदक्षिणास्तत्साङ्गुण्यार्थंतदुद्यापनंकरिष्यइतिसंकल्प्य ॥ वृताचार्यःसर्वतोभद्रेकलशोपरिहैमंकृतप्रदक्षिणं

देवंतत्तन्मंत्रेणसंपूज्यसाष्टांगंप्रणमेत् ॥ ततोग्निंप्रतिष्ठाप्यान्वादध्यात् ॥ प्रधानंदेवंविष्णुंविष्णुगायत्र्याष्टोत्तरशतसंख्ययाचर्वा
१ ज्या २ हुतिभिःब्रह्मादिदेवताःएकैकयाज्याहुत्यायक्ष्ये ॥ इतिलक्षप्रदक्षिणाविधानं ॥ पिप्पलीवृक्षराजेंद्रोह्यग्निगर्भस्त्वमे
वच ॥ प्रभुर्वनस्पतीनांचपूर्वजन्मनियत्कृतं ॥ अघौघंनाशयक्षिप्रंतवरूपप्रदानतः ॥ ततोद्विजंप्रार्थयेत् ॥ अमुंतरुंगृहाणत्वं
विष्णुरूपंद्विजोत्तम ॥ स्वीकृत्यदुष्कृतंघोरंक्षिप्रंशांतिंप्रयच्छमे ॥ व्रतपूर्तयेशुक्लांगांचदद्यादिति ॥ इत्यश्वत्थप्रदक्षिणा ॥ ॥

## ॥ २३१ ॥ अथलक्षवर्तिव्रतम् ॥

श्रीः ॥ तिथ्यादिसंकीर्त्यात्मनोरजःसंपर्कादिविविधपातकक्षयागम्यागमनकोटिनाशत्रिविधैहिकपुत्रपौत्रादिसुखप्राप्तिपूर्वकवि
ष्णुलोकप्राप्तिद्वारा श्रीपरमेश्वरप्रीत्यर्थमाचरितंयल्लक्षवर्तिव्रतंतत्संपूर्णफलावाप्तयेतदुद्यापनाख्यंकर्मकरिष्येइतिसंकल्प्यवृता
चार्यःसर्वतोभद्रेकलशंप्रतिष्ठाप्य तन्मध्यदेशेइदंविष्णुरितिमंत्रेणहैमंश्रियासहितंविष्णुंतद्दक्षिणेसावित्र्यासहितंब्रह्माणंब्रह्मज
ज्ञानमितिमंत्रेण विष्णोरुत्तरेउमासहितंशंभुंनमःशंभवेचमयोभवेचेतिमंत्रेणइतिदेवतात्रयंसंस्थाप्य पुरतोराजतंगरुडंप्रतिष्ठाप्य
पूजयेत् ॥ प्रधानं लक्ष्मीसहितंविष्णुंघृतान्वितपायस १ पलाशसमित् २ घृत ३ द्रव्यैः सहस्रसंख्याकाहुतिभिः तथाब्रह्म
शंभूअष्टाविंशतितिलाहुतिभिःमंडलदेवताश्चैकैकयाज्याहुत्यायक्ष्ये ॥ अत्रक्रमः अन्नेनयक्ष्यापायसं इदंविष्णुरितिमंत्रेणपलाश
समिधः विष्णुगायत्र्याघृतंचहुनेत् ॥ दीपदानं ॥ रौप्यपात्रस्थितंदीपंहैमवर्तिसमन्वितं ॥ कांस्यपात्रेणसहितंददामिव्रतपूर्तये ॥
इतिमंत्रेणदत्वाआचार्यसंपूज्ययथाशक्तिदक्षिणांगांचदत्वाब्राह्मणभोजनंसंकल्पयेत् ॥ इत्येकसूत्रवर्तिमाणिक्यलक्षवर्तिव्रतं ॥

## ॥ २३२ ॥ अथरुद्रलक्षवर्तिव्रतम् ॥

श्रीः ॥ तिथ्यादिसंकीर्त्यममाखिलदुरितनाशाभीष्टसिद्धिपूर्वकशिवलोकप्राप्तिसांबसदाशिवप्रीत्यर्थंआचरितरुद्रलक्षवर्तिव्रतस्योद्यापनंकरिष्येइतिसंकल्प्य ॥ वृताचार्यःलिंगतोभद्रेताम्रकलशोपरिहैमंसांबंरुद्रंकद्रुद्रायेतिमंत्रेणप्रतिष्ठाप्य पुरतोवृषभंचसंपूज्यप्रधानंदेवंसांबंकद्रुद्रायेतिमंत्रेण ॐ नमःशिवायेतिमंत्रेणवा घृत १ पायस २ बिल्व ३ द्रव्यैःसहस्राहुतिभिःमंडलदेवताश्चैकैकयाज्याहुत्यायक्ष्ये ॥ होमदशांशतःसाधारणंतर्पणंकांस्यपात्रसहितंदीपदानंच ॥ इतिरुद्रबिल्वलक्षवर्तिव्रतोद्यापनम् ॥

## ॥ २३३ ॥ अथकदलीव्रतोद्यापनम् ॥

श्रीः ॥ तिथ्यादिसंकीर्त्यात्मनइहजन्मनिजन्मांतरेवासौभाग्यारोग्यपुत्रपौत्रलक्ष्मीवृद्धिसर्वदुःखनाशनपूर्वकंउमामहेश्वरप्राप्तिकामःकदलीव्रतोद्यापनंकरिष्येइतिसंकल्प्य ॥ कदल्याआलवालंकृत्वाउपरिमंडपंचतुर्द्वारंकृत्वापूजयेत् ॥ वृताचार्यःकदलीमूलदेशेमृदावेदींविधायतत्रलिंगतोभद्रेउक्तविधिनाब्रह्मादिदेवताआवाह्य तदुपरिकलशस्थपूर्णपात्रेहैमंशिवंत्र्यंबकमितिकद्रुद्रायेतिमंत्रेणवागौरींचगौरीर्मिमायेतिगायत्र्यावाप्रतिष्ठाप्यपुरतोवृषभंराजतंचपूजयेत् ॥ ततःकदलीं ॥ कदल्यैकामदायिन्यैमेधायैचनमोनमः ॥ रंभायैभूतसारायैसर्वसौख्यप्रदेनमः ॥ इत्यनेनपूजयेत् ॥ कदलीपरितोलोकपालानावाह्यततस्तैलहरिद्रादिनामंगलस्नपनंकृत्वास्त्रीभूषणैर्भूषयित्वाऽवाहनाद्युपचारैःसंपूजयेत् ॥ अत्रप्रधानं शिवंगौरींकदलींचपलाशसमित् १ मधु २ सर्पिः ३ तिल ४ व्रीहि ५ द्रव्यैः तिलाज्याभ्यांवाप्रत्येकमष्टोत्तरशतमष्टाविंशतिवासंख्याकाहुतिभिः ब्रह्मादिदेवताश्चैकैकयाज्याहुत्या ॥ क्रमेणहोममंत्राः कद्रुद्रा १० गौरीर्मिमायेति ॥ ॐ आंह्रींक्लींकामिन्यैविद्महेत्रैलोक्यक्षोभिण्यैधीमहि ॥ तन्नः

कदलीप्रचोदयात् ॥ उमेगौरिनमस्तुभ्यंनमस्तेविश्वधारिणि ॥ परमानंदरूपिण्यैकदल्यैतेनमोनमः ॥ वायनंदद्यात्॥ ततआचार्यायसंपूज्यपीठंकदलींचदद्यात् ॥ तत्रमंत्रः ॥ कदलींकामदात्रींचसर्वसौख्यप्रदायिनीम् ॥ गिरिजाहररूपांवैब्राह्मणायददाम्यहम् ॥ प्रतिगृह्णद्विजश्रेष्ठसमस्तफलदायक ॥ कदल्याश्चप्रदानेनपूर्णाःसंतुमनोरथाः ॥ कदलीप्रतिगृह्णातिकदलींवैददातिच ॥ कदलीतारकोभाभ्यांकदल्यैतेनमोनमः ॥ कदलीदानसांगतासिद्ध्यर्थंहिरण्यद० ॥ इतिकदलीव्रतोद्यापनम् ॥ ॥

## ॥ २३४ ॥ अथकर्कटीव्रतम् ॥

श्रीः ॥ देशकालौनिर्दिश्यममसकलसौभाग्यपुत्रपौत्रप्राप्त्यर्थंश्रीउमामहेश्वरप्रीत्यर्थंकर्कटीव्रतंकरिष्ये ॥ वृताचार्यःलिंगतोभद्रे कद्रुद्रायेतिरुद्रंगौरीर्मिमायेतिउमांचप्रतिष्ठाप्यध्यानं ॥ सूर्यकोटिप्रतीकाशंत्रिनेत्रंचंद्रभूषणम् ॥ शूलवज्रगदाकुंभपाशांकुशधरं विभुं ॥ वरदाभयपाणिंचसर्वाभरणभूषितं ॥ उमालिंगितसर्वांगंशांतंध्यायेत्सदाशिवं ॥ षोडशोपचारैःसंपूज्य ॥ कर्कटीवल्लीं चसंपूज्य ॥ प्रार्थना ॥ कल्पवल्लिमहाभागेसौभाग्यारोग्यदायिनि ॥ प्रार्थयामिव्रतादौत्वांभर्तुःश्रेयोऽभिवृद्धये ॥ अत्रप्रधानं उमांमहेश्वरंच पायस १ आज्य २ तिल ३ द्रव्यैः आवाहनोक्तमंत्रेणप्रत्येकंप्रतिद्रव्यमष्टोत्तरशतमष्टाविंशतिवासंख्याहुतिभिः ब्रह्मादिदेवताएकैकयाहुत्याएवंहुत्वा ॥ दानमंत्रः ॥ कर्कटीनामयावल्लीविधात्रानिर्मितापुरा ॥ तस्याःफलप्रदानेनपूर्णाःसंतुमनोरथाः ॥ गृहाणेमांमहावल्लींसफलांवस्त्रसंयुतां ॥ कल्पितंमेफलंचास्तुव्रतेनममशंकर ॥ पीठंगांचाचार्यायदद्यात् ॥ इति ॥

## ॥ २३५ ॥ अथकूष्मांडीव्रतम् ॥

श्रीः ॥ तिथ्यादिसंकीर्त्यआत्मनःसत्पुत्रप्राप्तिपूर्वकंअतुललक्ष्मीसुखाभिवृद्धिद्वाराब्रह्मसावित्रीप्रीत्यर्थंकूष्मांडीव्रतोद्यापनंकरि

ष्ये ॥ ततोवृताचार्यःसर्वतोभद्रेहेमप्रतिमयोःब्रह्मसावित्र्यौब्रह्मजज्ञानंप्रणोदेवीतिमंत्राभ्यांप्रतिष्ठाप्यपूजयेत् ॥ कूष्मांडीपूजन मंत्रः ॥ कूष्मांड्यैकामदायिन्यैब्रह्माण्यैतेनमोनमः ॥ नमोस्तुसुखदात्र्यैचसावित्र्यैतेनमोनमः ॥ ब्रह्माणंसावित्रींचघृत१तिल २ द्रव्येणप्रत्येकमष्टोत्तरशत १०८ संख्याकाहुतिभिः ब्रह्मादिदेवताश्चैकैकयाज्याहुत्यायक्ष्ये ॥ कूष्मांडीदानमंत्रः॥ कूष्मां डींबहुबीजाढ्यांवस्त्रालंकारभूषितां ॥ दक्षिणाकलशोपेतांहैमकूष्मांडसंयुताम् ॥ सावित्रीब्रह्मसंप्रीत्यैगृहाणद्विजसत्तम ॥ सौभाग्यद्रव्ययुतवायनानिउपायनमितिमंत्रेणयथाशक्तिदद्यात् ॥ ततःपीठंव्रतपूर्तयेगांचदत्वाब्राह्मणान्संतर्पयेदिति ॥ इति॥

## ॥ २३६ ॥ अथकूष्मांडाष्टकफलदानम् ॥

श्रीः ॥ भविष्ये ॥ ब्रह्महत्यादिपापघ्नंकूष्मांडंशुभसौख्यदं ॥ कार्तिकेरथसप्तम्यांदद्यात्पुण्यदिनेष्वपि ॥ अद्येत्यादि० ममब्र ह्महननादिसमस्तपापक्षयपूर्वकबहुपुत्रपौत्रसौभाग्यादिसकलमनोरथावाप्तिकूष्मांडबीजसमसहस्रसंख्याकाब्दब्रह्मलोकनिवा सकामोहंकूष्मांडाष्टकफलदानंकेवलैककूष्मांडदानंवाकरिष्ये ॥ गणपतिपूजनंकूष्मांडपूजनंब्राह्मणपूजनंचकरिष्ये ॥ प्रस्थमि तव्रीहिगोधूमराश्युपरिकूष्मांडान्संस्थाप्य ॥ ब्रह्मसावित्रीदैवत्यायरुद्रदैवत्यायवाकूष्मांडायनमइतिषोडशोपचारैःसंपूज्य ॥ दानमंत्रः ॥ ब्रह्महत्यादिपापघ्नंब्रह्मणानिर्मितंपुरा ॥ कूष्मांडंबहुबीजाढ्यंपुत्रपौत्रादिवृद्धिदं ॥ व्रीहीक्षुदंडचुक्रादिधात्रीफल समन्वितं ॥ फलतांबूलसंयुक्तंघृताक्तंदीपसंयुतं ॥ मुक्ताप्रवालहेमादियुक्तंदत्तंतवद्विज ॥ अनंतपुण्यफलदमतःशांतिंप्रयच्छ मे ॥ गोत्रायशर्मणेसुपूजिताय इदंकूष्मांडदानंघृताक्तंतिललिप्तंमुक्ताप्रवालहेमरत्नफलतांबूलवस्त्रदीपाद्यन्यतमयथाशक्तिसो पस्करादियुतंस्वर्णदक्षिणादियुतंतुभ्यमहंसंप्रददेनममइतिद्विजहस्तेदद्यात् ॥ इतिकूष्मांडदानविधिः ॥ ॥ छ ॥

## ॥ २३७ ॥ अथदशहराव्रतविधिः ॥

श्रीः ॥ देशकालौसंकीर्त्य ममैतज्जन्मजन्मांतरसमुद्भूतत्रिविधकायिकचतुर्विधवाचिकत्रिविधमानसेतिस्कादोक्तदशविधपापनिरासत्रयस्त्रिंशच्छतपितृउद्धारब्रह्मलोकावास्त्यादिफलप्राप्त्यर्थं ज्येष्ठमासादिदशयोगपर्वणिअस्यांमहानद्यांस्नानंतीर्थपूजनंप्रतिमायांजाह्नवीपूजांतिलादिदानंमूलमंत्रजपमाज्यहोमंचयथाशक्तिकरिष्ये ॥ यथाविधिस्नानंदशवारंकृत्वा ॥ जलेस्थितोदशवारंसकृद्वावक्ष्यमाणंस्तोत्रंपठित्वावासःपरिधानादिपितृतर्पणांतंनित्यंविधाय तीर्थेपूजांविधाय सर्पिर्मिश्रान्दशप्रसृतिकृष्णातिलान्तीर्थेजलिनाप्रक्षिप्यगुडमिश्रान्सक्तुपिंडान्दशप्रक्षिपेत् ॥ ततोगंगातटे ताम्रेमृन्मयेवास्थापितकलशेसौवर्णादिप्रतिमायांचतुर्भुजांगंगामावाहयेत् ॥ तत्रमंत्रः ॥ नमोभगवत्यैदशपापहरायैगंगायैनारायण्यैरेवत्यैशिवायैदक्षायैअमृतायैविश्वरूपिण्यैनंदिन्यैतेनमोनमः ॥ द्विजमात्रविषयोविंशत्यक्षरोयथा ॥ ॐ नमःशिवायैनारायण्यैदशहरायैगंगायैस्वाहेति ॥ एवंगंगामावाह्य ॥ नारायणंरुद्रंब्रह्माणंसूर्यंभगीरथंहिमाचलंचनाममंत्रेणतत्रैवावाह्य ॥ उक्तमूलमंत्रमुच्चार्यश्रीगंगायैनारायणरुद्रब्रह्मसूर्यभगीरथहिमवत्सहितायैआसनंसमर्पयामीत्येवमासनाद्युपचारैःपूजयेत् ॥ दशविधपुष्पैःसंपूज्यदशांगंधूपयित्वादशविधनैवेद्यांतेतांबूलदक्षिणांदत्वादशफलान्यर्पयेत्॥दशदीपान्दत्वापूजांसमापयेत्॥ दशविप्रेभ्यःप्रत्येकंषोडशषोडशमुष्टितिलान्सदक्षिणान्दद्यात् ॥ एवंयवानामपि॥ततोदशगाएकांवागांदद्यात्॥ मत्स्यकच्छपमंडूकान्सौवर्णान्राजतान्पिष्टमयान्वासंपूज्यतीर्थेक्षिपेत् ॥ एवंदीपान्प्रवाहयेत् ॥ जपहोमचिकीर्षायांपूर्वोक्तमूलमंत्रस्यपंचसहस्रसंख्याजपदशांशहोमः ॥ यथाशक्तिवाजपहोमौ ॥ तत्रदशहराव्रतांगत्वेनहोमंकरिष्येइतिसंकल्प्य स्थंडिलेग्निंप्रतिष्ठाप्यअन्वाधानेचक्षुषीआज्येनेत्यंतेश्रीगंगांअमु

कसंख्ययाआज्येन नारायणादिषड्देवताएकैकयाज्याहुत्याशेषेणस्विष्टकृतमित्यादिप्रोक्षण्यादिषट्पात्राण्यासाद्यआज्यंसंस्कृत्यथान्वाधानंजुहुयात् ॥ दशब्राह्मणान्सुवासिनीश्चभोजयेत् ॥ प्रतिपद्दिनमारभ्यस्नानादिपूजांतोविधिःकार्यइतिकेचित् ॥

## ॥ २३८ ॥ दशहरास्तोत्रंस्कांदे ॥

श्रीः ॥ ब्रह्मोवाच ॥ नमःशिवायैगंगायैशिवदायैनमोनमः ॥ नमस्तेरुद्ररूपिण्यैशांकर्यैतेनमोनमः ॥ १ ॥ नमस्तेविश्वरूपिण्यैब्रह्ममूर्त्यैनमोनमः ॥ सर्वदेवस्वरूपिण्यैनमोभेषजमूर्तये ॥ २ ॥ सर्वस्यसर्वव्याधीनांभिषक्श्रेष्ठ्यैनमोस्तुते ॥ स्थाणुजंगमसंभूतविषहंत्र्यैनमोनमः ॥ ३ ॥ भोगोपभोगदायिन्यैभोगवत्यैनमोनमः ॥ मंदाकिन्यैनमस्तेस्तुस्वर्गदायैनमोनमः ॥ ४ ॥ नमस्त्रैलोक्यभूषायैजगद्धात्र्यैनमोनमः ॥ नमस्त्रिशुक्लसंस्थायैतेजोवत्यैनमोनमः ॥५॥ नंदायैलिंगधारिण्यैनारायण्यैनमोनमः ॥ नमस्तेविश्वमुख्यायैरेवत्यैतेनमोनमः ॥ ६ ॥ बृहत्यैतेनमस्तेस्तुलोकधात्र्यैनमोनमः ॥ नमस्तेविश्वामित्रायैनंदिन्यैतेनमोनमः ॥ ७ ॥ पृथ्व्यैशिवामृतायैचसुवृषायैनमोनमः ॥ शांतायैचवसिष्ठायैवरदायैनमोनमः ॥ ८ ॥ उस्रायैशिवदोग्ध्र्यैचसंजीविन्यैनमोनमः ॥ ब्रह्मिष्ठायैब्रह्मदायैदुरितघ्न्यैनमोनमः ॥ ९ ॥ प्रणतार्तिप्रभंजिन्यैजगन्मात्रेनमोस्तुते ॥ सर्वापत्प्रतिभक्षायैमंगलायैनमोनमः ॥ १० ॥ शरणागतदीनार्तपरित्राणपरायणे ॥ सर्वस्यार्तिहरेदेविनारायणिनमोस्तुते ॥ ११ ॥ निर्लेपायैदुर्गहंत्र्यैदक्षायैतेनमोनमः ॥ परात्परतरेतुभ्यंनमस्तेमोक्षदेसदा ॥ १२ ॥ गंगेममाग्रतोभूयागंगेमेदेविपृष्ठतः ॥ गंगेमेपार्श्वयोरेहित्वयिगंगेस्तुमेस्थितिः ॥ १३ ॥ आदौमध्येतथाचांतेसर्वतोगांगतेशिवे ॥ त्वमेवमूलप्रकृतिस्त्वंहिनारायणःपरः ॥१४॥ गंगेत्वंपरमात्माचशिवस्तुभ्यंनमःशिवे ॥ यइदंपठतेस्तोत्रंभक्त्यानित्यंनरोपियः ॥ १५ ॥ शृणुयाच्छ्रद्धयायुक्तःकायवाक्चि

त्तसंभवैः ॥ दशधासंस्थितैर्दोषैःसर्वैरेवप्रमुच्यते ॥ १६ ॥ सर्वान्कामानवाप्नोतिप्रेत्यब्रह्मणिलीयते ॥ ज्येष्ठेमासिसितेपक्षेदशमीहस्तसंयुता ॥ १७ ॥ तस्यांदशम्यामेतच्चस्तोत्रंगंगाजलेस्थितः ॥ यःपठेद्दशकृत्वस्तुदरिद्रोवापिचाक्षमः ॥ १८ ॥ सोपितत्फलमाप्नोतिगंगांसंपूज्ययत्नतः ॥ अदत्तानामुपादानंहिंसाचैवविधानतः ॥ १९ ॥ परदारोपसेवाचकायिकंत्रिविधंस्मृतं ॥ पारुष्यमनृतंचैवपैशून्यंचापिसर्वशः ॥ २० ॥ असंबद्धप्रलापश्चवाङ्मयंस्याच्चतुर्विधं ॥ परद्रव्येष्वभिध्यानंमनसानिष्टचिंतनं ॥ २१ ॥ वितथाभिनिवेशश्चमानसंत्रिविधंस्मृतं ॥ एतानिदशपापानिहरत्वंममजाह्नवि ॥ दशपापहरायस्मात्तस्माद्दशहरास्मृता ॥ २२ ॥ त्रयस्त्रिंशच्छतान्पूर्वान्पितॄनथपितामहान् ॥ उद्धरत्येवसंसारान्मंत्रेणानेनपूजिता ॥ २३ ॥ नमोभगवत्यैदशपापहरायैगंगायैनारायण्यैरेवत्यैशिवायैदक्षायैअमृतायैविश्वरूपिण्यैनंदिन्यैतेनमोनमः ॥ सितमकरनिषण्णांशुभ्रवर्णांत्रिनेत्रांकरधृतकलशोद्यत्सोत्पलामत्यभीष्टां ॥ विधिहरिहरमौलौसेंदुकोटीरजुष्टांकलितसितदुकूलांजाह्नवींतांनमामि ॥ २४ ॥ आदावादिपितामहस्यनिगमव्यापारपात्रेजलंपश्चात्पन्नगशायिनोभगवतःपादोदकंपावनं ॥ भूयःशंभुजटाविभूषणमणिर्जह्नोर्महर्षेरियंकन्याकल्मषनाशिनीभगवतीभागीरथीदृश्यते ॥ २५ ॥ गंगागंगेतियोब्रूयाद्योजनानांशतैरपि ॥ मुच्यतेसर्वपापेभ्योविष्णुलोकंसगच्छति ॥ इतिस्तोत्रेणस्तुत्वाहोमांतेप्रतिमोत्तरपूजांकृत्वाविसृज्यआचार्यायमूलमंत्रेणदद्यात् ॥ इतिदशहराविधिः ॥

## ॥ २३९ ॥ अथमलमासव्रतम् ॥

श्रीः ॥ देशकालौनिर्दिश्यममसकलदुःखदारिद्र्यनाशपुत्रपौत्रैश्वर्यधर्मार्थकाममोक्षप्राप्तिद्वाराश्रीजनार्दनप्रीत्यर्थंकृतस्याचरणीयस्यचमलमासव्रतस्यसांगतार्थंव्रतोद्यापनंकरिष्ये ॥ गण० स्वस्ति० वृताचार्यःसर्वतोभद्रोपरिपरितोद्वादशमध्येएकंएवंत्रयोद

शकलशान्महीद्यौरित्याद्यावाहितेमध्यकलशेसुवर्णमयंलक्ष्मीयुतजनार्दनंअतोदेवाइत्यावाह्यपूजयेत् ॥ प्रातरग्निंप्रतिष्ठाप्यअत्र प्रधानंलक्ष्मीजनार्दनं अतोदेवेतिऋक्षट्कनसमित्तिलाज्यचरुपायसैः प्रतिद्रव्यमष्टोत्तरसहस्राहुतिभिःब्रह्मादीनेकैयाज्याहुत्या॥ ततोवायनंकांस्यपात्रेनिधायदद्यात् ॥ विप्रंसंपूज्य ॥ अधिमासेतुसंप्राप्तेश्रीजनार्दनप्रीतये ॥ नरकोत्तारणार्थायमयादानंप्र दीयते ॥ त्रयस्त्रिंशदपूपांश्चशर्कराघृतसंयुतान् ॥ सदक्षिणानहंतुभ्यंकांस्यपात्रेनिधायच ॥ दास्येजनार्दनप्रीत्यैगृहाणत्वंद्विजो त्तम ॥ मलमासस्तुमासानांमलिनःपापसंभवः ॥ तत्पापस्यविशुद्ध्यर्थंवायनंप्रददाम्यहं ॥ इदंत्रयस्त्रिंशत्संख्याकापूपवायन दानंसकांस्यपात्रंतुभ्यंसंप्रददे ॥ ततोयथाविभवमाचार्यायान्येभ्यश्चतिलपात्रंघृतपात्रं[illegible]शय्यांचदत्वापीठंगांचदत्वाब्राह्म णभोजनंसंकल्प्यकर्मेश्वरार्पणंकुर्यात् ॥ इतिमलमासव्रतोद्यापनम् ॥ ॥ ॥ ॥ छ ॥

## ॥ २४७ ॥ अथकोकिलाव्रतम् ॥

श्रीः ॥ ममेहजन्मनिजन्मांतरेचसर्वपापक्षयपूर्वकंपुत्रपौत्राविधव्यनिःसापत्न्यलक्ष्मीसौभाग्यरूपलावण्याद्यभिवृद्धिद्वारागौरी रूपाकोकिलाप्रीत्यर्थंकोकिलाव्रतंकरिष्यइतिसंकल्प्यकोकिलांपूजयेत् ॥ चूतचंपकवृक्षस्थांस्वर्णपक्षादिसंयुताम् ॥ चिंतयेत्पा र्वतींदेवींकोकिलारूपधारिणीम् ॥ अर्घ्यंगृहाणदेवेशिवांछितार्थप्रदायिनि ॥ आषाढस्याऽसितेपक्षेमेघवर्णेहरप्रिये ॥ कोकिले त्वंजगन्मातर्गृहाणार्घ्यंनमोस्तुते ॥ वृताचार्यःएकलिंगोद्भवेभद्रेब्रह्मादिदेवताःसंस्थाप्य तत्रकलशंप्रतिष्ठाप्यतदुपरिहैमींकोकि लांगौरीमिमायेतिमंत्रेणप्रतिष्ठाप्य ॥ अत्रप्रधानं कोकिलारूपिणींगौरींगौरीमिमायेतिमंत्रेणतिल १चंपकपुष्प२तंडुल३पायस ४ आज्य ५ द्रव्यैःप्रत्येकमष्टोत्तरशत १०८ संख्याकाहुतिभिः ॥ तथाव्याहृतिमंत्रेणबिल्वपत्रैःशतत्रय ३०० परिमिताहु

तिभिः ॥ ब्रह्मादिदेवताश्चैकैकयाज्याहुत्यायक्ष्ये ॥ वायनंदद्यात् ॥ तत्रमंत्रः ॥ सोपस्करंद्विजश्रेष्ठवायनंव्रतपूर्तये ॥ ददामि तेगृहाणेदंकोकिलाप्रीयतामिति ॥ आचार्यायपीठंव्रतपूर्तयेगांचदत्वादक्षिणाभोजनादिभिस्तोषयेत् ॥ इतिकोकिलाव्रतम् ॥

## ॥ २४१ ॥ अथार्धोदयव्रतम् ॥

श्रीः ॥ अमार्कश्रवणेपातेयुक्ताचेत्पौषमाघयोः ॥ अर्धोदयःसविज्ञेयःकोटिसूर्यग्रहैःसमः ( किंचिन्न्यूनंमहोदयः ) ॥ दिवैवयोगःशस्तोयंनतुरात्रौकदाचन ॥ इति ॥ तिथ्यादिसंकीर्त्य आत्मनःअखिलपापक्षयपूर्वकधर्मार्थकाममोक्षचतुर्विधपुरुषार्थसिद्धिद्वाराश्रीपरमेश्वरप्रीत्यर्थं ( ब्रह्मविष्णुशिवप्रीत्यर्थं ) अर्धोदयव्रतंकरिष्ये ॥ दर्भास्तृतशुद्धभूमौशतत्रयद्रोणपरिमिततिलानांपर्वतंकृत्वायथाशक्तिवातत्रपलाधिकंसुवर्णस्य ब्रह्मविष्णुशिवानांप्रतिमात्रयंकृत्वा ब्रह्मजज्ञानं इदंविष्णुः त्र्यंबकं इतिमंत्रैःप्रतिष्ठाप्यपूजयेत् ॥ परितोलोकेशांस्तत्तन्मंत्रैरावाहयेत् ॥ प्रार्थना॥ नमोविश्वसृजेतुभ्यंसत्यायपरमात्मने ॥ देवायदेवपतयेयज्ञानांपतयेनमः ॥ नारायणजगन्नाथनमस्तेगरुडध्वज ॥ पीतांबरनमस्तुभ्यंजनार्दननमोस्तुते ॥ महेश्वरमहेशाननमस्तेत्रिपुरांतक ॥ जीमूतकेशायनमोनमस्तेवृषभध्वज ॥ ब्रह्मविष्णुमहेशानाःकर्मणांफलहेतवः ॥ भक्त्यामयाकृतांपूजांगृह्णीध्वंजगदीश्वराः ॥ इतिसंप्रार्थ्य वृताचार्योग्निंप्रतिष्ठाप्यान्वादध्यात् ॥ ब्रह्मविष्णुमहेशान्घृताक्ततिलद्रव्येणप्रतिदैवतं सहस्रमष्टोत्तरंवा संख्याकाहुतिभिःलोकपालानेकैकयाज्याहुत्यायक्ष्ये ॥ एवंहुत्वातिलपर्वतंब्राह्मणायदद्यात् ॥ तिलपर्वतमध्यस्थाब्रह्मविष्णुमहेश्वराः ॥ दहंतुपातकंसर्वंयच्छंतुममसद्गतिम् ॥ ततोगोप्रदानं ॥ भविष्येतुब्रह्मणःपलाशसमिच्चरुतिलाज्यानिविष्णोःअश्वत्थसमित्तिलपायसान् शंभोःचर्वाज्यव्रीहयः ॥ कांस्यपात्रदानंकेवलंद्रव्यद्वारावागोप्रदानं ॥ इत्यर्धोदयव्रतम् ॥ ॥ छ ॥

## ॥ २४२ ॥ अथसमुद्रस्नानविधिः ॥

श्रीः ॥ आचम्यप्राणानायम्यदेशकालौसंकीर्त्यममकायिकवाचिकमानसिकज्ञाताज्ञातादिसकलपातकनिरासार्थंअद्यामुकपर्व निमित्तंसमुद्रस्नानंकरिष्ये इतिसंकल्प्य पाषाणंसिकतापिंडंवाहस्तेगृहीत्वा ॥ पिप्पलादसमुत्पन्नेकृत्येलोकभयंकरे ॥ पाषाण स्तेमयादत्तआहारार्थेप्रकल्प्यतां ॥ इतिसमुद्रेप्रक्षिप्यप्रार्थयेत् ॥ विश्वाचीचघृताचीचविश्वयोनेविशांपते ॥ सांनिध्यंकुरुमेदे वसागरेलवणांभसि ॥ नमस्तेविश्वगुप्तायनमोविष्णोअपांपते ॥ नमोजलधिरूपायनदीनांपतयेनमः ॥ समस्तजगदाधारशंख चक्रगदाधर ॥ देवदेहिममानुज्ञांतवतीर्थनिषेवणे ॥ त्रितत्वात्मकमीशानंनमोविष्णुमुमापतिं ॥ सांनिध्यंकुरुदेवेशसमुद्रेलव णांभसि ॥ अग्निश्चयोनिरनिलश्चदेहोरेतोधाविष्णुरमृतस्यनाभिः ॥ एतद्ब्रुवन्पांडवसत्यवाक्यंततोऽवगाहेतपतिंनदीनां ॥ इ तिपठित्वानित्यस्नानविधिवत्स्नात्वाअघमर्षणस्नानांगतर्पणंकृत्वासमुद्रायार्घ्यं ॥ सर्वदोभगवान्श्रीमान्सर्वरत्नाकरोयतः ॥ सर्वरत्नप्रधानस्त्वंगृहाणार्घ्यंमहोदधेइत्यर्घ्यंदद्यात् ॥ ततस्तर्पणं ॥ यथा ॥ पिप्पलादंतर्पयामि विकण्वं कृतांतं जीवकेश्वरं वसिष्ठं वामदेवं पराशरं उमापतिं वाल्मीकिं नारदं वालखिल्यान् नलं नीलं गवाक्षं गवयं गंधमादनं जांबवंतं हनूमंतं सुग्रीवं अंगदं मैंदं द्विविदं वृषभं रामं लक्ष्मणं यशस्विनीं सीतां तर्पयामि ॥ एवंजलमध्येतर्पणंकृत्वा ॥ आब्रह्मस्तंबपर्यंतं यत्किंचित्सचराचरं ॥ मयादत्तेनतोयेनतृप्तिमेवाभिगच्छतु ॥ इत्यंजलिंदद्यात् ॥ इतिसमुद्रस्नानविधिः ॥ ॥ छ ॥

## ॥ २४३ ॥ अथपार्थिवलिंगोद्यापनम् ॥

श्रीः ॥ तिथ्यादिसंकीर्त्याऽमुककामनामुद्दिश्यकृतानांपार्थिवलिंगानांसंपूर्णफलावाप्तयेतदुद्यापनंकरिष्येइतिसंकल्प्य ॥ घृता

चार्यःसर्षपादिनाभूतान्युत्सार्यद्वारपूजांकुर्यात् ॥ सदाशिवमंडपायनमःप्राग्द्वारपार्श्वयोः नंदिनेनमः महाकालायनमःचिच्छत्त्यै० मायाशक्त्यै० द्वारश्रियै० वास्तुपुरुषाय० ॥ दक्षिणपार्श्वयोः गणेशाय० वृषभाय० चिच्छक्त्यादिपूर्ववत् ॥ पश्चिमद्वारपार्श्वयोः भृंगिणे० स्कंदायन० शक्त्यादिपूर्ववत् ॥ उत्तरद्वारपार्श्वयोः रिटिने० चंडीश्वराय० शक्त्यादिपूर्ववत् ॥ ततः लिंगतोभद्रेब्रह्मादिदेवतास्थापनपूर्वकंकलशंप्रतिष्ठाप्यतदुपरिशिवंतत्पार्श्वतःगौरींषण्मुखंगणेशंचावाह्यपूजयेत् ॥ अत्रप्रधानं सोमंशिवंकृतलिंगद्वादशांशेनशतांशेनवा पायस १ मधु २ शर्करा ३ आज्य ४ तिल ५ अक्षत ६ बिल्वपत्र ७ शतपत्रपत्र ८ द्रव्याष्टकेन केवलपायसेनवा नमःशंभवेचेतिमंत्रेण पंचाक्षरेणवा तथागौरींषण्मुखंगणेशंचउक्तद्रव्यैःप्रतिद्रव्यंदशदशाहुतिभिःवृषभंलोकेशान् ब्रह्मादिदेवताश्चदशदशतिलाहुतिभिः द्वारदेवताश्चैकैकयाज्याहुत्यायक्ष्ये ॥ इतिशैवागमोक्तंपार्थिव०॥

## ॥ २४४ ॥ अथपार्थिवशिवपूजा ॥

श्रीगणेशायनमः ॥ अथलिंगार्चनचंद्रिकायांशिवपार्थिवपूजाविधिः ॥ तत्रादौकृतावश्यकक्रियःस्नानादिनाशुचिर्भूत्वाधृतत्रिपुंड्ररुद्राक्षमालःप्रयतःशुक्लवस्त्रंपरिधायउदीचींदिशंगत्वाशुचौदेशे पाषाणकीटकेशास्थिवालुकादिदोषरहितांमृदंदृष्ट्वातत्रगंधाद्युपचारैःभूमिंसंपूज्यनत्वाईशानकोणगतांमृदंशस्त्रेणोत्कीर्यअष्टांगुलमृदमपाकृष्यभूमिंप्रार्थयेत् ॥ उद्धृतासिवराहेणकृष्णेनशतबाहुना ॥ मृत्तिकेत्वांचगृह्णामिप्रजयाचधनेनच ॥ इतिमंत्रेणशुद्धांमृदमादायअंत्यजादिस्पर्शरहितोमौनीगृहमागत्यशुचिस्थलेतांस्थापयेत् ॥ ततःचैलाजिनकुशोत्तरेआसनेउदङ्मुखउपविश्यआचम्यपवित्रपाणिःप्राणानायम्यआसनविधिंकृत्वागौरसर्षपांश्चतुर्दिक्षुविकीर्य ॥ देशकालाद्युच्चार्यममसकलमनोरथसिद्ध्यर्थंदुरितक्षयद्वाराश्रीभवानीशंकरप्रीत्यर्थंशिवपार्थिवपूज

नंकरिष्ये ॥ कलशघंटादिपूजनांते ॥ कलशोदकेनपूजासंभारानात्मानंचप्रोक्ष्य हरायनमः इतिमृच्चूर्णंकुर्यात् वामदेवायेतिज
लसेचनं० महेश्वरायेति संघट्टनं तत्पुरुषायेति पिंडीकरणं समस्ताघनाशिनेइत्यद्भिःपूतेवामपाणौवेदिकायांताम्रपात्रेवाबिल्व
पत्रंनिधायतदुपरिसाक्षतपुष्पंलिंगंसंस्थाप्यप्राणप्रतिष्ठांकुर्यात् ॥ अस्यश्रीप्राणप्रतिष्ठामंत्रस्यब्रह्मविष्णुरुद्राऋषयःप्राणाख्या
देवता पार्थिवलिंगप्राणप्रतिष्ठापनेविनियोगः ॥ शिवस्यप्राणाःवाक्चक्षुःश्रोत्रजिह्वाघ्राणत्वक्पाणिपादपायूपस्थादिसर्वेंद्रिया
णिइहागत्यसुखंसुचिरंतिष्ठंतुशिवेहागच्छेहतिष्ठममपूजांगृहाण ॥ स्वामिन्सर्वजगन्नाथयावत्पूजावसानकं ॥ तावत्त्वंप्रीतिभा
वेनलिंगेस्मिन्सन्निधोभव ॥ इतिसंप्रार्थ्य ॥ ॐनमःशिवायेतिमूलमंत्रेणषडंगन्यासंकुर्यात् ॥ ध्यानं ॥ दक्षोत्संगनिषण्णकुंजरमु
खंप्रेम्णाकरेणस्पृशन्वामांकेस्थितवल्लभांकललितंस्कंदंकरेणस्पृशन् ॥ इष्टाभीतिमनोहरंकरयुगंबिभ्रत्प्रसन्नाननोभूयान्नःशर
दिंदुसुंदरतनुःश्रेयस्करःशंकरः ॥ आत्मानंरुद्ररूपंध्यात्वा निर्दिष्टनामभिःपूजयेत् ॥ शूलपाणयेनमः आवाहनं० पिनाकधृ
षे० आसनं० भवोद्भवाय० अर्घ्यं० वामदेवाय० आचमनीयं ज्येष्ठाय० मधुपर्कस्नानं० ईश्वराय० पयःस्नानं० शिवाय०
दधिस्ना० गिरीशाय० घृतस्ना० उमाधवाय० मधुस्ना० शिवाय० शर्करास्ना० महेश्वराय० अभिषेकं० ज्येष्ठाय० वस्त्रं०
रुद्राय० उपवीतं० कालाय० चंदनं० कलविकरणाय० अक्षतान्० बलविकरणाय० पुष्पं बिल्वंच० बलाय० धूपं० बल
प्रमथनाय० दीपं० सर्वभूतदमनाय० नैवेद्यं० मनोन्मनाय० आचमनीयं मध्येपानीयं० उत्तरापोशनं० शंभवे० तांबूल
दक्षिणा० शंकराय० फलं० प्रदक्षिणां० उत्तरनीराजनं० भवानीशंकराय० मंत्रपुष्पांजलिं० शंभवे० नमस्कारान्० यस्यस्मृ
त्येति० ॥ अनेनकृतपार्थिवलिंगपूजनेनश्रीभवानीशंकरःप्रीयताम् ॥ द्विराचामेत् ॥ इतिशिवपार्थिवपूजासमाप्ता ॥ ॥

## ॥ २४५ ॥ अथप्रबोधोत्सवतुलसीविवाहौ ॥

श्रीः ॥ देशकालौसंकीर्त्यश्रीदामोदरप्रीत्यर्थंप्रबोधोत्सवंसंक्षेपतस्तुलसीविवाहविधिंचतंत्रेणकरिष्ये ॥ तदंगतयापुरुषसूक्तेन विधिनाषोडशोपचारैस्तंत्रेणश्रीमहाविष्णुपूजांतुलसीपूजांचकरिष्ये ॥ न्यासादिविधाय श्रीविष्णुंतुलसींचध्यात्वासहस्रशीर्षे तिश्रीमहाविष्णुंतुलसींचावाह्य पुरुषएवेत्यादिभिःश्रीमहाविष्णवेदामोदरायश्रीदेव्यैतुलस्यैचनमआसनमित्यादिस्नानांतेमंग लवाद्यैःसुगंधितैलहरिद्राभ्यांनागवल्लीदलगृहीताभ्यांकनिक्रदददित्युष्णोदकेनच मंगलस्नानंविष्णवेतुलस्यैचसुवासिनीभिःका रयित्वास्वयंवादस्वापंचामृतस्नानंसमर्प्यशुद्धोदकेनाभिषिच्य वस्त्रयज्ञोपवीतचंदनंदत्वातुलस्यैहरिद्राकुंकुमकंठसूत्रमंगलालं कारान्दत्वामंत्रपुष्पांतपूजांसमाप्यघंटादिवाद्यघोषेणदेवंप्रबोधयेत् ॥ तत्रमंत्राः ॥ इदंविष्णुर्वि० ॥ योजागारेतितुआचार प्राप्तः ॥ ब्रह्मेंद्ररुद्राग्निकुबेरसूर्यसोमादिभिर्वंदितवंदनीय ॥ बुध्यस्वदेवेशजगन्निवासमंत्रप्रभावेणसुखेनदेव ॥ इयंचद्वादशी देवप्रबोधार्थंविनिर्मिता ॥ त्वयैवसर्वलोकानांहितार्थंशेषशायिना ॥ उत्तिष्ठोत्तिष्ठगोविंदत्यजनिद्रांजगत्पते ॥ त्वयिसुप्तेजगत्सु प्तमुत्थितेचोत्थितंजगत् ॥ एवमुत्थाप्य ॥ चरणंपवित्रं० ॥ गतामेघावियच्चैवनिर्मलंनिर्मलादिशः ॥ शारदानिचपुष्पाणिगृ हाणममकेशवेत्यादिमंत्राभ्यांपुष्पांजलिंदद्यात्॥ अथाचारात्तुलसीसंमुखांश्रीकृष्णप्रतिमांकृत्वामध्येंतःपटंधृत्वामंगलाष्टकपद्या निपठित्वाअंतःपटंविसृज्याक्षताप्रक्षेपंकृत्वादामोदरहस्तेतुलसीदानंकुर्यात् देवींकनकसंपन्नांकनकाभरणैर्युताम् ॥ दास्यामि विष्णवेतुभ्यंब्रह्मलोकजिगीषया ॥ मयासंवर्धितांयथाशक्त्यलंकृतामिमांतुलसींदेवींदामोदरायश्रीधरायवरायतुभ्यमहंसंप्रद दे ॥ देवपुरतःसाक्षतजलंक्षिपेत् ॥ श्रीमहाविष्णुःप्रीयतामित्युक्त्वाइमांदेवींप्रतिगृह्णातुभवान्इतिवदेत् ॥ ततोदेवहस्तस्पर्शे

तुलस्याःकृत्वा ॥ कइदंकस्माअदात्कामःकामायादात्कामोदाताकामःप्रतिग्रहीताकामंसमुद्रमाविशकामेनत्वाप्रतिगृह्णामिका मैतत्तेवृष्टिरसिद्यौस्त्वाददातुपृथिवीप्रतिगृह्णातु॥ इतिमंत्रमन्येनवाचयेत् ॥ यजमानः ॥ त्वंदेविमेग्रतोभूयास्तुलसीदेविपार्श्वे तः ॥ देवित्वंपृष्ठतोभूयास्त्वद्दानान्मोक्षमाप्नुयाम् ॥ दानस्यप्रतिष्ठासिद्ध्यर्थमिमांदक्षिणांसंप्रददे ॥ देवपुरतोदक्षिणामर्पयेत् ॥ ततःस्वस्तिनोमिमीतांशंनइंद्राग्नीइत्यादिस्वस्वशाखोक्तानिशांतिसूक्तानिविष्णुसूक्तानिचपठेयुः ॥ तुलसीयुतायविष्णवेमहानी राजनंकृत्वामंत्रपुष्पंदत्वासपत्नीकःसगोत्रजःसामात्योयजमानश्चतस्नःप्रदक्षिणाःकुर्वीत ॥ ब्राह्मणेभ्योदक्षिणांदत्वायथाशक्ति ब्राह्मणभोजनंसंकल्प्यकर्मेश्वरार्पणंकुर्यात् ॥ इतिसंक्षेपतःप्रबोधोत्सवतुलसीविवाहौ ॥ ॥ छ ॥ ॥ छ ॥

## ॥ २४६ ॥ अथतुलसीविवाहः ॥

श्रीः ॥ चातुर्मास्यव्रतपक्षेआषाढ्यांतुलसीरोपणं तत्प्रभृतिकालत्रयेपूजनं ॥ तुलसिश्रीसखिशुभेपापहारिणिपुण्यदे ॥ नमस्ते नारदनुतेनारायणिनमोस्तुते ॥ इतिसंप्रार्थ्य ॥ श्रीतुलस्यैनमःइतिमंत्रेणपयोघटैःसेचनं ॥ एवंप्रत्यहंप्रबोधद्वादशीपर्यंतंकार्यं॥ द्वादश्यांविवाहः ॥ गुरुशुक्रास्तादिदोषोनास्तीतिनिर्णयसिंधौ ॥ मंडपंवेदिकांहरिद्रादिविवाहसामग्रींचसंपाद्यकृतनित्यक्रियो यजमानःप्रबोधद्वादश्यामुक्तापराह्णेमांगलिकस्नानंविधायपीठेउपविष्टःइष्टदेवतांगुरूंश्चनमस्कृत्य देशकालौसंकीर्त्यममदशपू र्वान्दशपरानात्मनासहैकविंशतिपुरुषानुद्धर्तुंब्रह्मलोकसायुज्यार्थंश्रीपरमात्मनासहतुलसीविवाहंकरिष्ये इतिसंकल्प्य ॥ तदं गभूतंगणपतिपूजनपूर्वकंपुण्याहवाचनंमातृकापूजनंनांदीश्राद्धंग्रहयज्ञंमंडपप्रतिष्ठांकुलदेवतास्थापनंचकरिष्ये ॥ पुण्याहे अ द्यपरमात्मनासहतुलस्याविवाहाख्यस्यकर्मणःपुण्याहंभवंतोब्रुवंतु॥ अद्यपरमात्मनासहश्रीतुलस्याःविवाहाख्यायकर्मणेस्वस्ति

भवंतोब्रुवंतु एवंऋद्धिं श्रीरस्त्विति प्रयोगोज्ञेयः ॥ तानिकृत्वा आचार्यादिचतुर्णांवरणंतेषांमधुपर्कादिपूजनं॥ आचार्यःयदत्रेति सर्षपविकिरणादिदेवयजनंरक्षस्वेत्यंतंकृत्वा तुलस्याअग्रेमंडपादीशान्यांसर्वतोभद्रंविरच्यतत्रब्रह्मादिदेवताआवाह्यपूजयेत् ॥ तत्रमहीद्यौरित्यादिपूर्णपात्रनिधानांतेसुवर्णप्रतिमायामग्न्युत्तारणादिपरमात्मनःतुलस्याश्चप्राणप्रतिष्ठांषोडशोपचारैःपूजांचकुर्यात् ॥ तुलस्याःहरेश्चमांगलिकस्नानंविधायवाग्दानंकुर्यात् ॥ ॐ अनृक्षराऋजवइतितुलस्यैफलादिदत्वा गणेशंसंस्मृत्यजनार्दननाम्नेसकलप्रवरगोत्रजनकायपार्वतीबीजसंभूतायवृंदाभस्मनिसंस्थितायअनादिमध्यनिधनाय श्रीकृष्णपरमात्मनेवराय ॥ दातुःअमुकप्रवरान्वितामुकगोत्रोत्पन्नांअमुकशर्मणःपालितप्रपौत्रींअमुकशर्मणःपालितपौत्रींअमुकशर्मणःपालितपुत्रींपयोघटैःसेचितकन्यावद्वर्धितभावनीयतुलसीनाम्नींकन्यांभार्यात्वायवृणीमहेइतित्रिः ॥ ततोदातावृणीध्वंप्रदास्यामीतित्रिर्वदेत् ॥ गंधाक्षतफलपुष्पादिभिस्तुलसींसंपूज्य ॥ दातादेशकालौस्मृत्वातुलसीविवाहांगभूतंवाग्दानमहंकरिष्ये ॥ गणपतिंवरुणंचसंपूज्य स्वस्थानेतुलसीपूजयितारमुपवेश्यगंधतांबूलादिनासंपूज्यसचदातारंपूजयेत् ॥ हरिद्राखंडपंचदृढपूगीफलानिहस्तेगृहीत्वा जनार्दननाम्नेसकलप्रवरगोत्रजनकायपार्वतीबीजसंभूताय वृंदाभस्मनिसंस्थितायानादिमध्यनिधनायश्रीकृष्णपरमात्मनेवराय ॥ अमुकगोत्रोत्पन्नांअमुकशर्मणःपालितप्रपौत्रीं अमुकपालितपौत्रींअमुकपालितपुत्रींपयोघटैःसेचितकन्यावद्वर्धितभावनीयतुलसीनाम्नींकन्यांज्योतिर्विदादिष्टेमुहूर्तेदास्ये ॥ वाचासंप्रददे ॥ आचार्यवस्त्रप्रांतेतानिदत्वागंधादिनासंपूज्य ॥ अव्यंगे पतिते० ॥ इमांदेवींप्रदा० धां॥ आचार्यःपंचदृढपूगीफलानिहरिद्राखंडानिचगृहीत्वासकलकुलगोत्ररूपिणिकृष्णपरमात्मनि वरविषयेभवंतोनिश्चिताभवंतु इतिदातुर्वस्त्रप्रांतेवद्ध्वागंधाद्यैःसंपूज्य तदस्तु० गृहाण० ॥ वाचांदत्तामयादेवीकृष्णार्थेस्वीकृ

तात्वया ॥ पद्मावलोकनविधौनिश्चितस्त्वंसुखीभव ॥ आचार्यः ॥ वाचादत्तात्वयादेवीकृष्णार्थंस्वीकृतामया ॥ कृष्णावलो
कनविधौ० ॥ शिवा० सौम० अक्षतं० दीर्घमायुःश्रेयःशांतिः० एतद्वःसत्यमस्तु ॥ ॐ समञ्जंतु० १ प्रसुग्मंता० १ ॥
इंद्राणींसंपूज्य ॥ देवेंद्राणि० सुवासिनीभिरुभयोर्नीराजनंकार्यं ॥ ब्राह्मणान्संपूज्य हिंकृण्वती० १ वनस्पतेशतवल्शो० २
समिद्धस्य ३ इंदुर्देवा० ४ घृतादु० ५ अस्यपिब० ६ ॥ ततोऽस्तमितेआचार्यःस्वशाखोक्तंमधुपर्ककुर्यात् ॥ ततस्तुलसीसंमु
खांश्रीकृष्णप्रतिमांकृत्वामध्येंऽतःपटंधृत्वामंगलाष्टकपद्यानिपठेयुः ॥ ततःअभ्रातृघ्नीं० अघोर० भूर्भुवःस्वः ऋक्चवेत्यादि
वधूपूर्वकंअक्षतारोपणं ॥ अनृक्षरा० ॥ ततोदातातुलसीदानसंकल्पंकुर्यात् ॥ ममसमस्तेत्यादितुलसीदानकल्पोक्तफलावाप्त
येअनेनजनार्दनेनास्यांतुलस्यांबीजोत्पादनेनज्ञानावाप्तिद्वाराश्रीप्रीतयेतुलसीदानमहंकरिष्ये ॥ ॥ सपत्नीकउत्थाय ॥ देवींकन
कसंपन्नां० पया ॥ विश्वंभरः० ॥ इमांदेवींप्र० तारणायच ॥ ततःकांस्यपात्रेजनार्दनहस्तेनतुलसीपल्लवंधृत्वाअक्षतोदकंक्षि
पन्वदेत् ॥ तुलसीतारयतु पुण्यं० शिवा० सौम० अक्षतं० दीर्घं० यच्छ्रे० यत्पापं० पुण्याहं० स्वस्ति० ऋद्धिं० श्रीर० ॥ अ
मुकगोत्रःअमुकशर्माहंममसमस्तेत्यादितुलसीदानकल्पोक्तफलावाप्तये अनेनजनार्दनेनास्यांतुलस्यांबीजोत्पादनेनज्ञानावाप्ति
द्वाराश्रीप्रीतयेजनार्दननाम्नेसकलगोत्रप्रवरायपार्वतीबीजसंभूतायवृंदाभस्मनिसंस्थितायअनादिमध्यनिधनायतुलस्यर्थिनेश्री
कृष्णपरमात्मनेवराय ॥ अमुकप्रवरान्वितामुकगोत्रोत्पन्नांअमुकशर्मणःपालितप्रपौत्रीं अमु०णःपालितपौत्रीं अमु०णः पालित
पुत्रींपयोघटैःसेचितकन्यावद्वर्धितभावनीयतुलसीनाम्नींकन्यांश्रीकृष्णार्थिनींश्रीरूपिणींवनस्पतिदैवत्यांज्ञानोत्पादनार्थंतुभ्य
महंसंप्रददेनमम ॥ तुलसींप्रतिगृह्णातुभवान् ॥ इमांचतुलसींकन्यांयथाशक्तिविभूषितां ॥ गोत्रायशर्मणेतुभ्यंदत्तांकृष्णसमा

श्रय ॥ त्वंदेविमेग्रतोभूयास्तुलसीदेविपार्श्वतः ॥ देवित्वंपृष्ठतोभूयास्त्वद्दानान्मोक्षमाप्नुयां ॥ चत्वारिमासपर्यंततुलस्याःपाल नंकृतं ॥ तुभ्यंकृष्णमयादत्ताममममोक्षप्रदायिनी ॥ धर्मेच ॥ मोक्षेच ॥ नातिविलंबनंकार्यं ॥ दानस्यप्रतिष्ठासिद्ध्यर्थंसौवर्ण मयीमिमांदक्षिणांतुभ्यमहंसंप्रददे॥ ततोविभवेसति गोदासीमहिष्यादिभोजनजलपात्रादिदानं ॥ ततोदेवहस्तस्पर्शंतुलस्याःकृ त्वाकइदंकस्माअदादितिमंत्रमन्येनवाचयेत् ॥ यत्कक्षी०॥ उभयोरभिषेकः॥ अनाधृ० १ समुद्र०४ आपोहि०३ आनःप्रजां० ४ सूत्रवेष्टनं युवासुवा० उक्तप्रकारेणकृत्वा ॥ तुलस्याःपल्लवेकृष्णहस्तेचबध्नीयात् यदाबध्नन्नितिमंत्रेण॥ उभयोःतिलकंकृत्वा भंगोमेकामःसमृध्यतां यज्ञो० श्रियो० धर्मो० प्रजा० यशोमे० भगोमेइत्यादिमंत्रैःअक्षतारोपणंसकृत्कुर्यात् ॥ ततोमंगलसू त्रादि ॥ मांगल्यतंतुनानेनकृष्णजीवनहेतुना ॥ कंठे०तं ॥ शच्यादिपूजनांतेब्राह्मणेभ्योवायनानिदत्वा ॥ भद्रंक० द्रविणो० सविता० नवोन० उच्चादि० दक्षिणावतामि० इत्यायुःपदांताःषट् ॥ ततआचार्यःस्थंडिलमेत्यआचम्यदेशकालौस्मृत्वाप्रति गृहीतायांतुलस्यांश्रीकृष्णपरमात्मनाभार्यात्वसिद्धयेविवाहहोमंकरिष्येइतिसंकल्प्य स्थंडिलकरणादिअग्निध्यानांतेऽन्वादध्या त् ॥ तुलसीविवाहहोमेदेवतापरिग्रहार्थमन्वा० अस्मिन्नित्यादिआघारावाज्येनेत्यंतमुक्त्वा ॥ अत्रप्रधानं केशवादिचतुर्वि शतिनामभिरेकैकयाज्याहुत्या अग्निंपृथिवींमहांतं वायुमंतरिक्षंमहांतं आदित्यंदिवंमहांतं चंद्रमसंनक्षत्राणिदिशोमहांतंएताः प्रधानदेवताःप्रत्येकंएकैकयाहुत्यालाजद्रव्येण सर्वतोभद्रदेवताश्चएकैकयाज्याहुत्यायक्ष्येशेषेणेत्यादियजमानान्वारब्धआ घारांतंकृत्वा ॥ प्रधानहोमंकेशवादिचतुर्विंशतिनामभिःकुर्यात् ॥ तुलस्याःपल्लवस्पर्शनंगृभ्णामितेइतिमंत्रेणकुर्यात् ॥ ततोलाजाहोमंकुर्यात् ॥ ॐ भूरग्नयेचपृथिव्यैचमहतेचस्वाहा ॥ अग्नयेपृथिव्यैमहतइदं०॥ ॐ भुवोवायवेचांतरिक्षायचमह०

वायवेंतरिक्षायमहत०॥ ॐ सुर्वरादित्यायंचदिवेचंमह० आदित्यायदिवेमहत० ॥ ॐ भूर्भुवःसुर्वश्चंद्रमसेचनक्षत्रेभ्यश्चदिग्भ्यश्चम० चंद्रमसेनक्षत्रेभ्योदिग्भ्योन० ॥ सर्वतोभद्रदेवताश्चहुत्वास्विष्टकृदादिहोमशेषंसमापयेत् ॥ आयुष्यमितिमंत्रेणसौभाग्यालंकारादिदद्यात् ॥ ततऐरिणीदानं ॥ पूर्वोच्चरितेत्यादितुलसीदानसंपूर्णफलार्थंश्रीपरमात्मानंवरंतद्युक्तानाचार्यादीन्पूजयिष्ये ॥ वस्त्राद्यैःसंपूज्यविवाहोक्तप्रकारेणऐरिणींसंपाद्य ॥ तुलसीदानस्यसंपूर्णतासिध्यर्थंऐरिणीपूजांआचार्यपत्न्यैऐरिणीदानंचकरिष्ये ॥ ऐरिणीत्वमुमादेवीत्यादिश्लोकान्पठेत् ॥ याःफलिनी० अर्वाची० इतिमंत्रैःदानं ॥ चत्वारिमासपर्यंतंतुलस्याःपालनंकृतं ॥ इदानींतुमयातुभ्यंदत्तास्नेहेनपाल्यतां ॥ ततोगृहप्रवेशः ॥ इहप्रियं० इतिमंत्रेण ॥ सक्तुमिवेतिमंत्रेणलक्ष्मींसंपूज्य गच्छगच्छेत्यग्निंविसृज्य इमांसोपस्करपीठयुतांप्रतिमांआचार्यायसंप्रददेइतिदद्यात् ॥ आचार्यायशय्यांपदंगांचदद्यात् ॥ कर्मणःसांगतासिद्ध्यर्थंब्राह्मणान्क्षीरशर्कराज्यैर्यथाशक्तिभोजयेत् ॥ दीनानाथेभ्योन्नंदत्वाभूयसींदक्षिणांदत्वाकर्मेश्वरार्पणंकुर्यात् ॥ इतिस्मृतिकौस्तुभेविष्णुपंचरात्रागमोक्तमूलवाक्यानुसारीतुलसीविवाहप्रयोगः ॥ ॥ ध ॥

## ॥ २४७ ॥ अश्वत्थोद्यापनंशौनकीयं ॥

श्रीः ॥ तदुक्तंशौनकीये ॥ स्थापनादष्टमेवर्षेद्वादशैकादशेपिवा उत्तरायणेगुरुशुक्रोदयेमाघफाल्गुनचैत्रवैशाखेषुशुक्लपक्षेशुभेऋक्षेसुवारतिथिलग्नकेस्कंधपर्णांकुरान्वितेविद्युतादावाग्निनावानभिहतेऽश्वत्थोद्यापनंकुर्यात् ॥ तत्रादौकनककुंडलेकनकसूत्रेकनकमौंजीहोमद्रव्याणिसर्वसंभारान्यथासंभवंसंभृत्यअश्वत्थस्यचतुरस्रांवेदिकांविधायअश्वत्थमूले वर्तुलंचतुरस्रंवाऽलवालंकृत्वातत्रतुलसींप्लक्षशाखांशमींचरोपयित्वाश्वत्थवेदिकायांचतुरस्रंसमंताच्चतुर्द्वारंचतुर्हस्तंअधिकंवामंडपंअश्वत्थात्पूर्वेपश्चिमे

उत्तरेवोक्तलक्षणमंडपंअन्यंवाकृत्वास्वगृहेज्योतिर्विदादिष्टेमुहूर्तेप्रधानसंकल्पंकुर्यात् ॥ तिथ्यादिसंकीर्त्यममात्मनःपुण्यातिश
यायुष्ययशःपुत्रपौत्रपशुवित्तधनधान्यविद्याकुलाभिवृद्धिकुलकोटिसहितस्वर्लोकप्राप्त्याद्यैहिकामुष्मिकफलप्राप्त्यर्थं दशपूर्वा
न्दशपरानात्मनासहैकविंशतिपुरुषानुद्धर्तुंविष्णुपदप्राप्त्यर्थंतथाचाश्वत्थस्यब्रह्मत्वशांत्यभीष्टफलदातृत्वाद्यनेकगुणसंपत्त्यर्थंय
थाज्ञानेनयथामिलितोपचारद्रव्यैर्देशकालानुसारतःएकाहाद्यधिवासप्रकारेणाश्वत्थोद्यापनाख्यंकर्मकरिष्ये ॥ पुत्रकामश्चेत्
ममेहजन्मनिजन्मांतरेवानानानिमित्तोपार्जितसंततिप्रतिबंधकादृष्टनिरसनपूर्वकंसत्पुत्रावाप्तयेइति ॥ तदंगविहितंगणेशपूज
नंपुण्याहवाचनंमातृकापूजनंनांदीश्राद्धमाचार्यादिवरणंचकरिष्येइतिसंकल्प्य ॥ स्वगृह्यविधिनातानिकृत्वाआचार्यादीन्वृ
णुयात् ॥ अस्मिन्कर्मणिआचार्यंत्वामहंवृणे ॥ सचवृतोस्मीतिवदेत् ॥ एवंब्रह्माणंसदस्यंउपद्रष्टारंवृत्वासर्वान्मधुपर्कादिना
संपूज्यप्रार्थयेत् ॥ ( ऋत्विग्वरणंमंडपप्रतिष्ठावास्तुपूजनप्रकारश्चाग्रेदेवप्रतिष्ठायांद्रष्टव्यः ) ॥ ततःस्वगृहेएवग्रहमखादिवि
धाय ॥ ततःसर्त्विक्सपत्नीकोयजमानःपूर्णकलशहस्तःभद्रंकर्णेभिरितिमंत्रेणमंगलतूर्यघोषेणसहाश्वत्थप्रादक्षिण्येनमंडपपश्चि
मद्वारमागत्यतत्रधरांसंपूज्यमंडपंप्रविश्यकलशमश्वत्थसमीपेनिधायनिर्ऋतिवरुणयोर्मध्येउपविशेत् ॥ ततआचार्यःअश्वत्थो
द्यापनकर्मणिवृतोहंआचार्यकर्मकरिष्येइतिसंकल्प्य ॥ शरीरशुद्ध्यर्थंभूतशुद्ध्यादिपौरुषजपंन्यासांश्चकृत्वायदत्रसंस्थितमिति
सर्षपलाजान्विकीर्य साधितपंचगव्येनकुशैःसर्वत्रप्रोक्षणंशुचीवोहव्येति आपोहिष्ठेति उत्तरनारायणेनचकार्यं ॥ स्वस्त्ययनं
तार्क्ष्यमितिपठेत् देवाआयांतुयातुधानाअपयांतुविष्णोदेवयजनंरक्षस्व भूमौप्रादेशंकुर्यात् ॥ यथोक्तमंडपाकरणेसाधारणमं
डपेप्राग्द्वारेअमंत्रकंचूतपल्लवतोरणंदक्षिणेप्लक्षपल्लवंतोरणंपश्चिमेवटपल्लवतोरणंउत्तरेअशोकपल्लवतोरणंबध्वातथैवप्रागादिद्वारे

पुश्वेतकृष्णहरितरक्तपताकाःअश्वत्थशिरसिमहांतंचित्रध्वजंचबध्वा तथैवप्रागादिद्वारचतुष्टयेवेदादिक्रमेणद्वौद्वावेकमेकंवा
ब्राह्मणंजपार्थंवृणुयात् ॥ ततआचार्योश्वत्थस्यहरिद्रातैलरोपणादिलौकिकंविधायअश्वत्थवेदिकायांईशानप्रदेशेसर्वतोभद्रंवि
रच्यब्रह्मादिदेवतास्थापनंकरिष्यइतिसंकल्प्य उक्तप्रकारेणसंस्थाप्यसंपूज्यतदुपरिअक्षतपुंजेमध्यप्रदेशेकृताग्न्युत्तारणप्राणप्र
तिष्ठापनसौवर्णप्रतिमायां ( वनस्पतेशतवल्शइतिमंत्रेणाश्वत्थनारायणमावाहयेत् । ) ततइदंविष्णुरितिवासुदेवं ॥ तद्वाम
तः अधस्यायोर्षणामहीर्प्रतीचीवर्शमश्व्यं ॥ अधिरुक्माविनीयते ॥ इतिरुक्मिणीं ॥ तद्दक्षिणतः सत्यासत्येभिर्महतीमहद्भि
र्देवीदेवेभिर्यजतायजत्रैः ॥ रुजद्दृह्ळानिददुस्त्रियाणांप्रतिगावउपसंवावशंत ॥ इतिसत्यभामां ॥ प्रक्षोदसाधायसासस्रएषा
सरस्वतीधरुणमायसीपूः ॥ प्रबावधानारथ्येवयातिविश्वाअपोमहिनासिंधुरन्याः ॥ इतिसरस्वतीं ॥ आतूनइंद्रक्षुमंतंचित्रंग्रा
भंसंगृभाय ॥ महाहस्तीदक्षिणेन ॥ इतिगणपतिंचावाह्यपौरुषेणश्रीवासुदेवादिभ्योनमइतिसंपूज्यततोश्वत्थपरितःपीठसमंत
तोवाअष्टौकलशान्स्थापनप्रकारेणसंस्थाप्य तत्रपूर्वकलशेशुद्धोदकमापोहिष्ठेतिनवर्चेनसूक्तेनद्वितीयेगंधोदकंआनोभद्राइतिद
शर्चेनतृतीयेक्षीरोदकंस्वस्तिनोमिमीतेतिपंचर्चेनचतुर्थेगंचगव्यंशन्नइंद्राग्नीइतिपंचदशर्चेनपंचमेहरिद्रोदकंएतोन्विंद्रमितितृचे
नषष्ठकलशेसर्वौषध्युदकं समुद्रज्येष्ठाइतिचतसृभिःसप्तमेकुशोदकंयाआपोदिव्याइतिअष्टमेकुशोदकंप्रसुवआपइतिनवर्चेन ॥
उक्तप्रकारेणपूर्णपात्रांतंकृत्वातत्रवरुणमावाह्यसंपूज्य तत्रपूर्वादिक्रमेणइंद्रादीन्तत्तन्मंत्रैरावाह्यसंपूजयेत् ॥ ततोश्वत्थंपुरुष
सूक्तेनाथर्वशिरसासंसिच्यपंचामृताभिषेकंचकृत्वाकाषायवस्त्रयुग्मेनचसंवेष्ट्य ॥ ततःपूर्वादिदिक्षुचत्वारिस्थंडिलानिविधाय
तेषुहोमार्थंचतुरआचार्यान्वृत्वातेस्वगृह्यविधिनाग्नीन्स्थापयेयुः ॥ ( अत्रकेचनईशानपूर्वयोर्मध्येग्रहहोमादिकर्तुंपंचमंस्थंडि

लमिच्छंति ॥ तदेवमुख्यंकुंडंतत्रविधिवदग्निंप्रतिष्ठाप्यतस्मादग्निनाग्निःसमिध्यतइत्यग्निमुद्धृत्यस्वेस्वेकुंडेस्थापयेयुः ॥ बहवः पूर्वकुंडेएवग्रहप्रधानहोमादिकंकुर्वंति ) ॥ पूर्वमकृतेग्रहयज्ञेइदानींईशान्यांवेदिकायांग्रहानावाह्यसंपूज्य ॥ अन्वादध्यात् ॥ तत्रमुख्यकुंडेपूर्वमकृतेग्रहयज्ञेत्रप्रधानंआदित्यादिनवग्रहान् ॥ २८।८ अर्कादिसमिच्चर्वाज्यद्रव्यैः अधिदेवताप्रत्यधिदेवताश्च ८।४ क्रतुसंरक्षकदेवताःक्रतुसाद्गुण्यदेवताश्च ४ । २ ॥ ( अश्वत्थनारायणंअश्वत्थेवइतिमंत्रेणपलाशसमित्तिलाज्यैः प्रतिद्रव्यं १०८ वा २८ ॥ तथाआनोभद्रेतिमंत्रेणविश्वान्देवान्चरुद्रव्येण १०८ वा २८ ॥ तथावासुदेवादिपीठदेवताः पलाशसमित्तिलाज्यैः प्रति १०८ वा २८ ( अश्वत्थसमिच्चर्वाज्यैरित्यन्यत्र ) ब्रह्मादिदेवताःइंद्रादिलोकपालांश्च २८ वा ८ यक्ष्ये ॥ ॥ पंचकुंडपक्षेप्रतिकुंडमादावश्वत्थनारायणंपलाशसमित्तिलाज्यैः १०८ इत्युक्त्वापूर्वकुंडेब्रह्मादिमंडलदेवताहोमः ॥ दक्षिणकुंडेगणपतिंतिलाज्याभ्यांस्थापनमंत्रेणप्रतिद्रव्यं १०८ वा २८ ॥ पश्चिमेइंद्राद्यष्टौलोकपालान्तत्तत्स्थापनमंत्रैः २८।८ वास्तुं ॐ वास्तोष्पतेध्रुवास्थूणांसत्रंसोम्यानां ॥ द्रप्सोभेत्तापुरांशश्वतीनामिंद्रोमुनीनांसखा ॥ इतिमंत्रेणशमीसमिच्चर्वाज्यद्रव्यैःप्रतिद्रव्यं २८।८ उत्तरेश्रीवासुदेवंरुक्मिणींसत्यांसरस्वतींचतत्तत्स्थापनमंत्रेणप्रतिदैवतंप्रतिद्रव्यं १०८ वा २८ पायसाज्याभ्यांशेषेण० ॥ एवंतत्तन्मंत्रैर्होमंसंपाद्यस्विष्टकृदादिबल्यंतंकृत्वाधिवसेत् ॥ अत्रबलिदानात्पूर्वंयूपाधिवासोन्यत्रोक्तः ॥ पुराणादिनारात्रिंनयेत् ॥ केचनकाषायवस्त्रदानांतंकृत्वापरेद्युरेवहोमादिकमिच्छंति ॥ प्रातर्घटिकांप्रतिष्ठाप्यपीठदेवताःसंपूज्यअष्टकलशदेवताविसृज्यब्राह्मणैस्तान्ग्राहयित्वातैःसहआचार्यःपवमानःसुवर्जनइत्यनुवाकेनाष्टकलशोदकैरश्वत्थंत्रिःपरिषिच्यकिंचिदवशिष्टोदकान्कलशान्पूर्वस्थानेषुस्थापयेत् ॥ ॥ छ ॥ ॥ छ ॥

ततोयजमानआचार्योवाऽश्वत्थपश्चिमेस्थंडिलेसंस्कारहोमंकुर्यात् ॥ तद्यथा ॥ अश्वत्थस्यपुंसवनाद्युपनयनांतान्संस्कारान् व्याहृतिद्वाराकरिष्येइतिसंकल्प्य ॥ अग्निपवमानंप्रतिष्ठाप्यान्वादध्यात् ॥ अत्रप्रधानं ॥ अग्निंवायुंसूर्यंप्रजापतिंआज्यद्रव्येणप्रतिसंस्कारं ८ वा ४ संख्याकाहुतिभिर्यक्ष्ये ॥ प्रतिसंस्कारहोमांते ॥ ॐ वनस्पतेशतवल्शोविरोहसहस्रवल्शाविवयंरुहेम ॥ यंत्वामयंस्वधितिस्तेजमानःप्रणिनायमहतेसौभगाय ॥ इतिमंत्रेणअश्वत्थंस्पृशेत् ॥ एवमुपनयनपर्यंतंकृत्वायजमानाश्वत्थांतरालेपटंधृत्वासुमुहूर्तेमंगलाष्टकपाठपुरःसरंतदेवलग्नमितिपठितेअंतःपटंनिःसार्य देवानांनुवयमितिध्रुवसूक्तंपठित्वा ॥ देवानांनुवयमितिनवर्चस्यबृहस्पतिर्दाक्षायण्यदितिर्वानुष्टुप् जपेविनियोगः ॥ ॐ देवानांनुवयंजानाप्रवोचामविपन्यया ॥ उक्थेषुशस्यमानेषुयःपश्यादुत्तरेयुगे ॥ ब्रह्मणस्पतिरेतासंकर्मारइवाधमत् ॥ देवानांपूर्व्येयुगेसतःसदजायत ॥ देवानांयुगेप्रथमेसतःसदजायत ॥ तदाशाअन्वजायंततदुत्तानपदस्परि ॥ भूर्जज्ञउत्तानपदोभुवआशाअजायंत ॥ अदितेर्दक्षोअजायतदक्षाद्वदितिःपरि ॥ अदितिर्ह्यजनिष्टदक्षयादुहितातव ॥ तांदेवाअन्वजायंतभद्राअमृतबंधवः ॥ १ ॥ यद्देवाअदःसलिलेसुसंरब्धाअतिष्ठत ॥ अत्रावोनृत्यंतामिवतीव्रोरेणुरपायत ॥ यद्देवायतयोयथाभुवनान्यपिन्वत ॥ अत्रासमुद्रआगूळ्हमासूर्यमजभर्तन ॥ अष्टौपुत्रासोअदितेर्येजातास्तन्व१स्परि ॥ देवाँउपप्रैत्सप्तभिःपरामार्ताडमास्यत् ॥ सप्तभिःपुत्रैरदितिरुपप्रैत्पूर्व्यंयुगं ॥ प्रजायैमृत्यवेत्वत्पुनर्मार्ताडमाभरत् ॥ २ ॥ इतिध्रुवसूक्तम् ॥ येयज्ञेनेतिवर्गपंचकंशाखांतरस्थमंत्रांश्चपठित्वायुवंवस्त्राणीतिकौपीनंयज्ञोपवीतंपरममितिमंत्रेणयज्ञोपवीतं इयंदुरुक्तेतिद्वाभ्यांकनकमयींदर्भमयींवामेखलांस्वस्तिनोमिमीतेतिदंडंकृ

ष्णाजिनंचतत्तन्मंत्रैर्दत्वासप्रणवांसव्याहृतिकांसशिरस्कांगायत्रींअश्वत्थंस्पृष्ट्वाउपदेशवत्पठेत् ॥ इत्युपनयनम् ॥ ततोमहाना म्न्यादिसमावर्तनांतंकृत्वाकनककुंडलेलंकारांश्चदत्वाआयुष्यंवर्चस्यमितिसूक्तंपठित्वामौंजीविसर्जनांतंकृत्वाममाग्नेइतिसूक्तंपठेत् ॥ ततःस्विष्टकृदादिहोमशेषंसमापयेत् ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥

## ॥ २४९ ॥ अथाश्वत्थविवाहः ॥

श्रीः ॥ तत्रादावश्वत्थालवालेशतकुंभमितंशुद्धजलंक्षिप्त्वादुग्धमधुघृतकुंभैश्चसिक्त्वावस्त्रयुग्मेनअश्वत्थतुलस्यादिशाखावेष्टयित्वा अश्वत्थायोष्णीषंवस्त्रयुग्मं तुलस्यैकंचुकींवस्त्रंकंठभूषणंमंगलसूत्रंमौक्तिकंकर्णपादभूषणानिचदत्वा अश्वत्थस्यविवाहविधिंकरिष्यइतिसंकल्प्य ॥ पूर्वसंस्कारहोमस्थंडिलोत्तरप्रदेशेस्थंडिलंनिर्माययोजकनामानमग्निंप्रतिष्ठाप्यान्वादध्यात् ॥ अत्रप्रधानं ॥ ब्रह्माणंद्वासुपर्णेतिमंत्रेण १०८ तिलाज्यद्रव्येण तथामहाव्याहृतिभिःतिलाज्यद्रव्येण १०८ यक्ष्ये ॥ एवंहोमंकृत्वातुलस्यश्वत्थयोरंतरालेपटंधृत्वामंगलाष्टकानिपठित्वांतःपटंनिःसार्यतयोश्चतुरःशाखामयान्हस्तान्गृभ्णामीतिमंत्रेणयोजयेत् ॥ ततःस्वि[illegible]कृदादिहोमशेषंसमाप्याश्वत्थंतुलसींचपुरुषसूक्तेनषोडशोपचारैःसंपूज्यप्रार्थयेत् ॥ अश्वत्थत्वंजगन्नाथःपुरादेवैर्विनिर्मि[illegible] पापात्संत्राहिनोदेवपुण्यंदेहिमहाफलं ॥ क्षीरोदधिसमुद्भूतेतुलसिहरिवल्लभे ॥ अश्वत्थोद्यापनफलंदेहिमह्यंसदाशिवे [illegible]ततआचार्यःग्रहयज्ञोक्तविधिनाबलीन्दत्वाक्षेत्रपालबलिंदत्वा सर्वेआचार्याःस्वस्वकुंडेपूर्णाहुतिंहुत्वाकर्मशेषंसमापयेयु[illegible] ततोयजमानःपीठपूजांविधाय कृतस्याश्वत्थोद्यापनस्यसांगतासिद्ध्येआचार्यादिभ्यःपूजापूर्वकंदक्षिणांदत्वाआचार्य[illegible]ःपूर्वस्थापिताष्टकलशोदकेनदूर्वापल्लवैःसपत्नीकंयजमानमभिषिंचेयुः ॥ तत्रमंत्राः ॥ आनोभद्रेतिदशर्चंसूक्तं अस्यवा

मस्येतिद्विपंचाशदृचंसूक्तं परोमात्रयेतिदशर्चंसूक्तं मुंचामित्वेतिपंचर्चंसूक्तं समुद्रज्येष्ठाइत्यादयःसुरास्त्वामभिषिंचंत्वित्या द्याः ॥ एवमभिषिक्तोयजमानःतिलकादिधृत्वाअग्निंपीठदेवताश्चसंपूज्य उत्तिष्ठब्रह्मणस्पतइत्युत्थाप्यसोपस्करंपीठमाचार्या यगांचदत्वामंडपंसदस्यायआचार्यायवादत्वाभूयसींचदत्वाकर्मेश्वरार्पणंकृत्वाशताधिकान्ब्राह्मणान्संभोज्यआशिषोगृहीत्वा॥ अनेनाश्वत्थोद्यापनेनश्रीकृष्णःप्रीयतामितिसंपूर्णतांवाचयित्वाइष्टजनैःसहभुंजीत ॥ इतिशौनकीयेअश्वत्थोद्यापनम् ॥ ॥

## ॥ २५० ॥ अथयूपप्रकारः ॥

श्रीः ॥ प्रासादप्रतिष्ठायामयमेवविधिः ॥ तत्प्रकारश्चेत्थं ॥ प्रासादस्यैशान्यां ( अश्वत्थस्यतुपूर्वतः ) पदत्रयंहित्वाऽरत्निमा त्रंगर्तंखात्वातत्राक्षतान्दर्भांश्चक्षिप्त्वा वटाश्वत्थोदुंबरखदिराद्यन्यतमवृक्षनिर्मितं यजमानमात्रमष्टास्रंचषालयुतंमूर्ध्निवर्तुलंयू पंप्रोक्ष्यावटेनिखायहरिद्रातैलाक्तमभिषिच्यचषालंप्रतिमुच्यसर्षपगोरोचनगुग्गुलुदूर्वानिंबपत्राणांपोटलिकांबद्ध्वा युवासुवा साइतिवासोयुगेनाच्छाद्यगंधाद्यैःसंपूज्यलोकपालान्ब्रह्मविष्णुशिवांश्चयूपेसंपूज्य ॥ एह्येहिधर्मध्वजयज्ञनाथत्रयीमयोवेदशरी रयूप ॥ विधायदेवेश्वरयज्ञरक्षांबलिंगृहाणेममहंनमामि ॥ इतिबलिंदत्वामेर्वादिपर्वतान्वरुणंचसंपूज्यप्रार्थयेत् ॥ देहिमेनुग्र हंयूपप्रसादंकुरुचप्रभो ॥ मूलच्छेदेनयत्पापंभूमिघातेनपातकं ॥ अदुष्टयूपघातोत्थंयूपःपापंव्यपोहतु ॥ यद्बाल्येयच्चकौमारे यत्पापंवार्धकेकृतं ॥ तत्सर्वंममदेवेशयूपःपापंव्यपोहतु ॥ यन्निशायांतथाप्रातर्यन्मध्याह्नापराह्णयोः ॥ संध्ययोश्चकृतंपापंकर्म णामनसागिरा ॥ तत्सर्वंममदेवेशयूपःपापंव्यपोहतु ॥ ततोयाओषधीरितिपुष्पमालांबद्ध्वागाढमालिंग्यपुत्रादियुक्तोनमेत् ॥

# ॥ २५१ ॥ अश्वत्थोद्यापनंबौधायनीयं ( पंचकुंडी ) ॥



श्रीः ॥ अत्रसंक्षिप्तःक्रमः ॥ संकल्पादिमंडपप्रतिष्ठांतेतत्रसर्त्विग्यजमानःप्रविश्यआचार्योमुख्यकुंडपश्चिमेसनवग्रहंवास्तुहोमंसंकल्प्यप्रादेशकरणांतेकुंडंसं स्कृत्याग्निंप्रतिष्ठाप्यग्रहवेद्यांपूर्वोक्तमात्स्यानुसारेणग्रहान्संपूज्यतदुत्तरे वास्तुवेद्यामष्टाष्टतिर्यगूर्ध्वरेखीकरणेनैकोनपंचाशत्पदंवास्तुमंडलंसंपाद्यतत्कोणे पार्श्वेचार्धपदानिकृत्वाग्रेप्रतिष्ठोक्तवच्छिख्यादिदेवताःसंपूज्यग्रहवास्तुहोमांतेपृथगग्नौकूष्मांडहोमंकृत्वा ततःपृथग्घव्यवाहसंज्ञकेग्नावग्नेःषोडशसंस्कार सिद्धयेप्रत्येकंचतुश्चतुर्व्याहृतिभिराज्यंहुत्वातस्मात्कुंडादग्निनाग्निरित्यग्निमुद्धृत्यव्याहृत्यास्वेस्वेकुंडेक्षिपेयुः ॥ मुख्याचार्यःस्वर्णसूच्याश्वत्थेलक्ष्मीनारा यणौलिखेत् पिप्पलोपरिचित्रध्वजंपताकांचबद्ध्वाविधिवत्सर्वौषधिकलशंप्रतिष्ठाप्यतेनयाओषधीरितिस्नापयित्वापिष्टकेनभूषयित्वा वनस्पतेशतवल्शइ तिगंधादिभिःसंपूज्यगुग्गुलुधूपंदत्वामहानैवेद्यमग्रतोनिधायसुवर्णशलाकयानेत्रोन्मीलनंकृत्वादधिमधुनांजनेनाङ्क्त्वास्वर्णसूच्याकर्णवेधंकृत्वा हिरण्मये कुंडलेबध्नीयात् ॥ वेद्यांसर्वतोभद्रेब्रह्मादिमंडलदेवताआवाह्यसंपूज्य तत्पूर्वतःपीठेवस्त्रादावक्षतपुंजेसुवर्णप्रतिमायांवनस्पतेशतवल्शइतिलक्ष्मीनाराय णमावाह्यपूजयेत् ॥ तदुत्तरेशांतिकलशंमहीद्यौरित्यादिविधिनाप्रतिष्ठाप्यतत्रगंगादिनदीरावाह्यपूर्णपात्रंनिधायतत्रवरुणंसंपूजयेत् ॥ सर्वेआचार्याःस्व कुंडादीशान्यांकलशान्स्थापयेयुः ॥ सुवर्णशलाकांसूचींचताम्रपात्र्यांकृत्वावेद्यामधिवासयेत् ॥ ततोयूपवेदिकोपर्युत्तरतःश्वभ्रंकृत्वाऊर्ध्वऊषुणइतितस्मि न्प्रतिष्ठाप्यकुंकुमधूपदीपादिदत्वावस्त्रयुग्मेनाच्छाद्यनैवेद्यंसमर्प्यऊर्ध्वऊषुणइत्यधिवासयेत् ॥ प्रदोषसमयेरौद्रबलिंदत्वामुख्यकुंडपश्चिमतःआचार्यो न्वादध्यात् ॥ चक्षुषीआज्येनेत्यंतेतत्रप्रधानंलक्ष्मीनारायणं न्यग्रोधोदुंबराश्वत्थपलाशापामार्गसमित्तिलपायसैःप्रतिद्रव्यं शताहुतिभिः १०० वनस्प तेशतवल्शोविरोहसहस्रवल्शाविवयꣳरुहेमतंत्वामयꣳस्वधितिस्तेतिजानःप्रणिनायमहतेसौभगायइतियजुषा परोमात्रयेतिसूक्तेनप्रत्यृचंचरुणा पुरुषसू क्तेनप्रत्यृचमाज्येन लोकपालमीशानंपूर्वोक्तन्यग्रोधादिभिः २८ अभित्वादेवसवितरितिमंत्रेण ब्रह्मादिमंडलदेवतास्तैरेवद्रव्यैःयक्ष्येशेषेणेत्याज्यभागां

तंकुर्यात् ॥ पूर्वकुंडेलक्ष्मीनारायणंन्यग्रोधसमिदादितैरेवद्रव्यैः १०० इंद्रमग्निंचत्रातारमग्निंदूतमितिमंत्राभ्यांतैरेवद्रव्यैः २८ ॥ दक्षिणेलक्ष्मीनारायणंपूर्ववत् १०० यमंनिर्ऋतिंचयमायसोममसुन्वंतमितिमंत्राभ्यांतैरेवद्रव्यैः २८ ॥ पश्चिमेलक्ष्मीनारायणंपूर्ववत् १०० वरुणंवायुंचइमंमेवरुणआनोनियुद्भिरितिमंत्राभ्यांतैरेवद्रव्यैः २८ ॥ उत्तरेलक्ष्मीनारायणंपूर्ववत् १०० कुबेरंअभित्यंदेवमितितैरेवद्रव्यैः २८ ॥ एवंहोमःकार्यः होमकालेद्वारजापकैरश्वत्थदेवप्रतिष्ठापंचकुंड्युक्तक्रमेणसूक्तजपःकार्यः ॥ ततःस्विष्टकृदाद्यंतेइंद्रादिभ्यःक्षेत्रपालायचबलिंदद्यात् ॥ सर्वेआचार्याःपूर्णाहुत्यादिहोमशेषंसमाप्योत्तरदिनावध्यग्निंरक्षेयुरुपवसेयुश्च ॥ इत्यधिवासनं ॥ प्रातर्घटीस्थापनं ॥ आचार्योमंडपदेवताःसंपूज्याश्वत्थंपंचामृतैरभिषिच्यतैलहरिद्रारोपणाद्युपहारांतंलौकिकमेवकुर्यात् ॥ ततःपूर्वोक्ताश्वत्थोद्यापनविधिनास्थापिताष्टकलशैःपवमानःसुवर्जनइतित्रिरभिषिच्य वस्त्रदक्षिणांतोपचारैःसंपूज्यस्थंडिलेश्वत्थस्यब्रह्मत्वप्रसन्नताशांत्यभीष्टदातृत्वादिसिद्ध्येनामकरणनिष्क्रमणान्नप्राशनचौलोपनयनमहानाम्नीमहाव्रतगोदानसमावर्तनविवाहेषुप्रतिसंस्कारंव्याहृत्याचतुराज्यंहुत्वाश्वत्थंकरेणस्पृशेत् ॥ अधिवासितसूच्याकर्णवेधंकृत्वाआयुष्यमितिसूक्तेनकुंडलेबध्नीयात् शलाकयानेत्रांजनंकार्यं ॥ ततोश्वत्थमूलेतुलसींरोपयित्वायजमानकरेमालतींदत्वामध्येंतःपटंधृत्वा मंगलाष्टकानिपठित्वापटमुन्नमय्यमालतीमश्वत्थमूलेरोपयित्वासर्वेयेयज्ञेनबृहस्पतेप्रथमंतेवदन्भद्रंकर्णेइत्यादिपठेयुः ततःकौपीनंयुवंवस्त्राणीतिवस्त्रंमित्रस्यचक्षुरित्यजिनंयज्ञोपवीतमित्युपवीतंआचमनंच इयंदुरुक्तादितिद्वाभ्यांमेखलामाबध्यस्वस्तिनइतिदंडंततोभिक्षांदत्वाततोविवाहाशिषः ऋक्चवाइदमग्रेगृहावैप्रतिष्ठेतिपठित्वांतेलाजहोमंकृत्वाऽकृत्वावास्विष्टकृदादिहोमशेषंसमाप्य ॥ अश्वत्थोत्तरतःऊर्ध्वऊषुणइतियूपंरोपयित्वातुलसीसहाश्वत्थस्यसुवासिनीभिस्तैलहरिद्रारोपणंमंगलस्नानंचकारयित्वाततःकर्मसाद्गुण्यावाप्त्येलक्ष्मीनारायणप्रीतयेचदुकूलवस्त्रादिनानाद्रव्यपूरितंवंशपात्रदानंकार्यं ॥ तत्रादौपूजनम् ॥ ब्रह्मविष्णुशिवादीनांस्थानंत्वंवृक्षराट्स्वयं ॥ अंगैःसर्वैरहोस्वामिंस्थातव्यंनुत्वयाविभो ॥ इत्यावाहनं ॥ मूलानिब्राह्मणायस्यऋगाद्याश्चांगपल्लवाः ॥ फलानियज्ञशाखाश्चवाञ्छयोमेदयांकुरु ॥ आसनं ॥ सर्वतीर्थमयोयस्मात्सर्ववेदमयोयतः ॥ सर्वतीर्थांबुभिस्तस्मात्पाद्यमाधत्स्ववृक्षराट् ॥ पाद्यं ॥ आपोधर्मस्ययद्बीजमापोधर्मःसनातनः ॥ अर्घ्यःपवित्रंनास्त्यन्यदपामर्घ्यंगृहाण

मे ॥ अर्घ्यं ॥ शुध्यंतिद्रव्यमात्राणिगंगातोयेननित्यशः ॥ अतःसर्वाणिगात्राणिस्नापयेयज्ञवृक्षराट् ॥ स्नानं ॥ सर्वभूताधिवासायसर्वदेवमयायच ॥ सर्वलज्जानिरासार्थंवाससीकल्पयाम्यहं ॥ वस्त्रं ॥ यतोगंधवतीभूमिर्भूमिरूपाहिपादपाः ॥ राजात्वंपादपानांचचंदनंप्रतिगृह्यतां ॥ गंधं ॥ वृक्षराजनमस्तुभ्यंयज्ञराजनमोस्तुते ॥ यज्ञांगरूपयज्ञेशवृक्षाश्वत्थनमोस्तुते ॥ पुष्पं ॥ निर्यासंवृक्षराजानांधूपार्थंकल्पयाम्यहं ॥ धर्मरूपेणवर्ततेत्वंवृक्षाश्वत्थायतेनमः ॥ धूपं ॥ चक्षुर्दंसर्वलोकानांतिमिरस्यनिवारणं ॥ आर्तिक्यंकल्पयेभक्त्यापरिगृह्णीष्ववृक्षराट् ॥ दीपं ॥ अन्नाद्भवंतिभूतानियज्ञश्चान्नात्प्रवर्तते ॥ अश्वत्थयज्ञरूपोसिनैवेद्यंतेर्पयाम्यहं ॥ नैवेद्यं ॥ पायसंलड्डुकांश्चार्पयेत् ॥ फलतांबूलदक्षिणाःसमर्प्यनमस्कारप्रदक्षिणापुष्पांजल्यंतेप्रार्थयेत् ॥ अश्वत्थोसिजगन्नाथपुरादेवैर्विनिर्मितः ॥ पापात्संत्राहिनोदेवपुण्यंदेहिमहाफलं ॥ क्षीरोदधिसमुद्भूतेतुलसिहरिवल्लभे ॥ अश्वत्थोद्यापनफलंदेहिमह्यंसदाशिवे॥ इतिततःपूर्णाहुतिंवसोर्धारांचहुत्वाचार्यादीन्पूजादक्षिणादिभिस्तोषयेत्॥ ततोभिषेकः॥ मंडपाद्युपस्करजातमाचार्यहस्तेप्रतिपाद्यसंभवेदशधान्यानिदद्यादिति ॥

## ॥ २५२ ॥ अथवटोद्यापनम् ॥

श्रीः ॥ तिथ्यादिसंकीर्त्यआत्मनःसकलपापक्षयकुलकोटिसमुद्धरणैहिकामुष्मिकनिरवधिसुखप्राप्तिपूर्वकब्रह्मपदप्राप्तिकामोवटोद्यापनंतथाभीष्टदातृत्वसिद्ध्यर्थंसर्वप्राणिसुखनिवासार्थंचवटसंस्कारंकरिष्येइतिसंकल्प्य॥ तदंगविहितंगणपतिपूजनंपुण्याहवाचनंमातृकापूजनंनांदीश्राद्धमाचार्यादिवरणंचकरिष्ये ॥ स्वगृह्यविधिनातानिकृत्वाचार्यादीन्वृणुयात् ॥ ततःसर्त्विग्यजमानःपूर्णकलशहस्तःमंगलवाद्यतूर्यघोषेणसहशाकुनसूक्तंपठन्वटमंडपप्रादक्षिण्येनपश्चिमद्वारमागत्यतत्रस्योनापृथिवी महीद्यौरितिमंत्राभ्यांधरांसंपूज्यअर्घ्यंदत्वाप्रविश्यवटसमीपेकलशंनिधायवरुणनिर्ऋतिमध्येउपविशेत् ॥ ततआचार्यःकर्मसंकल्प्यभूतशुद्ध्यादिविधायमंडपांतर्गौरसर्षपलाजान्यदत्रसंस्थितमितिविकीर्यसाधितपंचगव्येनकुशैःआपोहिष्ठाइत्यादिमंत्रैःसर्वत्रप्रो

क्षणंकृत्वा स्वस्त्ययनमितिमंत्रद्वयंपठित्वादेवाआयांतुयातुधानाअपयांतुविष्णोदेवयजनंरक्षस्वभूमौप्रादेशंकुर्यात् ॥ यथोक्तमंड
पेउक्ततोरणपताकाध्वजान्बद्ध्वाशांतिसूक्तजपार्थंवेदादिक्रमेणद्वावेकंवाब्राह्मणंप्रागादिक्रमेणप्रतिद्वारंवृणुयात् ॥ ततआचार्यो
वटपश्चिमेचतुरस्रांवेदिकांनिर्मायतत्रसर्वतोभद्रेउक्तप्रकारेणब्रह्मादिदेवताआवाह्य तदुपरिअक्षतपुंजेकलशत्रयंएकंवाकलशंप्र
तिष्ठाप्य ॥ तत्रमध्यमकुंभेब्रह्मजज्ञानमितिब्रह्माणं तद्दक्षिणेवषट्तेइतिविष्णुं उत्तरेत्र्यंबकमितिरुद्रंएकएवकलशश्चेत्तत्रैवआ
ग्नेय्यादिकोणेषुगणानांत्वेतिगणपतिं जातवेदसइतिदुर्गां जज्ञानमितिमातॄः क्षेत्रस्यपतिनेतिक्षेत्रपालं ततःपरितोलोकेशांस्तत्त
न्मन्त्रैरावाह्यसंपूज्य वेदीपरितोष्टौकलशान्स्थापनप्रकारेणसंस्थाप्य तत्रपूर्वादिकलशेषुपंचगव्यंसप्तमृदःपंचपल्लवान्चंदनंपं
चरत्नानिक्षीरिंसर्वौषधीःगंगोदकंचक्षिप्त्वाशुद्धजलेनापूर्यपूर्णपात्रंनिधाय तेषुइंद्रादीनावाह्यसंपूजयेत् ॥ ततस्तैलहरिद्रारोप
णादिवटस्यकृत्वावस्त्रेणावेष्टयेत् ॥ इत्यधिवासनम् ॥ परेद्युःप्रातर्नित्यकर्मनिर्वर्त्यपीठदेवताःसंपूज्यप्रागादिद्वारचतुष्टयेचतुरः
कुंभान्संस्थाप्यतेषुउदकंपंचरत्नपल्लवादिन्निधायइंद्रयमवरुणसोमांस्तत्तन्मंत्रैरावाह्यसंपूज्य चतुर्द्वारेषुचतुर्वेदविदोद्विजाः
शांतिसूक्तानिपठेयुः ॥ ततईशान्यांकुंडेस्थंडिलेवाग्निंप्रतिष्ठाप्य तदुत्तरेवेदिकायामुक्तप्रकारेणग्रहानावाह्यसंपूज्यतदीशान्यां
कलशंप्रतिष्ठाप्यजपार्थंब्राह्मणंवृणुयात् ॥ ततःप्रागाद्याचार्याश्चत्वारःस्वस्वकुंडेस्वगृह्यविधिनाआचार्यकुंडात्श्रोत्रियागारा
द्वाऽग्नीन्प्रणीयध्यायेयुः ॥ कुंडचतुष्टयपक्षेप्राक्कुंडादग्निप्रणयनंतत्रैवमुख्यहोमः ॥ अन्वाधानम् ॥ तत्रेशानकुंडेब्रह्मविष्णु
रुद्रान्घृताक्तदूर्वाज्यद्रव्येणाष्टोत्तरशतमिताहुतिभिर्यक्ष्ये ॥ इंद्राद्यष्टौलोकपालान्पलाशसमिच्चर्वाज्यद्रव्यैःअष्टाविंशतिसंख्य
यायक्ष्ये ॥ दक्षिणेगणपतिंदुर्गांसप्तमातॄःक्षेत्रपालंघृताक्ततिलद्रव्येणाष्टाविंशत्याहुतिभिर्यक्ष्ये ॥ पश्चिमेसाधिप्रत्यधिदेवतानाधि

त्यादिनवग्रहानर्कादिसमिच्चर्वाज्यतिलव्रीहिद्रव्यैःअष्टाविंशतिसंख्याकाहुतिभिर्यक्ष्ये ॥ उत्तरेसोमंसोमोधेनुमितिमंत्रेणघृताक्त
चरुप्लक्षसमिद्द्रव्येणअष्टोत्तरशताहुतिभिःब्रह्मादिदेवताश्चैकैकयाज्याहुत्यायक्ष्ये ॥ एवंतत्तन्मंत्रैःहोमंसंपाद्य ॥ ततआचार्यो
वटस्यहरिद्रातैलादिदत्वापंचोपचारैःसंपूज्यपूर्वस्थापिताष्टकलशान्ब्राह्मणैर्ग्राहयित्वाच आपोहिष्ठा समुद्रज्येष्ठा इमाआपः
एतोन्विंद्रमितिप्रत्येकंजपन्वटस्याभिषेकंकुर्यात् ॥ ततआचार्यःप्रतीच्यांवटसंस्कारार्थस्थंडिलंनिर्मायवटस्यपुंसवनादिविवा
हांतान्संस्कारान्व्याहृतिद्वाराकरिष्ये ॥ अग्निंप्रतिष्ठाप्यअन्वादध्यात् ॥ अग्निंवायुंसूर्यंप्रजापतिंआज्यद्रव्येण प्रतिसंस्कारंच
तुःसंख्याकाहुतिभिर्यक्ष्ये ॥ प्रतिसंस्कारहोमांतेवनस्पतेशतवल्शइतिमंत्रेणवटंस्पृशेत् ॥ एवमुपनयनपर्यंतंहुत्वा ॥ यजमान
वटांतरालेपटंधृत्वासुमुहूर्तंतदेवलग्नमितिपठितेअंतःपटंनिःसार्यभ्रुवसूक्तंयेयज्ञेनेतिपठित्वाकौपीनंयज्ञोपवीतंमेखलांदंडंचतत्त
न्मंत्रैर्दत्वाउपदेशवद्गायत्रींश्रावयित्वानमेत् ॥ ततोमहानाम्न्यादिसमावर्तनांतंकर्मकृत्वालंकारान्दत्वाआयुष्यंवर्चस्यमितिप
ठित्वामौंजींविसर्जयेत् ॥ ततोव टंदूर्वांचदुग्धादिनासिक्त्वावटंदूर्वांवस्त्रयुग्मेनसंवेष्ट्यवस्त्रंकंचुकीमाभरणादिदत्वापूर्ववद्धृत्वा
गृभ्णामीतिमंत्रेण वटदूर्वयोःपल्लवमयान्हस्तान्योजयेत् ॥ ततःसंस्कारसंबंधिस्विष्टकृदादिहोमशेषंसमाप्यवटंपुरुषसूक्तेनसंपू
ज्यप्रार्थयेत् ॥ मूलतोब्रह्मरूपायमध्यतोविष्णुरूपिणे ॥ अग्रतोरुद्ररूपायवटवृक्षायतेनमः ॥ अकारमूलरूपायउकारस्कंधशा
खिने ॥ मकारफलपुष्पायवटवृक्षायतेनमः ॥ ततआचार्याःस्वस्वकुंडेस्विष्टकृदादिहुत्वाबलिंपूर्णाहुतिंचकृत्वा यजमानोव
टोद्यापनसांगतासिद्ध्यर्थेदक्षिणांगांचदास्येइतिसंकल्प्यक्रमेणदत्वा ततऋत्विजःकलशोदकैःयजमानंसमुद्रज्येष्ठाइत्यादिमंत्रैर
भिषिच्यकर्मशेषंसमापयेयुः ॥ ततोयजमानःपीठदेवताःसंपूज्यउत्तिष्ठब्रह्मणस्पतइतिउत्थाप्य यातुदेवगणाःसर्वेइतिविसृज्य

पीठादिआचार्यायदत्वा मंडपंसदस्यायदत्वाभूयसींदत्वाशताधिकान्यथाशक्तिवाब्राह्मणान्भोजयिष्ये इतिसंकल्प्यसंभोज्य आशिषोगृहीत्वावटोद्यापनपूर्णतांवाचयित्वाइष्टजनैःसहभुंजीत ॥ इति वटोद्यापनं ॥ ॥ छ ॥ ॥ छ ॥

## ॥ २५३ ॥ अथवास्तुशांतिप्रयोगः ॥

श्रीः ॥ कर्ताशुभदिनेआचम्यप्राणानायम्यदेशकालौसंकीर्त्यअमुकगोत्रस्यामुकशर्मणोममसपरिवारस्यास्मिन्वास्तौचिरकालसुखनिवासपूर्वमखिलरोगविघ्नादिशांतिसंपदारोग्यपुत्रपौत्रधनधान्यादिसमृद्धिचिरजीवनस्वनिवाससिद्धिद्वारा अस्यवास्तोःशुभतासिद्ध्यर्थंसग्रहमखांवास्तुशांतिंकरिष्ये ॥ तदंगतयागणेशपूजास्वस्तिवाचनमातृकापूजाभ्युदयिकश्राद्धाचार्यब्रह्मर्त्विग्वरणानिकृत्वायथाविभवंवस्त्रालंकारादिभिःपूजयेत् ॥ ततआचार्योयदत्रसंस्थितंभूतं० ॥ भूतप्रेतपिशाचाद्याअपक्रामंतुराक्षसाः॥ स्थानादस्माद्व्रजंत्वन्यत्स्वीकरोमिभुवंत्विमामित्यनेनसर्षपान्विकीर्यपंचगव्येनशुचीवोहव्याइतितृचेनपुनंतुमांदेवजनाइतितृचेनगृहमाविभीतएतोन्विंद्रमित्यृचेनगृहंसंप्रोक्ष्य ॥ स्वस्त्ययनमित्यादिप्रादेशकरणांतंकुर्यात् ॥ ततोगृहादौयजमानैकहस्तमितंचतुरस्रंसयोनित्रिमेखलंकुंडंचतुरंगुलोत्सेधंस्थंडिलंवाविधायतत्पूर्वतश्चतुरंगुलोन्नतंहस्तमितंवेदिद्वयंमृदाविधायउत्तरवेदेरैशानादिकोणचतुष्टयेचतुरोलोहकीलान् ॥ विशंतुभूतलेनागालोकपालाश्चसर्वतः॥ अस्मिन्गृहेवतिष्ठंतुआयुर्बलकराःसदा ॥ इतिमंत्रेणरोपयेत् ॥ प्रतिकीलंमंत्रावृत्तिः ॥ ततईशानकोणादिक्रमेणचतुर्षुकोणेषु ॥ अग्निभ्योप्यथसर्पेभ्योयेचान्येतत्समाश्रिताः॥ तेभ्योबलिंप्रयच्छामिपुण्यमोदतमुत्तममितिमंत्रावृत्त्यामाषभक्तबलीन्दत्वा ॥ वेद्युपरिकुंकुमादिनाहैम्याराैप्यशलाकयावापश्चादारभ्यप्रागंताउदक्संस्थाद्व्यंगुलांतराःप्रणवादिनमोंतैर्दशभिर्नामभिर्दशरेखाःकुर्यात् ॥ ॐ शांतायैनमः यशो

वत्यै० कांतायै० विशालायै० प्राणवाहिन्यै० सत्यै० सुमत्यै० नंदायै० सुभद्रायै० सुरथायै० १० इतिदशरेखाःकृत्वा ५ तथा हिरण्यायै० सुव्रतायै० लक्ष्म्यै० विभूत्यै० विमलायै० प्रियायै० जयायै० ज्वालायै० विशोकायै० इडायै० १० इतिदक्षिणारंभाउदगंताःप्राक्संस्थादशरेखाःकुर्यात् ॥ एवमेकाशीतिपदंमंडलंसंपद्यते ॥ तत्रमध्यस्थनवकोष्ठानिरेखामार्जने नैकीकुर्यात् ॥ एतन्नवपदंब्रह्मस्थानंतस्यचतुर्दिक्षुचत्वारिपदानिविदिक्षुश्रृंखलाकाराणिद्वादशकोणचतुष्टयोभयतश्चाष्टाविंति विंशतिरेकपदानि॥ शिष्टानिप्रतिदिशंपंचपंचेतिविंशतिद्विपदानि ॥ तत्रशिख्याद्याआवाहयेत्॥ ( शांतिग्रंथेषुपूर्वमैशानवेद्यां शंकुनिवेशोत्तररेखाकरणंततोऽग्निस्थापनंततःपूर्वदिशिवेद्यांग्रहस्थापनंपूजनंचततोवास्तुस्थापनमितिक्रमः ॥ अयंवास्त्वग्निग्रहस्थापनक्रमस्तुदानचंद्रिकास्थोज्ञेयः ) ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥

## ॥ २५४ ॥ अथवास्तुमंडलदेवताः ॥

तत्रमंडलेप्रणवाद्यैश्चतुर्थ्यंतैर्नमोंतैर्वक्ष्यमाणनामभिर्देवताआवाह्यस्थापयेत् ॥ तत्रैशानकोणपदेवास्तोःशिरसि ॐ शिखिनेनमः शिखिनमावाहयामीत्येवंसर्वत्र १ तद्दक्षिणैकपदेदक्षिणनेत्रेपर्जन्यायन० २ तद्दक्षिणेततोपिपश्चिमतइतिपदद्वयेदक्षिणश्रोत्रे जयंतायन० ३ तद्दक्षिणपदद्वयेदक्षिणांसे कुलिशायुधाय० ४ तद्दक्षिणपदद्वयेदक्षिणबाहौ सूर्याय० ५ तद्दक्षिणपदद्वयेदक्षिणबाहौ सत्याय० ६ तद्दक्षिणपदद्वयेदक्षिणकूर्परे भृशाय० ७ तद्दक्षिणेअंसपंक्तिगतैकपदेदक्षिणप्रबाहौ आकाशायन० ८ आग्नेयकोणपदेदक्षिणप्रबाहौ वायवेन० ९ तत्पश्चिमैकपदेदक्षिणमणिबंधे पूष्णेन० १० तत्पश्चिमेततोप्युत्तरइतिपदद्वयेदक्षिणपार्श्वे वितथाय० ११ तत्पश्चिमपदद्वयेदक्षिणपार्श्वेएव गृहक्षताय० १२ तत्पश्चिमपदद्वयेदक्षिणोरौयमाय० १३

तत्पश्चिमपदद्वयेदक्षिणजानौ गंधर्वाय० १४ तत्पश्चिमपदद्वयेदक्षिणजंघायां भृंगराजाय० १५ तत्पश्चिमेबाह्यपंक्तिगतैकप
देदक्षिणस्फिचि मृगाय० १६ नैर्ऋतकोणपदैकपदेपादयोः पितृभ्यो० १७ तदुत्तरैकपदेवामस्फिचि दौवारिकाय० १८
तदुत्तरैकपदेततोपिप्रागितिपदद्वयेवामजंघायां सुग्रीवाय० १९ तदुत्तरपदद्वयेवामजानौ पुष्पदंताय० २० तदुत्तरपदद्व
येवामोरौ जलाधिपाय० २१ तदुत्तरपदद्वयेवामपार्श्वे असुराय० २२ तदुत्तरपदद्वयेवामपार्श्वेएव शोषाय० २३ तदु
त्तरेबाह्यपक्तिगतैकपदेवाममणिबंधे० पापाय० २४ वायव्यकोणपदेवामप्रबाहौ रोगाय० २५ तत्प्रागेकपदेवामप्रबाहौ
अहये० २६ तत्प्राक्ततोपिदक्षिणेचेतिपदद्वयेवामकूर्परे मुख्याय० २७ तत्प्राक्पदद्वयेवामबाहौ भल्लाटाय० २८ तत्प्रा
क्पदद्वयेवामबाहौ सोमाय० २९ तत्प्राक्पदद्वयेवामांसे सर्पाय० ३० तत्प्राक्पदद्वयेवामश्रोत्रे अदितयेन० ३१ तत्प्रा
क्बाह्यपंक्तिगतैकपदेबामनेत्रे दितयेन० ३२ तद्दक्षिणेईशानकोणपदाधःकोणपदेमुखे आपाय० ३३ आग्नेयकोणपदादधः
कोणपदेदक्षिणहस्ते सावित्राय० ३४ नैर्ऋत्यपदाधःकोणपदेमेढ्रे जयाय० ३५ वायव्यकोणाधःकोणपदेवामहस्ते रुद्राय०
३६ मध्यगतनवकोष्टकब्रह्मपदसंलग्नप्रागादिपदत्रयेदक्षिणस्तने अर्यम्णे० ३७ तद्दक्षिणैकपदेदक्षिणहस्ते सवित्रेन० ३८
तत्पश्चिमेब्रह्मसंलग्नपदत्रयेजठरदक्षिणभागे विवस्वतेन० ३९ तत्पश्चिमैकपदेवृषणयोः विबुधाधिपाय० ४० तदुत्तरब्रह्मसं
लग्नपदत्रयेजठरवामभागे मित्राय० ४१ तदुत्तरैकपदेवामहस्ते राजयक्ष्मणे० ४२ तत्प्राक्पदत्रयेवामस्तने पृथ्वीधरायन०
४३ तत्प्रागेकपदेउरसि आपवत्साय० ४४ ततोमध्यनवपदेषुहृन्नाभ्योः ब्रह्मणेन० ४५ ॥ तदुत्तरेवास्तोष्पतेवसिष्ठोवास्तो
ष्पतिस्त्रिष्टुप् नृपवास्तुप्रतिष्ठापनेविनियोगः ॐ वास्तोष्पतेप्रतिजानी० इतिसुवर्णादिप्रतिमामभ्युत्तारणपूर्वकंसंस्थाप्य ४६

मंडलाद्बहिरीशानादिकोणचतुष्टये चरक्यै० ४७ विदार्यै० ४८ पूतनायैन० ४९ पापराक्षस्यैन० ५० ततःपूर्वादिचतुर्दिक्षु स्कंदायन० ५१ अर्यम्णेनमः ५२ जृंभकायन० ५३ पिलिपिच्छायन० ५४ ततःपूर्वाद्यष्टदिक्षुतत्तन्मंत्रैर्नामभिर्वा इंद्रायन० ५५ अग्नयेन० ५६ यमायन० ५७ निर्ऋतयेन० ५८ वरुणायन० ५९ वायवेन० ६० कुबेरायन ६१ ईशानाय० ६२ इत्यावाह्य वास्तुपीठदेवताभ्योनमइतिसंपूज्यमंडलादीशान्यांकलशंसंस्थाप्यतत्रवरुणायनमइतिवरुणंसंपूज्य ततःपश्चिमायांकुंडेस्थंडिलेवावरदनामानमग्निंप्रतिष्ठाप्याग्नेरीशान्यांहस्तमितग्रहवेद्यांग्रहान्ग्रहकलशंचसंस्थाप्यतत्रवरुणंसंपूज्यदेवदानवसंवादइत्याद्यैःसंप्रार्थ्याग्निसमीपमेत्यान्वादध्यात् ॥ अस्मिन्वास्तुशांतिकर्मण्यन्वाधानंकरिष्ये ॥ अस्मिन्नन्वाहितेत्यादिचक्षुष्यंतमुक्त्वात्रप्रधानं ॥ आदित्यादिनवग्रहान् अष्टाविंशत्यष्टाविंशतिसंख्याकाभिःसमित्तिलाज्याहुतिभिः ॥ अधिदेवताःप्रत्यधिदेवताश्चअष्टाष्टसंख्याकाभिः ॥ क्रतुसाद्गुण्यदेवताःक्रतुसंरक्षकदेवताश्चचतुश्चतुःसंख्याकाभिःतैरेवद्रव्यैः ॥ शिख्यादिपंचचत्वारिंशद्देवताःप्रत्येकंप्रतिद्रव्यंअष्टोत्तरशताष्टाविंशत्यष्टाभिर्वासंख्याकाभिःऔदुंबरसमित् १ तिल २ (यव) पायस ३ आज्या ४ हुतिभिः ॥ वास्तुंवास्तोष्पतइतिचतसृभिर्ऋग्भिः प्रतिद्रव्यंप्रत्यृचं १०८ वा २८ वा ८ संख्याहुतिभिःपूर्वोक्तद्रव्यैः ॥ पुनर्वास्तुंवास्तोष्पतइतिचतसृभिःवास्तोष्पतेध्रुवास्थूणामित्यनयाचक्रमेणप्रत्यृचंपंचैकान्यतरसंख्याकाभिःपंचबिल्वफलाहुतिभिस्तद्बीजाहुतिभिर्वा ॥ चरक्यादीन्प्रत्येकंअष्टाभिःचतसृभिर्वाप्रत्येकंसमित्तिलपायसाज्याहुतिभिर्यक्ष्ये ॥ शेषेणेत्यादिप्रणीताप्रणयनांतेशिख्यादिदेवताभ्यःप्रत्येकममुष्मैत्वेतिनिर्वापप्रोक्षणपूर्वकमाज्यभागांतेयजमानःइदंउपकल्पितंहवनीयद्रव्यमन्वाधानोक्तदेवताभ्यउत्सृज्येनममेत्युक्त्वोत्सृजेत् ॥ ततआचार्यादयोग्रहहोमंकृत्वा तिल १ समित्

२ आज्य ३ पायसैः ४ शिख्यादिपंचचत्वारिंशद्देवताभ्योनाममंत्रैःप्रत्येकमष्टाविंशत्यष्टाष्टसंख्याकाभिराहुतिभिर्वाहुत्वा वास्तवेवास्तोष्पतइतिचतसृभिःक्रमेणसमित्तिपायसाज्यानिजुहुयात् ॥ पुनर्वास्तवेवास्तोष्पतइतिचतसृभिर्वास्तोष्पतेध्रुवेत्यन याचप्रत्येकंपंचएकैकंवाघृताक्तंबिल्वंजुहुयात् ॥ वास्तोष्पतइतिचतसृणांवसिष्ठोवास्तोष्पतिस्त्रिष्टुबंत्यागायत्री ॥ वास्तोष्पते ध्रुवास्थूणामितीरिंबिठिर्वास्तोष्पतिर्बृहती ॥ होमेविनियोगः ॥ ततश्चरुक्यादिभ्योन्वाधानोक्तमुख्यन्यूनसंख्ययासमिदादि द्रव्याणिजुहुयात् ॥ ततःस्विष्टकृदादिप्रायश्चित्तहोमांते लोकपालेभ्योग्रहपीठदेवताभ्यःक्षेत्रपालायचबलिंदत्त्वापूर्णाहुतिंजु हुयात् ॥ मूर्धानंभरद्वाजोवैश्वानरस्त्रिष्टुप् पूर्णाहुतौवि० ॥ ॐ मूर्धानं० देवाःस्वाहा वैश्वानरायेदं० ॥ ततःप्रणीतानिनय नादिकर्मशेषंसमाप्यवास्तुमंडलपश्चिमदेशे ॐशिखिनेनमः एषपायसबलिर्नममेतिप्रत्येकंपायसबलीन्दत्वाचरक्यादिभ्यस्तथै वमाषभक्तबलीन्दद्यात् ॥ ततआचार्यादयःसमुद्रज्येष्ठाइत्यादिमंत्रैःसुरास्त्वामित्यादिभिश्चमंत्रैः सपत्नीकंयजमानंशांतिकल शोदकेनाभिषिच्यसर्वौषधीभिरनुलिप्यस्नापयेयुः ॥ ततःयजमानआचार्योवागृहंप्रागादितस्त्रिसूत्र्याराक्षोघ्नपावमानमंत्रैः स तूर्यमंगलघोषंवेष्टयित्वा समंताद्दुग्धपूर्णयाजलपूर्णयाचसस्तनकुंभ्यातथैवसूक्तद्वयेनधाराद्वयमविच्छिन्नंकुर्यात् ॥ ततोमध्यन वपदेब्रह्मस्थानेसुरूपांस्त्रीरूपांपृथ्वींध्यात्वा ॐपृथिव्यैनमःइतिसंपूज्य ॥ सर्वदेवमयंवास्तुवास्तुदेवमयंपरंइतिपठित्वा ॥ गृह स्याग्नेयकोणेआकाशपदे यजमानपदेनजानुमात्रंगर्तंखात्वामध्येगोमयेनोपलिप्यशुभ्रचंदनपुष्पाक्षतैरलंकृत्यसर्वधान्यबीजानि दध्योदनंचक्षिप्त्वानवंजलपूर्णकलशंशुक्लैकपुष्पयुतंगंधाद्यर्चितमादायजानुभ्यांमवनिंगत्वातज्जलंगर्ते ॐ नमोवरुणायेतिमंत्रेण प्रक्षिपेत् ॥ जलेप्रदक्षिणावर्तेपुण्येघोर्ध्वमुखेशुभम् ॥ ततःपक्वमृत्पेटिकायांशाल्यादिसप्तधान्यबीजानिदध्योदनंशैवालंफलपु

ष्पाणिचक्षिप्त्वातूर्यघोषेणपूर्वस्थापितवृषवास्तुप्रतिमामानीयपेटिकायांसंस्थाप्यगंधादिभिःसंपूज्यप्रार्थयेत् ॥ पूजितोसिमया वास्तोहोमाद्यैरर्चनैःशुभैः ॥ प्रसीदपाहिविश्वेशदेहिमेगृहजंसुखं ॥ वास्तुमूर्तेनमस्तेस्तुभूशय्याभिरतप्रभो ॥ मद्गृहंधनधान्यादिसमृद्धंकुरुसर्वदेति ॥ ततोमृत्पेटिकांपिधायशनैर्गर्तेस्थाप्य ॥ सशैलसागरांपृथ्वींयथावहसिमूर्धनि ॥ तथामांवहकल्याणसंपत्संततिभिःसह ॥ इतिसंप्रार्थ्यतयैवमृदागर्तंपूरयेत् ॥ मृदआधिक्येउत्तमंसाम्येमध्यमंन्यूनत्वेत्वधमंफलंविद्यात् ॥ गर्तोपरिभूमिंगोमयेनोपलिप्यशुक्लगंधपुष्पाक्षतैर्भूषयेत् ॥ ततोऽग्नेःपश्चिमतआचार्यंसंपूज्यतस्मैवासोयुगंगांचदत्वाब्रह्मऋत्विग्भ्यो यथाशक्तिदक्षिणांदत्वाग्रहाणांशिख्यादीनांचपूजांकृत्वाक्षमाप्य उत्तिष्ठब्र० यांतुदेवेतिचविसर्जनेकृतेतत्प्रतिमाद्याचार्यहस्तेप्रतिपाद्याग्निंसंपूज्यगच्छगच्छेतिविसृज्यब्राह्मणैःशांतिंपाठयित्वाग्रहशिख्यादिप्रीत्यर्थंप्रत्येकंत्रीन्प्रत्येकंत्रींस्त्रीनेकैकंयथाशक्तिवाब्राह्मणान्संभोज्याशिषोगृहीत्वासुहृद्युतोभुंजीत ॥ इतिश्रीमन्नारायणभट्टसूरिसूनुभट्टरामकृष्णविरचितःपौराणवास्तुशां० ॥

## ॥ २५५ ॥ अथगृहप्रवेशः ॥

एवंप्रथमेह्निवास्तुशांतिंविधायद्वितीयेह्निसुमुहूर्तेतदहरेववागृहप्रवेशंकुर्यात् ॥ सचेत्थं ॥ नवंजलपूर्णपल्लवोपेतंदूर्वायुतंगंधाक्षतसुधालिप्तंवस्त्रवेष्टितंसपूर्णपात्रंसफलंकलशमंजलिनागृहीत्वायजमानोब्राह्मणान्वितः सदारपुत्रस्तूर्यघोषेणस्वस्तिसूक्तेनकनिक्रददितिचगृहंप्रविश्य प्रधानगृहमध्येधान्योपरितंकलशंस्थापयेत् ॥ ततोगृहस्थैर्यार्थंब्राह्मणैःपुण्याहंवाचयित्वातान्संपूज्य तैस्त्रिःशिवंवास्त्वितिवाचयित्वाब्राह्मणान्संभोजयित्वाशिषोगृहीत्वासुहृद्युतोभुंजीत ॥ इतिगृहप्रवेशः ॥ ॥ छ ॥

## ॥ २५६ ॥ अथपंचकुंडीमंडपप्रकारः ॥

श्रीगणेशायनमः ॥ देवप्रतिष्ठांअश्वत्थोद्यापनंवाकर्तुतत्तत्स्थानादुत्तरतःपूर्वतोवाउत्तममंडपेषोडशहस्तं मध्यममंडपेचतुर्दशह स्तंदशहस्तंवाचतुर्द्वारंमंडपंकुर्यात् ॥ तत्रमध्यस्तंभचतुष्टयमध्येवेदींहस्तोच्छ्रितांकुर्यात् ॥ तस्याःसमंततश्चतुर्दिक्षुत्रयोदशांगु लांतरंहस्तमात्रांतरंवात्यक्त्वाकुंडानिहस्तमात्राणिकुर्यात् ॥ तत्रप्राच्यांचतुरस्रंदक्षिणयोनि ॥ दक्षिणेर्धचंद्रंदक्षिणयोनि ॥ पश्चिमेवर्तुलंपश्चिमयोनि ॥ उत्तरेपद्मकुंडंपश्चिमयोनि ॥ ईशान्यांचतुरस्रंवृत्तंवाआचार्यकुंडंदक्षिणयोनि पश्चिमेवाकुर्यात् ॥ मंडपस्येशान्यामुत्तरस्यांवादिशिचतुर्हस्तांतरेणमंडपार्धमानेनत्रिभागेनवाचतुर्थभागेनवाप्रासादमानेनवाचतुष्कोणंकोणध्वज स्तंभयुतंचतुर्द्वारंपूर्वमुखमुदङ्मुखंवास्नानमंडपंकुर्यात् ॥ तन्मध्यप्रदेशेवेदिकाद्वयंद्विहस्तंचतुर्थांशोच्छ्रायंद्विमेखलंकुर्यात् ॥ अथवामहावेद्यर्धविस्तीर्णतदुच्छ्रायोच्छ्रायंतदर्धोच्छ्रायंवाकुर्यात् ॥ महामंडपस्यपश्चिमतश्चतुर्हस्तंषड्ढस्तंवाजलाधिवासमंडपं कुर्यात् ॥ एवंमंडपादिसंपाद्यपूर्वदिनेपूर्वतनचतुर्थदिनेवायथाविभवंसंभृतसंभारःसंकल्पादिकुर्यात् ॥ ॥ छ ॥ ॥ छ ॥

## ॥ २५७ ॥ अथसंकल्पोऋत्विग्वरणंच ॥

श्रीः ॥ तत्रादौयजमानःकूष्मांडहोमब्रह्मकूर्चादिभिरात्मतनुंपावयित्वामुहूर्तात्पूर्वदिनेकृतमंगलस्नानःशुक्लमाल्यानुलेपनःस भार्यःस्वासनेउपविश्याचम्यपवित्रपाणिःप्राणानायम्यदेशकालौस्मृत्वाआत्मनःपापक्षयपूर्वकं दशपूर्वान्दशपरानात्मनासहैक विंशतिपुरुषान्पितृतोमातृतश्चोद्धर्तुकामोहंश्रीपरमेश्वरप्रात्यर्थं यथाज्ञानेनयथामिलितोपचारद्रव्यैर्देशकालाद्यनुसारतःएका

हाद्यधिवासप्रकारेणआचार्यब्रह्मसदस्यादिद्वाराविष्णुप्रतिष्ठांशिवप्रतिष्ठांवाकरिष्ये ॥ तथाचपत्नीपुत्रादिसहितस्यममप्रतिमां पिंडिकाकुंडतोरणस्तंभादिषुप्रधानांगकर्मसुचहीनाधिकांगतादिकर्मण्ययथाकरणादिविविधसूचितसर्वानिष्टनिबर्हणार्थंअस्य कर्मणःसाद्गुण्यार्थंचग्रहमखंतिलैःशांतिहोमंचकरिष्ये ॥ आदौनिर्विघ्नतासिद्ध्यर्थंगणपतिपूजनंस्वस्तिवाचनंमातृकापूजनंनां दीश्राद्धंआचार्यवरणंचकरिष्ये ॥ तानिकृत्वाआचार्यादीन्वृणुयात् ॥ यथा ॥ अमुकप्रवरान्वितोऽमुकगोत्रोत्पन्नोऽमुकशा खाध्यायीअमुकशर्माअहं ॥ अमुकप्रवरोपेतममुकगोत्रोत्पन्नममुकशाखाध्यायिनममुकशर्माणंअमुकदेवप्रतिष्ठाख्येकर्मणिमुख्य कुंडेविहितहोमंकर्तुमाचार्यत्वामहंवृणे ॥ आचार्योवृतोस्मियथाज्ञानतःकर्मकरिष्यामीतिवदेत् ॥ एवंब्रह्माणंसदस्यंप्रतिकुंड माचार्यं ब्रह्माणंच ॥ एकोवाब्रह्मा ॥ प्रतिकुंडंऋत्विजोजापकादींश्चवृत्वासर्वान्मधुपर्कादिनार्हयित्वाप्रार्थयेत् ॥ आचार्यप्रा र्थना ॥ यथाशक्रस्यवागीशआचार्यःसर्वकर्मसु ॥ तथामयात्वमाचार्योवृतोऽस्मिन्सर्वकर्मणि ॥ मंत्रमूर्तिर्भवान्नाथःसंसाराघौ घनाशनः ॥ श्रीदेवस्यप्रतिष्ठायांकुरुकर्मयथोदितं ॥ त्वत्प्रसादान्निजेष्टंचसमग्रंफलमाप्नुयां ॥ संसारभयभीतेनह्येषयज्ञःप्रका रितः ॥ प्रारब्धस्त्वत्प्रसादेननिर्विघ्नंमेभवत्विति ॥ ॥ ब्रह्माणं—यथाचतुर्मुखोब्रह्माशक्रादीनांमखेप्रभुः ॥ तथात्वंममयज्ञे स्मिन्ब्रह्मत्वेनवृतोह्यसि ॥ ॥ सदस्यं—त्वंनोगुरुःपितामातात्वंप्रभुस्त्वंपरायणं ॥ त्वत्प्रसादाच्चविप्रर्षेसर्वंमेस्यान्मनोगतं ॥ आपद्विमोक्षणार्थायकुरुयज्ञमतंद्रितः ॥ ऋत्विग्भिःसहितःशुद्धैःसंयतैःसुसमाहितैः ॥ आचार्येणचसंयुक्तःकुरुकर्मयथोदि तं ॥ ॥ गणपं—प्रारिप्सितस्ययज्ञस्यजपस्यहवनस्यच ॥ निर्विघ्नेनसमाप्त्यर्थंत्वामहंगणपंवृणे ॥ ॥ उपद्रष्टारं—भगवन्स र्वधर्मज्ञसर्वधर्मभृतांवर ॥ वितते ममयज्ञेस्मिन्नुपद्रष्टाभवद्विज ॥ सर्वेषांसमुच्चयेनप्रार्थना ॥ अस्ययागस्यनिष्पत्तौभवंतोभ्य

र्थितामया ॥ सुप्रसन्नाःप्रकुर्वंतुकर्मेदंविधिपूर्वकं ॥ अस्मिन्कर्मणियेयेतुवृतागुरुमुखामया ॥ सावधानाःप्रकुर्वंतुस्वंस्वंकर्मय थोदितं ॥ इतिसर्वान्संपूज्यसंप्रार्थ्यसाष्टांगंप्रणमेत् ॥ तेचसर्वेप्रत्येकं वृतोस्मियथाज्ञानतःकर्मकरिष्यामीतिवदेयुः ॥ इति ॥

## ॥ २५८ ॥ अथमंडपपूजाचंडेश्वरोक्ता ॥

श्रीः ॥ अथाचार्यःसयजमानःसर्त्विक्पूर्णकुंभदध्यक्षतफलपुष्पसुवासिनीभिःसहितोमंगलघोषैःभद्रंकर्णेभिःकनिक्रददित्यादि शाकुनसूक्तंपठन्मंडपंगच्छेत् ॥ आचार्योमंडपप्रादक्षिण्येनपश्चिमद्वारिजानुभ्यामवनिंगत्वा स्योनापृथिवीतिभूमिंध्यायन्अ र्घ्यंदद्यात् ॥ तत्रादौ ॥ उद्धृतासिवराहेणकृष्णेनशतबाहुना ॥ दंष्ट्राग्रैर्लीलयादेवियज्ञार्थंप्रणमाम्यहं ॥ इतिनमस्कारः॥ ब्रह्म णानिर्मितेदेविविष्णुनाशंकरेणहि ॥ पार्वत्याचैवगायत्र्यास्कंदवैश्रवणेनच ॥ यमेनपूजितेदेविधर्मेणविजिगीषुणा ॥ सौभा ग्यंदेहिपुत्रांश्चधनंरूपंचदेहिमे ॥ गृहाणार्घ्यंमयादत्तंसौभाग्यंचप्रयच्छमे ॥ इत्यर्घ्यंदत्वापश्चिमद्वारेणमंडपंप्रादक्षिण्येनप्रवि श्यनैर्ऋतीवारुण्योर्मध्येपूर्वोत्तराभिमुखाउपविशेयुः ॥ आचार्योवेद्याःपश्चिमतउपविश्यआचम्यप्राणानायम्यदेशकालौस्मृत्वा अमुककर्मणियजमानेनवृतोहंमंडपपूजादिविहितंकर्मकरिष्ये ॥ गणेशंपूजयित्वाशरीरशुद्ध्याकर्माधिकारार्थआसनादिन्या सभूशुद्ध्यादिपवनपावनन्यासादिनात्मानंपावयित्वाप्रतिष्ठामंडपांतः यदत्रसंस्थितंभूतं० ॥ जितंतेपुंडरीकाक्षनमस्तेविश्वभा वन ॥ सुब्रह्मण्यनमस्तेस्तुमहापुरुषपूर्वज ॥ भूतानिराक्षसावापियेत्रतिष्ठंतिकेचन ॥ तेसर्वेप्यपगच्छंतुयज्ञमन्त्रकरोम्यहं ॥ अपसर्पंतुतेभूता० ब्रह्मकर्मसमारभे ॥ इतिलाजगौरसर्षपान्सर्वतोविकिरेत् ॥ ततःशुचीवोहव्येतितृचेनकुशैःपंचगव्येनआ पोहिष्ठेतितृचेनअद्भ्यःसंभूतइत्युत्तरनारायणेनचाद्भिःप्रोक्षणंकार्यं ॥ ततःकृतांजलिःस्वस्त्ययनंतार्क्ष्यमितिमंत्रद्वयंपठेत् ॥

देवाआयांतु यातुधानाअपयांतु विष्णोदेवयजनंरक्षस्व भूमौप्रादेशंकुर्यात् ॥ ततोवेदिकाग्नेयकोणेस्थूणावसुदामावाह्यपूजये
त् ॥ नैर्ऋत्यकोणेभद्रां ॥ वायव्यकोणेअदितिं ॥ ईशानकोणेनंदांचपूजयेत् ॥ ततःपश्चिमद्वारेणबहिर्निर्गत्यमंडपप्रादक्षिण्येन
मंडपद्वाराद्बहिर्हस्तांतेपूर्वेश्वत्थतोरणंसुदृढनामकंशंखचिह्नितंअग्निमीळेमधुच्छंदाअग्निर्गायत्री ॥ अग्निमीळे० ॥ इतिमंत्रेणनि
धाय ॥ सुदृढतोरणायनमइतिनाममंत्रेणगंधादिभिःसंपूज्यपुष्पमालादिशोभितंकुर्यात् ॥ राहुबृहस्पतीतत्रन्यसेत् ॥ तत्रैकः
कलशःस्थाप्यः ॥ यथा ॥ महीद्यौरितिभूमिंस्पृष्ट्वा ओषधयःसमितिधान्यराशिंकृत्वा तदुपरिआकलशेष्वितिकलशंसंस्थाप्य
इमंमेगंगेइतिजलेनापूर्य गंधद्वारामितिगंधंप्रक्षिप्य याओषधीरितिसर्वौषधीः ओषधयःसमितियवान् कांडात्कांडादितिदू
र्वाः अश्वत्थेवइतिपंचपल्लवान् स्योनापृथिवीतिसप्तमृदः याःफलिनीरितिफलं सहिरत्नानीतिपंचरत्नानि हिरण्यरूपइतिहिर
ण्यंचप्रक्षिप्य युवासुवासाइतिवस्त्रेणरक्तसूत्रेणवावेष्ट्य पूर्णादर्वीतितदुपरिपूर्णपात्रंन्यसेत् ॥ तस्मिन्कलशेध्रुवावाहनंपूजनंच ॥
ततोदक्षिणेऔदुंबरंसुभद्रनामकंचक्रचिह्नितंतोरणं ॥ ॐ इषेत्वोर्जेत्वावायवस्थोपायवस्थदेवोवःसविताप्रार्पयतुश्रेष्ठतमायक
र्मणे ॥ इतिनिधायसुभद्रतोरणायनमःइतिपूर्ववत्संपूज्यपूर्ववच्चंदनादिचर्चितंकृत्वासूर्यमंगारकंचतत्रन्यसेत् ॥ तत्रैकःकलशः
पूर्ववत्स्थाप्यः ॥ तत्रधरामावाहयेत्पूजयेच्च ॥ पश्चिमेप्लाक्षंसुकर्मनामकंगदाचिह्नितंतोरणं ॥ ॐ अग्नआयाहिवीतयेगृणानो
हव्यदातये ॥ निहोतासत्सिबर्हिषि ॥ इतिनिधायसुकर्मतोरणायनमइतिपूर्ववत्संपूज्यचंदनादिचर्चितंकृत्वाशुक्रंबुधंचतत्रन्य
सेत् ॥ तत्रपूर्ववत्कलशंसंस्थाप्यतत्रवाक्पतिमावाह्यपूजयेत् ॥ ॥ ततउत्तरे ॥ वटतोरणंसुहोत्रनामकंपद्मचिह्नितं ॥ ॐ
शंनोदेवी० ॥ इतिमंत्रेणनिधायसुहोत्रतोरणायनम इतिपूर्ववत्संपूज्यचंदनादिचर्चितंकृत्वासोमकेतुशनींस्तत्रन्यसेत् ॥ तत्र

पूर्ववत्कलशस्थापनंतत्रविघ्नेशमावाह्यपूजयेच्च ॥ ॥ ततःपूर्वद्वारेकलशद्वयंप्रतिद्वारशाखंप्रतिष्ठाप्यचंदनोदकफलपंचपल्लव सप्तमृत्तिकासुवर्णपंचरत्नादियुतंदध्यक्षतविभूषितंवस्त्रपुष्पमालादिचंदनचर्चितं रक्तसूत्रवेष्टिताननंपूर्ववन्मंत्रैःस्थापयेत् ॥ प्रतिकलशंमंत्रावृत्तिः ॥ ऐरावतंकलशद्वयेन्यसेत्पूजयेच्च ॥ ऋग्वेदिनावृत्विजौपूर्वद्वारेशांतिसूक्तजपार्थत्वेनत्वांवृणे ॥ ऋग्वेदःपद्मपत्राक्षोगायत्रःसोमदैवतः ॥ अत्रिगोत्रस्तुविप्रेंद्रऋत्विक्त्वंमेमखेभवेतिप्रत्येकंवृत्वा ॥ अग्निमीळेमधुच्छंदाअग्निर्गायत्री ॥ ॐ अग्निमीळे० ॥ इतिमंत्रेणगंधाद्युपचारैःपूजयेत् ॥ ततःसहस्राक्षंमत्तैरावतस्थितंपीतकिरीटकुंडलधरंदक्षिणवामकरस्थवज्रोत्पलमिंद्रंध्यात्वा ॥ एह्येहिसर्वामरसिद्धसाध्यैरभिष्टुतोवज्रधरामरेश ॥ संवंद्यमानोप्सरसांगणेनरक्षाध्वरंनोभगवन्नमस्ते ॥ भोइंद्रइहागच्छेहतिष्ठ ॥ इंद्रंसांगंसप० सशक्तिकंद्वारकलशेआ० ॥ आशुःशिशानइतींद्रोप्रतिरथइंद्रस्त्रिष्टुप् ॥ ॐ आशुःशिशानोवृष० ॥ इतिपीतांपताकांपीतध्वजंचोच्छ्रयेत् ॥ त्रातारमिंद्रंगर्गइंद्रस्त्रिष्टुप् ॥ इंद्रपूजनेवि० ॥ ॐ त्रातारमिंद्रं० ॥ इतिइंद्रंपूजयित्वा ॥ इंद्रःसुरपतिःश्रेष्ठोवज्रहस्तोमहाबलः ॥ शतयज्वाचयोदेवस्तस्मैनित्यंनमोनमः ॥ इतिनत्वाइंद्रायसांगायसायुधायसशक्तिकायअमुंसदीपमाषभक्तबलिंसमर्पयामीतिसमर्पयेत् ॥ हस्तौपादौप्रक्षाल्याचम्य ॥ ततआग्नेयेगत्वा पूर्ववत्कलशंस्थापयित्वापुंडरीकंअमृतंचतत्रन्यसेत्पूजयेच्च ॥ छागस्थंरक्तंदक्षिणवामकरद्वयधृतशक्तिकमंडलुंयज्ञोपवीतिनमग्निंध्यात्वा ॥ एह्येहिसर्वामरहव्यवाहमुनिप्रवीरैरभितोभिजुष्ट ॥ तेजस्वतालोकगणेनसार्धममाध्वरंपाहिकवेनमस्ते ॥ भोअग्नेइत्यादिआग्निंसांगमावाह्यरक्तांपताकांरक्तध्वजंच ॥ अग्निंदूतंमेधातिथिरग्निर्गायत्री ॥ पताकोच्छ्रयणेवि० ॥ ॐ अग्निंदूतंवृणीमहे० इतिउच्छ्रयेत् ॥ त्वंनोअग्नेनाभागःकाण्वोग्निर्महापंक्तिः ॥ ॐ त्वंनोअग्नआयुषुत्वंदेवेषुपूर्व्यवस्वएकंइरज्यसि ॥

त्वामापःपरिस्रुतःपरियंतिस्वसेंतवोनभंतामन्युकेसमे ॥ इतिमंत्रेणाग्निंगंधादिभिःपूजयित्वा ॥ आग्नेयःपुरुषोरक्तःसर्वदेवमयोव्ययः ॥ धूम्रकेतुरजोध्यक्षस्तस्मैनित्यंनमोनमः ॥ इतिनत्वाअग्नयेसांगायेतिबलिंदद्यात् ॥ ततआचम्यदक्षिणेगत्वाप्रतिद्वारशाखंचंदनोदकादियुतंपूर्ववत्कलशद्वयंस्थापयित्वावामननामकंदिग्गजंतत्रन्यसेत्पूजयेच्च ॥ ततोयजुर्वेदिनावृत्विजौशांतिसूक्तजपार्थत्वेनत्वांवृणे ॥ कातराक्षोयजुर्वेदस्त्रैष्टुभोविष्णुदैवतः ॥ काश्यपेयस्तुविप्रेंद्रऋत्विक्त्वंमेमखेभव ॥ इतिप्रत्येकंवृत्वा ॥ इषेत्वोर्जेत्वावा० ॥ इतिमंत्रेणगंधाद्युपचारैःपूजयेत् ॥ ततोमहिषारूढंधृतदंडपाशदक्षिणवामकरद्वयंकृष्णांजनचयोपममग्निसमलोचनंयमंध्यात्वा ॥ एह्येहिवैवस्वतधर्मराजसर्वामरैरर्चितधर्ममूर्ते ॥ शुभाशुभानंदशुचामधीशशिवायनःपाहिमखंनमस्ते ॥ भोयमइत्यादियमंसांगमित्याद्यावाह्य ॥ कृष्णांपताकांकृष्णंध्वजंच ॥ आयंगौःसार्पराज्ञीसर्पागायत्री ॥ ॐ आयंगौःपृश्निरक्रमीद० ॥ इतिमंत्रेणोच्छ्रयेत् ॥ ततःयमायसोमंयमोयमोनुष्टुप् ॥ ॐ यमायसोमं० ॥ इतियमंगंधादिभिःपूजयित्वा ॥ महामहिषमारूढंदंडहस्तंमहाबलं ॥ आवाहयामियज्ञेस्मिन्पूजेयंप्रतिगृह्यतां ॥ इतिनत्वा ॥ यमायसांगायेत्यादिबलिंदद्यात् ॥ ततआचम्यनैर्ऋत्यांगत्वापूर्ववत्कलशंस्थापयित्वा कुमुदंदुर्जयंचतत्रपूजयित्वा ॥ ततोनरारूढंमहाकायंखड्गहस्तंमहाबलं ॥ राक्षसैर्वेष्टितंनीलंपीताभरणभूषितं ॥ निर्ऋतिंध्यात्वा ॥ एह्येहिरक्षोगणनायकस्त्वंविशालवेतालपिशाचसंघैः ॥ ममाध्वरंपाहिपिशाचनाथलोकेश्वरस्त्वंभगवन्नमस्ते ॥ भोनिर्ऋतेइत्यादिनानिर्ऋतिंकलशेआवाह्य ॥ मोषुणःकण्वोनिर्ऋतिर्गायत्री ॥ पताकोच्छ्रयणेवि० ॥ मोषुणःपरापरा० ॥ इतिनीलपताकांनीलध्वजंचोच्छ्रयेत् ॥ असुन्वंतइतिमंत्रेणमोषुणइतिवानिर्ऋतिंगंधादिभिःपूजयित्वा ॥ निर्ऋतिंखड्गहस्तंचसर्वलोकैकपावनं ॥ आवाहयामियज्ञेस्मिन्पूजेयंप्रतिगृह्यतां ॥ इतिन

त्वासांगायेत्यादिबलिंदद्यात् ॥ ॥ ततआचम्यपश्चिमेगत्वापूर्ववत्कलशद्वयंस्थापयित्वाअंजनाख्यंदिग्गजंतत्रन्यसेत् ॥ सा
मवेदिनावृत्विजोपश्चिमद्वारेशांतिसूक्तजपार्थंत्वामहंवृणे ॥ सामवेदस्तुपिंगाक्षोजागतःशक्तिदैवतः ॥ भारद्वाजस्तुविप्रें
द्रऋत्विक्त्वंमेमखेभवेतिप्रत्येकंवृत्वाअग्नआयाहीतिगंधाद्युपचारैःपूजयेत् ॥ ततःमकरस्थंपाशहस्तंशुक्लवर्णकिरीटिनंवरुणंध्या
त्वा ॥ एह्येहियादोगणवारिधीनांगणेनपर्जन्यमहाप्सरोभिः ॥ विद्याधरेंद्रामरगीयमानपाहित्वमस्मान्भगवन्नमस्ते ॥ भोवरुणे
त्यादिद्वारकलशेआवाह्य ॥ श्वेतांपताकांश्वेतध्वजंच ॥ इमंमेवरुणेतिशुनःशेपोवरुणोगायत्री ॥ वरु० ॐ इमंमेवरुणश्रुधी
हवमद्याचमृळय ॥ त्वामवस्युराचके ॥ इतिउच्छ्रयेत् ॥ तत्त्वायामिशुनःशेपोवरुणस्त्रिष्टुप् ॥ ॐ तत्त्वायामि० इतिवरुणं
गंधादिभिःपूजयेत् ॥ पाशहस्तंचवरुणमर्णसांपतिमीश्वरं ॥ आवाहयामियज्ञेस्मिन्वरुणायनमोनमः ॥ इतिनत्वावरुणायेत्या
दिमाषभक्तबलिंदत्वा ॥ ॥ ततआचम्यवायव्यांगत्वातत्रपूर्ववत्कलशंस्थापयित्वा तत्रपुष्पदंतंसिद्धार्थंचसंपूज्यमृगाधिरू
ढंधूम्रवर्णचित्रांबरधरंयुवानंध्वजवरददक्षिणवामकरद्वयंवायुंध्यात्वा ॥ एह्येहियज्ञेममरक्षणायमृगाधिरूढःसहसिद्धसंघैः ॥
प्राणाधिपःकालकवेःसहायगृहाणपूजांभगवन्नमस्ते ॥ भोवायोइहागच्छेत्यावाह्य ॥ धूम्रांपताकांधूम्रध्वजंच ॥ वायोशतंवा
मदेवोवायुरनुष्टुप् ॥ ॐ वायोशुतंहरीणां० ॥ इतिमंत्रेणोच्छ्रयेत् ॥ तववायोऽव्यश्वांगिरसोवायुर्गायत्री ॥ ॐ तववायवृत
स्पते० इतिवायुंगंधादिभिरभ्यर्च्य ॥ वायुमाकाशगंचैवपवनंवेगवद्गतिं ॥ आवाहयामियज्ञेस्मिन्पूजेयंप्रतिगृह्यतां ॥ अना
कारोमहौजाश्चयश्चादृष्टगतिर्दिवि ॥ तस्मैपूज्यायजगतोवायवेहंनमामिच ॥ इतिनत्वासांगायेत्यादिमाषभक्तबलिंदद्यात् ॥
ततआचम्यउत्तरेगत्वापूर्ववत्कलशद्वयंसंस्थाप्यसार्वभौमंदिग्गजंतत्रन्यसेत् ॥ अथर्ववेदिनावृत्विजौशांतिसूक्तजपार्थंत्वेनत्वां

वृणे ॥ बृहन्नेत्रोथर्ववेदोनुष्टुभोरुद्रदेवतः ॥ वैशंपायनविप्रेंद्रऋत्विक्त्वंमेमखेभवेतिप्रत्येकंवृत्वा ॥ ततःशंनोदेवीरितिमंत्रेणगं
धाद्युपचारैःपूजयेत् ॥ ततोनरयुतविमानस्थंकुंडलमहाकेयूररुचिरंगदावरददक्षिणवामभुजद्वयंमुकुटिनंमहोदरंमहाकायंहरि
तवर्णंकुबेरंध्यात्वा ॥ एह्येहियक्षेश्वरयज्ञरक्षांविधत्स्वनक्षत्रगणेनसार्धं ॥ सर्वौषधीभिःपितृभिःसहैवगृहाणपूजांभगवन्नमस्ते ॥
भोसोमेत्यादिद्वारकलशेआवाह्य ॥ हरितांपताकांहरितध्वजंच ॥ आप्यायस्वराहूगणोगोतमःसोमोगायत्री ॥ ॐ आप्याय
स्व० इत्युच्छ्रयेत् ॥ सोमोधेनुंराहूगणोगोतमःसोमस्त्रिष्टुप् ॥ ॐ सोमोधेनुं० इतिमंत्रेणसोमंगंधादिभिःपूजयेत् ॥ सर्वनक्ष
त्रमध्येतुसोमोराजाव्यवस्थितः ॥ तस्मैसोमायदेवायनक्षत्रपतयेनमः ॥ इतिनत्वासांगायेत्यादिसोमायेमंमाषभक्तबलिंसमर्प
यामीतिदद्यात् ॥ ततआचम्यईशान्यांगत्वापूर्ववत्कलशंसंस्थाप्य ॥ सुप्रतीकंदिग्गजंमंगलंचतत्रसंपूज्य वृषारूढंदक्षिणवाम
हस्तयोर्वरत्रिशूलधरंत्रिनेत्रंशुक्लमीशानंध्यात्वा ॥ एह्येहिविश्वेश्वरनस्त्रिशूलकपालखट्वांगधरेणसार्धं ॥ लोकेनयज्ञेश्वरयज्ञसि
द्ध्यैगृहाणपूजांभगवन्नमस्ते ॥ भोईशानेत्यादिईशानंकलशेआवाह्य ॥ श्वेतांपताकांश्वेतध्वजंच ॥ अभित्वादेवसवितरित्या
जीगर्तिःशुनःशेपःसवितागायत्री ॥ ॐ अभित्वादेवसवित० इत्युच्छ्रयेत् ॥ तमीशानमितिगंधादिभिरभ्यर्च्य ॥ वृषस्कंध
समारूढशूलहस्तत्रिलोचन ॥ आवाहयामियज्ञेस्मिन्पूजेयंप्रतिगृह्यतां ॥ सर्वाधिपोमहादेवईशानःशुक्लईश्वरः ॥ शूलपाणि
र्विरूपाक्षस्तस्मैनित्यंनमोनमः ॥ इतिध्यात्वा ॥ ईशानायसांगायेत्यादिबलिंदद्यात् ॥ ॥ ततआचम्यईशानपूर्वयोर्मध्येअध
उद्दिश्यअनंतशयनासीनंफणासहस्रमंडितंपद्मशंखधरोर्ध्वाधोदक्षिणकरद्वयं चक्रगदाधरोर्ध्वाधोवामकरद्वयमनंतंध्यात्वा ॥
एह्येहिपातालधरामरेंद्रनागांगनाकिन्नरगीयमान ॥ यक्षोरगेंद्रामरलोकसंघैरनंतरक्षाध्वरमस्मदीयं ॥ भोअनंतइहागच्छेत्या

दिअनंतमावाह्यश्वेतांपताकांश्वेतध्वजंच ॥ आयंगौःसार्पराज्ञीसर्पागायत्री ॥ ॐ आयंगौःपृश्निः० इत्युच्छ्रयेत् ॥ तेनैवमंत्रे
णशेषंगंधादिभिरभ्यर्च्य ॥ योसावनंतरूपेणब्रह्मांडंसचराचरं ॥ पुष्पवद्धारयेन्मूर्ध्नितस्मैनित्यंनमोनमइतिनत्वासांगायेत्यादि
माषभक्तबलिंदद्यात् ॥ ॥ ततआचम्यपश्चिमनिर्ऋतिमध्येऊर्ध्वमुद्दिश्यअक्षसूत्रकुशमुष्टिधरोर्ध्वाधोदक्षिणकरद्वयंसुवर्णकमंड
लुधरोर्ध्वाधोवामकरद्वयंचतुर्मुखंश्मश्रुजटिलंलंबोदरंसुवर्णवर्णब्रह्माणंध्यात्वा ॥ एह्येहिसर्वाधिपतेसुरेंद्रलोकेनसार्धंपितृदेव
ताभिः ॥ सर्वस्यधातास्यमितप्रभावोविशाध्वरंनःसततंशिवाय ॥ भोब्रह्मन्इहागच्छेत्यादिब्रह्माणंसांगमित्याद्यावाह्यरक्तांप
ताकांरक्तध्वजंच ॥ ब्रह्माजज्ञानंगोतमोवामदेवोब्रह्मात्रिष्टुप् ॥ ॐ ब्रह्मजज्ञानंप्रथ० अनेनोच्छ्रयेत् ॥ तेनैवब्रह्माणंगंधादिभिर
भ्यर्च्य ॥ पद्मयोनिश्चतुर्मूर्तिर्वेदावासःपितामहः ॥ यज्ञाध्यक्षश्चतुर्वक्रस्तस्मैनित्यंनमोनमइतिनत्वासांगायेत्यादिबलिंदद्यात् ॥
अन्येतुस्योनापृथिवीतिपृथ्वींसंपूज्यतेनैवध्वजपताकास्थापनंकुर्वंति ॥ रूपनारायणमतेईशानपूर्वयोर्मध्येब्रह्मपूजनं ॥ ततआ
चम्यमंडपमध्येअत्युच्चदंडोदशहस्तदीर्घस्त्रिहस्तायतोमहाध्वजोविचित्रवर्णः ॥ इंद्रस्यवृष्णइत्यस्यैंद्रोप्रतिरथइंद्रस्त्रिष्टुप् ॥ ॐ इं
द्रस्यवृष्णो० इतिसंस्थाप्य ॥ ब्रह्मजज्ञानमितिमंत्रेणतत्रैवब्रह्मपूजनंकार्यं ॥ ततोमंडपस्यषोडशस्तंभेषुसर्वेभ्योदेवेभ्योनमः ।
वंशेषुकिन्नरेभ्योनमः । पृष्ठेपन्नगेभ्योनमइतिपूजयेत् ॥ ॥ ततोमंडपाद्बहिःपूर्वस्यांदिशिकिंचिद्भूमिमुल्लिप्यतत्रोपविश्य ॥
त्रैलोक्येयानिभूतानिस्थावराणिचराणिच ॥ ब्रह्मविष्णुशिवैःसार्धंरक्षांकुर्वंतुतानिमे ॥ देवदानवगंधर्वायक्षराक्षसपन्नगाः ॥
ऋषयोमनवोगावोदेवमातरएवच ॥ सर्वेममाध्वरेरक्षांप्रकुर्वंतुमुदान्विताः ॥ ब्रह्माविष्णुश्चरुद्रश्चक्षेत्रपालगणैःसह ॥ रक्षंतुमं
डपंसर्वेघ्नंतुरक्षांसिसर्वतः ॥ त्रैलोक्यस्थस्थावरेभ्योभूतेभ्योनमः ॥ त्रैलोक्यस्थचरेभ्योभूतेभ्योनमः ॥ ब्रह्मणेनमः ॥ विष्णवे

नमः ॥ शिवायनमः ॥ देवेभ्योनमः॥ दानवेभ्योनमः ॥ गंधर्वेभ्योनमः ॥ यक्षेभ्योनमः ॥ रक्षोभ्योनमः ॥ पन्नगेभ्योनमः ॥ ऋषिभ्योनमः ॥ मनुष्येभ्योनमः ॥ गोभ्योनमः ॥ देवमातृभ्योनमः ॥ इतिप्रत्येकंसंपूज्यपूर्वमंत्रैरेभ्योभूमौमाषभक्तब लिंदद्यात् ॥ इतिमंडपप्रतिष्ठा ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥ ॥छ ॥

## ॥ २५९ ॥ अथशांतिहोमः ॥

श्रीः ॥ ततोदेशकालौस्मृत्वाप्रतिमापिंडिकादिषुन्यूनाधिकपाषाणप्राणिवधादिदोषपरिहारार्थंशांतिहोमंकरिष्येइतिसंकल्प्या ग्निस्थापनादिविधायान्वाधानंकुर्यात् ॥ आज्यभागांतमुक्त्वात्रप्रधानंमृत्युरोगान्अघोरंरुद्रंपापभक्षणमंत्रलिंगोक्तदेवताःस्था प्यदेवंच ५ एताःपंचदेवताःप्रत्येकंअष्टाधिकशतसंख्याकाभिर्घृताक्ततिलाहुतिभिर्यक्ष्येशेषेणस्विष्टकृतमित्यादि ॥ क्रमेणहो ममंत्राः ॥ परंमृत्यो:संकुसुकोमृत्युरोगास्त्रिष्टुप् ॥ घृताक्ततिलहोमेवि० ॥ परंमृत्यो० ॥ अघोरेभ्योथघोरे० ॥ त्र्यंबकंवसि ष्ठस्त्र्यंबकोनुष्टुप् ॥ घृताक्ततिलहोमेवि० ॥ त्र्यंबकं० ॥ चरणंपवित्रं ॥ स्थाप्यदेवमंत्रःइदंविष्णुर्मेधातिथिर्विष्णुर्गायत्री ॥ घृताक्ततिलं० ॥ इदंविष्णु० ॥ विष्णोर्नुकंदीर्घतमानारायणस्त्रिष्टुप् ॥ घृताक्त० ॥ विष्णोर्नुकं० इतिनारायणस्य ॥ शिव पक्षे ॥ तत्पुरुषायविद्महे० इतिशिवस्य० ॥ ततःस्विष्टकृदादिहोमशेषंसमापयेत् ॥ इतिशांतिहोमः ॥ ॥ छ ॥

## ॥ २६० ॥ देवहस्तेकंकणबंधनेजलाधिवासेचवासुदेवीप्रतिष्ठाप्रयोगेविशेषः ॥

आचार्यःअद्येत्यादिकौतुकबंधनंकरिष्येइतिसंकल्प्यदर्भकूर्चेउदकुंभंनिधायदशतंतुमितंपंचांगुलमष्टांगुलंवा कार्पाससूत्रंहरिद्राक्तंसाक्षतकांस्यपात्रेनिधायकुं भोदकेनसूत्रमभिषिंचेदेभिर्मंत्रैः ॥ अग्निमीळइतिनवर्चस्यसूक्तस्यमधुच्छंदाअग्निर्गायत्री ॥ सूत्रप्रोक्षणेविनियोगः ॥ ॐ अग्निमीळे० ॥ आपोहिष्ठेति

तिसृणामांबरीषःसिंधुद्वीपआपोगायत्री ॥ एतोन्विंद्रमितितिसृणामांगिरसस्तिरश्चींद्रोनुष्टुप् ॥ स्वादिष्ठयेतिदशर्चस्यसूक्तस्यमधुच्छंदाःपवमानःसोमो गायत्री ॥ रक्षोहणमितिपंचविंशर्चस्यसूक्तस्यभारद्वाजःपायूरक्षोहाग्निस्त्रिष्टुप् ॥ रात्रीव्यख्यदित्यष्टर्चस्यसूक्तस्यकुशिकःसौभरिपुत्रोरात्रिर्गायत्री ॥ कृणुष्वपाजइतिपंचदशर्चस्यसूक्तस्यगौतमोवामदेवोरक्षोहाग्निस्त्रिष्टुप् ॥ तरत्समंदीतिचतसृणामवत्सारःपवमानसोमोगायत्री ॥ सहस्रशीर्षेतिषोळश र्चस्यसूक्तस्यनारायणःपुरुषोनुष्टुप्अंत्यात्रिष्टुप् ॥ विष्णोर्नुकमितिषण्णामौचथ्योदीर्घतमाविष्णुस्त्रिष्टुप् ॥ परोमात्रयेतिसप्तानांमैत्रावरुणिर्वसिष्ठोवि ष्णुस्त्रिष्टुप् ॥ हिरण्यवर्णामितिपंचदशर्चस्यसूक्तस्यआनंदकर्दमचिक्लीतेंदिरासुताऋषयःश्रीर्देवताआद्यास्तिस्रोनुष्टुभःततएकाप्रस्तारपंक्तिःततोद्वेत्रिष्टु भौततोष्टावनुष्टुभःअंत्याप्रस्तारपंक्तिः ॥ यज्जाग्रतइतिषण्णांशिवसंकल्पमंत्राणांप्रजापतिर्मनस्त्रिष्टुप् ॥ विहिहोत्रेतिपंचानांवामदेवोवायुरनुष्टुप् ॥ मुंचा मित्वेतिपंचानांप्राजापत्योयक्ष्मनाशनइंद्रस्त्रिष्टुबंत्यानुष्टुप् ॥ स्योनापृथिवीमेधातिथिःपृथिवीगायत्री ॥ द्रविणोदाइत्यस्यांगिरसःकुत्सोद्रविणोदाअग्नि स्त्रिष्टुप् ॥ सवितापश्चातादित्यस्यनाभागःसवितात्रिष्टुप् ॥ नवोनवइतिसूर्यासावित्रीसूर्यासावित्रीत्रिष्टुप् ॥ उलूकयातुमितिवसिष्ठइंद्रस्त्रिष्टुप् ॥ पिशं गभृष्टिमित्यस्यदैवोदासिःपुरुरूपइंद्रोगायत्री ॥ एभिर्मंत्रैःसूत्रमभिषिच्य ॥ जातवेदसइत्यस्यजातवेदाअग्निस्त्रिष्टुप् ॥ इत्यनयासूत्रंगंधेनानुलिप्य ॥ विश्वेत्तातइत्यस्यभार्गवोनृमेधइंद्रोजगती सूत्रबंधनेवि० ॥ इतिमंत्रेभगवतोदक्षिणहस्तेबध्नीयात् ॥ ततोधान्यराशौजलद्रोणिंकटाहंवाजलभांडंनिधा यएतेषामभावेजलधारार्थंशिक्यादिसंपाद्यद्रोण्यादिकंगंधोदकेनापूर्यतन्मध्येअष्टाविंशतिदर्भनिर्मितंकूर्चंनिधाय यदत्रसंस्थितमितिभूतशुद्धिंविधायतस्मि न्कूर्चेमूलमंत्रेणहरिंहरंवाभावयित्वाचक्रमुद्रांप्रदर्श्य जलद्रोणीतोदक्षिणदिशिधान्यपुंजोपरिवस्त्रद्वयवेष्टितंकलशंएकवस्त्रवेष्टितंकरकंचकलशस्थापनमंत्रैः स्थापयेत् ॥ तत्रकलशेब्रह्मजज्ञानंगौतमोवामदेवोब्रह्मात्रिष्टुप्कलशेब्रह्मावाहनेवि० ॥ ॐ ब्रह्मणेनमःब्रह्माणमावाहयामीत्यावाह्यकरकेनाममंत्रेणसुद र्शनमावाहयेत् ॥ ॐ सुदर्शनायनमःसुदर्शनमावाहयामि ॥ ततःजलद्रोण्यादेरुपरि यदत्रसंस्थितमितिमंत्रेणसर्षपान्विकीर्यअष्टौकलशान्कलशस्था पनमंत्रैःस्थापयेत् तेष्वष्टकलशेषुइंद्रादीनावाहयेत् ॥ अमृतःसुवर्चसंदीपंदद्यात् ॥ जलांतःशमीपीठंस्थापयित्वातदुपरिवस्त्रमास्तीर्यप्रतिमांवस्त्रेणाच्छा

धकुशैरावेष्ट्यप्राङ्मुखीमुदङ्मुखींवाजलेधिवासयेत् ॥ अयंकमलावासइत्यागमप्रसिद्धिः ॥ अयमेवसरोजसंघातनामकाधिवासः ॥ जलद्रोण्यभावेसंततधारांकुर्यात् ॥ जलाधिवासंएकरात्रंयामंवागोदोहनमात्रंवाकुर्यात् ॥ ॥ जलाधिवाससूक्तानितु ॥ अतोदेवाइतिषण्णांमेधातिथिर्विष्णुर्गायत्री ॥ विष्णोर्नुकमितिसप्तदशर्चस्यसूक्तस्यदीर्घतमाविष्णुर्जगतीसप्तम्यादितिसृणामिंद्राविष्णूआद्याःषट्त्रिष्टुभः ॥ अस्यवामस्येतिद्विपंचाशदृचस्यसू०दीर्घतमाविश्वेदेवास्त्रिष्टुप्तृतीयापंचमीसप्तमीनांमरुतोंत्यानांतिसृणामगस्त्यःप्रथमाद्वितीयाचतुर्थीषष्ठ्यष्टमीदशम्येकादशीद्वादशीनामिंद्रः द्वात्रिंश्यावाक्त्रयस्त्रिंश्याःशकधूमसोमोपंचत्रिंश्याअग्निवायुसूर्याःषट्त्रिंश्यावाक्सप्तत्रिंश्यष्टत्रिंश्योःसूर्यएकोनचत्वारिंश्याःकालचक्रं चत्वारिंश्याःसरस्वतीएकचत्वारिंश्याःसाध्याःद्विचत्वारिंश्याःसूर्यपर्जन्याग्नयःत्रिचत्वारिंश्याःसरस्वान्द्वादशीपंचदशीत्रयोविंश्येकोनत्रिंशीषट्त्रिंश्येकचत्वारिंश्योजगत्यः ततएकाप्रस्तारपंक्तिःएकपंचाश्यनुष्टुप् ॥ जलाधिवासनेवि० ऋ० ५२ ॥ ममाग्नेवर्चइत्येकविंशानामाद्यानांदशानांविहव्यःततःसप्तानांपरमेष्ठीप्रजापतिःततोंत्यानांयज्ञोनामप्रजापतिःआद्यानांनवानांविश्वेदेवाःशेषाणांभावव्रृत्तमनुष्टुप्नवमीजगती ॥ ऋ० २१ ॥ आशुःशिशानइतित्रयोदशर्चस्यसूक्तस्यइंद्रोप्रतिरथऋषिःइंद्रोदेवताचतुर्थ्याबृहस्पतिस्त्रिष्टुबंत्यानुष्टुप् १३ ॥ शंनइंद्राग्नीइतिपंचदशर्चस्यसूक्तस्यमैत्रावरुणिर्वसिष्ठोविश्वेदेवास्त्रिष्टुप् ॥ १५ रक्षोहणमितिपंचविंशर्चस्यसूक्तस्यभारद्वाजःपायूरक्षोहाग्निस्त्रिष्टुप् २५ ॥ आनोभद्राइतिदशर्चस्यसूक्तस्यराहूगणोगोतमोविश्वेदेवाःआद्याःपंचजगत्यःषष्ठीविराट्स्थानात्रिष्टुप्सप्तमीजगतीअष्टम्याद्यास्तिस्त्रस्त्रिष्टुभः १० ॥ स्वस्त्ययनमितिद्वयोः स्वस्त्यात्रेयोविश्वेदेवास्त्रिष्टुप् २ ॥ इमारुद्रायेत्येकादशर्चस्यसूक्तस्यकुत्सोरुद्रोजगती ११ ॥ मुंचामित्वेतिपंचर्चस्यसूक्तस्ययक्ष्मनाशनोनामप्रजापतिपुत्रोराजयक्ष्मनाशनइंद्रस्त्रिष्टुबंत्यानुष्टुप् ५ ॥ रात्रीव्यख्यदित्यष्टर्चस्यसूक्तस्यकुशिकःसौभरिपुत्रोरात्रिर्गायत्री ८ ॥ एतानिसूक्तानिजपेयुः ॥ ततःअथर्वशीर्षंयथाशक्त्यावर्तयेत ॥ एवंजलाधिवासंसंपाद्यसाक्षतहस्ताचार्यादिसहितःसपत्नीकोयजमानः मंगलतूर्यनिनादेनसुवासिनीमंगलगीतसहितः भद्रंकर्णेभिरितिमंत्रघोषेणमहामंडपप्रादक्षिण्येनपश्चिमद्वारे

णमंडपंप्रविश्यवेद्याःपश्चिमतउपविश्याचम्यप्राणानायम्यदेशकालौस्मृत्वामंडपप्रतिष्ठांकरिष्येइतिसंकल्प्य ॥ गणेशंसंपूज्यअथवास्तुयजननवग्रहमखा र्थंवृतैराचार्यादिभिर्यथावकाशप्रदेशेकुंडांतरेस्थंडिलेवाएकतंत्रेणपृथग्वावास्तुयागंग्रहमखंचकारयेतइतिविशेषः ॥

## ॥ २६१ ॥ पंचकुंडीपक्षेन्वाधानादि ॥

श्रीः ॥ पूर्वेईशानकुंडस्थमुख्याचार्यःउपरिमेखलायांइदंविष्णुरितिविष्णुं मध्यमेखलायांब्रह्मजज्ञानमितिब्रह्माणं अधोमेखलायांकद्रुद्रायेतिरुद्रंयोन्यां गौरीर्मिमायेतिगौरींचावाह्यपूजयेत् ॥ स्वगृह्यविधिनाकुंडसंस्कारपूर्वमग्निंप्रतिष्ठाप्यअग्नेर्गर्भाधानादिसंस्कारार्थंव्याहृत्याहुतीःप्रतिसंस्कारमष्टाष्टसंख्या काहुत्वा ॥ ततःप्रागाद्याचार्याःप्रागादिकुंडहोमंकरिष्यइतिसंकल्प्य ॥ उपरिवत्स्वस्वकुंडसंस्कारंकृत्वामुख्याचार्यकुंडात्संस्कृतमग्निंअग्निनाग्निःसमिध्य तइतिमंत्रेणस्वेस्वेकुंडेप्रतिष्ठापयेयुरग्नेर्ध्यानादिचकुर्युः ॥ मुख्यकुंडाचार्यःस्वकुंडस्यैशान्यांशांतिकलशंविधिवत्स्थापयेत् ॥ प्रागाद्याचार्याःस्वस्वकुंडस्यै शान्यांसंपातोदकार्थंशांतिकलशंचस्थापयेयुः ॥ तत्रैकःकलशःसंपातोदकार्थं ॥ द्वितीयकलशेसाक्षतपात्रेमूर्तिंमूर्त्यधिपतिंलोकपालंचावाहयेत् ॥ तत्प्र कारः ॥ पूर्वकुंडस्यैशानकलशे पृथिवीमूर्तिंआवाहयामि १ पृथिवीमूर्त्यधिपतिंशर्वं २ लोकपालमिंद्रं ३ अग्निमूर्तिं ४ अग्निमूर्त्यधिपतिंपशुपतिं लोकपालंअग्निं ६ इतिपूर्वकुंडेषट् ॥ दक्षिणकुंडैककलशेयजमानमूर्तिं १ यजमानमूर्त्यधिपतिंउग्रं २ लोकपालंयमं ३ सूर्यमूर्तिं ४ सूर्यमूर्त्यधिपतिं रुद्रं ५ लोकपालंनिर्ऋतिं ६ इतिषट् ॥ पश्चिमकुंडैककलशे जलमूर्तिं १ जलमूर्त्यधिपतिंभवं २ लोकपालंवरुणं ३ वायुमूर्तिं ४ वायुमूर्त्यधिपतिंई शानं ५ लोकपालंवायुं ६ इतिषट् ॥ अथोत्तरकुंडैककलशे सोममूर्तिं १ सोममूर्त्यधिपतिं २ लोकपालंकुबेरं ३ आकाशमूर्तिं ४ आकाशमूर्त्यधि पतिंभीमं ५ लोकपालं ईशानं ६ इत्युत्तरकुंडेषट्आवाह्यपूजयित्वाअन्वाधानंकुर्यात् ॥ तत्रादौमुख्यकुंडेआचार्यःसमिद्द्वयमादायविष्णुप्रतिष्ठांगतया विहितहोमंकर्तुंतत्रदेवतापरिग्रहार्थमन्वाधानंकरिष्येअस्मिन्नन्वाहितेग्नावित्याद्याज्यभागांतमुक्त्वा ( मुख्यकुंडेमूर्तिपानसंति ) ॥ प्रधानंस्थाप्यदेवंविष्णुं पलाशौदुंबराश्वत्थशम्यपामार्गसमित्तिलचर्वाज्यैःप्रतिद्रव्यं १०८ संख्यया २८ संख्ययावायक्ष्ये ॥ पिंडिकां २८ संख्ययातिलद्रव्येण लक्ष्मींगरुडं

चप्रत्येकं २८ तिलद्रव्येण ब्रह्मादिमंडलदेवताः प्रत्येकं १० सिलद्रव्येण ॥ प्रणवादिन्यासांतर्गततत्वानामाप्यायनार्थंप्रतितत्वं १० संख्ययालिंगोक्त देवतास्तिलद्रव्येणयक्ष्ये ॥ ( अथवाप्रणवादिन्यासमंत्राणामाप्यायनार्थंविष्णुं १०८ तिलैर्यवैश्चइतित्रिविक्रमः ) ॥ प्रतिमायाः गर्भाधानादिषोडशसं स्कारसिद्ध्यर्थंप्रजापतिंअष्टा ८ हुतिसंख्ययातिलद्रव्येणव्याहृतिमंत्रेणयक्ष्ये ॥ तथाचशांत्यर्थंप्रजापतिं १०८ तिलद्रव्येणयक्ष्ये ॥ शेषेणस्विष्टकृत मित्यादि ॥ ॥ अथपूर्वकुंडेआज्यभागांतमुक्त्वाअत्रप्रधानंपृथिवीमूर्तिंपृथिवीमूर्त्यधिपतिंशर्वंलोकपालंइंद्रंअग्निमूर्तिं अग्निमूर्त्यधिपतिंपशुपतिंलोकपा लंअग्निंचप्रत्येकंपलाशोदुंबराश्वत्थशम्यपामार्गसमित्तिलचर्वाज्यैःप्रतिद्रव्यं ८ यक्ष्ये ॥ स्थाप्यदेवंविष्णुंतैरेवद्रव्यैःप्रत्येकं १०८ पिंडिकां २८ तिल द्रव्येण ॥ लक्ष्मींगरुडंचप्रत्येकं २८ तिलद्रव्येण ॥ प्रजापतिं १०८ तिलद्रव्येण शेषेणस्विष्टकृतमित्यादि० ॥ दक्षिणकुंडेप्रधानं ॥ यजमानमू र्तिं यजमानमूर्त्यधिपतिंउग्रं यमं सूर्यमूर्तिं सूर्यमूर्त्यधिपतिंरुद्रं लोकपालंनिर्ऋतिंच प्रत्येकंपलाशोदुंबराश्वत्थशम्यपामार्गसमित्तिलचर्वाज्यैःप्रतिद्रव्यं ८ स्थाप्यदेवंविष्णुंतैरेवद्रव्यैःप्रत्येकं १०८ पिंडिकां २८ तिलद्रव्येण लक्ष्मींगरुडंचप्रत्येकं २८ तिलद्रव्येणप्रजापतिं १०८ तिलद्रव्येण ॥ शेषेणे त्यादि ॥ ॥ अथपश्चिमकुंडेप्रधानं ॥ जलमूर्तिं जलमूर्त्यधिपतिंभवं लोकपालंवरुणं वायुमूर्तिंवायुमूर्त्यधिपतिंईशानंलोकपालंवायुं तैरेवद्रव्यैःप्रति द्रव्यं ८ स्थाप्यदेवंविष्णुंतैरेवद्रव्यैःप्रतिद्रव्यं १०८ पिंडिकां २८ तिलद्रव्येण लक्ष्मींगरुडंचप्रत्येकं २८ तिलद्रव्येणप्रजापतिं १०८ तिलद्रव्येण शेषेणेत्यादि० ॥ अथोत्तरकुंडेप्रधानं सोममूर्तिं सोममूर्त्यधिपतिंमहादेवं लोकपालंकुबेरं आकाशमूर्तिं आकाशमूर्त्यधिपतिंभीमं लोकपालंईशा नं प्रत्येकंपूर्वोक्तद्रव्यैः प्रतिद्रव्यं ८ स्थाप्यदेवंविष्णुंतैरेवद्रव्यैःप्रतिद्रव्यं १०८ पिंडिकां २८ तिलद्रव्येण लक्ष्मींगरुडंचप्रत्येकं २८ तिलद्रव्येण प्रजापतिं १०८ तिलद्रव्येणशेषेणस्विष्टकृतमित्यादि ॥ इतिपंचकुंडीपक्षेन्वाधानम् ॥ ॥ ॥ ॥ ॥ ॥

## ॥ २६२ ॥ अथपंचकुंडीहोममंत्रद्वारपालजपक्रमः ॥



श्रीः ॥ होमेक्रियमाणेजापकाजाप्यानिपठेयुः ॥ तान्यग्रेपूर्वादिकुंडीयहोमांतेवक्ष्यंते ॥ ईशानकुंडेमुख्यआचार्यःआज्यभागांतंकृत्वा ॥ यस्यवाक्यंस

ऋषिरितिसामान्येनऋष्याद्युक्त्वासमिदादिहोमंकुर्यात् ॥ ईशान्याद्याचार्याःप्रतिद्रव्यंहोमांतेदेवस्यशिरस्सुरसिपादयोःस्पृशेयुरितिकेचित् ॥ आज्य
होमेस्रुवेणाज्यशेषंप्रतिकुंडस्थापितशांतिकलशेषुनयेयुः ॥ तत्रहोममंत्राः ॥ विष्णुःस्थाप्यश्चेत्इदंविष्णुरितिमूलमंत्रः तेनैवहोमः ॥ नारायणश्चेत्
विष्णोर्नुकमितिमंत्रेणहोमः ॥ ह्रीश्चतेलक्ष्मीश्चपत्न्यौ अहोरात्रेपार्श्वे नक्षत्राणिरूपं अश्विनौव्यात्तं इष्टंमनिषाण अमुंमनिषाण सर्वंलोकंमनिषाणस्वा
हाइतिपिंडिकामंत्रेणहोमः ॥ त्यागस्तुयजमानेनप्रतिकुंडंआदावेवकर्तव्यः हिरण्यवर्णामितिलक्ष्म्याः ॥ तत्पुरुषायविद्महेसुवर्णपक्षायधीमहि ॥ तन्नो
गरुडःप्रचोदयात् ( त्यमूषुवाजिनमितिवा इंद्रंमित्रमितिवा ) गरुडस्यहोममंत्रः ॥ ब्रह्मादिसर्वतोभद्रमंडलदेवतानांस्थापनोक्तमंत्रैर्नामभिर्वाहोमः ॥ अ
थन्यासहोमः सचन्याससमयएवान्येनऋत्विजाकर्तव्यः ॥ सचत्रिविक्रममतेयदिसमुदायेनक्रियतेतदापरायविष्णवेस्वाहेतितिलैरष्टोत्तरशतंकर्तव्यः वि
ष्णवइदंनममेतित्यागः ॥ प्रतिष्ठामयूखेतुपरायशिवात्मनेइतिशैवे ॥ एवंसूर्यादिषुविशेषः ॥ विष्णुप्रतिमायाःगर्भाधानादिषोडशसंस्कारसिद्ध्यर्थंप्रति
संस्कारंअष्टाहुतिसंख्ययासमस्तव्याहृतिभिर्होमः ॥ सचजीवन्यासानंतरंकर्तव्यः ॥ शांत्यर्थंव्याहृतिहोमः ॥ सोपिदेवस्थापनानंतरंकर्तव्यः ॥ अथप्रा
च्यादिकुंडेहोममंत्राः ॥ तत्रपूर्वकुंडेआचार्यःआज्यभागांतंकृत्वा ॥ यस्यवाक्यंसऋषिरित्यादिऋष्याद्युक्त्वायजमानेनत्यागेकृतेप्रधानहोमंकुर्यात् ॥
प्रतिद्रव्यंहोमांतेदेवंपादनाभिशिरःसुस्पृशेत् ॥ आज्यहोमकृत्तुआज्यशेषंस्रुवेणकिंचिदुत्तरकलशेनिनयेत् ॥ प्रधानहोममंत्राः ॥ स्योनापृथिवीतिपृथि
वीमूर्तेः ॥ ॐ स्योनापृथिवी०थःस्वाहा ॥ पृथिव्याइदं० इत्यष्टाहुतयःप्रतिमंत्रंहोतव्याः ॥ अघोरेभ्यइतिपृथिवीमूर्त्यधिपतेःशर्वस्य ॥ त्रातारमिंद्रमि
तिलोकपालस्य ॥ अग्निंदूतमित्यग्निमूर्तेः ॥ तेजःपशूनामित्यग्निमूर्त्यधिपतेःपशुपतेः ॥ अग्नआयाहीतिलोकपालस्याग्नेः ॥ प्रतिमंत्रंअष्टाहुतयःअष्टा
विंशतिर्वा ॥ विष्णुःस्थाप्यश्चेत्तदाइदंविष्णुरितिहोमः १०८ नारायणश्चेत्तदाविष्णोर्नुकमितिहोमः ॥ ह्रीश्चतेलक्ष्मीश्चेतिपिंडिकामंत्रः २८ हिरण्य
वर्णामितिलक्ष्म्याः २८ तत्पुरुषायविद्महेसुवर्णपक्षायेतिगरुडस्य २८॥ समस्तव्याहृतीः १०८ ततःस्विष्टकृतएकादशप्रधानाहुतिमंत्राः ॥ पूर्वद्वारेजपः
श्रीसूक्तं पवमानं सोमोधेनुंषट्ऋचः कनिक्रददितिसूक्तं शंनइंद्राग्नीसूक्तं रक्षोहणंसूक्तं रात्रीसूक्तं इमारुद्रायेतिसूक्तं पुरुषसूक्तंच ॥ ॥ दक्षिणकुं

डेहोममंत्राः ॥ यस्यवाक्यमितिऋष्याद्युक्त्वायजमानेनद्रव्यत्यागेकृतेहोमंकुर्यात् ॥ प्रतिद्रव्यंदेवंस्पृशेत् ॥ आज्यशेषंकिंचिदुत्तरकलशेनिनयेत् ॥ ततो होममंत्राः ॥ असिहिवीइतियजमानमूर्तेः ॥ त्वमिंद्रसजोषसइतियजमानमूर्त्यधिपतेरुद्रस्य ॥ यमायसोममितिलोकपालस्ययमस्य ॥ उदुत्यमितिसूर्य मूर्तेः ॥ आवोराजानमितिसूर्यमूर्त्यधिपतेरुद्रस्य ॥ असुन्वंतमितिलोकपालस्यनिर्ऋतेः ॥ स्थाप्यदेवस्येदंविष्णुरिति १०८ ह्रीश्चतेइतिपिंडिकामंत्रः २८ ॥ हिरण्यवर्णामितिलक्ष्म्याः २८ ॥ तत्पुरुषायेतिगरुडस्य २८ ॥ व्याहृतिभिःप्रजापतेः १०८ इति ॥ दक्षिणद्वारेजपः ॥ पुरुषसूक्तं आशुः शिशानसूक्तं इमारुद्रायस्थिरेति ४ ऋचः सोमोधेनुमिति ६ ऋचः कौष्मांड्यः ॥ ॥ अथपश्चिमकुंडेहोममंत्राः ॥ यस्यवाक्यमित्युक्त्वा आपो हिष्ठेतिजलमूर्तेः ॥ नमोभवायचरुद्रायचस्वाहाइतिजलमूर्त्यधिपतेर्भवस्य ॥ इममेवरुणइतिलोकपालस्य ॥ वातआवातुइतिवायुमूर्तेः ॥ तमीशानमिति वायुमूर्त्यधिपतेरीशानस्य ॥ आनोनियुद्भिरितिलोकपालस्यवायोः ॥ स्थाप्यदेवस्येदंविष्णुरिति १०८ ह्रीश्चतेइतिपिंडिकामंत्रः २८ ॥ हिरण्यवर्णा मितिलक्ष्म्याः २८ ॥ तत्पुरुषायेतिगरुडस्य २८ ॥ व्याहृतिभिःप्रजापतेः १०८ स्विष्टकृत् ॥ इतिपश्चिमकुंडेहोमः पश्चिमद्वारेजपः ॥ रुद्रसाम नतमं होष्टौ पुरुषसूक्तं कद्रुद्रायेतिरुद्रसूक्तं रक्षोहणंसूक्तं ॥ ॥ अथोत्तरकुंडेहोममंत्राः ॥ यस्यवाक्यमित्युक्त्वा ॥ वयंसोमव्रतेइतिसोममूर्तेः ॥ तत्पुरुषाय विद्महेइतिरुद्रगायत्र्यासोममूर्त्यधिपतेर्महादेवस्य अभित्यंदेवमितिकुबेरस्य ॥ आदित्प्रत्नस्येत्याकाशमूर्तेः ॥ मृगोनभीमइत्याकाशमूर्त्यधिपतेर्भीमस्य ॥ अभित्वादेवसवितरितिलोकपालस्य ॥ इदंविष्णुरितिविष्णोः१०८॥ह्रीश्चतेइतिपिंडिकायाः २८॥हिरण्यवर्णामितिलक्ष्म्याः २८॥ तत्पुरुषायेतिगरुडस्य २८॥व्याहृतिभिःप्रजापतेः १०८ स्विष्टकृत् ॥ उत्तरद्वारस्थौ नारायणाथर्वशीर्षं शिवाथर्वशीर्षं नीलरुद्रं मधुवाता ३ ऋचः शंनइंद्राग्नीइतिसूक्तंच॥

## ॥ २६३ ॥ अथसप्रासाददेवस्थिरप्रतिष्ठाप्रयोगः ॥

श्रीः ॥ अथप्रतिष्ठेंदौबौधायनत्रिविक्रमानुसारेणनिर्णयसिंधूक्तःसप्रासादसर्वदेवस्थिरप्रतिष्ठाप्रयोगोलिख्यते ॥ कर्ताशुभेह्नि षोडशहस्तंद्वादशहस्तंवामंडपंकृत्वामध्येवेदिंमंडपनवांशविस्तृतांहस्तोच्चांतत्पूर्वतोहस्तमात्रांत्रिवप्रांग्रहवेदिंनैर्ऋत्येवास्तुवेदिंहस्तमात्रांआग्नेयेहस्तमात्रंकुंडंस्थंडिलंवाविरच्यमध्यवेद्यांसर्वतोभद्रंचकृत्वा तदुपरिवितानकदलीस्तंभादिनाभूषयित्वाप्रतिष्ठादिनात्पूर्वदिनेसद्योवासंकल्पंकुर्यात् ॥ तत्रयजमानःकूष्मांडहोमादिनाऽत्मतनुंपावयित्वासभार्यःस्वासनेउपविश्याचम्यप्राणानायम्यदेशकालौस्मृत्वा अस्मिन्लिंगेमूर्तौवादेवकलासान्निध्यार्थंदीर्घायुर्लक्ष्मीसर्वकामसमृद्ध्यक्षय्यसुखकामोऽहंवास्तुग्रहसहितांप्रासादपिंडिकापरिवारयुतांशिवप्रतिष्ठांविष्णुप्रतिष्ठांवाकरिष्ये ॥ तदंगतयाविहितंस्वस्तिवाचनंमातृकापूजनंनांदीश्राद्धंआचार्यादिवरणंकरिष्ये आदौनिर्विघ्नतासिद्ध्यर्थंमहागणपतिपूजनंचकरिष्येइतिसंकल्प्यआचार्यवरणांतंकृत्वावृतानृत्विजोमधुपर्केणार्हयित्वावस्त्रालंकारादिभिःसंपूज्य यजमानःसर्त्विकपूर्णकुंभदध्यक्षतफलपुष्पसुवासिनीभिःसहितोमंगलघोषेण शाकुनसूक्तंपठन्मंडपप्रादक्षिण्येनगत्वापश्चिमद्वारेणमंडपंप्रविश्यवेद्यानैर्ऋतेउपविशेत् ॥ अथाचार्योवेद्याःपश्चिमतउपविश्य देशकालौस्मृत्वाअमुकदेवप्रतिष्ठाकर्मणियजमानेनवृतोहंविहितकर्मकरिष्ये ॥ शरीरशुद्ध्यादिकर्माधिकारार्थंआसनादिन्यासान्पवनंपावनंचकरिष्येइतिसंकल्प्य यदत्रेतिसर्षपान्विकीर्य ॥ शुचीवोहव्या० ॥ अंसेष्वामरुतःखादयोवोवक्षःसुरुक्माउपशिश्रियाणाः ॥ विविद्युतोनवृष्टिभीरुचानाअनुस्वधामायुधैर्यच्छमानाः ॥ प्रबुध्न्यावईरतेमहांसिप्रनामानिप्रयज्यवस्तिरध्वं ॥ सहस्रियंदम्यंभागमेतंगृहमेधीयंमरुतोजुषध्वं ॥ इतिपंचगव्येनआपोहिष्ठेतिकुशोदकेनचभूमिंप्रोक्ष्य स्वस्त्ययनंतार्क्ष्यं०

अंहोमुच० देवाआयांतु यातुधानाअपयांतु विष्णोदेवयजनंरक्षस्वेतिभूमौप्रादेशंकुर्यात् ॥ देशकालौस्मृत्वाअमुकप्रतिष्ठांग त्वेनमंडपप्रतिष्ठांकरिष्ये ॥ मंडपसंभवेतत्पूजादिकंनिर्वर्त्यप्राग्द्वारेणमंडपंप्रविश्यवेद्युत्तरतोजलाधिवासंकुर्यात् ॥ ॥ ७ ॥

## ॥ २६४ ॥ अथाग्न्युत्तारणसूक्तम् ॥

देशकालौस्मृत्वाअस्याःप्रतिमायाःअंगप्रत्यंगसंधिसमुत्पन्नवास्याग्निकुद्दालाग्निटंकाग्न्यातपनिरासार्थं अग्न्युत्तारणंकरिष्यइति संकल्प्यअग्निःसप्तिमितिवर्गेणअग्निपदत्यागेनपठितेनपुनःअग्निपदसहितेनपठितेनैकमावर्तनंभवति एवंअष्टशतवारमष्टाविंश तिवारंवापठित्वासंततजलधारांकुर्यात् ॥ यथा ॥ अग्निःसप्तिमितिसप्तर्चस्यसूक्तस्यसोचिकोवैश्वानरस्त्रिष्टुप् ॥ अग्न्युत्तारणे वि० ॥ ॐ सप्तिंवाजंभरंददातिवीरंश्रुत्यंकर्मनिष्ठां ॥ रोदसीविचरत्समंजन्नारींवीरकुक्षिंपुरंधिं ॥ अप्नसःसमिदस्तुभद्रामही रोदसीआविवेश ॥ एकंचोदयत्समत्सुवृत्राणिदयतेपुरूणि ॥ हत्यंजरतःकर्णमावाद्ब्योनिरदहज्जरूथं ॥ अत्रिंघर्मउरुष्यदंतर्नृमे धंप्रजयासृजत्सं ॥ दाद्द्रविणंवीरपेशाऋषिंयःसहस्रासनोति ॥ दिविहव्यमाततानधामानिविभृतापुरुत्रा ॥ उक्थैर्ऋषयोविह्व यंतेनरोयामनिबाधितासः ॥ वयोअंतरिक्षेपततःसहस्रापरियातिगोनां ॥ विशईळतेमानुषीर्यामनुषोनहुषोविजाताः ॥ गांध र्वींपथ्यामृतस्यगव्यूतिर्घृतआनिषत्ता ॥ ब्रह्मऋभवस्ततक्षुर्महामवोचामासुवृक्तिं ॥ प्रावजरितारंयविष्ठमहिद्रविणमायजस्व ॥ अग्निपदसहितंसूक्तं॥ ॐ अग्निःसप्तिंवाजंभरंददात्यग्निर्वीरंश्रुत्यंकर्मनिष्ठां॥ अग्नीरोदसीविचरत्समंजन्नग्निर्नारींवीरकुक्षिंपुरंधिं॥ अग्नेरप्नसःसमिदस्तुभद्राग्निर्महीरोदसीआविवेश ॥ अग्निरेकंचोदयत्समत्स्वग्निर्वृत्राणिदयतेपुरूणि ॥ अग्निर्हत्यंजरतःकर्णमा वाग्निरद्भ्योनिरदहज्जरूथं ॥ अग्निरत्रिंघर्मउरुष्यदंतरग्निर्नृमेधंप्रजयासृजत्सं ॥ अग्निर्दाद्द्रविणंवीरपेशाअग्निर्ऋषिंयःसहस्रास

नोर्ति ॥ अग्निर्दिविहव्यमातंतानाग्नेर्धामानिविभृंतापुरुत्रा ॥ अग्निमुक्थैर्ऋषयोविह्वयंतेग्निंनरोयामनिबाधितासः ॥ अग्निंव योअंतरिक्षेपतंतोग्निःसहस्रापरियातिगोनां ॥ अग्निंविशईळतेमानुषीर्याअग्निंमनुषोनहुषोविजाताः॥अग्निर्गांधर्वींपथ्यांमृतस्याग्ने र्गव्यूतिर्घृतआनिषत्ता ॥ अग्नयेब्रह्मऋभवस्ततक्षुरग्निंमहामवोचामासुवृक्तिं॥ अग्नेप्रावजरितारंयविष्ठाग्नेमहिद्रविणमायजस्व॥

## ॥ २६५ ॥ अथजलाधिवासः ॥

श्रीः ॥ हिरण्योपधानंदेवंपंचगव्यहिरण्ययवदूर्वाश्वत्थपलाशपर्णान्युदकुंभेप्रक्षिप्यताभिरद्भिरापोहिष्ठेतितिसृभिःहिरण्यवर्णाः शुचयइतिचतसृभिःपवमानःसुवर्जनइत्यनुवाकेनचाभिषिच्य व्याहृतिभिरिदंविष्णुरितिचपुष्पफलयवदूर्वाःसमर्प्य नमस्तेरुद्र मन्यवइतिरुद्रेसमर्प्य रक्षोहणमित्यनेनदेवहस्तेकंकणंबद्ध्वावाससाच्छाद्य अवतेहेळोउदुत्तममितिजलेधिवासयेदितिबौधाय नः ॥ ततोगोदोहनमात्रंस्थित्वादेवंनत्वा ॥ स्वागतंदेवदेवेशविश्वरूपनमोस्तुते ॥ शुद्धेपित्वदधिष्ठानेशुद्धिंकुर्मःसहस्वतां ॥ इतिसंप्रार्थ्य उत्तिष्ठब्रह्मणस्पतइतिसर्विंगुत्थाप्यअभ्युत्तारणंकुर्यात् ॥ ततोर्चांमृदाद्वादशवारंजलेनचप्रक्षाल्यमंत्रवत्पंचगव्यं कृत्वा ॐ पयःपृथिव्यांपयओषधीषुपयोदिव्यंतरिक्षेपयोधां ॥ पयस्वतीःप्रदिशःसंतुमह्यं ॥ आवोराजानमितिचसंस्नाप्य आ

---

१ अत्रविशेषः ॥ साचार्योयजमानोवेदनिनादतूर्यछत्रचामरादिरथादियानसहितःशिल्पशालांगत्वातत्रप्रतिमांवस्त्रचंदनपुष्पादिनासंपूज्यशिल्पिनः प्रतिमानिर्मायकान्वस्त्रगंधादिनासंतोष्यकुद्दालादिशिल्पिशस्त्राणिचहरिद्रादिनाभूषयित्वाविश्वकर्मणेनमइतिनत्वायानेप्रतिमामारोप्यशाकुंतसूक्तंपठेत् । अथसाचार्योयजमानःदेवस्यसंमुखंस्थित्वादेशकालौसंकीर्त्यअस्यांमूर्तौजलाधिवासाख्यंकर्मकरिष्येइतिसंकल्प्यपुण्याहंवाचयित्वा ॥ यदत्रसंस्थितं० अर्चा कर्मसमारंभे ॥ इतिमंत्राभ्यांसर्षपान्विकीर्य ॥ शुचीवोहव्येतिजलाधिवासमंडपंपंचगव्येनप्रोक्ष्य ॥ आपोहिष्ठेतिशुद्धोदकेनचप्रोक्ष्यअभ्युत्तारणंकुर्यात् ॥

प्यायस्व० दधिक्राव्णो० तेजोसि० मधुवाता० आयंगौः० इतिपंचामृतैःसंस्नाप्य ॥ लिंगंचेत् नमस्तेरुद्र० इत्यष्टाभिःसं स्नाप्यघृतेनाभ्यज्योद्वर्तनेनोद्वर्त्य उष्णोदकेनप्रक्षाल्य गंधंदत्वासपल्लवैश्चतुर्भिःकुंभैरापोहिष्ठेतितिसृभिराकलशेष्वितिचप्रत्येकं समुद्रज्येष्ठाइतिचतुर्भिराकलशेष्वितिचमिलितैःसंस्नाप्य औदुंबरपीठेर्चामुपवेश्यपरितोष्टदिक्षुसजलकुंभान्संस्थाप्यतेषुगंधपु ष्पदूर्वाःप्रक्षिप्य ॥ आद्येसप्तमृदः द्वितीयेपुष्करपर्णशमीविकंकताश्मंतकत्वचःपल्लवांश्च तृतीयादिषुसप्तधान्यानि पंचरत्ना निफलपुष्पाणिकुशदूर्वागोरोचनाः संपातोदकं सर्वौषधीश्च क्षिप्त्वा क्रमेण आपोहिष्ठा० ३ हिरण्यवर्णाः० ४ पवमानःसु वर्जनइत्यनुवाकेनचाभिषिच्यएककुंभेशमीपलाशवटखदिरबिल्वाश्वत्थविकंकतपनसाम्रशिरीषोदुंबराणांपल्लवान्कषायांश्चक्षि प्त्वाअश्वत्थेवइत्यभिषिच्यपंचरत्नोदकेनहिरण्यवर्णाःशुचयः ४ इतिसंस्नाप्यआचमनंदत्वावस्त्रोपवीतादिदीपपर्यंतपूजांते यवपिष्टदीपानष्टौदद्यात् ॥ मंत्राः ॐ हि॒र॒ण्य॒ग॒र्भःसम॑वर्त॒ताग्रे॑भू॒तस्य॑जा॒तःपति॒रेक॑आसीत् ॥ सदा॑धारपृथि॒वींद्यामु॒तेमांक स्मै॑दे॒वाय॑ह॒विषा॑विधेम ॥ १ ॥ यआ॑त्म॒दाब॑ल॒दायस्य॒विश्व॑उ॒पास॑तेप्र॒शिषं॒यस्य॑दे॒वाः ॥ यस्य॑छा॒यामृतं॒यस्य॑मृ॒त्युःकस्मै॑० ॥ २ ॥ यःप्रा॑ण॒तोनि॑मिष॒तोम॑हि॒त्वैक॒इद्राजा॒जग॑तोब॒भूव॑ ॥ यईशे॑अ॒स्यद्वि॒पद॒श्चतु॑ष्पद॒ःकस्मै॑० ॥ ३ ॥ यस्ये॒मेहि॒मव॑न्तोमहि॒त्वायस्य॑स मु॒द्रंर॒सया॑स॒हाहुः ॥ यस्ये॒माःप्र॒दिशो॒यस्य॑बा॒हूकस्मै॑० ॥ ४ ॥ येन॒द्यौरु॒ग्रापृ॑थि॒वीच॑दृ॒ळ्हायेन॒स्व॑स्तभि॒तंयेन॒नाकः॑ ॥ योऽअ॒न्त रि॑क्षर॒जसो॑वि॒मानः॒कस्मै॑० ॥५॥ यंक्रंद॑सीअव॑सातस्तभा॒नेअ॒भ्यैक्षे॑तां॒मन॑सा॒रेज॑माने ॥ यत्राधि॒सूर॒उदि॑तोवि॒भाति॒कस्मै॑० ॥६॥ आपो॑ह॒यद्बृ॑ह॒तीर्विश्व॒माय॒न्गर्भं॒दधा॑नाज॒नय॑न्तीर॒ग्निं ॥ ततो॑दे॒वानां॒सम॑वर्त॒तासु॒रेकः॒कस्मै॑० ॥७॥ यश्चि॒दापो॑महि॒नापर्य॒पश्य॒द्द क्षं॒दधा॑नाज॒नय॑न्तीर्य॒ज्ञं ॥ योदे॒वेष्वधि॑दे॒वएक॒आसी॒त्कस्मै॑० ॥ ८ ॥ इति ॥ ततःसुवर्णशलाकयातैजसपात्रस्थंमधुघृतंचगृही

त्वा चित्रंदेवाना० तेजोसिशुक्रमस्यमृतमसिधामनामासिप्रियंदेवानामनाधृष्टंदेवयजनमसि इतिमंत्राभ्यां ॐ नमोभगवते तुभ्यंशिवायहस्येनमः ॥ हिरण्यरेतसेविष्णोविश्वरूपायतेनमः ॥ इतिप्रत्येकमावृत्त्यादक्षिणसव्यनेत्रेलिखेत् ॥ अंजंतित्वा० इतिमध्वक्तांजनेननेत्रेअङ्क्त्वादेवस्यत्वासवितुःप्रसवे० इंद्रस्येंद्रियेणानज्मीतिमध्वाज्यशर्कराभिरङ्क्त्वा तेनैवांजनेनपुनरंजये त्हस्ताभ्यांअनज्मीति ॥ लिंगेतु स्वर्णसूच्या गंधेन ॐ नमोभगवतेरुद्रायहिरण्यरेतसेपरायपरमात्मनेविश्वरूपायोमाप्रिया यनमः इत्यङ्क्त्वा अंजनादिनादेवस्यत्वेत्यंजयेत् ॥ नेदंबाणसरिद्भवलोहजलिंगेषु ॥ ततआदर्शभक्ष्यादिदर्शयेत् ॥ ततःक र्ताचार्यायगामृत्विग्भ्यश्चदक्षिणांदद्यात् ॥ अथाचार्यःप्रत्यृचमादौप्रणवंवदनपुरुषसूक्तेन देवंस्तुत्वा वंशपात्रेपंचवर्णौदनेनदेव स्यनीराजनंकृत्वाचतुष्पथे ॐ नमोरुद्रायसर्वभूताधिपतयेदीप्तशूलधरायोमादयितायविश्वाधिपतयेरुद्रायवैनमोनमः शिव मगर्हितंकर्मास्तुस्वाहेति ॥ अश्वत्थपर्णेभूतेभ्योनमइतिबलिंक्षिपेत् ॥ ततोवेद्यांसर्वतोभद्रेदेवानावाहयेत् ॥ यथा मध्येब्रह्म णेनमःब्रह्माणमावाहयामिएवंसर्वत्र १ पूर्वादिदिक्षु इंद्रायनमः २ अग्नये ३ यमाय ४ निर्ऋतये ५ वरुणाय ६ वायवे ७ सोमाय ८ ईशानाय ९ ईशानेंद्राद्यंतरालेष्वष्टवसुभ्यो १० रुद्रेभ्यो ११ आदित्येभ्यो १२ अश्विभ्यां १३ विश्वेभ्योदेवे भ्यो १४ पितृभ्यो १५ नागेभ्यो १६ स्कंदवृषाभ्यां १७ ॥ ब्रह्मेशानाद्यंतरालेष्वष्टसु दक्षाय १८ विष्णवे १९ दुर्गायै २० स्वधायै २१ मृत्युरोगेभ्यो २२ समुद्रेभ्यो २३ सरिद्भ्यो २४ गणपतये २५ मध्ये ब्रह्माधःपृथिव्यै २६ मेरवे २७ तत्रैवस्थाप्यदेवप्रतिमामावाह्य प्रागादिषु वज्राय २८ शक्तये २९ दंडाय ३० खड्गाय ३१ पाशाय ३२ अंकुशाय ३३ गदायै ३४ शूलाय ३५ तद्बाह्ये गौतमं ३६ भरद्वाजं ३७ विश्वामित्रं ३८ कश्यपं ३९ जमदग्निं ४० वसिष्ठं ४१ अत्रिं

४२ अरुंधतीं ४३ तद्वाह्ये सूर्यं ४४ सोमं ४५ भौमं ४६ बुधं ४७ गुरुं ४८ शुक्रं ४९ शनिं ५० राहुकेतू ५१ तद्बाह्ये ऐंद्रीं ५२ कौमारीं ५३ ब्राह्मीं ५४ वाराहीं ५५ चामुंडां ५६ वैष्णवीं ५७ माहेश्वरीं ५८ वैनायकीं ५९ इतिदेवताना म्नावाह्यसंपूज्य मंडलमध्येअर्चासुप्रतिष्ठोभवेतिनिवेश्यसंपूज्य वेद्युपरिपुरोभागेवेद्याउत्तरतोवायथासोपस्कारांशय्यामुपक ल्प्यतस्यांदेवमारोप्यपुरुषसूक्तोत्तरनारायणाभ्यांस्तुत्वादेवेतत्त्वन्यासंकुर्यात् ॥ सयथा– पुरुषात्मनेनमः प्राणात्मने प्रकृति तत्त्वाय बुद्धितत्त्वाय अहंकारतत्त्वाय मनस्तत्त्वाय इतिसर्वांगेषु प्रकृतितत्त्वाय बुद्धितत्त्वाय हृदि शब्दतत्त्वायशिरसि स्प र्शतत्त्वायत्वचि रूपतत्त्वायहृदि रसतत्त्वायमुखे गंधतत्त्वायनासायां श्रोत्रतत्त्वायश्रोत्रयोः त्वक्तत्त्वायत्वचि चक्षुस्तत्त्वाय चक्षुषोः जिह्वातत्त्वायजिह्वायां घ्राणतत्त्वायघ्राणे वाक्तत्त्वायवाचि पाणितत्त्वायहस्तयोः पादतत्त्वायपादयोः पायुतत्त्वा यपायौ उपस्थतत्त्वायउपस्थे पृथ्वीतत्त्वायपादादिजानुपर्यंतं अप्तत्त्वायजान्वादिनाभिप० तेजस्तत्त्वायनाभ्यादिहृदयांतं वायुतत्त्वायहृदयादिभ्रूमध्यांतं आकाशतत्त्वायभ्रूमध्यादिशिरोंतं सत्त्वतत्त्वाय० रजस्तत्त्वाय० तमस्तत्त्वाय० सर्वांगे ॥ ततःपुरुषसूक्तेनषोडशांगन्यासः ॥ ततःसुखशायीभवेतिशय्यायांदेवंस्वापयित्वावस्त्रद्वयेनाच्छाद्यदेवस्यशिरोभागेकलशंसं स्थाप्यतत्रनिद्रामावाहयेत् ॥ वासुदेवंनमस्कृत्यनिद्रामावाहयाम्यहं ॥ मोहिनींसर्वभूतानांमनोविभ्रमकारिणीं ॥ एहिसावि त्रिमूर्तिस्त्वंचक्षुर्भ्यांज्ञानगोचरे ॥ विशनासापुटेदेविकंठेचोत्कंठिताभवेति ॥ ततस्तांसंपूज्यमंडलशय्ययोरंतरानगंतव्यमिति प्रैषंदत्वामंडलदेवताभ्योनाम्नापायसेनबलिदानं॥ततःकुंडसंस्कारादिकुर्यात्॥प्रसंगान्मध्येप्रासादवास्त्वाद्यावाहनक्रमोलि० ॥

श्रीः ॥ देशकालौसंकीर्त्यसप्रासादामुकप्रतिष्ठांगत्वेनवास्तुदेवतापूजांकरिष्ये ॥ तत्रादौवास्तुवेद्याईशानादिचतुष्कोणेषु ॥ विशंतुभूतलेनागालोकपालाश्चसर्वशः ॥ प्रासादेस्मिन्वितिष्ठंतुआयुर्बलकराःसदा ॥ इतिमंत्रावृत्त्याचतुरःशंकून्रोपयेत् ॥ तेनैवक्रमेण ॥ अग्निभ्योप्यथसर्पेभ्योयेचान्येतत्समाश्रिताः ॥ तेभ्योबलिंप्रयच्छामिपुण्यमोदनमुत्तमं ॥ इतिमंत्रावृत्त्याशंकुपार्श्वेमाषभक्तबलीन्दद्यात् ॥ ततोवेद्युपरिकुंकुमादिनासुवर्णादिशलाकया लक्ष्मीः यशोवती कांता सुप्रिया विमला शिवा सुभगा सुमतिः इला ९ इतिनवरेखाःप्रागायताउदक्संस्थाःकृत्वा धन्या प्राणा विशाला स्थिरा भद्रा जया निशा विरजा विभवा ९ इतिनामभिरुदगायताःप्राक्संस्थानवरेखाःकृत्वामध्यपदचतुष्टयमेकीकृत्यकोणेषुरेखादत्वातत्रदेवताआवाहयेत् ॥ यथा ॥ ईशानपददक्षिणार्धेशिरसिशिखिनं १ तद्दक्षिणसार्धपदेपर्जन्यं २ तद्दक्षिणपदद्वयेजयंतं ३ तद्दक्षिणपदद्वयेकुलिशायुधं ४ तद्दक्षिणपदद्वयेसूर्यं ५ तद्दक्षिणपदद्वयेसत्यं ६ तद्दक्षिणसार्धपदेभृशं ७ तद्दक्षिणार्धपदेआकाशं ८ तत्पश्चिमार्धेवायुं ९ तत्पश्चिमसार्धपदेपूषणं १० तत्पश्चिमपदद्वयेवितथं ११ तत्पश्चिमपदद्वयेगृहक्षतं १२ तत्पश्चिमपदद्वयेयमं १३ तत्पश्चिमपदद्वयेगंधर्वं १४ तत्पश्चिमसार्धपदेभृंगराजं १५ तत्पश्चिमार्धपदेमृगं १६ तदुत्तरार्धेपितॄन् १७ तदुत्तरसार्धपदेदौवारिकं १८ तदुत्तरपदद्वयेसुग्रीवं १९ तदुत्तरपदद्वयेपुष्पदंतं २० तदुत्तरपदद्वयेवरुणं २१ तदुत्तरपदद्वयेअसुरं २२ तदुत्तरसार्धपदेशोषं २३ तदुत्तरार्धपदेपापं २४ तत्प्रागर्धेरोगं २५ तत्प्राक्सार्धपदेअहिं २६ तत्प्राक्पदद्वयेमुख्यं २७ तत्प्राक्पदद्वयेभल्लाटं २८ तत्प्राक्पदद्वयेसोमं २९ तत्प्राक्पदद्वयेसर्पं ३० तत्प्राक्सार्धपदेअदितिं ३१ तत्प्रागर्धपदेदितिं

३२ मध्यपदेषुईशानपदोत्तरार्धेआपं ३३ आग्नेयपदोत्तरार्धेसावित्रं ३४ नैर्ऋत्यपदोत्तरार्धेजयं ३५ वायव्यपदोत्तरार्धेरुद्रं ३६ मध्येप्राक्पदद्वयेअर्यमणं ३७ आग्नेयपददक्षिणार्धेसवितारं ३८ तत्पश्चिमपदद्वयेविवस्वंतं ३९ नैर्ऋत्यपदपूर्वार्धेविबुधाधिपं ४० तदुत्तरपदद्वयेमित्रं ४१ वायव्यपदपश्चिमार्धेराजयक्ष्माणं ४२ तत्प्राक्पदद्वयेपृथ्वीधरं ४३ ईशानपददक्षिणार्धे आपवत्सं ४४ मध्यपदचतुष्केहृदयेब्रह्माणं ४५ ततउत्तरेवास्तोष्पतइतिवृषवास्तुप्रतिमां ४६ ऐशान्यादिविदिक्षुचरकीं ४७ विदारीं ४८ पूतनां ४९ पापराक्षसीं ५० प्रागादिदिक्षुस्कंदं ५१ अर्यमणं ५२ जृंभकं ५३ पिलिपिच्छं ५४ एवंक्रमेणवास्तुदेवताआवाह्यषोडशोपचारैःसंपूज्यमंडलादीशान्यामुत्तरतोवामहीद्यौरित्यादिकलशंसंस्थाप्य तत्रवरुणंसंपूज्यावाहितदेवताभ्योनाम्नापायसबलीन्दद्यात् ॥ मंडपजलाशयांगवास्तावप्येवमेव ॥ अत्रब्रह्मादिः शिख्यादिर्वाक्रमः ॥ शक्तौहोमस्तत्रप्रत्येकंसमित्तिल(यव)पायसाज्यानि, समिदाज्यचरवः समिदाज्ये, यवाः, केवलंतिलावा ॥ प्रत्येकं १०।८।१ वाआहुतयः ॥ शारदातिलकेपायसाज्यैर्बलिंहरेदित्येवोक्तत्वात्केवलंपूजनपूर्वकंबलिदानमेवकार्यंनहोमस्यावश्यकतेतिवास्तुविषयेबहवोविकल्पाःसंति ॥ पक्षेहोमाभावोपिक्वचिदुक्तस्तत्रसदसत्सद्भिरूहनीयं ॥ इति ॥ ॥ छ ॥ ॥ छ ॥

## ॥ २६७ ॥ अथकुंडसंस्कारादि ॥

श्रीः ॥ ततःकुंडांतिकमेत्यदेशाद्युच्चार्यअमुकप्रतिष्ठांगत्वेनहवनंकर्तुंकुंडोपलेपनाद्यग्निप्रतिष्ठाकरिष्ये ॥ तद्गोमयेनोपलिप्योल्लिख्य उपरिमेखलायांइदंविष्णुरितिविष्णुं मध्यमेखलायांब्रह्मजज्ञानमितिब्रह्माणं अधोमेखलायांकद्रुद्रायेतिरुद्रं योन्यांगौरीर्मिमायेतिगौरींआवाह्यसंपूज्यस्वगृह्योक्तविधिनाग्निंप्रतिष्ठाप्य नैर्ऋत्यवेद्यांवास्तुपूजामुपरिनिर्दिष्टवत्कुर्यात् ॥ ततोग्रहवेद्या

मुक्तविधिनाग्रहान्संस्थाप्यसंपूज्य तदीशान्यांकुंभेवरुणंसंपूज्यअग्निसमीपमेत्यान्वाधानंकुर्यात् ॥ अत्रप्रधानं वास्तुहोमेशि
ख्यादिपंचचत्वारिंशद्देवताःप्रतिदैवतं उदुंबरसमित्तिल( यव )पायसाज्यद्रव्यैः प्रतिद्रव्यमष्ट ८ संख्याकाभिः वास्तोष्प
तिंवास्तोष्पतइतिचतसृभिःपूर्वोक्तद्रव्यैःप्रतिद्रव्यंप्रत्यृचं २७ पुनः वास्तोष्पतइतिचतसृभिःवास्तोष्पतेध्रुवास्थूणामित्यनया
चप्रत्यृचंबिल्वफलेनतत्खंडेनवा चरक्याद्यवशिष्टदेवताःपूर्वोक्तचतुर्द्रव्यैःप्रतिदैवतंप्रतिद्रव्यंचतुःसंख्याकाभिः ॥ ॥ ग्रह
होमे सूर्यादिनवदेवताः अर्कादिसमिच्चर्वाज्यद्रव्यैःप्रतिदैवतंप्रतिद्रव्यं २८ वा ८ ॥ अधिदेवताःप्रत्यधिदेवताश्च ८।४ भिर्वा
विनायकादीनिंद्रादींश्चप्रत्येकंप्रतिद्रव्यं ४।२ संख्याकाभिःपूर्वोक्तद्रव्यत्रयाहुतिभिः ॥ प्रधानहोमे लोकपालमूर्तिमूर्तिपतीन्
पलाशोदुंबराश्वत्थशम्यपामार्गसमिदाज्यतिलद्रव्यैःप्रत्येकंप्रतिद्रव्यं २८ वा ८ संख्याहुतिभिः स्थाप्यदेवंपूर्वोक्तद्रव्यैःप्रति
द्रव्यं १००८।१०८।२८ वासंख्यया ॥ अग्निर्यजुर्भिरित्यनुवाकेनविश्वान्देवान्तिलाज्याभ्यांदशदशाहुतिभिः ॥ पिंडिकांते
रेवद्रव्यैःअष्टसंख्याहुतिभिःपरिवारदेवताःप्रत्येकं ८ एवंपंचपर्यायैःपर्यायत्रयेणवायक्ष्ये ॥ ( विष्णुःस्थाप्यश्चेत्विष्णुंपुरुषसू
क्तेनचतुरावृत्तिभिःप्रत्यृचमाज्येन ॥ रुद्रश्चेत्शिवंयातइषुरित्यनुवाकांतंद्रापेसहस्राणीत्यनुवाकाभ्यांप्रतिमंत्रमाज्येन ॥ प्रा
सादाधिवासनहोमेपिंडिकावाहनादिपरिवारदेवताः प्रत्येकमष्टाविंशत्याहुतिभिस्तिलद्रव्येण ॥ स्थाप्यदेवं १०८ संख्ययामू
लमंत्रेणचर्वाहुतिभिः ॥ प्रासादोत्सर्गांगहोमेवास्तोष्पतइतिमंत्रेणअष्टोत्तरशतसंख्ययाघृतेन स्थाप्यदेवं अष्टोत्तरशतसंख्य
याज्येन ब्रह्मादिमंडलदेवताःप्रत्येकंदशदशाहुतिभिःघृताक्ततिलद्रव्येण ) शेषेणेत्याज्यभागांतेअग्नेरुत्तरतःसंपातकलशंसंस्था
प्यतस्मिन्नाज्यहोमेसंपातान्नयेत् ॥ अथ[illegible]नेनद्रव्यत्यागेकृतेन्वाधानक्रमेणसर्त्विगाचार्योजुहुयात् ॥ वास्तुहोमंग्रहहोमं

चकृत्वाप्रधानहोमंकुर्यात् तत्रमंत्राः ॥ इंद्रायेंदो॰ स्योनापृथिवि॰ अघोरेभ्यो॰ अग्नआयाहि॰ अग्निंदूतं॰ नमः शर्वायचपशुपतयेच॰ यमायसोमं॰ असिहिवी॰ स्तुहिश्रुतं॰ असुन्वंत॰ आकृष्णेन॰ योरुद्रोअग्नौ॰ इमंमेवरुण॰ शन्नोदेवी॰ नमोभवायचरुद्रायच॰ आनोनियुद्भिः॰ वातआवातु॰ तमीशानं॰ आप्यायस्व॰ वयंसोम॰ तत्पुरुषाय विद्महे॰ अभित्वादेवस॰ आदित्प्रत्न॰ नमउग्रायचभीमायच॰ २४ इतिलोकपालादिहोमः ॥ ततःपलाशसमिदादिसप्तद्रव्यैःस्थाप्यदेवमंत्रेणउक्तसंख्ययाहोमः ॥ प्रतिद्रव्यहोमांतेदेवंपादनाभिशिरस्सुस्पृशेत् ॥ अग्निर्यजुर्भिरित्यनुवाकेनप्रतिद्रव्यं १० ॥ अग्निर्यजुर्भिः । सवितास्तोमैः । इंद्रउक्थामदैः । मित्रावरुणावाशिषा । अंगिरसोधिष्णियैरग्निभिः । मरुतःसदोहविर्धानाभ्यां । आपःप्रोक्षणीभिः । ओषधयोबर्हिषा । अदितिर्वेद्या । सोमोदीक्षया ॥ १ ॥ त्वष्टेध्मेन । विष्णुर्यज्ञेन । वसवआज्येन । आदित्यादक्षिणाभिः । विश्वेदेवाऊर्जा । पूषास्वगाकारेण । बृहस्पतिःपुरोधया । प्रजापतिरुद्गीथेन । अंतरिक्षंपवित्रेण । वायुःपात्रैः । अहश्श्रद्धयास्वाहा ॥ २ ॥ पिंडिकांह्रीश्चतेलक्ष्मीश्च॰ ॥ लिंगार्चायांगौरीमिमायेतिमंत्रेणतैरेवद्रव्यैः प्रतिद्रव्यं ८ ॥ ततःपरिवारस्थाप्यानांमंत्रैःप्रतिद्रव्यं ८ इतिप्रथमपर्यायंहुत्वादेवपादौस्पृशेत् ॥ एवंद्वितीयंपर्यायंहुत्वा नाभिं ॥ तृतीयंमध्यं ॥ चतुर्थंउरः ॥ पंचमंहुत्वाशिरःस्पृष्ट्वा प्रतिपर्यायंसंपातजलेनदेवमभिषिंचेत् ॥ ततःस्थाप्येविष्णौपुरुषसूक्तेनप्रत्यृचमाज्यंहुत्वाइदंविष्णुरितिपादौस्पृशेत् पुनस्तथाहुत्वाविष्णोर्नुकमितिनाभिंस्पृशेत् पुनस्तथाहुत्वाअतोदेवेतिशिरः पुनस्तथाहुत्वापुरुषसूक्तेनसर्वांगंस्पृशेत् ॥ रुद्रेतु यातइषु॰ अनुवाकांतं द्रापे॰ सहस्राणि॰ इत्यनुवाकाभ्यांप्रत्यृचमाज्यं हुत्वा सर्वोवैरुद्रइतिमंत्रेणमूलंस्पृशेत् ॥ पुनस्तथाहुत्वाकद्रुद्रायेतिमध्यंस्पृशेत् ॥ पुनस्तथाहुत्वानमोहिरण्यबाहवइत्यग्रंस्पृशे

त् ॥ पुनस्तथाहुत्वारुद्रेणसर्वांगंस्पृशेत् ॥ ॥ अथप्रासादोत्सर्गाधिवासनांगहोमः ॥ पिंडिकापरिवारदेवमंत्रैःप्रत्येकं २८ तिलहोमः ॥ मूलेनचरुं १०८ हुत्वा ततोवास्तोष्पतइतिमंत्रेण १०८ आज्यंहुत्वा देवमंत्रेण १०८ आज्यंचहुत्वा ब्रह्मादि मंडलदेवताःप्रत्येकं १० तिलैर्हुत्वा मूर्धानमितिपूर्णाहुतिंजुहुयात् ॥ ततःस्विष्टकृदादिहोमशेषंसमाप्य पिंडिकांपरिवारदेवांश्चवेद्यांप्रतिमासमीपेऽग्नीसन्निधौवावस्त्राच्छादितपीठेनिधाय मधुघृतेनाभ्यज्य शुद्धवारिणाप्रक्षाल्य पूर्वस्नानावशिष्टकलशवारिणातत्तन्मंत्रैःस्नापयित्वागंधादिभिरभ्यर्च्यवस्त्रेणाच्छाद्यन्यासान्कुर्यात् ॥ तत्रपिंडिकायांन्यासः ॥ घंनमःहृदये ॥ पंनमःशिरसि ॥ भंनमःशिखायां ॥ फंनमःकवचायहुं ॥ लंनमःनेत्रत्रयायवौषट् ॥ क्षंनमःअस्त्रायफट् ॥ महीमूषुमंत्रेणावाह्य अदितिर्द्यौरितिस्तुत्वा ॐ ह्रींनमइतिमंत्रेणसंपूज्य तेनैवपूर्णाहुतिंहुत्वा ॥ ॐ ह्रींश्रींह्रींक्षःपरब्रह्मणेसर्वाधारायनमः ॐ ह्रीं श्रींह्रीं दिव्यतेजोधारिणिसुभगेनमइतिमंत्राभ्यां तथापरिवारत्वेनस्थाप्येतरदेवेषुचतत्तन्मंत्रेणषडंगन्यासादिकृत्वातत्तन्मंत्रेण सर्वाःपरिवारदेवताःपूजनपूर्वकंमुख्यदेवतावामपार्श्वेऽधिवासयेत् ॥ ॥ अथप्रासादाधिवासनं ॥ तत्रराक्षोघ्नपावमानसूक्ताभ्यांत्रिसूत्र्याप्रासादंवेष्ट्यपरितोजलदुग्धयोःपृथगविच्छिन्नधारेदत्वापूर्वस्थापितवास्तुप्रतिमांमृत्पेटिकायांनिधाय प्रासादाग्नेयकोणेवास्तुविध्युक्तप्रकारेणगर्तेनिवेशयेत् ॥ ततःप्रासादस्याग्रेएकाशीतिपदंमंडलंअक्षतैःकृत्वातेषुपदेषुसप्तधान्यपुंजान्कृत्वातत्रजलपूर्णान् ८१ कलशानाहृत्यनवनवकानिस्थापयित्वा तेषुमध्यमपूर्वादिक्रमेण आजिघ्रकलशंमह्युरुधारापयस्वत्यात्वाविशंत्विंदवःसमुद्रमिवसिंधवः सामासहस्रआभजप्रजयापशुभिःसहपुनर्माविशताद्रयिः ॥ इतिमंत्रेणनवकुंभान्न्यसेत् ॥ तत्रमध्यनवकमध्यकुंभेशम्युदुंबराश्वत्थचंपकाशोकपलाशप्लक्षन्यग्रोधकदंबाम्रबिल्वार्जुनपल्लवान् सोमायवनस्पत्यंतर्गतायनमइ

तिन्यसेत् १ पूर्वनवकमध्यकुंभेपञ्चकरोचनदूर्वादर्भश्वेतपीतसर्षपसितरक्तचंदनजातीपुष्पकुंदनंद्यावर्तदशकंक्षिपेत् २ आग्नेयनवकमध्यकुंभेयवव्रीहितिलस्वर्णरजतसमुद्रगानदीजलकूलमृदंतरिक्षगोमयंक्षिपेत् ३ दक्षिणनवकमध्यकुंभेसहदेवीविष्णुक्रांताभृंगराजमहौषधीशमीशतावरीगुडूचीश्यामाकानष्टौक्षिपेत् ४ नैर्ऋत्यनवकमध्यकुंभेकदलनारिकेलबिल्वनारिंगमातुलिंगबदरामलकचूतफलाष्टकं ५ पश्चिमेमंत्रवत्पंचगव्यं ६ वायव्येशम्युदुंबराश्वत्थन्यग्रोधफलानांकषायं ७ उत्तरेशंखपुष्पीसहदेवीबलाशतावरीगुडूचीवचाव्याघ्रीमूलाष्टकं ८ ऐशानेसप्तमृदः ९ इतिक्षिप्त्वाश्रीसूक्तेनाभिमंत्र्यशेषेषुकुंभेषुगंधंक्षिप्त्वामूलेनाभिमंत्र्यांतर्बहिरधऊर्ध्वंचप्रासादंपंचगव्येनाभ्युक्ष्यमूर्धानंदिवइतिवल्मीकमृदाविलिप्यवक्ष्यमाणमंत्रैःकुंभोदकैःप्रासादमभिषिंचेत् ॥ ॐ समुद्रज्येष्ठा० इत्यैशानमृत्कुंभेन १ ॥ ॐ यज्ञायज्ञावः समनातुतुर्वणिर्धियंधियंवोदेवयाउदधिध्वे ॥ आवोर्वाचः सुवितायरोदस्योर्महेमवृत्यामवसेसुवृक्तिभिः ॥ इतिवायव्यकषायकुंभेन २ ॥ पयः पृथिव्यांपयओषधीषुपयोदिव्यंतरिक्षेपयोधाः ॥ पयस्वतीः प्रदिशः संतुमह्यं ॥ इतिवारुणपंचगव्यकुंभेन ३ ॥ याः फलिनीर्या इतिनैर्ऋत्यफलकुंभेन ४ ॥ हंसः शुचिषदितिसौम्यमूलकुंभेन ५ ॥ विष्णोरराटमसिविष्णोः पृष्ठमसिविष्णोःश्नप्त्रेस्थोविष्णोःस्यूरसिविष्णोर्ध्रुवमसिविष्णवेत्वाइतिपूर्वकुंभेन ६ ॥ सोमंराजानमवसेग्निंगीर्भिर्हवामहे ॥ आदित्यान्विष्णुंसूर्यंब्रह्माणंचबृहस्पतिंइतिवह्निकुंभेन ७ ॥ विश्वतश्चक्षुरितियाम्यकुंभेन ८ ॥ नमोअस्तुसर्पेभ्योयेकेचइतिमध्यकुंभेन ९ ॥ इदमापःप्रवहतइत्यष्टाभिरवशिष्टैःपूर्वादिदिक्क्रमेणप्रासादशिखरंस्नापयेत् ॥ एकाशीतिकुंभासंभवेतुएककुंभेनगंधोदकपूरितेन ॐ दैव्यायकर्मणेशुंधध्वं इतिप्रासादंप्रोक्ष्यक्षालयित्वागंधादिभिरभ्यर्च्यतस्याधस्तादेवंसंचिंत्यतत्रयूपमूर्ध्वऊषुणइतिप्रक्षाल्यगंधादिभिरभ्यर्च्यतेनैवमंत्रेणाधिवासयेत् ॥

ॐ ह्रीं सर्वदेवमयाचिंत्यसर्वरत्नोज्ज्वलाकृते ॥ यावच्चंद्रसूर्यश्चतावदत्रस्थिरोभव ॥ इतिमंत्रेणप्रासादमधिवासयेत् ॥ ततश्च तत्रोगाःदेवगायत्र्यादुग्ध्वातत्क्षीरेदेवगायत्र्याचरुंश्रपयित्वादेवायनिवेद्यद्वादशब्राह्मणान्भोजयित्वा अनेनकर्मणाविष्णुर्मेप्री यतामितिवदेत् ॥ ततआचार्यायधेनुंदत्वारात्रौजागरणंकुर्यादितिप्रासादाधिवासनं ॥ ॥ छ ॥ ॥ छ ॥

## ॥ २६८ ॥ अथदेवस्थापनदिनकृत्यं ॥

स्थापनदिवसेप्रातराचार्योयागमंडपमागत्यावाहितदेवताःसंपूज्याधिवासितांपिंडिकां त्रातारमिंद्रमितिमंत्रेणगृहीत्वाशांति घोषेणप्रासादप्रादक्षिण्येनप्रासादमानीय शंतातीयेनविघ्नोद्धरणायपुष्पोदकधारयाप्रदक्षिणंप्रासादमभ्युक्ष्य महाँइंद्रोवज्रबा हुरितिमंत्रेणसमुल्लिख्यपुनरस्त्रपूतवारिणासर्वतःप्रोक्ष्यपिंडिकास्थापनदेशंनिश्चित्य द्वारदेशेदेवस्यदृष्टिपातंचनिर्णीयतत्रपंचर त्नोपरिसौवर्णकूर्मंद्वारसंमुखंनिधायतदुपरिरत्नानिन्यस्य तदुपरिकूर्मशिलाब्रह्मशिलापिंडिकात्मिकांत्रिवप्रांसिंहासनापरपर्या यांशिलांनिदध्यात् ॥ ततःशिलामध्यदेशंस्पृष्ट्वाप्रार्थयेत् ॥ त्वमेवपरमाशक्तिस्त्वमेवासनधारिका ॥ शिवाज्ञयात्वयादेविस्था तव्यमिहसर्वदा ॥ ॐ तत्त्वाध्वनेनमः ॥ ॐ मंत्राध्वनेनमः ॥ ॐ कालाध्वनेनमः ॥ इतिपुष्पांजलित्रयंदत्वाध्रुवाद्यौरितिसूक्तेन पिंडिकायाऊर्ध्वभागंस्पृष्ट्वास्वमंत्रंपिंडिकायांन्यस्य ॥ ॐ आत्मतत्त्वाय० ॥ ॐ आत्मतत्त्वाधिपतये० ॥ ॐ क्रियाशक्त्यै० ॥ ॐ शिवतत्त्वाय० ॥ ॐ शिवतत्त्वाधिपतये० ॥ ॐ इच्छाशक्त्यै० ॥ ॐ विद्यातत्त्वाय० ॥ ॐ विद्यातत्त्वाधिपतयेआधा रशक्त्यै० ॥ इतिविन्यस्य पिंडिकांप्रार्थयेत् ॥ सर्वदेवमयीशानित्रैलोक्याह्लादकारिणि ॥ त्वांप्रतिष्ठापयाम्यत्रमंदिरेशिवपू जिते ॥ यावच्चंद्रश्चसूर्यश्चयावदेषावसुंधरा ॥ तावत्त्वंदेवदेवेशिमंदिरेस्मिंस्थिराभव ॥ पुत्रानायुष्मतोलक्ष्मीमचलामजरामृ

ते ॥ अभयंसर्वभूतेभ्यःकर्तुंनित्यंचदेहिमे ॥ विजयंभूपतेःसर्वलोकानांसुखमेवच ॥ सुभिक्षंक्षेममारोग्यंकुरुदेविनमोनमः ॥ ततःप्रणवंश्वभ्रेविन्यस्य ॥ तद्वाह्येस्वरान् ॥ तद्वाह्येकादिक्षांतानिव्यंजनानि ॥ तद्वाह्येइंद्रादिनामभिरष्टरत्नानिपूर्वादिक्रमे णवज्रमौक्तिकवैडूर्यशंखस्फटिकपुष्परागेंद्रनीलमहानीलाइतिन्यस्यसप्तधान्यरूप्यवृषभमनःशिलाःक्षिपेत् ॥ विष्णुश्चेद्रूप्यवृष स्थानेरूप्यगरुडः ॥ ततःपायसेनसंलिप्यशुक्लवस्त्रेणाच्छाद्य ॐ नमःसुदर्शनायेतिरक्षांकृत्वागृहावैप्रतिष्ठेतिप्रासादमभिषिच्य दिक्पालेभ्योबलीन्दत्वाआचम्यप्रासादंपंचगव्येनाभ्युक्ष्यकुशैःसंमार्जयेत् ॥ ततःसंपातोदकमापादंमूलेनाष्टवारमभिमंत्र्यते नदेवस्यशिरोभिषिच्यशंखतूर्यनिनादेन ॐ उत्तिष्ठब्रह्मणस्पतेइतिस्थाप्यदेवमुत्थाप्य प्रासादप्रादक्षिण्येनकनिक्रदददितिसूक्तेन विष्णुं सद्योजातादिपंचानुवाकैर्लिंगंगृहंप्रवेश्यपिंडिकासमीपेसंस्थाप्यपाद्यार्घ्यमधुपर्केणाभ्यर्च्य सुवर्णशलाकामंतरितांकृत्वा सुलग्ने पुण्याहमस्तु ॐ प्रतितिष्ठपरमेश्वरइत्युक्त्वा अतोदेवाइतिविष्णुं रुद्रेणलिंगं एवमन्यान्देवांस्तत्तत्सूक्तेनचस्थापयेत् ॥ यजमानान्वितआचार्योदेवंप्रार्थयेत् ॥ लोकानुग्रहहेत्वर्थंस्थिरोभवसुखायनः ॥ सान्निध्यंहिसदादेवप्रत्यक्षंपरिकल्पय ॥ प्रधा नपुरुषौयावद्यावच्चंद्रदिवाकरौ ॥ तावत्त्वमनयाशक्त्यायुक्तोत्रैवस्थिरोभव ॥ इतिप्रार्थ्यप्राणप्रतिष्ठांकुर्यात् ॥ ॥ ७ ॥

## ॥ २६९ ॥ अथप्राणप्रतिष्ठा ॥

अस्यश्रीप्राणप्रतिष्ठामंत्रस्य ब्रह्मविष्णुरुद्राऋषयः ऋग्यजुःसामानिच्छंदांसि क्रियामयवपुःप्राणाख्यादेवता आंबीजं ह्रींश क्तिः क्रोंकीलकं प्राणप्रतिष्ठायांविनियोगः ॥ ब्रह्मविष्णुरुद्रऋषिभ्योनमःशिरसि ऋग्यजुःसामछंदोभ्योमुखे प्राणाख्यदेवतायै हृदि आंबीजायगुह्ये क्रोंशक्तयेपादयोः ॥ ॐ अंकंखंगंघंङंपृथिव्यप्तेजोवाय्वाकाशात्मनेआंहृदयायनमः ॥ ॐ इंचंछंजंझंञं

मूर्त्स्वरूपरसगंधात्मनेईशिरसेस्वाहा ॥ ॐ उंटंठंडंढंणंश्रोत्रत्वकचक्षुर्जिह्वाघ्राणात्मनेऊंशिखायैवषट् ॥ ॐ एंतंथंदं[illegible]
णिपादपायूपस्थात्मनेऐंकवचायहुं ॥ ॐ ओंपंफंबंभंमंवचनादानविहरणोत्सर्गानंदात्मनेऔंनेत्रत्रयायवौषट् ॥ अंयंरंलंवंशंषं
संहंळंक्षंमनोबुद्ध्यहंकारचित्तविज्ञानात्मनेअःअस्त्रायफट् ॥ एवमात्मनिदेवेचन्यासंकृत्वादेवंहृदिस्पृष्ट्वाजपेत् ॥ ॐ आंह्रींक्रों
यंरंलंवंशंषंसंक्षंहंसःदेवस्यप्राणाइहप्राणाः ॥ ॐ आंह्रीं०हंसःदेवस्यजीवइहस्थितः ॥ आंह्रीं०हंसःदेवस्यसर्वेंद्रियाणि ॥ ॐ
आंह्रीं०हंसःदेवस्यवाङ्मनश्चक्षुःश्रोत्रजिह्वाघ्राणप्राणाइहागत्यस्वस्तयेसुखेनचिरंतिष्ठंतुस्वाहा ॥ अर्चाहृद्यंगुष्ठंदत्वाजपेत् ॥
अस्यैप्राणाःप्रतिष्ठंतुअस्यैप्राणाःक्षरंतुच ॥ अस्यैदेवत्वमर्चायैमामहेतिचकश्चन ॥ इति ॥ ततःप्रणवेनसंरुध्यसजीवंध्यात्वाभु
वाद्यौरितिऋचंजस्वादेवकर्णेगायत्रींदेवमंत्रंचजप्त्वापुरुषसूक्तेनोपस्थायपादनाभिशिरःसुस्पृष्ट्वा ॥ ॐ इहैवैधिमापच्योष्ठाःपर्व
तइवाविचाचलिः ॥ इंद्रइवेहध्रुवस्तिष्ठेहराष्ट्रमुधारय ॥ इतित्रिर्जपेत् ॥ ततोयजमानः ॥ स्वागतंदेवदेवेशमद्भाग्यात्त्वमिहा
गतः ॥ प्राकृतंत्वमदृष्ट्वामांबालवत्परिपालय ॥ धर्मार्थकामसिद्ध्यर्थंस्थिरोभवशुभायनः ॥ सान्निध्यंतुसदादेवस्वार्चायांपरि
कल्पय ॥ यावच्चंद्रावनीसूर्यास्तिष्ठंत्यप्रतिघातिनः ॥ तावत्त्वयात्रदेवेशस्थेयंभक्तानुकंपया ॥ भगवन्देवेशत्वंपितासर्वदेहिनां ॥
येनरूपेणभगवंस्त्वयाव्याप्तंचराचरं ॥ तेनरूपेणदेवेशस्वार्चायांसन्निधोभव ॥ इतिनमेत् ॥ ततआचार्योदेवस्यवाहनपरिवा
रादिदेवांस्तत्तन्मंत्रेणानीयस्वस्वस्थानेप्रतिष्ठाप्यप्राणप्रतिष्ठांकुर्यात् ॥ ॥ अथाचार्यःकर्ताचअर्चां ॥ ॐ भूःपुरुषमावाहया
मि भुवःपुरुष० स्वःपुरुष०भूर्भुवःस्वःपुरुष० इत्यावाह्यप्रणवेनासनंदत्वातेनैवदूर्वाश्यामाकविष्णुक्रांतापद्ममिश्रंपाद्यं ॐ इ
माआपःशिवतमाःपूताःपूततमामेध्यामेध्यतमाअमृताअमृतरसाःपाद्यास्ताजुषतांप्रतिगृह्यतांप्रतिगृह्णातुभगवान्महाविष्णुःवि

ष्णवेनमःपाद्यं ॥ लिंगेतुभगवान्महादेवोरुद्रायनमःपाद्यं० ॥ इमाआपःशिवतमा० अर्घ्योइत्यर्घ्यं ॥ इमा० आचमनीयाइ
त्याचमनं ॥ मूलेनमधुपर्कं ॥ आप्यायस्वेत्यादिभिःपंचामृतं ॥ कनिक्रददितितैलाभ्यंगं ॥ देवोक्तमंत्रैरभिषेकः ॥ ततःप्रति
सरविसर्जनं इदंविष्णुरितिविष्णोः ॥ नमोअस्तुनीलग्रीवायेतिलिंगस्य ॥ ततोमूलेनवस्त्रोपवस्त्रेदत्वा ॥ इमेगंधाःशुभादिव्याः
सर्वगंधैरलंकृताः ॥ पूताब्रह्मपवित्रेणपूताःसूर्यस्यरश्मिभिः ॥ गंधं ॥ इमेमाल्याःशुभादिव्यासर्वमाल्यैरलंकृताः पूताइत्या
दि ॥ मालाः ॥ इमेपुष्पाः० ॥ पुष्पाणि ॥ वनस्पतिरितिधूपं ॥ आज्यंचेतिदीपं ॥ विष्णौसंकर्षणादिद्वादशनामभिःपुष्पा
णिसमर्प्यतैरेवतर्पणंकृत्वापायसगुडौदनचित्रौदनैः पवित्रंतइतिनैवेद्यंदत्वाकृसरंजुहुयात् ॥ अद्यपूर्वो० पूजांगहवनंकरिष्ये ॥
कुंडसमीपमेत्याग्निंध्यात्वापरिसमुह्यपर्युक्ष्य प्रोक्षणीपात्रंहविश्चासाद्यप्रोक्ष्याभिघार्याज्याद्दक्षिणतोनिधायाग्निमभ्यर्च्यसंकर्षणा
दिनामभिःकृसरंहुत्वा तेनैव शार्ङ्गिणे श्रियै सरस्वत्यै पुष्ट्यै विष्णवेइति हुत्वा ॥ विष्णोर्नुकं० प्रतद्विष्णु०तदस्यप्रिय० परो
मात्रया० विचक्रमे० त्रिर्देवः० इतिमंत्रैर्हुत्वापुनःसंकर्षणादिभिःप्राग्वद्धुत्वा ॥ लिंगेतुदीपांतंकृत्वाभवायदेवायनमःशर्वाय
देवा० ईशानाय० पशुपतये० रुद्राय० उग्रायनमः भीमायनमः महतेनमः इतिपुष्पाणिदत्वातैरेवतर्पणं पवित्रंतेइतिपाय
सगुडौदननैवेद्यः ॥ ॐ भवायदेवायस्वाहेतिअष्टनामभिःकृसरंहुत्वा भवस्यदेवस्यपत्न्यैस्वाहेत्याद्यष्टाभिर्गुडौदनंहुत्वा भवस्य
देवस्यसुतायस्वाहेत्याद्यष्टाभिःहरिद्रौदनंहुत्वा ॐ त्र्यंबकं० मानोमहांत० मानस्तोके० आरात्ते० विकिरिद० सहस्राणिसह
स्रशो० इतिद्वादशऋचः एतैःकृसरौदनंहुत्वा ॥ शिवाय० शंकराय० सहमानाय० शितिकंठाय० कपर्दिने० ताम्राय०
अरुणाय० अपगुरमाणाय० हिरण्यबाहवे० सस्पिंजराय० बभ्लुशाय० हिरण्याय० इतिहरिद्रौदनंहुत्वा ॥ अथवेदि

कृतेस्वाहेतिस्विष्टकृतंपूर्णाहुतिंवसोर्धारांचसंपाद्यहोमशेषंसमाप्य पूर्वोक्तसर्वहविर्भिर्बलिंदद्यात् ॥ तत्रमंत्रः ॥ त्वामेकमाद्यं पुरुषंपुरातनंनारायणंविश्वसृजंयजामहे ॥ त्वय्येवयज्ञोविहितोविधेयस्त्वमात्मनात्मन्प्रतिगृह्णीष्वहव्यं ॥ इति ॥ लिंगेतुनारायणपदेशिवंरुद्रंपदोच्चारः ॥ ततोश्वत्थपर्णेभूर्भुवःस्वरोमितिहुतशेषंनिधायप्रदक्षिणीकृत्य ॥ विश्वभुजेनमः सर्वभुजे० आत्मने० परमात्मने० इतिनत्वा ॥ ज्ञानतोज्ञानतोवापिभगवन्यन्मयाकृतं ॥ तत्सर्वंपूर्णमेवास्तुत्वत्प्रसादादधोक्षज ॥ इतिदेवंसंप्रार्थ्यफलतांबूलदक्षिणानीराजनंमंत्रपुष्पंचदत्वाछत्रादिपरिकल्प्यक्षमाप्यपूजांसमाप्यकर्तृनामयुतंदेवस्यनामकुर्यात्॥ आचार्यःस्थापितदेवान्पंचधोपचर्यसर्वेऋत्विजःकलशोदकेनसपरिवारंयजमानमभिषिंचेयुः ॥ ( ततःस्नानोत्तरंप्रासादांगेयूपेधिवासितेपूर्वोक्तविधिनातंनिखनेत् ॥ ततोमासपक्षाद्युल्लिख्यइमंशिलेष्टकादार्वादिनिर्मितंवलभीजगतीप्राकारगोपुरपरिवारदेवतालयसंयुतंघंटावितानध्वजपताकाद्यलंकृतंप्रासादंतत्तद्देवतालोककामः कुलद्वयोद्धारार्थममुकदेवप्रीतयेहमुत्सृजामीतिकुशयवजलंक्षिपेत् ) ॥ यजमानआचार्यंसंपूज्यतस्मै गोयुगंएकांवागांदत्वाऋत्विग्भ्योदक्षिणांदत्वाभूयसींचदत्वाब्राह्मणादिभोजनंसंकल्प्यस्थापितदेवताविसृज्यपीठंदत्वायस्यस्मृत्येति० वपट्टते० प्रायश्चित्तान्यशेषाणि० प्रमादात्कुर्वतांकर्म० इतिविष्णुंस्मृत्वाकर्मेश्वरार्पणंकुर्यात् ॥ इतिनिर्णयसिंधुमयूखानुसारीप्रतिष्ठेंदौसप्रासादपरिवारदेवस्थिराचाप्रयोगःसंपूर्णः ॥ ॥ ७ ॥

॥ २७० ॥ षोडशतत्वन्यासास्तद्धोमश्चमुख्यकुंडप्रधानहोमोत्तरंवासुदेव्यामुक्तःसयथा ॥

अथहेमाद्युक्तप्रतितत्वन्यासहोमः ॥ सयथा ॥ ॐ अकारायनमःस्वाहा उकारायनमःस्वाहा मकारायनमःस्वाहा ॐकारःसर्वत्र ॥ इतिप्रणवन्यासहोमः ॥ १ ॥ भूर्नमःस्वाहा भुवर्नमःस्वाहा स्वर्नमःस्वाहा ॥ इतिव्याहृतिन्यासहोमः ॥ २ ॥ अथमातृकान्यासहोमः ॥ अकारायनमः

स्वाहा आकाराय० इकाराय० ईकाराय० उकाराय० ऊकाराय० ऋकाराय० ॠकाराय० ऌकाराय० ॡकाराय० एकाराय० ऐकाराय० ओकाराय० औकाराय० अंकाराय० अःकाराय० यकाराय० रकाराय लकाराय० वकाराय० शकाराय० षकाराय० सकाराय० हका राय० ळकाराय० पफबभमेभ्योनमःस्वाहा तथदधनेभ्योनमः टठडढणेभ्योनमः चछजझञेभ्योनमः कखगघङेभ्योनमः ॥ **इतिमातृकान्यासहोमः** ॥ ३ ॥ सूर्याय० चंद्राय० अंगारकाय० बुधाय० बृहस्पतये० शुक्राय० शनैश्चराय० राहवे० केतवे० रोहिण्यृक्षाय० मृगशीर्षेभ्यो० आर्द्रायै० पुनर्वसुभ्यां० पुष्याय० आश्लेषाभ्यो० मघाभ्यो० पूर्वाफल्गुनीभ्यो० उत्तराफल्गुनीभ्यो० हस्ताय० चित्रायै० स्वात्यै० विशाखाभ्यः० अनूराधाभ्यां० ज्येष्ठायै० मूलाय० पूर्वाषाढाभ्यो० उत्तराषाढाभ्यो० श्रवणाय० धनिष्ठाभ्यो० शतभिषजाय० पूर्वाभाद्रपदाभ्यो० उत्तराभाद्रपदाभ्यो० रेवत्यै० अश्विभ्यां० भरणीभ्यो० कृत्तिकाभ्यो ध्रुवाय० सप्तर्षिभ्यो० मातृमंडलाय० विष्णुपदेभ्यो० नागवीथ्यै० अंगवीथ्यै० ताराभ्यो० अगस्त्याय० ॥ **इतिग्रहनक्षत्रध्रुवादिहोमः** ॥ ३ ॥ एवं ॥ ६ ॥ चैत्रायनमःस्वाहा वैशाखाय० ज्येष्ठाय आषाढाय० श्रावणाय० भाद्रपदाय० आश्विनाय० कार्तिकाय० मार्गशीर्षाय० पौषाय० माघाय० फाल्गुनाय० इदुवत्सरानुवत्सरपरिवत्सरसंवत्सरेभ्योनमः० ऋतुभ्यो नमः० अहोरात्रेभ्यो० क्षणाय० लवाय० कलायै० कृताय० त्रेताय० द्वापराय० कलियुगाय० चतुर्दशमन्वंतरेभ्यो० पराय० महाकल्पाय० उदगयनदक्षिणायनाभ्यां० विषुवते० ॥ **इतिकालन्यासहोमः** ॥ ७ ॥ ब्राह्मणाद्य० क्षत्रियाय० वैश्याय० शूद्राय० संकरजेभ्यो० अनुलोमेभ्यो० गोभ्यो० अजाभ्यो० अविकाभ्यो० ग्रामपशुभ्यो० अरण्यपशुभ्यो० ॥ **इतिवर्णन्यासहोमः** ॥८॥ मेघेभ्यो० नदीभ्यो० समुद्रेभ्यो० ॥ **इतितोयन्यासहोमः** ॥ ९ ॥ ऋग्वेदाय० यजुर्वेदाय० सामवेदाय० अथर्ववेदाय० सर्वोपनिषद्भ्यो० इतिहासपुराणेभ्यो० अथर्वांगिरसेभ्यो० कल्पसूत्रेभ्यो० व्याकरणेभ्यो० तर्केभ्यो० मीमांसायै० निरुक्ताय० छंदःशास्त्रेभ्यो० ज्योतिःशास्त्रेभ्यो० गीतशास्त्रेभ्यो० भूतशास्त्रेभ्यो० आयुर्वेदाय० धनुर्वेदाय० योगशास्त्रेभ्यो० नीतिशास्त्रेभ्यो० वश्यतंत्राय० ॥ **इतिविद्यान्यासहोमः** ॥ भूम्यैनमःस्वाहा सूर्यलोकाय० चंद्रलो

कय० अनिललोकाय० व्योम्ने० समुद्रेभ्यो० पृथिव्यै० ॥ इतिवैराजन्यासहोमः ॥ ११ ॥ हिरण्यगर्भाय० कृष्णाय० [illegible]
अश्विभ्यां० वैश्वानराय० मरुद्भ्यो० वसुभ्यो० रुद्रेभ्यो० आदित्येभ्यो० सरस्वत्यै० इंद्राय० बलये० प्रद्युम्नाय० विश्वकर्मणे० नारदाय० अ
नंताय० दिग्भ्यो० वरुणाय० मित्राय० विश्वेभ्योदेवेभ्यो० पितृभ्यो० यक्षेभ्यो० राक्षसेभ्यो० पिशाचेभ्यो० असुरेभ्यो० विद्याधरेभ्यो० ग्रहे
भ्यो० गुह्यकेभ्यो० पूतनादिभ्यो० गंधर्वेभ्यो० कार्तिकेयाय० गणेशायन० ॥ इतिदेवयोनिन्यासहोमः ॥ १२ ॥ मत्स्याय० कूर्माय० वरा
हाय० नारसिंहाय० वामनाय० परशुरामाय० रामाय० कृष्णाय० बौद्धाय० कलंकिने० केशवाय० नारायणाय० माधवाय० गोविंदाय०
विष्णवे० मधुसूदनाय० त्रिविक्रमाय० वामनाय० श्रीधराय० हृषीकेशाय० पद्मनाभाय० दामोदराय० ॥ इतिमूर्तिन्यासहोमः ॥ १३ ॥ अ
श्वमेधाय० नरमेधाय० राजसूयाय० गोसवाय० द्वादशाहाय० अहीनेभ्यो० सर्वजिभ्यो० सर्वमेधाय० अग्निष्टोमाय० अतिरात्राय० अप्तोर्या
माय० षोळशिने० उक्थ्याय० वाजपेयाय० अत्यग्निष्टोमाय० चातुर्मास्येभ्यो० सौत्रामण्यै० पश्विष्टिभ्यो० दर्शाय० पौर्णमासाय० सर्वेष्टिभ्यो०
स्वाहाकाराय० वषट्कराय० पंचमहायज्ञेभ्यो० आहवनीयाय० दक्षिणाग्नये० गार्हपत्याग्नये० वेद्यै० प्रवर्ग्याय० सवनेभ्यो० इध्मेभ्यो० बर्हि
भ्यो० ॥ इतिक्रतुन्यासहोमः ॥ १४ ॥ ततोमूलमंत्रेणदशाहुतयः ॥ इतिमूलमंत्रन्यासहोमः ॥ १५ ॥ धर्माय० ज्ञानाय० वैराग्याय० ऐ
श्वर्याय० ॥ इतिगुणन्यासहोमः ॥ १६ ॥ खङ्गाय० मुसलाय० शार्ङ्गाय० हलाय० चक्राय० शंखाय० गदायै० पद्माय० ॥ शैवे वज्राय०
दंडाय० शक्तये० शूलाय० खङ्गाय० पाशाय० अंकुशाय० ध्वजाय० चक्राय० पद्माय० ॥ इत्यायुधन्यासहोमः ॥ लक्ष्म्यै० सरस्वत्यै०
रत्यै० प्रीत्यै० कीर्त्यै० शांत्यै० पुष्ट्यै० तुष्ट्यै० इतिशक्तिन्यासहोमः ॥ देवमंत्रस्यहृदयायनमःस्वाहा शिरसेनमः० शिखायै० कवचाय०
नेत्रत्रयाय० अस्त्रायफट्० श्रीवत्साय० कौस्तुभाय० वनमालायै० ॥ इत्यंगन्यासहोमः ॥ विष्णुपक्षेषोडशन्यासातिरिक्तोद्वादशाक्षरमंत्रन्यास
होमः ॥ सचैवं ॥ ॐओंकारायनमःस्वाहा नकारायन० मोकारायन० भकारायन० गकारायन० वकारायन० तेकारायन० वाकारायन० सुकारायन०

देकारायन० वाकारायन० यकाराय० ॥ **इतिद्वादशाक्षरमंत्रन्यासहोमः** ॥ प्राणाय० अपानाय० व्यानाय उदानाय० समानाय० पुरुषाय०
ॐकारायपुरुषात्मनेनमःस्वाहा मकारायजीवात्मनेनमः भकारायप्राणतत्त्वायजीवोपाधयेनमःस्वाहा बकारायबुध्यात्मने० फकारायअहंकारात्मने०
पकारायमनआत्मने० नकारायशब्दतन्मात्रात्मने० धकारायस्पर्शतन्मात्रात्मने० दकारायरूपतन्मात्रात्मने० थकारायरसतन्मात्रात्मने० तकारायगंध
तन्मात्रात्मने० णकारायश्रोत्रात्मने० ढकारायत्वगात्मने० डकारायचक्षुरात्मने० ठकारायजिह्वात्मने० टकारायघ्राणात्मने० ञकारायवागात्मने०
झकारायपाण्यात्मने० जकारायपादात्मने० छकारायपाय्वात्मने० चकारायउपस्थात्मने० ङकारायपृथिव्यात्मने० घकारायअबात्मने० गकाराय
तेजआत्मने० खकारायवाय्वात्मने० ककारायआकाशात्मने० शकारायपुंडरीकात्मने० षकारायसूर्यात्मने० सकारायसोमात्मने० रकारायवह्न्या
त्मने० पकारायपुरुषात्मने० यकारायसर्वात्मने० रकारायसर्वात्मने० वकारायअनुग्रहात्मंने० संसर्वभूतात्मनेन० ळकारायहंसात्मने० क्षकारायको
पात्मने० आत्मतत्वाय० आत्मतत्वाधिपतयेब्रह्मणेन० विद्यातत्वाय० विद्यातत्वाधिपतयेविष्णवेन० शिवतत्वाय० शिवतत्वाधिपतयेशिवाय० अप्त
त्वाय० तेजस्तत्वाय० वायुतत्वाय० आकाशतत्वाय० गंधतत्वाय० रसतत्वाय० रूपतत्वाय० स्पर्शतत्वाय० शब्दतत्वाय० घ्राणतत्वाय० जिह्वा
तत्वाय० चक्षुस्तत्वाय० वाक्तत्वाय० श्रोत्रतत्वाय० पायुतत्वाय० उपस्थतत्वाय० हस्ततत्वाय० पादतत्वाय० वाक्तत्वाय० मनस्तत्वाय०बुद्धित
त्वाय० अहंकारतत्वाय० सत्वाय० रजसेन० तमसेन० पुरुषतत्वाय० रागतत्वाय०विज्ञानतत्वाय० नीतितत्वाय० तर्ककलातत्वाय० मायातत्वाय०
ईश्वरतत्वाय० सदाशिवतत्वाय० शक्तितत्वाय० शिवतत्वाय० ॥ **इतिजीवन्यासहोमः** ॥ इत्येतेषोडशन्यासाः सर्वदेवसाधारणाः ॥ विष्णुश्चे
द्विशेषन्यासहोमः ॥ सचयथा ॥ ॐ केशवायनमःस्वाहा नंनारायणाय० मोंमाधवाय० भंगोविंदायनमः गंविष्णवे० वंमधुसूदनाय० तेंत्रिवि
क्रमाय० वांवामनाय० सुंश्रीधराय० देंहृषीकेशाय० वांपद्मनाभाय० यंदामोदराय० ॥ **इतिद्वादशाक्षरमूर्तिन्यासहोमः** ॥ ॐ हृदयाय०
विष्णवेन० ब्रह्मणे० ध्रुवाय० चक्रिणे० शंभवे० विज्ञानाय० सावित्राय० चक्ररूपाय० पिंगलाक्षायनमःस्वाहा ॥ **इत्यष्टांगविष्णुमूर्तिन्यास**

होमः ॥ **अथपुरुषसूक्तन्यासहोमः** ॥ प्रत्यृचंस्वाहाकारः ॥ ॐ सहस्रशीर्षा० गुलंस्वाहा पुरुषएवेदं० एतावानस्यमहिमा० त्रिपादूर्ध्व० तस्मा द्विराळजायत० यत्पुरुषेण० तंयज्ञंबर्हिषि० तस्माद्यज्ञात्सर्वहुतःसंभृतं० तस्माद्यज्ञात्सर्वहुतऋचः० तस्मादश्वा० यत्पुरुषं० ब्राह्मणोस्य० चंद्रमा मनसो० नाभ्याआसी० सप्तास्या० यज्ञेनयज्ञ० ॥ **अथोत्तरनारायणन्यासहोमः** ॥ अद्भ्यःसंभूतः० वेदाहमेतं० प्रजापति० योदेवेभ्य० रुचं ब्राह्मं० ह्रीश्चतेलक्ष्मी० ६ ॥ **अथाधिवासितपिंडिकायांन्यासस्तस्येदानींहोमः** ॥ ॐ यंथंमंफट्ललक्ष्म्यैनमःस्वाहा हृदयायनमः शिरसेस्वाहा शिखायै० कवचाय० नेत्रत्रयाय० अस्त्राय० पृथिवीमूर्तये० पृथिवीमूर्त्यधिपतयेशर्वाय० अग्निमूर्तये० अग्निमूर्त्यधिपतयेपशुपतये० यजमानमूर्तये० यजमानमूर्त्यधिपतयेउग्राय० अर्कमूर्तये० अर्कमूर्त्यधिपतयेरुद्राय० जलमूर्तये० जलमूर्त्यधिपतये[illegible]० वायुमूर्तये० वायुमूर्त्यधिपतयेईशानाय० सोममूर्तये० सोममूर्त्यधिपतयेमहादेवाय० आकाशमूर्तये० आकाशमूर्त्यधिपतयेभीमाय० ॥ इत्याधिवासितपिंडिकान्यासमंत्रहोमः ॥ **अथगर्भा गारेस्थापितपिंडिकायांतत्वन्यासस्तस्यहोमः** ॥ आत्मतत्वायनमःस्वाहा आत्मतत्वाधिपतये० क्रियाशक्त्यै० शिवतत्वाय० शिवतत्वाधिपतये इच्छाशक्त्यै० विद्यातत्वाय० विद्यातत्वाधिपतये आधारशक्त्यै० ॥ देवेर्जीवन्यासानंतरंपंचोपनि[illegible]मंत्रन्यासस्तस्येदानींहोमः ॥ ॐ पांपरायपरमे ष्ठ्यात्मनेनमःस्वाहा वांपरायपुरुषात्मने० रांपरायविश्वात्मने० लांपरायनिवृत्त्यात्मने० वांपरायसर्वात्मने० ॥ ५ ॥ **अथपृथिव्यादिपंचमहा भूतन्यासहोमः** ॥ ॐ स्योनापृथिवि० स्वाहेतिपृथिव्याः १ ॐ अप्सुमेसोमो० षजीःस्वाहाइत्यपां २ शुक्रमसीतितेजसः ३ वायोशतमितिवायोः ४ नासदासीदित्याकाशस्य आदित्प्रत्नस्येतिवा ५ ॥ इतिषोडशन्यासमंत्रहोमः ॥ एतेन्यासहोमाःईशानमुख्याचार्यकुंडएवकर्तव्याः ॥

## ॥ २७१ ॥ अथचलार्चाप्रयोगः ॥

श्रीः ॥ **अथबौधायनसूत्रेत्रिविक्रमानुसारेणसिंधूक्तःसर्वदेवचलप्रतिष्ठाप्रयोगः ॥ तत्रादौदशद्वादशान्यतमहस्तंमंडपंकृत्वाआग्ने य्यांहस्तमात्रंचतुरस्रंकुंडंस्थंडिलंवाकृत्वापूर्वतोहस्तमात्रांद्वादशांगुलोच्चांत्रिवप्रांग्रहवेदिं नैर्ऋत्यांचतुरंगुलोन्नतांहस्तमात्रांवास्तु**

वेदिं मध्येमंडपनवांशांहस्तोच्चांप्रधानवेदिंकृत्वातदुपरिसर्वतोभद्रंविरच्यप्रतिष्ठादिनात्पूर्वेद्युःयजमानःआचम्यप्राणानायम्य देशकालौसंकीर्त्य अस्यांमूर्तौलिंगेवादेवतासान्निध्यार्थंदीर्घायुर्लक्ष्मीसर्वकामसमृद्ध्यक्षय्यसुखकामोहंग्रहयज्ञसहितांअमुकमूर्तिंचलप्रतिष्ठांकरिष्ये ॥ ( वास्तुदेवतापिंडिकापरिवारदेवतासत्त्वेतत्तदूहःकार्यः ) ॥ तदंगभूतंमहागणपतिपूजनपूर्वकंस्वस्तिवाचनंमातृकापूजनंनांदीश्राद्धंआचार्यादिवरणंचकरिष्ये ॥ तानिकृत्वा ॥ वृताचार्यःद्विराचम्यपवित्रपाणिःप्राणानायम्यदेशकालाद्युच्चार्यअमुकमूर्तिचलप्रतिष्ठाख्येकर्मणियजमानेनवृतोहमाचार्यकर्मकरिष्ये ॥ शरीरशुद्ध्यर्थंपुरुषसूक्तजपंकलशाद्याराधनंचकरिष्ये ॥ तानिकृत्वायदत्रेतिगौरसर्षपान्विकीर्यशुचीवइतितृचेनपंचगव्येनआपोहिष्ठेतितृचेनकुशोदकेनचदेवयजनंसंप्रोक्ष्य स्वस्त्ययनं० अंहोमुच० देवाआयांतुइत्यादिभूमौप्रादेशंकुर्यात् ॥ ततउक्तविधिनामंडपप्रतिष्ठांकृत्वाऽकृत्वावा पूर्वरात्रौसुवस्त्राच्छादितांमूर्तिंपंचगव्यहिरण्ययवदूर्वाश्वत्थपर्णपलाशपर्णक्षिप्तोदकेनआपोहिष्ठेतितिसृभिः हिरण्यवर्णाःशुचयइतितिसृभिः पवमानःसुवर्जनइत्यनुवाकेनचाभिषिच्य व्याहृतिभिःइदंविष्णुरितिचपुष्पफलयवदूर्वाःसमर्प्यरक्षोहणमितिदेवहस्तेकंकणंबद्ध्वावाससाच्छाद्य अवतेहेळो०उदुत्तमं० इति मंत्राभ्यांगंधोदकपूरितजलद्रोण्यांप्राङ्मुखीमुदङ्मुखींवामूर्तिमधिवासयेत्॥ पात्राभावेसंततधारांकुर्यात् ॥ ततःपूर्वोक्तकुंडसमीपमेत्यअमुकप्रतिष्ठांगत्वेनहोमंकर्तुंकुंडोपलेपनाद्यग्निप्रतिष्ठांकरिष्ये॥तद्गोमयेनोपलिप्यउल्लिख्य उपरिमेखलायांइदंविष्णुरितिविष्णुं मध्यमेखलायांब्रह्मजज्ञानमितिब्रह्माणं अधोमेखलायांकद्रुद्रायेतिरुद्रं योन्यांगौरीर्मिमायेतिगौरींआवाह्यसंपूज्यतांकौशेयवाससाच्छाद्यबलवर्धननामानमग्निंप्रतिष्ठाप्यध्यात्वा ॥ मंडपपक्षेनैर्ऋत्यवेद्यांवास्तुमंडलंविलिख्यतत्रशिख्यादिवास्तुदेवताआवाह्यसंपूज्य ईशान्यांकलशेविधिनावरुणंसंपूज्यवास्तुदेवता

भ्यःपायसबलिंदद्यात् ॥ ततोग्रहवेद्यांग्रहान्संस्थाप्यसंपूज्याग्निसमीपमेत्यान्वाधानंकुर्यात् ॥ देशाद्युच्चार्यामुकमूर्तिचलप्रति
ष्ठाहोमेदेवतापरिग्रहार्थमित्यादिचक्षुषीआज्येनेत्यंतमुक्त्वा ॥ गणपतिंउपकल्पितसर्वैर्द्रव्यैः प्रतिद्रव्यमेकैकयावराहुत्या शि
ख्यादिवास्तुदेवताःप्रत्येकंप्रतिद्रव्यंअष्टाष्टसंख्याकाभिःसमित्तिलपायसाज्याहुतिभिः वास्तोष्पतिंवास्तोष्पतइतिचतसृभिः
प्रत्यृचंप्रतिद्रव्यंअष्टाविंशतिसंख्याकाभिःपूर्वोक्तद्रव्यचतुष्टयाहुतिभिःवास्तोष्पतइतिचतसृभिर्वास्तोष्पतेध्रुवास्थूणामितिपंच
र्भिःप्रत्यृचंबिल्वफलैः चरक्यादिदेवताःप्रतिदैवतंप्रतिद्रव्यंचतुःसंख्याकाभिःपूर्वोक्तद्रव्याहुतिभिः ॥ ग्रहहोमेआदित्या
दिनवग्रहान्अष्टाष्टसंख्याकाभिरर्कादिसमिच्चर्वाज्याहुतिभिः अधिदेवताःप्रत्यधिदेवताश्चप्रत्येकंप्रतिद्रव्यंचतुश्चतुःसंख्या
काभिःपूर्वो० ऋतुसाद्गुण्यदेवताःऋतुसंर० प्रत्येकंद्विद्विसं० पूर्वोक्तद्रव्यैर्यक्ष्ये ॥ अत्रप्रधानं ॥ इंद्रंपृथिवींपृथिवीमूर्तिंशर्वंअ
ग्निंअग्निमूर्तिंपशुपतिंयमंयजमानमूर्तिंउग्रंनिर्ऋतिंसूर्यमूर्तिंरुद्रंवरुणंजलमूर्तिंभवंवायुंवायुमूर्तिंईशानं कुबेरंसोममूर्तिंमहादेवंई
शानं आकाशमूर्तिंभीमंएतालोकपालमूर्तिंमूर्तिपतिदेवताःपलाशोदुंबराश्वत्थशम्यपामार्गसमित्तिलाज्यद्रव्यैःप्रतिदैवतंप्रतिद्र
व्यं २८ वा ८ आहुतिभिःतत्तन्मंत्रैः ॥ स्थाप्यदेवंअमुकंतन्मंत्रेणपूर्वोक्तसमित्पंचकतिलनैवारपायसाज्यैःप्रतिद्रव्यं १०८
वा २८ वा ८ संख्याहुतिभिः ॥ विश्वान्देवान्अग्निर्यजुर्भिरित्यनुवाकेन ( तिलाज्याभ्यां ) प्रतिद्रव्यंदशाहुतिभिः ॥ पिं
डिकांप्रतिद्रव्यमष्टसं० ८ पूर्वोक्तसप्तद्रव्याहुतिभिःतत्तन्मंत्रेण ॥ परिवारदेवताश्चेत्तन्मंत्रैःअमुकदेवताःप्रत्येकंप्रतिद्रव्यंअ
ष्टसंख्याकाभिःपूर्वो० ॥ एवंपंचपर्यायैःत्रिभिःपर्यायैर्वायक्ष्ये ॥ ब्रह्मादिमंडलदेवताःप्रत्येकंदशभिर्घृताक्ततिलाहुतिभिर्यक्ष्ये ॥
शेषेणेत्याज्यभागांतेयजमानस्त्यागंकुर्यात् । ततोगणपतयेवराहुतिंजुहुयात् ॥ ततोग्नेरुत्तरतःसजलंकलशंसंस्थाप्यआज्यहोमे

तस्मिन्संपातान्नयेत् ॥ सर्त्विगाचार्योऽन्वाधानक्रमेणहोमंकुर्यात् ॥ प्रतिद्रव्यहोमांतेदेवंपादनाभिशिरःसुस्पृशेत् ॥ तत्रादौ वास्तुदेवताहोमः ततोग्रहहोमःततोलोकपालमूर्तिमूर्त्यधिपतीनांहोमः ततःस्थाप्यदेवताहोमः ॥ मंत्रास्तु—इदंविष्णुरितिविष्णोः त्र्यंबकमितिशिवस्य गणानांत्वेतिगणपतेः उदुत्यमितिसूर्यस्य जातवेदसेइतिदुर्गायाः विष्णोर्नुकमितिनारायणस्य हिरण्यवर्णामितिलक्ष्म्याः अथवाविष्णवेनमःस्वाहाइत्यादिनामभिर्वाहोमः ॥ ततोविश्वेदेवोद्देशेनअग्निर्यजुर्भिरित्यनुवाकांते स्वाहेति १० आहुतयः ॥ ततःपिंडिकाहोमः ह्रीश्चते० इतिविष्णुपिंडिकायाः गौरीर्मिमायेतिशिवपिंडिकायाः चित्रंदेवानामितिसूर्यपिंडिकायाः गणेशशक्तिपिंडिकानांगौरीर्मिमायेति हनुमदादीनांशिवपिंडिकामंत्राःशिष्टैर्गृह्यंते॥ ततःपरिवारदेवताहोमःतत्तल्लिंगनिर्दिष्टवेदमंत्रैःनाममंत्रैर्वाकार्यः ॥ एवंप्रथमपर्यायहोमांतेदेवस्यपादौस्पृशेत् द्वितीयांतेनाभिं तृतीयांतेमध्यं चतुर्थांतेउरः पंचमांतेशिरइति ॥ पर्यायत्रयपक्षेतु प्रथमांतेपादौ द्वितीयांतेनाभिं तृतीयांतेशिरः ॥ ततोर्चांशोधयेत् ॥ देवंनत्वा ॥ स्वागतंदेवदेवेशविश्वरूपनमोस्तुते ॥ शुद्धेपित्वदधिष्ठानेशुद्धिंकुर्मःसहस्वतां ॥ इतिसंप्रार्थ्य ॥ ॐ उत्तिष्ठब्रह्मण० इतिदेवमुत्थाप्य अग्न्युत्तारणंकुर्यात् ॥ यथाअग्निःसप्तिमितिसूक्तमग्निपदरहितंपुनस्तत्सहितमिति १०८ वा २८ संख्यया पठन्जलंपातयेत् ॥ ततोर्चांद्वादशवारंमृदाजलेनचप्रक्षाल्यमंत्रवत्कृतपंचगव्येनस्नापयेत् ॥ तत्रमंत्रौ ॥ ॐ पयःपृथिव्यांपयओषधीषुपयोदिव्यंतरिक्षेपयोधाः ॥ पयस्वतीःप्रदिशःसंतुमह्यं ॥ ॐ आवोराजान० ॥ ततःपंचामृतस्नानं आप्याय० दधिक्राव्णो० शुक्रमसि० मधुवाता० आयंगौः० ॥ लिंगंचेन्नमस्तेरुद्रमन्यवइत्यारभ्यमृडयातिनइत्यंताष्टमंत्रैःसंस्नाप्यघृतेनाभ्यंगंचंदनोद्वर्तनंउष्णोदकेनक्षालनंचकृत्वागंधंदत्वासंपातोदकैरभिषिच्यसपल्लवदलैश्चतुर्भिःकुंभैःक्रमेण आपोहिष्ठा० योवःशि

वत० तस्माअरंग० आकलशेषु० इति मंत्रैःसंस्थाप्यतैरेवैकीकृतकुंभोदकैः समुद्रज्येष्ठाः० ४ आकलशेषु० इतिसंस्थाप्य ॥
पूर्ववेदिकायांऔदुंबरादिपीठेर्चामुपवेश्यपरितोष्टदिक्षुसजलकुंभेषुगंधपुष्पदूर्वाःक्षिप्त्वा ॥ आद्यकुंभेसप्तमृदः ॥ द्वितीयेपुष्क
रपर्णशमीविकंकताश्मंतकत्वचःपलवांश्च ॥ तृतीयेसप्तधान्यं ॥ चतुर्थेपंचरत्नानि ॥ पंचमेफलपुष्पाणि ॥ षष्ठेदूर्वारोचनाः ॥
सप्तमेसंपातोदकं ॥ अष्टमेसर्वौषधीःक्षिप्त्वा क्रमेण आपोहिष्ठेतितिसृभिः हिरण्यवर्णाःशुचयःपावकाइतिचतुर्भिः पवमानः
सुवर्जनइत्यनुवाकेनप्रागादिकलशेनाभिषिच्य ॥ एककुंभेशमीपलाशवटखादिरविल्वाश्वत्थविकंकतपनसाम्रशिरीषोदुंबराणांप
लवान्कषायांश्चक्षिप्त्वातेनअश्वत्थेवइतिमंत्रेणाभिषिच्य पंचरत्नोदकेनहिरण्यवर्णाःशुचयःपावकाइतिसंस्थाप्य अहतेवाससी
दत्त्वाउपरिवितानंबद्धायज्ञोपवीतादिदीपांतोपचारान्समर्प्य ॥ ॐ हिरण्यगर्भःसम० यआत्मदा० यःप्राणतो० यस्येमे० ये
नद्यौ० यंक्रंदसी० आपोहय० यश्चिदापो० इत्यष्टमंत्रैरष्टौपिष्टदीपान्दत्वासुवर्णशलाकयातैजसपात्रस्थंमधुघृतंचगृहीत्वा०
ॐ चित्रंदेवाना० ॥ ॐ तेजोसिशुक्रमस्यमृतमसिधामनामासिप्रियंदेवानामनाधृष्टंदेवयजनमसि ॥ इतिमंत्राभ्यां ॥ ॐ न
मोभगवतेतुभ्यंशिवायहरयेनमः ॥ हिरण्यरेतसेविष्णोविश्वरूपायतेनमः ॥ इतिचदक्षिणसव्यंदेवनेत्रमंत्राभ्यांलिखेत् ॥
ततः ॐ अंजंतित्वा० इतिअंजनेनमधुनाचाङ्क्त्वा ॐ देवस्यत्वा० द्रियेणानज्मिइतिमध्वाज्यशर्कराभिश्चाङ्क्त्वा तेनैवमंत्रे
णांजनेनपुरयेत् ॥ ततश्चादर्शसंस्थादिदर्शयेत् ॥ ततःकताचार्यायगामृत्विग्भ्यश्चदक्षिणांदद्यात् ॥ अथाचार्यःप्रत्यृचमा
दौप्रणवंवदन् पुरुषसूक्तेनदेवंस्तुत्वा वंशपात्रस्थपंचवर्णादिनैवदेवस्यनीराजनंकारयित्वारुद्रायचतुष्पथादौदद्यात् ॥ मंत्रस्तु ॥
ॐ नमोरुद्रायसर्वभूताधिपतयेदीप्तशूलधरायोमादयितायविश्वाधिपतयेरुद्रायवैनमोनमः शिवमगर्हितंकर्मास्तुस्वाहेतिअश्व

त्थपर्णेभूतेभ्योनमइतिभूतेभ्यश्चबलिंदद्यात् ॥ अथाचार्योमध्यवेद्युपरिकृतसर्वतोभद्रेदेवानावाहयेत् ॥ मध्येब्रह्माणमित्या
दिवैनाक्यंतादेवतानामभिरावाह्यसंपूज्याचार्योदेवंतत्रतन्मंत्रेणावाह्यमंडलमध्येस्थाप्यदेवतां ॥ ॐ सुप्रतिष्ठोभवेतिनिवेश्य
संपूज्यप्रतिदैवतंदशदशतिलाहुतीर्जुहुयात् ॥ ततोदेवेपुष्पांजलिंसमर्प्य ॐ नमोमहद्भ्योनमइतिनत्वावेद्युपरिपूर्वभागेस्वस्ति
केउत्तरतोवासोपस्करांशय्यांकृत्वाउत्तिष्ठेतिदेवमुत्थाप्यमंगलघोषैःशय्यायांदेवमारोप्य पुरुषसूक्तोत्तरनारायणाभ्यांस्तुत्वाऽ
नंतरंदेवेन्यासान्कुर्यात् ॥ पुरुषात्मनेनमः प्राणात्मने० प्रकृतितत्वाय० बुद्धितत्वाय० अहंकारतत्वाय० मनस्तत्वाय०
इतिसर्वांगे ॥ प्रकृति० बुद्धितत्वा० हृदये ॥ शब्दतत्वाय० शिरसि ॥ स्पर्शतत्वाय० त्वचि ॥ रूपतत्वाय० हृदि ॥ रसत
त्वाय० मुखे ॥ गंधतत्वाय० नासिकायां ॥ श्रोत्रतत्वाय० श्रोत्रयोः ॥ त्वक्तत्वाय० त्वचि ॥ चक्षुस्तत्वाय० चक्षुषोः ॥
जिह्वातत्त्वाय० जिह्वायां ॥ घ्राणतत्वाय० घ्राणे ॥ वाक्तत्वाय० वाचि ॥ पाणितत्वाय० हस्तयोः ॥ पादतत्वाय० पाद
योः ॥ पायुत० पायौ ॥ उपस्थत० उपस्थे ॥ पृथ्वीत० पादादिजानुपर्यंतं ॥ अप्तत्वाय० जान्वादिनाभिपर्यंतं ॥ तेजस्त०
नाभ्यादिहृदयांतं ॥ वायुत० हृदयादिभ्रूमध्यांतं ॥ आकाशत० भ्रूमध्यादिशिरोंतं ॥ सत्वतत्वाय रजस्त० तमस्त० सर्वा
गे ॥ ततःपुरुषसूक्तन्यासोनित्यपूजावत् ॥ ततःसुखशायीभवेतिशय्यायांदेवंस्वापयित्वा मंडलशय्ययोरंतरानगंतव्यं इतिप्रै
षंदत्वास्विष्टकृदादिहोमशेषंसमाप्य मंडलदेवताभ्योनामभिःपायसेनबलीन्दद्यात् ॥ नीवारचरुशेषेणदिग्बलीन् अग्नेःपरितो
दत्त्वाधामंतइतिपूर्णाहुतिंहुत्वाततःपिंडिकांपरिवारदेवांश्चप्रतिमासमीपे यथावकाशदेशेवावस्त्राच्छादितपीठेनिधायमधुघृतेना
भ्यज्यशुद्धवारिणाप्रक्षाल्यपूर्वस्नानावशिष्टकलशवारिणातत्तन्मंत्रैःस्नापयित्वागंधादिभिरभ्यर्च्य वस्त्रैराच्छाद्यन्यासान्कुर्या

त् ॥ तत्रपिंडिकायां ॐ घंनमःहृदयायनमः ॥ पंनमःशिरसेस्वाहा ॥ भंनमःशिखायै० ॥ फंनमःकवचायहुं ॥ ळंनमोनेत्र० ॥ क्षंनमःअस्त्रायफट् ॥ ततःमहीमूषु० इतिमंत्रेणावाह्य अदितिर्द्यौरजनिष्ट० इतिस्तुत्वा ह्रींनमइतिसंपूज्य ॥ ॐ ह्रींनमःस्वाहेतिपूर्णाहुतिंहुत्वा ॥ ॐ ह्रींश्रींह्रींक्षःपरब्रह्मणेसर्वाधारायनमः ॥ ॐ ह्रींश्रींह्रींदिव्यतेजोधारिणिसुभगेनमइतिमंत्राभ्यामधिवासयेत् ॥ ततःपरिवारदेवेषुतत्तन्मंत्रेणषडंगन्यासंकृत्वातत्तन्मंत्रेणाधिवासयेत् ॥ ततोदेवस्यशिरोभागेविधिवत्कलशंसंस्थाप्यतत्र ॥ वासुदेवंनमस्कृत्यनिद्रामावाहयाम्यहं ॥ मोहिनींसर्वभूतानांमनोविभ्रमकारिणीं ॥ एहिसावित्रिमूर्तिस्त्वंचक्षुर्भ्यांज्ञानगोचरे ॥ विशनासापुटेदेविकंठंचोत्कंठिताभव ॥ इतिनिद्रामावाह्यसंपूज्ययजमानःअधिवासनांगत्वेनाचार्यायगामृत्विग्भ्यश्चदक्षिणांदद्यात् ॥इत्यधिवासनं॥ ततःपरेद्युःसद्योवा उत्तिष्ठब्रह्म० इतिदेवमुत्थाप्यपुरुषसूक्तोत्तरनारायणाभ्यांस्तुत्वाततःकुंडांतिकमागत्यदेशकालौस्मृत्वाप्रतिष्ठांगहोमंकरिष्येइतिसंकल्प्यान्वाधानंकुर्यात् ॥ चक्षुषीआज्येनेत्यंते स्थाप्यदेवंतन्मंत्रेणघृतपक्वचरुणादशाहुतिभिः अग्निंसोमंधन्वंतरिंकुहूंअनुमतिंप्रजापतिंपरमेष्ठिनंब्रह्माणंअग्निंसोमंअग्निमन्नादं अग्निमन्नपतिंप्रजापतिंविश्वान्देवान्सर्वान्देवान्प्रजापतिंअग्निंस्विष्टकृतं ॥ पूजांगहोमेविष्णुःस्थाप्यश्चेत्संकर्षणादिस्थाप्यदेवताः शार्ङ्गिणंश्रियंसरस्वतींपुष्टिंविष्णुंचकृसरेणैकैकयाहुत्यानाममंत्रेण ॥ पुनर्विष्णुंविष्णोर्नुकमितिषण्मंत्रैःकृसरेण ॥ पुनःसंकर्षणादि १२ देवताःकृसरेण ॥ स्थाप्यःशिवश्चेत् भवंदेवंशर्वंईशानंपशुपतिंरुद्रंउग्रंभीमंमहांतंदेवंप्रत्येकंकृसरेण भवस्यदेवस्यपत्न्याद्यष्टदेवताः गुडौदनेन ॥ भवस्यदेवस्यसुतमित्याद्यष्टौदेवताःहरिद्रौदनेन ॥ रुद्रंसप्तदशवारंमानोमहांतमित्यादिसप्तदशमंत्रैःप्रतिमंत्रंकृसरेण ॥ शिवंशंकरंसहमानंशितिकंठंकपर्दिनंताम्रंअरुणंअपगुरमाणंहिरण्यबाहुंसस्पिंजरंबभ्लुशंहिरण्यंप्रत्येकंकृसरेण ॥

शेषेणेत्यादिचक्षुर्ष्यंतेस्थाप्यदेवंमूलेनकृसराहुतीः १० अग्नयेस्वाहेत्यादिनाम्नासर्वेभ्योदेवेभ्यःस्वाहेति १५ ॥ अंते ॐ भूर्भुवःस्वःस्वाहा १६ अग्नयेस्विष्टकृते० १७ ॥ विष्णुश्चेत्संकर्षणादिदेवताः ॥ शिवश्चेद्भवादिदेवताः ॥ ततःपूर्णाहुतिंसप्ततेअ० पुनस्त्वादित्या० मंत्राभ्यांहुत्वा आचार्यः याओषधीःपूर्वा० इतिदेवायपुष्पफलसर्वौषधीःसमर्प्यसंपातोदकंताम्रपात्रेआदायदेवमंत्रेणशतवारमभिमंत्र्यतेनदेवशिरसिसिंचेत् ॥ ततउत्तिष्ठब्रह्म० इतिदेवमुत्थाप्य विश्वतश्चक्षुः० इत्युपतिष्ठेत् ॥ ततो देवंध्यात्वाजपेत् ॥ ॐ ब्रह्मणेनमः विष्णवे० रुद्राय० इंद्राय० अग्नये० यमाय० वरुणाय० वायवे० सोमाय० ईशानाय० वसुभ्यः० रुद्रेभ्यः० अश्विभ्यां० मरुद्भ्यः० कुबेराय० गंगादिनदीभ्यो० अग्नीषोमाभ्यां० इंद्राग्निभ्यां० द्यावापृथिवीभ्यां० धन्वंतरये० सर्वेशाय० विश्वेभ्योदेवेभ्यः ब्रह्मणेनमःइति ॥ ततःसंपातवास्तुकलशजलेनसामात्यंयजमानमभिषिंचेत्सर्त्विगाचार्यः ॥ ततोदेवंध्यात्वा ॥ ॐ प्रतितिष्ठपरमेश्वरेतिपुष्पांजलिंनिवेद्य ॥ सच्चिदानंदंब्रह्मैवभक्तानुग्रहायगृहीतविग्रहंकरचरणाद्यवयविनंशंखचक्राद्यायुधवंतंनिजवाहनाद्युपेतंनिजहृत्कमलेवस्थितंसर्वलोकसाक्षिणमणीयांसं परमेष्ठ्यसिपरमांश्रियंगमयेतिमंत्रेणपुष्पांजलावागतंविभाव्यअर्चायांविन्यस्यप्राणप्रतिष्ठांकुर्यात् ॥ अस्यश्रीप्राणप्रतिष्ठामंत्रस्यब्रह्मविष्णुरुद्राऋषयःऋग्यजुःसामानिछंदांसि क्रियामयवपुःप्राणाख्यादेवता आंबीजं ह्रींशक्तिः क्रौंकीलकं प्राणप्रतिष्ठायांवि० ॥ ब्रह्मविष्णुरुद्रऋषिभ्योनमःशिरसि ॥ ऋग्यजुःसामछंदोभ्योनमोमुखे ॥ प्राणाख्यदेवतायैनमोहृदि आंबीजायनमोगुह्ये ॥ क्रौंशक्त्यैनमः पादयोः ॥ ॐ अंकंखंगंघंङंपृथिव्यप्तेजोवाय्वाकाशात्मनेआंहृदयायनमः ॥ ॐ इंचंछंजंझंञंशब्दस्पर्शरूपरसगंधात्मनेईंशिरसेस्वाहा ॥ ॐ उंटंठंडंढंणंश्रोत्रत्वक्चक्षुर्जिह्वाघ्राणात्मनेऊंशिखायैवषट् ॥ ॐ एंतंथंदंधंनंवाक्पाणिपादपायूपस्थात्मनेऐंकव

चायहुं ॥ ॐ ओंपंफंबंभंमंवचनादानविहरणोत्सर्गानंदात्मने औं नेत्रत्रयायवौषट् ॥ ॐ अंयंरंलंवंशंषंसंहंळंक्षंमनोबुद्ध्यहंकार चित्तविज्ञानात्मने अः अस्त्रायफट् ॥ एवमात्मनिदेवेचकृत्वादेवंस्पृष्ट्वाजपेत् ॥ ॐ आंह्रींक्रोंयंरंलंवंशंषंसंहंसः देवस्यप्राणाइहप्राणाः ॥ आंह्रींक्रों० हंसः देवस्यजीवइहस्थितः ॥ ॐ आंह्रींक्रों० हंसः देवस्यसर्वेंद्रियाणि ॥ आंह्रीं० हंसः देवस्यवाङ्मनश्चक्षुःश्रोत्र जिह्वाघ्राणप्राणाइहागत्यस्वस्तयेसुखेनसुचिरंतिष्ठंतुस्वाहा ॥ ततअर्चाहृद्यंगुष्ठंदत्वा ॥ ॐ अस्यैप्राणाःप्रतिष्ठंतुअस्यैप्राणाःक्षरंतुच ॥ अस्यैदेवत्वमर्चायैमामहेतिचकश्चन ॥ इतिजपेत् ॥ ततः ॐ इतिसंरुध्यसजीवंध्यात्वाध्रुवाद्यौरितितृचंजप्त्वादेवकर्णे देवगायत्रींदेवमंत्रंचजप्त्वापुरुषसूक्तेनोपस्थायदेवस्यपादनाभिशिरःसुस्पृष्ट्वा इहैवैधिमा० इतिमंत्रंत्रिर्जपेत् ॥ ततःकर्ता ॥ स्वागतंदेवदेवेशमद्भाग्यात्त्वमिहागतः ॥ प्राकृतंत्वमदृष्ट्वामांमातृवत्परिपालय ॥ धर्मार्थकामसिद्ध्यर्थंस्थिरोभवशिवायनः ॥ सान्निध्यंतुसदादेवस्वार्चायांपरिकल्पय ॥ यावच्चंद्रावनीसूर्यास्तिष्ठंत्यप्रतिघातिनः ॥ तावत्त्वयात्रदेवेशस्थेयंभक्तानुकंपया ॥ भगवन्देवदेवेशत्वंपितासर्वदेहिनां ॥ येनरूपेणभगवन्त्वयाव्याप्तंचराचरं ॥ तेनरूपेणदेवेशस्वार्चायांसन्निधोभव ॥ इतिनमेत् ॥ अथाचार्यःकर्तावालिंगंअर्चांवा ॐ भूःपुरुषमावाहयामि ॥ ॐ भुवःपुरुषमावाहयामि ॥ ॐ स्वःपुरुषमावाहयामि ॥ ॐ भूर्भुवःस्वःपुरुषमावाहयामि ॥ ॐ मित्यासनंदत्वा तेनैवदूर्वाश्यामाकविष्णुक्रांतापद्ममिश्रंपाद्यं॥ ॐ इमाआपःशिवतमाः पूताःपूततमामेध्यामेध्यतमाअमृताअमृतरसाःपाद्यास्ताजुषतांप्रतिगृह्यतांप्रतिगृह्णातुभगवान्महाविष्णुर्विष्णवेनमइतिपाद्यं॥ भगवान्महादेवोरुद्रायनमइतिरुद्रे ॥ एवंदेवतांतरेषूह्यं ॥ इमाआपःशिवतमा० आचमनीयास्ताजुषतांप्रति० ॥ इमाआपः० अर्घ्यास्ताजुषतांप्रति० पंचामृतैःस्नातं ॥ देवमंत्रैःसंस्नाप्य ॥ इदंविष्णुरितिविष्णौ नमोअस्तुनीलग्रीवायेतिलिंगेकंकणंविसृ

ज्यवस्त्रंयज्ञोपवीतंचदत्वा ॥ इमेगंधाःशुभादिव्याःसर्वगंधैरलंकृताः ॥ पूताब्रह्मपवित्रेणपूताःसूर्यस्यरश्मिभिः ॥ इतिगंधाः॥ इमेमाल्याःशुभादिव्याःसर्वमाल्यैरलंकृताः ॥ पूताब्र० ॥ इतिमालाः॥ इमेपुष्पा० इतिपुष्पं ॥ वनस्पतिरितिधूपं ॥ ज्योतिः शुक्रंचतेजश्चदेवानांसततंप्रियं ॥ प्रभाकरस्तुभूतानांदीपोयंप्रतिगृह्यतां ॥ इतिदीपं ॥ विष्णोसंकर्षणादिद्वादशनामभिःपुष्पा णिसमर्प्य तैरेवतर्पणंकृत्वापायसगुडौदनचित्रौदनानिपवित्रंतेविततमितिनिवेद्यसंकर्षणादिद्वादशनामभिर्गृहसिद्धान्नकृसरा हुतीर्हुत्वा ॥ कृसरेणैव शार्ङ्गिणेश्रियैसरस्वत्यैपुष्ट्यैविष्णवेविष्णोर्नुकं० तदस्यप्रिय० प्रतद्विष्णु० परोमात्रया० विचक्रमे० त्रिर्देव० इतिजुहुयात् ॥ लिंगेतुदीपांतंकृत्वा भवायदेवाय० शर्वायदे० ईशानायदे० पशुपतयेदे० रुद्रायदे० उग्रायदे० भीमायदे० महतेदे० इतिपुष्पाणिदत्वातैरेवतर्पणंकृत्वा पवित्रंतेइतिपायसंगुडौदनंचनिवेद्यतैरेवनामभिःकृसरंजुहुयात् ॥ ततोभवस्यदेवस्यपत्न्यैइत्याद्यष्टभिर्गुडौदनंहुत्वा भवस्यदेवस्यसुतायइत्याद्यष्टभिर्हरिद्रौदनंहुत्वा त्र्यंबकं० मानोमहांत० मान स्तोकेआरात्तेगोघ्न०विकिरिद० सहस्राणिसहस्रशो०इत्यादिद्वादशर्गिभःकृसरंहुत्वा शिवायशंकरायसहमानायशितिकंठायकप र्दिनेताम्रायअरुणायअपगुरमाणायहिरण्यबाहवेसस्पिंजरायबभ्लुशायहिरण्यायइतिचकृसरंहुत्वा ॥ स्विष्टकृदादिहोमशेषंस माप्यपूर्वोक्तसर्वहविर्भिर्विष्णवेलिंगायवाबलिंदद्यात् ॥ मंत्रस्तु ॥ त्वामेकमाद्यंपुरुषंपुरातननारायणंविश्वसृजंयजामहे ॥ त्वमेवयज्ञोविहितोविधेयस्त्वमात्मनात्मन्प्रतिगृह्णीष्वहव्यं ॥ लिंगेतुनारायणपदेरुद्रंशिवमित्यूहः ॥ ततोश्वत्थपर्णे ॥ ॐ भू र्भुवःस्वरोमितिहुतशेषंनिधाय अग्निसहितंदेवंचतुर्वारंप्रदक्षिणीकृत्य विश्वभुजेनमः सर्वभुजे० आत्मने० इतिनत्वास्थापितदे

वतानामुत्तरपूजांविधायाचार्यायगांदत्वाऋत्विग्भ्योदक्षिणांदत्वा स्थापितदेवतापीठमाचार्यहस्तेप्रतिपाद्यशतंद्वादशयथाशक्ति वाविप्रान्परमान्नेनभोजयेदिति ॥ इतिप्रतिष्ठेंदौनिर्णयसिंधूक्तःसर्वदेवचलार्चाप्रयोगः ॥ ॥ छ ॥ ॥ छ ॥

## ॥ २७२ ॥ अथएकाध्वरचलप्रतिष्ठा ॥

श्रीः ॥ यजमानःआचम्यप्राणानायम्यदेशकालाद्युच्चार्यपूर्वोक्तचलार्चावत्संकल्पादिनांदीश्राद्धांतंप्राग्वत्कृत्वा एकमाचार्यंवृणुयात् ॥ आचार्योमुकदेवप्रतिष्ठाकर्मकरिष्येइत्यादिसर्षपविकिरणांतंकृत्वा ॥ सर्वतोभद्रमंडलेप्राग्वन्नामभिर्ब्रह्मादिमंडलदेवताआवाह्यसंपूज्य यथागृह्यमग्निंप्रतिष्ठाप्यान्वादध्यात् ॥ आज्यभागांतेस्थाप्यदेवतांसहस्रमष्टोत्तरशतंवासमिदाज्यचरुतिलद्रव्यैर्ब्रह्मादिमंडलदेवताःप्रत्येकंदशदशघृताक्ततिलाहुतिभिःशेषेणेत्यादि ॥ तूष्णींनिर्वापप्रोक्षणे ॥ आज्यभागांते तडागनदीतीरगोष्ठचत्वरपर्वतगजाश्वह्रदवल्मीकसंगमेतिदशमृद्भिरष्टवारंदेवंसंस्नाप्याग्न्युत्तारणंकुर्यात् ॥ सर्वतोभद्रस्थपीठेदेवमुपवेश्यनाम्नावस्त्रगंधधूपादिदत्वाष्टदिक्षुपल्लवादियुतोदकुंभानष्टौदीपांश्चसंस्थाप्य प्राग्वन्नेत्रोन्मीलनंचित्रान्नेनबलिंदत्वापुरुषसूक्तेनस्तुत्वोक्तद्रव्यचतुष्टयंस्थाप्यदेवमंत्रेणहुत्वाएकैकद्रव्यहोमांतेदेवंस्पृशेत् ॥ आज्यहोमेकुंभेसंपातान्क्षिपेत् ॥ मंडलदेवताभ्योहुत्वाहोमशेषंसमाप्यपूर्णाहुतिंजुहुयात् ॥ ततःपूर्वोक्तरीत्यासूक्तन्यासावाहनप्राणप्रतिष्ठांतंकृत्वा इहैवैधीत्यृचंपुरुषसूक्तंचजप्त्वा ॥ मूलमंत्रादिनावाहनादिपंचामृतस्नानांतेसंपातोदकैरिमाआपःशिवतमाइत्यादिनाभिषेकः ॥ वस्त्रादिनैवेद्यांतंप्राग्वत् ॥ तांबूलफलदक्षिणानीराजननमस्कारप्रदक्षिणादिविधाय पुष्पांजलिंदत्वा ॥ साचार्यःकर्तादेवंनत्वाक्षमाप्याचार्यदक्षिणांतेऽष्टकुंभोदकैर्यजमानाभिषेकः ॥ विष्णुंस्मृत्वाकर्मेश्वरेर्पयेदितिसंक्षेपः ॥ इतिएकाध्वरचलप्रतिष्ठा ॥ ॥ छ ॥

## ॥ २७३ ॥ अथजीर्णोद्धारेअघोरहोमः ॥



श्रीः ॥ कर्ताअमुकदेवस्यजीर्णोद्धारंकरिष्ये इतिसंकल्प्यगणपतिंसंपूज्यपुण्याहंवाचयित्वा लिंगाद्युद्धारार्थंआचार्यादीनष्टौच तुरोवावृणुयात् ॥ ( नांदीश्राद्धंकर्तव्यमितित्रिविक्रमः ) ॥ ततआचार्यःअघोरेभ्यइत्यघोरमंत्रंअष्टोत्तरशतंजप्त्वाअग्निंप्रति ष्ठाप्यसर्वतोभद्रंनिर्माय वास्तुब्रह्मादिदेवताआवाह्य अघोरेणसर्षपैःसहस्रंहुत्वाइंद्रादिभ्योनाम्नामाषभक्तबलीन्दत्वाजीर्णदेवंप्र णवेनसंपूज्यब्रह्मादिसर्वतोभद्रमंडलदेवतानांहोमंकृत्वास्विष्टकृदादिहोमसमाप्तिंकृत्वादेवंप्रार्थयेत् ॥ जीर्णभग्नमिदंचैवसर्वदो पावहंनृणां ॥ अस्योद्धारेकृतेशांतिःशास्त्रेस्मिन्कथितात्वया ॥ जीर्णोद्धारविधानंचपुरराष्ट्रसुखावहं ॥ अधितिष्ठाथमांदेवप्रो द्धरामितवाज्ञयेति ॥ ततःस्थंडिलांतरेअग्निंप्रतिष्ठाप्यक्षीराज्यमधुदूर्वाभिःऔदुंबरीभिःसमिद्भिश्चप्रत्येकमष्टोत्तरशतसंख्यया देवमंत्रेणहुत्वालिंगादिचालनार्थंदेवमंत्रेणवक्षीरादिभिःप्रत्येकंसहस्रंहुत्वा तन्मंत्रेणैवपायसेनशतंहुत्वाप्रणवेनलिंगंसंपूज्यप्रा र्थयेत् ॥ लिंगरूपंसमागत्ययेनेदंसमधिष्ठितं ॥ यायात्समाहितंस्थानंसंत्यज्यैवशिवाज्ञया ॥ अत्रस्थानेचयाविद्यासर्वविघ्नेश्व रैर्युता ॥ शिवेनसहसंतिष्ठेतिमंत्रितजलेनाभिषिच्यसर्षपैःसंताड्यअर्घ्यदानेनविसर्जयेत् ॥ अघोरेणमंत्रेणयजमानहस्तेहेमम यंकंकणंबद्ध्वा ॐ व्यापकेश्वरायनमः अस्त्रायफट् ॥ अस्त्रमंत्रितेनहैमखनित्रेणईशानदिशिसमंतात्भ्रमन् अपसव्येनखनि त्वाहेमपाशयुक्तयागोवालरज्ज्वाशिवादिकं ॐ व्यापकेश्वरशिखायैवषट्इतिशिखामंत्रेणबद्ध्वाआचार्यऋत्विग्भिःसहउद्धरेत् ॥ ततःलिंगांगशिलान्वितांप्रतिमांपिंडिकांतत्स्थंनिर्माल्यमादायचंडायनिवेद्यरथमारोप्यतरुच्छायायांपर्वतदेशेवावृक्षमूलेवाऽ गाधनदीषुवादेवं वामदेवायनमोज्येष्ठायइतिवामदेवेननिवेशयेत् ॥ प्रतिमांप्रणवेननिक्षिपेत् ॥ दारुजाचेत्ग्रामादुत्तरतो

मनोरमेस्थानेनेमीत्वामधुनाभ्यज्याघोरेणमंत्रेणदहेत् ॥ हेमरत्नादिमयंदग्धंचलितंवापुनस्तथैवस्थापयेत् ॥ अनेनैवविधिनाध्व जादिकंविसर्जयेत् ॥ ततःशांत्यैअघोरेणमंत्रेणतिलैःसहस्रंहुत्वाफलपुष्पाक्षतहस्तःनूतनंदेवंप्रार्थयेत् ॥ भगवन्भूतभव्येशलो कनाथजगत्पते ॥ जीर्णलिंगसमुद्धारःकृतस्तवाज्ञयामया ॥ अग्निनादारुजंदग्धंक्षिप्तंशैलादिकंजले ॥ प्रायश्चित्तायदेवेशअघो रास्त्रेणतर्पितं ॥ ज्ञानतोज्ञानतोवापियथोक्तंनकृतंचयत् ॥ तत्सर्वंपूर्णमेवास्तुत्वत्प्रसादान्महेश्वर ॥ गोविप्रशिल्पिभूतानामा चार्यस्यचयज्वनः ॥ शांतिर्भवतुदेवेशअच्छिद्रंजायतामिदं ॥ मूर्तौतुविशेषः ॥ त्वत्प्रसादेननिर्विघ्नंदेहंनिर्मापयत्यसौ ॥ वा संकुरुसुरश्रेष्ठतावत्त्वंचाल्पकेगृहे ॥ वसक्लेशंसहित्वैवमूर्तिवैतवपूर्ववत् ॥ यावत्कारयतेभक्तःकुरुतस्यचवांछितमिति ॥ ततो होमशेषंसमाप्याचार्यादीन्विशेषतोर्चयेत् ॥ यजमानमभिषिच्याशिषोदद्यात् ॥ ततोनवांमूर्तिंलिंगंवाकृत्वाप्रतिष्ठारंभपूर्वंपंच रात्रमध्येउक्तविधिनास्थापयेत् ॥ असुरैर्मुनिभिर्देवैस्तत्त्वविद्भिःप्रतिष्ठितं ॥ जीर्णंवात्वथवाभग्नंविधिनापिनचालयेत् ॥ इति त्रिविक्रमः ॥ इतिदेवपिंडिकाप्रासादध्वजादिजीर्णोद्धारः ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥

## ॥ २७४ ॥ अथप्रासादप्रतिमयोर्जीर्णोद्धारः ॥

श्रीः ॥ यजमानःदेशकालौस्मृत्वाश्रीपरमेश्वरप्रीत्यर्थंप्रासादस्यपिंडिकायावागर्भागारस्यवाभूमेर्वाजीर्णोद्धारणंकरिष्ये ॥ त थाचात्रस्थितानांदेवतानांसंकोचत्वादुद्धृत्यस्थलांतरनयनार्थंचालनविधिंकरिष्ये ॥ इतिप्रासादाद्यन्यतमसंकल्पः ॥ निर्विघ्ना र्थंगणपतिपूजनंपुण्याहवाचनंआचार्यादिवरणंचकरिष्ये ॥ इतिसंकल्प्यगणेशपूजनादिकृत्वाआचार्यादीन्वृणुयात् ॥ अस्मि न्कर्मणिआचार्यत्वामहंवृणइत्याचार्यंवृत्वा ॥ ब्रह्माद्यृत्विजःपंचब्राह्मणान्वृणुयात् ॥ आचार्यःपूर्वकस्थितगृहेपंचगव्येनाभ्यु

क्ष्यतोरणादिना अलंकृत्य यथास्थानं पादशिलां विन्यस्य उक्तरीत्या रत्नान्याधाय आसनं परिकल्प्य गर्भगृहं प्रविश्य बहुभिरुदकैः प्र
क्षाल्य प्रतिमामभ्यर्च्य होमं कुर्यात् ॥ तत्प्रकारः ॥ आचार्यः स्थंडिलादि विरच्य देशकालौ स्मृत्वा प्रासादस्य वा गर्भगृहस्य वा जी
र्णोद्धारे विहितहोमं करिष्ये ॥ अथवा पिंडिकाप्रतिमयोः क्षालनविधौ विहितहोमं करिष्ये ॥ अग्निस्थापनादि कृत्वा समिद्द्वयमादा
यास्मिन्नन्वाहिते ग्नावित्यादि० ॥ अत्रप्रधानं ॥ देवे आवाहितप्रणवादिषोडशन्यासांतर्गततत्वानि प्रत्येकं दशदशसंख्यया तिल
द्रव्येण यक्ष्ये ॥ तथा च पिंडिकातत्वानि ॐ यंथंभं इत्यादीनि प्रत्येकं दशदशसंख्यया तिलद्रव्येण यक्ष्ये ॥ शेषेण स्विष्टकृतमित्या
दि सद्यो यक्ष्ये इत्यन्वाधाय प्रधानहोमं कुर्यात् ॥ प्रासादे तु प्रधानहोमे विशेषः ॥ प्रासादे पृथिव्यादितत्वानि प्रत्येकं दशदशसंख्य
या तिलद्रव्येण यक्ष्ये शेषेण स्विष्टकृतमित्यादि पूर्ववत् ॥ प्रधानहोमस्तु पूर्वं देवाधिवासनोत्तरं षोडशन्यासहोम उक्तः स एवात्र ग्रा
ह्यः ॥ स चैवं ॐ अकारायनमः स्वाहा ॥ ॐ उकारायनमः स्वाहा ॥ इत्यादि प्रणवन्यासहोमः ॥ एवं प्रकारेण षोडशन्यासां
तर्गततत्वेभ्यः षोडशन्यासहोमविधिना प्रतितत्वं दशाहुतीस्तिलैर्जुहुयात् ॥ प्रासादे तु जीर्णप्रासादे आवाहितपृथिव्यादितत्वे
भ्यो जुहुयात् ॥ तानि तु प्रासादतत्वानि प्रासादोद्यापनप्रयोगे मयोक्तानि त्रिविक्रमेण हेमाद्रावुक्तानि ग्राह्याणि ॥ तत्प्रकारः ॥
ॐ पृथिवीतत्वायनमः स्वाहा ॥ एवं प्रकारेण होमः कार्यः ॥ तत्वानि विस्तरादिह नोच्यंते ॥ प्रासादतत्वानां होमः कृताकृतः ॥
ततः प्रासादे पूर्वस्थितानि पृथिव्यादितत्वानि खड्गे छूरिकायां वा विन्यस्य तं खड्गं देवपार्श्वे निधाय प्रासादनिष्पत्तिपर्यंतं खड्गं देववत्पू
जयेत् ॥ खड्गेन्यासप्रकारस्त्वेवं ॥ ध्यानेन प्रासादस्थितं पृथिवीतत्वं खड्गे न्यसामीति ॥ एवं प्रतितत्वमूहः कार्यः ॥ निष्पन्ने प्रासा

देप्रासादप्रतिष्ठाविधिंसर्वंहोमादिविधायतत्वन्याससमयेदेवनिकटस्थंपूर्वस्थापितंखड्गमानीयखड्गंस्थितानितत्वानिमनसिध्या
नेनप्रासादेयथास्थानंविन्यसेत्॥खड्गस्थितंपृथिवीतत्वंप्रासादेयथास्थानंन्यसामीत्यूहःकार्यः ॥ तंखड्गंआचार्यायदद्यात्॥ इति

## ॥ २७५ ॥ अथजीर्णप्रतिमापिंडिकाप्रतिष्ठाविधिः ॥

श्रीः ॥ गर्भागारस्यजीर्णोद्धारेगर्भागारभूमेर्वापिंडिकायावाजीर्णोद्धारेक्रियमाणेतत्रसंकोचत्वात्पूर्वस्थितदेवानांतत्रावस्थानंन
संभवतितदापूर्वकल्पितमंदिरांतरेनेतुंदेवानुद्धरेत् ॥ तत्प्रकारस्त्वेवं ॥ सुवर्णरजतताम्रान्यतमपात्रंगंधवारिणापूर्यगंधादिना
भ्यर्च्य मनोध्यानेनदेवेपिंडिकायांचपूर्वआवाहितप्रणवादिषोडशन्यासतत्वानितानिसर्वाणिजलपूरितताम्रादिपात्रेविन्यसे
त् ॥ तत्रप्रयोगः ॥ देवस्थंअकारंपात्रजलेन्यसामि उकारंपात्रजले० मकारंपात्रजलेन्यसामि ॥ इतिप्रणवन्यासःप्रथमः ॥
अनेनप्रकारेणपूर्वोक्तषोडशन्यासप्रकारेणपूर्वोक्तषोडशन्यासतत्त्वानिपात्रेआवाहयेत् ॥ ततःपिंडिकातत्वानि ॐ तंथंमंभंइ
त्यादीनिपात्रजलेन्यसामि ॥ एवंप्रकारेणदेवतत्वानिपिंडिकातत्वानिचपात्रजलेआवाहयेत् ॥ ततःसमस्तेंद्रियसंयुक्तंसूक्ष्मदे
हान्वितंमूलसंज्ञकंजीवंनियोज्यफलपुष्पाक्षतयुक्तहस्तःदेवंविज्ञापयेत् ॥ तद्यथा ॥ त्वत्प्रसादेननिर्विघ्नंगेहंनिर्मापयत्यसौ ॥
वासंकुरुसुरश्रेष्ठतावत्त्वंचाल्पकेगृहे ॥ वसक्लेशंसहित्वैवमूर्तिवातवपूर्ववत् ॥ यावत्कारयतेभक्तःकुरुतस्यचवांछितं ॥ अनेन
मंत्रेणदेवंप्रार्थयेत् ॥ ततःकुद्दालादिशस्त्राणिपीठादौनिधायतत्र ॥ ॐ विश्वकर्मन्हविषावावृधानःस्वयंयजस्वपृथिवीमुतद्यां॥
गुह्यंत्वन्येअभितोजनासइहास्माकंमघवासूरिरस्तु ॥ इतिमंत्रेणशस्त्रेविश्वकर्माणंसंपूज्यशस्त्रेणपिंडिकांखनित्वादेवमुद्धृत्यमंग
लवाद्यघोषेणपूर्वकल्पितंमंदिरंनीत्वायथास्थानावस्थितपीठादौदेवंस्थापयित्वाताम्रादिपात्रस्थितंजलंदेवशिरसिनिषिंचेत् ॥

तत्पात्रंप्रासादनिष्पत्तिपर्यंतंदेवनिकटेरक्षेत् अथवामुकुटवत्देवशिरसिनिदध्यात् ॥ ततःदिग्बलिंदत्वादेवंसंपूज्य अग्निंब्राह्म णांश्चसंपूज्यदक्षिणांदत्वाऽशिषोगृहीत्वानूतनंगर्भगृहादिकुर्यात् ॥ गर्भगृहादौनिष्पन्नेगर्भागारमध्येयथास्थानंजीर्णांनूतनांवा पिंडिकांस्थापयेत् ॥ नूतनाचेत्पिंडिकाक्रियते तदाजीर्णोद्धारविधिनाजीर्णांपिंडिकांविसर्जयित्वाजलादौतस्याःप्रतिपत्तिंकृ त्वानूतनांपिंडिकांपूर्वोक्तपिंडिकास्थापनप्रकारेणस्थापयित्वा तत्ररत्नन्यासादिकृत्वा तत्रदेवंशलाकांतरितवज्रलेपादिनादृढी कृत्यवाससामूर्त्याच्छादनप्रकारेणपुनरर्चाशुद्धिंकुर्यात् ॥ जीर्णैवचेत्पिंडिकास्थाप्यतेतर्हितत्रदेवंस्थापयित्वार्चाशुद्धिंकुर्यात् ॥ वास्तुयागग्रहमखादिकृत्वामंगलवाद्यघोषेणसुमुहूर्तेशलाकांनिष्काश्यदेवंस्थिरीकृत्यमहापूजांकुर्यात् ॥ ततःदेवाभिषेकजलपू रितांपूर्वोक्तांताम्रादिपात्रीमादायतत्रमनोध्यानेनप्रणवादिषोडशन्यासमनोगतानिअकारादितत्वानिआदायस्वस्थानस्थितदे वेनियोजयेत् ॥ तत्प्रकारस्तु ॥ पात्रजलस्थमकारंदेवस्ययथास्थानंन्यसामिइति प्रणवादिषोडशन्यासांतर्गतानितत्वानिदेव स्ययथास्थानंविन्यस्यपिंडिकातत्वानिपिंडिकायांविन्यस्यतज्जलंदेवस्यचरणयोर्निषिच्यपुनर्महापूजांमहानैवेद्यादिमहोत्साहंब लिप्रदानंकृत्वाब्राह्मणान्संपूज्याभिषेकाद्याशिषोगृहीत्वाब्राह्मणान्भोजयेत् ॥ इतिजीर्णप्रतिमादिप्रतिष्ठा ॥ ॥ छ ॥

## ॥ २७६ ॥ अथप्रोक्षणविधिः ॥

श्रीः ॥ कर्ताआचम्यप्राणानायम्यदेशकालौसंकीर्त्यअस्यदेवस्यप्रासादस्यवाअमुकास्पृश्यस्पर्श-बहुकालपर्यंतंपूजालोप-अमेध्यव स्तुस्पर्श-चोरहरणादिजनिताशुचित्वनिवृत्त्यर्थंपुनःपूर्ववच्छुचित्वेनव्यवहारसिद्ध्यर्थंप्रोक्षणविधिंकरिष्ये ॥ इतिसंकल्प्य ॥ दे वमुद्धास्यपंचधारंमृज्जलैःप्रक्षाल्यब्रह्मकूर्चसंस्कृतपंचगव्यैर्देवंस्नापयित्वाकुशैर्विशोध्य पंचमन्यादिभिःप्रासादंसंप्रोक्ष्यमूलेमा

ष्टोत्तरशतवारंदेवंप्रोक्ष्य पुनर्मूलेनदेवमूर्धादिपीठांतंसंस्पृश्यतत्वन्यासलिपिन्यासमंत्रन्यासपूर्वकंस्थिरप्रतिष्ठोक्तविधिनाप्राणप्रतिष्ठांकृत्वा महापूजांकुर्यात् ॥ महादोषादौतदनुगुणमहापूजाविधिः ॥ रजस्वलादिस्पर्शेतुपुनःप्रतिष्ठा ॥ ॥ ७ ॥

## ॥ २७७ ॥ अथवापीकूपतडागाद्युत्सर्गः ॥

श्रीः ॥ कर्तासपत्नीकोवस्त्राभरणगंधमाल्याद्यलंकृतोदेशकालौसंकीर्त्यअमुकशर्मणोममसर्वपापक्षयपूर्वकरुद्रालयगमनानेककल्पव्यापिस्वर्गलोकहर्षपरार्धद्वयकालव्यापिमहस्तपःप्रभृतिलोकांगनासहितनागपूर्वकांगनासहितपरमविष्णुपदप्राप्तिकामश्चामुकजलाशयोत्सर्गंकरिष्ये वा स्वकृततडागस्यसर्वभोगार्हत्वसिद्धिद्वाराश्रीपरमेश्वरप्रीत्यर्थंशौनकोक्तविधिनोत्सर्गंकरिष्येइति संकल्पयेत् ॥ कूपस्यारामस्यचकूपारामयोरितिवासंकल्पऊह्यः ॥ तदंगत्वेनगणपतिपूजनंपुण्याहवाचनंमातृकापूजनंनांदीश्राद्धमाचार्यवरणंचकरिष्येइतिसंकल्प्यक्रमेणतानिकृत्वा गंधाद्यलंकृतमुदकुंभंपुरस्कृत्यसपत्नीकःसबांधवःस्वस्तिनोमिमीतामितिवेदघोषेणभेर्यादिनादेनचतडागदेशंगत्वातंप्रदक्षिणीकृत्यपश्चिमद्वारेणमंडपंप्रविशेत् ॥ तदभावेतडागादिपश्चिमतटेप्राच्यैशान्युदीच्यन्यतरदिक्प्रवणांमार्जनोपलेपनवितानबंधनकदलीस्तंभाम्रपल्लवाद्यलंकृतांभुवंप्रविशेत् ॥ तत्राचार्यःयदत्रसंस्थितमितिसर्षपान्विकीर्यशुचीवइतिपंचगव्येनभुवंप्रोक्ष्यापोहिष्ठेतितृचेनाद्भिःप्रोक्ष्यस्वस्त्ययनंतार्क्ष्यमितिप्रार्थ्य संस्कृतभुवोमध्ये कुंडंस्थंडिलंवाहस्तमात्रंकृत्वा तत्पूर्वभागेहस्तोच्छ्रायांचतुरस्रांकूर्मपृष्ठोन्नतांवेदिंकृत्वाकुंडस्थंडिलान्यतरैशानभागेग्रहवेदिंनैर्ऋ

१ तत्रपूर्वदिने सौवर्णौकूर्ममकरौराजतौमत्स्यदुंदुभौ॥ ताम्रौकुलीरमंडूकावायसंशिंशुमारकं ॥ वासोनवघटंसक्तून्लाजादधिपयोघृतं। एवमुपकल्प्यमंडलवास्तुपूजाग्रहयज्ञपक्षेतदुपयोगिसामग्रीमुपकल्पयेत् । द्वयोर्बहूनांवाप्रतिष्ठानांयुगपच्चिकीर्षायांकूपारामप्रतिष्ठांगत्वेनवापीकूपप्रतिष्ठांगत्वेनेतिसंकल्पः ॥

त्यांवास्तुवेदिंकृत्वामंडपपक्षेग्निमीळइत्यादितोरणाभिमंत्रणपूर्वकं पर्जन्यादिदेवतापूजनप्रभृतिप्रागादिशाखामूलेषुकुंभस्थाप नांतंकुर्यात् ॥ ततोवास्तुपूजनपक्षेपूर्वकृतनैर्ऋतवेद्यांचतुःषष्टिसंख्यपदकंवास्तुमंडलंकृत्वातत्रदेवताआवाह्यपूजयेत् ॥ अत्र वास्तुमंडलंषण्णवत्यधिकशतसंख्यपदकंकार्यमित्युक्तंकौस्तुभे केचित्तुतडागादौसैकत्रिंशच्छतपदंकूपेषुचतुश्चत्वारिंशच्छतपद मित्याहुः ॥ प्राग्वेद्यांसर्वतोभद्रेब्रह्मादिमंडलदेवताश्चावाह्यसंपूज्य ततःमंडपाद्यभावपक्षेतुप्रार्थनानंतरमेवोपविश्यमंडूकादी नामग्न्युत्तारणंकृत्वातेष्वावाहनादिपूजांमंडूकादिदेवताभ्योनमइतिकुर्यात् ॥ स्थंडिलोपलेपनादिपूर्वकमग्निंप्रतिष्ठाप्यचत्वारि शृंगेत्यादिध्यानांते ग्रहयज्ञपक्षेग्रहाणामावाहनादिपूजांतंकृत्वातदीशान्यांकलशस्थापनादिवरुणपूजांतंकृत्वाग्नेःपश्चिमतउप विश्य ॥ समिद्द्वयमादायान्वाधानंकुर्यात् ॥ चक्षुषीआज्येनेत्यंतेग्रहयज्ञवास्तुपक्षेतद्देवतान्वाधानपूर्वकंतदभावेवक्ष्यमाणदे वतान्वाधानमेवकुर्यात् ॥ अत्रप्रधानं अपःपंचविंशतिवारमाज्येन अपःनववारंसक्तुभिःपुनरपःनववारंघृताक्तलाजद्रव्येण वरुणमेकत्रिंशद्वारमाज्येन पुनर्वरुणमष्टवारंचरुणा तथाभद्रदेवताःप्रत्येकंदशदशघृताक्ततिलाहुतिभिरेकैकाज्याहुत्यावा ॥ शेषेणस्विष्टकृतमित्यादि॥ पात्रासादनेचरुस्थाल्यासहसक्तुलाजस्थाल्योरप्यासादनं॥ प्रणीताप्रणयनांतेअग्नेरीशानदेशेमहीद्यौ रितिभूमिंस्पृष्ट्वाओषधयःसमितिधान्यंप्रक्षिप्यतत्रप्रागग्रान्कुशान्निधाय कलशंइमंमेगंगेइतिगंगादिमहानदीजलेनापूर्ययुवंव स्त्राणीतिवासोवेष्टितंगंधद्वारामितिगंधपुष्पार्चितंचकृत्वा पंचपल्लवदूर्वायवपंचरत्नहिरण्यफलानिअश्वत्थेवइत्यादितत्तन्मंत्रैः प्रक्षिप्यमंडूकादिरूपाणितूष्णींप्रक्षिपेत् ॥ ततःपूर्णादर्वीतिपूर्णपात्रपिहिताननंतंकलशमाकलशेषुधावतीतिमंत्रेणतेषुकुशेषुनि



१ ततोवेद्युपरिमहीद्यौरित्यादिविधिनाकुंभंसंस्थाप्यतीर्थेनापूर्यवाससावेष्ट्यगंधादिभिरभ्यर्च्यतस्मिन्कूर्मादीन्निक्षिपेदित्यन्यत्रविशेषः ॥

धाय तस्मिन्कलशेनिहितप्रतिमायांवरुणंसंपूज्य कलशस्यमुखेविष्णुरित्यभिमंत्र्य देवदानवसंवादइतिप्रार्थ्यपवित्रांतर्हितेशूर्पे तूष्णींद्वात्रिंशद्वारंनिरुप्य तावद्वारंप्रोक्ष्यपयसिश्रपयेत् ॥ ततःपयोदधिभ्यामालोडितसक्तूनेकस्यांस्थाल्यामन्यस्थाल्यामाज्य मिश्रितलाजांश्चप्रक्षिप्याज्यनिर्वापादिकालेआज्येनसहचरुसक्तुलाजानांपर्यग्निकरणं संमार्गांतेसक्तून्लाजांश्चाग्नावधिश्रित्या भिघारणादिबर्हिरासादनमाज्यदक्षिणतःसांतरमुदक्संस्थंकृत्वाचरुमभिघार्यांतर्बर्हिषिसादयेत् ॥ ततआज्यभागांतेकृतेग्रह वास्त्वादिपक्षेतद्धोमांतेप्रधानाहुतीर्जुहुयात् ॥ आपोहिष्ठेतिनवानामांबरीषःसिंधुद्वीपआपोगायत्रीपंचमीवर्धमानासप्तमीप्रति ष्ठाअंत्येद्वेअनुष्टुभौअमुकजलाशयोत्सर्गप्रधानाज्यहोमेविनियोगः ॥ एवंकूपादावूह्यं ॥ आपोहि० चक्षसेस्वाहा १ योवः०२ तस्माअ० ३ शंनोदेवी० ४ ईशानावा० ५ अप्सुमेसोमो० ६ आपःपृणीत० ७ इदमापः० ८ आपोअद्या० वर्चसास्वाहा ९ ॥ आपोअस्मानितिपंचानांदेवश्रवाऋषिः आपोदेवताआद्यास्तिस्रस्त्रिष्टुभः अंत्येद्वेअनुष्टुभौ०आपोअस्मान्मा० एमिस्वाहा १ द्रप्सश्चस्कंदप्रथमाँअनुद्यूनिमंचयोनिमनुयश्चपूर्वः ॥ समानंयोनिमनुसंचरंतंद्रप्संजुहोम्यनुसप्तहोत्राःस्वाहा २ यस्तेद्रप्सः स्कंदतियस्तेअंशुर्बाहुच्युतोधिषणायाउपस्थात् ॥ अध्वर्योर्वापरिवायःपवित्रात्तंतेजुहोमिमनसावषट्कृतंस्वा० ३ यस्तेद्रप्सः स्कन्नोयस्तेअंशुरवश्चयःपरस्तुचा ॥ अयंदेवोबृहस्पतिःसंतंसिंचतुराधसेस्वा० ४ पयस्वतीरोषधयःपयस्वान्मामकंवचः ॥ अपांपयस्वदित्पयस्तेनमासहशुंधतस्वाहा ५ समुद्रादूर्मिरित्येकादशर्चस्यसूक्तस्यवामदेवऋषिःआपोदेवतात्रिष्टुप्छंदःअंत्याज गती० समुद्रादूर्मि० १ वयंनाम० २ चत्वारिशृंगा० ३ त्रिधाहितं० ४ एताअर्षंति० ५ सम्यक्स्रवंति० ६ सिंधोरिव० ७ अभिप्रवंत० ८ कन्याइव० ९ अभ्यर्षत० १० धामंतेविश्वं० ११ ततोदर्व्यामाज्येनोपस्तीर्यसक्तुभ्योद्विरवदायहविर

भिघार्यावत्तमभिघारयेत् एवंपुनःपुनरवदायनवाहुतीर्जुहुयात् ॥ प्रसुवइतिनवर्चस्यसूक्तस्यासिंधुक्षित्प्रैयमेधऋषिःआपोदेवता जगतीछंदःअमुकजलाशयोत्सर्गप्रधानसक्तुहोमेवि० ॥ प्रसुवआपो० १ प्रतेरद० २ दिविस्वनो० ३ अभित्वासिंधो० ४ इमंमेगंगे० ५ तृष्टामया० ६ ऋजीत्येनी० ७ स्वश्वासिंधुः० ८ सुखंरथं० ९ ॥ ततोदक्षिणेनतडागंसयजमानआचार्योलाजानादायप्राग्भागेगत्वातत्रोपविश्यभुवंप्रक्षाल्यतस्यांहस्तेनादायलाजानांनवाहुतीर्जुहुयात् ॥ अंबयोयंतीतिनवानांमेधातिथिर्ऋषिःआपोदेवताआद्यास्तिस्रोगायत्र्यःचतुर्थीपुरउष्णिक्पंचम्यनुष्टुप्षष्ठीप्रतिष्ठाअंत्यास्तिस्रोनुष्टुभः जलाशयस्यचतुर्दिक्षुलाजहोमे० ॥ अंबयोयं० १ अमूर्या० २ आपोदेवी० ३ अप्स्वां१तर० ४ अप्सुमे० ५ आपःपृणी० ६ इदमापः ७ आपोअद्या०८ संमाग्ने० ९॥ एवमुत्तरपश्चिमदक्षिणदिक्षुनवलाजाहुतीर्जुहुयात् ॥ क्रमेणउक्तेष्वाज्यसक्तुलाजहोमेषुसर्वत्रअद्भ्यइदंनममेतित्यागः ॥ ( अयंलाजहोमोनवर्ग्भिःसकृदग्नावेवोक्तोबालकृष्णपद्धतौ ) अथाग्नेःपश्चिमतउपविश्यैकत्रिंशदाज्याहुतीर्जुहुयात् ॥ नहितइत्येकत्रिंशदृचस्याजीगर्तिःशुनःशेपऋषिःवरुणोदेवताआद्यादशत्रिष्टुभःततएकविंशतिर्गायत्र्यःआज्यहोमेवि० ॥ नहितेक्षत्रं० १ अबुध्ने० २ उरुंहिराजा० ३ शतंतेरा० ४ अमीयऋक्षा० ५ तत्त्वायामि० ६ तदिन्नक्तं० ७ शुनःशेपोह्य० ८ अवतेहेळो० ९ उदुत्तमं० १० यच्चिद्धिते० ११ मानोवधा० १२ विमृळीका० १३ पराहिमे० १४ कदाक्षत्र० १५ तदित्समा० १६ वेदायो० १७ वेदमासो० १८ वेदवातस्य० १९ निषसाद० २० अतोविश्वा० २१ सनोविश्वाहा० २२ बिभद्द्रापिं० २३ ॥ नयंदिप्संति० २४ उतयोमा० २५ परामेयं० २६ संनुवोचा० १७ दर्शंनु० २८ इमंमेवरुण० २९ त्वंविश्वस्य० ३० उदुत्तमं० ३१ ॥ सर्वत्रवरुणायेदंनममेतित्यागः ॥ ततश्चरोरवदानसंपदाष्टावाहुतीर्जुहुयात् ॥ प्रसम्राज

इत्यष्टर्चस्यसूक्तस्यात्रिर्ऋषिःवरुणोदेवतात्रिष्टुपछंदः ॥ अमुकजलाशयोत्सर्गप्रधानचरुहोमेवि० ॥ प्रसम्राजे० १ वनेषुव्यं०२ नीचीनबारं० ३ उनत्तिभू० ४ इमामूष्वा० ५ इमामूनु० ६ अर्यम्यंवरुण० ७ कितवासो० ८ ॥ सर्वत्रवरुणायेदंन० मंडलदेवतानामन्वाधानानुसारेणजुहुयात् ॥ ततोदर्व्यामुपस्तीर्यस्रुवेणाज्यमादायसक्तुलाजचरूणामुत्तरार्धात्सकृद्विर्वायथाधिकारमवदायद्भिरभिघार्यस्विष्टकृदादिप्रायश्चित्तहोमांतेकृते ग्रहमखादिसत्वेमाषभक्तबलिदानादिशिख्यादिभ्यःपायसबल्यादिदत्वापूर्णाहुत्यंतंकृत्वाततःप्रणीतानिनयनसंस्थाजपपरिस्तरणविसर्जनपरिसमूहनादि ॥ ततःस्थापितकलशोदकैकदेशेनाचार्योदूर्वापल्लवैरुदङ्मुखस्तिष्ठन्सबांधवस्यप्राङ्मुखस्ययजमानस्याभिषेकंकुर्यात्समुद्रज्येष्ठासुरास्त्वेत्यादिभिरभिषेकमंत्रैः ॥ तत्रपत्नीवामतउपविशेत्॥ ततोधृतश्वेतवस्त्राणांसर्वेषांश्वेतचंदनपुष्पमालाभिराचार्यार्चनंकुर्यात् ॥ ततआचार्यःसयजमानबांधवस्तडागंप्रदक्षिणीकृत्यजलाद्द्योःपरितआज्यधारांरक्षोहणमितिसूक्तेनकुर्वतोऽग्निंप्रदक्षिणीकुर्युः ॥ ततःस्थापितकुंभात्कूर्मादिरूपाण्युद्धृत्यतडागमध्येसाचार्योयजमानःकुंभंनिदध्यात् ॥ तथाकूपादावपि ॥ ततोस्मैतडागायकूपायवास्वस्तिभवंतोब्रुवंत्विति ब्राह्मणान्वाचयेत् ॥ तेचास्मैतडागायस्वस्तीतिवदेयुःकूपादावप्येवमूह्यं ॥ ततःपश्चिमतीरएवसर्वतीरेषुवाशतंयथाशक्तिब्राह्मणान्भोजयित्वायथाशक्तितेभ्योदक्षिणांदत्वोभयमपिसंकल्प्यवावाहितब्रह्मादीनामन्येषांग्रहादीनांचोत्तरपूजनपूर्वकंविसृष्टानामाचार्यायनिवेदनंकृत्वाजलमध्येपश्चिमतीरमारभ्यैशानदिक्पर्यंतंपुच्छाग्रान्वारब्धोगांनयेत् ॥ इमांधियमितिमंत्रस्यनाभाकऋषिःवरुणोदेवताजलाशयेगोरुत्तारणेविनियोगः ॥ इमांधियंशिक्षमाणस्यदेवाक्रतुंदक्षंवरुणसंशिशाधि ॥ ययातिविश्वादुरितातरेमसुतर्माणमधिनावंरुहेम ॥ इतिमंत्रेण ( इरावतीतिमंत्रेणेत्यन्यत्र ) ॥ अवतीर्यमाणांतांगामनुमंत्रयीत ॥ इदंसलि

लंपवित्रंकुरुष्वशुद्धाः॥अमृताःसंतुनित्यं ॥ मांतारयंतीकुरुतीर्थाभिषेकंलोकाल्लोकंतरतेतीर्यतेचेति ॥ गोरुत्तरणंवापीकूप योर्नेतिकेचित् ॥ ततईशान्यांपरपारेगत्वाजानुदघ्नजलेउदङ्मुख्यागोःपुच्छमादायगुरुणान्वितोयजमानःसकुशैर्यवतिलैःस्व शाखोक्तरीत्या देवर्षिपितॄणांतर्पणंकुर्यात् ॥ तत्रप्राङ्मुखोदेवानुदङ्मुखऋषीन्दक्षिणामुखःपितॄंस्तर्पयेत् ॥ ततआपोअस्मान्मा तरइत्युत्तीर्य सूयवसाद्भगवतीहिभूयाइतिगामैशान्यांदिशिस्थापयेत् ॥ यदिगौर्हिंकुर्याद्धिंकृण्वतीवसुपत्नीत्यनुमंत्रयेत् ॥ त तोवस्त्रवेष्टितकंठांहेमशृंगींरौप्यखुरांताम्रपृष्ठांकांस्यदोहांवृषप्रजांतांगामाचार्यायदद्यात् ॥ यज्ञसाधनभूतायाविश्वस्याघप्रणा

---

१ अत्रपौराणमंत्रैरपितर्पणंकेचिदाहुर्यथा ॥ पितापितामहश्चैवतथैवप्रपितामहः । स्वस्वपत्नीसमेतास्तेप्रीयंतांजलतर्पणात् ॥ अजातदंतायेकेचिद्ये चगर्भेव्यवस्थिताः । तेषामुद्धरणार्थायकूपस्योदकतर्पणं ॥ पितृव्यकाश्चयेसाकंभ्रातरश्चसहोदराः । गुरवोमातुलाःपुत्राआचार्याःसखिबांधवाः ॥ एते षांप्रीणनार्थायतडागोदकतर्पणं ॥ बंधुवर्गाश्चयेकेचिद्गोत्रनामविवर्जिताः । स्वगोत्राःपरगोत्रावातेभ्यश्चेदंतिलोदकं ॥ अग्निदग्धाश्चयेकेचिन्नाग्निदग्धा स्तथापरे । विद्युत्पातहतायेचतेभ्योपीदंतिलोदकं ॥ अप्सरादेवपत्न्यश्चमातरश्चंडिकास्तथा । दिक्पालालोकपालाश्चग्रहदेवाधिदेवताः । तेषांवैप्रीणना र्थायतडागोदकतर्पणं ॥ रौरवेचांधतामिस्रेकुंभीपाकेचयेगताः । अनेकयातनासंस्थाःप्रेतलोकेचयेगताः । पच्यंतेसंयमिन्यांयेयेनीतायमकिंकरैः । अ सिपत्रवनेघोरेतेभ्योदद्यांतिलोदकं ॥ विश्वेदेवास्तथासाध्याआदित्याश्चमरुद्गणाः । क्षेत्रपीठोपपीठानिनद्यश्चैवससागराः । पातालेनागपत्न्यश्चनागाश्चैव सपर्वताः । पिशाचागुह्यकाःप्रेतागणगंधर्वराक्षसाः । पृथिव्यापश्चतेजश्चवायुराकाशमेवच । तेसर्वेतृप्तिमायांतुतडागोदकतर्पणात् ॥ पितृवंशेमृता० ते भ्योदत्तंतडागस्यजलमेतत्सुतृप्तये ॥ आब्रह्मणोये० तेभ्यश्चकूपोदकमेतदस्तु ॥ अतीतकुलकोटीनांसप्तद्वीपनिवासिनां ॥ आब्रह्मभुवनाल्लोकादिदमस्तु तिलोदकं ॥ वापीकूपादौतत्तदूहःकार्यः । नीलकंठस्त्वस्यनिर्मूलतामाह ॥

शिनी ॥ विश्वरूपधरोदेवःप्रीयतामनयागवा ॥ यदिगोरुत्तारणकालेछंदोगद्वारावल्याख्यसामगानंकार्यंतेतदासामगायैतद्गो
दानमाचार्यायान्यापयस्विनीदेया॥ ततोयजमानःसकुशतिलोदकंअंजलावादायोत्सर्गंकुर्यात्॥ एतत्तडागस्थितंजलममुकगो
त्रोऽमुष्यप्रपौत्रोऽमुष्यपौत्रोऽमुष्यपुत्रोमुकशर्माहंपरमेश्वरप्रीतिकामोनानाभूतेभ्यःसाधारणमुत्सृजामि देवपितृमनुष्याःप्रीयं
तामिति ॥ आचार्योपिदेवपितृमनुष्याःप्रीयंतामितिवदेत् ॥ ततोयजमानः ॥ सर्वसत्वेभ्यउत्सृष्टंमयैतज्जलमूर्जितं ॥ सेवंतां
सर्वभूतानिदानपानावगाहनैः ॥ सामान्यंसर्वभूतेभ्योमयादत्तमिदंजलं ॥ धर्मार्थकाममोक्षेषुसाधनंस्यादहर्निशमिति॥ ततो
जलांतिकदेशादग्नेःपश्चिमदेशमागत्यतत्रोपविश्यरजतरूपामन्यांवाभूयसींदक्षिणांब्राह्मणेभ्योदत्वाशिल्पिनोवस्त्रादिनासंपूज्य
विष्णुंस्मृत्वाभगवदर्पणंकुर्यात् ॥ इत्यनंतदेवीयेशौनकोक्तस्तडागकूपारामाद्युत्सर्गविधिः ॥ ॥ छ ॥ ॥ छ ॥

## ॥ २७८ ॥ अथकूपतडागादौमृतदोषशांतिः ॥

श्रीः ॥ तत्रादौसूतकोत्तरंमृतदुष्टजलाशयात्सहस्रशतादिकलशान्विप्रादिवर्णगवादिपशुतारतम्येनबहिर्निष्काश्याचमनादिदे
शकालकीर्तनांतेऽस्मिन्कूपेनृगवादिमरणजन्यदोषनिबर्हणद्वारास्यसर्वेषांजलपानावगाहादौजलशुद्ध्यर्थंशांतिंकरिष्ये ॥ इतिसं
कल्प्यगणेशपूजनाद्याचार्यवरणांतंकुर्यात् ॥ आचार्यःप्रादेशकरणांतेस्थंडिलात्पूर्वतःसर्वतोभद्रेमहीद्यौरित्यादिविधिवत्स्थापि
तकलशेसुवर्णप्रतिमायांतत्त्वायामीतिवरुणमावाह्यसंपूज्याग्निंप्रतिष्ठाप्यग्रहान्संपूज्यान्वादध्यात् ॥ चक्षुषीआज्येनेत्यंतेग्रहा
नुत्कीर्त्यप्रधानंवरुणंतिलसर्पिर्भ्यांप्रतिद्रव्यं १००८ वा १०८ आहुतिभिःशेषेणेत्यादिद्रव्यत्यागांतेकर्मणिकृतेन्वाधानानुसा
रेणहुत्वाजलशुद्धिंकुर्यात् ॥ ब्रह्मकूर्चविधिनासाधितंपंचगव्यंसप्तमृदःगंगादिपुण्यनदीजलानिजीर्णकूपप्रस्रवणोदकानिवात

त्तन्मंत्रैःकूपेप्रक्षिप्य कुंडभस्मतिलामलकशंखोदकविष्णुपादोदकानिचक्षिप्त्वाप्रायश्चित्तसूक्तानिपुरुषसूक्तपवमानमतंमंहोइति वाइतिअस्यवामीयंकस्यनूनमित्यादीनिवारुणसूक्तानिजप्त्वावगाह्यशांतिंपठेत् ॥ अस्यकर्मणःपुण्याहंभवंतोब्रुवंत्वित्यादिपुण्या हंवाचयित्वास्विष्टकृदादिहोमशेषंसमाप्ययजमानाभिषेकआचार्यपूजनादिकृत्वातस्मैगामन्येभ्योदक्षिणांदत्वा ब्राह्मणभोजनं संकल्प्यकर्मेश्वरार्पणंकुर्यात् ॥ इतिकूपतडागादौमृतदोषशांतिःसमाप्ता ॥ ॥ छ ॥ ॥ छ ॥

## ॥ २७९ ॥ अथकाम्यवृषोत्सर्गः ॥

श्रीः ॥ अथशौनकोक्तमार्गेणवृषोत्सर्गोलिख्यते ॥ वृषलक्षणं ॥ लोहितोयस्तुवर्णेनमुखेपुच्छेचपांडुरः ॥ श्वेतःखुरविषाणा भ्यांसनीलोवृषउच्यते ॥ यद्वा ॥ चरणास्तुमुखंपुच्छंयस्यश्वेतानिगोपतेः ॥ लाक्षयासमवर्णश्चसनीलोवृषउच्यते ॥ एवंलक्ष णोमुख्यःतदभावेयथासंभवंवाग्राह्यः ॥ वृषोत्सर्गादाद्येह्निगृहेगोष्ठेतीर्थेशिवालयेपुण्यक्षेत्रेवायथाशास्त्रंपताकाध्वजशोभितं षोडशहस्तंद्वादशहस्तंवामंडपंछायामात्रंवाकृत्वातन्मध्ये ईशानभागेवावेदीमष्टहस्तांचतुर्हस्तांवासुशोभितांकृत्वाकृताह्निकःपूर्वा ह्णेकृताभ्यंगःकृतमंगलश्चदेशकालादिस्मृत्वा ममसमस्तपितॄणामुद्धारार्थममुककामनासिद्ध्यर्थंवावृषोत्सर्गाख्यंकर्मश्वःसद्योवा करिष्ये ॥ तदंगगणेशपूजनादिकरिष्यइतिसंकल्प्यषोडशोपचारैर्गणपतिंकुलदेवतांचपूजयित्वास्वशाखानुसारेणपुण्याहवाच नंमातृकापूजनंनांदीश्राद्धंचकृत्वा आचार्यंवृणुयात् ॥ आचार्योमंडपदेवताःप्रतिष्ठाप्यपताकादितत्तन्मंत्रैःस्थापयेत् ॥ एत स्मिन्नहनिनवग्रहमखमपिकेचिदिच्छंति ॥ ततोवृषस्यचतसृणांवत्सतरीणांचद्वयोरेकस्यावायथालाभंमांगलिकस्नानादिकार यित्वाब्राह्मणान्भोजयित्वाहविष्यंयजमानोभुंजीत ॥ ततःश्वोभूतेकृतनित्यक्रियःवेद्युपरिहस्तमात्रंस्थंडिलंविधायदेशकालौस्मृ

त्वाउपक्रांतंवृषोत्सर्गमहंकरिष्ये तदर्थमग्निस्थापनादिकरिष्यइतिसंकल्प्यपंचभूसंस्कारपूर्वकमध्वरनामानमग्निंस्थापयेत् ॥ स्वयंवृताचार्येणवासद्योऽधिवासनंवाकार्यं ॥ अग्निस्थापनदेशादीशान्यांपंचगोमातरःपीठेवस्त्रोपरिपूज्याः ॥ ॐ आनंदांस्थापयामि ॐ सुमनसां० ॐ सुभद्रां० ॐ सुभद्रशीलां० ॐ सुरभिं० एताःसंपूज्यतासामग्रेआग्नेय्यांवाधान्योपरिनवमव्रणंरुद्रकलशंवस्त्रवेष्टितंपंचरत्नपंचपल्लवहिरण्यादियुतंआकलशेष्वितिस्थापयित्वा इमंमेगंगेइतिजलेनापूर्यतदुपरिताम्रवंशादिमयेभाजनेयथाशक्तिसुवर्णनिर्मितांरुद्रप्रतिमांस्थापयित्वासंपूज्यचएकब्राह्मणेनरुद्रमंत्रेणानुमंत्रणंकारयेत् ॥ ततोवत्सतरीभिःसहवृषंशुद्धोदकेन आपोहिष्ठाकयानइतिसूक्ताभ्यामभिषिंचेत् ॥ आपोहिष्ठेतिनवर्चस्यसूक्तस्यांबरीषःसिंधुद्वीपआपोगायत्रीपंचमीवर्धमानासप्तमीप्रतिष्ठाअंत्येद्वेअनुष्टुभौवृषवत्सतर्यभिषेकेविनियोगः ॥ कयानइतितिसृणांवामदेवइंद्रोगायत्रीतृतीयापादनिचृत् ॥ वृषवत्सतर्यभि० कयानश्चित्र० ३ ॥ ततोवस्त्राक्षतगंधमाल्यैरलंकृत्य अन्वाधानंकरिष्यइतिसंकल्प्यचक्षुषीआज्येनेत्यंतमुक्त्वा अत्रप्रधानं रुद्रंचरुणा सोमंपायसेन इंद्रंयावकेन शेषेणस्विष्टकृतमितिसद्योयक्ष्यइत्युक्त्वापरिसमूहनादिपूर्णपात्रनिधानांतंकृत्वा रुद्रायत्वाजुष्टंनिर्वपामीत्यादिनिर्वापप्रोक्षणादिक्रमेणचर्वादिश्रपणंकृत्वाऽवदानधर्मेणजुहुयात् ॥ ॐ रुद्रायस्वाहा रुद्रायेदंनमम इतिचरुं ॥ सोमायस्वाहा सोमायेदं० इतिपायसं ॥ इंद्रायस्वाहा इंद्रायेदं० इतियावकं ॥ ततःस्विष्टकृदादिपरिसमूहनांतंकृत्वाऽकृत्वावा ॥ ततःस्त्रीभिर्विवाहवत्कृतमांगलिकंवृषंप्रादक्षिण्येनवेद्याउत्तरतोनीत्वाप्राङ्मुखंवृषंस्वयमुदङ्मुखोमधुपर्केणयथागृह्यंपूजयेत् ॥ ततोलंकरणैर्वृषंभूषयित्वावस्त्रछत्रोपानत्कांस्यभाजनाचमनपात्रादियथाशक्तिसमर्प्यहरिद्राकुंकुमादिनालंकृत्यततोदक्षिणोरौतप्तेनराजतत्रिशूलेनांकयित्वावामोरौरौक्मेणचक्रेणांकयेत् ॥ अभावेआयसा

भ्यां ॥ उत्सर्गकालेवांकनं ॥ अस्मिन्पक्षेअंकनार्थंचिह्नमात्रंकार्यमस्मिन्काले ॥ ततोवृषेन्यासः ॥ इषेत्वेतिमूर्ध्नि ॥ इमारुद्रा येतिशूलांके ॥ नमस्तेरुद्रइतिचक्रांके ॥ सहस्राणीतिललाटे ॥ विभ्राडितिभ्रुवोः ॥ त्र्यंबकमितिनेत्रयोः ॥ मानस्तोकेइति नासिकायां ॥ अवतत्येतिमुखे ॥ नीलग्रीवौद्वौकंठे ॥ मर्माणितइतिबाहुमध्यतः ॥ सभिधाग्निमितिबाहुभ्यां ॥ नमोवःकिरि केभ्यइतिहृदि ॥ हिरण्यगर्भइतिनाभौ ॥ मीढुष्टमेतिकट्यां ॥ मानोमहांतमित्यूर्वोः ॥ उदुत्यमितिजंघयोः ॥ इमारुद्रायेति जान्वोः ॥ रक्षोहणमितिगुदे ॥ वृष्णस्तइतिलिंगे ॥ ऋषभंमेतिपुच्छे ॥ त्रिपादूर्ध्वइतिखुरेषु ॥ एवंन्यासंकृत्वावेद्याःसमीप मानीयअग्नेःपश्चिमभागेस्वगृह्योक्तविधिनासर्वैविवाहंचतुर्भिर्वत्सतरीभिःसहकुर्यात् ॥ तत्रप्रयोगः ॥ देशकालौस्मृत्वाममस र्वेषांपूर्वजानांनिरतिशयसानंदब्रह्मलोकावाप्त्यर्थं अमुककामनयाश्रीरुद्रस्वरूपिणेवृषायवत्सतरीकन्यादानमहंकरिष्ये इति संकल्प्यदीर्घमायुरस्त्वित्यादिसर्वंवृषखुरेकार्यं ॥ ततःपूर्ववत्संकल्प्यरुद्रस्वरूपायवृषायगौरीस्वरूपाइमाःयथाशक्त्यलंकृताः वत्सतरीस्तुभ्यमहंसंप्रददे ॥ ( एकद्व्यादिवत्सतरीपक्षेगौरीस्वरूपामिमांयथाशक्त्यलंकृतांवत्सतरीं-इमेवत्सतर्यौवेतियोज्यं ) अनेनवत्सतरीदानेनभगवान्वृषस्वरूपीश्रीरुद्रःप्रीयतामित्युक्त्वा ॥ अस्यनीलोद्वाहस्यप्रतिष्ठासिद्ध्यर्थंइदंहिरण्यंदक्षिणात्वेन संप्रददे ॥ एवंकन्यादानंयथास्वगृह्यंकार्यं ॥ ततोवृषवत्सतरीणामभिषेकोरुद्रकलशस्थोदकेनैभिर्मंत्रैःकार्यः ॥ आपोहिष्ठेतिन वभिः ॥ समुद्रज्येष्ठाइतिचतसृभिः ॥ इमंमेगंगेइत्येकया ॥ कयानइत्येकया ॥ सहस्राक्षंशतधारमृषिभिःपावनंकृतं ॥ तेन त्वामभिषिंचामिपावमान्यःपुनंतुमां ॥ भगंतेवरुणोराजाभगंसूर्योबृहस्पतिः ॥ भगमिंद्रश्चवायुश्चभगंसप्तर्षयोददुः ॥ यत्तेके शेषुदौर्भाग्यंसीमंतेयच्चमूर्धनि ॥ ललाटेकर्णयोरक्ष्णोरापस्तद्घ्नंतुसर्वदा ॥ सुरास्त्वामभिषिंचंतु० एतैर्मंत्रैरभिषिच्यवृषकर्णे

मंत्रंजपेत् ॥ धर्मस्त्वंवृषरूपेणजगदानंदकारक ॥ अष्टमूर्तेरधिष्ठानमतःपाहिसनातन ॥ ततः तीक्ष्णशृंगायविद्महेवेदपादाय धीमहि ॥ तन्नोवृषःप्रचोदयात् ॥ इतिवृषगायत्र्यापूजयेत्प्रार्थयेच्च ॥ ततोऋषभंमासमानानामितिप्रार्थयेत् ॥ ततोगवांमा र्थना ॥ गावोमेअग्रतःसंतुगावोमेसंतुपृष्ठतः ॥ गावोमेहृदयेसंतुगवांमध्येवसाम्यहं ॥ पंचगावःसमुत्पन्नामध्यमानेमहोदधौ ॥ तासांमध्येतुयानंदातस्यैधेन्वैनमोनमः ॥ यालक्ष्मीःसर्वभूतानांयाचदेवेष्ववस्थिता ॥ धेनुरूपेणसादेवीममपापंव्यपोहतु ॥ अयंहिवोमयादत्तःसर्वासांपतिरुत्तमः ॥ तुभ्यंचैतामयादत्ताःपत्न्यःसर्वामनोरमाः ॥ इत्युक्त्वासर्वमपिविवाहहोमंलाजादि नाआचार्योवृषान्वारब्धःकुर्यात् ॥ ततोग्नेःपूर्वतःउदङ्मुखंवृषंकृत्वाताम्रपात्रेप्राङ्मुखोयवैस्तिलैश्चतत्पुच्छेतर्पणंकुर्यात् ॥ वत्स तरीपुच्छमपिवृषपुच्छेमेलयेत् ॥ तद्यथा ॥ पूर्वोक्तएवंगुणविशेषणविशिष्टायांशुभपुण्यतिथौदेवर्षिपितॄणांदुर्गतिगतानांचतृ प्तयेआत्मनआकल्पंसंतानाविच्छेदार्थंवृषपुच्छेतर्पणमहंकरिष्यइतिसंकल्प्य ॥ ब्रह्मादयोयेदेवास्तान्देवांस्तर्पयामीत्यादियथा गृह्यंतर्पणंकृत्वा ॥ ततःप्राचीनावीतीदक्षिणामुखःपित्रादित्रयीमात्रादित्रयीमातामहादित्रयीमातामह्यादित्रयीत्यादिसर्वांस्त र्पयेत् यावंतःस्मर्यतेतांश्चसर्वान् ॥ ततःपुराणश्लोकैस्तर्पयेत् ॥ तद्यथा ॥ ब्रह्माद्यादेवताःसर्वाऋषयोमुनयस्तथा ॥ असु रायातुधानाश्चमातरश्चंडिकास्तथा ॥ दिक्पालालोकपालाश्चग्रहदेवाधिदेवताः ॥ तेसर्वेतृप्तिमायांतुनीलपुच्छेसुतर्पिताः ॥ वि श्वेदेवास्तथादित्याःसाध्याश्चैवमरुद्गणाः ॥ क्षेत्रपीठोपपीठानिनदानद्यश्चसागराः ॥ पातालेनागपत्न्यश्चनागाश्चैवसपर्वताः ॥ पिशाचागुह्यकाःप्रेतागंधर्वागुह्यराक्षसाः ॥ पृथिव्यापश्चतेजश्चवायुराकाशमेवच ॥ दिविभुव्यंतरेचैवयेचपातालवासिनः ॥

१ एकवत्सतरीपक्षे—अयंहितेमयादत्तःसखायपतिरुत्तमः ॥ तुभ्यंचैषामयादत्तापत्नीसर्वमनोरमा ॥ एवमेवाग्रेप्येकद्व्यादिवचनंविज्ञैरूहनीयम् ॥

शिवःशिवातथाविष्णुःसाद्धिलक्ष्मीःसरस्वती॥ तपोधनाश्चभगवानव्यक्तःपरमेश्वरः ॥ क्षेत्राण्योषधिलतावृक्षावनस्पत्योधिदेवताः॥ कपिलःशेषनागश्चतक्षकोनंतएवच ॥ अन्येजलचराजीवाअसंख्यातास्त्वनेकशः ॥ चतुर्दशयमाश्चैवयेचान्येयमकिंकराः ॥ सर्वेपियक्षराजानःपक्षिणःपशवस्तथा ॥ स्वेदजोद्भिज्जजाजीवाअंडजाश्चजरायुजाः ॥ अन्येपिवनजीवायेदिवानिशिविहारिणः ॥ अजागोमहिषीरूपायेचान्येपशवस्तथा ॥ शांतिदाःशुभदास्तेस्युर्नीलपुच्छेसुतर्पिताः ॥ आब्रह्मस्तंबपर्यंतंयेचान्येगोत्रिणस्तथा ॥ तेसर्वेतृप्तिमायांतुनीलपुच्छेसुतर्पिताः ॥ सर्पव्याघ्रहतायेचशृंगिदंष्ट्र्यनिलाग्निभिः ॥ अपुत्राअक्रियायेचअदाराधर्मवर्जिताः ॥ आमगर्भमृतायेचशस्त्रपातमृताश्चये ॥ संस्काररहितायेचरौरवादिषुगामिनः ॥ आब्रह्मस्तंबपर्यंतंदेवर्षिपितृमानवाः ॥ तृप्यंतुपितरःसर्वेमातृमातामहादयः॥ अतीतकुलकोटीनांसप्तद्वीपनिवासिनां ॥ आब्रह्मभुवनाल्लोकादिदमस्तुतिलोदकं ॥ पितृवंशेमृतायेचमातृवंशेचयेमृताः ॥ गुरुश्वशुरबंधूनांयेचान्येबांधवामृताः ॥ येमेकुलेलुप्तपिंडाःपुत्रदारविवर्जिताः ॥ क्रियालोपगतायेचजात्यंधाःपंगवस्तथा ॥ विरूपाआमगर्भाश्चज्ञाताज्ञाताःकुलेमम ॥ तेपिबंतुमयादत्तंवृषपुच्छेतिलोदकं ॥ येबांधवाबांधवावाअन्यजन्मनिबांधवाः ॥ तेसर्वेतृप्तिमायांतुवृषपुच्छतिलोदकैः ॥ वृक्षत्वंचगताःकेचित्तृणगुल्मलतास्थिताः ॥ यातनासुचघोरासुज्ञातीषुविविधासुच ॥ नरकेषुचघोरेषुपतितायेस्वकर्मणा ॥ देवत्वंमानुषत्वंवातिर्यक्प्रेतपिशाचतां ॥ कृमिकीटपतंगत्वंगतायेचस्वकर्मभिः ॥ तेषामुद्धरणार्थायजलमेतद्ददाम्यहं ॥ आब्रह्मस्तंबपर्यंतंजगत्तृप्यत्वितिब्रुवन् ॥ तर्पणांतेपुत्रकामश्चेद्यजमानस्तर्हिदंपतीउपविश्य अद्येत्यादिसत्पुत्रावाप्त्यर्थंस्नानमहंकरिष्यइतिसंकल्पपूर्वकंसप्तधान्यफलान्वितवंशपात्रेपुच्छान्येकीकृत्यतदुपर्युदकदानेनवारुणमंत्रैः समुद्रज्येष्ठाइत्यादिभिश्चस्नापयेद्वंशपात्रगलितोदकेनतदधस्ता

वुपविष्टौदंपतीआचार्यः ॥ ततस्तानिवस्त्राणिपरित्यज्यनववस्त्राणिपरिधायपिंडदानमित्यपिशिष्टसंप्रदायः ॥ एवंतर्पणंकृत्वा वेद्यांवृषस्यदक्षिणेखुरेपायसेनचरुणाज्येनहविष्येणवापित्रादिभ्यःसर्वेभ्योदक्षिणाभिमुखेनपिंडदानंकार्यं येयेस्मर्यंतेतेभ्यश्च ॥ अत्रमात्रादित्रयेमातामह्यादित्रयेचपृथक्दद्यात् ॥ पिंडदानेहोमचरुशेषंग्राह्यं ॥ श्राद्धमपिकार्यमितिकेचित् ॥ पिंडदानसंकल्पस्तुपूर्वोक्तविशिष्टेदेशकालेचपितृतृप्त्यर्थंआकल्पंतेषांब्रह्मलोकनिवासार्थं दुर्गतिगतानांस्मर्यमाणानामस्मर्यमाणानांचोद्धारार्थं आत्मनश्चाकल्पंसंतानाविच्छेदार्थंवृषस्यधर्मरूपस्यदक्षिणखुरेपिंडदानमहंकरिष्य इति ॥ एवंसर्वेभ्यःपिंडान्दत्वापुराणश्लोकैः ॥ पितृवंशेमृतायेचमातृवंशेचयेमृताः ॥ गुरुश्वशुरबंधूनांयेचान्येबांधवामृताः ॥ येमेकुलेलुप्तपिंडाःपुत्रदारविवर्जिताः ॥ क्रियालोपगतायेचजात्यंधाःपंगवस्तथा ॥ विरूपाआमगर्भाश्चज्ञाताज्ञाताःकुलेमम ॥ खुरेदत्तेनपिंडेनतृप्तायांतुपरांगतिं ॥ वृक्षयोनिंगतायेचतिर्यग्योनिंगताश्चये ॥ पंगुत्वंचगतायेवैयेचमूकत्वमागताः ॥ आब्रह्मणोयेममवंशजातामातुस्तथावंशभवामदीयाः ॥ वंशद्वयेयेममदासभूताभृत्यास्तथैवाश्रितसेवकाश्च ॥ मित्राणिसख्यःपशवश्चवृक्षाइष्टाश्चदृष्टाश्चकृतोपकाराः ॥ जन्मांतरेयेममसंगताश्चतेभ्यःस्वधापिंडमहंददामि ॥ अजातदंतायेकेचिद्येचगर्भेप्रपीडिताः ॥ तेषामुद्धरणार्थायइमंपिंडंददाम्यहं ॥ बंधुवर्गेचयेकेचिन्नामगोत्रविवर्जिताः ॥ स्वगोत्रेपरगोत्रेवातेभ्यःपिंडंददाम्यहं ॥ उद्बंधनमृतायेचविषशस्त्रहताश्चये ॥ शृंगिभिर्दंष्ट्रिभिर्वापितेभ्यःपिंडंददाम्यहं ॥ अग्निदाहेमृतायेचसिंहव्याघ्रहताश्चये ॥ आत्मनोघातिनोयेचतेभ्यःपिंडंददाम्यहं ॥ अग्निदग्धाश्चयेकेचिन्नाग्निदग्धास्तथापरे ॥ विद्युच्चोरहतायेचतेभ्यःपिंडंददाम्यहं ॥ रौरवेचांधतामिस्रेकालसूत्रेचयेगताः ॥ तेषामुद्धरणार्थायइमंपिंडंददाम्यहं ॥ असिपत्रवनेघोरेकुंभीपाकेचयेगताः ॥ तेषामुद्धरणा० ॥ अनेकयातना

संस्थामृताःप्रेतेषुयेगताः ॥ तेषामु० ॥ असंख्ययातनासंस्थायेनीतायमकिंकरैः ॥ तेषामु० ॥ पशुत्वंचगतायेचपक्षिकीटस
रीसृपाः ॥ अथवावृक्षयोनिस्थास्तेभ्यःपिंडं० ॥ अन्यैर्दुर्मरणैर्येचक्षुधयातृषयामृताः ॥ भूतप्रेतपिशाचाश्चतेभ्यःपिंडं० ॥ दि
व्यंतरिक्षभूमिष्ठाःपितरोवांधवादयः ॥ तेसर्वेतृप्तिमायांतुपिंडेनानेनसर्वदा ॥ जात्यंतरसहस्रेषुभ्रमंतःस्वेनकर्मणा ॥ मानुष्यं
दुर्लभंयेषांतेभ्यःपिंडं० ॥ येकेचित्प्रेतरूपेणवर्ततेपितरोमम ॥ तेसर्वेतृप्ति० ॥ एवंपिंडदानंकृत्वाशेषंसर्वंसमापयेत् ॥ पिंडद
क्षिणांदत्वाब्राह्मणैर्वृषखुरेपिंडदानंसंपूर्णमस्त्वितिवाचयित्वा पिंडोद्धारणादिसर्वंकृत्वावृषवत्सतरीरग्निदक्षिणतआनीयाग्नेःपू
र्वतोदक्षिणामुखस्त्रिशूलेनदक्षिणोरौवामेचक्रेणचांकयित्वाविसर्जयेत् ॥ प्रांचःकेचित्त्रिशूलमात्रमिच्छंति ॥ देशकालौस्मृत्वा
इमंचतुर्विधमुक्तिरूपंवत्सवत्सतरीचतुष्टययुतं यथाशक्त्यलंकृतंपितॄणामुद्धारपूर्वकमाकल्पंब्रह्मलोकप्राप्तयेआकल्पंसंताना
विच्छेदायचवृषमुत्सृजामीतिसंकल्प्य प्रांचमुत्सृजेत् ॥ व्रजंतंपृष्ठेहस्तंदत्वानुमंत्रयीत ॥ एतंयुवानमित्यस्ययाज्ञवल्क्योवृषभ
स्त्रिष्टुप् वृषानुमंत्रणेविनियोगः ॥ ॐ एतंयुवानंपरिवोददामितेनक्रीडंतीश्चरतप्रियेण ॥ मानःशाप्तजनुषासुभागारायस्पोषे
णसमिषामदेम ॥ इति ॥ शांतातेपृथिवीशिवमंतरिक्षंद्यौस्तेदेव्यभयंकृणोतु ॥ शिवादिशःप्रदिशउद्दिशस्तआपोविद्युतःपरि
पांतुसर्वतःशांतिःशांतिःशांतिःइतित्रिः ॥ सर्वतोव्रजस्वेतिब्रूयात् ॥ ऋषभंमेतिपंचर्चस्यसूक्तस्यऋषभोनंदीश्वरोनुष्टुप्अंत्याम
हापंक्तिः ऋषभोपस्थानेविनियोगः ॥ ऋषभंमासमानानां० ऋचः ५ ॥ ततोवृषंपूर्वदिगभिमुखंकृत्वा ॥ कद्रुद्रायेतिनवर्चस्य
सूक्तस्यघौरःकण्वोरुद्रोगायत्री तृतीयामैत्रावरुणीअंत्यस्तृचःसौम्योंत्यानुष्टुप् पूर्वदिगुपस्थाने० ॥ कद्रुद्रायप्रचेतसे० ९ ॥ सू
क्तजपांतेहेवृषगोभिःसहतृणानिभक्षयथेष्टंपर्यटेतिवदेत् ॥ अथदक्षिणाभिमुखंकृत्वा ॥ इमारुद्रायेत्येकादशर्चस्यसूक्तस्यकुत्सो

रुद्रोजगती अंत्येत्रिष्टुभौ ॥ दक्षिणदिगुपस्थाने० ॥ इमारुद्रायतवसेकपर्दिने० ऋ० ११ ॥ सूक्तजपांतेगोभिःसहेतिपूर्ववद्ध देत् ॥ ततःप्रत्यङ्मुखंकृत्वा ॥ आतेपितरितिपंचदशर्चस्यसूक्तस्यगृत्समदोरुद्रस्त्रिष्टुप् ॥ पश्चिमदिगुपस्थानेविनि० ॥ आते पितर्मरुतांसुम्नमेतु० १५ ॥ सूक्तजपांतेगोभिःसहेत्यादिपूर्ववद्धदेत् ॥ अथोदङ्मुखंकृत्वा ॥ इमारुद्रायस्थिरधन्वनइतिचत सृणांवसिष्ठोरुद्रोजगतीअंत्यात्रिष्टुप् ॥ उत्तरदिगुपस्थाने० ॥ इमारुद्रायस्थिरधन्वनेगिरः० ऋ० ४ ॥ सूक्तजपांतेगोभिःस हेतिपूर्ववद्धदेत् ॥ ततोगच्छतिवृषेऽनुगच्छन्स्तुवीत ॥ वृषोहिभगवान्धर्मोमुक्तयोवत्सिकाइमाः ॥ सारूप्यंचैवसान्निध्यंसा युज्यंचसलोकतां ॥ इमाःसरूपाःपत्न्यस्तुचतस्रस्तवगोपते ॥ कल्पिताःक्रीडनार्थंचत्वयासार्धंव्रजंत्विमाः ॥ धर्मोसित्वंचतु ष्पादःस्मृतोवत्सतरीस्त्विमाः ॥ चतुर्णापोषणार्थायमयोत्सृष्टास्त्वयासह ॥ देवानांचपितॄणांचमनुष्याणांचयोगतः ॥ भूता नांतृप्तिजननास्त्वयासार्धंव्रजंत्विमाः ॥ नमोब्रह्मण्यदेवायदेवर्षिपितृपोषक ॥ त्वयिमुक्तेऽक्षयालोकाममसंतुनिरामयाः ॥ वृ षोहिभगवान्धर्मश्चतुष्पादःप्रकीर्तितः ॥ वृणोमितमहंभक्त्यासमांरक्षतुसर्वदा ॥ धर्मतस्तवसंभूतिःस्वाहात्वंचविभावसोः ॥ वृषरूपेणसादेवीसर्वकामप्रदास्तुमे ॥ अदितिर्देवमातात्वंदेवमातातथेश्वरी ॥ धेनुरूपेणसादेवीममपापंव्यपोहतु ॥ गावोमे अग्रतःसंतुगावोमेसंतुपृष्ठतः ॥ गावोमेहृदयेनित्यंगवांमध्येवसाम्यहं ॥ यालक्ष्मीःसर्वदेवानांयाचदेवेष्ववस्थिता ॥ धेनुरूपे णसादेवीममपापंव्यपोहतु ॥ पंचगावःसमुत्पन्नामथ्यमानेमहोदधौ ॥ तासांमध्येतुयानंदातस्यैधेन्वैनमोनमः ॥ धर्मंदेहिय शोदेहिपुत्रान्देहिसुसंपदः ॥ एकोत्तरशतंचैवकुलानांतारयस्वमे ॥ रुद्रमायामयादत्ताःपत्न्यस्तववृषोत्तम ॥ पित्रर्णोत्तारणा र्थायपर्यटस्वमहीमिमां ॥ खुराग्रक्षेपणैःसर्वंममपापंव्यपोहतु ॥ पितरस्तृप्तिमायांतुखुराग्रजलसीकरैः ॥ येत्वांहिंसंतिपाप्मा

नोनरकंयांतुतेऽक्षयं ॥ येत्वांरक्षंतिधर्मिष्ठाःसुखभाजोभवंतुते ॥ तवदर्पकृतोत्राटैर्नदीकूलविहारणैः ॥ अक्षय्याःसंतुमेलोकाः पूर्वजानांचसौरभ ॥ धनसंतानमारोग्यंबांधवानांविशोकतां ॥ ततःप्रदक्षिणीकृत्यवृषंतमभिवादयेत् ॥ धारणाद्धर्मइत्याहुर्धर्मेणविधृताःप्रजाः ॥ चरत्वंधर्मरूपेणवृषवत्सतरीयुतः ॥ धर्मस्त्वंवृषरूपेणब्रह्मणानिर्मितःपुरा ॥ तवोत्सर्गप्रभावेणउद्धरस्वमहार्णवात् ॥ एवंनमस्कृत्यमंत्रवाद्यघोषेणसीमांतंनीत्वोत्सृजेत् ॥ सनवाह्योगावःपल्यश्चनदोह्याः ॥ ततआगत्यचरणक्षालनाचमनादिविधायस्थापितदेवतानामुत्तरपूजांविधायविसृज्यसर्वदेवप्रतिमादिआचार्यायदद्यात् ॥ रुद्रकलशःसोपस्करोरुद्रजापकायदेयः ॥ ततःप्रायश्चित्तादिहोमशेषंसमापयेत् ॥ केचित्स्विष्टकृदाद्यत्रैवेच्छंति ॥ कर्मणःसांगतासिद्ध्यर्थंशतब्राह्मणान्पंचविंशतिःयथाशक्तिवाभोजयिष्ये ॥ यथाशक्तितिलानुदकुंभंवासोहिरण्यंगांचदद्यात् ॥ सूत्रांतरेतुसवत्सागौर्दक्षिणा ॥ सर्वानृत्विजःसंपूज्यतेभ्योदक्षिणांनिरीक्षिताज्यदानंचकृत्वाभूयसींदत्वाशिषोग्राह्याः ॥ एवंयथोक्तविधिनायस्तुनीलंसमुत्सृजेत् ॥ सर्वसिद्धिमवाप्नोतियथातेब्रह्मचारिणइत्यादिफलकथनंविस्तरभयान्नकथितंहेमाद्र्यादेरवगंतव्यं ॥ इतिभट्टरामेश्वरसुतनारायणभट्टकृतःकाम्यवृषोत्सर्गआश्वलायनीयानाम् ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥

## ॥ २८० ॥ अथरुद्रपद्धतिः ॥

श्रीगणेशायनमः ॥ भट्टरामेश्वरसुतोभट्टनारायणःसुधीः ॥ प्रणम्यरामंतनुतेरुद्रानुष्ठानपद्धतिं ॥ तत्रतावद्यद्यप्यनेकासुयजुःशाखासुरुद्रःपठ्यतेतथापितैत्तिरीयशाखानुसारेणरुद्रप्रयोगउच्यते ॥ स्मार्तरुद्रप्रयोगस्यबौधायनसूत्रमूलकत्वेनबह्वृचादीनांच

तत्रबौधायनंग्राह्यंवक्तृत्वादिभिरादरादितिवाक्यानुसारेणबौधायनीयानुरोधित्वादिति ॥ इहचरुद्रानुष्ठानेत्रैवर्णिकानामेवा
धिकारोनस्त्रीशूद्रानुपनीतानां तेषांवैदिकमंत्रयुक्तकर्मण्यध्ययनाद्यभावेनसाक्षाद्वचनाभावेनानधिकारादिति ॥ अन्यत्रचैत
द्विस्तरेणनिर्णीतं ॥ तत्ररुद्रःपंचधा ॥ रूपंरुद्रीलघुरुद्रोमहारुद्रोतिरुद्रश्चेत्येकादशगुणवृद्ध्या ॥ सर्वश्चत्रेधा ॥ जपरुद्रोहोमरु
द्रोभिषेकरुद्रश्चेति ॥ जपरुद्रोपिद्वेधा ॥ केवलजपात्मकोहोमांगश्चेति ॥ होमाभिषेकयोस्तुकेवलतदात्मकत्वमेव ॥ तत्रताव
त्पापक्षयकामःश्रीरुद्रप्रीतिकामोवा उत्तरायणादौगुरुशुक्रास्तबाल्यवार्धकादिरहितेशुभेकालेशुक्लपक्षादौरिक्ताभौमव्यतीपात
विष्ट्यादिदोषरहितायांद्वितीयादिस्वाध्यायशुभतिथौचंद्रानुकूल्ये कृतमांगलिकस्नानःशुचिःशुक्लवासाःसपत्नीकोयजमानःपू
जितेष्टदेवतोगोमयलिप्तेशुचौदेशेप्राङ्मुखउपविश्यप्राणानायम्यदेशकालौसंकीर्त्य ममकायिकादिसर्वपापक्षयार्थं श्रीरुद्रप्रीत्य
र्थंवाअमुकरुद्रमहंकरिष्यइतिसंकल्पयेत् ॥ पुत्रकामस्तुदीर्घायुःसुपुत्रसिद्ध्यर्थंमहारुद्रमहंकरिष्यइतिमहारुद्रमेवसंकल्पयेत् ॥
सनवग्रहरुद्रकरणेतुसनवग्रहमखरुद्रंकरिष्यइतिविशेषः ॥ एवंप्रधानसंकल्पंविधाय अस्मिन्कर्मणिनिर्विघ्नसमाप्तिसिद्ध्यर्थंगणप
तिपूजनंपुण्याहवाचनंमातृकापूजनंनांदीश्राद्धमाचार्यादिवरणंचकरिष्यइतिसंकल्पयेत् प्रत्येकंवासंकल्पः ॥ ततःषोडशभिः
पंचभिर्वोपचारैर्गणेशंपूजयित्वा कलशपूजापूर्वकमवनिकृतजानुमंडलइत्याद्याश्वलायनगृह्यपरिशिष्टोक्तविधिनापुण्याहंवाच
यित्वागौर्यादिषोडशब्राह्म्यादिसप्तमातृश्चपदार्थानुसमयेनपूजयेत् ॥ सर्वत्रचाक्षतपुंजादौपूजनमावाहनादिविसर्जनांतंकुर्या
त् ॥ प्रतिमापूजनेत्वावाहनविसर्जनेनस्तः ॥ ततोनांदीश्राद्धंकुर्यात् ॥ ततःशांतंसुव्रतंवेदविदंकुटुंबिनमाचार्यममुकप्रवरोपे
तोमुकगोत्रोमुकशर्माहं अमुकप्रवरोपेतममुकगोत्रममुकशर्माणंब्राह्मणमाचार्यत्वांवृणइतिवृणुयात् ॥ क्षत्रियेत्वमुकवर्मेति ॥ वै

श्येत्वमुकगुप्तेति ॥ ततःप्रार्थयेत् ॥ आचार्यस्तुयथा० ॥ एवमेवब्रह्माणंवृत्वायथाचतुर्मुखइतिप्रार्थयेत् ॥ जपहोमादिकंतु स्वयमेवकुर्यात् ॥ स्वस्याशक्तौस्वप्रतिनिधित्वेनजपाद्यर्थंब्राह्मणान्वृणुयात् ॥ पुत्रकामस्तुऋत्विजोवृत्वाप्रत्येकंप्रार्थयेत् ॥ भगवन्सर्वधर्मज्ञसर्वधर्मभृतांवर ॥ विततेममयज्ञेस्मिन्नृत्विक्त्वंभवसुव्रतेति ॥ ततःसदस्यंवृणुयात् ॥ सर्वकर्मणामुपद्रष्टाभ वेतिप्रार्थयेच्च ॥ तत्ररूपेएकएव ॥ रुद्रीलघुरुद्रमहारुद्रेष्वेकएकादशवा॥अतिरुद्रेएकादशएकविंशत्युत्तरंशतंवेतिऋत्विक्सं ख्या ॥ प्रतिनिधिपक्षेत्वनियमइतिसांप्रदायिकाः ॥ सग्रहपक्षेग्रहरुद्रजपार्थत्वेनैपांवरणंकार्यं ॥ यद्वारुद्रजपार्थब्राह्मणवरणा त्पूर्वंग्रहजपार्थमनियमेनैकंद्वौत्रीन्वाविप्रान्वृणुयात् ॥ ततआचार्यादीन्मधुपर्केणार्हयित्वावस्त्रालंकारादिभिःपूजयेत् ॥ स्मा र्तेमधुपर्ककेचिन्नेच्छंति ॥ प्रतिनिधित्वेनजपार्थवरणेवस्त्रादिपूजैवनमधुपर्कः ॥ अथाचार्यादयःशिवायतनादौपुण्यनद्यादि तीर्थतीरेगोष्ठादिपुण्यदेशेब्राह्मणगृहेयजमानगृहेतदीशानदिग्भागेवाशुचौदेशेन्यासपुरःसरंजपादिकुर्युः ॥ सग्रहपक्षेमात्स्यक्र मेणग्रहमंत्रजपपुरःसररुद्रजपःकार्यः ॥ तत्रग्रहाणांप्रत्येकमयुतंसहस्रंशतंवाकर्तृतारतम्येनसंख्याज्ञेया ॥ ॥ ७ ॥

## ॥ २८१ ॥ अथरुद्रजपादौन्यासविधिः ॥

श्रीः ॥ तत्रबौधायनमतेपंचांगन्यासाः ॥ तत्रशिखाद्यस्त्रांतमेकत्रिंशदंगन्यासःप्रथमः ॥ मूर्धादिपादांतंदशांगन्यासोद्विती यः ॥ पादादिमूर्धांतंपंचांगन्यासस्तृतीयः ॥ गुह्यादिमस्तकांतंपंचांगन्यासश्चतुर्थः ॥ हृदयाद्यस्त्रांतंपञ्चांगन्यासःपंचमः ॥ शातातपमतेतुप्रजननादिसर्वांगपर्यंतंषोडशांगन्यासःषष्ठःसर्वत्रजपादौ ॥ अभिषेकएवायंषष्ठोनान्यत्रेतिबौधायनः ॥ तेषांप्र कारः ॥ यातेरुद्रेतिशिखायां अस्मिन्महतीतिशिरसि सहस्राणीतिललाटे हंसःशुचिषदितिभ्रुवोर्मध्ये त्र्यंबकमितिनेत्रयोः

नमःस्रुत्यायेतिकर्णयोः मानस्तोकइतिनासिकायां अवतत्येतिमुखे नीलग्रीवौद्वौकंठे नमस्तेअस्त्वायुधायेतिबाह्वोः यातेहेति
रित्युपबाह्वोः येतीर्थानीतिहस्तयोः सद्योजातमितिपंचानुवाकान्पंचस्वंगुलीषु नमोवःकिरिकेभ्यइतिहृदये नमोगणेभ्यइतिपृ
ष्ठे नमोहिरण्यबाहवइतिपार्श्वयोः विज्यंधनुरितिजठरे हिरण्यगर्भइतिनाभौ मीढुष्टमेतिकट्यां येभूतानामधिपतयइतिगुह्ये
सशिराजातवेदाइत्यपाने मानोमहांतमित्यूर्वोः एषतइतिजान्वोः सꣳसृष्टजिदितिजंघयोः विश्वंभूतमितिगुल्फयोः येपथा
मितिपादयोः अध्यवोचदितिकवचं नमोबिल्मिनइत्युपकवचं नमोअस्तुनीलग्रीवायेतितृतीयनेत्रं प्रमुंचेत्यस्त्रं यएतावंतइति
दिग्बंधंकुर्यात् ॥ इतिप्रथमः ॥ ॥ ॐ कारंमूर्ध्निविन्यस्यनकारंनासिकाग्रतः ॥ मोकारंतुललाटेवैभकारंमुखमध्यतः ॥
गकारंकंठदेशेतुवकारंहृदि विन्यसेत् ॥ तेकारंदक्षिणेहस्तेरुकारंवामतोन्यसेत् ॥ द्राकारंनाभिदेशेतुयकारंपादयोर्न्यसेत् ॥
ॐ मूर्ध्नेनमइत्येतान्यक्षराणिनमोंतानिन्यसेदितिद्वितीयः ॥ ॥ सद्यंतुपादयोर्न्यस्यवामंन्यस्योरुमध्यतः ॥ अघोरंहृदिवि
न्यस्यमुखेतत्पुरुषंन्यसेत् ॥ ईशानंमूर्ध्निविन्यस्येतिसदाशिवात्मतांभावयित्वाकरसंपुटंकृत्वा त्रातारमिंद्रंत्वंनोअग्नेसुगंनःपंथा
असुन्वंतंतत्त्वायाम्यानोनियुद्भिर्वयꣳसोमतमीशानमस्मेरुद्रास्योनापृथिवीतींद्रादीन्नमस्कृत्वात्मरक्षाकार्येति ॥ अस्मेरुद्रास्यो
नापृथिवीत्येताभ्यांत्रातारमिंद्रमित्याद्यष्टौमंत्रान्प्रत्येकंसंपुटीकृत्यपठेदितिवासंपुटइतिकेचित् ॥ इतितृतीयः ॥ ॥ मनो
ज्योतिरबोध्यग्निर्मूर्धानंमर्माणितेजातवेदाइतिगुह्यजठरहृदयमुखशिरःसुविन्यस्यात्मरक्षाकर्तव्येतिचतुर्थः ॥ ॥ शिवसंक
ल्पंहृदयंपुरुषसूक्तंशिरःउत्तरनारायणंशिखाअप्रतिरथंकवचंशतरुद्रियमस्त्रं इतिपंचमः ॥ ॥ प्रजननेब्रह्मातिष्ठतु पादयो
र्विष्णुस्तिष्ठतु हस्तयोर्हरस्तिष्ठतु बाह्वोरिंद्रस्ति० जठरेअग्निस्ति० हृदयेशिवस्ति० कंठेवसवस्तिष्ठंतु वक्त्रेसरस्वतीति० नासिक

योर्वायुस्ति० नयनयोःसूर्याचंद्रमसौतिष्ठतां कर्णयोरश्विनौदेवौतिष्ठतां ललाटेरुद्रास्तिष्ठतु मूर्ध्न्यादित्यस्ति० शिरसिमहादे वस्ति० शिखायांचामुंडाति० पृष्ठेपिनाकीति० पुरतःशूलीति० पार्श्वयोःशिवाशंकरौतिष्ठतां सर्वतोवायुस्ति० ततोबहिःसर्व तोग्निर्ज्वालामालापरिवृतस्ति० सर्वेष्वंगेषुसर्वादेवतायथायथास्थानंति० मांरक्षंतु इतिषष्ठः ॥ ॥ एवंसर्वत्रशातातपमते ॥ अभिषेकेएवबौधायनमतइत्युक्तं ॥ एषुन्यासेषुशाखांतरेविशेषउक्तः ॥ यथा ॥ प्रथमन्यासेहृदयानंतरंनमोगणेभ्यइतिपृष्ठेइ ति पार्श्वानंतरंविज्यंधनुरितिजठरइति जान्वंतरंसंसृष्टजिदितिजंघयोर्विश्वंभूतमितिगुल्फयोरिति ॥ प्रजननादिन्यासेचमू र्ध्न्यादित्यास्तिष्ठंत्वित्यनंतरंशिरसिमहापुरुषस्तिष्ठतु शिखायांचामुंडातिष्ठत्वितिन्यासानंतरंहिरण्यगर्भोयःप्राणतोब्रह्मजज्ञानं महीद्यौरुपश्वासयाग्नेनययातेअग्नइमंयमेत्यष्टौमंत्रान्जपेत् ॥ अथात्मानमित्यादिभिध्यायेत् ॥ ततऋषिदैवतच्छंदांसिस्म रेत् ॥ तदभावेजपादेर्वैयर्थ्यस्मरणात् ॥ तत्रसग्रहपक्षेमंत्राणामृष्यादीनिपूर्वोक्तमात्स्यग्रहस्थापनप्रकारेणज्ञेयानिविस्तरभि यानात्रपुनःसंगृहीतानि ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥

## ॥ २८२ ॥ अथरुद्रस्यछंदर्ष्यादि ॥

श्रीः ॥ ततोरुद्रस्यर्ष्यादिस्मरेत् ॥ अथनमकानांप्रथमानुवाकेआद्यायाःकश्यपोद्वितीयायाआत्रेयस्तृतीयायाःकश्यपस्ततोद्व योर्गौतमस्ततएकस्याःकण्वस्ततोद्वयोर्मरुत्वांस्ततएकस्याभगवांस्ततस्तिसृणांनारदस्ततस्तिसृणांभगवान् द्वितीयानुवाकस्यमंडू कस्तृतीयानुवाकस्यभगवांश्चतुर्थानुवाकस्यदुर्वासाःपंचमषष्ठानुवाकयोर्भगवान्सप्तमानुवाकस्यहेमकोशोष्टमानुवाकस्यनवमानु वाकेचनमोवःकिरिकांतंभगवानवशिष्टस्याग्निर्दशमानुकेप्रथमस्यपुलहोद्वितीयस्यस्कंदस्ततोद्वयोर्मांडव्यस्ततएकस्यदेवराडूतत

एकस्यभगवांस्ततएकस्यात्रिस्ततएकस्यवैयाघ्रस्ततएकस्यभगवांस्ततएकस्यवैराजस्ततएकस्यपुलहस्ततएकस्यनारदस्ततएकाद
शानुवाके आद्यानांचतुर्णांदुर्वासास्ततआसमाप्तिदेवलइत्यृषयः ॥ प्रथमानुवाकेआद्यस्यरुद्रस्ततएकस्यशंभुस्ततएकस्यस्कंदा
त्मारुद्रस्ततोद्वयोरुद्रस्ततएकस्यशंभुस्ततोद्वयोरादित्यात्मारुद्रस्ततएकस्यशंभुस्ततस्तिसृणांरुद्रस्ततस्तिसृणांभगवांस्ततोद्वितीय
तृतीयानुवाकयोरुद्रश्चतुर्थपंचमषष्ठानुवाकानांशंभुःसप्तमानुवाकस्यरुद्रोष्टमानुवाकस्य नमोवःकिरिकेभ्यइत्यंतस्यनवमस्यभ
गवानवशिष्टस्यरुद्रोदशमानुवाकेचतुर्णांरुद्रस्ततएकस्यनंदीश्वरात्मारुद्रस्ततएकस्यभगवांस्ततएकस्यशंभुस्ततएकस्यरुद्रस्ततए
कस्यभगवांस्ततोद्वयोःशंभुस्ततोवशिष्टानांरुद्रइतिदेवताः॥ प्रथमानुवाकेआद्येअनुष्टुभौततएकास्वराडनुष्टुपततएकानिचृदनुष्टु
पततएकानुष्टुप्ततएकाबृहदनुष्टुपततएकास्तारपंक्तिस्ततएकापट्पदाजगती ततःसप्तानुष्टुभस्ततोष्टानुवाकयजूंषिततएकाप्रस्ता
रपंक्तिःपंचपदापंक्तिर्वाततएकानुष्टुप्ततश्चतस्रोजगत्यस्ततस्तिस्रस्त्रिष्टुभस्ततएकापंचपदात्रिष्टुप्महाबृहतीवा ततोद्वादशानुष्टु
भस्ततस्त्रीणियजूंषिततस्तिस्रोनुष्टुभस्ततएकस्ययजुरितिच्छंदांसि ॥ अथचमकानामग्निःकांडऋषिःआद्याग्नावैष्णवीगायत्री
शिष्टानांवाजादयोन्नादिविशेषादेवतायजुश्छंदःजपेविनियोगइति ॥ एतदंतंविधाययजमानाचार्यब्रह्मसन्निधावृत्विग्भिःसाव
धानैःसंलापांतरमकुर्वद्भिःश्रीरुद्रंध्यायद्भिर्यजमानस्यकामःसिध्यतामितिचिंतयद्भिश्च स्वरवर्णविवेकपूर्वकंजपःकार्यः ॥ हो
मरुद्रेप्येवमेवहोमःकार्यः ॥ अभिषेकरुद्रेतुषडंगन्यासानंतरंअग्निमीवाचिश्रितइत्यादियथालिंगमंगानिसंस्पृश्यात्मानंमहेश्वररू
पंगंधपुष्पाक्षतधूपदीपैःप्रत्यक्षैर्मानसैर्वाआराध्य आराधितोमनुष्यैस्त्वमितित्र्यंबकंयजामहइतिआत्वावहंतुहरयःसचेतसइति
सद्योजातंप्रपद्यामीतिचशिवमावाह्य सद्योजातायवैनमोनमइत्यासनंदत्वा भवेभवेनातिभवेभवस्वमामितिपाद्यंदत्वा भवोद्भ

वाग्नेनमइत्यापोहिष्ठेतितिसृभिश्चस्नानंदत्वा भवंदेवंतर्पयामि शर्वंदेवंईशानंदेवंपशुपतिंदेवंरुद्रंदेवंउग्रंदेवंभीमंदेवंमहांतंदेवंत पयामीतितर्पयित्वाज्येष्ठायनमइत्याचमनीयंदत्वाश्रेष्ठायनमइतिमधुपर्कंकालायनमइतिगंधंकलविकरणायनमइतिपुष्पंसर्वभू तदमनायनमइतिधूपंमनोन्मनायनमइतिदीपं भवोद्भवायनमइतिनैवेद्यंदत्वातूष्णीमाचमनीयंदत्वाअष्टौपुष्पाणिभवादिनाम भिर्भवायदेवायनमइत्येवमादिप्रयोगेणसमर्प्यअघोरेभ्योथघोरेभ्यइतिमंत्रेणोपस्थाय हिरण्यरजतताम्रादिपात्रेणसंततधारया दुग्धादिनोदकेनवाभिषिच्यपुनःपूजयेदिति ॥ इतिरुद्रजपादौचसर्वसाधारणएषविधिः ॥ रुद्रस्यनमकाध्यायात्मकस्यरूपमा त्रजपादौचमकाध्यायोपिसकृदावर्तनीयः ॥ रुद्रीजपादौतुप्रत्यावृत्त्यैकैकश्चमकानुवाकोयोजनीयः ॥ एतादृश्याश्चरुद्र्याएका दशावृत्तौलघुरुद्रः ॥ तदेकादशावृत्तौमहारुद्रः ॥ तदेकादशावृत्तौअतिरुद्रःसंपद्यते ॥ तत्रजपेभिषेकेचनमोवःकिरिकेभ्यइ ति सहस्राणिसहस्रशइति नमोरुद्रेभ्योयेपृथिव्यामितिचैतेयथाध्ययनमेवपठनीयाः ॥ होमेतुविशेषोवक्ष्यते ॥ रुद्रस्यसंकल्पा दिब्राह्मणभोजनपर्यंतंयजमानाचार्यब्रह्मर्त्विजांनियमाः हविष्यभोजनंब्रह्मचर्यंभूशय्यापतिताद्यसंभाषणमक्रोधःशुचितेत्याद योद्रष्टव्याः ॥ एवंजपंसमाप्यहृदयादिप्रागुक्तंपंचांगन्यासंकृत्वारुद्रायजपंनिवेदयेत् ॥ ॥ ७ ॥ ॥ ७ ॥

## ॥ २८३ ॥ अथमंडपकुंडस्थंडिलादिप्रमाणं ॥

श्रीः ॥ तदंगहोमार्थंहोमरुद्रेचप्रधानहोमार्थंमंडपंकुंडंचकुर्यात् ॥ इदंचद्वयंहोमांगमेवअनावश्यकंच ॥ करणेफलाधिक्यं ॥ तत्रमंडपोष्टहस्तोदशहस्तश्चकनिष्ठः द्वादशहस्तश्चतुर्दशहस्तश्चमध्यमः षोडशहस्तोष्टादशहस्तश्चोत्तमः ॥ सर्वेचतुरस्राश्चतुर्द्वा राश्चकार्याः ॥ तत्राष्टहस्तादिर्मंडपांस्तावन्मानसूत्रेणप्राच्यादिसाधनपुरःसरंसमचतुरस्रान्साधयित्वा तत्सूत्रंत्रेधाविभागेनपा

लयित्वाबाह्येषुद्वादशसूत्रसंपातेषुद्वादशस्तंभाग्निखनेत् ॥ चतसृषुदिक्षुद्विहस्तचतुरंगुलाधिकद्विहस्ताष्टांगुलाधिकद्विहस्तविस्तृ
तानिद्वाराणिकर्तुंद्वारशाखाख्यंस्तंभद्वयंनिखेयं ॥ एतेचविंशतिस्तंभाःपंचहस्ताःकार्याः ॥ तेषामुपरिचूडासुसरंध्रकाष्ठानिनि
धेयानि ॥ द्वारसंमुखतयाचहस्तमात्राद्बहिःपूर्वादिप्रादक्षिण्यक्रमेणाश्वत्थोदुंबरप्लक्षवटशाखाकृतानिपंचषट्सप्तहस्तोच्छ्रा
याणिअधममध्यमोत्तममंडपेषुहस्तद्वयसपादहस्तद्वयसार्धहस्तद्वयविस्तृतानितोरणानिकार्याणि ॥ तोरणानांचोपरितिर्यक्फ
लकेषुशैवकर्मत्वात्त्रिशूलाकाराःपंचसप्तनवांगुलाःकनिष्ठमध्यमोत्तममंडपेषुमध्येकीलानिखेयाः ॥ मध्यसूत्रसंपातचतुष्टयेचाष्टह
स्ताश्चत्वारःस्तंभाश्चूडासुतिर्यक्सरंध्रकाष्ठसहितानिखेयाः ॥ मध्यत्रिभागेचसौंदर्यार्थंउच्छ्रितंसृजेत् ॥ सर्वेचस्तंभाःपंचमांशे
नसूत्रसंपातस्थानाद्बहिर्निखेयाः ॥ मंडपश्चोपरिपरितश्चद्वारवर्जंयज्ञियतृणादिनिर्मितकटादिभिश्छादनीयइति ॥ मंडपेचम
ध्यमभागेकुंडंकुर्यात् मध्यभागएवकुंडमितिसाधितमन्यत्र ॥ तत्रवक्ष्यमाणग्रहरुद्रहोमाहुतिसंख्याविशेषेणकुंडपरिमाणविशे
षाउच्यंते ॥ तत्रएकोनपंचाशदाहुतिपर्यंतंस्थंडिलमेव ॥ तच्चअष्टादशांगुलादिपरिमाणंतत्रैकोनपंचाशदंगुलादाहस्तांतंचतुर
स्रमंगुलोत्सेधंचतुरंगुलोत्सेधंवा ॥ पंचाशदादिनवनवत्याहुतिपर्यंतंमुष्टिमात्रं ॥ कुंडंतुशताद्येकोनसहस्रपर्यंतंअरत्निमात्रं ॥
सहस्राद्येकोनायुतपर्यंतंहस्तमात्रं अयुताद्येकोनलक्षपर्यंतंद्विहस्तं लक्षाद्येकोनदशलक्षपर्यंतंचतुर्हस्तं दशलक्षाद्येकोनकोटिपर्यंतं
षड्ढस्तं कोटिमारभ्याधिकहोमेष्टहस्तं ॥ तत्रैवाधिकतरहोमेदशहस्तमितिकेचित् ॥ कुंडानिचब्राह्मणक्षत्रियविशांचतुरस्रवृत्त

१ सिद्धाः२ ४वेदाग्नयो३ ४भूचतुर४ १इभयुगा४ ८रामबाणा५ ३गजाक्षाः५ ८त्र्यंगाः६ ३शैलर्तवो६ ७व्यद्रय७ २इषुगिरयो७ ५हस्ततोमानमत्र । अंगु
ल्योऽथोयवाःस्युःख०ख०शर५ख०शरा५ग६ङ्घि४शैला७अ०शैला७अ०व्यसेकुंडसिद्ध्यैहरिपदविधु १० हस्तांतमेवंबुधोक्ताःइतिकुंडदीपेंगुलमानं ॥

चंद्रार्धाभानिकार्याणि ॥ सर्वकार्यसिद्धिपुत्रसुखावाप्तिवैरिनाशशांतिमारणच्छेदनवृष्टिरोगनाशाभिचारिकशांतिभूतोत्साद
नादि दशविधकामनायांचतुरस्रयोन्यर्धचंद्रत्र्यस्रवृत्तषडस्रपद्माष्टास्रसप्तास्रपंचास्राणिसर्वेषांकार्याणि ॥ काम्यस्यनित्यनैमि
त्तिकबाधकत्वात् ॥ एतेषांचकरणप्रकारोन्यतोऽवगंतव्यः गौरवभयान्नेहोच्यते ॥ कुंडानांचखननंसूक्ष्मद्रव्यहोमेपंचदशचतु
र्विंशांशैःकार्यं ॥ स्थूलद्रव्येतुविस्तारसमंकार्यं ॥ ततश्चतुर्विंशांशंकंठंत्यक्त्वानवभिश्चतुर्विंशांशैर्मेखलात्रयंकुर्यात् ॥ तत्रबहि
र्मेखलाद्व्यंगुलोत्सेधविस्तारा द्वितीयातदुपरित्र्यंगुलोत्सेधविस्तारा तृतीयातदुपरिचतुरंगुलोत्सेधविस्तारा ततःपश्चिममेखलो
परिकुंडविस्ताराधदीर्घाकुंडविस्तारतृतीयांशविस्तृतामश्वत्थदलाकारांकुंडचतुर्विंशांशकृतमेखलापश्चिमतःप्रविष्टनालाग्रामु
भयतोमृत्पिंडद्वययुतांकुंडमध्यप्रविष्टाग्रांचतुर्विंशांशोत्सेधांपश्चादुन्नतांयोनिंभूमितोरचयेत् ॥ तत्रद्वितीयमेखलायांपरिधि
परिस्तरणार्थमंतरंरक्षेत् ॥ ततःकुंडमध्येकुंडचतुर्विंशांशद्वयोच्चमंशचतुष्टयविस्तृतंतत्तत्कुंडाकारंपद्माकारंवानाभिंकुर्यात् ॥
तत्रचयोनिकुंडेयोनिंपद्मकुंडेचनाभिंनकुर्यात् ॥ इहकुंडमेखलायोन्यादौपक्षांतराणिगौरवभयान्नोक्तानि ॥ कुंडाशक्तौतुएक
हस्तादिप्रमाणंचतुरस्रंतत्तद्धोमेस्थंडिलंकार्यं ॥ स्थंडिलेचमेखलादिवर्तुलाद्याकारताचनभवति ॥ अंगुलोत्सेधचतुरस्रत्वादि
नानैराकांक्ष्याद्विरोधाच्चेतिसंक्षेपः ॥ ततोमंडपांतरीशानदिग्भागेरुद्रवेदिकांसग्रहपक्षेग्रहवेदिकांचकुर्यात् ॥ तत्रचदक्षिणतो
ग्रहवेदिकाउत्तरतोरुद्रवेदिका ॥ ग्रहाणांपूर्वांगत्वेनप्राक्पूजनीयत्वेनपश्चात्यरुद्रपूजायाउदक्संस्थत्वापेक्षणात् ॥ वेदिश्चद्व्यं
गुलत्र्यंगुलोच्छ्रायद्व्यंगुलविस्तारवप्रद्वययुता वप्रोपरिसप्तांगुलोत्सेधहस्तविस्तृताचसुश्लक्ष्णाकार्या ॥ सर्वशांतिकपौष्टिकानांग्रह
मखविकृतित्वात् ॥ इतिमंडपकुंडस्थंडिलादिप्रमाणं ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥

श्रीः ॥ एवंमंडपकुंडादिनिर्मायजपरुद्रेजपांतेशुभेहनिहोमरुद्रेतुआचार्यादिपूजांतेशुभेकालेमंडपपूजाद्युपयुक्तसंभारान्संभृत्य ततःशुक्लांबरधरःशुक्लमाल्यानुलेपनःसपत्नीकःसाचार्यर्त्विक्कोयजमानोमंगलघोषेण संपूर्णकलशहस्तोभद्रंकर्णेभिरितिमंत्रघोषेणमंडपंप्रदक्षिणीकृत्यपश्चिमद्वारेणप्रविशेत् ॥ ततोमंडपांतःपश्चिमदेशेउपविश्याचम्यदेशकालौस्मृत्वास्वयंब्राह्मणद्वारावाकृतस्यामुकरुद्रस्यजपांगत्वेन समग्रपक्षेणदशांशेनशतांशेनवावक्ष्यमाणद्रव्येष्वमुकद्रव्येणाहंब्राह्मणद्वारावायथाशक्तिहोमंकरिष्यइतिजपरुद्रेसंकल्पयेत् ॥ ततोजपरुद्रेहोमरुद्रेचगणेशपूजनंमंडपदेवतास्थापनादिचकरिष्यइतिसंकल्प्यषोडशोपचारैर्गणपतिंसंपूज्यततोगौरसर्षपैःसर्वतोमंडपांतरवकिरेत् ॥ तत्रमंत्राः ॥ यदत्रसंस्थितंभूतंस्थानमाश्रित्यसर्वदा ॥ स्थानंत्यक्त्वातुतत्सर्वंयत्रस्थंतत्रगच्छतु ॥ अपक्रामंतुभूतानिपिशाचाःशर्वतोदिशं ॥ सर्वेषामविरोधेनब्रह्मकर्मसमारभे ॥ इति ॥ ततःपंचगव्येनकुशैःसर्वत्रप्रोक्षणंकार्यं ॥ शुचीवोहव्याइतितृचेनआपोहिष्ठेतितृचेनच ॥ ततःकृतांजलिःस्वस्त्ययनंतार्क्ष्यमितिमंत्रद्वयंजपेत् ॥ ततोवास्तुपूजनं ॥ आचार्योवास्तुहोमार्थंमंडपनैर्ऋत्येस्थंडिलंविधायतदीशानभागेहस्तमात्रांमृदावेदिंविधायईशानादिकोणचतुष्के ॥ विशंतुभूतलेनागा० इत्यादिशंकुरोपणबलिदानवास्तुदेवतावाहनादिदेवप्रतिष्ठायामुक्तवत्कुर्यात् ॥ ततआचार्योग्निस्थापनाद्याज्यभागांतंकृत्वोदुंबरादियज्ञियसमित्तिलाज्यचरून्प्रत्येकमष्टशतमष्टाविंशतिमष्टौवा प्रणवादिनमोंततत्तन्नाममंत्रैर्जुहुयात् ॥ द्रव्याणांविकल्पइतिपदार्थादर्शे ॥ ततोवास्तुंवास्तोष्पतेप्रतिजानीह्यस्मानितिचतुर्भिस्तैरेवद्रव्यैःप्रति

द्रव्यं २८ पुनस्तैरेवचतुर्भिर्मंत्रैर्वास्तोष्पतेध्रुवास्थूणामितिच ॐवास्तोष्पतयेनमइतिवापंचबिल्वफलानितद्बीजानिवाजुहुया
त् ॥ ततःस्विष्टकृदादिपूर्णाहुत्यंतंकृत्वाब्रह्मादिभ्यःपायसेननाममंत्रैर्बलिंदत्वापावमानेनराक्षोघ्नेनचसूक्तेनमंडपंत्रिसूत्र्यावेष्ट
यित्वाशांतिकलशोदकेन यजमानमभिषिच्यस्नापयेत् ॥ ततोयजमानउत्तरपूजांविधायदेवताविसृज्यब्राह्मणान्भोजयेदिति॥
एतावत्यशक्तौबलिमात्रंदद्यात् ॥ अतएवशारदातिलकेपायसान्नैर्बलिंहरेदित्येवोक्तंनहोमादीतिसांप्रदायिकाः ॥ तस्मिन्पक्षेमं
डलदेवतापूजनंबलिदानंसूत्रवेष्टनंचेत्यनुष्ठानमिति ॥ ( मंडपप्रतिष्ठापूर्वंपंचकुंडीदेवप्रतिष्ठाप्रयोगेयथावदुक्तेतिनात्रपुनःसंगृ
हीता )॥ ततोयजमानोऽग्न्यायतनाद्दक्षिणतउपविशेत् ॥ आचार्यस्तुमंडपेकुंडपश्चिमतउपविश्याचम्यप्राणानायम्यामुकक
र्मण्यग्निप्रतिष्ठांकरिष्ये ॥ तदंगतयाकुंडसंमार्जनमेखलायोनिदेवतास्थापनपूजनादिकरिष्येइतिसंकल्प्याग्न्यायतनंसंमृज्यकु
शोदकेनसंप्रोक्ष्यइदंविष्णुरितिमंत्रेणोपरिमेखलायांश्वेतवर्णालंकृतायांविष्णुमावाह्यपूजयेत् मध्यमेखलायांरक्तवर्णालंकृतायां
ब्रह्मजज्ञानमितिब्रह्माणं अधोमेखलायांकृष्णवर्णालंकृतायांकद्रुद्रायेतिरुद्रं योन्यांरक्तवर्णालंकृतायांगौरीं ॥ ततःस्वशाखोक्त
मार्गेणाग्निंप्रतिष्ठाप्यग्रहवेदिकायांसर्वतोभद्रंविरच्यब्रह्मादीन्स्थापयेत् ॥ तत्तन्मंत्रैरेवक्रमेणपूजयित्वातत्तन्मंत्रैर्वानाममंत्रैर्वा
प्रत्येकंदशदशाज्याहुतीर्हुत्वाउपहारंनिवेदयेत् ॥ क्षीरौदनंब्रह्मणे घृतान्नमुदकाभिमंत्रितमिंद्राय आज्यौदनमग्नये माषान्नं
यमाय कृष्णव्रीह्यन्नंपुराणघृताक्तंनिर्ऋतये नवनीतौदनंवरुणाय यवौदनंवायवे प्रैयंगवौदनंसोमाय गावोधुकमीशाना
य अन्येभ्योयथालाभंसर्वेभ्योवानैवेद्यशेषान्नेनदिग्बलिःकार्यइति ॥ ततोवेद्यांनवंवस्त्रंनिधायतत्रकर्णिकामध्येष्टदलंविधायत
त्रग्रहमंडलानिविलिख्यनवग्रहदेवतास्थापनंमात्स्यग्रहयज्ञक्रमेणकृत्वाइंद्रादिलोकपालावाहनांतेऽत्रविशेषः ॥ रवेःपूर्वेशेषं

सोमस्याग्रेवासुकिं भौमस्याग्रेतक्षकं बुधोत्तरेकर्कोटकं बृहस्पतेरग्रेपद्मं शुक्रोत्तरेमहापद्मं शनिपश्चिमेशंखपालं राहोःपुरःकंब
लं केतोःपुरःकुलिकंचनाममंत्रेणस्थापयेत् ॥ ततोबहिर्भूगृहे अश्विन्यादिसप्तनक्षत्राणिविष्कंभादिसप्तयोगाःववबालवकरणे
सप्तद्वीपानिऋग्वेदश्च ॥ दक्षिणेपुष्यादिसप्तनक्षत्राणिधृत्यादिसप्तयोगाःकौलवतैतिलकरणेसप्तसागराःयजुर्वेदश्च ॥ पश्चिमे
स्वात्यादिसप्तनक्षत्राणिवज्रादिसप्तयोगाः गरवणिजकरणेसप्तपातालानिसामवेदश्च ॥ उत्तरेअभिजिदादिसप्तनक्षत्राणिसा
ध्यादिषड्योगाःविष्टिकरणंभूराद्याःसप्तलोकाःअथर्ववेदश्च ॥ वायव्येध्रुवःसप्तर्षयश्च ॥ ततोयथावकाशंगंगाद्याःसप्तसरितःस
प्तकुलाचलाः अष्टौवसवः एकादशरुद्राः द्वादशादित्याः एकोनपंचाशन्मरुतःषोडशमातरः षड्ऋतवः द्वादशमासाः द्वेअयने
पंचदशतिथयः षष्टिसंवत्सराः सुपर्णाः नागाः सर्पाः यक्षाः गंधर्वाः विद्याधराः अप्सरसः रक्षांसि भूतानि मनुष्याः इत्ये
तेस्थाप्याः ॥ अत्रकेवलनवग्रहाःस्थाप्याइत्येकःपक्षः ॥ विनायकादिपंचलोकपालांताद्वात्रिंशद्देवताइत्यन्यः ॥ अष्टौदिक्पा
लसहिताइत्यन्यः ॥ शेषादिमनुष्यांतैःसहिताइतिवा एतेषुपक्षेषुबहुत्वाल्पत्वेनतारतम्यंद्रष्टव्यं ॥ ततःपौरुषसूक्तन्यासपं
चांगन्यासपूर्वकंषोडशोपचारैःपूजनंकुर्यात् ॥ अशक्तौ ॐ आदित्यायनमइदमासनमित्याद्यावाहनक्रमेणप्रणवादिनमोंतैर्नाम
मंत्रैस्तत्तद्दैवत्यैर्वाप्रत्येकंपूजयेत् ॥ एतावत्यशक्तावावाहितादित्यादिदेवताभ्योनमइतिमंत्रेणवासर्वान्पूजयेत् ॥ ततोग्रहवेदी
शानभागेअव्रणमकालकंबहिर्दध्यक्षतविभूषितंचंदनमालाविभूषितंकलशंमहीद्यौरित्यादिग्रहयज्ञवत्संस्थाप्यसंपूज्यप्रार्थयेच्च ॥
ततोरुद्रपीठेचतुर्विंशतिरेखात्मकमष्टलिंगतोभद्रंविरचयेत् ॥ अत्रापिप्रागुक्तात्रह्माद्यामंडलदेवताःस्थापयेत् ॥ तदुपरि
पीठादौरुद्रयंत्रंरचयेत् ॥ ( इदंयंत्रप्रारंभेयथावदुपकल्पितमस्त्यनेनैवक्रमेण ) ॥ छ ॥ ॥ छ ॥

## ॥ २८५ ॥ अथरुद्रयंत्रंस्कांदोक्तम् ॥

श्रीः ॥ प्रणम्यजगतामीशमुमादेहार्धधारिणं ॥ यंत्रोद्धारमहंवक्ष्येरुद्रकल्पानुसारतः ॥ मध्येवृत्तंसमालिख्यतन्मध्येचदशास्त्रकं॥ बहिरष्टदलंपद्मंततःषोडशपत्रकं ॥ चतुर्विंशतिपत्राढ्यंद्वात्रिंशत्पत्रकंतथा ॥ चत्वारिंशत्पत्रकंतुवृत्तंसूर्यसमप्रभं ॥ पंचपद्मात्मकंवृत्तंचतुरस्रंचभूगृहं ॥ सत्वंरजस्तमइतित्रिगुणैःपरितोवृतं ॥ चतुर्द्वारंद्वारदेशेबहिर्नागसमावृतं ॥ रुद्रपीठमितिख्यातंदेवतास्तत्रविन्यसेत् ॥ चत्वारिंशच्छतंचैकंदेवतानामुदाहृतं ॥ कर्णिकामध्यदेशेतुरुद्रंपंचास्यमालिखेत् ॥ नमोभगवतेरुद्रायेतितारादिकंन्यसेत् ॥ सोयंदशाक्षरोमंत्रःसर्वकामार्थसिद्धिदः ॥ प्रणवादिनमोंतानिपंचास्यानिततःपरं ॥ सद्योजातंवामदेवमघोरंतदनंतरं ॥ ततस्तत्पुरुषंप्रोक्तमीशानंपंचमंक्रमात् ॥ प्रधानमिदमाख्यातंप्रथमावरणेततः ॥ दलेष्वष्टसुनंद्यादीन्पूर्वादिक्रमतोन्यसेत् ॥ पूज्यपूजकयोर्मध्येप्राचीस्याद्यंत्रलेखने ॥ आदौनंदीमहाकालगणेशवृषभान्क्रमात् ॥ अनंतरंभृंगिरिटीस्कंदोमाचंडसंज्ञकाः ॥ षोडशारेततःपद्मेद्वितीयावरणेयजेत् ॥ अनंतंचतथासूक्ष्मंशिवंचैकपदंतथा ॥ एकरुद्रंत्रिमूर्तिंचश्रीकंठंवामदेवकं ॥ ज्येष्ठंश्रेष्ठंतथारुद्रंकालंकलविकरणं ॥ बलंबलविकरणंचबलप्रमथनंतथा ॥ तृतीयावरणेपद्मेचतुर्विंशद्दलेतथा ॥ अणिमामहिमाचैवगरिमालघिमातथा ॥ प्राप्तिःप्राकाम्यमीशित्वंवशित्वंचाष्टसिद्धयः ॥ ततःपरंक्रमेणैवन्यसेद्ब्राह्म्यादिदेवताः ॥ ब्राह्मीमाहेश्वरीचैवकौमारीवैष्णवीतथा ॥ वाराह्यैंद्रीचचामुंडाचंडिकाचेतिताःक्रमात् ॥ ततोष्टस्वसितांगादीन्भैरवान्विन्यसेत्पुनः ॥ असितांगोरुरुश्चंडःक्रोधउन्मत्तभैरवः ॥ कालभीषणसंहारभैरवाश्चाष्टकीर्तिताः ॥ द्वात्रिंशत्पत्रकेपूर्वंभवाष्टकमुदाहृतं ॥ भवःशर्वश्चईशानस्ततःपशुपतिःपरं ॥ रुद्रश्चोग्रश्चभीमश्चमहांश्चैवततःपरं ॥ शेषोनंतोवासुकिश्चतक्षक

अकुलीरकः ॥ कर्कोटकःशंखपालःकंबलाश्वतरस्तथा ॥ ततोष्टसुन्यसेद्वैन्यंपृथुंहैहयमर्जुनं ॥ शाकुंतलेयंभरतंनलंराममितिक्रमात् ॥ ततःकुलाचलानष्टौदलेष्वष्टसुविन्यसेत् ॥ हिमवान्निषधोविंध्योमाल्यवान्पारियात्रकः ॥ मलयोहेमकूटश्चगंधमादनसंज्ञकः ॥ चत्वार्यावरणान्येवंपंचमावरणंततः ॥ चत्वारिंशद्दलेपद्मेपंचमावरणेन्यसेत् ॥ इंद्राद्यष्टौलोकपालानष्टसुक्रमतोलिखेत् ॥ इंद्रमग्निंयमंचैवनिर्ऋतिंवरुणंतथा ॥ वायुंकुबेरमीशानंदलेष्वष्टसुविन्यसेत् ॥ इंद्रादिलोकपालानामष्टौशक्तीस्ततोन्यसेत् ॥ शचीस्वाहाचवाराहीखड्गिनीवारुणीतथा ॥ मृगारूढाचकौबेरीशूलिनीचाष्टमीतथा ॥ ततोष्टानामायुधानिवज्रादीन्यष्टसुन्यसेत् ॥ वज्रंशक्तिंदंडखड्गौपाशांकुशगदाअपि ॥ त्रिशूलंलोकपालानामायुधानिक्रमान्न्यसेत् ॥ ततोष्टौवाहनान्येषामष्टसुक्रमतोन्यसेत् ॥ ऐरावतंतथामेषंमहिषंश्वेतसंज्ञकं ॥ मकरंचमृगंचैवनरंचवृषभंतथा ॥ ऐरावतादयोप्यष्टदिग्गजास्तदनंतरं ॥ ऐरावतःपुंडरीकोवामनःकुमुदोंजनः ॥ पुष्पदंतःसार्वभौमःसुप्रतीकश्चदिग्गजाः ॥ भूगृहांतःपुनर्लेख्याःपंचपद्मात्मकाद्बहिः ॥ इंद्रंविन्यस्यपूर्वस्यामाग्नेय्यामग्निमेवच ॥ दक्षिणस्यांयमंचैवनैर्ऋत्यांनिर्ऋतिंतथा ॥ प्रतीच्यांवरुणंवायुंवायव्यांविन्यसेत्ततः ॥ कुबेरंचैवकौबेर्यामीशान्यामीशमालिखेत् ॥ विरूपाक्षंतुविन्यस्येदाग्नेय्यामग्नियोगतः ॥ नैर्ऋत्यांनिर्ऋतेर्योगेविश्वरूपंचविन्यसेत् ॥ वायव्यांवायुयोगेचलिखेत्पशुपतिंतथा ॥ ईशान्यामूर्ध्वलिंगंचविन्यसेदीशयोगतः ॥ प्रागादिक्रमतोलेख्याःशेषाद्याभूगृहाद्बहिः ॥ विप्रवर्णंश्वेतरूपंसहस्रफणमंडितं ॥ शेषंविन्यस्यपूर्वस्यांपूजयेदुपचारकैः ॥ तक्षकंवैश्यवर्णंचनीलंपंचशतैःफणैः ॥ युक्तमुत्तुंगकायंचआग्नेय्यांदिशिविन्यसेत् ॥ अनंतंविप्रवर्णंचतथाकुंकुमवर्णकं ॥ सहस्रफणसंयुक्तंदक्षिणस्यांप्रपूजयेत् ॥ वासुकिंक्षत्रियंपीतवर्णंसप्तशतैःफणैः ॥ युक्तमुत्तुंगकायंचनैर्ऋत्यांदिशिविन्यसेत् ॥ शंखपालंक्ष

त्रियंचपीतंसप्तशतैःफणैः ॥ युक्तमावाह्यवारुण्यांपूजयेद्गंधधूपकैः ॥ महापद्मंवैश्यवर्णंयुक्तंपंचशतैःफणैः ॥ युक्तमुत्तुंगकायं चवायव्यांदिशिपूजयेत् ॥ कंबलंशूद्रवर्णंचकृष्णंत्रिंशत्फणैर्युतं ॥ कौबेर्यांदिशिविन्यस्यपूजयेच्चविधानतः ॥ कर्कोटकंशूद्रव र्णंश्वेतंत्रिंशत्फणैर्युतं ॥ ईशान्यांदिशिविन्यस्यपूजयेद्विधिवत्ततः ॥ रुद्रपीठमिदंसर्वरुद्रकल्पेषुविश्रुतं ॥ शंभुनास्वयमाख्या तंभक्तानुग्रहकाम्यया ॥ कुंकुमागरुकर्पूरैर्भूर्जपत्रेथवापटे ॥ लिखितंपूजयेद्भक्त्यासर्वकामार्थसिद्धये ॥ यंत्रंमंत्रमयंप्रोक्तमा ख्यातादेवतेतिच ॥ पूजनीयंप्रयत्नेनतेनेदंदेवतामयं ॥ अग्निचोरभयंतत्रनचराजभयंक्वचित् ॥ यत्रेदंलिखितंयंत्रंपूज्यतेवि धिवत्सदा ॥ इतिस्कंदपुराणेरुद्रयंत्रं ॥ तद्यथा ॥ कर्णिकायां ॐ नमोभगवतेरुद्रायेतिदशाक्षरः ॥ ततःप्रथमकोष्ठएवप्रागा दिक्रमेणमध्येच ॐ सद्योजातायनमः वामदेवाय अघोराय तत्पुरुषाय ईशानाय ५ ॥ ततःप्रागादिक्रमेणनंदी महाकालः गणेश्वरः वृषभः भृंगिरिटिः स्कंदः उमा चंडीश्वरः ८ इतिप्रथमावरणं ॥ अनंतः सूक्ष्मः शिवः एकपात् एकरुद्रः त्रिमू र्तिः श्रीकंठः वामदेवः ज्येष्ठः श्रेष्ठः रुद्रः कालः कलविकरणः बलविकरणः बलः बलप्रमथनः १६ इतिद्वितीयं ॥ अणि मा महिमा लघिमा गरिमा प्राप्तिः प्राकाम्यं ईशिता वशिता ब्राह्मी माहेश्वरी कौमारी वैष्णवी वाराही ऐंद्री चामुंडा चंडिका असितांगभैरवः रुरुभैरवः चंडभैरवः क्रोधभैरवः उन्मत्तभैरवः कपालभैरवः भीषणभैरवः संहारभैरवः २४ इ तितृतीयावरणं ॥ भवः शर्वः ईशानः पशुपतिः रुद्रः उग्रः भीमः महान् शेषः अनंतः वासुकिः तक्षकः कुलीरः कर्कोटकः शंखपालः कंबलाश्वतरः वैन्यः पृथुः हैहयः अर्जुनः शाकुंतलेयः भरतः नलः रामः हिमवान् निषधः विंध्यः माल्यवान् पारियात्रकः मलयः हेमकूटः गंधमादनः ३२ इतिचतुर्थं ॥ इंद्रः अग्निः यमः निर्ऋतिः वरुणः वायुः कुबेरः ईशानः

शची स्वाहा वाराही खड्गिनी वारुणी वायवी कौबेरी ईशानी वज्रं शक्तिः दंडः खड्गः पाशः अंकुशः गदा त्रिशूलः ऐरावतः मेषः महिषः प्रेतः मकरः हरिणः नरः वृषभः ऐरावतः पुंडरीकः वामनः कुमुदः अंजनः पुष्पदंतः सार्वभौमः सुप्रतीकः ४० इतिपंचमं ॥ एवंपंचपद्मानिकृत्वा बहिश्चतुष्कोणंभूगृहं ॥ तत्रपूर्वेइंद्रः आग्नेय्यामग्निः विरूपाक्षश्च दक्षिणे यमः नैर्ऋत्यांनैर्ऋतिःविश्वरूपश्च पश्चिमेवरुणः वायव्यांवायुःपशुपतिश्च उत्तरेकुबेरः ईशान्यामीशानः ऊर्ध्वलिंगंच ॥ ततो भूगृहाद्बहिः पूर्वेविप्रवर्णंश्वेतंसहस्रफणंशेषंपूजयेत् ॥ वैश्यवर्णंनीलंपंचशतफणभूषितंतक्षकंआग्नेय्यां ॥ विप्रवर्णंकुंकुमाभंसहस्रफणमनंतंदक्षिणे ॥ क्षत्रियवर्णंपीतंसप्तशतफणयुतंवासुकिंनिर्ऋत्यां॥ क्षत्रियवर्णंपीतंसप्तशतफणयुतंशंखपालंपश्चिमे॥ वैश्यवर्णंनीलंपंचशतफणयुतंमहापद्मंवायव्यां ॥ शूद्रवर्णंकृष्णंत्रिंशत्फणयुतंकंबलमुत्तरे ॥ शूद्रवर्णंश्वेतंत्रिंशत्फणयुतंकर्कोटकमीशान्यां ॥ एतादेवताःप्रणवादिनमोंतैर्नामभिरावाह्यपूज्याः ॥ इतिस्कांदानुसारेणरुद्रपीठदेवताः ॥ ॥ ततोरुद्रपीठादीशानदिग्भागेपूर्ववत्कलशंसंस्थाप्यरुद्रजपार्थत्वेनब्राह्मणंवृणुयात् ॥ ततआचार्योग्निसमीपमेत्याग्नेःपश्चिमतउपविश्यद्वेतिस्रोवासमिधआदायान्वाधानंकुर्यात् ॥ तत्रास्मिन्रुद्रहोमेदेवतापरिग्रहार्थमित्यादिचक्षुषीआज्येनेत्यंतमुक्त्वा सग्रहपक्षेग्रहानमुकसंख्याभिरर्कादिसमिद्भिःचरुपक्षेऽमुकसंख्याभिश्चर्वाहुतिभिःकृतस्यजपस्यदशांशेनामुकद्रव्येणेत्युक्त्वा अधिदेवताद्यंगकत्वपक्षेअधिदेवतादीनमुकद्रव्येणामुकसंख्ययेत्युक्त्वा ॥ रुद्रममुकहोमपक्षेणामुकमंत्रविभागपक्षेणामुकद्रव्येणेत्युक्त्वारुद्रपीठदेवताएकैकाज्याहुत्याशेषेणस्विष्टकृतमित्यादिय़क्ष्यइत्यंतमुक्त्वा व्याहृतिभिःसमिधौसमिधोवाजुहुयात्॥ द्रव्याण्याहुतिसंख्यामंत्रविभागाश्चवक्ष्यंते ॥ ततःपरिसमुह्यपरिस्तरणंकुर्यात् ॥ तच्चद्वितीयमेखलायांपश्चिमेचयोनिरंध्रेकार्यं ॥ शाखांतरी

ब्रह्मणांपरिधिनिधानमप्यत्रैव ॥ ततःपर्युक्षणादिप्रणीतापूरणांतेकृतेआचार्योब्रह्माणंपूर्ववृतमेवासनेदक्षिणतउपवेशयेत् पूर्वं यजमानवृतस्यैवब्रह्मणःपुनर्वरणस्यवैयर्थ्यात् ॥ ततःप्रणीताप्रणयनांतेकृतेग्रहाणांचरुपक्षेतूष्णींनिर्वापादिचरुश्रपणेकृतेआज्यसंस्कारेचरुणातिलादिद्रव्येणचसहाज्यंपर्यग्निकृत्वाज्यासादनाद्याज्यभागांतंकुर्यात् ॥ ततोयजमानोग्नेर्दक्षिणतोब्रह्मणःपश्चिमतउपविश्यसावधानउद्देशत्यागौकुर्यात् ॥ तत्रस्वयमेवचेद्धोमंकरोतितदाप्रत्याहुतिसूर्यायेदंनममेत्यादितत्तद्देवताभ्यस्त्यागंकुर्यात् नोत्सृजइति ॥ श्रद्धावत्कर्तृत्वात् ॥ यदाऋत्विजःप्रतिनिधयोवाहोमंकुर्युस्तदायजमानआज्यभागानंतरंयक्ष्यमाणाःसर्वादेवताउद्दिश्यहोष्यमाणानिचसर्वाणिद्रव्याणिनिर्दिश्यएताभ्योदेवताभ्यइदंद्रव्यमहमुत्सृज्येइतित्यजेत् ॥ बह्वृत्विगादिकर्तृकेहोमेप्रत्याहुतित्यागस्यकर्तुमशक्यत्वात् त्यागपूर्वकत्वाच्चहोमस्य ॥ सर्वहोमानंतरंत्यागस्यायुक्तत्वादिदानीमेवत्यागःकार्यइतिशिष्टाः ॥ ततआचार्यादयःसावधानायजमानाभीष्टसिद्धिंप्रार्थयंतोहोमंकुर्युः ॥ ॥ छ ॥ ॥ छ ॥

## ॥ २८६ ॥ अथहविर्द्रव्याणांनियमः ॥

श्रीः ॥ तत्रसग्रहपक्षेग्रहाणांसमिधः ॥ अर्कःपलाशःखदिरअपामार्गोथपिप्पलः ॥ औदुंबरःशमीदूर्वाकुशाश्चसमिधःक्रमादिति ॥ तत्संख्याचाष्टोत्तरशतमष्टाविंशतिरष्टौवैकैकस्य समिधश्चमधुसर्पिर्दधिरूपत्रिमध्वक्ताःकार्याः दधिस्थानेदुग्धंवा चरुस्तुकृताकृतः करणपक्षेपिप्रत्येकमेकाष्टाष्टाविंशत्यष्टोत्तरशताहुतिपक्षाः तत्रएकाहुतिपक्षेस्रुचावदानधर्मेणाचार्योग्नौजुहुयात् अष्टाद्याहुतिपक्षेचतुर्मुष्टिनिर्वापानंतरमनिर्वापेनवाचरुंबहुंनिर्मायाचार्यादयःसर्वेहस्तेनैवजुहुयुः । ततऋत्विजःकृतस्यग्रहजपस्यदशांशेनतिलैर्यवैर्मिश्रितैर्व्रीहिभिर्वाजुहुयुः । स्वतंत्रब्राह्मणपक्षेसएववाजुहुयात् । अधिदेवताद्यंगकत्वपक्षेत्रयोविंशतिदेव

तामांसमिच्चरुतिलादिनासमानसंख्येनजुहुयात् । तत्रसमिधःपालाश्यः मिर्वापेचैतेभ्योनिर्वापः अधिदेवतादीनांच्चसमिच्चरु होमसंख्याग्रहसंख्यातोन्यूनाकार्येतिशिष्टाः । चर्वेकाहुतिपक्षस्त्वत्रापिसाधारणः । एषांसमिधःकनिष्ठपक्षेप्रत्येकंचतस्रश्चत स्रइतिशिष्टाः । समिच्चरुसंख्यासमानैवचैषांतिलादिद्रव्याहुतिसंख्याबोद्धव्या । इंद्राद्यष्टाधिकांगत्वेपिअधिदेवतादिदेवता भ्योपिहोमःकार्यः । ग्रहादीनांचमंत्रास्तच्छंदोदेवतादिचग्रहपीठपूजायामुक्तं । अत्राहुतिप्रमाणं ॥ तत्रसर्वाःसमिधःप्रादेशमा त्राःऋज्व्योनातिशुष्कार्द्राः । तत्रदूर्वाणांतिसृणांतिसृणामेकैकाहुतिः । कुशस्यतुत्र्यादिवहुपत्रस्यैव । अर्काद्यभावेपालाश्यःप्रति निधयः । चरोस्त्वेकाहुतिपक्षेंगुष्ठपर्वमात्रमवदानं अन्यपक्षेषुग्रासमात्रत्वं । तिलादीनांतुप्रसृतिमात्राद्वादशपर्वपूरिकाचेतिप्र माणेउत्तमे अष्टसहस्रमष्टशतंवेतिमध्यमे चतुरशीतिश्चतुःषष्टिर्वेतिकनिष्ठे ॥ अत्राहुतिसंख्या । तत्रनवग्रहसमिधांनवशतीद्वि सप्ततिश्च यद्वाद्विशतंद्विपंचाशच्च अथवाद्विसप्ततिरेव । तेषामेवचरुपक्षेएकाहुतिपक्षेनव अन्यपक्षत्रयेसमित्समानैवसंख्या तिलादीनां जपदशांशस्तुसहस्राणिनवनवशतानिनवतिर्वेति । अधिदेवतादिपक्षेतत्समिधांषट्शतीचतुश्चत्वारिंशच्च एकशतं चतुरशीतिश्चवाद्वानवतिर्वा । चरुपक्षेतस्यषट्शतीचतुश्चत्वारिंशच्चशतंचतुरशीतिश्चवात्रयोविंशतिर्वा । तिलादेस्तुविकल्पेन समिच्चरुसमैवसंख्येति । इंद्रादिपक्षेतत्समिधांद्विशतीचतुर्विंशतिश्चचतुःषष्टिर्वाद्वात्रिंशद्वा । चरुपक्षेतस्यद्विशतीचतुर्विंशति श्चचतुःषष्टिर्वाअष्टौवा । तिलादेस्तुसमिच्चरुसंख्यैवेति तत्तत्पक्षेसर्वाःसंख्याएकीकृत्यमहासंख्याबोद्धव्याः । अत्रचकनिष्ठपक्षा श्रयणेपिसांगतैव मध्यमोत्तमपक्षाश्रयणेतुतत्तत्फलेतारतम्यंद्रष्टव्यं ॥ ॥ ७ ॥ ॥ ७ ॥

## ॥ २८७ ॥ अथरुद्रहोमेमंत्रविभागः ॥

श्रीः ॥ एवंग्रहहोमंविधाय ततःप्रागुक्तन्यासपूर्वकंप्रागुक्तार्षेयादिस्मरणपूर्वकंचश्रीरुद्रंध्यायन्स्वयंजुहुयात् । अशक्तावेवंप्र
तिनिधयोजुहुयुः । पुत्राद्यर्थेमहारुद्रेत्वेवमृत्विजोजुहुयुः । तत्रद्रव्याणिकृष्णतिलाः यवाः मिश्रिताउभये व्रीहयः आज्यंचे
ति । पुत्रार्थंमहारुद्रेत्वाज्यपरिप्लुतादूर्वाः । अयंचहोमःप्रधानभूतेहोमरुद्रेजपरुद्रांगहोमेवारूपादिपंचस्वपिहोमेषु ॥ अथजप
रुद्रस्यांगभूतोहोमस्त्रेधासमग्रहोमोदशांशहोमःशतांशहोमश्चेति । होमरुद्रेतुपंचस्वपिसमग्रहोमएव । तत्रैतेषुत्रिष्वपिपक्षेषु
षड्भिःप्रकारैर्मंत्रविभागः । एकधा१त्रेधा२षोढा३षोडशधा४अष्टाचत्वारिंशद्धा५एकोनसप्तत्युत्तरशतधा६चेति । अयंचनमक
विभागएव । चमकेषुतुएतत्पक्षप्रदर्शनएवविशेषःस्पष्टीभविष्यति । एतत्पक्षप्रदर्शनएवचमकानांसंख्याप्युच्यते । तत्रैकधा
विभागस्तावद्रूपेसमस्तनमकाध्यायेनैकाहुतिःचमकेष्वग्नाविष्णूइत्यृचाएकाहुतिंहुत्वा वाजश्चमइत्यादिसमग्राध्यायेनापराआ
हुतिरिति । यद्वाअग्नाविष्णूइत्येकाएकादशचमकानुवाकैरेकादशेति । ततश्चरूपेसमग्रहोमेएकधाविभागपक्षेतिस्रस्त्रयोदशवाहु
तयोभवंति १ ॥ त्रेधाविभागेपिरूपेआद्यैश्चतुर्भिरनुवाकैरेकाहुतिः अपरैश्चतुर्भिर्द्वितीया शेषैस्तिसृभिस्तृतीया । यद्वानमस्त
इत्यारभ्यसभापतिभ्यश्चवोनमइत्यंतेनैका नमोअश्वेभ्यइत्यारभ्यनमःपार्यायचावार्यायचेत्यंतेनापरा नमःप्रतरणायचेत्यारभ्य
समाप्तिपर्यंतेनतृतीयेतिचमकेपक्षद्वयंप्राग्वत् । ततश्चरूपेसमग्रहोमेत्रेधाविभागपक्षेपंचपंचदशवाआहुतयः २ ॥ षोढाविभा
गेरूपेत्रेधाविभागवदेवाद्यविभागाभ्यामाहुतिद्वयं तृतीयविभागेयएतावंतइत्यृगंतेनतृतीयाआहुतिः नमोरुद्रेभ्योयेपृथिव्यांये
षामन्नमिति नमोरुद्रेभ्योयेंतरिक्षेयेषांवातइति नमोरुद्रेभ्योयेदिवियेषांवर्षमिषवइत्यादिभिर्वाक्यशेषसहितैस्त्रिभिर्यजुर्भिराहुति

त्रयमिति चमकेपूर्ववत्पक्षद्वयं । ततश्चरूपेसमग्रहोमेषोढाविभागपक्षेअष्टावष्टादशवाआहुतयः ३ ॥ षोडशधाविभागेरूपेन
मस्तइत्यारभ्यनमस्तक्षभ्यइत्यंतेनप्रथमाहुतिः रथकारेभ्यश्चवइत्यतोनमःस्वायुधायचेत्यंतेनद्वितीया सुधन्वनेचेत्यतःसहस्रा
णिसहस्रधेत्येतदंतेनतृतीया सहस्राणिसहस्रशइत्यतःतेषाꣳसहस्रयोजनेइत्यर्धर्चप्रत्येकसंबंधेनदशमंत्रैर्दशाहुतयःनमोरुद्रेभ्यइ
तिचप्राग्वत्तिसृभिर्यजुर्भिस्तिस्रइतिचमकेपक्षद्वयमुक्तं । ततश्चरूपेसमग्रहोमेषोडशधाविभागपक्षेअष्टादशाष्टाविंशतिर्वाआहुत
यः ४॥ अष्टचत्वारिंशद्धाविभागेपिरूपे नमस्तइतिप्रथमानुवाकऋग्भिःपंचदशाहुतयः तत्राष्टमोमंत्रःषट्पादःततोष्टभिरनुवाकै
रष्टौ दशमेनुवाकेद्वादशऋग्भिर्द्वादश एकादशानुवाकेप्राग्वद्दशभिर्दश नमोरुद्रेभ्यइतिपूर्ववत्त्रिभिर्यजुर्भिस्तिस्रइति चमकेप्रा
चीनंपक्षद्वयं । ततश्चरूपेसमग्रहोमेपंचाशत्षष्टिर्वाहुतयः ५ । एकोनसप्तत्युत्तरशतधाविभागेपिरूपे तत्रप्रथमानुवाकेपंचद
शर्ग्भिःपंचदशाहुतयः द्वितीयतृतीयचतुर्थानुवाकेषूभयतोनमस्कारैःसप्तचत्वारिंशद्भिर्यजुर्भिःसप्तचत्वारिंशत्पंचमषष्ठसप्त
माष्टमनवमानुवाकेषुपुरस्तान्नमस्कारैर्त्र्यशीतिभिर्यजुर्भिर्त्र्यशीतिः । एष्वपियजुःषुउभयतोनमस्कारत्वंकेचिदिच्छंति तत्रनमो
भवायचरुद्रायचनमइतिपठित्वातमेवनमःशब्दंपुनरावर्त्यनमःशर्वायचपशुपतयेचनमइतिपठेदित्यादिज्ञेयं । तत्रपक्षद्वयेपिनमो
वःकिरिकेभ्यइत्यादिमंत्रचतुष्टयेदेवानाꣳहृदयेभ्यइतिप्रत्येकमावर्तनीयं । अयंचनमोवःकिरिकेभ्यइत्यत्रसहस्राणिसहस्रशइ
त्यत्रनमोरुद्रेभ्योयेपृथिव्यामित्यत्रचयोनुषंगउक्तःसयदाएतैर्मंत्रैःप्रत्येकंहोमस्तदैव । यदातुनैभिःप्रत्येकंहोमस्तदाजपेएकधाहो
मादावभिषेकेपारायणेचयथाध्ययनमेवपाठः । ततोदशमानुवाकेद्वादशर्ग्भिर्द्वादशाहुतयः एकादशानुवाकेप्राग्वद्दशभिर्दश
नमोरुद्रेभ्यइतिचत्रिभिर्यजुर्भिस्तिस्रइतिचमकेचपक्षद्वयंप्रागुक्तं । ततश्चरूपेसमग्रहोमेएकोनसप्तत्युत्तरशतधाविभागपक्षेएको

नसप्तत्युत्तरंसतंएकाशीत्यधिकशतंवा ६ ॥ रूपेदशांशशतांशहोमोनभवति । एवंवक्ष्यमाणदशांशशतांशहोमेऽवशिष्टदशांश
शतांशहोमोनेतिकेचित् । सर्वत्ररूपेआद्यत्रिभागत्रयेदशांशाद्यसंभवेपिउत्तरत्रिभागत्रयेदशांशादिप्राप्तिरस्तीत्यन्ये । अयमेवच
शिष्टैरादृतःपक्षः । तत्ररूपेदशांशहोमेषोडशधाविभागपक्षेआहुतिद्वयंदशांशः । अर्धाधिकेअल्पांतरत्वेनसमस्ताहुतिग्रहणात् ।
तच्चाद्याभ्यांमंत्राभ्यां । यद्वाआद्येनांत्येनचमंत्रेणेतियाज्ञिकाः । तत्रैवाष्टाचत्वारिंशत्पक्षेपंचाहुतयोदशांशः । तत्राद्यैरेवपंच
भिर्यद्वाद्याभ्यांअंत्यैस्त्रिभिरितिपक्षद्वयं । तत्रैवैकोनसप्तत्युत्तरशतमंत्रपक्षेसप्तदशाहुतयोदशांशः । तत्राप्याद्याएवसप्तदश
आद्यानवअंत्याअष्टौवेतिपक्षद्वयं । रूपेएवषष्ठेपक्षेशतांशाहुतिद्वयंप्राग्वन्मंत्राभ्यांज्ञेयं । यत्रसमग्रेणनमकरूपेणहोमस्तत्रैवच
मकाहुतिर्नान्यत्र । तेनैषुत्रिष्वपिपक्षेषुनचमकाहुतिः ॥ ॥ रुद्र्यांतुसमग्रहोमेएकधाविभागेएकादशनमकाहुतयः चमकेतुअ
ग्नाविष्णूइत्येका एकादशभिश्चमकानुवाकैर्नमकप्रतिरूपकयोजितैरेकैकरूपांतेएकैकेतिद्वादशसर्वास्त्रयोविंशतिराहुतयः । त
त्रैवत्रेधाविभागेनमकानांत्रयस्त्रिंशत् चमकानांप्राग्वद्द्वादशेतिसर्वाःपंचचत्वारिंशत् । तत्रैवषोढाविभागेनमकानांषडधिकाष
ष्टिःचमकाहुतिभिःसहाष्टासप्ततिः । तत्रैवषोडशधाविभागेनमकानांषट्सप्तत्युत्तरंशतं चमकाहुतिभिःसहाष्टाशीत्यधिकंशतं ।
तत्रैवाष्टाचत्वारिंशत्पक्षेनमकानामष्टाविंशत्यधिकापंचाशत् चमकैःसहचत्वारिंशदधिका । तत्रैवैकोनसप्तत्युत्तरशतधाविभा
गेनमकानामष्टादशशतान्येकोनषष्टिश्च चमकैःसहैकसप्ततिरिति ॥ रुद्र्यांदशांशहोमेरूपेसमग्रहोमेएकधाविभागादिषट्पक्षेषु
यासंख्योक्तासैवात्रबोद्धव्या ॥ तत्रषोडशधाविभागादिपक्षेअवशिष्टरूपस्यदशांशरूपाद्भिःपंचसप्तदशसहिताक्रमेणप्रागुक्तैव
संख्यावोद्धव्या ॥ तद्यथा । विंशतिस्त्रिंशद्वा पंचपंचाशत्पंचषष्टिर्वा एकोननवतिर्नवनवतिर्वेति रुद्र्यांशतांशहोमःषोडशधा

त्रिभागादिपक्षत्रयएवसंभाव्यते । तत्रनमकेप्राग्वदाहुतिद्वयं चमकेचोक्तंपक्षद्वयमितिचतस्रश्चतुर्दशवाषोडशधात्रिभागेआहुत
यः । अष्टचत्वारिंशद्धाविभागेतुनमकेप्राग्वत्पंचचमकेद्वौपक्षावितिसप्तसप्तदशवाहुतयोभवंति । एकोनसप्तत्युत्तरशतधावि
भागेतुनमकेसप्तदश चमकेचपक्षद्वयमितिविंशतिस्त्रिंशद्वेति ॥ ॥ लघुरुद्रेसमग्रहोमेएकधापक्षेएकविंशत्युत्तरशतनमकानां
तावत्यआहुतयः चमकानांद्वात्रिंशदुत्तरंशतमितिचमकैःसहत्रिपंचाशदधिकंशतद्वयमाहुतयः । तत्रैवत्रेधाविभागेनमकानां
त्रिषष्ट्यधिकंशतत्रयं चमकानामनंतरोक्ताएवेतिचतुःशतानिपंचनवतिश्च । तत्रैवषोढाविभागपक्षेनमकानांसप्तशतानिषड्विंश
तिश्च चमकानांतावत्यएवेतिसर्वाअष्टशतानिअष्टपंचाशच्च । तत्रैवषोडशधाविभागपक्षेनमकानांसहस्रमेकंनवशतानिषड्विंश
तिश्च चमकानांतावत्यएवेतिसर्वाःसहस्रद्वयमष्टषष्टिश्च । तत्रैवाष्टाचत्वारिंशत्पक्षेनमकानांपंचसहस्राणिअष्टशतान्यष्टौचचम
कानामुक्ताएवेति चमकैःसहसर्वाःपंचसहस्राणिनवशतानिचत्वारिंशच्च। तत्रैकोनसप्तत्युत्तरशतधाविभागपक्षेनमकानांविंशति
सहस्राणिचत्वारिंशतान्येकोनपंचाशच्च चमकानांतावत्यएवेतिसर्वाविंशतिसहस्राणिपंचशतानिएकाशीतिश्चेति। लघुरुद्रएव
दशांशहोमेएकधापक्षेद्वादशरूपकाणिदशांशइतिनमकानांद्वादशाहुतयः चमकानांचरूपकेषुक्रमेणद्वादशेतिसर्वाश्चतुर्विंशतिः।
तत्रैवत्रेधाविभागेनमकानांषट्त्रिंशत् चमकाहुतिभिःसहाष्टाचत्वारिंशत् । तत्रैवषोढाविभागेनमकानांद्विसप्ततिः चमकाहु
तिभिःसहचतुरशीतिः । तत्रैवषोडशधाविभागेनमकानामेकंशतंत्रिनवतिःअवशिष्टरूपस्यचप्राग्वद्वे चमकैःसहद्वेशतेषट्च ।
तत्रैवाष्टाचत्वारिंशद्धाविभागेनमकानांपंचशतानिषट्सप्ततिःअवशिष्टरूपस्यप्राग्वत्पंच चमकैःसहपंचशतानित्रिनवतिश्च ।
तत्रैवैकोनसप्तत्युत्तरशतधाविभागेनमकानांद्वेसहस्रेअष्टाविंशतिःअवशिष्टरूपस्यप्राग्वत्सप्तदश चमकैःसहद्वेसहस्रेसप्तपंचाश

दाहुतयइति ॥ ॥ लघुरुद्रएवशतांशहोमेएकधापक्षेनमकाध्यायेनैका चमकैःसहतिस्रस्त्रयोदशवाहुतयः । अत्रास्मिन्नेवपक्षेऽ
वशिष्टरूपाणांसंख्याभावः । तत्रैवत्रेधाविभागपक्षेरूपकस्यतिस्रःअवशिष्टैकविंशतिरूपाणामेकाचमकैःसहषट्षोडशवा ॥ त
त्रैवषोढापक्षेरूपस्यषट्अन्याचैका चमकैःसहनवएकोनविंशतिर्वा । तत्रैवषोडशधापक्षेरूपस्यषोडशअन्यास्तिस्रः चमकैःसह
एकविंशतिरेकत्रिंशद्वा । तत्रैवाष्टाचत्वारिंशद्धापक्षेरूपस्याष्टाचत्वारिंशत् अन्यादश चमकैःसहषष्टिःसप्ततिर्वा । तत्रैवैकोन
सप्तत्युत्तरशतधापक्षेरूपस्यतावत्यःअन्याःपंचत्रिंशत् चमकैःसहषडुत्तरंषोडशाधिकंवाशतद्वयमिति । अवशिष्टरूपेरूपकमंत्र
विभागःप्रागुक्तः ॥ ॥ महारुद्रेसमग्रहोमेएकधापक्षेनमकानांसहस्रमेकंत्रीणिशतानिएकत्रिंशच्चाहुतयः चमकानामेकंसहस्रं
चतुःशतंद्विपंचाशच्चेतिसर्वाःद्वेसहस्रेसप्तशतानित्र्यशीतिश्च । तत्रैवत्रेधाविभागेनमकानांत्रिसहस्राणिनवशतानित्रिनवतिश्च
चमकैःसहपंचसहस्राणिचत्वारिशतानिपंचचत्वारिंशच्च । तत्रैवषोढाविभागेनमकानांसप्तसहस्राणिनवशतानिषडशीतिश्च चम
कैःसहनवसहस्राणिचत्वारिशतानिअष्टत्रिंशच्च । तत्रैवषोडशधाविभागेनमकानामेकविंशतिसहस्राणिद्वेशतेषण्णवतिश्च च
मकैःसहद्वाविंशतिसहस्राणिसप्तशतानिअष्टाचत्वारिंशच्च । तत्रैवाष्टाचत्वारिंशद्धाविभागेनमकानांत्रिषष्टिसहस्राणि अष्टौ
शतानिअष्टाशीतिश्च चमकैःसहपंचषष्टिसहस्राणित्रिशतानिचत्वारिंशच्च । तत्रैवैकोनसप्तत्युत्तरशतधाविभागेनमकानांद्वेल
क्षेचतुर्विंशतिसहस्राणिनवशतानिएकोनचत्वारिंशच्च चमकैःसहद्वेलक्षेषड्विंशतिसहस्राणित्रिशतान्येकनवतिश्च ॥ ॥ महारु
द्रेदशांशहोमेएकधाविभागेनमकानामेकंशतंत्रयस्त्रिंशच्चरूपाणीतितावत्यआहुतयः चमकानांद्वादश रुद्रियावृत्त्यात्रयस्त्रिंश
च्छतंचमकरूपयोजनेद्वेद्वादशवेतिसर्वाद्वेशतेएकोनाशीतिरेकोननवतिर्वा । तत्रैवत्रेधाविभागेनमकानांत्रीणिशतानिनवनव

तिश्च चमकैः सहपंचशतानिपंचचत्वारिंशत्पंचपंचाशद्वा । तत्रैवषोढाविभागेनमकानांसप्तशतानिअष्टनवतिश्च चमकैः सहनव शतानिचतुश्चत्वारिंशच्चतुःपंचाशद्वा । एषुत्रिष्वपिपक्षेष्ववशिष्टरूपाणांदशांशोनास्ति । तत्रैवषोडशधाविभागेनमकानांद्विसह स्रेएकंशतंअष्टाविंशतिश्च अवशिष्टरूपस्यद्वे चमकैः सहद्वेसहस्रेद्वेशतेषट्सप्ततिःषडशीतिर्वा । तत्रैवाष्टाचत्वारिंशद्धाविभागे नमकानांषट्सहस्राणित्रीणिशतानिचतुरशीतिश्च अवशिष्टरूपेपंच चमकैः सहषट्सहस्राणिपंचशतानिपंचत्रिंशत्पंचचत्वारिं शद्वा । तत्रैवैकोनसप्तत्युत्तरशतधाविभागेनमकानांद्वाविंशतिसहस्राणिचत्वारिशतानिसप्तसप्ततिश्चअवशिष्टरूपेसप्तदश च मकैः सहद्वाविंशतिसहस्राणिषट्शतानिचत्वारिंशत्पंचाशद्वेति ॥ ॥ महारुद्रेशतांशहोमेएकधाविभागेत्रयोदशरूपाणिशतां शइतितावत्यआहुतयः चमकानांत्वेकादशिन्यांद्वादशरूपद्वयेच चमकानांप्रत्येकंद्वेद्वादशवेतिचतस्रश्चतुर्विंशतिर्वासर्वाएको नत्रिंशदेकोनपंचाशद्वा । अत्रास्मिन्नेवपक्षेअवशिष्टरूपाणांशतांशोनास्ति । तत्रैवत्रेधाविभागेनमकानामेकोनचत्वारिंशत्अव शिष्टैकत्रिंशद्रूपाणांचैका चमकैः सहषट्पंचाशत्षट्सप्ततिर्वा । तत्रैवषोढाविभागेनमकानामष्टसप्ततिःअवशिष्टरूपाणांद्वे च मकैः सहषण्णवतिःषोडशाधिकंशतंवा । तत्रैवषोडशधाविभागेद्वेशतेअष्टौचअवशिष्टरूपाणांपंच चमकैः सहद्वेशतेएकोनत्रिंश देकोनपंचाशद्वा । तत्रैवाष्टाचत्वारिंशद्धाविभागेनमकानांषट्शतानिचतुर्विंशतिश्च अवशिष्टरूपाणांपंचदश चमकैः सहषट्श तानिपंचपंचाशत्पंचसप्ततिर्वा । तत्रैवैकोनसप्तत्युत्तरशतधाविभागेनमकानांद्वेसहस्रेएकंशतंसप्तनवतिश्चअवशिष्टरूपाणांद्वि पंचाशत् चमकैः सहद्वेसहस्रेद्वेशतेपंचषष्टिःपंचाशीतिर्वेति ॥ ॥ अतिरुद्रेसमग्रहोमेएकधापक्षेचतुर्दशसहस्राणिषट्शतानिएक चत्वारिंशच्चरूपकाइतितेषांतावत्यआहुतयः चमकानांतुप्रत्येकंरुद्र्यांद्वादशेतिपंचदशसहस्राणिनवशतानिद्वासप्ततिश्चसर्वास्त्रिं

शत्सहस्राणिषट्शतानित्रयोदशचाहुतयः । तत्रैवत्रेधाविभागेरूपाणांत्रिचत्वारिंशत्सहस्राणिनवशतानित्रयोविंशतिश्चचमकैः सहएकोनषष्टिसहस्राणिअष्टौशतानिपंचनवतिश्च । तत्रैवषोढाविभागेरूपाणांसप्ताशीतिसहस्राणिअष्टौशतानिषट्चत्वारिंश्च चमकैःसहलक्षमेकंत्रीणिसहस्राणिअष्टौशतान्यष्टादशच । तत्रैवषोडशधापक्षेरूपाणांद्वेलक्षेचतुस्त्रिंशत्सहस्राणिद्वेशतेषट्पंचाशच्च चमकैःसहद्वेलक्षेपंचाशत्सहस्राणिद्वेशतेअष्टाविंशतिश्च । तत्रैवाष्टाचत्वारिंशद्धापक्षेरूपाणांसप्तलक्षाणिद्वेसहस्रेसप्तशतान्यष्टषष्टिश्च चमकैःसहसप्तलक्षाणिअष्टादशसहस्राणिसप्तशतानिचत्वारिंशच्च । तत्रैवएकोनसप्तत्युत्तरशतधाविभागेचतुर्विंशतिर्लक्षाणिचतुःसप्ततिसहस्राणित्रीणिशतान्येकोनत्रिंशच्च चमकैःसहचतुर्विंशतिलक्षाणिनवतिसहस्राणित्रीणिशतान्येकाचेति ॥ अतिरुद्रेदशांशहोमेएकधापक्षेनमकानामेकंसहस्रंचत्वारिशतानिचतुःषष्टिश्चाहुतयः चमकानुवाकानांप्रतिरूपयोजने एकंसहस्रंपंचशतानिपण्णवतिःअवशिष्टरूपेचद्वेद्वादशवेतिसर्वास्त्रीणिसहस्राणिद्विषष्टिर्द्वासप्ततिर्वा । तत्रैवत्रेधापक्षेनमकानां चत्वारिसहस्राणित्रीणिशतानिद्वानवतिश्च चमकैःसहपंचसहस्राणिनवशतानिनवतिःशतंवा । तत्रैवषोढापक्षेनमकानामष्टौ सहस्राणिसप्तशतानिचतुरशीतिश्च चमकैःसहदशसहस्राणित्रिशतानिद्व्यशीतिर्द्वानवतिर्वा । एषुत्रिष्वपिपक्षेषुमूलावशिष्टरूप दशांशाभावः । तत्रैवषोडशधापक्षेनमकानांत्रयोविंशतिसहस्राणिचत्वारिशतानिचतुर्विंशतिश्च मूलावशिष्टरूपस्यद्वे चमकैः सहपंचविंशतिसहस्राणिचतुर्विंशतिश्चतुस्त्रिंशद्वा । तत्रैवाष्टाचत्वारिंशद्धापक्षेनमकानांसप्ततिसहस्राणिद्वेशतेद्विसप्ततिश्च मूलावशिष्टरूपस्यचपंच चमकैःसहएकसप्ततिसहस्राणिअष्टौशतानिपंचसप्ततिःपंचाशीतिर्वा । तत्रैवैकोनसप्तत्युत्तरशतधापक्षेन मकानांद्वेलक्षेसप्तचत्वारिंशत्सहस्राणिचत्वारिशतानिषोडशच मूलावशिष्टरूपस्यचसप्तदश चमकैःसहद्वेलक्षेएकोनपंचाशत्स

हस्राणिएकत्रिंशदेकचत्वारिंशद्वा ॥ ॥ अतिरुद्रेसतांशहोमेएकधाविभागेनमकानांएकशतंषट्चत्वारिंशच्चेतितेषांतावत्यआ
हुतयः अवशिष्टैकचत्वारिंशद्रूपाणांशतांशोनसंभवति । चमकानांत्रयोदशरुद्रीष्वेकंशतंषट्पंचाशच्च रूपकत्रयेद्वेद्वादशवेतिष
ट्त्रिंशद्वा सर्वास्त्रीणिशतानिअष्टावष्टत्रिंशद्वा । तत्रैवत्रेधाविभागेनमकानांचत्वारिशतान्यष्टाविंशच्च अवशिष्टरूपाणामेका
चमकैःसहषट्शतानिएकएकत्रिंशद्वा । तत्रैवषोढाविभागेनमकानांअष्टौशतानिषट्सप्ततिश्चअवशिष्टरूपाणांद्वे चमकैःसहए
कंसहस्रंचत्वारिंशत्सप्ततिर्वा । तत्रैवषोडशधाविभागेनमकानांद्वेसहस्रेत्रीणिशतानिषट्त्रिंशच्चअवशिष्टरूपाणांसप्त चमकैःस
हद्वेसहस्रेपंचशतानिपंचपंचत्रिंशद्वा । तत्रैवाष्टाचत्वारिंशद्धाविभागेनमकानांसप्तसहस्राणिअष्टौचअवशिष्टरूपाणांविंशतिः
चमकैःसहसप्तसहस्राणिएकंशतंनवतिश्च शतद्वयंविंशतिश्चवा । तत्रैवैकोनसप्तत्युत्तरशतधाविभागेनमकानांचतुर्विंशतिसह
स्राणिषट्शतानिचतुःसप्ततिश्चअवशिष्टरूपाणामेकोनसप्ततिः चमकैःसहचतुर्विंशतिसहस्राणिनवशतानिपंचपंचत्रिंशद्वेति ॥
एवंकैश्चिद्रुद्रहोमसंख्याभिहिता । अन्यैस्तुयत्रप्रागुक्तसंख्यातोधिकंरूपकमवशिष्यतेतत्रसमग्ररूपकेणहोमः । यत्रत्वाहुतयो
वशिष्यंतेतत्रषडाहुतिपर्यंतमाद्यैस्त्रिभिर्मंत्रैस्तिस्रआहुतयःअंत्यैस्त्रिभिस्तिस्रः। यत्ररूपादधिकाअवशिष्यंतेतत्ररूपकेणहोमः । रू
पकेचद्वेद्वादशवाचमकाहुतयः । एवंचाकिंचिदधिकमात्रंहोमेसंपद्यतेनतुप्रागुक्तपक्षवत्प्रधानभूतकियद्धोमलोपोभवतीत्युक्तं ।
अस्मिंश्चपक्षेप्रागुक्तसंख्ययैषांसंख्याएकीकृत्ययोज्या । इहचरुद्रहोमेउक्तेष्वनेकप्रकारेषुयत्रयत्राहुतिसंख्याधिक्यमाहुतिपरि
माणाधिक्यंवातत्रतत्रफलतारतम्यंद्रष्टव्यं ॥ एवंरुद्रहोमंविधायहृदयाद्यस्त्रांतंप्रागुक्तंपंचांगन्यासंकुर्यात् ॥ ऋत्विगादिपक्षेतु
सर्वेप्येवमेवकुर्युः ॥ ततआचार्योयजमानोवाप्रागुक्तरुद्रपीठदेवताभ्यस्तत्तन्नाममंत्रैराज्यंस्रुवेणजुहुयात् ॥ इहचहोम्यद्रव्यम

धोमेखलायांभूमौवापतितमग्नौमक्षिपेत् मध्यमोपरिमेखलयोःपतितस्यपरिधिपरिस्तरणांतर्गतत्वेनाग्निप्रक्षेपार्हत्वात्तद्बहिर्गत
स्यांतःप्रक्षेपनिषेधाच्चेतिहोमप्रकारसंक्षेपः ॥ ॥ एवंहोमंपरिसमाप्यचंदनाद्युपचारैरग्नेनयेतिमंत्रेणसंकल्पपूर्वकंस्वाहास्वधायुत
मग्निंपूजयेत् । अग्नयेगंधादिबहिरेवदद्यात् । ततोग्रहपीठदेवतानांरुद्रपीठदेवतानांचोत्तरपूजांकेचिदाहुः ॥ पूजासंपूर्णतांवाच
यित्वायस्यस्मृत्याआवाहनंनजानामीत्युक्त्वास्विष्टकृदादिनवाहुतीश्चहुत्वाबलिदानंइंद्रादिलोकपालेभ्योग्रहेभ्यश्चकृत्वारुद्रपीठ
स्याग्रेकद्रुद्रायेतिरुद्रायबलिंदत्वापूर्णाहुतिंवसोर्धारांचजुहुयात् (बलिदानपूर्णाहुतिवसोर्धारादिपूर्वमात्स्येग्रहयज्ञेद्रष्टव्यं) ॥ ए
वंवसोर्धारांविधाययथाशाखंपूर्णपात्रविमोकादिकर्मशेषंसमापयेदाचार्यः । तदनंतरंवरणक्रमेणऋत्विजःप्रतिनिधयश्चोदङ्मु
खाःप्राङ्मुखयजमानहस्तेश्रेयःसंपादनंकुर्वंति ॥ तच्चैवं ॥ शिवाआपःसंत्वितियजमानहस्तेजलंक्षिपेत् सौमनस्यमस्त्वितिपुष्पं
अक्षतंचारिष्टंचास्त्वित्यक्षतान् दीर्घमायुःशांतिःपुष्टिस्तुष्टिश्चास्त्वितिपुनर्जलं । मयाभवन्नियोगेन महारुद्रमध्येयथांशेनयःकृतो
जपस्तद्दशांशेनामुकपक्षेणचयःकृतोहोमस्तस्माज्जपाद्धोमाच्चयदुत्पन्नंश्रेयस्तत्तुभ्यमहंसंप्रददइति ॥ इदंनिर्मूलत्वाद्यजमानप्रता
रणामात्रमेव । तदनंतरमग्नेःपश्चिमभागेप्राङ्मुखोपविष्टोयजमानउदङ्मुखानाचार्यादीन्पूजयिष्यइतिसंकल्प्य श्रीमहारुद्रस्व
रूपिणेआचार्यायेदंपाद्यंइदंबार्हस्पत्यंवासोयुगुलमित्यादिगंधपुष्पधूपदीपतांबूलानिदत्वा पूर्वोक्तविशेषणवतिकालेदेशेचकृत
स्यमहारुद्रादिकर्मणःप्रतिष्ठासिद्ध्यर्थममुकगोत्रायामुकवेदांतर्गतामुकशाखाध्यायिनेमुकशर्मणेआचार्याययथाशक्त्यलंकृता
मिमांसवत्सांगांरुद्रदैवत्यां इदंचहिरण्यमग्निदैवतंतुभ्यमहंसंप्रददइतिकुशाक्षतसहितजलंविप्रहस्तेनिक्षिप्य नममेतिवदेत् वि
प्रःस्वस्तीत्युक्त्वाकामस्तुतेकइदंकस्माअदादित्यादिकांस्वशाखास्थांपठेत्॥एवमेवब्रह्मपूजांविधायदक्षिणांदत्वा अनंतरंग्रहजा

पकेभ्यःपूजापूर्वकंग्रहदक्षिणादेया अनंतरमृत्विजोपिपूजयित्वासंकल्पपूर्वकंदक्षिणांदद्यात् प्रतिनिधिपक्षेपारितोषिकंदद्यात् यथाशक्त्याऽचार्यादिभ्योऽलंकारमुद्रिकोदकपात्रोपानद्व्यजनछत्रचामरादीन्युपकरणानिदद्यात् गोरभावेतन्निष्क्रयत्वेननि ष्कंतदर्धंवासुवर्णंशक्त्यादद्यात् ततोद्वारजापकेभ्योदक्षिणादेया ततोनानावेदांतर्गतनानाशाखाध्यायिभ्योनानागोत्रेभ्योनाना शर्मभ्योब्राह्मणेभ्योदीनानाथेभ्यश्च यथाशक्तिभूयसींदक्षिणांदातुमुत्सृजेत् नममेतिसकुशाक्षतजलंक्षिप्त्वाॐतत्सदितिवदेत्॥ तदनंतरंग्रहवेदिसमीपस्थकलशोदकेनरुद्रकलशोदकेनद्वारकलशोदकेनचदूर्वापंचपल्लवैरुदङ्मुखाआचार्यर्त्विजस्तिष्ठंतःप्राङ्मु खंसकुटुंबमुपविष्टंयजमानमभिषिंचेयुः अभिषेकेपत्नीवामभागे अभिषेकसमयेगीतवाद्यादिमंगलघोषःकार्यः॥ समुद्रज्येष्ठाइति चतसृणांवसिष्ठआपस्त्रिष्टुप् अभिषेकेविनियोगः ॐ समुद्रज्येष्ठाः० ४ त्रायंतामिहदेवाइत्यादि अक्षीभ्यामित्यादिचअन्येपि स्वशाखोक्तामंत्राग्राह्याः पौराणास्तुसुरास्त्वामभिषिंचंत्वित्यादयः एवमभिषेकानंतरंसर्वौषधीभिरनुलिप्यशुद्धोदकेनस्नात्वा शुक्लमाल्यांबरानुलेपनःसपत्नीकोयजमानोग्रहरुद्रपीठदेवतानांगंधाद्युपचारैरुत्तरपूजांदक्षिणाप्रदक्षिणानमस्कारांतांनिर्वर्त्यपु ष्पांजलिंदत्त्वा आवाहनंनजानामि अपराधसहस्राणि यस्यस्मृत्या मंत्रहीनं इतिपीठद्वयेक्षमाप्यउत्तिष्ठब्रह्मणस्पते अभ्यार मिदद्रयः यांतुदेवगणाइतिपुष्पाक्षतप्रक्षेपेणग्रहपीठदेवताविसर्ज्य एवमेवरुद्रपीठदेवताविसर्जयेत् ग्रहपीठंपूजोपस्करयुतं रु द्रपीठमपिसोपस्करंरुद्रप्रतिमांचाचार्यायदद्यात् ॥ तत्रप्रतिमादानमंत्राः॥ श्रीरुद्रप्रतिमांस्वर्णमयींवस्त्रयुगान्वितां॥ श्रीरुद्रप्री तयेचापिप्राप्तानिष्टनिवृत्तये ॥ प्रार्थिताभीष्टसंसिद्ध्यैतुभ्यंश्रीरुद्ररूपिणे ॥ संप्रदद्यांविधानेनयथोक्तफलमस्तुमे ॥ यदातुमा रकृतंलिंगंतदादानमंत्रः ॥ इदंमारकृतंलिंगंरौप्यपीठान्वितंशुभं ॥ नंदिनाराजतेनापिश्वेतवस्त्रयुगान्वितम् ॥ धान्यैर्द्वादश

भियुक्तमेकादशफलान्वितं ॥ संप्रदद्यांविधानेनयथोक्तफलमस्तुमे ॥ काश्मीरलिंगपक्षेतुइदंमारकतमित्यत्रइदंकाश्मीरजमि
तिप्रयोज्यं ॥ द्वादशधान्यानितुव्रीहियवमाषतिलमुद्गखल्वगोधूममसूरप्रियंगवणुश्यामाकनीवाराः ॥ तेषांमानंतुप्रस्थाधिकंद्रो
णावधियथाशक्तिग्राह्यं उक्तधान्याभावेयथासंभवंग्राह्याणि । ततोग्निंसंपूज्य गच्छगच्छसुरश्रेष्ठेत्यग्निंविसृज्य सर्वामंडपदे
वताद्वारदेवताश्चयांतुदेवगणाइतिविसृज्य ध्वजपताकाद्युपस्करयुतंमंडपमाचार्यायदद्यात् । अमुंमंडपंध्वजपताकाद्युपस्कर
युतंतुभ्यमहंसंप्रददेनममेति । स्वस्तीतिसप्रतिब्रूयात् । ततःकृतस्यमहारुद्रादिकर्मणःसंपूर्णतासिद्ध्येयथोपपन्नेनान्नेनयथाका
लंनानागोत्रान्नानाशर्मणोमुकसंख्यान्ब्राह्मणान्भोजयिष्येइतिसंकल्प्ययथाकालंब्राह्मणान्भोजयेत् भूरिदक्षिणासंकल्पानंतरं
वाब्राह्मणभोजनसंकल्पः । रूपेएकः रुद्यांत्रयः लघुरुद्रेएकादश महारुद्रेएकविंशत्युत्तरशतं अतिरुद्रेत्रयोदशशतान्येकत्रिंश
च्चेति ततोब्रह्मार्पणंब्रह्महविः चतुर्भिश्चचतुर्भिश्चेत्युक्त्वा मयायत्कृतंयथाकालंयथादेशंयथाज्ञानंयथाशक्तिचमहारुद्रादिकर्म
तेनश्रीपरमेश्वरःप्रीयतां ॐ तत्सद्ब्रह्मार्पणमस्त्वितिसकुशजलंक्षिपेत् । ततःसदस्यंचंदनाक्षतपुष्पवस्त्रतांबूलदक्षिणादिभिःपू
जयित्वांजलिंबद्ध्वा मयायत्कृतंमहारुद्रादिकर्मतत्कालहीनंभक्तिहीनंशक्तिहीनंश्रद्धाहीनंभवतांब्राह्मणानांवचनात्सर्वंसंपूर्णम
च्छिद्रंचास्तुइतिप्रार्थयेत् ततःसंपूर्णमच्छिद्रमस्त्वितिसर्वेवदेयुः ॥ ततस्तेषांमंत्राशिषोगृहीत्वातान्सानुनयंविसृज्यदीनानाथा
दीनन्नादिभिःसंतोष्यस्वयंसुहृन्मित्रादियुतःसोत्साहःसंतुष्टोहविष्यंभुंजीतेति ॥ रामेश्वरभट्टात्मजनारायणसूरिणाकाश्यां ॥
कार्मणसज्जनतुष्ट्यैरुद्रानुष्ठानपद्धतीरचिता ॥ ग्रंथाननेकानालोक्यविचार्यसहसज्जनैः ॥ कृतःश्रमोनेनविभुःशंकरःप्रीयतांम
म ॥ इतिश्रीभट्टरामेश्वरसुतनारायणभट्टकृतारुद्रानुष्ठानपद्धतिःसमाप्ता ॥ ॥ ७ ॥ ॥ ७ ॥

श्रीः ॥ सूतउवाच ॥ भक्त्याकृष्णंनमस्कृत्यपांडवःपर्यपृच्छत ॥ तृचामंत्रस्यमाहात्म्यंश्रोतुमिच्छाम्यहंप्रभो ॥ १ ॥ श्रीकृष्ण उवाच ॥ परंव्रतंप्रवक्ष्यामिशृणुपार्थह्यनन्यधीः ॥ सौरंवैदिकमंत्रस्यविधिंसर्वरुजापहं ॥ २ ॥ प्रत्यहंपूजनंतस्यमंत्रस्य सकलार्थदं ॥ अर्घ्यंचैवनमस्कारंसर्वंयद्यच्छृणुष्वतत् ॥ ३ ॥ तवप्रीत्याप्रवक्ष्यामिसर्वलोकहितायवै ॥ सौरमंत्रस्यमाहात्म्यं प्रवक्ष्यामिसमासतः ॥ ४ ॥ उद्यन्नद्येतिमंत्रोयंसौरःपापप्रणाशनः ॥ रोगघ्नश्चद्विषघ्नश्चभुक्तिमुक्तिप्रदायकः ॥ ५ ॥ कण्वेन तुपुराद्दृष्टंगुह्यंपरमसिद्धिदं ॥ पुत्रस्यरोगनाशायख्यातंलोकहितायच ॥ ६ ॥ तेनचाराधितोदेवःस्तुत्वामंत्रेणभास्करः ॥ त त्प्रवक्ष्यामितेसर्वंन्यासपूजाविधिंक्रमात् ॥ ७ ॥ उद्यन्नद्येत्यृचादित्यमुपतिष्ठेद्दिनेदिने ॥ हृद्रोगंनाशयेत्तस्यपरमारोग्यदायकं ॥ ८ ॥ रोगीचजपतेरोगैर्मुक्तोभास्करतुष्टितः ॥ आरोग्यमेतत्परमंजपेन्नित्यमतंद्रितः ॥ ९ ॥ द्विषंतमितिचार्धर्चंयद्विषंतंज पेत्स्मरन् ॥ अष्टावृत्त्याजपेन्नित्यंद्विषंनाशयतेध्रुवं ॥ १० ॥ उत्तमस्तस्यसार्धंचद्विपिद्वेषइतिश्रुतं ॥ हृद्रोगोनाशमाप्नोतिमंत्र स्यास्यप्रभावतः ॥ ११ ॥ साधकोविधिनानित्यंस्नात्वाह्यनुदितेरवौ ॥ धौतशुक्लांबरधरःकृत्वासंध्यादिकाःक्रियाः ॥ १२ ॥ गोमयेनोपलिप्तेचशुचिःस्वासनमाविशेत् ॥ प्राणान्निरुध्यसंकल्प्यपूजाद्रव्याणिशोधयेत् ॥ १३ ॥ सकेसराणिपद्मानिकरवी रमणिचार्जुन ॥ रक्तचंदनमिश्राणिगंधाक्षतकुशानिच ॥ १४ ॥ मंडलंरक्तवर्णेनअग्रभागेचतुरस्रकं ॥ विरच्यतत्रपद्मानिगंध पंकेनवालिखेत् ॥ १५ ॥ ताम्रपात्रस्थितंयंत्रंविधायपंकजोपरि ॥ अर्घ्यपात्रंतथाताम्रंगर्भपद्मंतुलास्थितं ॥ १६ ॥ अम्भोद केनसंपूर्यकलशंस्थापयेत्ततः ॥ गंगांचावाहयेत्तत्रमुद्रांसंकुशयाजपन् ॥ १७ ॥ घृणीतिमूलमंत्रेणप्रणवाष्टकमंत्रितं ॥ मंधा

धरस्वैतत्तवअर्घ्यंतोयेनपूरयेत् ॥ १८ ॥ अर्घ्येयेत्पूर्वंमंत्रेणअभिमंत्र्यततोजलं ॥ प्रोक्षणीकरणंस्यैवमात्मानंप्रोक्षयेत्ततः ॥१९॥
न्यासंकृत्वाततःपश्चाद्विधिरेषउदाहृतः ॥ उद्यन्नद्येत्यृचांतासामृषिःप्रस्कण्वईरितः ॥ २० ॥ छंदोनुष्टुप्तथादेवःसूर्यएवास्य
णःस्मृतः ॥ विनियोगस्तथाकार्योन्यासकर्मत्विदंशृणु ॥ २१ ॥ अनेनैवविधानेनन्यासंकृत्वायथाविधि ॥ उद्येत्यर्धर्चमप्रणव
मायादीर्घस्वरैर्युतं ॥ २२ ॥ अंगुष्ठादिकरन्यासंदेहांगंचततःपरं ॥ हस्तयोर्हृदयेमूर्ध्निपादेनाभौमुखेतथा ॥ २३ ॥ चक्षुषोः
कवचंशस्त्रंपादशःक्रमतोन्यसेत् ॥ अनेनैवविधानेनन्यासंकुर्याद्यथाविधि ॥ २४ ॥ षडंगंकवचंकृत्वासौरमंत्रविधिक्रमात् ॥
एवंयःकुरुतेन्यासंद्वादशांगेषुसंयतः ॥ २५ ॥ ससर्वरोगनिर्मुक्तःसर्वोपद्रववर्जितः ॥ एवंस्थस्तमुनिर्विप्रःकर्णिकायामथःक
मात् ॥ २६ ॥ आधारपीठपूजांचक्रमेणैवसमर्चयेत् ॥ कर्णिकायांन्यसेत्सूर्यंसांगावरणभूषितं ॥ २७ ॥ पत्रसंधिस्थिताष्टार
दैवतैःसहपूजयेत् ॥ पाद्यार्घ्याचमनंचैवमधुपर्कंनिवेदयेत् ॥ २८ ॥ ततस्त्वाचमनंस्नानंवस्त्रमाचमनंतथा ॥ गंधपुष्पंतथा
धूपंदीपंनैवेद्यमेवच ॥ २९ ॥ ततश्चफलतांबूलंदक्षिणांचसमर्पयेत् ॥ अथार्घ्यपात्रमादायपूरयेत्तीर्थवारिणा ॥ ३० ॥ सके
सराणिपद्मानिकरवीराणि चार्जुन ॥ तिलतंडुलसंयुक्तंकुशैर्गंधोदकेनच ॥ ३१ ॥ रक्तचंदनमिश्राणिकृत्वावैताम्रभाजने ॥
धृत्वाशिरसितत्पात्रंजानुभ्यांधरणीतले ॥ ३२ ॥ मंत्रपूतंगुडाकेशअर्घ्यंदद्याद्गभस्तये ॥ पादार्घंचतृचेनैवत्रिधावृत्तंत्रिधापु
नः ॥ ३३ ॥ दद्यादर्घ्यंसमंत्रेणअनुलोम्यैःपुनःपुनः ॥ मित्यात्तुद्विगुणंकुर्याद्रविचारिप्रयत्नतः ॥ ३४ ॥ दंडवत्प्रणमेद्भूमा
वर्घ्यदानक्रमेणतु ॥ पुनश्चगंधपुष्पादीनुपचारान्प्रकल्पयेत् ॥ ३५ ॥ मित्रादिदेवताःसर्वास्तर्पयेन्मार्जयेत्ततः ॥ तीर्थस्यग्रह
णंकुर्यान्मंत्रेणानेनवापुनः ॥ ३६ ॥ विप्रान्द्वादशशस्त्यावाभोजयेद्रविवासरे ॥ नमस्कृतिशतांशेनततोब्राह्मणभोजनं ॥३७॥

इतिश्रीभविष्योत्तरपुराणेतृचाकल्पविधानं ॥ ॥ अथप्रयोगः ॥ आचम्यप्राणानायम्य ॥ तदादौशुभेमुहूर्तेनदीतीरेशुद्धभू
मौषोडशद्वादशहस्तान्यतमहस्तंमंडपंचतुर्द्वारंकृत्वातन्मध्येहस्तमात्रांवेदींकृत्वासूर्योदयात्पूर्वंस्नात्वा परिहितशुक्लशुचिवासाः
पूजासंभारान्संभृत्य मंडपमेत्यवेद्याःपश्चिमतःप्राङ्मुखउपविश्यप्राणानायम्यदेशकालौसंकीर्त्यममामुकव्याधिनिरसनेनशरीर
शुद्धिद्वाराश्रीसवितृसूर्यनारायणदेवताप्रीत्यर्थं अमुकसंख्ययातृचाकल्पविधिनार्घ्यदानानिनमस्कारांश्चकरिष्ये ॥ इतिसंक
ल्प्य ॥ गणेशपूजनंस्वस्तिवाचनंचकृत्वाआचार्यंऋत्विजश्चयथाविभवंवृणुयात् ॥ ततआचार्योवेद्यांरक्तचंदनेनकुंकुमेनवाष्ट
कोणंवृत्तंअष्टकोणंद्वादशकोणंभूगृहंचतुर्द्वारयुतंचतुष्कोणंयंत्रंनिर्माय अर्घ्यपात्रासादनार्थंपुरतःअष्टदलंचतुरस्रंचनिर्मायअ
र्घ्यदात्रेअष्टदलंचनिर्मायसंकल्पपूर्वकंभूतशुद्ध्यादिकंकुर्यात् ॥ निर्मितंयंत्रंकेवलवेद्यांताम्रपात्रेवास्थापयेत् ॥ रविचक्रलक्षणं॥
अथातःसंप्रवक्ष्यामिरवेश्चक्रमनुत्तमं ॥ बिंदुस्त्रिकोणंवृत्तंचषट्कोणंवृत्तयुग्मकं ॥ पश्चादष्टदलंप्रोक्तंद्वादशारंसकर्णिकं ॥ भूपु
रत्रितयंपश्चाच्चतुर्द्वारंरवेःक्रमात् ॥ इतिरविचक्रलक्षणं ॥ रवेर्मतांतरेणचक्रं ॥ आद्यंतृतीयादिभूतं भूताद्द्वितीया—द्विती
या ( ? ) ॥ चतुर्थमाद्यंहिपुनःक्रमेणएवंलिखेदष्टदलेषुपद्मं ॥ ततःन्यासंकुर्यात् ॥ तत्रमंडपदेवताभ्योनमइतिमंडपंसंपूज्य
वास्तोष्पतयेब्रह्मणेनमइतिवास्तोष्पतिंपूजयित्वा ॥ उद्यन्नद्येत्यृचस्यकाण्वःप्रस्कण्वऋषिः ॥ सूर्योदेवता ॥ अनुष्टुप्छंदः ॥
अंगशुद्धौविनियोगः ॥ ॐ उद्यन्नद्य० इतितृचेनसूक्तेनोदकेनपाणिनांगान्यभिमृश्य ॥ गुरुभ्योनमः ॥ परमगुरुभ्योनमः ॥
परात्परगुरुभ्योनमः ॥ कण्वपुत्रप्रस्कण्वऋषयेनमःशिरसि ॥ अनुष्टुप्छंदसेनमःमुखे ॥ सर्वरोगापहर्ताजगदात्माश्रीसूर्योदेव
ताहृदयानमः ॥ श्रामनेत्रेश्रींबीजंनाभ्यैनमः ॥ ह्रींकीलकंआधारायनमः ॥ द्वादशांगन्यासेविनियोगः ॥ ॐ उद्यन्नद्य

त्रमहः ॐ ह्रांदक्षिणहस्तायनमः कुकृताम्मित्रोरक्षतुमां ॥ ॐ आरोहन्नुत्तरांदिवं ॐ ह्रींवामहस्ताय० विहिताकरणाद्रवीए क्षतु० ॥ ॐ हृद्रोगंममसूर्य ॐ ह्रूंहृदयाय० सूर्योऽज्ञानाद्रक्षत्वनामयंकरोतुमां ॥ ॐ हरिमाणंचनाशय ॐ ह्रैंमूर्ध्नेनमः शिरोवनमनात्माम्पूरक्षतु० ॥ ॐ शुकेषुमेहरिमाणं ॐ ह्रौंदक्षिणपादाय० प्रतिषिद्धगमनात्खगोरक्षतु० ॥ ॐ रोपणाकासुदध्मसि ॐ ह्रःवामपादा० विहितागमनात्पूषारक्ष० ॥ अथोहारिद्रवेषुमे ॐ ह्रांनाभ्यै० तमोजाड्याद्धिरण्यगर्भोरक्ष० ॥ ॐ हरिमाणंनिदध्मसि ॐ ह्रींमुखाय० प्रतिषिद्धजिह्वाव्यापारात्सर्वतोमरीचीरक्ष० ॥ ॐ उदगादयमादित्यः ॐ ह्रूंदक्षिणनेत्राय० आंध्याद्विहितादर्शनाचादित्योरक्ष० ॥ ॐ विश्वेनसहसासह ॐ ह्रैंवामनेत्राय० प्रतिषिद्धदर्शनात्सवितारक्षतुमां ॥ ॐ द्विषंतंमह्यंरंधयन् ॐ ह्रौंकवचायहुं सर्वरोगेभ्योरिष्टेभ्यश्चाऽर्कोरक्षतुमां ॥ ॐ मोअहंद्विषतेरधं ॐ ह्रःअस्त्रायफट् सर्वशत्रुकृत्याभ्योऽनिष्टेभ्यश्चभास्करोरक्षतुमां ॥ अथषडंगन्यासः ॥ ॐ उद्यन्नद्यमित्रमह० ह्रांमित्ररविभ्यामंगुष्ठाभ्यांनमः ॥ ॐ हृद्रोगंममसूर्यहरिमाणंचनाशय ह्रींसूर्यभानुभ्यां तर्जनीभ्यांनमः ॥ ॐ शुकेषुमे० ध्मसि ह्रूं खगपूषभ्यां मध्यमाभ्यां० ॥ ॐ अथोहारिद्र०ध्मसि ह्रैंहिरण्यगर्भमरीचिभ्यां अनामिकाभ्यां० ॥ ॐ उदगादय० सह ह्रौंआदित्यसवितृभ्यां कनिष्ठिकाभ्यां०॥ ॐ द्विषंतंमह्यं० रधं ह्रःअर्कभास्कराभ्यां० करतलकरपृष्ठाभ्यां० एवंहृदयादि० ॥ ॐ उद्यन्नद्यमित्रमहआरोहन् रश्मयः कवचत्वेनसर्वांगेविन्यसामि इतिव्यापकं ॥ अथपीठपूजा ॥ यंत्राधःकल्पितपीठे ॐ मंडूकाय०एवंसर्वत्राद्यामण्वः ॐ कालाग्निरुद्राय० कच्छपाय० आधारशक्त्यै० महासागराय० सूर्यलोकाय० सूर्यलोकस्थसुरेशेभ्यो० रत्नमंडपाय० रत्नद्वीपाय० कल्पवृक्षेभ्यो० रत्नवेदिकायै० रत्नसिंहासनाय० धर्माय० ज्ञानाय० वैराग्याय० ऐश्वर्याय० अधर्माय० अज्ञाना

य० अवैराग्याय० अनैश्वर्याय० अनंताय० आनंदमयकंदाय० संविन्नालाय० कालतरोन्नाय० प्रकृतिपत्रेभ्यो० विकारम
यकेसरेभ्यो० पंचाशद्वर्णकर्णिकायै० अर्कमंडलाय० चंद्रमंडलाय० वह्निमंडलाय० सत्त्वाय० रजसे० तमसे० आत्मने०
अंतरात्मने० परमात्मने० ज्ञानात्मने० ज्ञानतत्त्वाय० मायातत्त्वाय० कालतत्त्वाय० विद्यातत्त्वाय० परतत्त्वाय० विम
लायै० उत्कर्षिण्यै० ज्ञानायै० क्रियायै० योगायैनमः प्रह्वायैनमः सत्यायैनमः ईशान्यैनमः अनुग्रहायैनमः ॐ ह्रीं सर्वा
दिशक्तिकमलायनमः इतिपीठमंत्राः ॥ एताःपीठदेवताआवाह्यपंचोपचारैःसंपूज्यअंतर्योगंकुर्यात् ॥ अथांतर्योगः ॥ इदात्त
स्वरज्ञानक्षेत्रस्वरूपश्रीसूर्यचरणकमलभक्तिसिद्ध्यर्थंपरमात्मस्वरूपसिद्ध्यर्थंचअंतर्योगंकरिष्येइतिसंकल्प्यवदेत् ॥ सहस्रपुरुषा
दित्यःसहस्रकिरणोरविः ॥ सहस्रशीर्षापुरुषःसहस्राक्षःसहस्रपात् ॥ योसावादित्येपुरुषःसोसावहंसूर्योहंविश्वरूपपरमात्मनेन
मइति ॥ अथात्मपूजा ॥ गंधद्वारामानंदकर्दमःश्रीरनुष्टुप् ॥ आत्मपूजनेवि० ॥ गंधद्वारामितिललाटेगंधाक्षतादिन्यस्य ॥
माल्यादीनीतिपुष्पाणिस्वशिरसिन्यस्य ॥ नमोस्त्वनंतायेत्युक्त्वा सूर्यात्मनेनमइतिकरसंपुटेनहृद्यात्मानंनमस्कुर्यात् ॥ अथा
ष्टावरणदेवतापूजा तत्राष्टदलमध्येप्रागादिक्रमेणपूज्याः ॥ मार्तंडायनमः भानवेनमः आदित्याय० हंसाय० सूर्याय० दि
वाकराय० तपनाय० भास्कराय० मध्येमंडलाधिपतिर्वर्तमानमासाधिपतिःपूज्यः ॥ मासाधिपाश्चैत्रादिषु ॥ अरुणाय०
वेदांगाय० भानवे० इंद्राय० रवये० गभस्तये० यमाय० सुवर्णरेतसे० दिवाकराय० मित्राय० विष्णवे० सूर्याय० ॥ इति
प्रथमावरणं ॥ दीप्तायै० सूक्ष्मायै० जयायै० भद्रायै० विभूत्यै० विमलायै० अमोघायै० विद्युतायै० मध्येसर्वतोमुख्यैश्रि
यै० ॥ इतिद्वितीयं ॥ ततोष्टौमातरः ॥ ब्राह्म्यै० माहेश्वर्यै० कौमार्यै० वैष्णव्यै० वाराह्यै० इंद्राण्यै० चामुंडायै० महाल

क्ष्म्यै० ॥ इतितृतीयं ॥ आराध्याय० कपिलाय० साराय० प्रभूताय० दंडिने० पिंगलाय० धात्रे० विधात्रे० ॥ इतिचतु
र्थं ॥ ऐरावताय० पुंडरीकाय० वामनाय० कुमुदाय० अंजनाय० पुष्पदंताय० सार्वभौमाय० सुप्रतीकाय० ॥ इतिपंचमा
वरणं ॥ ततोष्टदलाग्रेषुसायुधान्लोकपालान् ॥ इंद्राय० अग्नये० यमाय० निर्ऋतये० वरुणाय० वायवे० कुबेराय० ईशा
नाय० पद्मस्याधःशेषाय० ऊर्ध्वेहिरण्यगर्भा० ॥ इतिषष्ठं ॥ वज्राय० शक्तये० दंडाय० खड्गाय० पाशाय० अंकुशाय०
गदायै० त्रिशूलाय० चक्राय० पद्माय० इतिदशायुधानि ॥ इतिसप्तमं ॥ सोमाय० भौमाय० बुधाय० बृहस्पतये० शु
क्राय० शनैश्चराय० राहवे० केतवे० ॥ दलांतरेषुरविंमध्येप्रकल्पयेत् ॥ इत्यष्टमं ॥ असितांगभैरवाय० रुरुभैरवाय०
चंडभैरवाय० क्रोधभैरवाय० उन्मत्तभैरवाय० कपालभैरवाय० भीषणभैरवाय० संहारभैरवाय० इतिनवमं ॥ ततोमा
साधिपान्पश्चिमतः ॥ गणपतये० दुर्गायै० क्षेत्रपालाय० सारथये० अरुणाय० स्वप्नाय० इच्छायै० पिंगलाय० हराय०
साराय० आराध्याय० सप्ततुरंगा० इतिदशमं ॥ चतुर्द्वारेषु ॥ दंडिने० पिंगलाय० मासाधिपाय० श्रियोर्मध्येपरमसुखा
य० ॥ इत्येकादशं ॥ अथद्वादशदलेषु ॥ मित्राय० रवये० सूर्याय० भानवे० खगाय० पूष्णे० हिरण्यगर्भाय० मरीच
ये० आदित्याय० सवित्रे० अर्काय० भास्कराय० ॥ ततोरुणादि ॥ अरुणाय० सूर्याय० वेदांगाय० भानवे० इंद्राय०
रवयेन० गभस्तये० यमाय० सुवर्णरेतसेन० दिवाकराय० मित्राय० विष्णवे० ॥ ॐ नमोभगवतेसर्वावरणसंघध्यायत्रिशु
णात्मधारिणेश्रीसूर्यायसांगायसपरिवारायनमइतिनमस्कुर्वीत ॥ एहिसूर्येतिपठित्वा ॥ सर्वावरणपीठदेवतासहितश्रीसूर्यइ
हागच्छइहतिष्ठभूर्भुवःस्वरोम् ॥ सूर्यमंडलादागत्यहृदयस्थत्वेनभावितंसूर्यंआवाहनीमुद्रयापीठमध्येपुष्पांजलिनासमावाह

येत् ॥ ततोदेवस्यदेहेस्वदेहेचपुरुषसूक्तन्यासंकुर्यात् ॥ अथध्यानं ॥ ध्येयःसदेतिध्यायं ॥ आवाहनीमुद्रयावाहयामि ॥ स्थापनी ॥ संरोधिनी ॥ संमुखीकरणी ॥ प्रार्थनीमुद्रयाप्रार्थयामि ॥ इतिषण्मुद्राःप्रदर्शयेत् ॥ अथपुरुषसूक्तेनषोडशोपचारैः पूजांकुर्यात् ॥ षोडशोपचारपूजनेनभगवान्श्रीसूर्यनारायणःप्रीयतांनममप्रीतोभवतु यथाशक्तिसूर्यगायत्रींजपेत् ॥ ॐ भास्कराय विद्महेमहद्द्युतिकरायधीमहि ॥ तन्नआदित्यःप्रचोदयात् ॥ अथार्घ्यदानं ॥ ताम्रमयमष्टदलान्वितमर्घ्यपात्रमादाय जानुभ्यामवनिंगत्वारक्तचंदनरक्तपुष्परक्ततंदुलदूर्वायवान्अर्घ्यपात्रेनिक्षिप्य नासिकाग्रमवलोकयन् ॥ ॐ ह्रांउद्यन्नद्यमित्रमहः ह्रां ॐ मित्रायनमः ॥ ॐ ह्रींआरोहन्नुत्तरांदिवंह्रीं ॐ रवयेनमः ॐ ह्रूंहृद्रोगंममसूर्यह्रूं ॐ सूर्यायनमः ॥ ॐ ह्रैंहरिमाणंचनाशयह्रैं ॐ भानवेनमः ॥ ॐ ह्रौंशुकेषुमेहरिमाणंह्रौं ॐ खगायनमः ॥ ॐ ह्रःरोपणाकासुदध्मसिह्रः ॐ पूष्णेनमः ॥ ॐ ह्रांअथोहारिद्रवेषुमेह्रां ॐ हिरण्यगर्भायनमः ॥ ॐ ह्रींहरिमाणंनिदध्मसिह्रीं ॐ मरीचयेनमः ॥ ॐ ह्रूंउदगादयमादित्यःह्रूं ॐ आदित्यायनमः ॥ ॐ ह्रैंविश्वेनसहसासहह्रैं ॐ सवित्रेनमः ॥ ॐ ह्रौंद्विषंतंमह्यंरंधयन्ह्रौं ॐ अर्कायनमः ॥ ॐ ह्रःमो अहंद्विषतेरधंह्रः ॐ भास्करायनमः ॥ ह्रांह्रीं उद्यन्० दिवं ह्रांह्रीं ॐ मित्ररविभ्यांनमः ॥ ॐ ह्रूंह्रैंहृद्रोगं०शय ह्रूंह्रैं ॐ सूर्यभानुभ्यांन०॥ ॐ ह्रौंह्रः शुकेषुमे० ध्मसि ह्रौंह्रःखगपूषभ्यांन०॥ ॐ ह्रांह्रीं अथोहारि०निदध्मसि ह्रांह्रीं ॐ हिरण्यगर्भमरीचिभ्यां० ॥ ॐ ह्रूंह्रैं उदगाद०सह ह्रूंह्रैं ॐ आदित्यसवितृभ्यां० ॥ ॐ ह्रौंह्रःद्विषंतं० रधं ह्रौंह्रः अर्कभास्कराभ्यांन० ॥ ॐ ह्रांह्रींह्रूंह्रैंउद्यन्नद्यऋक् ह्रांह्रींह्रूंह्रैं०ॐ मित्ररविसूर्यभानुभ्यो०॥ ह्रौंह्रःह्रांह्रींशुकेषुमेऋक् ह्रौंह्रःह्रांह्री ॐ खगपूषहिरण्यगर्भमरीचिभ्यो०॥ ह्रूंह्रैंह्रौंह्रः उदगा०ऋक् ह्रूंह्रैंह्रौंह्रः ॐ आदित्यसवित्रर्कभास्करेभ्योनमः ॐ ह्रांह्रींह्रूंह्रैंह्रौंह्रःह्रांह्रींह्रूंह्रैंह्रौंह्रः उद्यन्

अ० शुकेषु० उदगा० ह्रांह्रींह्रूंह्रैंह्रौंह्रः ह्रांह्रींह्रूंह्रैंह्रौंह्रः ॐ मित्ररविसूर्यभानुखगपूषहिरण्यगर्भमरीच्यादित्यसवितृअर्कभास्करे भ्योनमः ॥ २ ॥ विनतातनयोदेवःसर्वसाक्षीजगत्पतिः ॥ सप्ताश्वःसप्तरज्जुश्च अरुणोमेप्रसीदतु ॥ इतिमंत्रेणारुणायार्घ्यंदद्यात् ॥ एवंप्रत्यहंद्वादशावृत्तयउत्तमःपक्षः ॥ षण्मध्यमः ॥ चतस्रोऽधमः ॥ यथाशक्तिवा ॥ प्रत्यहांत्रिगुणंरविवारे ॥ एवमर्घ्य क्रमेणनमस्काराः ॥ नमस्कारांतेपुनःपंचोपचारैःपूजयेत् ॥ ततस्तृचेनषडंगन्यासंकुर्यात् ॥ नमोमित्रस्येतिद्वादशर्चस्यसूक्तस्य ॥ सूर्योभितपाऋषिः ॥ सूर्योदेवता ॥ जगतीछंदः ॥ दशमीत्रिष्टुप् ॥ प्रत्यृचंमित्रादीनांनमस्कारप्रदक्षिणांकुर्यात् ॥ ततःआवाहन्यादिमुद्राःप्रदर्श्य ॥ नमःसवित्रइतिपुष्पांजलिंदद्यात् ॥ आकृष्णेनेतिस्तुत्वा ॥ सवितापश्चातादितिप्रार्थ्य ॥ उद्यन्नद्येति तृचेनश्रीसूर्यसांगंविसर्जयामीतिपुष्पांजल्यर्पणेनविसर्जयेत् ॥ अभ्यारमित्यनेनेतिकेचित् ॥ यन्मंडलंदीप्तिकरंविशालंरत्नप्रभंतीव्रजनादिरूपं ॥ दारिद्र्यदुःखक्षयकारणंचपुनातुमांतत्सवितुर्वरेण्यं ॥ इत्यर्घ्योदकप्रार्थना ॥ अकालमृत्युहरणंसर्वव्याधिविनाशनं ॥ सूर्यस्यार्घ्योदकंतीर्थंजठरेधारयाम्यहं ॥ ततोमहासौरैरुपतिष्ठेत ॥ अथसौराणांमंत्राणांऋक्संख्यामृषिदैवत छंदांसिपुनर्वक्ष्यामोमहाव्याधिदुष्टापस्मारादिहृद्रोगोन्मादोदरगुल्मशूलशांतये गुदापशोणितार्शोभगंदरजलोदरपांडुरोगादि विस्फोटकाजीर्णरोगप्रमेहादिसर्वव्याधिनाशायममसमस्तपापक्षयार्थंसवितृसूर्यनारायणप्रीत्यर्थं महासौरजपेविनियोगः ॥ षष्टिऋचोर्धर्चएतासांसूर्योदेवताकेचिदंतिमाभिःस्तवंमन्यंतेसोहमितिध्यातव्यंयेमसूर्येणाहरहरुपासितेनधनधान्यवंतोबहुरुक्मवंतआदित्यवंतआयुष्यवंतआरोग्यवंतोरयिमंतोधनवंतोबलवंतोबहुपुत्रवंतोभवंति श्रीकामःशांतिकामःप्रज्ञाकामोमेधाकामः प्रज्ञाकामएवंभास्करस्याराधनंकुर्यात्सदागृहीपापक्षयार्थीव्याधिनाशार्थीनमःसोमनाथ नमःपरमऋषिभ्यो नमःपरमऋषिभ्यो

नमःपरमकल्पिम्यइतिसौरशांतिः ॥ अथमहार्घ्यसंख्या ॥ चतुर्विंशत्यर्घ्यदानैरेकावर्तनकंस्मृतं ॥ आवर्तनैश्चतुर्विंशैरर्घिणी परिकीर्तिता ॥ चतुर्विंशत्यर्घिणीभिर्लब्ध्वर्घ्यश्चप्रकीर्तितः ॥ चतुर्विंशतिलब्धार्घ्यैर्महार्घ्यंश्चप्रकीर्तितः ॥ लक्षत्रयेणविधिवदेक १२१७७६ त्रिंशत्सहस्रकैः ॥ षट्सप्तत्यधिकैःसप्तशतैरर्घ्यप्रदानतः ॥ सुप्रसन्नोभवेत्सूर्यःश्वद्रोगप्रशांतये ॥ तस्मात्सर्वप्रयत्नेनमहार्घ्यंचसमाचरेत् ॥ एवमर्घ्यविधिंकृत्वाततोहोमंसमाचरेत् ॥ शतंवाथसहस्रंवाअयुतंलक्षमेववा ॥ जुहुयात्पायसाज्येनखाद्यैर्नानाविधैरपि ॥ अर्कपुष्पैःसमिद्भिश्चकरवीरैस्तथापरे ॥ रक्तचंदनमिश्राभिरक्षताभिस्तथापुनः ॥ साग्रैर्दूर्वांकुरैश्चैवतिलैरपियवैःशुभैः ॥ गायत्र्यासौरमंत्रैर्वातृचामंत्रैर्विशेषतः ॥ व्याहृत्यावाथहोतव्यंसूर्यस्यप्रीतयेपुनः ॥ ब्राह्मणेभ्यःप्रदातव्यंवस्त्रधेनुहिरण्यकं ॥ एवमाराधितःसूर्यःसर्वान्कामान्विधास्यति ॥ इतितृचार्घ्यपद्धतिः ॥ अथषण्मुद्रालक्षणं ॥ हस्ताभ्यामंजलिंकृत्वानामिकामूलपर्वणोः ॥ अंगुष्ठौनिक्षिपेत्सेयंमुद्रात्वावाहनीस्मृता ॥ १ ॥ अधोमुखीत्वियंचेत्स्यात्स्थापनीमुद्रिकास्मृता ॥ उत्थितांगुष्ठमुष्ट्योस्तुसंयोगात्संनिधापनी ॥ २ ॥ अंतःप्रवेशितांगुष्ठासैवसंरोधिनीमता ॥ मुष्टिद्वयस्थितांगुष्ठौसुमुखौच परस्परं ॥ ३ ॥ संश्लिष्टांगुलिकौकुर्यात्सेयंसंमुखमुद्रिका ॥ प्रसृतांगुलिकौहस्तौमिथःश्लिष्टौचसंमुखौ ॥४॥ कुर्यात्स्वहृदयेसेयंमुद्राप्रार्थनसंज्ञिका ॥ इतिषण्मुद्राः ॥ इतिसंक्षेपः ॥ विशेषविस्तरस्तृचाभास्करादवगंतव्यः ॥ इतितृचाकल्पपद्धतिः ॥ छ ॥

## ॥ २८९ ॥ अथोदकशांतिप्रयोगः ॥

श्रीगणेशायनमः ॥ गोमयेनगोचर्ममात्रंचतुरस्रमुपलिप्यकर्ताशुचिःसुप्रक्षालितपाणिपादआचांतोदर्भेषूपविश्यदूर्वादर्भाश्चधा रयमाणःप्राणानायम्यदेशकालौसंकीर्त्यअस्माकमित्यादि• श्रीषडंगसहितवेदपुरुषप्रीतिद्वारासर्वेषांममगृहेनानाविधोत्पातोपशमनपूर्वक

मानज्वररोगादिपीडापरिहारार्थं आदित्यादिनवग्रहदेवतानुकूलतासिद्ध्यर्थंब्राह्मणद्वाराएकाहपक्षमाश्रित्यबौधायनोक्तांउद
कशांतिंकरिष्ये ॥ तत्रादौनिर्विघ्नतासिद्ध्यर्थंमहागणपतिपूजनंपंचवाक्यैःपुण्याहवाचनंआचार्यादिवरणंचकरिष्ये ॥ गणप
तिंसंपूज्यआचार्यवरणंकुर्यात् अस्मिन्कर्मणिपूर्वस्यांदिशिजपकर्तृत्वेनत्वांवृणे एवंदक्षिणस्यांपश्चिमायांउत्तरस्यांचेति ॥ ततः
पंचप्रस्थसिकताभिःशुद्धाभिररत्निमात्रंचतुरस्रंस्थंडिलंकृत्वासुवर्णव्रीहिदर्भानंगुष्ठोपकनिष्ठिकाभ्यांगृहीत्वास्थंडिलेमध्येप्रती
चीमारभ्यप्राक्संस्थांरेखां ॥ ॐ ब्रह्मजज्ञानंप्रथमंपुरस्ताद्विसीमतःसुरुचोवेनआवः ॥ सब्रुध्नियाउपमाअस्यविष्ठाःसतश्चयोनि
मसतश्चविवः ॥ इतिलिखेत् ॥ तस्यादक्षिणतः ॐ नाकेसुपर्णमुपयत्पतंतꣳहृदावेनंतोअभ्यचक्षतत्वा ॥ हिरण्यपक्षंवरुणस्यदू
तंयमस्ययोनौशकुनंभुरण्युं ॥ इतिप्रादेशमात्रांतथैवलेखांविलिख्यतस्याउत्तरतः ॐ आप्यायस्वसमेतुतेविश्वतःसोमवृष्णियं ॥
भवावाजस्यसंगथे ॥ इतितथैवलेखांविलिख्यस्थंडिलमध्येदक्षिणामारभ्योदगपवर्गांलेखां ॐ योरुद्रोअग्नौयओषधीषुयोरुद्रोवि
श्वाभुवनाविवेशतस्मैरुद्रायनमोअस्तु ॥ इतिविलिख्यतस्याःपश्चिमतः ॐ इदंविष्णुर्विचक्रमेत्रेधानिदधेपदं ॥ समूढमस्यपाꣳ
सुरे ॥ इतितथैवलेखांविलिख्यमध्यायाःपूर्वतः ॐ इंद्रंविश्वाअवीवृधन्त्समुद्रव्यचसंगिरः ॥ रथीतमꣳरथीनांवाजानाꣳसत्पतिं
पतिं ॥ इतितथैवलेखांविलिख्यलेखासाधनंगृहीत्वाभूर्भुवःसुवः देवस्यत्वासवितुःप्रसवेऽश्विनोर्बाहुभ्यांपूष्णोहस्ताभ्यामाददे ॥
इतिस्थंडिलादुत्तरतोनिरस्यापउपस्पृश्यगंधोदकेनाभ्युक्ष्यपुष्पैःफलैश्चावकीर्य स्थंडिलादुत्तरतःप्रागग्रान्दर्भानास्तीर्य तेषुप्रोक्ष
णींसूत्रवेष्टितमुदकुंभंचासाद्यदर्भैःप्रच्छाद्यप्रोक्षणीमुत्तानांकृत्वातस्यामुदगग्रंपवित्रंनिधायोदकमासिच्यतूष्णींत्रिरुत्पूयउदकुं
भमुत्तानंकृत्वा पवित्रेणप्रोक्ष्यधूपयित्वापुष्पैःफलैश्चावकीर्यब्रह्मजज्ञानमितिमंत्रेणस्थंडिलेनिधायस्थंडिलंपरिस्तृणीयात् ॥ ॐ

देवस्यत्वासवितुःप्रसवेश्विनोर्बाहुभ्यांपूष्णोहस्ताभ्यांपरिस्तृणामिइतिषोडशभैरुदगग्रैःपुरस्तात्परिस्तीर्य ॥ भूर्भुवःसुवःइतिदक्षि
णतःप्रागग्रैःसप्तदशभिः ॥ ॐ उद्वयंतमसस्परिपश्यंतोज्योतिरुत्तरं ॥ देवंदेवत्रासूर्यमगन्मज्योतिरुत्तमंइतिपश्चादुदगग्रैरष्टाद
शभिः ॥ ॐ अग्नआयाहिवीतयेगृणानोहव्यदातये॥ निहोतासत्सिबर्हिषि ॥ इत्युत्तरतःप्रागग्रैःसप्तदशभिःपरिस्तीर्य कुंभेति
रःपवित्रंनिधायअपआनयन्जपति तत्सवितुर्वरेण्यमिति ॐ अपःप्रणयति ॥ श्रद्धावाआपः ॥ श्रद्धामेवारभ्यप्रणीयप्रचर
ति ॥ अपःप्रणयति ॥ यज्ञोवाआपः ॥ यज्ञमेवारभ्यप्रणीयप्रचरति ॥ अपःप्रणयति ॥ वज्रोवाआपः ॥ वज्रमेवभ्रातृव्ये
भ्यःप्रहृत्यप्रणीयप्रचरति ॥ अपःप्रणयति ॥ आपोवैरक्षोघ्नीः ॥ रक्षसामपहत्यै ॥ अपःप्रणयति ॥ आपोवैदेवानांप्रियंधाम ॥
देवानामेवप्रियंधामप्रणीयप्रचरति ॥ आपोवैसर्वादेवताः ॥ देवताएवारभ्यप्रणीयप्रचरति ॥ आपोवैशांताःशांताभिरेवास्य
शुचंशमयति ॥ ॐ आपोवाइदंसर्वंविश्वाभूतान्यापःप्राणावाआपःपशवआपोन्नमापोमृतमापःसम्राडापोविराडापःस्वरा
डापश्छंदांस्यापोज्योतींष्यापोयजूंष्यापःसत्यमापःसर्वादेवताआपोभूर्भुवःसुवरापओम् ॥ ततःकुंभेभूर्भुवःसुवःइतियवाक्ष
ततंडुलानोप्यषडंगसहितवेदब्रह्मणेनमइतिषोडशोपचारैःसंपूज्यपिताविराजेतिमंत्रपुष्पंसमर्प्य दूर्वादर्भैःप्रच्छाद्य ॥ चतुरो
ब्राह्मणान्प्रतिदिशमासनेषूपवेश्य शंनोदेवीरभिष्टयइतिब्रह्मपात्रमभिमृशेत् ॥ ब्राह्मणाःब्रह्मपात्रमन्वारभ्यजपंति ॥ ॐ त
त्सवितुर्वरेण्यमित्येतांपच्छोर्धर्चशःसर्वांगायत्रीं ॥ ततः ॥ ॐ अग्निमीळेपुरोहितंयज्ञस्यदेवमृत्विजं ॥ होतारंरत्नधातमं ॥ इषे
त्वोर्जेत्वावायवस्थोपायवस्थदेवोवःसविताप्रार्पयतुश्रेष्ठतमायकर्मणे ॥ अग्नआयाहिवीतयेगृणानोहव्यदातये॥ निहोतासत्सिब
र्हिषि ॥ शंनोदेवीरभिष्टयआपोभवंतुपीतये ॥ शंयोरभिस्रवंतुनः ॥ इतिजपित्वावक्ष्यमाणान्मंत्रान्जपेयुः ॥ राक्षोघ्नं ॥ कृ

णुष्वपाजःप्रसितिंनपृथ्वींयाहिराजेवामवाँ२इभेन ॥ तृष्वीमनुप्रसितिंद्रूणानोस्तासिविध्यरक्षसस्तपिष्ठैः ॥ तवभ्रमासआशुया
पतंत्यनुस्पृशधृषताशोशुचानः ॥ तपूंष्यग्नेजुह्वापतंगानसंदितोविसृजविष्वगुल्काः ॥ प्रतिस्पशोविसृजतूर्णितमोभवापायुर्वि
शोअस्याअदब्धः ॥ योनोदूरेअघशंसोयोअंत्यग्नेमाकिष्टेव्यथिरादधर्षीत् ॥ उदग्नेतिष्ठप्रत्यातनुष्वन्यमित्राँ२ओषतात्तिग्महे
ते ॥ योनोअरातिंसमिधानचक्रेनीचातंधक्ष्यतसंनशुष्कं ॥ ऊर्ध्वोभवप्रतिविध्याध्यस्मदाविष्कृणुष्वदैव्यान्यग्ने ॥ अवस्थिरा
तनुहियातुजूनांजामिमजामिंप्रमृणीहिशत्रून् ॥ १ ॥ सतेजानातिसुमतिंयविष्ठयईवतेब्रह्मणेगातुमैरत् ॥ विश्वान्यस्मैसुदिना
निरायोद्युम्नान्यर्योविदुरोअभिद्यौत् ॥ सेदग्नेअस्तुसुभगःसुदानुर्यस्त्वानित्येनहविषायउक्थैः ॥ पिप्रीषतिस्वआयुषिदुरोणे
विश्वेदस्मैसुदिनासासदिष्टिः ॥ अर्चामितेसुमतिंघोष्यर्वाक्संतेवावातांजरतामियंगीः ॥ स्वश्वास्त्वासुरथामर्जयेमास्मेक्षत्राणि
धारयेरनुद्यून् ॥ इहत्वाभूर्याचरेदुपत्मन्दोषावस्तर्दीदिवांसमनुद्यून् ॥ क्रीडंतस्त्वासुमनसःसपेमाभिद्युम्नातस्थिवांसोजना
नां ॥ यस्त्वास्वश्वःसुहिरण्योअग्नउपयातिवसुमतारथेन ॥ तस्यत्रातभवसितस्यसखायस्तआतिथ्यमानुषग्जुजोषत् ॥ २ ॥
महोरुजामिबंधुतावचोभिस्तन्मापितुर्गोतमादन्वियाय ॥ त्वंनोअस्यवचसश्चिकिद्धिहोतर्यविष्ठसुक्रतोदमूनाः ॥ अस्वप्नजस्त
रणयःसुशेवाअतंद्रासोवृकाअश्रमिष्ठाः ॥ तेपायवःसध्र्यंचोनिषद्याग्नेतवनःपांत्वमूर ॥ येपायवोमामतेयंतेअग्नेपश्यंतोअंधंदु
रितादरक्षन् ॥ ररक्षतान्सुकृतोविश्ववेदादिप्संतइद्रिपवोनाहदेभुः ॥ त्वयावयंसधन्यस्त्वोतास्तवप्रणीत्यश्यामवाजान् ॥
उभाशंसासूदयसत्यतातेनुष्ठुयाकृणुह्यह्रयाण ॥ अयातेअग्नेसमिधाविधेमप्रतिस्तोमंशस्यमानंगृभाय ॥ दहाशसोरक्षसःपाह्य
स्मान्द्रुहोनिदोमित्रमहोअवद्यात् ॥३॥१॥ रक्षोहणंवाजिनमाजिघर्मिमित्रंप्रथिष्ठमुपयामिशर्म ॥ शिशानोअग्निःक्रतुभिःसमि

ऋ:सनोदिवसरिषःपातुनक्कं ॥ विज्योतिषाबृहताभात्यग्निराविर्विश्वानिकृणुतेमहित्वा ॥ प्रादेवीर्मायाःसहतेदुरेवाःशिशीते शृंगेरक्षसेविनिक्षे ॥ उतस्वानासोदिविषंत्वग्नेस्तिग्मायुधारक्षसेहंतवाउ ॥ इंद्रंवोविश्वतस्परिहवामहेजनेभ्यः ॥ अस्माकमस्तु केवलः ॥ इंद्रंनरोनेमधिताहवंतेयत्पार्यायुनजतेधियस्ताः ॥ शूरोनृषाताशवसश्चकानआगोमतिव्रजेभजात्वंनः ॥ इंद्रियाणि शतक्रतोयातेजनेषुपंचसु ॥ इंद्रतानितआवृणे ॥ अनुतेदायिमहइंद्रियायसत्रातेविश्वमनुवृत्रहत्ये ॥ अनुक्षत्रमनुसहोयजत्रेंद्र देवेभिरनुतेनृषह्ये ॥ आयस्मिन्त्सप्तवासवास्तिष्ठंतिस्वारुहोयथा ॥ ऋषिर्हदीर्घश्रुत्तमइंद्रस्यघर्मोअतिथिः ॥ आमासुपक्कमैरय आसूर्यंरोहयोदिवि ॥ घर्मनसामंतपतासुवृक्तिभिर्जुष्टंगिर्वणसेगिरः ॥ इंद्रमिद्गाथिनोबृहदिंद्रमर्केभिरर्किणः ॥ इंद्रंवाणीर नूषत ॥ गायंतित्वागायत्रिणोर्चंत्यर्कमर्किणः ॥ ब्रह्माणस्त्वाशतक्रतवुद्वंशमिवयेमिरे ॥ अंहोमुचेप्रभरेमामनीषामोषिष्ठदा व्नेसुमतिंगृणानाः ॥ इदमिंद्रप्रतिहव्यंगृभायसत्याःसंतुयजमानस्यकामाः ॥ विवेषयन्माधिषणाजजानस्तवैपुरापार्यादिंद्रम ह्नः ॥ अंहसोयत्रपीपरद्यथानोनावेवयांतमुभयेहवंते ॥ प्रसम्राजंप्रथममध्वराणामंहोमुचंवृषभंयज्ञियानां ॥ अपांनपातम श्विनाहयंतमस्मिन्नरइंद्रियंधत्तमोजः ॥ विनइंद्रमृधोजहिनीचायच्छपृतन्यतः ॥ अधस्पदंतमींकृधियोअस्माँअभिदासति ॥ इंद्रक्षत्रमभिवाममोजोजायथावृषभचर्षणीनां ॥ अपानुदोजनममित्रयंतमुरुंदेवेभ्योअकृणोरुलोकं ॥ मृगोनभीमःकुचरोगिरि ष्ठाःपरावतआजगामापरस्याः ॥ सृकंसंशायपविमिंद्रतिग्मंविशत्रून्ताढिविमृधोनुदस्व ॥ विशत्रून्विमृधोनुदविवृत्रस्यहनू रुज ॥ विमन्युमिंद्रभामितोमित्रस्याभिदासतः ॥ त्रातारमिंद्रमवितारमिंद्रंहवेहवेसुहवंशूरमिंद्रं ॥ हुवेनुशक्रंपुरुहूतमिंद्रं स्वस्तिनोमघवाधात्विंद्रः ॥ मातेअस्यांसहसावन्परिष्टावघायभूमहरिवःपरादै ॥ त्रायस्वनोवृकेभिर्वरूथैस्तवप्रियासःसूरिषु

स्याम ॥ अनवस्तेरथमश्वायतक्षन्त्वष्टावज्रंपुरुहूतद्युमंतं ॥ ब्रह्माणइंद्रंमहयंतोअर्कैरवर्धयन्नहयेहंतवाउ ॥ वृष्णेयत्तेवृषणोअर्कमर्चानिंद्रग्रावाणोअदितिःसजोषाः ॥ अनश्वासोयेपवयोरथाइंद्रेषिताअभ्यवर्ततदस्यून् ॥ २ ॥ यतइंद्रभयामहेततोनोअभयंकृधि ॥ मघवन्छग्धितवतन्नऊतयेविद्विषोविमृधोजहि ॥ स्वस्तिदाविशस्पतिर्वृत्रहाविमृधोवशी ॥ वृषेंद्रःपुरएतुनःस्वस्तिदाअभयंकरः ॥ महाँइंद्रोवज्रबाहुःषोडशीशर्मयच्छतु ॥ स्वस्तिनोमघवाकरोतुहंतुपाप्मानंयोस्मान्द्वेष्टि ॥ सजोषाइंद्रसगणोमरुद्भिःसोमंपिबवृत्रहन्छूरविद्वान् ॥ जहिशत्रूँरपमृधोनुदस्वाथाभयंकृणुहिविश्वतोनः ॥३॥ येदेवाःपुरःसदोग्निनेत्रारक्षोहणस्तेनःपांतुतेनोवंतुतेभ्योनमस्तेभ्यःस्वाहा ॥ येदेवादक्षिणसदोयमनेत्रारक्षोहणस्तेनःपांतुतेनोवंतुतेभ्योनमस्तेभ्यःस्वाहा ॥ येदेवाःपश्चात्सदःसवितृनेत्रारक्षोहणस्तेनःपांतुतेनोवंतुतेभ्योनमस्तेभ्यःस्वाहा ॥ येदेवाउत्तरसदोवरुणनेत्रारक्षोहणस्तेनःपांतुतेनोवंतुतेभ्योनमस्तेभ्यःस्वाहा ॥ येदेवाउपरिषदोबृहस्पतिनेत्रारक्षोहणस्तेनःपांतुतेनोवंतुतेभ्योनमस्तेभ्यःस्वाहा ॥ अग्नयेरक्षोघ्नेस्वाहा ॥ यमायरक्षोघ्नेस्वाहा ॥ सवित्रेरक्षोघ्नेस्वाहा ॥ वरुणायरक्षोघ्नेस्वाहा ॥ बृहस्पतयेदुवस्वतेरक्षोघ्नेस्वाहा ॥ अग्निरायुष्मान्त्सवनस्पतिभिरायुष्मान्तेनत्वायुषायुष्मंतंकरोमि ॥ सोमआयुष्मान्सओषधीभिरायुष्मान्तेनत्वायुषायुष्मंतंकरोमि ॥ यज्ञआयुष्मान्त्सदक्षिणाभिरायुष्मान्तेनत्वायुषायुष्मंतंकरोमि ॥ ब्रह्मायुष्मत्तद्ब्राह्मणैरायुष्मत्तेनत्वायुषायुष्मंतंकरोमि ॥ देवाआयुष्मंतस्तेमृतेनायुष्मंतस्तेनत्वायुषायुष्मंतंकरोमि ॥ ४ ॥ यावामिंद्रावरुणायतव्यातनूस्तयेममंहसोमुंचतं ॥ यावामिंद्रावरुणासहस्यातनूस्तयेममंहसोमुंचतं ॥ यावामिंद्रावरुणारक्षस्यातनूस्तयेममंहसोमुंचतं ॥ यावामिंद्रावरुणातेजस्यातनूस्तयेममंहसोमुंचतं ॥ योवामिंद्रावरुणावग्नौस्रामस्तंवामेतेनावयजे ॥ योवामिंद्रावरुणाद्विपात्सुपशुषुस्रामस्तंवामेतेनावयजे ॥

योवामिंद्रावरुणाचतुष्पात्सुपशुषुस्रामस्तंवामेतेनावयजे ॥ योवामिंद्रावरुणागोष्ठेस्रामस्तंवामेतेनावयजे ॥ योवामिंद्रावरुणा गृहेषुस्रामस्तंवामेतेनावयजे ॥ योवामिंद्रावरुणाप्सुस्रामस्तंवामेतेनावयजे ॥ योवामिंद्रावरुणौषधीषुस्रामस्तंवामेतेनावयजे ॥ योवामिंद्रावरुणावनस्पतिषुस्रामस्तंवामेतेनावयजे ॥ अग्नेयशस्विन्यशसेममर्पयेंद्रावतीमपचितीमिहावह ॥ अयंमूर्धापरमेष्ठी सुवर्चाः समानानामुत्तमश्लोकोअस्तु ॥ भद्रंपश्यंतउपसेदुरग्रेतपोदीक्षामृषयः सुवर्विदः ॥ ततःक्षत्रंबलमोजश्चजातंतदस्मैदेवा अभिसंनमंतु ॥ धाताविधातापरमोतसंदृक्प्रजापतिःपरमेष्ठीविराजा ॥ स्तोमाश्छंदांसिनिविदोमआहुरेतस्मैराष्ट्रम भिसन्नमाम ॥ अभ्यावर्तध्वमुपमेतसाकमयंशास्ताधिपतिर्वोअस्तु ॥ अस्यविज्ञानमनुसंरभध्वमिमंपश्चादनुजीवाथसर्वे ॥ ॥ ५ ॥ ऋताषाडृतधामाग्निर्गंधर्वस्तस्यौषधयोप्सरसऊर्जोनामसइदंब्रह्मक्षत्रंपातुताइदंब्रह्मक्षत्रंपातुतस्मैस्वाहाताभ्यःस्वाहा संहितोविश्वसामासूर्योगंधर्वस्तस्यमरीचयोप्सरसआयुवःसुषुम्नःसूर्यरश्मिश्चंद्रमागंधर्वस्तस्यनक्षत्राण्यप्सरसोबेकुरयोभुज्युः सुपर्णोयज्ञोगंधर्वस्तस्यदक्षिणाअप्सरसःस्तवाःप्रजापतिर्विश्वकर्मामनोगंधर्वस्तस्यर्क्सामान्यप्सरसोवह्नयइषिरोविश्वव्यचावा तोगंधर्वस्तस्यापोप्सरसोमुदाभुवनस्यपतेयस्यतउपरिगृहाइहच ॥ मनोरास्वाज्यानिंरायस्पोषंसुवीर्यंसंवत्सरीणांस्वस्ति ॥ परमेष्ठ्यधिपतिर्मृत्युर्गंधर्वस्तस्यविश्वमप्सरसोभुवःसुक्षितिःसुभूतिर्भद्रकृत्सुवर्वान्पर्जन्योगंधर्वस्तस्यविद्युतोप्सरसोरुचोदूरेहे तिरमृडयोमृत्युर्गंधर्वस्तस्यप्रजाअप्सरसोभीरुवश्चारुःकृपणकाशीकामोगंधर्वस्तस्याधयोप्सरसःशोचयंतीर्नामसइदंब्रह्मक्षत्रंपा तुताइदंब्रह्मक्षत्रंपातुतस्मैस्वाहाताभ्यःस्वाहासनोभुवनस्यपतेयस्यतउपरिगृहाइहच ॥ उरुब्रह्मणेस्मैक्षत्रायमहिशर्मयच्छ ॥ नमो अस्तुसर्पेभ्योयेकेचपृथिवीमनु ॥ येअंतरिक्षेयेदिवितेभ्यःसर्पेभ्योनमः ॥ येदोरोचनेदिवोयेवासूर्यस्यरश्मिषु ॥ येषामप्सुसदःकृतं

तेभ्यः सर्पेभ्योनमः ॥ याइषवोयातुधानानांयेवावनस्पतीँरनु ॥ येवावटेषुशेरतेतेभ्यः सर्पेभ्योनमः ॥ अयंपुरोहरिकेशः सूर्यर
श्मिस्तस्यरथगृत्सश्चरथौजाश्चसेनानिग्रामण्यौपुंजिकस्थलाचक्रतस्थलाचाप्सरसौयातुधानाहेतीरक्षाꣳसिप्रहेतिस्तेभ्योनमस्तेनो
मृडयंतुतेयंद्विष्मोयश्चनोद्वेष्टितंवोजंभेदधामि ॥ अयंदक्षिणाविश्वकर्मातस्यरथस्वनश्चरथेचित्रश्चसेनानिग्रामण्यौमेनकाचसह
जन्याचाप्सरसौदंक्ष्णवः पशवोहेतिःपौरुषेयोवधःप्रहेतिस्तेभ्योनमस्तेनोमृडयंतुतेयंद्विष्मोयश्चनोद्वेष्टितंवोजंभेदधामि ॥ अयंप
श्चाद्विश्वव्यचास्तस्यरथप्रोतश्चासमरथश्चसेनानिग्रामण्यौप्रम्लोचंतीचानुम्लोचंतीचाप्सरसौसर्पाहेतिर्व्याघ्राःप्रहेतिस्तेभ्योनम
स्तेनोमृडयंतुतेयंद्विष्मोयश्चनोद्वेष्टितंवोजंभेदधामि ॥ अयमुत्तरात्संयद्वसुस्तस्यसेनजिच्चसुषेणश्चसेनानिग्रामण्यौविश्वाचीचघृ
ताचीचाप्सरसावापोहेतिर्वातःप्रहेतिस्तेभ्योनमस्तेनोमृडयंतुतेयंद्विष्मोयश्चनोद्वेष्टितंवोजंभेदधामि ॥ अयमुपर्यर्वाग्वसुस्तस्य
तार्क्ष्यश्चारिष्टनेमिश्चसेनानिग्रामण्यावुर्वशीचपूर्वचित्तिश्चाप्सरसौविद्युद्धेतिरवस्फूर्जन्प्रहेतिस्तेभ्योनमस्तेनोमृडयंतुतेयंद्विष्मो
यश्चनोद्वेष्टितंवोजंभेदधामि ॥ आशुःशिशानोवृषभोनयुध्मोघनाघनःक्षोभणश्चर्षणीनां ॥ संक्रंदनोनिमिषएकवीरःशतꣳसेना
अजयत्साकमिंद्रः ॥ संक्रंदनेनानिमिषेणजिष्णुनायुत्कारेणदुश्च्यवनेनधृष्णुना ॥ तदिंद्रेणजयततत्सहध्वंयुधोनरइषुहस्तेनवृ
ष्णा ॥ सइषुहस्तैःसनिषंगिभिर्वशीसꣳस्रष्टासयुधइंद्रोगणेन ॥ सꣳसृष्टजित्सोमपाबाहुशर्ध्यूर्ध्वधन्वाप्रतिहिताभिरस्ता ॥ बृह
स्पतेपरिदीयारथेनरक्षोहामित्राꣳअपबाधमानः ॥ प्रभंजन्त्सेनाःप्रमृणोयुधाजयन्नस्माकमेध्यविताराथानां ॥ गोत्रभिदंगोवि
दंवज्रबाहुंजयंतमज्मप्रमृणंतमोजसा ॥ इमꣳसजाताअनुवीरयध्वमिंद्रꣳसखायोनुसꣳरभध्वं ॥ बलविज्ञायःस्थविरःप्रवीरःसह
स्वान्वाजीसहमानउग्रः ॥ अभिवीरोअभिसत्वासहोजाजैत्रमिंद्ररथमातिष्ठगोवित् ॥ अभिगोत्राणिसहसागाहमानोदायोवीरः

शतमन्युरिंद्रः ॥ दुश्च्यवनःपृतनाषाडयुध्योस्माकंसेनाअवतुप्रयुत्सु ॥ इंद्रआसांनेताबृहस्पतिर्दक्षिणायज्ञःपुरएतुसोमः ॥ देवसेनानामभिभंजतीनांजयंतीनाम्मरुतोयंत्वग्रं ॥ इंद्रस्यवृष्णोवरुणस्यराज्ञआदित्यानांमरुतांशर्धउग्रं ॥ महामनसांभुवन च्यवानांघोषोदेवानांजयतामुदस्थात् ॥ अस्माकमिंद्रःसमृतेषुध्वजेष्वस्माकंयाइषवस्ताजयंतु ॥ अस्माकंवीराउत्तरेभवंत्वस्मा नुदेवाअवताहवेषु ॥ उद्धर्षयमघवन्नायुधान्युत्सत्वनांमामकानांमहांसि ॥ उद्वृत्रहन्वाजिनांवाजिनान्युद्रथानांजय तामेतुघोषः ॥ उपप्रेतजयतानरःस्थिरावःसंतुबाहवः ॥ इंद्रोवःशर्मयच्छत्वनाधृष्यायथासथ ॥ अवसृष्टापरापतशरव्येब्रह्मसं शिता ॥ गच्छामित्रान्प्रविशमैषांकंचनोच्छिषः ॥ मर्माणितेवर्मभिश्छादयामिसोमस्त्वाराजामृतेनाभिवस्तां ॥ उरोर्वरीयो वरिवस्तेअस्तुजयंतंत्वामनुमदंतुदेवाः ॥ यत्रबाणाःसंपतंतिकुमाराविशिखाइव ॥ इंद्रोनस्तत्रवृत्रहाविश्वाहाशर्मयच्छतु ॥ शंच मेमयश्चमेप्रियंचमेनुकामश्चमेकामश्चमेसौमनसश्चमेभद्रंचमेश्रेयश्चमेवस्यश्चमेयशश्चमेभगश्चमेद्रविणंचमेयंताचमेधर्ताचमेक्षेमश्च मेधृतिश्चमेविश्वंचमेमहश्चमेसंविच्चमेज्ञात्रंचमेसूश्चमेप्रसूश्चमेसीरंचमेलयश्चमऋतंचमेमृतंचमेयक्ष्मंचमेनामयच्चमेजीवातुश्चमेदी र्घायुत्वंचमेनमित्रंचमेभयंचमेसुगंचमेशयनंचमेसूषाचमेसुदिनंचमे ॥ ममाग्नेवर्चोविहवेष्वस्तुवयंत्वेंधानास्तनुवंपुषेम ॥ मह्यंन मंतांप्रदिशश्चतस्रस्त्वयाध्यक्षेणपृतनाजयेम ॥ ममदेवाविहवेसंतुसर्वइंद्रावंतोमरुतोविष्णुरग्निः ॥ ममांतरिक्षमुरुगोपमस्तुम ह्यंवातःपवतांकामेअस्मिन् ॥ मयिदेवाद्रविणमायजंतांमय्याशीरस्तुमयिदेवहूतिः ॥ दैव्याहोतारावनिषंतपूर्वेरिष्टाःस्यामत नुवासुवीराः ॥ मह्यंयजंतुममयानिहव्याकूतिःसत्यामनसोमेअस्तु ॥ एनोमानिगांकतमच्चनाहंविश्वेदेवासोअधिवोचताम ॥ देवीःषडुर्वीरुरुणःकृणोतविश्वेदेवासइहवीरयध्वं ॥ माहास्महिप्रजयामातनूभिर्मारधामद्विषतेसोमराजन् ॥ अग्निर्मन्युंप्रति

नुदन्पुरस्तादद॑ब्धोगो॒पाःपरि॑पाहि॒नस्त्वं ॥ प्र॒त्यंचो॑यंतुनि॒गुतः॒पुन॒स्तेमैषां॑चि॒त्तंप्र॒बुधां॒ [illegible] धा॒ताधा॑तॄ॒णांभुव॑नस्य॒यस्पति॑
दे॒वंस॑वि॒तार॑मभिमाति॒षाहं॑ ॥ इ॒मंय॒ज्ञम॒श्विनो॒भाबृह॒स्पति॑र्दे॒वाःपा॑न्तु॒यज॑मानंन्यर्थात् ॥ उ॒रु॒व्यचा॑नो॒महि॒षःशर्म॑यंसद॒स्मि
न्हवे॑पुरुहू॒तःपु॑रु॒क्षु ॥ सनः॑प्र॒जायै॑हर्यश्वमृडयेंद्र॒मानो॑रीरिषो॒मापरा॑दाः ॥ येनः॑स॒पत्ना॒अप॒तेभ॑वंत्विंद्रा॒ग्निभ्या॒मव॑बाधामहे॒तान् ॥
वस॑वोरु॒द्रा॒आ॑दि॒त्याउ॑परि॒स्पृशं॑मो॒ग्रंचे॒त्तार॑मधिरा॒जम॑क्रन् ॥ अ॒र्वांचा॒मिंद्र॑म॒मुतो॑हवामहे॒योगो॒जिद्ध॑न॒जिद॑श्व॒जिद्यः ॥ इ॒मंनो॑य
ज्ञंवि॑ह॒वेजु॑षस्वा॒स्यकु॑र्मोहरिवोमे॒दिनं॑त्वा ॥ अ॒ग्नेर्मन्वे॑प्रथ॒मस्य॒प्रचे॑तसो॒यंपांच॑जन्यंब॒हवः॑समि॒न्धते॑ ॥ विश्व॑स्यांवि॒शिप्र॑विविशि
वांसमीमहे॒सनो॑मुंचत्वंह॑सः ॥ यस्ये॒दंप्रा॒णन्नि॑मि॒षद्यदे॒जति॒यस्य॑जा॒तंजन॑मानंच॒केव॑लं ॥ स्तौम्य॒ग्निंना॑थि॒तोजो॑हवीमि॒सनो॑मुं
चत्वंह॑सः ॥ इंद्र॒स्यम॑न्येप्रथ॒मस्य॒प्रचे॑तसोवृत्र॒घ्नस्तोमा॒उप॑मामु॒पागुः॑ ॥ योदा॒शुषः॑सु॒कृतो॒हव॒मुप॒गंता॒सनो॑मुंचत्वंह॑सः ॥ यः
सं॑ग्रा॒मंनय॑ति॒संव॒शीयु॒धेयः॑पु॒ष्टानि॑संसृ॒जति॑त्र॒याणि॑ ॥ स्तौमींद्रं॑नाथि॒तोजो॑हवीमि॒सनो॑मुंचत्वंह॑सः ॥ मन्वे॑वांमित्रावरुणात
स्य॑वित्त॒ंसत्यौ॑जसाद्दृंहणा॒यंनु॒देथे॑ ॥ याराजा॑नंस॒रथं॑या॒थउ॑ग्रा॒तानो॑मुंचत॒माग॑सः ॥ योवां॒रथ॑ऋ॒जुर॑श्मिःस॒त्यध॑र्मा॒मिथु
श्चर॑न्तमुप॒याति॑दू॒षयन् ॥ स्तौमि॑मि॒त्रावरु॑णानाथि॒तोजो॑हवीमि॒तौनो॑मुंचत॒माग॑सः ॥ वा॒योःस॑वि॒तुर्वि॒दथा॑नि॒मन्म॑हे॒याव॑त्मन्व
द्बि॑भृ॒तोयौच॒रक्ष॑तः ॥ यौवि॑श्व॒स्यप॑रि॒भूब॑भू॒वतु॒स्तौनो॑मुंचत॒माग॑सः ॥ उप॒श्रेष्ठा॑नआ॒शिषो॑दे॒वयो॒र्धर्मे॑अस्थिरन् ॥ स्तौमि॑वा॒युं
स॑वि॒तारं॑नाथि॒तोजो॑हवीमि॒तौनो॑मुंचत॒माग॑सः ॥ र॒थीत॑मौर॒थीना॑मह्वऊ॒तये॒शुभं॒गमि॑ष्ठौसु॒यमे॑भि॒रश्वैः॑ ॥ ययो॑र्वांदेवौदे॒वेष्वनि
शि॑त॒मोज॒स्तौनो॑मुंचत॒माग॑सः ॥ यद॒यातं॑वह॒तुंसू॒र्याया॑स्त्रिच॒क्रेण॑सं॒सद॑मि॒च्छमा॑नौ ॥ स्तौमि॑दे॒वाव॒श्विनौ॑नाथि॒तोजो॑हवी
मि॒तौनो॑मुंचत॒माग॑सः ॥ म॒रुतां॑मन्वे॒अधि॑नोब्रुवंतु॒प्रेमां॒वाचं॒विश्वा॑मवंतु॒विश्वे॑ ॥ आ॒शून्हु॑वेसु॒यमा॑नू॒तये॒तेनो॑मुंचं॒त्वेन॑सः ॥ ति

ममयुधंपीडितध्सहस्वद्विष्य॑श्मर्धःपृतनासुजिष्णु ॥ स्तौमिदेवान्मरुतोनाथितोजोहवीमितेनोमुंचंत्वेनसः ॥ देवानोमन्वे
अधिनोअुवंतुप्रेमांवाचंविश्वामवंतुविश्वे ॥ आशून्हुवेसुयमानूतयेतेनोमुंचंत्वेनसः ॥ यदिदंमाभिशोचतिपौरुषेयेणदैव्येन ॥
स्तौमिविश्वान्देवान्नाथितोजोहवीमितेनोमुंचंत्वेनसः ॥ अनुनोद्यानुमतिर्यज्ञंदेवेषुमन्यतां ॥ अग्निश्चहव्यवाहनोभवतांदाशुषे
मयः ॥ अन्विदनुमतेत्वंमन्यासैशंचनःकृधि ॥ क्रत्वेदक्षायनोहिनुप्रणआयूंषितारिषः ॥ वैश्वानरोनऊत्याप्रयातुपरावतः ॥
अग्निरुक्थेनवाहसा ॥ पृष्टोदिविपृष्टोअग्निःपृथिव्यांपृष्टोविश्वाओषधीराविवेश ॥ वैश्वानरःसहसापृष्टोअग्निःसनोदिवासरिषः
पातुनक्तं ॥ येअप्रथेतामामितेभिरोजोभिर्येप्रतिष्ठेअभवतांवसूनां ॥ स्तौमिद्यावापृथिवीनाथितोजोहवीमितेनोमुंचतमंहसः॥
उर्वीरोदसीवरिवःकृणोतंक्षेत्रस्यपत्नीअधिनोअयातं ॥ स्तौमिद्यावापृथिवीनाथितोजोहवीमितेनोमुंचतमंहसः ॥ यत्तेवयंपुरु
षत्रायविष्ठाविद्वांसश्चकृमाकच्चनागः ॥ कृधीस्वस्मां२अदितेरनागाव्येनांसिशिश्रथोविष्वगग्ने ॥ यथाहृतद्वसवोगौर्यंचित्प
दिषितामर्मुचतायजत्राः ॥ एवात्वमस्मत्प्रमुंचाव्यंहःप्रातार्यग्नेप्रतरान्नआयुः ॥ समीचीनामासिप्राचीदिक्तस्यास्तेग्निरधिप
तिरसितोरक्षितायश्चाधिपतिर्यश्चगोप्ताताभ्यांनमस्तौनोमृडयतांतेयंद्विष्मोयश्चनोद्वेष्टितंवांजंभेदधामि ॥ ओजस्विनीनामासि
दक्षिणादिक्तस्यास्तइंद्रोधिपतिःपृदाकूरक्षितायश्चाधिपतिर्यश्चगोप्ताताभ्यांनमस्तौनोमृडयतांतेयंद्विष्मोयश्चनोद्वेष्टितंवांजंभेद
धामि ॥ प्राचीनामासिप्रतीचीदिक्तस्यास्तेसोमोधिपतिःस्वजोरक्षितायश्चाधिपतिर्यश्चगोप्ताताभ्यांनमस्तौनोमृडयतांतेयंद्वि
ष्मोयश्चनोद्वेष्टितंवांजंभेदधामि ॥ अवस्थावानामास्युदीचीदिक्तस्यास्तेवरुणोधिपतिस्तिरश्चराजीरक्षितायश्चाधिपतिर्यश्चगो
प्ताताभ्यानमस्तौनोमृडयतांतेयंद्विष्मोयश्चनोद्वेष्टितंवांजंभेदधामि ॥ अधिपत्नीनामासिबृहतीदिक्तस्यास्तेबृहस्पतिरधिपतिः

श्वित्रोरक्षितायश्चाधिपतिर्यश्चंगोप्ताताभ्यांनमस्तौनोमृडयतांतेयंद्विष्मोयश्चनोद्वेष्टितंवांजंभेदधामि ॥ वशिनीनामासीयादित्त स्यास्तेयमोधिपतिःकल्माषग्रीवोरक्षितायश्चाधिपतिर्यश्चंगोप्ताताभ्यांनमस्तौनोमृडयतांतेयंद्विष्मोयश्चनोद्वेष्टितंवांजंभेदधामि। हेतयोनामस्थतेषांवःपुरोगृहाअग्निर्वइषवःसलिलोवातनामंतेभ्योवोनमस्तेनोमृडयततेयंद्विष्मोयश्चनोद्वेष्टितंवोजंभेदधामि ॥ निलिंपानामस्थतेषांवोदक्षिणागृहाःपितरोवइषवःसगरोवातनामंतेभ्योवोनमस्तेनोमृडयततेयंद्विष्मोयश्चनोद्वेष्टितंवोजंभेदधा मि ॥ वज्रिणोनामस्थतेषांवःपश्चाद्गृहाःस्वप्नोवइषवोगह्वरोवातनामंतेभ्योवोनमस्तेनोमृडयततेयंद्विष्मोयश्चनोद्वेष्टितंवोजंभे दधामि. ॥ अवस्थावानोनामस्थतेषांवउत्तराद्गृहाआपोवइषवःसमुद्रोवातनामंतेभ्योवोनमस्तेनोमृडयततेयंद्विष्मोयश्चनोद्वेष्टि तंवोजंभेदधामि ॥ अधिपतयोनामस्थतेषांवउपरिगृहावर्षवइषवोवस्वान्वातनामंतेभ्योवोनमस्तेनोमृडयततेयंद्विष्मोयश्चनोद्वे ष्टितंवोजंभेदधामि ॥ क्रव्यानामस्थपार्थिवास्तेषांवइहगृहाअन्नंवइषवोनिमिषोवातनामंतेभ्योवोनमस्तेनोमृडयततेयंद्विष्मोय श्चनोद्वेष्टितंवोजंभेदधामि॥ शतायुधायशतवीर्यायशतोतयेभिमातिषाहे ॥ शतंयोनःशरदोअजीतानिंद्रोनेषदतिदुरितानिवि श्वा ॥ येचत्वारःपथयोदेवयानाअंतराद्यावापृथिवीवियंति ॥ तेषांयोअज्यानिमजीतिमावहात्तस्मैनोदेवाःपरिदत्तेहसर्वे ॥ ग्रीष्मोहेमंतउतनोवसंतःशरद्वर्षाःसुवितन्नोअस्तु ॥ तेषामृतूनांशतशारदानांनिवातएषामभयेस्याम ॥ इदुवत्सरायपरिवत्स रायसंवत्सरायकृणुताबृहन्नमः ॥ तेषांवयंसुमतौयज्ञियानांज्योगजीताअहताःस्याम ॥ भद्रान्नश्रेयःसमनैष्टदेवास्त्वयावसेन समशीमहित्वा ॥ सनोमयोभूःपितोआविशस्वशंतोकायतनुवेस्योनः ॥ भूतंभव्यंभविष्यद्वषट्स्वाहानमऋक्सामयजुर्वषट् स्वाहानमोगायत्रीत्रिष्टुप्जगतीवषट्स्वाहानमःपृथिव्यंतरिक्षंद्यौर्वषट्स्वाहानमोग्निर्वायुःसूर्योवषट्स्वाहानमःप्राणोव्यानो

प्राणोवषट्त्स्वाहानमोअंकृषिर्वृष्टिर्वषट्त्स्वाहानमः पितापुत्रः पौत्रोवषट्त्स्वाहानमोभूर्भुवः सुवर्वषट्स्वाहानमः ॥ इंद्रोदधीचो अस्थभिः ॥ वृत्राण्यप्रतिष्कुतः ॥ जघानननवतीर्नव ॥ इच्छन्नश्वस्ययच्छिरः ॥ पर्वतेष्वपश्रितं ॥ तद्विदच्छर्यणावति ॥ अत्रा हगोरमन्वत ॥ नामत्वष्टुरपीच्यं ॥ इत्थाचंद्रमसोगृहे ॥ इंद्रमिद्गाथिनोबृहत् ॥ इंद्रमर्केभिरर्किणः ॥ इंद्रंवाणीरनूषत ॥ इंद्र इद्धर्योःसचा ॥ संमिश्लआवचोयुजा ॥ इंद्रोवज्रीहिरण्ययः ॥ इंद्रोदीर्घायचक्षसे ॥ आसूर्यंरोहयद्दिवि ॥ विगोभिरद्रिमैर यत् ॥ इंद्रवाजेषुनोअव ॥ सहस्रप्रधनेषुच ॥ उग्रउग्राभिरूतिभिः ॥ तमिंद्रंवाजयामसि ॥ महेवृत्रायहंतवे ॥ सवृषावृषभो भुवत् ॥ इंद्रःसदामनेकृतः ॥ ओजिष्ठःसबलेहितः ॥ द्युम्नीश्लोकीससोम्यः ॥ गिरावज्रोनसंभृतः ॥ सबलोअनपच्युतः ॥ ववक्षुरुग्रोअस्तृतः ॥ चक्षुषोहेतेमनसोहेते ॥ वाचोहेतेब्रह्मणोहेते ॥ योमाघायुरभिदासति ॥ तमग्नेमेन्यामेनिंकृणु ॥ योमाच क्षुषायोमनसा ॥ योवाचाब्रह्मणाघायुरभिदासति ॥ तयाग्नेत्वंमेन्या ॥ अमुममेनिंकृणु ॥ यत्किंचासौमनसायच्चवाचा ॥ यज्ञैर्जुहोतियजुषाहविर्भिः ॥ तन्मृत्युर्निर्ऋत्यासंविदानः ॥ पुरादिष्टादाहुतीरस्यहंतु ॥ यातुधानानिर्ऋतिरादुरक्षः ॥ तेअस्य घ्नंत्वनृतेनसत्यं ॥ इंद्रेषिताआज्यमस्यमथ्नंतु ॥ मातत्समृद्धियदसौकरोति ॥ हन्मितेहंकृतंहविः ॥ योमेघोरमचीकृतः ॥ अपांचौतउभौबाहू ॥ अपनह्याम्यास्यं ॥ अपनह्यामितेबाहू ॥ अपनह्याम्यास्यं ॥ अग्नेर्देवस्यब्रह्मणा ॥ सर्वंतेवधिषंकृतं पुरामुष्यवषट्कारात् ॥ यज्ञंदेवेषुनस्कृधि ॥ स्विष्टमस्माकंभूयात् ॥ मास्मान्प्रापन्नरातयः ॥ अंतिदूरेसतोअग्ने ॥ भ्रा तृव्यस्याभिदासतः ॥ वषट्कारेणवज्रेण ॥ कृत्यांहन्मिकृतामहं ॥ योमानक्तंदिवासायं ॥ प्रातश्चाह्नोनिपीयति ॥ अद्यातं[illegible] वज्रेण ॥ भ्रातृव्यंपादयामसि ॥ प्राणोरक्षतिविश्वमेजत् ॥ इर्योभूत्वाबहुधाबहूनि ॥ सइत्सर्वंव्यानशे ॥ योदेवोदेवेषु[illegible]

रंतः ॥ आर्धृदूदाक्षेभ्रियच्यनदृशा ॥ तमित्प्राणंमनसोपशिक्षत ॥ अग्रंदेवानामिदमस्तुनोहविः ॥ मनसश्चित्तेदं ॥ भूतंभव्यं चगुप्यते ॥ तद्धिदेवेष्वग्रियं ॥ आनएतुपुरश्चरं ॥ सहदेवैरिमंहवं ॥ मनश्रेयसिश्रेयसि ॥ कर्मन्यज्ञपतिर्दधत् ॥ जुषतां मेवागिदंहविः ॥ विराट्देवीपुरोहिता ॥ हव्यवाडनपायिनी ॥ ययारूपाणिबहुधावदंति ॥ पेशांसिदेवाःपरमेजनित्रे ॥ सानोविराडनपस्फुरंती ॥ वाग्देवीजुषतामिदंहविः ॥ चक्षुर्देवानांज्योतिरमृतेन्यक्तं ॥ अस्यविज्ञानायबहुधानिधीयते ॥ तस्यसुम्नमशीमहि ॥ माऩोहासीद्विचक्षणं ॥ आयुरिन्नःप्रतीर्यतां ॥ अनंधाश्चक्षुषावयं ॥ जीवाज्योतिरशीमहि ॥ सुवर्ज्योतिरुतामृतं ॥ श्रोत्रेणभद्रमुतशृण्वंतिसत्यं ॥ श्रोत्रेणवाचंबहुधोद्यमानां ॥ श्रोत्रेणमोदश्चमहश्चश्रूयते ॥ श्रोत्रेणसर्वादिशआशृणोमि ॥ येनप्राच्याउतदक्षिण्या ॥ प्रतीच्यैदिशःशृण्वंत्युत्तरात् ॥ तदिच्छ्रोत्रंबहुधोद्यमानं ॥ अरान्ननेमिःपरिसर्वंबभूव ॥ सिंहेव्याघ्रउतयापृदाकौ ॥ त्विषिरग्नौब्राह्मणेसूर्येया ॥ इंद्रंयादेवीसुभगाजजान ॥ सानआगन्वर्चसासंविदाना ॥ याराजन्येदुंदुभावायतायां ॥ अश्वस्यक्रंदेपुरुषस्यमायौ ॥ इंद्रंयादेवीसुभगाजजान ॥ सानआगन्वर्चसासंविदाना ॥ याहस्तिनिद्वीपिनियाहिरण्ये ॥ त्विषिरश्वेषुपुरुषेषुगोषु ॥ इंद्रंयादेवीसुभगाजजान ॥ सानआगन्वर्चसासंविदाना ॥ रथेअक्षेषुवृषभस्यवाजे ॥ वातेपर्जन्येवरुणस्यशुष्मे ॥ इंद्रंयादेवीसुभगाजजान ॥ सानआगन्वर्चसासंविदाना ॥ राडसिविराडसि ॥ सम्राडसिस्वराडसि ॥ इंद्रायत्वातेजस्वतेतेजस्वंतंश्रीणामि ॥ इंद्रायत्वौजस्वतओजस्वंतंश्रीणामि ॥ इंद्रायत्वापयस्वतेपयस्वंतंश्रीणामि ॥ इंद्रायत्वायुष्मतआयुष्मंतंश्रीणामि ॥ तेजोसि ॥ तत्तेप्रयच्छामि ॥ तेजस्वदस्तुमेमुखं ॥ तेजस्वच्छिरोअस्तुमे ॥ तेजस्वान्विश्वतःप्रत्यङ् ॥ तेजसासंपिपृग्धिमा ॥ ओजोसि ॥ तत्तेप्रयच्छामि ॥ ओजस्वदस्तुमेमुखं ॥ ओजस्वच्छि

रोअस्तुमे ॥ ओजस्वान्विश्वतःप्रत्यङ् ॥ ओजसासंपिपृग्धिमा ॥ पयोसि ॥ तत्तेपयस्कामि ॥ पयस्वदस्तुमेमुखं ॥ पयस्वच्छि
रोअस्तुमे ॥ पयस्वान्विश्वतःप्रत्यङ् ॥ पयसासंपिपृग्धिमा ॥ आयुरसि ॥ तत्तेमयच्छामि ॥ आयुष्मदस्तुमेमुखं ॥ आयुष्म
च्छिरोअस्तुमे ॥ आयुष्मान्विश्वतःप्रत्यङ् ॥ आयुषासंपिपृग्धिमा ॥ इममग्नआयुषेवर्चसेकृधि ॥ प्रियंरेतोवरुणसोमराजन् ॥
मातेवास्माअदितेशर्मयच्छ ॥ विश्वेदेवाजरदष्टिर्यथासत् ॥ आयुरसिविश्वायुरसि ॥ सर्वायुरसिसर्वमायुरसि ॥ यतोवातोम
नोजवाः ॥ यतःक्षरंतिसिंधवः ॥ तासांत्वासर्वासांरुचा ॥ अभिषिंचामिवर्चसा ॥ समुद्रइवासिगह्मना ॥ सोमइवास्यदा
भ्यः ॥ अग्निरिवविश्वतःप्रत्यङ् ॥ सूर्यइवज्योतिषाविभूः ॥ अपांयोद्रवणेरसः ॥ तमहमस्माआमुष्यायणाय ॥ तेजसेब्रह्मव
र्चसायगृह्णामि ॥ अपांयऊर्मौरसः ॥ तमहमस्माआमुष्यायणाय ॥ ओजसेवीर्यायगृह्णामि ॥ अपांयोमध्यतोरसः ॥ तमहम
स्माआमुष्यायणाय ॥ पुष्ट्यैप्रजननायगृह्णामि ॥ अपांयोयज्ञियोरसः ॥ तमहमस्माआमुष्यायणाय ॥ आयुषेदीर्घायुत्वायगृ
ह्णामि ॥ अहमस्मिप्रथमजाऋतस्य ॥ पूर्वंदेवेभ्योअमृतस्यनाभिः ॥ योमाददातिसइदेवमावाः ॥ अहमन्नमन्नमदंतमद्मि ॥
पूर्वमग्नेरपिदहत्यन्नं ॥ यत्तौहासातेअहमुत्तरेषु ॥ व्यात्तमस्यपशवःसुजंभं ॥ पश्यंतिधीराःप्रचरंतिपाकाः ॥ जहाम्यन्यंनजहा
म्यन्यं ॥ अहमन्नंवशमिच्चरामि ॥ समानमर्थंपर्येमिभुंजत् ॥ कोमामन्नंमनुष्योदयेत ॥ पराकेअन्नंनिहितंलोकएतत् ॥ विश्वै
र्देवैःपितृभिर्गुप्तमन्नं ॥ यदद्यतेलुप्यतेयत्परोप्यते ॥ शततमीसातनूर्मेबभूव ॥ महांतौचरूसकृद्दुग्धेनपप्रौ ॥ दिवंचपृश्निपृथि
वींचसाकं ॥ तत्संपिबंतोनमिनंतिवेधसः ॥ नैतद्भूयोभवतिनोकनीयः ॥ अन्नंप्राणमन्नमपानमाहुः ॥ अन्नंमृत्युंतमुजीवातुमा
हुः ॥ अन्नंब्रह्माणोजरसंवदंति ॥ अन्नमाहुःप्रजननंप्रजानां ॥ मोघमन्नंविंदतेअप्रचेताः ॥ सत्यंब्रवीमिवधइत्सतस्य ॥ नार्यम

गुंपुष्यतिनासखायं ॥ केवलाघोभवतिकेवलादी ॥ अहंमेघस्तनयन्वर्षन्नसि ॥ मामदंत्यहमद्म्यन्यान् ॥ अहरसद्मृतोभवामि ॥ मदादित्याअधिसर्वेतपंति ॥ देवींवाचमजनयंतदेवाः ॥ तांविश्वरूपाःपशवोवदंति ॥ सानोमंद्रेषमूर्जंदुहाना ॥ धेनुर्वागस्मानुपसुष्टुतैतु ॥ यद्वाग्वदंत्यविचेतनानि ॥ राष्ट्रीदेवानांनिषसादमंद्रा ॥ चतस्रऊर्जंदुदुहेपयांसि ॥ क्वस्विदस्याःपरमंजगाम ॥ अनंतामंतादधिनिर्मितांमहीं ॥ यस्यांदेवाअदधुर्भोजनानि ॥ एकाक्षरांद्विपदांषट्पदांच ॥ वाचंदेवाउपजीवंतिविश्वे ॥ वाचंदेवाउपजीवंतिविश्वे ॥ वाचंगंधर्वाःपशवोमनुष्याः ॥ वाचीमाविश्वाभुवनान्यर्पिता ॥ सानोहवंजुषतामिंद्रपत्नी ॥ वागक्षरंप्रथमजाऋतस्य ॥ वेदानांमातामृतस्यनाभिः ॥ सानोजुषाणोपयज्ञमागात् ॥ अवंतीदेवीसुहवामेअस्तु ॥ यामृषयोमंत्रकृतोमनीषिणः ॥ अन्वैच्छन्देवास्तपसाश्रमेण ॥ तांदेवींवाचंहविषायजामहे ॥ सानोदधातुसुकृतस्यलोके ॥ चत्वारिवाक्परिमितापदानि ॥ तानिविदुर्ब्राह्मणायेमनीषिणः ॥ गुहात्रीणिनिहितानेंगयंति ॥ तुरीयंवाचोमनुष्यावदंति ॥ श्रद्धयाग्निःसमिध्यते ॥ श्रद्धयाविंदतेहविः ॥ श्रद्धांभगस्यमूर्धनि ॥ वचसावेदयामसि ॥ प्रियंश्रद्धेददतः ॥ प्रियंश्रद्धेदिदासतः ॥ प्रियंभोजेषुयज्वसु ॥ इदंमउदितंकृधि ॥ यथादेवाअसुरेषु ॥ श्रद्धामुग्रेषुचक्रिरे ॥ एवंभोजेषुयज्वसु ॥ अस्माकमुदितंकृधि ॥ श्रद्धांदेवायजमानाः ॥ वायुगोपाउपासते ॥ श्रद्धांहृदय्ययाकूत्या ॥ श्रद्धयाहूतयेहविः ॥ श्रद्धांप्रातर्हवामहे ॥ श्रद्धांमध्यंदिनंपरि ॥ श्रद्धांसूर्यस्यनिम्रुचि ॥ श्रद्धेश्रद्धापयेहमा ॥ श्रद्धादेवमनधिवस्ते ॥ श्रद्धाविश्वमिदंजगत् ॥ श्रद्धांकामस्यमातरं ॥ हविषावर्धयामसि ॥ ब्रह्मजज्ञानंप्रथमंपुरस्तात् ॥ विसीमतःसुरुचोवेनआवः ॥ सबुध्नियाउपमाअस्यविष्ठाः ॥ सतश्चयोनिमसतश्चविवः ॥ पितावि्राजामृषभोरयीणां ॥ अंतरिक्षंविश्वरूपआविवेश ॥ तमर्कैरभ्यर्चंतिवत्सं ॥

ब्रह्मसंतंब्रह्मणावर्धयंतः ॥ ब्रह्मदेवानजनयत् ॥ ब्रह्मविश्वमिदंजगत् ॥ ब्रह्मणःक्षत्रंनिर्मितं ॥ ब्रह्मब्राह्मणआत्मना ॥ अंतर स्मिन्निमेलोकाः ॥ अंतर्विश्वमिदंजगत् ॥ ब्रह्मैवभूतानांज्येष्ठं ॥ तेनकोर्हतिस्पर्धितुं ॥ ब्रह्मन्देवास्त्रयस्त्रिंशत् ॥ ब्रह्मन्निंद्रप्र जापती ॥ ब्रह्मन्हविश्वाभूतानि ॥ नावीवांतःसमाहिता ॥ चतस्रआशाःप्रचरंत्वग्नयः ॥ इमंनोयज्ञंनयतुप्रजानन् ॥ घृतंपि न्वन्नजरंसुवीरं ॥ ब्रह्मसमिद्भवत्याहुतीनां ॥ आगावोअग्मन्नुतभद्रमक्रन् ॥ सीदंतुगोष्ठेरणयंत्वस्मे ॥ प्रजावतीःपुरुरूपाइ हस्युः ॥ इंद्रायपूर्वीरुषसोदुहानाः ॥ इंद्रोयज्वनेपृणतेचशिक्षति ॥ उपेद्ददातिनस्वंमुषायति ॥ भूयोभूयोरयिमिदस्यवर्धयन् ॥ अभिन्नेखिल्लेनिदधातिदेवयुं ॥ नतानशंतिनदभातितस्करः ॥ नैनाअमित्रोव्यथिरादधर्षति ॥ देवांश्चयाभिर्यजतेददाति च ॥ ज्योगित्ताभिःसचतेगोपतिःसह ॥ नताअर्वारेणुककाटोअश्नुते ॥ नसंस्कृतत्रमुपयंतिताअभि ॥ उरुगायमभयंतस्यता अनु ॥ गावोमर्तस्यविचरंतियज्वनः ॥ गावोभगोगावइंद्रोमेअच्छात् ॥ गावःसोमस्यप्रथमस्यभक्षः ॥ इमायागावःसजना सइंद्रः ॥ इच्छामीद्धृदामनसाचिदिंद्रं ॥ यूयंगावोमेदयथाकृशंचित् ॥ अश्लीलंचित्कृणुथासुप्रतीकं ॥ भद्रंगृहंकृणुथभद्रवा चः ॥ बृहद्वोवयउच्यतेसभासु ॥ प्रजावतीःसूयवसंरिशंतीः ॥ शुद्धाअपःसुप्रपाणेपिबंतीः ॥ मावस्तेनईशतमाघशंसः ॥ परिवोहेतीरुद्रस्यवृंज्यात् ॥ उपेदमुपपर्चनं ॥ आसुगोषूपपृच्यतां ॥ उपर्षभस्यरेतसि ॥ उपेंद्रतववीर्ये ॥ तासूर्याचंद्रमसा विश्वभृत्तमामहत् ॥ तेजोवसुमद्भाजतोदिवि ॥ सामात्मानाचरतःसामचारिणा ॥ ययोर्व्रतंनममेजातुदेवयोः ॥ उभावंतौ परियातअम्या ॥ दिवोनरश्मीस्तनुतोव्यर्णवे ॥ उभाभुवंतीभुवनाकविक्रतू ॥ सूर्यानचंद्राचरतोहुतामती ॥ पतीद्युमद्वि श्वविदाउभादिवः ॥ सूर्याउभाचंद्रमसाविचक्षणा ॥ विश्ववारावरिवोभावरेण्या ॥ तानोवतंमतिमंतामहिव्रता ॥ विश्ववपरी

प्रतरणातरंता ॥ सुपर्विदाद्दृशयेभूरिरश्मी ॥ सूर्याहिचंद्रावसुत्वेषदर्शता ॥ मनस्विनोभानुचरतोनुसंदिवं ॥ अस्यश्रवोनद्यः
सप्तबिभ्रति ॥ द्यावाक्षामापृथिवीदर्शतंवपुः ॥ अस्मेसूर्याचंद्रमसाभिचक्षे ॥ श्रद्धेकमिंद्रचरतोविचर्तुरं ॥ पूर्वापरंचरतोमाय
यैतौ ॥ शिशूक्रीडंतौपरियातोअध्वरं ॥ विश्वान्यन्योभुवनाभिचष्टे ॥ ऋतूनन्योविदधज्जायतेपुनः ॥ हिरण्यवर्णाःशुचयः
पावकायासुजातःकश्यपोयास्विंद्रः ॥ अग्निंयागर्भंदधिरेविरूपास्तानआपःशंस्योनाभवंतु ॥ यासांराजावरुणोयातिमध्ये
सत्यानृतेअवपश्यंजनानां ॥ मधुश्चुतःशुचयोयाःपावकास्तानआपःशंस्योनाभवंतु ॥ यासांदेवादिविकृण्वंतिभक्षंयाअंतरिक्षे
बहुधाभवंति ॥ याःपृथिवींपयसोंदंतिशुक्रास्तानआपःशंस्योनाभवंतु ॥ शिवेनमाचक्षुषापश्यतापःशिवयातन्वोपस्पृशतत्व
चंमे ॥ सर्वांअग्नींरप्सुषदोहुवेवोमयिवर्चोबलमोजोनिधत्त ॥ आपोभद्राघृतमिदापआसुरग्नीषोमौबिभ्रत्यापइत्ताः ॥ ती
व्रोरसोमधुपृचामरंगमआमाप्राणेनसहवर्चसागन् ॥ आदित्पश्याम्युतवाशृणोम्यामाघोषोगच्छतिवाङ्नआसाम् ॥ मन्येभेजा
नोअमृतस्यतर्हिहिरण्यवर्णाअतृपंयदावः ॥ नासदासीन्नोसदासीत्तदानीं ॥ नासीद्रजोनोव्योमापरोयत् ॥ किमावरीवःकुह
कस्यशर्मन् ॥ अंभःकिमासीद्गहनंगभीरं ॥ नमृत्युरमृतंतर्हिन ॥ रात्र्याअह्नआसीत्प्रकेतः ॥ आनीदवातंस्वधयातदेकं ॥
तस्माद्धान्यन्नपरःकिंचनास ॥ तमआसीत्तमसागूढमग्रेप्रकेतं ॥ सलिलंसर्वमाइदं ॥ तुच्छेनाभ्वपिहितंयदासीत् ॥ तमस
स्तन्महिनाजायतैकं ॥ कामस्तदग्रेसमवर्ततादधि ॥ मनसोरेतःप्रथमंयदासीत् ॥ सतोबंधुमसतिनिरविंदन् ॥ हृदिप्रतीष्याक
वयोमनीषा ॥ तिरश्चीनोविततोरश्मिरेषां ॥ अधस्विदासी३दुपरिस्विदासी३त् ॥ रेतोधाआसन्महिमानआसन् ॥ स्वधाअ
वस्तात्प्रयतिःपरस्तात् ॥ कोअद्धावेदकइहप्रवोचत् ॥ कुतआजाताकुतइयंविसृष्टिः ॥ अर्वाग्देवाअस्यविसर्जनाय ॥ अथा

कोवेदवयतआबभूव ॥ इयंविसृष्टिर्यतआबभूव ॥ यदिवादधेयदिवान ॥ योअस्याध्यक्षःपरमेव्योमन् ॥ सोअंगवेदयदिवान
वेद ॥ किंस्विद्वनंकउसवृक्षआसीत् ॥ यतोद्यावापृथिवीनिष्टतक्षुः ॥ मनीषिणोमनसापृच्छतेदुतत् ॥ यदध्यतिष्ठद्भुवनानि
धारयन् ॥ ब्रह्मवनंब्रह्मसवृक्षआसीत् ॥ यतोद्यावापृथिवीनिष्टतक्षुः ॥ मनीषिणोमनसाविब्रवीमिवः ॥ ब्रह्माध्यतिष्ठद्भुवनानि
धारयन् ॥प्रातरग्निंप्रातरिंद्रंहवामहे ॥ प्रातर्मित्रावरुणाप्रातरश्विना ॥ प्रातर्भगंपूषणंब्रह्मणस्पतिं ॥ प्रातःसोममुतरुद्रंहु
वेम ॥ प्रातर्जितंभगमुग्रंहुवेम ॥ वयंपुत्रमदितेर्योविधर्ता ॥ आध्रश्चिद्यंमन्यमानस्तुरश्चित् ॥ राजाचिद्यंभगंभक्षीत्याह ॥
भगप्रणेतर्भगसत्यराधः ॥ भगेमांधियमुदवददन्नः ॥ भगप्रणोजनयगोभिरश्वैः ॥ भगप्रनृभिर्नृवंतःस्याम ॥ उतेदानींभगवं
तःस्याम ॥ उतप्रपित्वउतमध्येअह्नां ॥ उतोदितामघवन्त्सूर्यस्य ॥ वयंदेवानांसुमतौस्याम ॥ भगएवभगवाँअस्तुदेवाः ॥
तेनवयंभगवंतःस्याम ॥ तंत्वाभगसर्वइज्जोहवीमि ॥ सनोभगपुरएताभवेह ॥ समध्वरायोषसोनमंत ॥ दधिक्रावेवशुचयेप
दाय ॥ अर्वाचीनंवसुविदंभगंनः ॥ रथमिवाश्वावाजिनआवहंतु ॥ अश्वावतीर्गोमतीर्नउषासः ॥ वीरवतीःसदमुच्छंतुभ
द्राः ॥ घृतंदुहानाविश्वतःप्रपीनाः ॥ यूयंपातस्वस्तिभिःसदानः ॥ ॥ अग्निर्नःपातुकृत्तिकाः ॥ नक्षत्रंदेवमिंद्रियं ॥ इद
मासांविचक्षणं ॥ हविरासंजुहोतन ॥ यस्यभांतिरश्मयोयस्यकेतवः ॥ यस्येमाविश्वाभुवनानिसर्वा ॥ सकृत्तिकाभिरभिसंव
सानः ॥ अग्निर्नोदेवःसुवितेदधातु ॥ प्रजापतेरोहिणीवेतुपत्नी ॥ विश्वरूपाबृहतीचित्रभानुः ॥ १ ॥ सानोयज्ञस्यसुवितेदधा
तु ॥ यथाजीवेमशरदःसवीराः ॥ रोहिणीदेव्युदगात्पुरस्तात् ॥ विश्वारूपाणिप्रतिमोदमाना ॥ प्रजापतिंहविषावर्धयंती ॥
प्रियादेवानामुपयातुयज्ञं ॥ सोमोराजामृगशीर्षेणआगन् ॥ शिवंनक्षत्रंप्रियमस्यधाम ॥ आप्यायमानोबहुधाजनेषु ॥ रेतः

प्रजायजमानेदधातु ॥ २ ॥ यत्तेनक्षत्रंमृगशीर्षमस्ति ॥ प्रियंराजन्प्रियतमंप्रियाणां ॥ तस्मैतेसोमहविषाविधेम ॥ शंनए धिद्विपदेशंचतुष्पदे ॥ आर्द्रयारुद्रःप्रथमानएति ॥ श्रेष्ठोदेवानांपतिरघ्नियानां ॥ नक्षत्रमस्यहविषाविधेम ॥ मानःप्रजांरीरिषन्मोतवीरान् ॥ हेतीरुद्रस्यपरिणोवृणक्तु ॥ आर्द्रानक्षत्रंजुषतांहविर्नः ॥ ३ ॥ प्रमुंचमानौदुरितानिविश्वा ॥ अपाघशंसंनुदतामरातिं ॥ पुनर्नोदेव्यदितिस्पृणोतु ॥ पुनर्वसूनःपुनरेतांयज्ञं ॥ पुनर्नोदेवाअभियंतुसर्वे ॥ पुनःपुनर्वोहविषायजामः ॥ एवानदेव्यदितिरनर्वा ॥ विश्वस्यभर्त्रीजगतःप्रतिष्ठा ॥ पुनर्वसूहविषावर्धयंती ॥ प्रियंदेवानामप्येतुपाथः ॥ ४ ॥ बृहस्पतिःप्रथमंजायमानः ॥ तिष्यंनक्षत्रमभिसंबभूव ॥ श्रेष्ठोदेवानांपृतनासुजिष्णुः ॥ दिशोनुसर्वाअभयंनोअस्तु ॥ तिष्यःपुरस्तादुतमध्यतोनः ॥ बृहस्पतिर्नःपरिपातुपश्चात् ॥ बाधेतांद्वेषोअभयंकृणुतां ॥ सुवीर्यस्यपतयःस्याम ॥ इदंसर्पेभ्योहविरस्तुजुष्टं ॥ आश्रेषायेषामनुयंतिचेतः ॥५॥ येअंतरिक्षंपृथिवींक्षियंति ॥ तेनःसर्पासोहवमागमिष्ठाः ॥ येरोचनेसूर्यस्यापिसर्पाः ॥ येदिवंदेवीमनुसंचरंति ॥ येषामाश्रेषाअनुयंतिकामं ॥ तेभ्यःसर्पेभ्योमधुमज्जुहोमि ॥ उपहूताःपितरोयेमघासु ॥ मनोजवसःसुकृतःसुकृत्याः ॥ तेनोनक्षत्रेहवमागमिष्ठाः ॥ स्वधाभिर्यज्ञंप्रयतंजुषंतां ॥ ६ ॥ येअग्निदग्धायेनग्निदग्धाः ॥ येमुंलोकंपितरःक्षियंति ॥ यांश्चविद्मयांउचनप्रविद्म ॥ मघासुयज्ञंसुकृतंजुषंतां ॥ गवांपतिःफल्गुनीनामसित्वं ॥ तदर्यमन्वरुणमित्रचारु ॥ तंत्वावयंसनितारंसनीनां ॥ जीवाजीवंतमुपसंविशेम ॥ येनेमाविश्वाभुवनानिसंजिता ॥ यस्यदेवाअनुसंयंतिचेतः ॥ ७ ॥ अर्यमाराजाजरस्तुविष्मान् ॥ फल्गुनीनामृषभोरोरवीति ॥ श्रेष्ठोदेवानांभगवोभगासि ॥ तत्त्वाविदुःफल्गुनीस्तस्यवित्तात् ॥ अस्मभ्यंक्षत्रमजरंसुवीर्यं ॥ गोमदश्ववदुपसंनुदेह ॥ भगोहदाताभगइत्प्रदाता ॥ भगोदेवीःफल्गुनीरा

विवेश ॥ भगस्येत्तंप्रसवंगमेम ॥ यत्रदेवैःसधमादंमदेम ॥ ८ ॥ आयातुदेवःसवितोपयातु ॥ हिरण्ययेनसुवृतारथेन ॥ वहन्हस्तंसुभगंविद्मनापसं ॥ प्रयच्छंतंपपुरिंपुण्यमच्छ ॥ हस्तःप्रयच्छत्वमृतंवसीयः ॥ दक्षिणेनप्रतिगृभ्णीमएनत् ॥ दातारमद्यसविताविदेय ॥ योनोहस्तायप्रसुवातियज्ञं ॥ त्वष्टानक्षत्रमभ्येतिचित्रां ॥ सुभंससंयुवतिंरोचमानां ॥ ९ ॥ निवेशयन्नमृतान्मर्त्यांश्च ॥ रूपाणिपिंशन्भुवनानिविश्वा ॥ तन्नस्त्वष्टातदुचित्राविचष्टां ॥ तन्नक्षत्रंभूरिदाअस्तुमह्यं ॥ तन्नःप्रजांवीरवतींसनोतु ॥ गोभिर्नोअश्वैःसमनक्तुयज्ञं ॥ वायुर्नक्षत्रमभ्येतिनिष्ट्यां ॥ तिग्मशृंगोवृषभोरोरुवाणः ॥ समीरयन्भुवनामातरिश्वा ॥ अपद्वेषांसिनुदतामरातीः ॥ १० ॥ तन्नोवायुस्तदुनिष्ट्याशृणोतु ॥ तन्नक्षत्रंभूरिदाअस्तुमह्यं ॥ तन्नोदेवासोअनुजानंतुकामं ॥ यथातरेमदुरितानिविश्वा ॥ दूरमस्मच्छत्रवोयंतुभीताः ॥ तदिंद्राग्नीकृणुतांतद्विशाखे ॥ तन्नोदेवाअनुमदंतुयज्ञं ॥ पश्चात्पुरस्तादभयंनोअस्तु ॥ नक्षत्राणामधिपत्नीविशाखे ॥ श्रेष्ठाविंद्राग्नीभुवनस्यगोपौ ॥ ११ ॥ विषूचःशत्रूनपबाधमानौ ॥ अपक्षुधंनुदतामरातिं ॥ पूर्णापश्चादुतपूर्णापुरस्तात् ॥ उन्मध्यतःपौर्णमासीजिगाय ॥ तस्यांदेवाअधिसंवसंतः ॥ उत्तमेनाकइहमादयंतां ॥ पृथ्वीसुवर्चायुवतिःसजोषाः ॥ पौर्णमास्युदगाच्छोभमाना ॥ आप्याययंतीदुरितानिविश्वा ॥ उरुंदुहांयजमानाययज्ञं ॥ १२ ॥ ऋध्यास्महव्यैर्नमसोपसद्य ॥ मित्रंदेवंमित्रधेयंनोअस्तु ॥ अनूराधान्हविषावर्धयंतः ॥ शतंजीवेमशरदःसवीराः ॥ चित्रंनक्षत्रमुदगात्पुरस्तात् ॥ अनूराधासइतियद्वदंति ॥ तन्मित्रएतिपथिभिर्देवयानैः ॥ हिरण्ययैर्विततैरंतरिक्षे ॥ इंद्रोज्येष्ठामनुनक्षत्रमेति ॥ यस्मिन्वृत्रंवृत्रतूर्येततार ॥ तस्मिन्वयममृतंदुहानाः ॥ क्षुधंतरेमदुरितिंदुरिष्टिं ॥ पुरंदरायवृषभायधृष्णवे ॥ अषाढायसहमानायमीढुषे ॥ इंद्रायज्येष्ठामधुमद्दुहाना ॥ उरुंकृणोतुयजमानायलोकं ॥ मूलंप्रजांवी

रवतींविदेय॥ पराच्येतुनिर्ऋतिःपराचा ॥ गोभिर्नक्षत्रंपशुभिःसमक्तं ॥ अहर्भूयाद्यजमानायमह्यं ॥ १२ ॥ अहर्नोअद्यसुवितेदं
धातु ॥ मूलंनक्षत्रमितियद्वदंति ॥ पराचींवाचानिर्ऋतिंनुदामि ॥ शिवंप्रजायैशिवमस्तुमह्यं ॥ यादिव्याआपःपर्यसासंबभूवुः ॥
याअंतरिक्षउतपार्थिवीर्याः ॥ यासामषाढाअनुयंतिकामं ॥ तानआपःशःस्योनाभवंतु ॥ याश्चकूप्यायाश्चनाद्याःसमुद्रियाः ॥
याश्चवैशंतीरुतप्रासचीर्याः ॥ यासामषाढामधुभक्षयंति ॥ तानआपःशःस्योनाभवंतु ॥ तन्नोविश्वेउपश्रृण्वंतुदेवाः ॥ तद
षाढाअभिसंयंतुयज्ञं ॥ तन्नक्षत्रंप्रथतांपशुभ्यः ॥ कृषिर्वृष्टिर्यजमानायकल्पतां ॥ शुभ्राःकन्यायुवतयःसुपेशसः ॥ कर्मकृतः
सुकृतोवीर्यावतीः ॥ विश्वान्देवान्हविषावर्धयंतीः ॥ अषाढाःकाममुपयंतुयज्ञं ॥ यस्मिन्ब्रह्माभ्यजयत्सर्वमेतत् ॥ अमुंच
लोकमिदमुचसर्वं ॥ तन्नोनक्षत्रमभिजिद्विजित्य ॥ श्रियंदधात्वहृणीयमानं ॥ उभौलोकौब्रह्मणासंजितेमौ ॥ तन्नोनक्षत्रमभि
जिद्विचष्टां ॥ तस्मिन्वयंपृतनाःसंजयेम ॥ तन्नोदेवासोअनुजानंतुकामं ॥ शृण्वंतिश्रोणाममृतस्यगोपां ॥ पुण्यामस्याउपश्रृणो
मिवाचं ॥ महींदेवींविष्णुपत्नीमजूर्यां ॥ प्रतीचीमेनाःहविषायजामः ॥ त्रेधाविष्णुरुरुगायोविचक्रमे ॥ महींदिवंपृथिवीमंत
रिक्षं ॥ तच्छ्रोणैतिश्रवइच्छमाना ॥ पुण्यःश्लोकंयजमानायकृण्वती ॥ अष्टौदेवावसवःसोम्यासः ॥ चतस्रोदेवीरजराःश्रवि
ष्ठाः ॥ तेयज्ञंपांतुरजसःपरस्तात् ॥ संवत्सरीणममृतःस्वस्ति ॥ यज्ञंनःपांतुवसवःपुरस्तात् ॥ दक्षिणतोभियंतुश्रविष्ठाः ॥ पु
ण्यंनक्षत्रमभिसंविशाम ॥ मानोअरातिरघशःसागन् ॥ क्षत्रस्यराजावरुणोधिराजः ॥ नक्षत्राणाःशतभिषग्वसिष्ठः ॥ तौदे
वेभ्यःकृणुतोदीर्घमायुः ॥ शतःसहस्राभेषजानिधत्तः ॥ यज्ञंनोराजावरुणउपयातु ॥ तन्नोविश्वेअभिसंयंतुदेवाः ॥ तन्नोनक्ष
त्रःशतभिषग्जुषाणं ॥ दीर्घमायुःप्रतिरद्भेषजानि ॥ अजएकपादुदगात्पुरस्तात् ॥ विश्वाभूतानिप्रतिमोदमानः ॥ तस्यदेवाः

प्रसवंयंतिसर्वे ॥ प्रोष्ठपदासोअमृतस्यगोपाः ॥ विभ्राजमानःसमिधानउग्रः ॥ आंतरिक्षमरुहदगंधां ॥ तꣳसूर्यंदेवमजमेक
पादं ॥ प्रोष्ठपदासोअनुयंतिसर्वे ॥ अहिर्बुध्नियःप्रथमानएति ॥ श्रेष्ठोदेवानांमुतमानुषाणां ॥ तंब्राह्मणाःसोमपाःसोम्यासः ॥
प्रोष्ठपदासोअभिरक्षंतिसर्वे ॥ चत्वारएकमभिकर्मदेवाः ॥ प्रोष्ठपदासइतियान्वदंति ॥ तेबुध्नियंपरिषद्यꣳस्तुवंतः ॥ अहिꣳरक्षं
तिनमसोपसद्य ॥ पूषारेवत्यन्वेतिपंथां ॥ पुष्टिपतीपशुपावाजबस्त्यौ ॥ इमानिहव्याप्रयताजुषाणा ॥ सुगैर्नोयानैरुपयातांय
ज्ञं ॥ क्षुद्रान्पशून्रक्षतुरेवतीनः ॥ गावोनोअश्वाꣳअन्वेतुपूषा ॥ अन्नꣳरक्षंतौबहुधाविरूपं ॥ वाजꣳसनुतांयजमानाययज्ञं ॥
तदश्विनावश्वयुजोपयातां ॥ शुभंगमिष्ठौसुयमेभिरश्वैः ॥ स्वंनक्षत्रꣳहविषायजंतौ ॥ मध्वासंपृक्तौयजुषासमक्तौ ॥ यौदेवा
नांभिषजौहव्यवाहौ ॥ विश्वस्यदूतावमृतस्यगोपौ ॥ तौनक्षत्रंजुजुषाणोपयातां ॥ नमोश्विभ्यांकृणुमोश्वयुग्भ्यां ॥ अपपा
प्मानंभरणीभरंतु ॥ तद्यमोराजाभगवान्विचष्टां ॥ लोकस्यराजामहतोमहान्हि ॥ सुगंनःपंथामभयंकृणोतु ॥ यस्मिन्नक्षत्रेयम
एतिराजा ॥ यस्मिन्नेनमभ्यषिंचंतदेवाः ॥ तदस्यचित्रꣳहविषायजाम ॥ अपपाप्मानंभरणीभरंतु ॥ निवेशनीसंगमनीवसूनां
विश्वारूपाणिवसून्यावेशयंती ॥ सहस्रपोषꣳसुभगाररांणासानआगन्वर्चसासंविदाना ॥ यत्तेदेवाअदधुर्भागधेयममावास्ये
संवसंतोमहित्वा ॥ सानोयज्ञंपिपृहिविश्ववारेरयिंनोधेहिसुभगेसुवीरं ॥ नवोनवोभवतिजायमानोह्नांकेतुरुषसामेत्यग्रे ॥
भागंदेवेभ्योविदधात्यायन्प्रचंद्रमास्तिरतिदीर्घमायुः ॥ यमादित्याअꣳशुमाप्याययंतियमक्षितमक्षितयःपिबंति ॥ तेनंनोराजा
वरुणोबृहस्पतिराप्याययंतुभुवनस्यगोपाः ॥ येविरूपेसमनसासंव्ययंती ॥ समानंतंतुंपरितातनाते ॥ विभूप्रभूअनुभूविश्वतो
हुवे ॥ तेनोनक्षत्रेहवमागमेतं ॥ वयंदेवीब्रह्मणासंविदानाः ॥ सुरत्नासोदेववीतिंदधानाः ॥ अहोरात्रेहविषावर्धयंतः ॥

अतिपाप्मानमतिमुक्त्यागमेम ॥ मत्युंवद्दश्यायती ॥ व्युच्छंतीदुहितादिवः ॥ अपोमहीवृणुतेचक्षुषा ॥ तमोज्योतिष्कृणो
तिसूनरी ॥ उदुस्त्रियाःसचतेसूर्यः ॥ सचाउद्यंनक्षत्रमर्चिमत् ॥ तवेदुषोव्युषिसूर्यस्यच ॥ संभक्तेनगमेमहि ॥ तन्नोनक्षत्रम
र्चिमत् ॥ भानुमत्तेजउच्चरत् ॥ उपयज्ञमिहागमत् ॥ प्रनक्षत्रायदेवाय ॥ इंद्रायेंदुंहवामहे ॥ सनःसवितासुवत्सनिं ॥ पु
ष्टिदांवीरवत्तमं ॥ उदुत्यंजातवेदसंदेवंवहंतिकेतवः ॥ दृशेविश्वायसूर्यं ॥ चित्रंदेवानामुदगादनीकंचक्षुर्मित्रस्यवरुणस्याग्नेः ॥
आप्राद्यावापृथिवीअंतरिक्षंसूर्यआत्माजगतस्तस्थुषश्च ॥ अदितिर्नउरुष्यत्वदितिःशर्मयच्छतु ॥ अदितिःपात्वंहसः ॥ म
हीमूषुमातरंसुव्रतानामृतस्यपत्नीमवसेहुवेम ॥ तुविक्षत्रामजरंतीमुरूचींसुशर्माणमदितिंसुप्रणीतिं ॥ इदंविष्णुर्विचक्रमेत्रे
धानिदधेपदं ॥ समूढमस्यपांसुरे ॥ प्रतद्विष्णुःस्तवतेवीर्याय ॥ मृगोनभीमःकुचरोगिरिष्ठाः ॥ यस्योरुषुत्रिषुविक्रमणेषु ॥
अधिक्षियंतिभुवनानिविश्वा ॥ अग्निर्मूर्द्धादिवःककुत्पतिःपृथिव्याअयं ॥ अपांरेतांसिजिन्वति ॥ भुवोयज्ञस्यरजसश्चने
तायत्रानियुद्भिःसचसेशिवाभिः ॥ दिविमूर्धानंदधिषेसुवर्षाजिह्वामग्नेचकृषेहव्यवाहं ॥ अनुनोद्यानुमतिर्यज्ञंदेवेषुमन्यतां ॥
अग्निश्चहव्यवाहनोभवतांदाशुषेमयः ॥ अन्विदनुमतेत्वंमन्यासैशंचनःकृधि ॥ क्रत्वेदक्षायनोहिनुप्रणआयूंषितारिषः ॥ क्रव्य
वाहमभिमातिषाहं ॥ रक्षोहणंपृतनासुजिष्णुं ॥ ज्योतिष्मंतंदीद्यतंपुरंधिं ॥ अग्निंस्विष्टकृतमाहुवेम ॥ स्विष्टमग्नेअभितत्पृणा
हि ॥ विश्वादेवपृतनाअभिष्य ॥ उरुंनःपंथांप्रदिशन्विभाहि ॥ ज्योतिष्मद्धेह्यजरंनआयुः ॥ ॥ अग्नयेस्वाहाकृत्तिकाभ्यः
स्वाहा ॥ अंबायैस्वाहादुलायैस्वाहा ॥ नितत्न्यैस्वाहाभ्रयंत्यैस्वाहा ॥ मेघयंत्यैस्वाहावर्षयंत्यैस्वाहा ॥ चुपुणीकायैस्वाहा ॥ प्र
जापतयेस्वाहारोहिण्यैस्वाहा ॥ रोचमानायैस्वाहाप्रजाभ्यःस्वाहा ॥ सोमायस्वाहामृगशीर्षायस्वाहा ॥ इन्वकाभ्यःस्वाहौष

धीभ्यः स्वाहा ॥ राज्याय स्वाहाभिजित्यै स्वाहा ॥ रुद्राय स्वाहार्द्रायै स्वाहा ॥ पिन्वमानायै स्वाहा पशुभ्यः स्वाहा ॥ अदित्यै स्वाहा पुनर्वसुभ्यां ॥ स्वाहा भूत्यै स्वाहा प्रजात्यै स्वाहा ॥ बृहस्पतये स्वाहा तिष्याय स्वाहा ॥ ब्रह्मवर्चसाय स्वाहा ॥ सर्पेभ्यः स्वाहाश्रेषाभ्यः स्वाहा ॥ दंदशूकेभ्यः स्वाहा ॥ पितृभ्यः स्वाहा मघाभ्यः ॥ स्वाहानघाभ्यः स्वाहागदाभ्यः ॥ स्वाहारुंधतीभ्यः स्वाहा ॥ अर्यम्णे स्वाहा फल्गुनीभ्याᳬं स्वाहा ॥ पशुभ्यः स्वाहा ॥ भगाय स्वाहा फल्गुनीभ्याᳬं स्वाहा ॥ श्रैष्ठ्याय स्वाहा ॥ सवित्रे स्वाहा हस्ताय ॥ स्वाहा ददते स्वाहा पृणते ॥ स्वाहा प्रयच्छते स्वाहा प्रतिगृभ्णते स्वाहा ॥ त्वष्ट्रे स्वाहा चित्रायै स्वाहा ॥ चैत्राय स्वाहा प्रजायै स्वाहा ॥ वायवे स्वाहा निष्ट्यायै स्वाहा ॥ कामचाराय स्वाहाभिजित्यै स्वाहा ॥ इंद्राग्निभ्याᳬं स्वाहा विशाखाभ्याᳬं स्वाहा ॥ श्रैष्ठ्याय स्वाहाभिजित्यै स्वाहा ॥ पौर्णमास्यै स्वाहा कामाय स्वाहागत्यै स्वाहा ॥ मित्राय स्वाहानूराधेभ्यः स्वाहा ॥ मित्रधेयाय स्वाहाभिजित्यै स्वाहा ॥ इंद्राय स्वाहा ज्येष्ठायै स्वाहा ॥ ज्यैष्ठ्याय स्वाहाभिजित्यै स्वाहा ॥ प्रजापतये स्वाहा मूलाय स्वाहा ॥ प्रजायै स्वाहा ॥ अद्भ्यः स्वाहाषाढाभ्यः स्वाहा ॥ समुद्राय स्वाहा कामाय स्वाहा ॥ अभिजित्यै स्वाहा ॥ विश्वेभ्यो देवेभ्यः स्वाहाषाढाभ्यः स्वाहा ॥ अनपजय्याय स्वाहा जित्यै स्वाहा ॥ ब्रह्मणे स्वाहाभिजिते स्वाहा ॥ ब्रह्मलोकाय स्वाहाभिजित्यै स्वाहा ॥ विष्णवे स्वाहा श्रोणायै स्वाहा ॥ श्लोकाय स्वाहा श्रुताय स्वाहा ॥ वसुभ्यः स्वाहा श्रविष्ठाभ्यः स्वाहा ॥ अग्राय स्वाहा परीत्यै स्वाहा ॥ वरुणाय स्वाहा शतभिषजे स्वाहा ॥ भेषजेभ्यः स्वाहा ॥ अजायैकपदे स्वाहा प्रोष्ठपदेभ्यः स्वाहा ॥ तेजसे स्वाहा ब्रह्मवर्चसाय स्वाहा ॥ अहये बुध्नियाय स्वाहा प्रोष्ठपदेभ्यः स्वाहा ॥ प्रतिष्ठायै स्वाहा ॥ पूष्णे स्वाहा रेवत्यै स्वाहा ॥ पशुभ्यः स्वाहा ॥ अश्विभ्याᳬं स्वाहाश्वयुग्भ्याᳬं स्वाहा ॥ श्रोत्राय स्वाहा श्रुत्यै स्वाहा ॥ यमाय स्वाहापभरणीभ्यः स्वाहा ॥ रा

ज्यायस्वाहाभिजित्यैस्वाहा ॥ अमावास्यायैस्वाहाकामायस्वाहागत्यैस्वाहा ॥ चंद्रमसेस्वाहाप्रतीदश्यायैस्वाहा ॥ अहोरात्रेभ्यःस्वाहार्धमासेभ्यःस्वाहा ॥ मासेभ्यःस्वाहर्तुभ्यःस्वाहा ॥ संवत्सरायस्वाहा ॥ अह्नेस्वाहारात्र्यैस्वाहा ॥ अतिमुक्त्यैस्वाहा ॥ उषसेस्वाहाव्युष्ट्यैस्वाहा ॥ व्यूषुष्यैस्वाहाव्युच्छंत्यैस्वाहा ॥ व्युष्टायैस्वाहा ॥ नक्षत्रायस्वाहोदेष्यतेस्वाहा ॥ उद्यतेस्वाहोदितायस्वाहा ॥ हरसेस्वाहाभरसेस्वाहा ॥ भ्राजसेस्वाहातेजसेस्वाहा ॥ तपसेस्वाहाब्रह्मवर्चसायस्वाहा ॥ सूर्यायस्वाहानक्षत्रेभ्यःस्वाहा ॥ प्रतिष्ठायैस्वाहा ॥ अदित्यैस्वाहाप्रतिष्ठायैस्वाहा ॥ विष्णवेस्वाहायज्ञायस्वाहा ॥ प्रतिष्ठायैस्वाहा ॥ ॥ दधिक्राव्णोअकारिषंजिष्णोरश्वस्यवाजिनः ॥ सुरभिनोमुखाकरत्प्रणआयुंषितारिषत् ॥ आपोहिष्ठामयोभुवस्तान० ३ ॥ यच्चिद्धितेविशोयथा० ( अत्र यत्किंचेदं० कितवासो० इमंमेवरुण० तत्त्वायामि० उदुत्तमं० ॥ अस्तभ्नाद्द्यामृषभोअंतरिक्षममिमीतवरिमाणंपृथिव्याआसीदद्विश्वाभुवनानिसम्राड्विश्वेत्तानिवरुणस्यव्रतानि । अवतेहेळो० इत्यादिमंत्रान्पठंति) हिरण्यवर्णाःशुचयःपावका० यासांराजा० यासांदेवा० शिवेनमाचक्षुषापश्यतापःशिवयातनुवोपस्पृशतत्वचंमे ॥ सर्वांअग्नींरप्सुषदोहुवेवोमयिवर्चोबलमोजोनिधत्त ॥ पवमानःसुवर्जनः० ॥ जातवेदामोर्जयंत्यापुनातु ॥ भूर्भुवःसुवः ॥ तच्छंयोरावृणीमहे ॥ गातुंयज्ञाय ॥ गातुंयज्ञपतये ॥ दैवीस्वस्तिरस्तुनः ॥ स्वस्तिर्मानुषेभ्यः ॥ ऊर्ध्वंजिगातुभेषजं ॥ शंनोअस्तुद्विपदे ॥ शंचतुष्पदे ॥ नमोब्रह्मणेनमोअस्त्वग्नयेनमःपृथिव्यैनमओषधीभ्यः ॥ नमोवाचेनमोवाचस्पतयेनमोविष्णवेबृहतेकरोमि ॥ इतित्रिः ॥ ॐशांतिःशांतिःशांतिः ॥ ततऋत्विजःपंचोपचारैःसंपूज्यप्रणवेनोदकुंभमुत्थाप्यतत्रैवस्थाप्यतज्ज

लैर्व्याहृतिभिरापोहिष्ठेत्यादिभिःसपत्नीकंयजमानमभिषिंचेयुः ॥ यजमानस्तेभ्योदक्षिणांपूर्वस्थितायहिरण्यंदक्षिणस्थायरजतं प्रत्यक्स्थायकांस्यंउदक्स्थायवस्त्रमितितन्निष्क्रयंवादद्यात् ब्राह्मणान्भोजयेत्इति ॥ इत्युदकशांतिःसप्रयोगासमाप्ता ॥

## ॥ २९० ॥ अथापामार्जनम् ॥

श्रीः ॥ दाल्भ्यउवाच ॥ भगवन्प्राणिनःसर्वेविषरोगाद्युपद्रवैः ॥ दुष्टग्रहोपघातैश्चसर्वकालमुपद्रुताः ॥ १ ॥ आभिचारिककृत्याभिःस्पर्शरोगैश्चदारुणैः ॥ सदासंपीड्यमानास्तेतिष्ठंतिमुनिसत्तम ॥ २ ॥ येनकर्मविपाकेनग्रहरोगाद्युपद्रवाः ॥ नभवंति नृणांतन्मेयथावद्वक्तुमर्हसि ॥ ३ ॥ पुलस्त्यउवाच ॥ जनार्दनंभूतपतिंजगद्गुरुंस्मरन्मनुष्यःसततंमहामुने ॥ दुष्टान्यशेषाण्यपहंतिसद्योनिःशेषकार्याणिचसाधुसाधयेत् ॥ ४ ॥ व्रतोपवासैर्यैर्विष्णुर्नान्यजन्मनितोषितः ॥ तेनरामुनिशार्दूलग्रहरोगादिभागिनः ॥ ५ ॥ यैर्नतत्प्रवणंचित्तंसर्वदैवनरैःकृतं ॥ विषग्रहज्वराणांतेमनुष्यादाल्भ्यभागिनः ॥ ६ ॥ आरोग्यंपरमामृद्धिंमनसायद्यदिच्छति ॥ तत्तदाप्नोत्यसंदिग्धंपरत्राच्युततोषकृत् ॥ ७ ॥ नाधीन्प्राप्नोतिनव्याधीन्नविषग्रहबंधनं ॥ कृत्यास्पर्शभयंवापितोषितेमधुसूदने ॥ ८ ॥ सर्वदुष्टशमस्तस्यसौम्यास्तस्यसदाग्रहाः ॥ देवानामप्यधृष्योसौतुष्टोयस्यजनार्दनः ॥ ९ ॥ यःसमःसर्वभूतेषुयथात्मनितथापरे ॥ उपवासादिनायेनतोषितोमधुसूदनः ॥ १० ॥ तोषितेतत्रजायंतेनराःपूर्णमनोरथाः ॥ अरोगाःसुखिनोभोगान्भोक्तारोमुनिसत्तम ॥ ११ ॥ नतेषांशत्रवोनैवस्पर्शरोगाभिचारिकं ॥ ग्रहरोगादिकंवापिपापकार्यंनविद्यते ॥ १२ ॥ अव्याहतानिकृष्णस्यचक्रादीन्यायुधानिच ॥ रक्षंतिसकलापद्भ्योयेनविष्णुरुपासितः ॥ १३ ॥ दाल्भ्यउवाच ॥ अनाराधितगोविंदायेनरादुःखभागिनः ॥ तेषांदुःखाभिभूतानांयत्कर्तव्यंदयालुभिः ॥ १४ ॥ पश्यद्भिःसर्वभूतस्थं

सुदेवंमहामुने ॥ समदृष्ट्याहृषीकेशंतन्मेब्रूह्यविशेषतः ॥ १५ ॥ पुलस्त्यउवाच ॥ तद्वक्ष्यामिमुनिश्रेष्ठसमाहितमनाःशृणु ॥ रोगदोषहरंनृणामुरुपापप्रणाशनं ॥ १६ ॥ सौवर्णराजतंताम्रंमृन्मयंवानवंदृढं ॥ अव्रणंकलशंशुद्धंस्थापयेत्तंडुलोपरि ॥ १७ ॥ तत्रोदकंसमानीयशुद्धंनिर्मलमेवच ॥ एकंशतंकुशान्साग्रान्स्थापयेत्कलशोपरि ॥ १८ ॥ विरिंचिनासहोत्पन्नपरमेष्ठीनिसर्गज ॥ नुदसर्वाणिपापानिदर्भस्वस्तिकरोभव ॥ १९ ॥ कुशमूलेस्थितोब्रह्माकुशमध्येजनार्दनः ॥ कुशाग्रेशंकरंविद्यात्त्रयोदेवाःकुशेस्थिताः ॥ २० ॥ गृहीत्वातुसमूलाग्रान्कुशाञ्छुद्धानुपस्पृशेत् ॥ मार्जयेत्सर्वगात्राणिकुशाग्रैर्दाल्भ्यशांतिकृत् ॥ २१ ॥ शरीरेयस्यतिष्ठंतिकुशोत्थाजलबिंदवः ॥ नश्यंतितस्यपापानिगरुडेनेवपन्नगाः ॥ २२ ॥ विष्णुभक्तोविशेषेणशुचिस्तद्गतमानसः ॥ रोगग्रहविषार्तानांकुर्याच्छांतिमिमांशुभां ॥ २३ ॥ वराहंनारसिंहंचवामनंविष्णुमेवच ॥ ध्यात्वासमाहितोभूत्वादिक्षुनामानिविन्यसेत् ॥ २४ ॥ नारसिंहंसमभ्यर्च्यशुचौदेशेकुशासने ॥ दिग्रक्षांचततःकुर्याद्विष्णुभक्तःसमाहितः ॥ २५ ॥ मंत्रैरेतैर्यथालिंगंकुर्याद्दिग्बंधमादितः ॥ पूर्वेनारायणःपातुवारिजाक्षस्तुदक्षिणे ॥ २६ ॥ प्रद्युम्नःपश्चिमेपातुवामदेवस्तथोत्तरे ॥ ईशान्यांवामनश्चैवतथाग्नेय्यांजनार्दनः ॥ २७ ॥ नैर्ऋत्यांपद्मनाभश्चवायव्यांचैवमाधवः ॥ ऊर्ध्वंगोवर्धनोदेवोह्यधरायांत्रिविक्रमः ॥ २८ ॥ एताभ्योदशदिग्भ्यस्तुसर्वतःपातुकेशवः ॥ जलेरक्षतुवाराहःस्थलेरक्षतुवामनः ॥ २९ ॥ अटव्यांनारसिंहश्चसर्वतःपातुकेशवः ॥ एवंकृत्वातुदिग्बंधंविष्णुंसर्वत्रसंस्मरेत् ॥ ३० ॥ अव्यग्रचित्तःकुर्वीतन्यासकर्मयथाविधि ॥ अंगुष्ठाग्रेतुगोविंदंतर्जन्यांतुमहीधरं ॥ ३१ ॥ मध्यमायांहृषीकेशमनामिक्यांत्रिविक्रमं ॥ कनिष्ठिक्यांन्यसेद्विष्णुंकरमध्येतुमाधवं ॥ ३२ ॥ हृन्मध्येचिंतयेद्देवंपरमात्मानमीश्वरं ॥ नृसिंहंमणिबंधेचकरपृष्ठेजनार्दनं ॥ ३३ ॥ कृतेचवैष्णवेन्यासेसर्वपापैःप्रमु

च्यते ॥ एवंन्यासंकरेकृत्वापश्चादंगेषुविन्यसेत् ॥ ३४ ॥ शिखायांकेशवंन्यस्यमूर्ध्निनारायणंन्यसेत् ॥ ललाटेमाधवंन्यस्य गोविंदंतुभ्रुवोर्न्यसेत् ॥३५॥ चक्षुर्मध्येन्यसेद्विष्णुंश्रवणेमधुसूदनं ॥ त्रिविक्रमंकपोलेतुवामनंकर्णमूलयोः ॥३६॥ नासारंध्रद्वयेचैवश्रीधरंकल्पयेद्बुधः ॥ उत्तरोष्ठेहृषीकेशंपद्मनाभंतथाधरे ॥३७॥ दामोदरंदंतपंक्तौवाराहंचुबुकेतथा ॥ जिह्वायांवासुदेवंचतालौतुगरुडध्वजं ॥ ३८ ॥ वैकुंठंकंठमध्येतुह्यनंतंनासिकोपरि ॥ दक्षिणेतुभुजेविप्रविन्यसेत्पुरुषोत्तमं ॥३९॥ वामेभुजेमहाभागंराघवंहृदिविन्यसेत् ॥ हरिंनाभौतुविन्यस्यस्तनयोःपीतवाससं ॥ ४० ॥ पीतांबरंसर्वतनौहरिंनाभ्यांतुविन्यसेत् ॥ करेतुदक्षिणेविप्रततःसंकर्षणंन्यसेत् ॥ ४१ ॥ वामेरिपुहरंविद्यात्कटिमध्येऽपराजितं ॥ पृष्ठेक्षितिधरंविद्यादच्युतंस्कंधयोर्द्वयोः ॥ ॥ ४२ ॥ वक्षस्थलेमाधवंतुकुक्ष्योश्चयोगशायिनं ॥ योगीशंदक्षिणेपार्श्वेवामपार्श्वेश्रियःपतिं ॥ ४३ ॥ आंत्रेषुवासुदेवंचगुदमध्येऽव्ययंन्यसेत् ॥ स्वयंभुवंमेढ्रमध्येह्यूर्वोश्चैवगदाधरं ॥ ४४ ॥ जानुमध्येचक्रधरंजंघयोरच्युतंन्यसेत् ॥ पादयोःपुष्कराक्षंचसर्वतोविश्वरूपिणं ॥ ४५ ॥ गुल्फयोर्नारसिंहंचपादपृष्ठेमितौजसं ॥ अंगुल्यांश्रीधरंन्यस्यपद्माक्षंसर्वसंधिषु ॥ ४६ ॥ नखेषुमाधवंन्यस्यन्यसेत्पादतलेऽच्युतं ॥ रोमकूपेगुडाकेशंकृष्णंरक्तास्थिमज्जसु ॥ ४७ ॥ मनोबुद्धिरहंकारचित्तेन्यस्यजनार्दनं ॥ आपादमस्तकंचैवप्रद्युम्नंकल्पयेद्बुधः ॥ ४८ ॥ पूजाकालेतुदेवस्यस्नानकालेतथैवच ॥ होमारंभेचकर्तव्यंत्रिसंध्यासुचनित्यशः ॥ ४९ ॥ एवंन्यासविधिंकृत्वास्वयंनारायणोभवेत् ॥ तनुर्विष्णुमयीतस्ययावत्किंचिन्नभाषते ॥ ५० ॥ एवंन्यासविधिंकृत्वायत्कार्यंशृणुत्वंद्विज ॥ पादमूलेतुदेवस्यशंखंविन्यस्यनिर्मलं ॥ ५१ ॥ वनमालांहृदिन्यस्यसर्वदेवाभिपूजितां ॥ गदांवक्षस्थलेन्यस्यचक्रंविन्यस्यपृष्ठतः ॥ ५२ ॥ श्रीवत्सांकंन्यसेन्मूर्ध्निपंचांगंकवचंन्यसेत् ॥ ५३ ॥ ॐ नमोभगवतेविष्णवे

केशवायसर्वक्लेशापहर्त्रेहृदयायनमः ॥ ॐ नमोभगवतेविष्णवेकेशवायसर्वक्लेशापहर्त्रेशिरसेस्वाहा ॥ एवमेवशिखायैवषट् ॥ कवचायहुं ॥ नेत्रत्रयायवौषट् ॥ अस्त्रायफट् ॥ इतिदिग्बंधः ॥ विष्णुरूर्ध्वमधःपातुवैकुंठोवैदिशोदश ॥ पातुमांसर्वतोरामो धन्वीचक्रीचकेशवः ॥ ५४ ॥ अपामार्जनकोन्यासःसर्वव्याधिविनाशनः ॥ आत्मनश्चपरस्यापिविधिरेषउदाहृतः ॥ ५५ ॥ वैष्णवेनतुकर्तव्यःसर्वसिद्धिप्रदायकः ॥ जपप्रारंभकालेतुह्यपामार्जनकंपरं ॥ ५६ ॥ ततोजपेदिदंदाल्भ्यसर्वरोगविनाशनं ॥ आयुरारोग्यमैश्वर्यंज्ञानविद्वत्फलंलभेत् ॥ ५७ ॥ यद्यच्छुभकरंलोकेतत्सर्वंप्राप्नुयान्नरः ॥ अभयंसर्वभूतेभ्योविष्णुलोकंसग च्छति ॥ ५८ ॥ ॥ अस्यश्रीअपामार्जनस्तोत्रमंत्रस्य ॥ पुलस्त्योभगवान्‌ऋषिः ॥ अनुष्टुप्त्रिष्टुप्बृहत्यश्छंदांसि ॥ श्रीवरा होनृसिंहोवामनोविष्णुर्देवता ॥ हरअमुकस्यदुरितमितिबीजं ॥ अच्युतानंतगोविंदेतिशक्तिः ॥ तप्तहाटककेशांतेतिकीलकं ॥ ज्वलत्पावकलोचनेतिकवचं ॥ वज्रायुधनखस्पर्शेतिव्यापकं ॥ हांहींहुंफट्इत्यस्त्रं ॥ ममामुकस्यवाज्वरसन्निपातादिपीडाश मनार्थमपामार्जनस्तोत्रजपेविनियोगः ॥ अथध्यानं ॥ नीलोत्पलदलश्यामंपीतांबरधरंहरिं ॥ शंखचक्रगदापाणिंध्यात्वापा मार्जनंजपेत् ॥ ५९ ॥ बृहत्तनुंबृहद्गात्रंबृहद्दंष्ट्रंसुशोभनं ॥ समस्तवेदवेदांगयुक्तांगैर्भूषणैर्युतं ॥ ६० ॥ उद्धृत्यभूमिंपाताला द्धस्ताभ्यामुपगृह्यच ॥ आलिंग्यभूमिंशिरसामूर्ध्निजिघ्रंतमच्युतं ॥ ६१ ॥ रत्नवैडूर्यमुक्ताभिर्भूषणैरुपशोभितं ॥ पीतांबरधरं देवंशुक्लमाल्यानुलेपनं ॥ ६२ ॥ त्रयस्त्रिंशत्कोटिदेवैःस्तूयमानंमुदान्वितं ॥ ऋषिभिःसनकाद्यैश्चस्तूयमानंदिवानिशं ॥ ६३ ॥ नृत्यद्भिरप्सरोभिश्चगीयमानंचकिन्नरैः ॥ इत्थंध्यात्वातथात्मानंजपेन्नित्यमतंद्रितः ॥ ६४ ॥ सुवर्णमंडपांतःस्थंपद्मंध्यायेत्सके सरं ॥ सकर्णिकैर्दलैश्चैवह्यष्टाभिःपरिशोभितं ॥ ६५ ॥ कलंकरहितंदेवंपूर्णचंद्रार्बुदप्रभं ॥ तडित्समानशोभावत्कंठनालेन

शोभितं ॥ ६६ ॥ श्रीवत्सांकितवक्षस्थंतीक्ष्णदंष्ट्रंसुलोचनं ॥ जपाकुसुमसंकाशंरक्तहस्ततलान्वितं ॥ ६७ ॥ पद्मासनसमारूढंयोगपद्मसमन्वितं ॥ पीतवस्त्रपरीधानंशुक्लवस्त्रोत्तरीयकं ॥ ६८ ॥ कटिसूत्रेणहैमेननूपुरेणविराजितं ॥ वनमालादिशोभाढ्यंमुक्ताहारोपशोभितं ॥ ६९ ॥ सपंकजंचतुर्हस्तंतत्पत्रायतलोचनं ॥ प्रातःसूर्यसमाभ्यांवैकुंडलाभ्यांविराजितं ॥ ७० ॥ अनेकसूर्यसंकाशंमुकुटाटोपमस्तकं ॥ शंखचक्रगृहीताभ्यामुद्बाहुभ्यामथान्ययोः ॥ ७१ ॥ केयूरकांतिसंस्पर्धिमुद्रिकारत्नशोभितं ॥ जानूपरिन्यस्तकरद्वंद्वंरत्ननखांकितं ॥ ७२ ॥ जंघाभरणसंस्पर्धिविस्फूर्जत्कंकणत्विषं ॥ चतुर्थीचंद्रसंकाशंसुदंष्ट्रमुखपंकजं ॥ ७३ ॥ मुक्ताफलाभसुमहद्दंतावलिविराजितं ॥ चंपकाकुसुमाभंचसुनासामुखपंकजं ॥ ७४ ॥ अतिरक्तोष्ठवदनंव्यात्तास्यमतिभीषणं ॥ वामांकस्थश्रियायुक्तंशांतिदांतुंगरोहिणीं ॥ ७५ ॥ अर्हणींचक्रपादांचसुनासांशुभलक्षणां ॥ सुभ्रूंसुकेशींसुश्रोणींसुभुजांद्विभुजाननां ॥ ७६ ॥ सुप्रतिष्ठांशुभ्रदंतींचतुर्हस्तांविचिंतयेत् ॥ दुकूलांचैवचार्वंगींहरिणींसर्वकामदां ॥ ७७ ॥ तप्तकांचनसंकाशांसर्वाभरणभूषितां ॥ सुवर्णकलशप्रख्यपीनोन्नतपयोधरां ॥ ७८ ॥ गृहीतमातुलिंगाभ्यामुद्बाहुभ्यामथान्ययोः ॥ गृहीतपद्मयुगुलजांबूनदकरान्वितां ॥ ७९ ॥ एवंदेवींनृसिंहस्यवामांकोपरिसंस्मरेत् ॥ देवंचकर्णिकामध्येकाम्येनित्येचकर्मणि ॥ ८० ॥ आत्मानंचनृसिंहस्यशरीरंसंस्मरेदपि ॥ हेमाद्रिशिखराकारंशुद्धस्फटिकसन्निभं ॥८१॥ पूर्णचंद्रनिभंदेवंद्विभुजंवामनंस्मरेत् ॥ सूर्यकोटिप्रतीकाशंचंद्रकोटिसुशीतलं ॥ ८२ ॥ ज्वलत्कालानलप्रख्यंतडित्कोटिसमप्रभं ॥ सुंदरंपुंडरीकाक्षंकिरीटेनविराजितं ॥ ८३ ॥ षोडशस्त्रीसहस्रैश्चगंधर्वाप्सरसांगणैः ॥ चतुर्मुखाद्यैर्देवेशैःस्तोत्राराधनतोषितैः ॥ ८४ ॥ त्र्यंबकोवैमहादेवोनृत्यतेसन्निधौहरेः ॥ ८५ ॥ अजिनदंडकमंडलुमेखलारुचिरपावनवामनमूर्तये ॥ मित

जगन्त्रितयायजितारयेनिगमवाक्पटवेबटवनमः ॥ ८६ ॥ शांतंपद्मासनस्थंसकलशशिनिभंश्रीपतिंकोमलांगंहस्तेपीयूषकुंभंद धियुतकवलंहस्तपद्मेदधानं ॥ पीतंवस्त्रंदधानंकटकमुकुटयोर्हारकेयूरमालांनानालंकारयुक्तंस्फटिकमणिनिभंवामनंनौमिनि त्यं ॥ ८७ ॥ अभ्रश्यामःशुभ्रयज्ञोपवीतीसत्कौपीनःपीतकृष्णाजिनश्रीः ॥ छत्रीदंडीपुंडरीकायताक्षःपायाद्देवोवामनोब्रह्म चारी ॥ ८८ ॥ अतिसुविमलगात्रंरुक्मपात्रस्थमन्नंसुललितदधिखंडंपाणिनादक्षिणेन॥ कलशममृतपूर्णवामहस्तेदधानंतरति सकलदुःखंवामनंभावयेद्यः ॥ ८९ ॥ क्षीरसागरकल्लोलसितरक्ततनुंशुभं ॥ मणिमुक्तामयेरम्यंसकांतंसंस्थितंशुभं ॥ ९० ॥ शु भ्रमेघविनिर्मुक्तंसुधासिक्तंसुसुंदरं ॥ एकनामानमात्मानंकृत्वापामार्जनंजपेत् ॥ ९१ ॥ ॐ नमःपरमार्थायपुरुषायमहात्मने ॥ नमस्कृत्वाप्रवक्ष्यामियत्तत्सिध्यतुमेवचः ॥९२ ॥अरूपबहुरूपायव्यापिनेपरमात्मने ॥ नमस्कृत्वाप्रवक्ष्यामि० ॥९३॥ निष्क ल्मषायशुद्धायध्यातृपापहरायच ॥ नम० ॥९४॥ नारायणायदेवायविश्वेशायेश्वरायच ॥ नम० ॥९५॥ सच्चिदानंदरूपाय योगिनेपरमात्मने ॥ नम० ॥ ९६ ॥ वराहायनृसिंहायवामनायमहात्मने ॥ नम० ॥ ९७ ॥ गोविंदपद्मनाभायवासुदेवा यविष्णवे॥ नम० ॥ ९८ ॥ दामोदरायदेवायअनंतायमहात्मने ॥ नम० ॥ ९९ ॥ जनार्दनायकृष्णायउपेंद्रश्रीधरायच ॥ नम० ॥ १०० ॥ त्रिविक्रमायरामायवैकुंठायनरायच ॥ नम० ॥ १०१ ॥ हिरण्यगर्भपतयेहिरण्यकशिपुच्छिदे ॥ नम० ॥ २ ॥ भक्तप्रियायविभवेत्रिष्वक्सेनायशार्ङ्गिणे ॥ नमस्कृत्वा० ॥ ३ ॥ चक्रहस्तायशूरायतार्क्ष्यपत्रायधीमते ॥ नम० ॥ ४ ॥ अधोक्षजायदक्षायमत्स्यायमधुसूदिने ॥ नम० ॥ ५ ॥ दैत्यारयउपेंद्रायभूतानांजीवनायच ॥ नम० ॥ ६ ॥ विष्टर श्रवसेतस्मैक्षीरांभोनिधिशायिने ॥ नमस्कृत्वाप्रवक्ष्यामियत्तत्सिध्यतुमेवचः ॥ ७ ॥ नारसिंहमहोग्रेशतस्मैतुभ्यंनमोनमः ॥

वराहेशनृसिंहेशवामनेशत्रिविक्रम ॥ ८ ॥ हयग्रीवेशसर्वेशहृषीकेशहराशुभं ॥ अपराजितचक्राद्यैश्चतुर्भिःपरमायुधैः ॥ ९ ॥
अखंडितानुभावैश्चसर्वदुःखहरोभव ॥ हरामुकस्यदुरितंदुष्कृतंदुरुपासितं ॥ ११० ॥ मृत्युबाधार्तिभयदंदुरिष्टस्यचयत्फलं ॥
परापध्यानसंस्थानप्रयुक्तंचाभिचारिकं ॥ ११ ॥ गरस्पर्शमहारोगप्रयुक्तंजरयत्वरं ॥ कृष्णायवासुदेवायहरयेपरमात्मने
॥ १२ ॥ प्रणतक्लेशनाशायगोविंदायनमोनमः ॥ हरयेवासुदेवायनमःकृष्णायशार्ङ्गिणे ॥ १३ ॥ नमःपुष्करनेत्रायकेशवा
यादिचक्रिणे ॥ नमःकमलकिंजल्कपीतनिर्मलवाससे ॥ १४ ॥ महाहवरिपुस्कंधघृष्टरूपायचक्रिणे ॥ दंष्ट्रोद्धृतक्षितिधृतेत्रिमू
र्तिपतयेनमः ॥ १५ ॥ महायज्ञवराहायशेषभोगोरुशायिने ॥ तप्तहाटककेशांतज्वलत्पावकलोचन ॥ १६ ॥ वज्रायुधनखस्प
र्शदिव्यसिंहनमोस्तुते ॥ आधिव्याधिमहाभीतिमहादुःखनिवारण ॥ १७ ॥ अपारनरसिंहेशदिव्यसिंहनमोस्तुते ॥ श्रीनृ
सिंहोदिव्यसिंहःसर्वारिष्टार्तिदुःखहा ॥ १८ ॥ एकवीरोद्भुतबलोमंत्रयंत्रैकभंजनः ॥ सर्वत्ररक्षमांनाथभयेभ्यश्चाग्निलोचन
॥ १९ ॥ प्रसादात्तवदेवेशनमांहिंसंतुहिंसकाः ॥ तीक्ष्णैर्नखाग्रैर्यमुरोविदार्यत्रात्वासुरान्दैत्यपतिंजघान ॥ सुदर्शनंपद्मगदांचशं
खंबिभ्रन्नृसिंहोस्तुममाभयाय ॥ १२० ॥ काश्यपायातिह्रस्वायऋग्यजुःसामरूपिणे ॥ तुभ्यंवामनरूपायक्रमतेगांनमोनमः
॥ २१ ॥ वराहाशेषदुष्टानिसर्वपापफलानिवै ॥ मर्दमर्दमहादंष्ट्रमर्दमर्दमहीधर ॥ २२ ॥ नारसिंहकरालास्यदंतप्रांतनखोज्ज्व
ल ॥ भंजभंजनिनादेनदुष्टान्यस्यार्तिनाशन ॥ २३ ॥ ऋग्यजुःसामगर्भाभिर्वाग्भिर्वामनरूपधृक् ॥ प्रशमंसर्वदुःखानिनयत्वा
शुजनार्दनः ॥ २४ ॥ अस्यश्रीज्वरमंत्रस्य ॥ कालाग्निर्ऋषिः ॥ अनुष्टुप्छंदः ॥ महादेवोदेवता ॥ सकलज्वरोपशांत्यर्थेजपे
विनियोगः ॥ भस्मायुधायविद्महेएकदंष्ट्रायधीमहि ॥ तन्नोज्वरःप्रचोदयात् ॥ त्रिपाद्भस्मप्रहरणस्त्रिशिरारक्तलोचनः ॥ समे

प्रीतःसुखंदद्यात्सर्वामयपतिर्ज्वरः ॥ २५ ॥ आद्यंतवंतःकवयःपुराणाःसूक्ष्माबृहंतोह्यनुशासितारः ॥ सर्वान्ज्वरान्घ्नंतुममा निरुद्धप्रद्युम्नसंकर्षणवासुदेवाः ॥ २६ ॥ कुबेरतेमुखंरौद्रंनंदिन्नानंदमावह ॥ ज्वरमृत्युभयंघोरंविशनाशयमेज्वरं ॥ २७ ॥ अंगवंगकलिंगेषुसौराष्ट्रमगधेषुच ॥ वाराणस्यांचयहत्तांकिंनस्मरसिरेज्वर ॥ २८ ॥ श्रीकंठक्रोधसंभूतसुरासुरनमस्कृत ॥ नित्यंक्रतुरिपुःशीघ्रंसुखंवितरमेज्वर ॥ २९ ॥ एषांचतुर्णांमंत्राणामयुतोजपईरितः ॥ योसौसरस्वतीतीरेह्यपुत्रोब्राह्मणोमृतः ॥ १३० ॥ यवादिकृतपद्मेषुसमाहूयामिपूज्यच ॥ त्रिरात्रज्वरनाशायददाम्येतत्तिलोदकं ॥ ३१ ॥ येषुमंत्रेषुयाःप्रोक्तादेवतास्तास्तुतर्पयेत् ॥ ताम्रपात्रेतिलान्कृत्वागंधपुष्पाक्षतादिभिः ॥ ३२ ॥ शुद्धोदकेनशुद्धात्मासहस्रपरिसंख्यया ॥ आवाह्य पूजयित्वातुस्थंडिलेचोपकल्पिते ॥ ३३ ॥ होमंचाथप्रकुर्वीतक्षीराज्येनाम्रपल्लवैः ॥ आद्यंतमंत्रैःस्वाहांतैर्दशमंत्रैश्चमंत्रवित् ॥ ३४ ॥ एवंकृतेज्वराःसर्वेप्रशमंयांत्यशेषतः ॥ नबाधंतेपुनस्तानिदुष्टादीनांपरिग्रहात् ॥ ३५ ॥ आयुरारोग्यमैश्वर्यंज्ञानंवित्तंफलंलभेत् ॥ यद्यच्छुभतरंलोकेतत्सर्वंप्राप्नुयान्नरः ॥ ३६ ॥ ऐकाहिकंद्व्याहिकंचतथात्रिदिवसज्वरं ॥ चातुर्थिकंतथात्युग्रंतथैवसततज्वरं ॥ ३७ ॥ दोषोत्थंसन्निपातोत्थंतथैवागंतुकज्वरं ॥ शमंनयाशुगोविंदाछिंधिछिंध्याशुवेदनां ॥ ३८ ॥ नेत्रदुःखंशिरोदुःखंदुःखंचोदरसंभवं ॥ अतिकासमतिश्वासमतितापंसवेपथुं ॥ ३९ ॥ गुदघ्राणांघ्रिरोगांश्चकुष्ठरोगंतथाक्षयं ॥ कामलादींस्तथारोगान्प्रमेहांश्चातिदारुणान् ॥ १४० ॥ भगंदरातिसारांश्चमुखरोगांश्चवल्गुलीन् ॥ चित्रादीन्नखरोगांश्चत्वगस्थ्यंतर्बहिःस्थितान् ॥ ४१ ॥ अश्मरींमूत्रकृच्छ्रांश्चरोगानन्यांश्चदारुणान् ॥ येवातप्रभवारोगायेचपित्तसमुद्भवाः ॥ ४२ ॥ कफोद्भवाश्चयेरोगायेचान्येसान्निपातिकाः ॥ आगंतुकाश्चयेरोगालूताविस्फोटकादयः ॥ ४३ ॥ तेसर्वेप्रशमंयांतुवासुदेवापमार्जिताः॥

विलयंयांतुतेसर्वेविष्णोरुच्चारणेनतु ॥४४॥ क्षयंगच्छंत्वशेषास्तेचक्रेणाभिहताहरेः ॥ अच्युतानंतगोविंदनामोच्चारणभेषजात् ॥४५॥ नश्यंतिसकलारोगाःसत्यंसत्यंवदाम्यहं॥ ४६ ॥ अच्युतेतिमनःपूतमनंतेतिवचस्तथा ॥ गोविंदेतितनुःपूतात्वशातातृज्ञानपातकैः॥ ४७ ॥ अच्युतानंतगोविंदपरमानंदमाधव ॥ ॐनमःसंपुटीकृत्यजपन्नेवमधोक्षजं ॥ ४८ ॥ सत्यंसत्यंपुनःसत्यमुत्क्षिप्यभुजमुच्यते॥ वेदशास्त्रात्परंनास्तिनदेवःकेशवात्परः ॥ ४९ ॥ स्थावरंजंगमंवापिकृत्रिमंचापियद्विषं ॥ दंतोद्भूतंनखोद्भूतमाकाशप्रभवंविषं ॥ १५० ॥ लूतादिप्रभवंयच्चविषमत्यंतदुःखदं ॥ शमंनयाशुतत्सर्वंकीर्तितोसिजनार्दन॥ ५१ ॥ ग्रहान्प्रेतग्रहांश्चैवतथावैडाकिनीग्रहान् ॥ मुखमंडलिकान्घोरान्रेवतींवृद्धरेवतीं॥ ५२ ॥ वृद्धाख्यांश्चग्रहांश्चोग्रांस्तथामातृग्रहानपि ॥ बालस्यविष्णोश्चरितंहंतुबालग्रहानिमान् ॥ ५३ ॥ नारसिंहस्यतेदृष्ट्यादग्धायेचापियौवने ॥ सटाकरालवदनोनारसिंहोमहाबलः ॥ ५४ ॥ ग्रहानशेषान्सर्वेषांखादखादाग्निलोचन ॥ वृद्धानांयेग्रहाःकेचिद्येचबालग्रहाःक्वचित् ॥ ५५ ॥ नारसिंहमहासिंहज्वालामालोज्वलानन ॥ अमीषांदेवदेवेशधनुर्ग्रहणमोक्षणात् ॥ ५६ ॥ येरोगायेमहोत्पातायद्विषंयेमहाग्रहाः ॥ अत्यंतपातसंभूतायेकौटिल्यसमुद्भवाः ॥ ५७ ॥ यानिचक्रूरभूतानिग्रहपीडाश्चदारुणाः ॥ शस्त्रक्षतेषुयेदोषाज्वालागर्दभकादयः ॥ ५८ ॥ यानिचान्यानिभूतानिप्राणिपीडाकराणिवै ॥ तानिसर्वाणिसर्वात्मन्परमात्मन्जनार्दन ॥ ५९ ॥ किंचिद्रूपंसमास्थायवासुदेवाशुनाशय ॥ क्षिप्त्वासुदर्शनंचक्रंज्वालामालातिभीषणं ॥ १६० ॥ सर्वदुःखोपशमनंकुरुदेववराच्युत ॥ सुदर्शनमहाज्वालछिंधिछिंध्याशुवेदनां ॥ ६१ ॥ सुदर्शनमहाचक्रगोविंदस्यवरायुध ॥ सुदर्शनमहावेगकोटिसूर्यसमप्रभ ॥ ६२ ॥ त्रैलोक्यरक्षाकर्तात्वंदुष्टदानवमर्दन ॥ तीक्ष्णधारमहावेगछिंधिछिंधिमहाज्वरं ॥ ६३ ॥ छिंधिछिंधिमहाव्याधिंछिंधिछिंधि

महाज्वरं ॥ छिंधिवातंचलूतांचछिंधिघोरंमहद्विषं ॥ ६४ ॥ रुजंदाहंचशूलंचनिमिषज्वालगर्दभं ॥ सुदर्शनस्यमंत्रेणग्रहायांतु दिशोदश ॥ ६५ ॥ ॐ नमोभगवतेभोभोसुदर्शनदुष्टंदारयदारयदुरितंहनहनपापंमथमथआरोग्यंकुरुकुरुह्रांह्रांहुंहुंफट्ठः ठःहननोद्विषः ॥ त्रैलोक्यरक्षाकर्तात्वमाज्ञापयजनार्दन ॥ ॐ नमोभगवतेभोभोसुदर्शनचक्रायुधायमहाशस्त्रास्त्रराजायभूतेभ्योभयंनाशयनाशयछिंधिछिंधिपरमंत्रान्परयंत्रान्परतंत्रान्जारणमारणादिछेदयछेदयहुंफट्स्वाहा ॥ ॐ नमोभगवते गरुडध्वजायएह्येहिसर्वज्वरभयंचक्रेणाछिंधिछिंधिभिंधिभिंधिमुद्गरशंखचक्रगदापद्मखड्गैःसर्वज्वरभयंहरहरनाशयनाशयमामामरणमचिरेणरक्षरक्षाकर्तात्वंआज्ञापयजनार्दनहुंफट्स्वाहा ॥ ॐ त्रौंह्रौंसुदर्शनमहायंत्रराजधगधगनितांतभयंकरान्छिंधि छिंधिभिंधिभिंधिविदारयविदारयपरमंत्रान्परतंत्रान्अभिचारान्ग्रासयपरमंत्राणिदुष्टचेटककरणमारीमहामारीग्रहवेताल पिशाचभूतप्रेतादीन्भक्षयभक्षयसर्वभूतानित्रासयत्रासयस्वाहा ॥ ॐ अचक्रायविचक्रायसुचक्रायअसुरांतकचक्रायसर्वलोकरक्षणायचक्रायसुदर्शनायास्त्रराजायहुंफट्स्वाहा ॥ इतिसुदर्शनविद्या ॥ सर्वदुष्टानिरक्षांसिक्षयंयांतुविभीषया ॥ प्राच्यांरक्षप्रतीच्यांचदक्षिणोत्तरयोस्तथा ॥ ६६ ॥ ईशान्येचतथाग्नेय्यांनैर्ऋत्यांचमहादिशं ॥ वायव्यांसर्वभूतेभ्यःसदारक्षांकरोत्वसौ ॥ ६७ ॥ रक्षांकरोतुसर्वत्रश्रीनृसिंहःस्वगर्जितैः ॥ भुविदिव्यंतरिक्षेचपार्श्वतःपृष्ठतोऽग्रतः ॥ ६८ ॥ व्याघ्रसिंहवराहेषुअग्निचोरभयेषुच ॥ रक्षांकरोतुभगवान्बहुरूपीजनार्दनः ॥ ६९ ॥ यथाविष्णुर्जगत्सर्वंसदेवासुरमानुषं ॥ तेनसत्येनसकलंदुष्टमस्यप्रशाम्यतु ॥ १७० ॥ यथाविष्णौस्मृतेसद्यःक्षयंयातीहपातकं ॥ तेनसत्येन० ॥ ७१ ॥ यथायज्ञेश्वरोविष्णुर्वेदांतेष्वपिगीयते ॥ तेनसत्येन० ॥ ७२ ॥ परमात्मायथाविष्णुर्वेदांतेष्वपिगीयते ॥ तेनसत्येन० ॥ ७३ ॥ यथायोगेश्वरो

विष्णुर्वेदांतेष्वपिगीयते ॥ तेनसत्येन० ॥ ७४ ॥ शांतिरस्तुशुभंचास्तुप्रणश्यत्वसुखंचयत् ॥ वासुदेवशरीरोत्थैःकुशैःसंमा र्जितोमया ॥ ७५ ॥ अपामार्जनगोविंदोनरनारायणःसदा ॥ ममास्तुसर्वदुःखानांप्रशमोवचनाद्धरेः ॥ ७६ ॥ शांताःसम स्तरोगास्तेग्रहाःसर्वेविषाणिच ॥ भूतानिप्रशमंयांतुसंस्मृतेमधुसूदने ॥ ७७ ॥ एतत्समस्तरोगेषुभूतग्रहभयेषुच ॥ अपामार्ज नकंशस्त्रंविष्णोर्नामाभिमंत्रितं ॥ ७८ ॥ यथाचक्रायुधंविष्णोर्यथाशूलंहरस्यच ॥ यथावज्रंसुरेंद्रस्यतथाविप्रकरेकुशाः ॥ ७९ ॥ एतेकुशाविष्णुशरीरसंभवाजनार्दनाग्रेस्वयमेवचागताः ॥ हतंमयादुष्टमशेषमस्यस्वस्थोभवत्वेषवचोयथाहरेः ॥ १८० ॥ शांतिरस्तुशिवंचास्तुदुष्टमस्यप्रशाम्यतु ॥ यदस्यदुरितंकिंचित्तत्क्षिप्तंलवणार्णवे ॥ ८१ ॥ स्वास्थ्यमस्यसदैवास्तु हृषीकेशस्यकीर्तनात् ॥ यतएवागतंपापंतत्रैवप्रतिगच्छतु ॥ ८२ ॥ एतद्रोगादिपीडासुजंतूनांहितकाम्यया ॥ त्रिसंध्यंजपते यस्तुसर्वरोगैःप्रमुच्यते ॥ ८३ ॥ विष्णुभक्तेनकर्तव्यमपामार्जनकंपरं ॥ अनेनसर्वदुःखानिप्रशमंयांत्यसंशयं ॥ ८४ ॥ सर्व भूतहितार्थायकुर्यात्तस्मात्सदैवहि ॥ कुर्यात्तस्मात्सदैवह्योंनमइतिशक्तिबीजं ॥ ८५ ॥ यइदंधारयेद्विद्वान्श्रद्धाभक्तिसमन्वि तः ॥ ग्रहास्तंनोपसर्पंतिनरोगानचराक्षसाः ॥ ८६ ॥ धन्योयशस्वीशत्रुघ्नःस्तवोयंमुनिसत्तम ॥ पठतांशृण्वतांचापिददातिप रमांगतिं ॥ ८७ ॥ स्तोत्रराजमिदंनामअपामार्जनकंहरेः ॥ विष्णुभक्तेनकर्तव्यंब्रह्महत्याविनाशनं ॥ ८८ ॥ विष्णोःप्रीतिक रंस्तोत्रंयःपठेन्नियमेनतु ॥ तस्यतुष्यतिगोविंदोमनसाचिंतितंलभेत् ॥ ८९ ॥ जन्मकोटिकृतंपापंपठनादेवनश्यति ॥ गोसह स्रफलंतस्यपरंपदमवाप्नुयात् ॥ १९० ॥ दाल्भ्योनाममहाभागःपुलस्त्योब्रह्मनंदनः ॥ तयोःसंवादसंभूतमपामार्जनकंपरं ॥ ९१ ॥ इतिश्रीविष्णुधर्मोत्तरपुराणेदाल्भ्यपुलस्त्यसंवादेअपामार्जनस्तोत्रंसंपूर्णं ॥ श्रीकृष्णार्पणमस्तु ॥ ॥ ॥ ॥

## ॥ २९१ ॥ अथशीतलाष्टकस्तोत्रम् ॥



श्रीः ॥ आचमनादिदेशकालनिर्देशांतेमुकगोत्रस्यामुकशर्मणःशरीरेउत्पन्नोत्पत्स्यमानविस्फोटकजनितदाहादिसर्वोपद्रवस्यजीवच्छरीराविरोधेनपरिहारार्थंशीतलाष्टकस्यनवावृत्तिजपंक० ॥ आसनादि० जपकर्मसमारभे ॥ अस्यश्रीशीतलाष्टकस्तोत्रमंत्रस्यश्रीरुद्रऋषिःश्रीशीतलादेवताअनुष्टुप्छंदःलक्ष्मीर्बीजंभवानीशक्तिःविस्फोटकपीडापरिहारार्थेजपेविनियोगः ॥ रुद्रर्षयेनमःशिरसि अनुष्टुप्छंदसेनमोमुखे शीतलांबादेवतायैहृदये ॐ ह्रींनमःशीतलेदेविविस्फोटकान्नाशयनाशयतंतून्छेदय २ दाहंशमय २ ॐ ऐंह्रींश्रींशीतलादेव्यैस्वाहा ह्रींनमःशीतलेअंगुष्ठाभ्यांनमःएवंतर्जन्यादिषडंगंविधायध्यात्वामूलमंत्रमष्टवारंजप्त्वाध्यायेत् ॥ भूतेशंभूतसैन्यैःपरिवृतमनिशंकृष्णवेतालपीठेहाहाहीहीतिवादैरशनिभरसहैरट्टहासैरुपेतं ॥ हस्तैःसाहस्रसंख्यैरनलगणसखैःसाध्यदेहाधिरूढान्स्फोटान्दंदह्यमानंमुहुरहमनिशंघंटकर्णंनमामि ॥ १ ॥ घंटकर्णमहाप्राज्ञसर्वोपद्रवनाशन ॥ मसूरिकाभयंप्राप्यरक्षरक्षमहाबल ॥ २ ॥ अथशीतलाध्यानं ॥ सजलांबुदवच्छ्यामांरक्तमाल्यानुलेपनां ॥ तुंगस्तनांविशालाक्षींनानालंकारभूषितां ॥ लसन्नितंबबिंबाढ्यांखरारूढांसुशोभनां ॥ हस्ताभ्यांमार्जनींशूर्पंदधानांनग्निकांस्मरेत् ॥ मार्जन्यामार्जयन्स्फोटान्रोगानन्यांश्चदारुणान् ॥ शूर्पेकृत्वांभसिक्षारेप्रक्षिपंतींमुहुर्मुहुः ॥ इति ॥ स्कंदउवाच ॥ नमस्तेदेवदेवेशशीतलायाःस्तवंशुभं ॥ वक्तुमर्हस्यशेषेणविस्फोटकभयापहं ॥ १ ॥ ईश्वरउवाच ॥ नमामिशीतलांदेवींरासभस्थांदिगंबरां ॥ मार्जनीकलशोपेतांशूर्पालंकृतमस्तकां ॥ २ ॥ वंदेहंशीतलांदेवींसर्वरोगभयापहां ॥ यामासाद्यनिवर्तेतविस्फोटकभयंमहत् ॥ ॥ ३ ॥ शीतलेशीतलेचेतियोब्रूयाद्दाहपीडितः ॥ विस्फोटकभवोदाहःक्षिप्रंतस्यविनश्यति ॥ ४ ॥ यस्त्वामुदकमध्येतुध्या

त्वासंपूजयेन्नरः ॥ विस्फोटकभयंघोरंगृहेतस्यनजायते ॥ ५ ॥ शीतलेज्वरदग्धस्यपूतिगंधहतस्यच ॥ प्रनष्टचक्षुषांपुंसांत्वा माहुर्जीवनौषधं ॥ ६ ॥ शीतलेतनुजान्रोगान्नृणांहरसिदुस्त्यजान् ॥ विस्फोटकविशीर्णानांत्वमेकामृतवर्षिणी ॥ ७ ॥ गल गंडग्रहारोगायेचान्येदारुणानृणां ॥ तेतवस्मरणादेवशीतलेयांतिसंक्षयं ॥ ८ ॥ नमंत्रोनौषधंकिंचित्पापरोगस्यविद्यते ॥ त्वमेकाशीतलेत्रात्रीनान्यांपश्यामिदेवतां ॥ ९ ॥ मृणालतंतुसदृशींनाभिहृन्मध्यसंस्थितां ॥ यस्त्वांविचिंतयेद्देवींतस्यमृत्युर्न जायते ॥ १० ॥ इतिशीतलाष्टकं ॥ अष्टकंशीतलादेव्यायःपठेन्मानवःसदा ॥ विस्फोटकभयंघोरंकुलेतस्यनजायते ॥ श्रोत व्यंपठितव्यंचश्रद्धाभक्तिसमन्वितैः ॥ उपसर्गविनाशायपरंस्वस्त्ययनंमहत् ॥ शीतलाष्टकमेवेदंनदेयंयस्यकस्यचित् ॥ दात व्यंचसदातस्मैश्रद्धाभक्तियुतस्यच ॥ रासभोगर्दभश्चैवखरोवैशाखनंदनः ॥ शीतलावाहनश्चैवदूर्वाकंदनकंदनः ॥ एतानिख रनामानिशीतलाग्रेतुयःपठेत् ॥ तस्यदेहेचगेहेचशीतलानैवबाध्यते ॥ इतिश्रीस्कंदपुराणेशीतलाष्टकंसंपूर्णं ॥ ॥ ॐ ॥

## ॥ २९२ ॥ अथनवचंडीशतचंडीप्रयोगः ॥

श्रीगणेशायनमः ॥ यजमानःशुभदिनेसपत्नीकस्तिलतैलेनकृताभ्यंगःस्नात्वासंपूर्णकलशहस्तोमंडपंप्रदक्षिणीकृत्यपश्चिमद्वारेण प्रविश्योपविश्यदेशकालौस्मृत्वा ममेहजन्मनिदुर्गाप्रीतिद्वारासर्वापच्छांतिपूर्वकदीर्घायुर्विपुलधनधान्यपुत्रपौत्राद्यनवच्छिन्न संततिवृद्धिस्थिरलक्ष्मीकीर्तिलाभशत्रुपराजयसदभीष्टसिद्ध्यर्थं ममामुककार्यसिद्ध्यर्थंवा सनवग्रहमखांनवचंडींशतचंडींसहस्र चंडींवास्वयंब्राह्मणद्वारावाकरिष्ये ॥ तदंगतयागणेशपूजनंपुण्याहवाचनंमातृकापूजनंनांदीश्राद्धमाचार्यादिवरणंचकरिष्ये इतिसंकल्प्यतानिकृत्वाआचार्यादीन्वृत्वातान्यथाविभवंवस्त्रादिनामधुपर्केणचसंपूज्यप्रार्थयेच्च ॥ तेचशतचंड्यांदश ॥ सह

सर्वज्यांशतं ॥ केचिदत्रग्रहजपार्थमेकमृत्विजंवरयंति ॥ अथाचार्यआचम्यदेशकालौसंकीर्त्ययजमानेनवृतोहमाचार्यकर्मक
रिष्येइतिसंकल्प्ययदत्रेतिगौरसर्षपान्विकीर्यपंचगव्येनकुशोदकेनवामंडपंप्रोक्षेत् ॥ शुचीवोहव्या० आपोहिष्ठा० अपवि
त्रः० ॥ पृथ्वित्वया० इत्युपविश्य ॥ अनंतासनायनमः विमलासनाय० पद्मासनाय० ॥ अपक्रामंतु० इतिभूमौवामपाद
घातत्रयंकृत्वायथोपदेशंविस्तरतःसंक्षेपेणवाभूतशुद्ध्यादिकृत्वानवार्णविध्युक्तैकादशन्यासान्कुर्यात् ॥ अथवैकादशमेवंकंन्या
संकुर्यात् ॥ ततोयोनिमुद्रांप्रदर्श्यध्यायेत् ॥ श्वेताननानीलभुजासुश्वेतस्तनमंडला ॥ रक्तमध्यारक्तपादानीलजंघोरुरुन्म
दा ॥ सुचित्रजघनाचित्रमाल्यांबरविभूषणा ॥ चित्रानुलेपनाकांतिरूपसौभाग्यशालिनी ॥ अष्टादशभुजापूज्यासासहस्रभु
जासती ॥ आयुधान्यत्रवक्ष्यंतेदक्षिणाधःकरक्रमात् ॥ अक्षमालाचकमलंबाणोसिःकुलिशंगदा ॥ चक्रंत्रिशूलंपरशुः
शंखोघंटाचपाशकः ॥ शक्तिर्दंडश्चर्मचापंपानपात्रंकमंडलुरिति ॥ ततोवेद्यांसर्वतोभद्रमष्टदलंवाविलिख्यतत्रब्रह्मादिमं
डलदेवताःसंस्थाप्यबलिंदत्वा तन्मध्येमहीद्यौरित्यादिमंत्रैःकलशंसंस्थाप्यतस्मिन्गंधपुष्पफलसर्वौषधीदूर्वापंचपल्लवसप्तमृत्ति
कास्तत्तन्मंत्रेणनिक्षिप्यवस्त्रद्वयेनावेष्ट्य तदुपरिपूर्णपात्रंनिधायकलशेवरुणमावाह्यपूजयेत् ॥ ततःकलशेदेवताःस्मरेत् ॥
कलशस्यमुखेविष्णुः० देवदानवसंवादेमथ्य० प्रसन्नोभवसर्वदाइतिकलशंप्रार्थयेत् ॥ तथाकलशोपरिस्थपूर्णपात्रेरक्तवस्त्रे
यंत्रंलिखेत् ॥ तद्यथा ॥ मध्येत्रिकोणंतद्बहिःषट्कोणंतद्बाह्येवृत्तंतद्बाह्येष्टौदलानितद्बाह्येचतुर्द्वारंचतुरस्रत्रयमितिएवंयंत्रं
विलिख्य तत्रपलेनतदर्धार्धेनवाष्टादशभुजांअष्टभुजांवासिंहारूढांसौवर्णींदेवीमूर्तिंरक्तवस्त्रयुगच्छन्नामग्न्युत्तारणप्राणप्रतिष्ठा
पूर्वकंप्रतिष्ठाप्यपूजयेत् ॥ तद्यथा ॥ स्ववामेकर्पूरादियुतजलपूर्णकलशंसंपूज्यकलशस्यमुखे० गंगेचयमुने० इत्यादिपठि

त्वाधेनुमुद्रांप्रदर्श्य दक्षिणतःशंखंसंपूज्य शंखंचंद्रार्कदैवत्यमित्यादिपठित्वा शंखमुद्रांप्रदर्श्यशंखोदकेनात्मानंपूजाद्रव्याणि
चप्रोक्षेत् ॥ अपवित्रःपवित्रोवा० ॥ ततः पीठपूजांकुर्यात् ॥ देवीदक्षिणेगुंगुरुभ्योनमः पंपरमगुरुभ्यो० पंपरात्परगुरुभ्यो० पंपर
मेष्ठीगुरुभ्यो० ॥ वामे गंगणपतयेनमः दुंदुर्गायैन० क्षंक्षेत्रपालाय० ॥ मध्येआधारशक्त्यै० मूलप्रकृत्यै० कालाग्निरुद्राय०
महामंडपाय० कूर्माय० वराहाय० अनंताय० भूम्यै० अमृतार्णवाय० रत्नद्वीपाय० हेमगिरये० नंदनोद्यानाय० मणिभू
म्यै० रत्नमंडपाय० कल्पतरवे० रत्नसिंहासनाय० ॥ आग्नेय्यादिकोणेषु धर्माय० ज्ञानाय० वैराग्याय० ऐश्वर्याय० पूर्वा
दिदिक्षु अधर्माय० अज्ञानाय० अवैराग्याय० अनैश्वर्याय० ऊर्ध्वंब्रह्मणे० अधःअनंताय० मध्येवास्तुपुरुषाय० संसत्वा
य० रंरजसे० तंतमसे० मांमायायै० विंविद्यायै० ॥ पूर्वाद्यष्टदिक्षु ॐ ओंकारगिरिपीठेश्वरसहितामोंकारगिरिपीठेश्वर्यंबा
पादुकांपूजयामि उड्डानपीठेश्वरसहितामुड्डानपीठेश्वर्यंबापादुकां० मातृकापीठेश्वरसहितांमातृकापीठेश्वर्यंबापादुकां० जालं
धरपीठेश्वरसहितांजालंधरपीठेश्वर्यंबापा० कोल्हागिरिपीठेश्वरसहितांकोल्हागिरिपीठेश्वर्यंबापादु० पूर्णगिरिपीठेश्वरसहितां
पूर्णगिरिपीठेश्वर्यंबापादुकांपू० संहारगिरिपीठेश्वरसहितांसंहारगिरिपीठेश्वर्यंबापा० कामरूपपीठेश्वरसहितांकामरूपपीठेश्व
र्यंबापा० ॥ पुनःपूर्वादिचतुर्दिक्षु गंगणेशायनमः क्षंक्षेत्रपालाय० पांपादुकाभ्यो० बंबटुकेभ्यो० ॥ आग्नेय्यादिविदिक्षु जं
जयायैन० विंविजयायैन० जंजयंत्यै० अंअपराजितायै० ॥ तत्रैवअग्निमुखवेतालायनमः प्रेतवाहनवेतालाय० ज्वालामु
खवेतालाय० धूम्राक्षवेतालाय० कंदाय० नालाय० दलेभ्यो० केसरेभ्यो० कर्णिकायै० ॥ अंसूर्यमंडलाय० उंसोममंड० मंव
ह्निमंडलाय० अंआत्मने० उंअंतरात्मने० पंपरमात्मने० उंज्ञानात्मने० ॥ ततःपूर्वं विंविष्णुमायायै० चंचेतनायै० बुंबु

ऌ्यै० निंनिद्रायै० क्षुंक्षुधायै० ॥ दक्षिणे छांछायायै० शंशक्त्यै० तृंतृष्णायै० क्षांक्षांत्यै० जांजात्यै० लंलज्जायै० ॥ पश्चि
मे शांशांत्यै श्रंश्रद्धायै० कांकांत्यै० लंलक्ष्म्यै० धृंधृत्यै० वृंवृत्त्यै० ॥ उत्तरे स्मृंस्मृत्यै० दंदयायै० तुंतुष्ट्यै० पुंपुष्ट्यै० मां
मातृकायै० भ्रांभ्रांत्यै० ह्रींसर्वशक्तिकमलासनाय० सर्वात्मसंयोगयोगपीठात्मने० इतिपीठपूजा ॥ ततोहृदिस्थांसपरिवारां
ज्योतिर्मयींमहालक्ष्मींध्यात्वा ॥ आगच्छवरदेदेविदैत्यदर्पनिषूदनि ॥ पूजांगृहाणसुमुखिनमस्तेशंकरप्रिये ॥ दुर्गेदेविसमाग
च्छसान्निध्यमिहकल्पय ॥ बलिपूजांगृहाणत्वमष्टाभिःशक्तिभिःसह ॥ इतिमंत्रौपठित्वादक्षिणनासारंध्रेणपुष्पांजलावानीयमू
लेनमूर्तावावाह्यावाहनादिमुद्रायोनिमुद्रांचप्रदर्श्यमूर्तेःषडंगंकृत्वामूलमंत्रेणजयंतीमंगलाकालीत्यनेनासनपाद्यार्घ्याचमनमधु
पर्कान्निवेदयेत् ॥ तत्रपात्रचतुष्टयमस्त्रेणप्रक्षाल्यगंधादिनिक्षिपेत् ॥ तत्रपाद्येदूर्वाविष्णुक्रांताश्यामाकपत्राणि ॥ अर्घ्येगंध
पुष्पाक्षतकुशाग्रसर्षपयवदूर्वाः ॥ आचमनीयेजातीफलकंकोललवंगानि ॥ मधुपर्केदधिमधुच ॥ ततःसुगंधितैलपंचामृतो
ष्णोदकतीर्थोदकैः श्रीसूक्तदेवीसूक्तसरस्वतीसूक्तैरभिषिच्यपुनराचमनंदत्वा पट्टदुकूलयुगकंचुकाभरणाष्टगंधबिल्वपत्रनाना
पुष्पहरिद्राकुंकुमसिंदूरालक्तकपरिमलद्रव्याणिसमर्प्यसहस्रंपुष्पाणिसमर्पयेत् ॥ अथांगपूजा ॥ दुर्गायै० पादौ० ॥ गिरि
जायै० गुल्फौ० ॥ अपर्णायै० जानुनी० ॥ हरिप्रियायै० ऊरू० ॥ पार्वत्यै० कटिं० ॥ आर्यायै० नाभिं ॥ जगन्मात्रे०
उदरं० ॥ मंगलायै० कुक्षिं० ॥ शिवायै० हृदयं० ॥ माहेश्वर्यै० कंठं० ॥ विश्ववंद्यायै० स्कंधौ० ॥ काल्यै० बाहू० ॥
आद्यायै० हस्तौ० ॥ वरदायै० मुखं० ॥ सुवाण्यै० नासिकां० ॥ कमलाक्ष्यै० नेत्रे० ॥ अंबिकायै० शिरः० ॥ देव्यै०
सर्वांगं० ॥ ॥ अथाष्टोत्तरशतनामानि ॥ माहेश्वर्यैनमः० महादेव्यै० जयंत्यै० सर्वमंगलायै० लज्जायै० भगवत्यै०

वंद्यायै० भवान्यै० पापनाशिन्यै० चंडिकायै० कालरात्र्यै० भद्रकाल्यै० अपराजितायै० महाविद्यायै० महामेधायै० महामायायै० महाबलायै० कात्यायन्यै० जयायै० दुर्गायै० मंदारवनवासिन्यै० आर्यायै० गिरिसुतायै० धात्र्यै० महिषासुरघातिन्यै० सिद्धिदायै० बुद्धिदायै० नित्यायै० वरदायै० वरवर्णिन्यै० अंबिकायै० सुखदायै० सौम्यायै० जगन्मात्रे० शिवप्रियायै० भक्तसंतापसंहर्त्र्यै० सर्वकामप्रपूरिण्यै० जगत्कर्त्र्यै० जगद्धात्र्यै० जगत्पालनतत्परायै० अव्यक्तायै० व्यक्तरूपायै० भीमायै० त्रिपुरसुंदर्यै० अपर्णायै० ललितायै० वेद्यायै० पूर्णचंद्रनिभाननायै० चामुंडायै० चतुरायै० चंद्रायै० गुणत्रयविभाविन्यै० हेरंबजनन्यै० काल्यै० त्रिगुणायै० यशोधारिण्यै० उमायै० कलशहस्तायै० दैत्यदर्पनिषूदन्यै० बुद्ध्यै० कांत्यै० क्षमायै० शांत्यै० पुष्ट्यै० तुष्ट्यै० धृत्यै० मत्यै० वरायुधधरायै० धीरायै० गौर्यै० शाकंभर्यै० शिवायै० अष्टसिद्धिप्रदायै० वामायै० शिववामांगवासिन्यै० धर्मदायै० धनदायै० श्रीदायै० कामदायै० मोक्षदायै० अपरायै० चित्स्वरूपायै० चिदानंदायै० जयश्रियै० जयदायिन्यै० सर्वमंगलमंगल्यायै० जगत्रयहितैषिण्यै० शर्वाण्यै० पार्वत्यै० धन्यायै० स्कंदमात्रे० अखिलेश्वर्यै० प्रपन्नार्तिहरायै० देव्यै० सुभगायै० कामरूपिण्यै० निराकारायै० साकारायै० महाकाल्यै० सुरेश्वर्यै० शर्वायै० श्रद्धायै० ध्रुवायै० कृत्यायै० मृडान्यै० भक्तवत्सलायै० सर्वशक्तिसमायुक्तायै० शरण्यायै० सर्वकामदायै० ॥ इत्यष्टोत्तरशतनामानि ॥ अथावरणपूजा ॥ देव्यादक्षिणे ऐंमहाकाल्यैविच्चेनमः ॥ मध्ये ह्रींमहालक्ष्म्यैविच्चेनमः ॥ वामे क्लींमहासरस्वत्यैविच्चेनमः ॥ अभीष्टसिद्धिंमेदेहिशरणागतवत्सले ॥ भक्त्यासमर्पयेतुभ्यंप्रथमावरणार्चनं ॥ १ ॥ एवमग्रेपिद्वितीयाद्यावरणादौयथायथमूह्यं ॥ वामे ह्रूंमहिषायनमः दक्षिणे क्षौंसिंहायनमः पुरतः

गंगणपतयेनमः हूं कालायनमः पश्चात् हूंमृत्यवेनमः ॥ २ ॥ षड्दलेषु ह्रैं रुद्रायनमः ह्रौं गौर्यैनमः श्रींविष्णवेनमः श्रीं लक्ष्म्यैनमः ऐं ब्रह्मणेनमः ऐं सरस्वत्यैनमः ॥ ३ ॥ तत्रैव ह्रां हृदयायनमः ह्रीं शिरसेस्वाहा ह्रूं शिखायैवषट् ह्रैं कवचायहुं ह्रौं नेत्रत्रयायवौषट् ह्रः अस्त्रायफट् ॥ ४ ॥ तत्रैव गुं गुरुभ्यो० पं परमगुरुभ्यो० पं परमेष्ठीगुरुभ्यो० हरये० हराय० गणेशाय० ॥ ५ ॥ अष्टदलेषु नंनंदजायै० रंरक्तदंतिकायै० शांशाकंभर्यै० दुंदुर्गायै० भींभीमायै० भ्रांभ्रामर्यै० लौंइंद्राण्यै० क्षौंनारसिंह्यै० रःप्रौंचामुंडायै० ॥ ६ ॥ पूर्वादिदिक्षु अंअसितांगभैरवाय० रुं रुरुभैरवाय० चंचंडभैरवाय० क्रोंक्रोधभैरवाय० उं उन्मत्तभैरवाय० कंकपालभैरवाय० भींभीषणभैरवाय० संसंहारभैरवाय० ॥ ७ ॥ पुनःपूर्वादिषु लंइंद्राय० रंअग्नये० मंयमाय० क्षंनिर्ऋतये० वंवरुणाय० यंवायवे० संसोमाय० हंईशानाय० ॥ ८ ॥ तद्बहिः पूर्वादिषु वज्राय० शक्त्यै० दंडाय० खड्गाय० पाशाय० अंकुशाय० गदायै० त्रिशूलाय० ॥ ९ ॥ इत्यावरणपूजा ॥ ततोमूलेनधूपदीपौदत्वानैवेद्यमस्त्रेणाभिमंत्र्यमूलेनप्रोक्ष्यकवचेनावगुंठ्यपुष्पंदत्त्वाधेनुमुद्रयामृतीकृत्यमूलेननिवेद्यग्रासमुद्रांप्रदर्श्यमध्येपानीयमुत्तराचमनंचदत्त्वाकरोद्वर्तनफलतांबूलदक्षिणानीराजनपुष्पांजल्यंते यथासंभवंछत्रचामरगीतनृत्यवाद्यादिसमर्प्यकूष्मांडनारीकेलकदलीफलादिबलिंदत्वामापभक्तकूष्मांडबलिंदत्वापूजांसमापयेत् ॥ ॥ ततःकुमारीपूजा ॥ देशकालौसंकीर्त्यशतचंडीजपांगत्वेनकुमारीपूजांकरिष्ये इतिसंकल्प्यमूलेनषडंगंकृत्वामूलमंत्रमुच्चार्य ॥ मंत्राक्षरमयींदेवींमातृणांरूपधारिणीं ॥ नवदुर्गात्मिकांसाक्षात्कन्यामावाहयाम्यहं ॥ इतिकुमारीमावाह्ययथासंभवंपूजयेत् ॥ कुमार्यश्चप्रत्यहंशतंनवएकावायथाशक्तिवापूज्याः ॥ प्रत्यहमेकवृद्ध्यावापूजयेत् ॥ ततोब्राह्मणसुवासिनीपूजा ॥ एवंदेवीकुमार्यादिपूजाप्रत्यहंकार्या ॥ ततःसर्वेविप्राः

कृतांगन्यासाःशतंनवार्णमंत्रंजप्त्वाकवचार्गलकीलकानिसकृज्जप्त्वासप्तशतींजप्त्वांतेरहस्यानिनवार्णशतंचजपेयुः ॥ एकस्मि न्दिनेअनेकावृत्तौतुकवचादीनांप्रत्यावृत्तिनावृत्तिः ॥ एवमृत्विजःप्रथमदिनेएकंद्वितीयेद्वेतृतीयेत्रीणिचतुर्थेचत्वारिरूपाणी त्येवंजपंकुर्यात् ॥ ऋत्विजांयजमानस्यचप्रत्यहंक्षीरमात्राशनंअशक्तौहविष्यान्नंवा ॥ प्रत्यहंसहस्रंशतंदशवाब्राह्मणान्भोजयेत् पंचमेऽह्निहोमः ॥ नवरात्रेतुनवम्यामेवहोमः ॥ केचित्तुअष्टम्यामारभ्यनवम्यांसमापयंति ॥ ॥ अथहोमः ॥ देशकालौस्मृ त्वामयाब्राह्मणद्वाराकृतस्यशतचंडीजपस्यसंपूर्णतासिद्ध्यर्थंजपदशांशेनतिलादिभिश्रपायसद्रव्येणहोमंकरिष्यइतिसंकल्प्य ॥ अत्रकेचित्पुण्याहवाचनमपिकुर्वंति ॥ तथापूर्वोक्तकलशस्थापनंदेवतास्थापनंपूजनंचात्रैवकुर्वंति ॥ ततःसनवग्रहशतचंडीज पदशांशहोमंकर्तुंस्थंडिलादिकरिष्ये इतिसंकल्प्यस्थंडिलमुपलिप्योल्लिख्यतत्र (शत)मंगलनामानमग्निंप्रतिष्ठाप्यसमिध्यध्या येत् ॥ ततःप्रागकृतंचेदिदानीमीशान्यांदिशिनवग्रहस्थापनंकृत्वातत्पूर्वतःकलशंस्थापयेत् ॥ ततोऽग्निसमीपमागत्यान्वाधानंकु र्यात् ॥ समिद्द्वयमादाय क्रियमाणेशतचंडीजपांगहोमेदेवतापरिग्रहार्थमन्वाधानंकरिष्ये ॥ अस्मिन्नन्वाहितेग्नावित्यादिचक्षु षीआज्येनेत्यंतमुक्त्वा आदित्यादिनवग्रहान् प्रतिद्रव्यमष्टाविंशतिअष्टौवासंख्याकाभिःसमित्तिलाज्याहुतिभिः अधिदेवताः प्रत्यधिदेवताश्चचतुःसंख्याकाभिःतैरेवद्रव्यैः गणपत्यादिदेवताइंद्राद्यष्टौलोकपालांश्चैकैकयासमित्तिलाज्याहुत्यायक्ष्ये ॥ म हाकालीमहालक्ष्मीमहासरस्वतीःमूलमंत्रेणशतवारंसप्तशतीमंत्रैःजपदशांशसंख्ययापायसतिलपलाशपुष्पसर्षपपूगीफललाजा दूर्वांकुरयवबिल्वफलरक्तचंदनगुग्गुलद्रव्यैर्यथालाभद्रव्यैर्वा तिलमिश्रपायसेनवापुनर्मूलमंत्रेणशतवारंतैरेवद्रव्यैः आधारश क्त्यादिपीठदेवताःमहाकाल्याद्यावरणदेवताश्चएकैकाहुत्यापायसाज्येनयक्ष्ये ॥ शेषेणस्विष्टकृतमित्याद्याज्यभागांतंकृत्वाय

जमानः इदंहवनीयद्रव्यंयथादैवतमस्तुनममेतित्यजेत् ॥ नवग्रहादिभ्यःसमित्तिलाज्यानिहुत्वाउक्तद्रव्याणिमूलमंत्रेणशतवारंहुत्वासप्तशतीमंत्रैर्जपदशांशेनहुत्वापुनर्मूलमंत्रेणशतवारंजुहुयात् ॥ मूलमंत्रोनवार्णमंत्रः ॥ नवार्णमंत्रस्यकेवलाज्येनैववाहोमः ॥ अत्राध्यायसमाप्तौउवाचस्थलेचपत्रपुष्पफलैर्होमः ॥ एवंप्रधानहोमंकृत्वाआधारशक्त्यादिपीठदेवताभ्योनामभिराज्यंपायसंचजुहुयात् तथाऐंमहाकाल्यैविच्चेइत्याद्यावरणदेवताभ्योपितथैवाज्यपायसौहोतव्यौ ॥ एवंहोमंकृत्वा स्विष्टकृदादिप्रायश्चित्तहोमांतंकृत्वाइंद्रादिनवग्रहक्षेत्रपालादिभ्यो माषभक्तबलींस्तत्तन्मंत्रैर्दद्यात् ॥ तत्रमंत्राः ॥ इंद्रंवो० इंद्रःसुरपतिश्रेष्ठोवज्रहस्तोमहाबलः ॥ शतयागाधिपोदेवस्तस्मैनित्यंनमोनमः ॥ इंद्रायसांगायसपरिवारायसशक्तिकायसायुधायइमंमाषभक्तबलिंसमर्पयामि भोइंद्रइमंबलिंभक्षदिशंरक्षममयजमानस्यआयुःकर्ताशांतिकर्तापुष्टिकर्तातुष्टिकर्ताकल्याणकर्तावरदोभव॥ अनेनबलिदानेनइंद्रःप्रीयतां ॥ १ ॥ अग्निंदूतं० आग्नेयःपुरुषोरक्तःसर्वदेवमयोव्ययः ॥ धूमकेतुरनाधृष्यस्तस्मैनित्यंनमोनमः ॥ अग्नये० इत्यादि० ॥ २ ॥ यमायसोमं० यमश्चोत्पलपत्राक्षःकिरीटीदंडधृक्सदा ॥ लोकसाक्षीविशुद्धात्मातस्मैनित्यंनमोनमः ॥ यमायसांगायेत्यादि० ॥ ३ ॥ मोषुणःपरापरा० निर्ऋतिस्तुपुमान्कृष्णःसर्वरक्षोधिपोमहान् ॥ खड्गहस्तोमहासत्वस्तस्मैनित्यं० निर्ऋतयेसांगायेत्यादि० ॥ ४ ॥ तत्त्वायामि० वरुणःसर्वलोकेषुपुरुषोनिम्नगाधिपः ॥ पाशहस्तोमहाबाहुस्तस्मैनित्यं० वरुणायसांगायेत्यादि० ॥ ५ ॥ तववाय० सर्वप्राणात्मकोवायुःसर्वजंतुष्ववस्थितः ॥ ध्वजहस्तोमहाप्राणस्तस्मैनित्यं० वायवेसांगायेत्यादि० ॥ ६ ॥ आप्यायस्व० गौरोयस्तुपुमान्सौम्यःसर्वौषधिसमन्वितः ॥ नक्षत्राधिपतिःसोमस्तस्मैनित्यं० सोमायसांगायेत्यादि० ॥ ७ ॥ तमीशानं० ईशानःपुरुषःशुक्लःसर्वदेवाधिपोमहान् ॥ शूलहस्तोविरूपाक्षस्तस्मैनि

त्यं० ईशानायसांगायेत्यादि० ॥ ८ ॥ आयंगौःपृश्नि० योसावनंतरूपेणब्रह्मांडंसचराचरं ॥ पुष्पवद्धारयेन्मूर्ध्नितस्मैनित्यं० अनंतायसांगायेत्यादि० ॥ ९ ॥ ब्रह्मजज्ञानं० पद्मयोनिश्चतुर्मूर्तिर्वेदावासःपितामहः ॥ कमंडलुधरोदेवस्तस्मै० ॥ ब्रह्मणेसां गायेत्यादि० ॥ १० ॥ नवग्रहेभ्यःसांगेभ्यइत्यादिनाग्रहेभ्योबलिंदत्वाक्षेत्रपालायदद्यात् ॥ क्षेत्रस्यपतिना० सर्वभूताधिपाय क्षेत्राधिपतयेशाकिनीडाकिनीभूतप्रेतपिशाचादिपरिवारसहितायइमंबलिंसमर्पयामि ॥ भोक्षेत्रपालइमंबलिंभक्षदिशोरक्षमम यजमानस्यवाआयुःकर्तेत्यादि० ॥ बलिंगृह्णंत्विमंदेवाआदित्यावसवस्तथा ॥ मरुतश्चाश्विनौरुद्राःसुपर्णाःपन्नगाःखगाः ॥ असुरायातुधानाश्चपिशाचोरगराक्षसाः ॥ डाकिन्योयक्षवेतालायोगिन्यःपूतनाःशिवाः ॥ जृंभकाःसिद्धगंधर्वानागाविद्याध रानगाः ॥ दिक्पालालोकपालाश्चयेचविघ्नविनायकाः ॥ जगतांशांतिकर्तारोब्रह्माद्याश्चमहर्षयः ॥ माविघ्नंमाचमेपापंमासंतु परिपंथिनः ॥ सौम्याभवंतुतृप्ताश्चभूतप्रेताःसुखावहाः ॥ इतिमंत्रान्पठेत् ॥ अयंबलिःशूद्रेणदुर्ब्राह्मणेनवानेयः ॥ ततोहस्तौ पादौप्रक्षाल्याचम्य पूर्णाहुतिंजुहुयात् ॥ स्रुचिस्रुवेणद्वादशवारमाज्यंगृहीत्वानारिकेलादिचगृहीत्वा ॥ समुद्रादूर्मि० २ मू र्धानं० १ पुनस्त्वा० पूर्णादर्वि० सप्ततेअग्ने० धामंतेविश्वं० मूलमंत्रः नमोदेव्यैइत्यादिमंत्राश्च ॥ ततोवसोर्धारांहुत्वाप्रणी ताविमोकादिकर्मशेषंसमाप्य मूलमंत्रेणहोमदशांशेनदुग्धेनजलेनवातर्पणंकृत्वातेनैवमंत्रेणतद्दशांशेनमार्जयेत् ॥ ततोयजमा नआचार्यादीन्वस्त्राद्यैःसंपूज्यतेभ्योगोमिथुनानिहिरण्यंचदद्यात् ॥ ततआचार्यादिभ्योन्येभ्योवाकपिलागोनीलमणिश्वेता श्वछत्रचामरभूमिशय्यासप्तधान्यानियथासंभववादद्यात् ॥ ततआचार्यादयःकलशोदकेनसपत्नीकंसकुटुंबंयजमानं समुद्रज्ये ष्ठाइत्यादिभिःसुरास्त्वेत्यादिभिर्ग्रहमंत्रैश्चाभिषिंचेयुः ॥ ततोयजमानोग्रहाणामुत्तरपूजांकृत्वाचार्येणविसर्जनेकृतेग्रहपीठदानं

कृत्वादेवींपंचोपचारैःसंपूज्यमहाबलिंदद्यात् ॥ तत्रक्षत्रियादिनाश्वमेषछागमहिषाणामन्यतरोदेयः ॥ विप्रेणतुकूष्मांडबिल्वे
क्ष्वन्यतमोदेयः ॥ सचेत्थं ॥ देवींद्रोणपुष्पबिल्वाम्रदलजातीचंपकैःसंपूज्यकर्ताउदङ्मुखःपूर्वमुखंदेवीमुखंवाबलिंगंधादिनाभ्य
र्च्य ॥ पशुस्त्वंबलिरूपेणममभाग्यादुपस्थितः ॥ प्रणमामिततःसर्वरूपिणंबलिरूपिणं ॥ चंडिकाप्रीतिदानेनदातुरापद्विनाशनं ॥
चामुंडाबलिरूपायबलेतुभ्यंनमोस्तुते ॥ यज्ञार्थेबलयःसृष्टाःस्वयमेवस्वयंभुवा ॥ अतस्त्वांघातयाम्यद्यतस्माद्यज्ञेवधोऽवधः ॥
इतिबलिमभिमंत्र्य ऐंह्रींश्रीं इतितत्रपुष्पंक्षिप्त्वा ॥ रसनात्वंचंडिकायाःसुरलोकप्रसाधकः ॥ ह्रांह्रींखड्गआंहुंफट् इतिखड्गम
न्यद्वाशस्त्रंसंपूज्य ॐ कालिकालियज्ञेश्वरिलोहदंडायैनमः इतिबलिंछेदयित्वा ॐ ह्रींऐंह्रींकौशिकीरुधिरेणाप्यायतांइतिदे
व्यैनिवेद्यशेषंगृहीत्वापूतनायै चरक्यै विदार्यै पापराक्षस्यैचनिवेद्यततोमाषपिष्टमयंशत्रुंकृत्वाखड्गेनछेदयित्वास्कंदायविशि
खायचदत्वाबलिशेषंरक्षोभ्योहरेत् ॥ मंत्रस्तु ॐ ह्रींस्फुरस्फुरकुंभ २ सुनु २ गुलु २ धनु २ मारय २ विद्रावय २ विदारय
२ कंपय २ कंपातय २ कृंतय २ पूरय २ ॐ ह्रीं ॐ ह्रूं फट् २ हुं मर्दय २ हुं इति ॥ ततःशेषंबहिर्दद्यात् ॥ तत्रमंत्राः बलिंगृह्णंत्वि
मंदेवाइत्यादयःपूर्वोक्ताएव ॥ ततःस्नात्वातिलकंधृत्वादेवींप्रार्थयेत् ॥ तत्रमंत्राः ॥ खड्गिनीशूलिनीघोरा० शूलेनपाहिनोदे
वि० ४ नमोदेव्यैमहादेव्यै० ५ रूपंदेहियशोदेहिभगंभगवतिदेहिमे ॥ पुत्रान्देहिधनंदेहिसर्वान्कामांश्चदेहिमे ॥ महिषघ्निम
हामायेचामुंडेमुंडमालिनि ॥ आयुरारोग्यमैश्वर्यंदेहिदेविनमोस्तुते ॥ इतिदेवींसंप्रार्थ्य गुह्यातिगुह्यगोप्त्रीत्वंगृहाणास्मत्कृतं
जपं ॥ सिद्धिर्भवतुमेदेविप्रसादात्तवसुंदरि ॥ इतिदेव्यैजपंनिवेद्य ॥ कृतस्यकर्मणःसांगतासिद्ध्यर्थंकुमारीब्राह्मणसुवासिनीः
पूजापूर्वकंसंभोज्यसंकल्प्यवा न्यूनातिरिक्तदोषपरिहारार्थंब्राह्मणेभ्योभूयसींदक्षिणांदत्वाग्निंसंपूज्यविभूतिंधृत्वागच्छगच्छेत्य

र्थविसृज्यमूलमंत्रेणपुष्पेणदेवीमुद्रास्यनासयाहृदिप्रतिष्ठांविभाव्यपवंगंकृत्वा उत्तिष्ठब्रह्मण० अम्बार० इतिमंत्रैर्विसृज्याचार्यायदत्वामंत्रंपठेत् ॥ त्रैलोक्यमातर्देवित्वंसर्वभूतदयान्विते ॥ दानेनानेनसंतुष्टासुप्रीतावरदाभव ॥ उत्तिष्ठदेविचंडेशिशुभांपूजांप्रगृह्यच ॥ कुरुष्वममकल्याणमष्टाभिःशक्तिभिःसह ॥ ततोग्निंसंपूज्यविभूतिंधृत्वागच्छगच्छेतितंविसृज्यशतंयथाशक्तिवाविप्रान्संभोज्यततः यस्यस्मृत्या० प्रमादात्कुर्वतांकर्म० इत्यादिजपित्वाकर्मेश्वरार्पणंकृत्वासुहृद्युक्तोभुंजीत ॥ इदमेवपूजाहोमबल्यादिविधानंनवरात्रेपिज्ञेयं ॥ तत्रविशेषस्तुदशम्यांप्रातर्देवीविसर्जनं ॥ अन्यच्चमहानिबंधेभ्योवगंतव्यं ॥ इतिसंक्षेपेणनवचंडीशतचंडीसहस्रहवनचंडीप्रयोगः ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥

## ॥ २९३ ॥ अथगोप्रदानप्रयोगः ॥

श्रीः ॥ देशकालाद्युल्लिख्यममनिखिलदुरितदौर्भाग्यदुःस्वप्नरुनिर्मितबाधाशांतिपूर्वकमायुरारोग्यधनधान्यद्विपदचतुष्पदशांतिपूर्वकंगोरोमतुल्यवत्सरावधिसकलभोगपरिपूर्णस्वर्गलोकप्राप्तिकामःश्रीपर०गोप्रदानमहंकरिष्ये तदंगंगणपतिपूजनपूर्वकंब्राह्मणपूजनंगोःपूजनंचक० ॥ गोत्रोच्चारपूर्वकंगोप्रतिग्रहीतारंब्राह्मणंवृत्वा ॥ तवपादोदकंतीर्थंमुखेवेदाःप्रतिष्ठिताः ॥ पाद्यंगृहाणविप्रेंद्रभूमिदेवनमोस्तुते ॥ पाद्यं ॥ भूमिदेवाग्रजन्मासित्वंविप्रपुरुषोत्तम ॥ प्रत्यक्षयज्ञपुरुषअर्घोयंप्रतिगृह्यतां ॥ अर्घ्यंआचमनीयंवस्त्रयज्ञोपवीतगंधालंकारपुष्पधूपदीपान्इदमामंभोजनपर्याप्तं यथाशक्तिदक्षिणातांबूलसहितममृतरूपेणसंपद्यतां ॥ यदर्चनंकृतंविप्रतवविष्णुस्वरूपिणः ॥ तत्सर्वममदानस्यविष्णवेस्तुसमर्पणं ॥ इतिसंप्रार्थ्यगांपूजयेत् ॥ तत्रादौन्यासः ॥ शृंगमूलयोःब्रह्मविष्णून्यसामि शृंगाग्रयोःसर्वतीर्थानि० ललाटेमहादेवंन्य० ललाटाग्रेमहादेवीं० नासावंशेषण्मु

खं० कर्णयोरश्विनौ० चक्षुषोःशशिभास्करौ० दंतेषुवायुं० जिह्वायांवरुणं० हुंकारेसरस्वतीं० गंडयोःयमधर्मौ० ओष्ठयोः संध्याद्वयं० ग्रीवायांइंद्रं० कुक्षिदेशेरक्षांसि० उरसिसाध्यान्० चतुष्पादेषुधर्मं० खुरमध्येगंधर्वान्० खुराग्रेपन्नगान्० खुर पार्श्वेष्वप्सरसोन्य० पृष्ठेएकादशरुद्रान्० सर्वसंधिषुवसून् श्रोणीतटेपितृन् लांगूलेसोमं० वालेषुआदित्यरश्मीन्० गोमूत्रे गंगां० क्षीरेसरस्वतीं० दध्निनर्मदां० सर्पिषिहुताशनं० रोमसुत्रयस्त्रिंशत्कोटिदेवान्० उदरेपृथिवीं० पयोधरेषुचतुःसाग रान्न्यसामिइतिन्यस्य उपह्वयेसुदुघां० गौरीमिंमाय० हिंकृण्वती० ब्राह्मणोस्य० आयंगौः० उरुक्षुष्माओषधीनां० इत्या दिमंत्रैःपूजाकार्या ॥ सौरभेयिसर्वहितेपवित्रेपापनाशिनि ॥ गृहाणेदंमयादत्तंपाद्यंत्रैलोक्यवंदिते ॥ भूर्भुवःस्वःरुद्ररूपि ण्यैगवेनमःपाद्यं ॥ सर्वदेवमयेदेविसर्वतीर्थमयेशुभे ॥ गृहाणार्घ्यंमयादत्तंसौरभेयिनमोस्तुते ॥ अर्घ्यं ॥ देहस्थितासिरुद्रा णीशंकरस्यसदाप्रिया ॥ धेनुरूपेणसादेवीममपापंव्यपोहतु ॥ आचमनीयं ॥ यालक्ष्मीःसर्वलोकेषुयाचदेवेष्ववस्थिता ॥ धे नुरूपेण० ॥ स्नानं ॥ आच्छादनंगवेदद्यांसम्यक्शुद्धंसुशोभनं ॥ सुरभिर्वस्त्रदानेनप्रीयतांपरमेश्वरी ॥ वस्त्रं ॥ सर्वदेवमये देविचंदनंचंद्रसंनिभं ॥ कस्तूरीकुंकुमाढ्यंचसुगंधिप्रतिगृह्यतां ॥ चंदनं ॥ गोःअग्रपादाभ्यांनमः आस्याय० नासावंशाय० नेत्राभ्यां० कर्णाभ्यां० ककुदे० पृष्ठाय० पश्चिमपादाभ्यां० सर्वांगेभ्योनमः ॥ ( अत्रापिकेचनपूर्वनिर्दिष्टमंगेषुदेवतान्यासं शृंगमूलयोर्ब्रह्मविष्णुभ्यांनमःइत्यादितत्तद्देवतांचतुर्थ्यानिर्दिश्यकुर्वंति )॥ ततोगवेलंकारान्दद्यात् ॥ शृंगभूषार्थंसुवर्णंचरण भूषणार्थंरजतं भालभूषार्थमादर्शंनेत्रयोःकज्जलंकंठेघंटांपुष्पस्रजंचसर्वांगभूषार्थंपट्टकूलंपृष्ठेताम्रंपुच्छेमुक्तास्रजंकुंकुमकस्तू रिकागंधान्सप्तधान्यानिघृतपूर्णकुंभंचपरितःकल्पयेत् ॥ माल्यादीनीतिपुष्पाणि ॥ देवद्रुमरसोद्भूतोगोघृतेनसमन्वितः ॥

प्रयच्छामिमहाभागेधूपोयंप्रतिगृह्यतां ॥ धूपं ॥ आनंदकृत्सर्वलोकेदेवानांचसदाप्रियः ॥ गौस्त्वमादिजगन्नाथोदीपोयंप्र
ति० ॥ दीपं ॥ सुरभिस्त्वंजगन्मातर्देविविष्णुपदेस्थिता ॥ सर्वदेवमयेग्रासंमयादत्तमिमंग्रस ॥ सौरभेय्यःसर्वहिताःपवित्राः
पुण्यराशयः ॥ प्रतिगृह्णंत्विमंग्रासंगावस्त्रैलोक्यमातरः ॥ गोग्रासनैवेद्यं ॥ फलतांबूलदक्षिणाःसमर्प्य ॥ पंचगावःसमुत्पन्ना
मथ्यमानेमहोदधौ ॥ तासांमध्येतुयानंदातस्यैदेव्यैनमोनमः ॥ नमस्कारः ॥ गावोममाग्रतःसंतुगावोमेसंतुपृष्ठतः ॥ गावो
मेहृदयेनित्यंगवांमध्येवसाम्यहं ॥ प्रदक्षिणाः ॥ हिंकृण्वतीवसुपत्नी० ॥ इतिपुष्पांजलिः ॥ गावोममाग्रतइतिसंप्रार्थ्यकुशाक्ष
तान्गृहीत्वागोपुच्छोदकेनतर्पयेत् ॥ गोदानांगत्वेनदेवर्षिपितृतर्पणंकरिष्ये ॥ ब्रह्मातृप्यतु विष्णुस्तृ० रुद्रस्तृ० शक्राद्यादेव
तास्तृप्यंतु० ऋषयस्तृ० मनवस्तृ० विश्वेदेवास्तृ० दिक्पालास्तृ० मरुतस्तृ० वसवस्तृ० रुद्रास्तृ० दितिपुत्रास्तृ० साध्यास्तृ०
मरुद्गणास्तृ० ग्रहास्तृ० नक्षत्राणितृ० योगास्तृ० राशयस्तृ० अश्विनौतृप्यतां० यक्षास्तृप्यंतु रक्षांसि० मातरः० नागास्तृ०
सरितः० द्रुमाः० तीर्थानि० जलदाः० नदाः० मनुष्याः० पिशाचाः० पशवः० दिव्यदानवाः० दिव्यादित्याः० योगि
न्यः० विद्याधराः० देवयोनयः० ओषधयः० दिग्गजाः० दिक्पालाः० अनिरुद्धाः० चलाः० जंतवः० स्थावराः० जंग
मास्तृप्यंतु ॥ अथोत्तरीयेणसनकादींस्तर्पयेत् ॥ सनकस्तृप्यतु सनंदनः सनातनः सनत्कुमारः कपिलः आसुरिः पंचशि
खाः बर्हिषदः ॥ यमंतर्पयामि धर्मराजं अंतकं वैवस्वतं कालं नीलं परमेष्ठिनं औदुंबरं दध्नं सर्वभूतक्षयं वृकोदरं चित्रगुप्तं
तर्पयामि ॥ अथप्राचीनावीतीस्वपितॄंस्तर्पयेत् ॥ ततःआयुर्मेतर्पयामि प्राणंमेइतियथालिंगमंगानिस्पृशेत् ॥ इमांगांरुद्रदैवत्यां
दोग्ध्रींसवत्सामव्यंगांसर्वाभरणभूषितांगंधाद्युपचारैःपूजितांकृतसंकल्पसिद्ध्यर्थमहाविष्णुप्रीत्यर्थंतुभ्यमहंसंप्रददे ॥ गौस्त्वा

स्यतुपुण्यंवर्धतांशांतिरस्तुपुष्टिरस्तुतुष्टिरस्तुवृद्धिरस्तुअविघ्नमस्तुआरोग्यमस्तुशिवंकर्मास्तुकर्मसमृद्धिरस्तुधर्मसमृद्धिरस्तु अहरहरभिवृद्धिरस्तुकल्याणाभ्युदयोस्तु ॥ यज्ञसाधनभूतायाविश्वस्याघौघनाशिनी ॥ विश्वरूपधरोदेवःप्रीयतामनयागवा ॥ अनेनरुद्रस्वरूपिणीगोप्रदानेनमहाविष्णुःप्रीयतां ॥ आगावोअग्मन्नितिवर्गपठंन्प्रदक्षिणांकुर्यात् ॥ स्वस्त्यस्तुदीर्घ० शिवाआपःसंतुसौमनस्यमस्तुअक्षतंचारिष्टंचास्तु ॥ दानस्यप्रतिष्ठासिद्ध्यर्थमिदंयथाशक्तिसुवर्णरुद्रदैवत्यंविष्णुस्वरूपिणेगोप्रतिग्रहीत्रेब्राह्मणायतुभ्यमहंसंप्रददे नमम ॥ विप्रोदेवस्यत्वेतिप्रतिगृह्य कइदंकस्माअदादितिकामस्तुतिंपठेत् ॥ ततोविप्रंप्रार्थयेत् ॥ त्वंसर्वदेवगणमंदिरसर्वभूतविश्वेश्वरत्रिपथगोदधिपर्वतानां ॥ तद्दानशक्तिशलटीकृतपापकोटिःप्राप्तोस्मिनिर्वृतिमतीवपरांनतोस्मि ॥ ततोभूरिदक्षिणांदत्वाकर्मेश्वरार्पणंकुर्यात् ॥ इतिसामान्यगोप्रदानविधिः ॥ ॥ छ ॥

## ॥ २९४ ॥ अथवृषभदानप्रयोगः ॥

श्रीः ॥ आचम्यदेशकालौनिर्दिश्यामुकगोत्रस्यामुकशर्मणोममसकलारिष्टनिरसनपूर्वकामुकफलसिद्ध्यर्थंवृषभदानंकरिष्ये तदंगतयाब्राह्मणपूजनंवृषपूजनंचक० ॥ प्रतिग्रहीतारंब्राह्मणंवृत्वाश्रीविष्णुस्वरूपिणेब्राह्मणायनमइदंपाद्यमित्यादिसंपूज्यततोवृषभंपूजयेत् ॥ तत्रादौवृषांगेन्यासः ॥ शिरोमध्येमहादेवंन्यसामि ललाटेमहादेवीं दक्षिणशृंगमूलेविष्णुं वामशृंगमूलेब्रह्माणंशृंगाग्रेसर्वतीर्थानि नासाग्रेषण्मुखं दंतेषुसर्ववायून् जिह्वायांवरुणं हुंकारेसरस्वतीं गंडयोर्यमं ओष्ठयोःसंध्याद्वयं ग्रीवायामिंद्रं कुक्षिदेशेरक्षांसि उरसिसाध्यान् चतुःपादेषुधर्मं खुरमध्येगंधर्वान् खुराग्रेषुपन्नगान् खुरपार्श्वेष्वप्सरसः पृष्ठेएकादशरुद्रान्सर्वसंधिषुवसून् श्रोणीतटेपितॄन् लांगूलेसोमं वालेष्वादित्यरश्मीन् गोमूत्रेगंगां उदरेपृथ्वीं रोमसुत्रयस्त्रिंशत्कोटि

देवान् इतिदेवतान्यासंकृत्वातस्यैवांगेषुमंत्रन्यासंकुर्यात् ॥ इषेत्वोर्जेत्वामूर्ध्नेनमः इमारुद्रायस्थिरधन्वनेशशांकाय नमस्तेरु द्रमन्यवेचक्रांगाय सहस्राणिसहस्रधाललाटाय विभ्राड्बृहत्पिबतुदक्षिणनेत्राय त्र्यंबकंयजामहेवामनेत्राय मानस्तोकेनासि कायै अवतत्यधनुःमुखाय नीलग्रीवद्वयंकंठाय मर्माणितेबाहुमूलाभ्यां समिधाग्निंबाहुभ्यां नमोवःकिरिकेभ्योहृदयाय हिर ण्यगर्भःसमनाभ्यै मीढुष्टमकट्यै मानोमहांतंऊरुभ्यां उदुत्यंजातजंघाभ्यां इमारुद्रायजानुभ्यां रक्षोहणंगुदाय वृष्णस्तेवृष्ण्यं लिंगाय ऋषभंमापुच्छाय त्रिपादूर्ध्वंखुरेभ्यः ॥ ॐ शिवस्त्वंष्टरिहागहिविभुःपोषउतत्मना ॥ यज्ञेयज्ञेनउदव ॥ वृषभोधुर्य एवस्यान्महादेवप्रियःसदा ॥ संप्रदानेनचैवास्यममशांतिकरोभवेत् ॥ भूर्भुवःस्वःरुद्रदैवत्यायवृषभायेदंपाद्यं ॥ शिवस्त्वष्टरि तिमंत्रःसर्वत्र ॥ गवामंगेषुतिष्ठंतिभुवनानिचतुर्दश ॥ यस्मात्तस्माच्छिवंमेस्यादिहलोकेपरत्रच ॥ अर्घ्यं ॥ धर्मस्त्वंवृषरूपेण जगदानंदकारक ॥ अष्टमूर्तेरधिष्ठानमतःशांतिंप्रयच्छमे ॥ आचमनीयं ॥ गावःसुरभयोनित्यंगावोगुग्गुलुसंनिभाः ॥ गावः प्रतिष्ठाभूतानांगावःशरणमुत्तमं ॥ स्नानं ॥ आच्छादनंगवेदद्यांसम्यक्शुद्धंसुशोभनं ॥ वृषभोवस्त्रदानेनप्रीयतांशंकरप्रियः ॥ वस्त्रं ॥ श्रीखंडंशीतलंदिव्यंसर्वसंतापहारकं ॥ कस्तूरीकुंकुमाढ्यंचचंदनंप्रतिगृह्यतां ॥ चंदनं ॥ अक्षताश्चसुरश्रेष्ठइत्यक्षता न् ॥ ततोलंकारान् श्रृंगयोःसुवर्णचरणेषुरजतंभालेआदर्शंसुवर्णंवा नेत्रयोरत्नद्वयंकंठेघंटांचामरंचपृष्ठेताम्रंपुच्छेमौक्तिकंविले पनार्थंकुंकुमकस्तूर्यादिप्रावरणार्थंपट्टकूलंइतिशक्त्यायथासंभवमर्पयेत् ॥ सर्वाभावेहिरण्यं ॥ मालतीचंपकादीनिमाल्यानिवृ षभेश्वर ॥ मयाहृतानिपूजार्थमंगीकुरुनमोस्तुते ॥ पुष्पाणि ॥ देवद्रुमरसोद्भूतंगोघृतेनसमन्वितं ॥ भक्त्यासमर्पयेतुभ्यंधूपं वृषभसत्तम ॥ धूपं ॥ आनंदकृत्सर्वलोकेदेवानांचसदाप्रियः ॥ सर्वांधकारनाशायदीपोयंप्रतिगृह्यतां ॥ दीपं ॥ आहारेण।

खिलालोकाजीवंतिप्रभवंतिच ॥ अतःसमर्पयेतुभ्यमाहारंवृषसत्तम ॥ नैवेद्यं ॥ तांबूलंदक्षिणांचसमर्प्य ॥ वर्षणाद्धर्म
कामानांवृषोलोकेनुगीयते ॥ तस्मात्पूरयमेकामान्धर्मांश्चवृषसत्तम ॥ मंत्रपुष्पं ॥ वृषोसिभगवन्धर्मश्चतुष्पादःप्रकीर्तितः ॥
नमामितमहंभक्त्यासमांरक्षतुसर्वतः ॥ नमस्कारं ॥ आगावोअग्मन्निितिप्रदक्षिणां ॥ ऋषभंमेतिपंचर्चस्यवृषभोनुष्टुबंत्यामहा
पंक्तिःउपस्थानेवि० ॥ इत्युपस्थाय ॥ धर्मस्त्वंवृषरूपेणजगदानंदकारक ॥ अष्टमूर्तेरधिष्ठानमतःपाहिसनातन ॥ इतिप्रार्थ्य
स्वयंप्राङ्मुखः प्रतिग्रहीतारमुदङ्मुखमुपवेश्यवृषस्यदक्षिणखुरंस्पृष्ट्वा ॥ स्वस्त्यस्तुदीर्घमायुःशांतिःपुष्टिस्तुष्टिश्चास्तु ॥ धर्मस्त्वं
वृषरूपेण० ॥ इमंवृषंरुद्रदैवतंयथाशक्त्यलंकृतंममामुकफलसिद्ध्यर्थममुकगोत्रायामुकशर्मणेमुकशाखिनेब्राह्मणायतुभ्यमहंसंप्र
ददेनमम इतिसकुशाक्षतोदकंतद्धस्तेक्षिपेत् ॥ ब्राह्मणोदेवस्यत्वेतितंप्रतिगृह्यदक्षिणखुरंस्पृष्ट्वाकइदंकस्माअदादितिमंत्रंपठेत् ॥
ततोदातासुवर्णंरजतंवायथाशक्तिदक्षिणात्वेनदत्वा ऋषभंमेतिपंचर्चेनवृषभंप्रदक्षिणीकृत्यब्राह्मणेननीयमानेवृषेशतपदानितं
मनुव्रज्यपुनःस्वस्थानमागत्य कर्मसंपूर्णतावाप्तयेब्राह्मणेभ्योदक्षिणांदद्यात् ॥ इतिवृषभदानविधिः ॥ ॥ छ ॥

## ॥ २९५ ॥ अथमहिषीदानप्रयोगः ॥

श्रीः ॥ देशकालोत्कीर्तनांतेऽमुकशर्मणोममापमृत्युनाशपूर्वकंपित्तज्वरादिपीडानिरासेनसद्यआरोग्यावाप्तिद्वारायमात्मकश्री
विष्णुप्रीतिकामोहंयमदैवत्यंमहिषीदानंकरिष्ये ॥ गणेशंसंपूज्याचार्यंवृणुयात् ॥ आचार्यःस्थंडिलकरणाद्यग्निप्रतिष्ठांतेग्नेरी
शान्यांगणानांत्वेतिगणपतिं यमायसोममितियमं परंमृत्योइतिमृत्युंचसंस्थाप्यषोडशोपचारैःसंपूज्यतदीशान्यांमहीद्यौरित्या
दिविधिनाकलशंसंस्थाप्यान्वादध्यात् ॥ चक्षुषीआज्येनेत्यंतेत्रप्रधानंगणपतिंयमंमृत्युंचतत्तन्मंत्रैःप्रत्येकमष्टोत्तरशतसंख्या

काभिराज्यप्लुततिलाहुतिभिः शेषेणस्विष्टकृतमित्यादिहोमशेषंसमाप्यकर्तातिलतैलेनयमंतर्पयेत् ॥ महिषीदानांगत्वेनापमृत्यु परिहारार्थंयमतर्पणंकरिष्ये ॥ यमंतर्पयामि धर्मराजं मृत्युं अंतकं वैवस्वतं कालं सर्वभूतक्षयं औदुंबरं दध्नं नीलं परमेष्ठि नं वृकोदरं चित्रं चित्रगुप्तंतर्पयामीति ॥ ततस्तैलोद्वर्तनपूर्वकंमहिषीमद्भिःप्रक्षाल्यदक्षिणाभिमुखींसंस्थाप्यालंकुर्यात् ॥ शृं गयोर्गौरमृदंकंठेसिंदूरं उदरेहरिद्रां शृंगयोःसुवर्णंखुरेषुरौप्यंकंठेघंटांकृष्णवस्त्रंचपृष्ठेरक्तवस्त्रंलांगूलेरौप्यंललाटेसुवर्णतिलकं कंठेपुष्पमालामित्यादि ततोमहिष्याःसमंतादष्टदिक्ष्वष्टौदीपान्संस्थाप्य पूर्वेलवणंआग्नेय्यांगुडंयाम्यांकार्पासंनैर्ऋत्यांनवनीतं पश्चिमेसप्तधान्यानिवायव्यांतंदुलान्उत्तरेकांचनंईशान्यांगमनार्थंचद्वारमितियथासंभवंस्थापयेत् ॥ ततोगोत्रोच्चारपूर्वंप्रति ग्रहीतारंवृत्वातदंगेयमंध्यायेत् ॥ महिषारूढंनृकपालहस्तंदंडायुधंभस्मसितांगयष्टिं ॥ उलूकचिह्नंनरमुंडमालंनिर्मांसदेहंरु धिरंपिबंतं ॥ असृग्वसाचर्चितकृष्णकायंकपींद्रपंचाननचर्मवस्त्रं ॥ बिभीतकस्थंत्वतिभीमरूपंकालंतवांगेविनियोजयिष्ये ॥ महाकालस्त्वमृषिरसिप्राणोत्क्रांतिशक्तिमानसिअतस्त्वांप्रतापिनंबहुमानयेएवंभूतस्त्वमिहागच्छेहतिष्ठपूजांगृहाणसुप्रसन्नोवर दोममापद्विनाशकोभवेतिब्राह्मणशरीरेयमंभावयित्वा ॥ भोभोकालजगद्भूतयममहिषवाहन ॥ दिगीशप्राणराजेंद्रदंडहस्तधनु र्धर ॥ ब्रह्माच्युतमहेशानांसेनाधीश्वरवल्लभ ॥ यज्ञभुग्दक्षिणेयस्त्वंसर्वभोगसुखावह ॥ गृह्णीष्वमहिषीदानंजीवितायममप्र भो ॥ पंचभूतात्मकेदेहेसप्तधातुसमन्विते ॥ विप्रस्यागत्यतिष्ठेहसंमुखोभवमेसदा ॥ ध्यानं ॥ यमायसोममित्यासनं ॥ तेनै वपाद्यं ॥ सुगंनःपंथामित्यर्घ्यं ॥ यमायमधुमत्तममित्याचमनीयं ॥ यस्मात्त्वंसर्वधर्माणांमंगलानांचमंगलं ॥ महाकालजग द्भूतधर्मराजनमोस्तुते ॥ स्नानं ॥ कामरूपकरालास्यकृतांतकरुणानिधे ॥ प्रेतराजशिरोरत्नसुखंदेहिनमोस्तुते ॥ इतिवस्त्रं ॥

देवदानवगंधर्वदक्षिणःसरितांपते ॥ सूर्यादिखेचराणांचजीवितेशनमोस्तुते ॥ इत्युपवीतं ॥ कालरूपकरालास्यमहादंष्ट्रसुर प्रिय ॥ शबलाशमयित्रेंद्रजीवितेशनमोस्तुते ॥ गंधं ॥ कृतांतधर्मराजेंद्रमृत्योंतकविमर्दम ॥ प्रलयाग्निसमाभासदक्षिणेशनमो स्तुते ॥ रक्तचंदनं ॥ धर्मराजकरालास्यपुण्यपापविमर्दन ॥ याम्येशमहिषारूढस्रजंचप्रतिगृह्यतां ॥ पुष्पमालां ॥ विद्युत्क पिशकेशाग्रकोकिलांजनसंनिभ ॥ दक्षिणेशसुरश्रेष्ठधूपोयंप्रतिगृह्यतां ॥ धूपं ॥ तप्तहाटककेशाग्रजटिलारक्तलोचन ॥ नंद्याव र्तकवद्वर्णश्राद्धदेवनमोस्तुते ॥ दीपं ॥ महाकालमहाबाहोजगत्प्राणविनाशन ॥ धर्मालयतपोराशेनैवेद्यंप्रतिगृह्यतां ॥ नैवे द्यंमाषान्नमामान्नंवा ॥ विप्रवर्यजगद्ध्वस्तकालांतकशरीरग ॥ कालरूपमहादेवधर्मराजनमोस्तुते ॥ इत्याच्छादनं ॥ शश्वदेति त्वयाज्ञप्तोधातादेवत्वदाज्ञया ॥ ब्रह्माच्युतमहेशेंद्रैःस्थीयतेचतवाज्ञया ॥ सर्वालंकारान् ॥ दिगंतरमहाराजसर्वभूतक्षयांत क ॥ शवारूढशवाधीशमांसशोणितभक्षक ॥ दंडहस्तपरंमृत्योधर्मराजनमोस्तुते ॥ नमस्कारः ॥ ब्राह्मणप्रार्थना ॥ प्रेतास्थिची वसंभारंदधच्चैवतुमस्तके ॥ पवित्रपुरुषांत्राणांशिरसांकृतभूषण ॥ विष्टपत्रयसंस्थानांजीवानांनाशकृत्प्रभो ॥ अलक्ष्यंसर्वभूता नांब्रह्माच्युतपिनाकिनां ॥ कश्यपात्रिवसिष्ठादिव्रतिनांपरमर्षिणां ॥ वराहगर्गसत्वानामलक्ष्योगणितैरपि ॥ अरूपस्त्वव्ययो नादिर्विदानंमोक्षवस्तुनः ॥ मदीयंजीवितंकालत्वमेवत्रातुमर्हसि ॥ अतोदानंकरिष्येहंमहिष्याःकरुणानिधे ॥ अनेनयमःप्रीय तां ॥ अथमहिषीपूजा ॥ नाममंत्रेणव्याहृतिभिश्चॐप्रेहिप्रेहिपथिभिरितिमंत्रेणमहिषींषोडशोपचारैःपूजयेत् ॥ अर्घ्येविशेषः ॥ अपमृत्युहरेदेविकालरात्रिस्वरूपिणि ॥ मांतुत्रायस्वमहिषिगृहाणार्घ्यंन० इत्यर्घ्यं ॥ महिष्यामुखेकार्पासबीजानिपिण्याकंच दत्वाप्रार्थयेत् ॥ शृंगतःकालरूपेत्वंमुखतोमृत्युरूपिणि ॥ गाधिपुत्रकृतेदेविअकालमरणापहे ॥ धर्मराजप्रियेदेविमहिषासुरमा

तृके ॥ यत्पुत्रोधर्मराजेनद्रष्टुंदानवराक्षसान् ॥ एकःशक्ततमोवीक्ष्यकृतंवाहनमात्मनः ॥ सात्वंप्रसीदकल्याणिमृत्योर्हृदयनंदि
नि ॥ विश्वामित्रकृतेदेविलोकोपकृतयेक्षितौ ॥ यज्ञसंसिद्धयेचात्रतस्यैमहिषितेनमः ॥ जननीमहिषस्यत्वंकालरूपेममप्रिये ॥
संदेहंहरदानान्मेमोक्षयस्वार्तिमागतं ॥ रक्तपुष्पस्रजारक्तवासोभिःकृतभूषणां ॥ लवणाद्युपहारस्थांसप्तधान्ययुतांतथा ॥
पिण्याकराशिसंभक्ष्यांयथाशक्त्याह्यलंकृतां ॥ महिषींधर्मराजायदास्यामिप्रीतिहेतवे ॥ ततोयमंप्रार्थयेत् ॥ राजात्वंसर्वधर्मा
णांजगत्संहारकारकः ॥ स्वदानपरिसंतुष्टःप्रयत्नाद्रक्षऋत्विजं ॥ प्राणदापानदाहेतिर्वर्चोदाव्यानदापरा ॥ आभिस्तुहेतिभि
र्धर्मजीवितंतोषणंपरं ॥ ऋत्विजंरक्षराजेंद्रधर्मोस्माकंप्रगृह्यतां ॥ ततोदाताप्राङ्मुखः ब्राह्मणमुदङ्मुखमवस्थाप्यकांस्यपात्रंकरे
धृत्वामहिष्याःपृष्ठदेशेदानंकुर्यात् ॥ अमुकगोत्रोमुकशर्माहं ॥ इंद्रादिलोकपालानांयाराज्यमहिषीशुभा ॥ महिषीदानमाहा
त्म्यात्सास्तुमेसर्वकामदा ॥ यमराजस्यमाहात्म्येयस्यायुःसुप्रतिष्ठितं ॥ महिषासुरस्यजननीसास्तुमेसर्वकामदा ॥ इमौमंत्रा
वुच्चार्य ॥ ( दानेमंत्रविशेषोयथा ॥ यद्वाहिष्ठंतदग्नयेबृहदितिमंत्रः ॥ तंमृत्युभयभीतंमांमरणात्त्वंसमुद्धर ॥ विप्रेंद्रवेदवेदां
गपवित्रकरुणाकर ॥ गृहाणमहिषींगृष्टिंसवस्त्रांस्वर्णभूषितां ॥ श्यामांसुनेत्रांसुशृंगीमंगैःसंपूर्णविग्रहां ॥ पयस्विनींसुशीलां
चदरिद्रतिमिरापहां ॥ हेमशृंगींरौप्यखुरांकांस्यघंटासमन्वितां ॥ रौप्यलांगूलसंयुक्तांताम्रदोहनसंयुतां ॥ समंताद्दीपसंयु
क्तांसप्तधान्यसमन्वितां ॥ महिषींवत्ससंयुक्तांसुशीलांचपयस्विनीं ॥ नीलवस्त्रावृतांचाहंदास्येमृत्युहरायच ॥ यमवाहनंम
हिषीमृत्युरूपेणसंस्थिता ॥ सर्वव्याधिहरानित्यमतःशांतिंप्रयच्छमे ॥ सरलंसजलंशृंगंधृत्वाविप्रकरेर्पयेत् ॥ कांस्यपात्रस्थि
तेपाणौदद्याद्दानंसदक्षिणं ॥ मृत्युरूपांगृहाणेमांमहिषींद्विजसत्तम ॥ मृत्योःसंत्राहिमांघोराद्गच्छत्वंयत्रकुत्रचित् ॥ ) अमु

कप्रवरगोत्रायामुकशाखिनेमुकशर्मणेब्राह्मणायइमांमहिषींसवत्सांस्वर्णशृंगींरौप्य[illegible]रांताम्रपात्रदोहनयुतांघंटाभरणोपेतांअ
ष्टौदिक्षुदीपयुतांलवणादिसप्तधान्योपेतांयमदैवत्यांतुभ्यमहंसंप्रददेनममेतिवदेत् ॥ देवस्यत्वा० ब्राह्मणःकइदंकस्माअदादि
तिपठेत् ॥ दानस्यप्रतिष्ठार्थंदक्षिणांदत्वातंप्रार्थयेत् ॥ स्वामिन्जगद्गुरोब्रह्मन्मदीयंयदुपार्जितं ॥ दुष्कृतंदुरितंमृत्युंबंधनंचा
र्जितंमया ॥ शत्रुजंविषजंरोगंशोकजंविरहादियत् ॥ पीडापमृत्युविघ्नानिगृहीत्वागम्यतांद्विज ॥ मृत्युरूपगृहाणेमांमहिषींद्वि
जसत्तम ॥ मृत्योश्चत्राहिमांघोराद्गच्छत्वंचस्वमाश्रमं ॥ ततोबहिर्द्विजंगमयित्वाशांतापृथिवीतिपथिजलंसिंचेत् ॥ पुनःपूर्वव
त्तैलेनयमतर्पणंकुर्यात् ॥ ततःकांस्यपात्रस्थंनिरीक्षिताज्यंदत्वा ॥ गोभूतिलहिरण्याज्यवासोधान्यगुडानिच ॥ रौप्यंलवणमि
त्याहुर्दशदानान्यनुक्रमादितिदशदानानिदत्वाआचार्यायदक्षिणामन्येभ्यश्चभूयसींदत्वा ॥ अनेनयथाशक्त्यनुष्ठितेनमहिषी
दानाख्येनकर्मणाश्रीपरमेश्वरःप्रीयतां ॥ इतिमहिषीदानप्रयोगः ॥ ॥ छ ॥ ॥ छ ॥

## ॥ २९६ ॥ अथमेषदानप्रयोगः ॥

श्री ॥ विधानपंक्तौ चंद्रानुकूल्यदिनेविधिज्ञानाहूयदेशकालौनिर्दिश्यामुकगोत्रस्यामुकशर्मणोममपूर्वोपार्जितदुरितपापोदर्क
जन्यदोषत्रयकलुषितामयोत्पन्नापमृत्युपरिहारार्थंतनुभृत्कर्मसाक्षिरविनंदनधर्मराजप्रीतिद्वाराक्षिप्रारोग्यावासयेश्रीपरमे०स
परिकरंमेषदानंकरिष्यइतिसंकल्प्यगणेशंसंपूज्यआचार्यंवृत्वाशुद्धाभिरद्भिर्मेषंप्रक्षाल्य ललाटेगोरोचनं शृंगयोर्गौरमृदं कंठे
सिंदूरंघंटांच उदरेहरिद्रालेपनं कंठेचित्रवस्त्रं पृष्ठेरक्तवस्त्रं शृंगयोर्हेम खुरेषुरौप्यं गंधजपाकुसुमादिरक्तमाल्यमालाभिरलंकृ
त्यतत्पुरतआहारार्थंकोमलपल्लवान्निक्षिप्याग्नेय्यभिमुखंस्थापयेत् ॥ ततआचार्योमहीद्यौरित्यादिविधिनाकलशत्रयमेकंवासं

स्थाप्यतत्रअग्निंदूतमित्यग्निं यमायसोममितियमं त्र्यंबकमितिमृत्युंचसंस्थाप्यआवाहनादिषोडशोपचारैःसंपूज्य तत्पश्चाद
ग्निंप्रतिष्ठाप्यध्यात्वा ग्रहमंडलेग्रहानावाह्यसंपूज्यान्वादध्यात् ॥ ग्रहोत्कीर्तनांते प्रधानंअग्निंयमंमृत्युंचतत्तन्मंत्रेणप्रत्येकमष्ट
शतमष्टाविंशतिभिर्वाज्याहुतिभिःव्याहृतिभिस्तिलाज्याहुतिभिःशेषेणस्विष्टकृतमित्यादिहोमांतेहोमशेषंसमाप्य मेषंपूजयेत् ॥
यथा ॥ त्वंछागहव्यवाहस्यवाहनार्थंप्रकल्पितः ॥ हव्यवाहस्तुदेवानांमुखमग्नेप्रकल्पितं ॥ तवपूजनतोदेवास्तुष्टाःसर्वेभवं
तिहि ॥ अतस्त्वांपूजयिष्यामिक्षिप्रारोग्यंप्रयच्छमे ॥ इतिमंत्रेणावाह्यगंधादिभिःसंपूज्यांगपूजांकुर्यात् ॥ मेषायनमःपादौपू
जयामि अग्निवाहनाय जानुनीपू. उरणायकटिंपू. छागायउदरंपू. चंचलग्रीवायकंठंपू. ऊर्णवतेहृदयंपू. दीर्घकूर्चायमुखंपू.
दृढशीर्ष्णेशिरःपू. शक्तिधरायसर्वांगंपूजयामि ॥ धूपादिशेषोपचारैःसंपूज्य ॥ मेषपरितोदीपान्सप्तधान्यानिचस्थापयेत् ॥
कर्ताप्राङ्मुखःउदङ्मुखंप्रतिग्रहीतारंपूजयेत् ॥ दानमंत्रः ॥ विप्रेंद्रवेदवेदांगपवित्रकरुणाकर ॥ गृहाणमेषंसुदृढंसुंदरंस्वर्णभू
षितं ॥ श्यामंसुनेत्रंसुमुखमंगैःसंपूर्णविग्रहं ॥ हेमशृंगंरौप्यखुरंकांस्यघंटासमन्वितं ॥ समंताद्दीपसंयुक्तंसप्तधान्यसमन्वितं ॥
सुसंभारवृतंरम्यंसालंकारंसदक्षिणं ॥ चित्रवस्त्रावृतंचाहंदास्येमृत्यूपशांतये ॥ कृशानुवाहनोमेषोमृत्युरूपेणसंस्थितः ॥ सर्व
व्याधिहरोनित्यमतःशांतिंप्रयच्छमे ॥ विप्रायवेदविदुषेइतिमंत्रेणसरत्नजलकरःस्तननाभिमध्यभागंस्पृष्ट्वाविप्रकरेर्पयेत् ॥ क
र्त्रामूर्ध्निमेषंधृत्वादद्यात् ॥ मृत्युरूपंगृहाणेमंमेषंत्वंविप्रसत्तम ॥ मृत्योःसंत्राहिमांघोराद्गच्छत्वंयत्रकुत्रचित् ॥ इतिसमेषंद्विजं
गमयेत् पथिचोदकंनिषिंचेत् ॥ मेषप्रतिग्रहीतृब्राह्मणमुखावलोकनंवर्जयेत् ॥ ततोयमतर्पणंकुर्यात् ॥ यमंतर्पयामि मृत्युं
अंतकं वैवस्वतं कालं सर्वभूतक्षयं औदुंबरं दध्नं नीलं परमेष्ठिनं वृकोदरं चित्रं चित्रगुप्तं तर्पयामीतिसंतर्प्य रूपंरूपमिति

मंत्रेणनिरीक्षितमाज्यंदत्वा शक्तौ गोभूतिलहिरण्याज्यवासोधान्यगुडरौप्यलवणेतिदशदानानिकार्याणि ॥ संभवेमृत्यौलोह दंडंदद्यात् ॥ यथाशक्तिदक्षिणामन्येभ्योदत्वाविप्रैर्वैदिकपौराणमंत्रैःस्थापितकलशोदकेनाभिषिक्तोयजमानस्तेभ्यःश्रेयःसंपा द्य देवताविसर्जनादिकृत्वाकर्मेश्वरार्पणंकुर्यात् ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥

## ॥ २९७ ॥ अथग्रहणशांतिः ॥

श्री ॥ मात्स्ये ॥ होरायांग्रस्यतेयस्यनक्षत्रेवानिशाकरः ॥ प्राणसंदेहमाप्नोतिसवामरणमृच्छति ॥ यस्यत्रिजन्मनक्षत्रेग्रस्येतेश शिभास्करौ ॥ तज्जनानांभवेत्पीडायेजनाःशांतिवर्जिताः ॥ यस्यराशिंसमासाद्यभवेद्ग्रहणसंभवः ॥ तस्यस्नानंप्रवक्ष्यामिमंत्रौ षधिसमन्वितं ॥ चंद्रोपरागंसंप्राप्यकृत्वाब्राह्मणवाचनं ॥ संपूज्यचतुरोविप्रान्शुक्लमाल्यानुलेपनैः ॥ पूर्वमेवोपरागस्यसमा नीयौषधादिकं ॥ स्थापयेच्चतुरःकुंभानग्रतःसागरानिव ॥ गजाश्वरथ्यावल्मीकसंगमाद्ध्रदगोकुलात् ॥ राजद्वारप्रदेशाच्चमृ दमानीयनिक्षिपेत् ॥ पंचगव्यंपंचरत्नंपंचत्वक्पंचपल्लवं ॥ रोचनंपद्मकंशंखंकुंकुमंरक्तचंदनं ॥ शुक्तिस्फटिकतीर्थांबुसितसर्ष पगुग्गुलून् ॥ मधूकंदेवदारुंचविष्णुक्रांतांशतावरीं ॥ बलांचसहदेवींचनिशाद्वितयमेवच ॥ एतत्सर्वंविनिक्षिप्यकुंभेष्वावाह येत्सुरान् ॥ सर्वेसमुद्राःसरितस्तीर्थानिजलदानदाः ॥ आयांतुयजमानस्यदुरितक्षयकारकाः ॥ गंगेचयमुनेचैवेति ॥ योसौव ज्रधरोदेवआदित्यानांप्रभुर्मतः ॥ सहस्रनयनश्चंद्रोग्रहपीडांव्यपोहतु ॥ मुखंयःसर्वदेवानांसप्तार्चिरमितद्युतिः ॥ चंद्रोपराग संभूतामग्निःपीडां० ॥ कर्मसाक्षीतुलोकानांधर्मोमहिषवाहनः ॥ यमश्चंद्रोपरागोत्थांग्रहपीडां० ॥ रक्षोगणाधिपःसाक्षान्नी लांजनसमप्रभः ॥ खड्गहस्तोतिभीमश्चग्रह० ॥ नागपाशधरोदेवःसदामकरवाहनः ॥ चंद्रोपरागकलुषंवरुणोमेव्यपोहतु ॥

प्राणरूपोहिलोकानांसदाकृष्णमृगप्रियः ॥ वायुश्चंद्रोपरागोत्थांग्रह० ॥ योसौनिधिपतिर्देवःखड्गशूलगदाधरः ॥ चंद्रोपराग दुरितंधनदोमेव्यपोहतु ॥ योसाविंदुधरोदेवःपिनाकीवृषवाहनः ॥ चंद्रोपरागपापानिनिवारयतुशंकरः ॥ त्रैलोक्येयानिभू तानिस्थावराणिचराणिच ॥ ब्रह्मविष्ण्वर्करुद्राश्चदहंतुममपातकं ॥ एवमावाहयेत्कुंभान्मंत्रैरेभिश्चवारुणैः ॥ एतानेवतथामं त्रान्स्वर्णपट्टेविलेखयेत् ॥ ताम्रपट्टेथवालिख्यनववस्त्रेतथैवच ॥ मस्तकेयजमानस्यनिदध्युस्तेद्विजोत्तमाः ॥ कलशान्द्रव्यसं युक्तान्नानारूपसमन्वितान् ॥ गृहीत्वास्थापयेद्रुद्रंभद्रपीठोपरिस्थिते ॥ पूर्वोक्तैरेवमंत्रैश्चयजमानेद्विजोत्तमाः ॥ अभिषेकंततःकु र्युर्मंत्रैर्वारुणसूक्तकैः ॥ ततःशुक्लांबरधरःशुक्लमाल्यानुलेपनः ॥ आचार्यंवरयेत्पश्चात्स्वर्णपट्टंनिवेदयेत् ॥ आचार्येदक्षिणांद द्याद्गोदानंचस्वशक्तितः ॥ होमंचैवप्रकुर्वीततिलैर्व्याहृतिभिस्तथा ॥ निवृत्तेग्रहणेसर्वब्राह्मणेभ्योविशेषतः ॥ दानंचशक्तितो दद्याद्यदीच्छेदात्मनोहितं ॥ सूर्यग्रहेसूर्यनामयुक्तान्मंत्रांश्चकीर्तयेत् ॥ अनेनविधिनायस्तुग्रहणेस्नानमाचरेत् ॥ नतस्यग्रहणे दोषःकदाचिदपिजायते ॥ इतिग्रहणशांतिः ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥

## ॥ २९८ ॥ अथग्रहणेदानादि ॥

श्रीः ॥ तत्रग्रहस्पर्शकालेस्नानंमध्येहोमःसुरार्चनंश्राद्धंचमुच्यमानेदानंमुक्तेस्नानमितिक्रमः ॥ तत्रस्नानविधिर्होमश्चोपरिष्टा न्निर्दिष्टएव ॥ पूजाश्राद्धादिनित्यवत् ॥ ग्रहणमध्येपिकालेसंध्योपासनंकार्यं ॥ अत्रगोभूहिरण्यधान्यादिदानंमहाफलं ॥ अनिष्टेग्रहणेगर्गाद्युक्ताशांतिःकार्या ॥ अथवाबिंबदानंकार्यंतद्यथा ॥ चंद्रग्रहेरजतमयंचंद्रबिंबंसुवर्णमयंनागबिंबंचकृत्वा सूर्यग्र हेसौवर्णसूर्यबिंबंनागबिंबंचकृत्वाघृतपूर्णेताम्रपात्रेकांस्यपात्रेवानिधायतिलवस्त्रदक्षिणासाहित्यंसंपाद्य ॥ अमुकगोत्रस्यअ

मुकशर्मणोममजन्मराशिजन्मनक्षत्रस्थितामुकग्रहणसूचितसर्वानिष्टप्रशांतिपूर्वकमेकादशस्थानस्थितग्रहणसूचितशुभफलावाप्तये बिंबदानंकरिष्यइतिसंकल्प्यसूर्यचंद्रराहुंचध्यात्वानमस्कृत्य ॥ तमोमयमहाभीमसोमसूर्यविमर्दन ॥ हेमताराप्रदानेनममशांतिप्रदोभव ॥ विधुंतुदनमस्तुभ्यंसिंहिकानंदनाच्युत ॥ दानेनानेननागस्यरक्षमांवेधजाद्भयादितिमंत्रमुच्चार्य इदंसौवर्णराहुबिंबंनागंसौवर्णरविबिंबंराजतंचंद्रबिंबंवाघृतपूर्णकांस्यपात्रनिहितं यथाशक्तितिलवस्त्रदक्षिणासहितंग्रहणसूचितारिष्टविनाशार्थंशुभफलप्राप्त्यर्थंचतुभ्यमहंसंप्रददेइतिदानवाक्येनपूजितब्राह्मणायदद्यात् ॥ पूर्वसंकल्पितस्यद्रव्यस्यग्रहणोत्तरंदानेतद्द्विगुणंदेयंभवति ॥ इतिग्रहणेदानादिविधिः ॥ ॥ छ ॥ ॥ छ ॥

## ॥ २९९ ॥ अथग्रहणेपुरश्चरणविधिः ॥

श्रीः ॥ स्पर्शकालात्पूर्वंस्नात्वाअमुकगोत्रोऽमुकशर्माहंराहुग्रस्तेदिवाकरेनिशाकरेवामुकदेवतायाअमुकमंत्रसिद्धिकामोग्रासादिमुक्तिपर्यंतममुकमंत्रस्यजपरूपंपुरश्चरणंकरिष्ये इतिसंकल्पंकृत्वाआसनबंधन्यासादिकंचस्पर्शात्पूर्वमेवविधायस्पर्शादिमोक्षपर्यंतंमूलमंत्रजपंकुर्यात् ॥ ततःपरदिनेस्नानादिनित्यकृत्यंविधायअमुकमंत्रस्यकृतैतद्ग्रहणकालिकामुकसंख्याकपुरश्चरणजपसांगतार्थंतद्दशांशहोमतद्दशांशतर्पणतद्दशांशमार्जनतद्दशांशब्राह्मणभोजनानिकरिष्येइतिसंकल्प्य होमादिकंतत्तच्चतुर्गुणद्विगुणान्यतरजपंवाकुर्यात् ॥ होमांतेतर्पणंतु मूलमंत्रमुच्चार्यतदंतेद्वितीयांतंमंत्रदेवतानामोच्चार्यअमुकांदेवतामहंतर्पयामिनमःइतियवादियुक्तजलांजलिभिस्तर्पणंहोमदशांशेनकार्यं ॥ एवंनमोंतंमूलमंत्रमुक्त्वाअमुकांदेवतामभिषिंचाम्यनेनेत्युच्चार्यजलेनस्वमूर्ध्निअभिषिंचेदितिमार्जनंतर्पणदशांशेनकार्यं ॥ मार्जनदशांशेनब्राह्मणभोजनं ॥ एवंजपहोमतर्पणमार्जनविप्रभोजना

तमकपंचप्रकारंपुरश्चरणं ॥ तर्पणाद्यसंभवेतत्तत्संख्याचतुर्गुणोजपएवकार्यः ॥ ग्रहणकालेचतत्रोरितःपुत्रादिरमुकशर्मणोमुक गोत्रस्यामुकग्रहणस्पर्शस्नानजनितश्रेयःप्राप्त्यर्थंस्पर्शस्नानंकरिष्यइत्यादिसंकल्पपूर्वकंतदीयस्नानदानादिकंकुर्यात् ॥ पुरश्चर णमकुर्वद्भिरपिगुरूपदिष्टःस्वस्वेष्टदेवतामंत्रजपोगायत्रीजपश्चावश्यंग्रहणेकार्योन्यथामंत्रमालिन्यं ॥ अयंचग्रहणेपुरश्चरणप्र कारोग्रस्तोदयेग्रस्तास्तेचनसंभवति ॥ इतिधर्मसिंधूक्तःपुरश्चरणविधिः ॥ ॥ छ ॥ ॥ छ ॥

## ॥ ३०० ॥ अथगायत्रीपुरश्चरणप्रयोगः ॥

श्रीः ॥ देशकालौसंकीर्त्यकरिष्यमाणगायत्रीपुरश्चरणंधिकारसिद्ध्यर्थंकृच्छ्रत्रयममुकप्रत्याम्नायेनाहमाचरिष्यइतिसंकल्प्यहो मादिप्रत्याम्नायविधिनाकृच्छ्राण्यनुष्ठायअमुकशर्मणोममगायत्रीपुरश्चरणेनेनकृच्छ्रत्रयानुष्ठानेनाधिकारसिद्धिरस्त्वितिविप्रा न्वदेत् ॥ विप्राअधिकारसिद्धिरस्त्वितिब्रूयुः ॥ ततःकरिष्यमाणपुरश्चरणांगत्वेनविहितंगायत्रीजपादिकरिष्येइतिसंकल्प्य स्वयंविप्रद्वारावाकुर्यात् ॥ तद्यथा ॥ सप्रणवव्याहृतिगायत्र्याअयुतंजप्त्वा आपोहिष्ठेतिसूक्तंएतोन्विंद्रमितितिस्रःऋतंचेति सूक्तंस्वस्तिनइत्याद्याःस्वस्तिमतीः स्वादिष्ठयेत्याद्याःपावमानीश्चसर्वाःप्रत्येकंदशवारंस्वयमन्यद्वारावाजप्त्वा तत्सवितुरित्यस्या चार्यमृषिंविश्वामित्रंतर्पयामि गायत्रीछंदस्तर्प० सवितारंदेवतांतर्प० इतितर्पणंकृत्वारुद्रंनमस्कृत्यकद्रुद्रायेत्यादीनिरुद्रसूक्ता निजपेत् ॥ ततोदिनांतरेदेशकालौसंकीर्त्यममसकलपापक्षयद्वाराश्रीपरमेश्वरप्रीत्यर्थंचतुर्विंशतिलक्षात्मकगायत्रीपुरश्चरणंस्व यंविप्रद्वारावाकरिष्ये ॥ तदंगत्वेनस्वस्तिवाचनंमातृकापूजनंनांदीश्राद्धंजपकर्तृवरणंचकरिष्यइतिसंकल्पः ॥ संकल्पस्यापिऋ त्विक्कर्तृत्वेमुकशर्मणोयजमानस्यसकलपापक्षयेत्यादियजमानानुज्ञयाकरिष्ये ॥ एवंपूर्वत्रापिसंकल्पऊह्यः ॥ नांदीश्राद्धांतेस

वितापीयतामिति ॥ गायत्रीपुरश्चरणेजपकर्तारंत्वांवृणेइतिविप्रमेकैकंवृत्वावस्त्रादिभिःपूजयेत् ॥ अथनित्यकर्म ॥ एकैको विप्रःस्वयंवाकुशाद्यासनोपविष्टआचम्यपवित्रपाणिःप्राणानायम्यदेवताःप्रार्थयेत् ॥ सूर्यःसोमोयमःकालःसंध्येभूतान्यहःक्ष पाः ॥ पवमानोदिक्पतिर्भूराकाशंखेचरामराः ॥ ब्रह्मशासनमास्थायकल्पध्वमिहसंनिधिमिति ॥ ततोदेशकालौसंकीर्त्यप्रा त्यहिकजपंसंकल्प्य गुरवेनमः गणपतये० दुर्गायै० मातृभ्यो० इतिनत्वा त्रिःप्राणानायम्य तत्सवितुरितिगायत्र्याविश्वा मित्रऋषिःसवितादेवतागायत्रीछंदःजपेवि० ॥ विश्वामित्रऋषयेनमःशिरसि गायत्रीछंदसेनमोमुखे सवितृदेवतायैनमोहृ दि इतिन्यस्य तत्सवितुरंगुष्ठाभ्यां० वरेण्यंतर्जनी० भर्गोदेवस्यमध्यमा० धीमह्यनामिका० धियोयोनःकनिष्ठिकाभ्यां०प्रचो दयात्करतलकरपृष्ठाभ्यांनमइतिकरन्यासंकृत्वैवंहृदयादिषडंगन्यासंकुर्यात् ॥ पूर्वोक्तरीत्यासंस्कृतांजपमालांपात्रेनिधायसं प्रोक्ष्य ॐ महामायेमहामालेसर्वशक्तिस्वरूपिणि ॥ चतुर्वर्गस्त्वयिन्यस्तस्तस्मान्मांसिद्धिदाभवेतिप्रार्थ्य ॐ अविघ्नंकुरुमाले त्वंइतितामादायमंत्रदेवतांसवितारंध्यायन्हृदयेमालांधारयन्मंत्रार्थंस्मरन्मध्यंदिनावधिजपेत् ॥ अतित्वरायांसार्धत्रिप्रहरा वधि ॥ जपांतेपुनःप्रणवमुक्त्वा ॥ त्वंमालेसर्वदेवानांप्रीतिदाशुभदाभव ॥ शिवंकुरुष्वमेभद्रेयशोवीर्यंचसर्वदा ॥ इतिमालांशि रसिनिधायत्रिःप्राणानायम्यन्यासत्रयंकृत्वाजपस्येश्वरार्पणंकुर्यात् ॥ प्रत्यहंसमानसंख्यएवजपोनतुन्यूनाधिकः ॥ एवंपुरश्च रणजपसमाप्तौहोमः ॥ पुरश्चरणसांगतासिद्ध्यर्थंहोमविधिंकरिष्यइतिसंकल्प्याग्निंप्रतिष्ठाप्यपीठेसूर्यादिनवग्रहपूजादिकलश स्थापनांतेअन्वादध्यात् ॥ चक्षुषीआज्येनेत्यंतेग्रहपीठदेवतान्वाधानंअर्कादिसमिच्चर्वाहुतिभिःकृत्वा प्रधानदेवतांसवितारंच तुर्विंशतिसहस्रतिलाहुतिभिःत्रिसहस्रसंख्याकाभिःपायसाहुतिभिर्घृतमिश्रतिलाहुतिभिर्दूर्वाहुतिभिःक्षीरद्रुमसमिदाहुतिभि

श्च शेषेणस्विष्टकृतमित्यादिचरुपायसतिलैःसहाज्यस्यपर्यग्निकरणादि आज्यभागांतेइदंहवनीयद्रव्यंअन्वाधानोक्तदेवताभ्यो स्तुनममेतियजमानस्त्यागंकुर्यात् ॥ होमेसप्रणवव्याहृतिरहितास्वहांतागायत्री दूर्वात्रयस्यैकाहुतिः दूर्वासमिधांदधिमध्वाज्यांजनं स्विष्टकृदादिबलिदानांतेसमुद्रज्येष्ठाइत्यादिभिर्यजमानाभिषेकः प्रतिलक्षंसुवर्णनिष्कत्रयंतदर्धवाशक्त्यावादक्षिणा ॥ होमांतेजलेदेवंसवितारंसंपूज्यहोमसंख्यादशांशेन २४०० गायत्र्यंतेसवितारंतर्पयामीत्युक्त्वातर्पणंकार्यं ॥ तर्पणदशांशेन २४० गायत्र्यंतेआत्मानमभिषिंचामिनमइतिमूर्ध्न्यभिषेकः होमतर्पणाभिषेकाणांमध्येयदेवनसंभवतितत्स्थानेतत्तद्द्विगुणोजपःकार्यः ॥ अभिषेकसंख्यादशांशेनाधिकंवाविप्रभोजनं ॥ पुरश्चरणंपूर्णमस्त्विवतिविप्रान्वाचयित्वेश्वरार्पणंकार्यं ॥ प्रत्यहंयज्जाग्रतइतिशिवसंकल्पमंत्रस्यत्रिःपाठः ॥ कर्ताब्राह्मणैःसहहविष्याशीसत्यवागधःशायीपरिगृहीतभूप्रदेशानतिचारीच भवेत् ॥ इत्यनंतदेवीयानुसारेणचतुर्विंचतिलक्षपुरश्चरणप्रयोगः ॥ ऋग्विधानेतु ॥ मध्याह्नेमितभुङ्मौनीत्रिःस्नानार्चनतत्परः ॥ लक्षत्रयंजपेद्धीमानितित्रिलक्षंपुरश्चरणमुक्तं ॥ जपशतांशस्त्रिसहस्रंहोमः ॥ कलौचतुर्गुणंप्रोक्तमितिपक्षेद्वादशलक्षजपः द्वादशसहस्रहोमइत्याद्यूह्यं ॥ विष्णुशयनमासेषुपुरश्चरणंनकार्यं ॥ तीर्थादौशीघ्रंसिद्धिः ॥ बिल्ववृक्षाश्रयेणजपेएकाहात्सिद्धिरितिसर्वमंत्रप्रक्रिया ॥ इतिगायत्रीपुरश्चरणं ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥

## ॥ ३०१॥ अथगणपत्यथर्वशीर्षपुरश्चरणं ॥

श्रीः॥ कर्ताआचम्यप्राणानायम्यदेशकालाद्युल्लिख्यममश्रीगणपतिप्रसादसिद्ध्यामुकफलावाप्तयेस्वयंब्राह्मणद्वारावामुकसहस्रा

दिसंख्यात्मकंगणपत्यथर्वशीर्षपुरश्चरणंकरिष्यइतिसंकल्प्य निर्विघ्नतासिद्ध्यंगणपतिंसंपूज्यभूशुद्ध्यादिनात्मानंपावयित्वा ॥ अस्यैकाक्षरगणपतिमंत्रस्य गणकऋषिः निचृद्गायत्रीछंदः गणपतिर्देवता गंबीजं ॐ शक्तिः गणपतिप्रीत्यर्थेन्यासेपूजनेजपे चविनियोगः ॥ गणकऋषयेनमः शिरसि निचृद्गायत्रीछंदसेनमोमुखे गणपतिर्देवतायैनमोहृदये गंबीजायनमोगुह्ये ॐ शक्तयेनमःपादयोः ॥ ॐ गांअंगुष्ठाभ्यांनमः गींतर्जनीभ्यां. गूंमध्यमाभ्यां. गैंअनामिकाभ्यां. गौंकनिष्ठिकाभ्यां. गःकरतलकरपृष्ठाभ्यां. ॥ एवंहृदयादिषडंगंविधायपुरुषसूक्तन्यासकलशपूजादिकुर्यात् ॥ गजवदनमचिंत्यं० इतिध्यात्वा ॐ एकदंताय विद्महे० गंगणपतयेनमइतिमंत्रेणषोडशोपचारैर्गणपतिमभ्यर्च्यक्षमाप्य जपंसंकल्प्यनिर्दिष्टप्रकारेणन्यासादिविधायमूलेनाष्टवारंप्राणायामंकृत्वा गणपतिंध्यात्वा मानसैःपंचोपचारैःसंपूज्य ॥ मानसपूजेत्थं ॥ लंपृथिव्यात्मनेगंधतन्मात्रप्रकृत्यात्मनेएकाक्षरगणपतयेनमः कनिष्ठिकाभ्यांचंदनंपरिकल्पयामि ॥ एवंसर्वत्र ॥ हंआकाशात्मनेशब्दतन्मात्रप्रकृ० तर्जन्यंगुष्ठाभ्यांपुष्पंपरि० यंवाय्वात्मनेस्पर्शतन्मात्रप्रकृ० तर्जन्यंगुष्ठाभ्यांधूपंपरि० रंअग्न्यात्मनेरूपतन्मात्रप्रकृ० मध्यमांगुष्ठाभ्यांदीपंपरि० ॥ वंअमृतात्मनेरसतन्मात्रप्रकृ० अनामिकांगुष्ठाभ्यांनैवेद्यंपरि० ॥ संसर्वात्मनेसर्वतन्मात्रप्रकृ० सर्वपदार्थान्परि०॥ ततोमालांमूलेनत्रिःप्रोक्ष्य ॥ मांमालेमहामाये० ॐ ह्रींसिद्ध्यैनमइतिमालांप्रार्थ्य ॐ गंअविघ्नंकुरुमालेत्वंजपकालेसदामम ॥ त्वंमूलंसर्वमंत्राणामिष्टसिद्धिकरीभव ॥ एकाक्षरगणपतिमंत्रं १०८ जप्त्वापुनःपूर्ववन्न्यासादिकृत्वा गुह्यातिगुह्य० इतिजपं निवेद्य त्वंमालेसर्वदेवानामितिमालांशिरसिनिधायअथर्वशीर्षंशतवारंविवक्षितसंख्ययावाजप्त्वांतेजपंनिवेद्यपुनःपूर्ववन्मानसैःपंचोपचारैःपूजयेत् ॥ जपादावथर्वशीर्षमित्यादिफलश्रुतेःप्रत्यावृत्तिनावृत्तिःकिंत्वंतेसकृदेव ॥ इतिजपविधिः ॥

## ॥ २०८ ॥ गाणपत्यथर्वशीर्षहवनविधिः ॥

श्रीः ॥ आचम्यप्राणानायम्यदेशकालोत्कीर्तनांतेश्रीगणपतिप्रसादसिद्ध्यायुरारोग्यैश्वर्यामुकफलावाप्तयइत्यादियथोद्दिष्टमु
क्त्वामुकसंख्याकमथर्वशीर्षजपंतद्दशांशेनहवनंतद्दशांशेनतर्पणंतद्दशांशेनमार्जनमेवंपुरश्चरणंकरिष्यइतिसंकल्प्यगणपतिपूज
नस्वस्तिवाचनाद्याचार्यवरणांतंकुर्यात् ॥ आचार्यःकर्मसंकल्प्यप्रादेशकरणांतेऽग्न्युत्तारणपूर्वकप्राणप्रतिष्ठादिनासौवर्णींगणपति
प्रतिमांसंस्कृत्यपूर्वभागेसर्वतोभद्रेमहीद्यौरित्यादिविधिनास्थापितकलशोपरिगणानांत्वेतिसंस्थाप्यरक्तवस्त्रगंधपुष्पादिभिःसं
पूज्य तत्पश्चिमतःस्थंडिलेऽग्निंप्रतिष्ठाप्यध्यात्वा सग्रहपक्षेईशान्यांग्रहान्वरुणंचसंपूज्यान्वादध्यात् ॥ सग्रहकरणपक्षेविवक्षित
संख्ययाग्रहोत्कीर्तनांते प्रधानंश्रीगणपतिंअथर्वशीर्षामुकावृत्तिभिः प्रतिखंडंदूर्वांकुर-लाज-मोदक-साज्यसमिदाद्यन्यतमामु
कद्रव्येणशेषेणेत्याज्यभागांतेद्रव्यंत्यक्त्वावदानधर्मेणजुहुयात् ॥ खंडमंत्रविभागः ॥ तत्रादौशांति ॐ भद्रंकर्णेभिः० स्वस्ति
नइंद्रो० ॥ तन्मामवतु० ॥ अथगणेशाथर्वशीर्षव्याख्यास्यामः ॥ ॐ नमस्तेगणपतये ॥ त्वमेवप्रत्यक्षंतत्त्वमसि ॥ त्वमेवके
वलंकर्तासि ॥ त्वमेवकेवलंधर्तासिस्वाहा ॥ १ ॥ अवत्वंमां ॥ त्वमेवकेवलंहर्तासि ॥ त्वमेवसर्वंखल्विदंब्रह्मासि ॥ त्वंसाक्षादा
त्मासिनित्यं ॥ ऋतंवच्मि ॥ सत्यंवच्मिस्वाहा ॥ २ ॥ अवत्वंमां ॥ अवतुवक्तारं ॥ अवश्रोतारं ॥ अवदारं ॥ अवधातारं ॥
अवानूचानमवशिष्यं ॥ अवपश्चात्तात् ॥ अवपुरस्तात् ॥ अवोत्तरात्तात् ॥ अवदक्षिणात्तात् ॥ अवचोर्ध्वात्तात् ॥
अवाधरात्तात् ॥ सर्वतोमांपाहिपाहिसमंतात्स्वाहा ॥ ३ ॥ त्वंवाङ्मयस्त्वंचिन्मयः ॥ त्वमानंदमयस्त्वंब्रह्ममयः ॥
त्वंसच्चिदानंदाद्वितीयोसिस्वाहा ॥ ४ ॥ त्वंप्रत्यक्षंब्रह्मासि ॥ त्वंज्ञानमयोविज्ञानमयोसि ॥ सर्वंजगदिदंत्वत्तोजायते ॥

सर्वंजगदिदंत्वत्तस्तिष्ठति ॥ सर्वंजगदिदंत्वयिलयमेष्यति ॥ सर्वंजगदिदंत्वयिप्रत्येति ॥ त्वंभूमिरापोनलोनिलोनभः ॥ त्वंचत्वारिवाक्पदानिस्वाहा ॥ ५ ॥ त्वंगुणत्रयातीतः ॥ त्वंदेहत्रयातीतः ॥ त्वंकालत्रयातीतः ॥ त्वंमूलाधारस्थितोसि नित्यं ॥ त्वंशक्तित्रयात्मकः ॥ त्वांयोगिनोध्यायंतिनित्यं ॥ त्वंब्रह्मात्वंविष्णुस्त्वंरुद्रस्त्वमिंद्रस्त्वमग्निस्त्वंवायुस्त्वंसूर्यस्त्वं चंद्रमास्त्वंब्रह्मभूर्भुवःस्वरोम्स्वाहा ॥ ६ ॥ गणादिंपूर्वमुच्चार्यवर्णादिंतदनंतरं ॥ अनुस्वारःपरतरः ॥ अर्धेंदुलसितं ॥ तारेणरुद्धं ॥ एतत्तवमनुस्वरूपं ॥ गकारःपूर्वरूपं ॥ अकारोमध्यमरूपं ॥ अनुस्वारश्चांत्यरूपं ॥ बिंदुरुत्तररूपं ॥ नादः संधानं ॥ संहितासंधिः ॥ सैषागणेशविद्या ॥ गणकऋषिः ॥ निचृद्गायत्रीछंदः ॥ गणपतिर्देवता ॥ ॐ गंगणपतयेनमः स्वाहा ॥ ७ ॥ एकदंतायविद्महेवक्रतुंडायधीमहि ॥ तन्नोदंतीप्रचोदयात्स्वाहा ॥ ८ ॥ एकदंतंचतुर्हस्तंपाशमंकुशधारिणम् ॥ रदंचवरदंहस्तैर्बिभ्राणंमूषकध्वजम् ॥ रक्तंलंबोदरंशूर्पकर्णकंरक्तवाससं ॥ रक्तगंधानुलिप्तांगंरक्तपुष्पैःसुपूजितम् ॥ भक्तानुकंपिनंदेवंजगत्कारणमच्युतं ॥ आविर्भूतंचसृष्ट्यादौप्रकृतेःपुरुषात्परं ॥ एवंध्यायतियोनित्यंसयोगीयोगिनांवरःस्वाहा ॥ ९ ॥ नमोव्रातपतयेनमोगणपतयेनमःप्रमथपतयेनमः ॥ नमस्तेअस्तुलंबोदरायैकदंतायविघ्ननाशिनेशिवपुत्रायवरदमूर्तयेनमःस्वाहा ॥ १० ॥ एतदथर्वशीर्षंयोधीते ॥ सब्रह्मभूयायकल्पते ॥ ससर्वविघ्नैर्नबाध्यते ॥ ससर्वतःसुखमेधते ॥ सपंचमहापापात्प्रमुच्यते ॥ सायमधीयानोदिवसकृतंपापंनाशयति ॥ प्रातरधीयानोरात्रिकृतंपापंनाशयति ॥ सायंप्रातःप्रयुंजानोअपापोभवति ॥ सर्वत्राधीयानोपविघ्नोभवति ॥ धर्मार्थकाममोक्षंचविंदति ॥ इदमथर्वशीर्षमशिष्यायनदेयं ॥ योयदि मोहाद्दास्यति ॥ सपापीयान्भवति ॥ सहस्रावर्तनात् ॥ यंयंकाममधीते ॥ तंतमनेनसाधयेत् ॥ अनेनगणपतिमभिषिंच

ति ॥ सवाङ्मीभवति ॥ चतुर्थ्यामनश्नन्जपति ॥ सविद्यावान्भवति ॥ इत्यथर्वणवाक्यं ॥ ब्रह्माद्यावरणंविद्यात् ॥ नबि भेतिकदाचनेति ॥ योदूर्वांकुरैर्यजति ॥ सवैश्रवणोपमोभवति ॥ योलाजैर्यजति ॥ सयशःस्वीभवतिसमेधावान्भवति ॥ यो मोदकसहस्रेणयजति ॥ सवांछितफलमवाप्नोति ॥ यःसाज्यसमिद्भिर्यजति ॥ ससर्वंलभतेससर्वंलभते ॥ अष्टौब्राह्मणान् सम्यग्ग्राहयित्वासूर्यवर्चस्वीभवति ॥ सूर्यग्रहेमहानद्यांप्रतिमासंनिधौवाजप्त्वा ॥ सिद्धमंत्रोभवति ॥ महाविघ्नात्प्रमुच्यते ॥ महादोषात्प्रमुच्यते ॥ ससर्वविद्भवतिससर्वविद्भवति ॥ यएवंवेद ॥ इत्युपनिषत् ॥ भद्रंकर्णेभिः० ॥ स्वस्तिनइंद्रो० ॥ एवंहुत्वास्विष्टकृदादिहोमशेषंसमाप्यस्थापितकलशोदेकनसकुटुंबंयजमानमभिषिच्यदेवतापूजनविसर्जनांतेपीठमाचार्यहस्ते प्रतिपाद्य ब्राह्मणभोजनंसंकल्प्यभूयसींदत्वाशिषोगृहीत्वाकर्मेश्वरार्पणंकुर्यात् ॥ इत्यथर्वशीर्षविधानम् ॥ ॥ ७ ॥

## ॥ ३०२ ॥ अथज्वरशांतिप्रयोगः ॥

श्रीः ॥ आचमनादिदेशकालस्मरणांतेममश्रीज्वरस्वरूपीरुद्रप्रसादसिद्धिद्वाराशरीरेउत्पन्नोत्पत्स्यमानसमस्तामयनिदानभूतवातपित्तश्लेष्मप्रक्षोभजन्यविविधज्वरोत्थनिखिलपीडापरिहारपूर्वकक्षिप्रारोग्यावाप्त्यर्थंसग्रहमखांज्वरशांतिंकरिष्ये इतिसंकल्प्यगणेशपूजनादिऋत्विग्वरणांतंकुर्यात् ॥ ततआचार्यःप्रादेशकरणांतेस्थंडिलात्पूर्वेमहीद्यौरित्यादिविधिनाकलशंसंस्थाप्य पूर्णपात्रोपरिश्वेतवस्त्रंप्रसार्यतत्राक्षतैरष्टदलंकमलंविलिख्य तत्कर्णिकायांसुवर्णप्रतिमांनिधायतत्र ॥ कुबेरतइतिमंत्रस्यकुबेरो ज्वररूपीरुद्रोनुष्टुप् रुद्रावाहनेवि० कुबेरतेमुखंरौद्रंनंदिन्नानंदमावह ॥ ज्वरमृत्युभयंघोरंविषनाशयमेज्वरम् ॥ इतिमंत्रेण

ज्वरस्वरूपिणंरुद्रमावाह्य पूर्वादिदलेषुदेवताआवाहयेत् ॥ ज्वरायनमःज्वरमावाहयामि ॥ एवमग्रेपि ॥ वातज्वराय० । पित्तज्वराय० । श्लेष्मज्वराय० । शीतज्वराय० । उष्णज्वराय० । द्वंद्वजज्वराय० । संनिपातज्वराय० ॥ तद्बाह्ये ॥ उग्रज्वराय० । गंभीरज्व० । सततज्व० । संततज्व० । ऐकाहिकज्व० । द्व्याहिकज्व० । त्र्याहिकज्व० । चातुर्थिकज्व० ॥ तद्बाह्ये ॥ प्राकृतज्व० । वैकृतज्व० । आमज्व० । निरामज्व० । अभिघात० । अभिचारज्व० । अभिषंगज्व० । अभिशापज्वरायनमः ॥ इत्यावाह्यसर्वान्संपूज्याग्निंग्रहांश्चप्रतिष्ठाप्यान्वादध्यात् ॥ ग्रहादिकीर्तनांतेत्रप्रधानंज्वरस्वरूपिणंरुद्रंक्षीराप्लुताम्रदलैरष्टोत्तरसहस्रसंख्याकाहुतिभिः ज्वराद्यंगदेवताएकैकयाज्याहुत्याशेषेणेत्याज्यभागांतेकुंभंस्पृष्ट्वा ॥ आरुद्रासःश्यावाश्वोरुद्रोजगती कुंभाभिमंत्रणेवि० ॥ ॐ आरुद्रास० इतिमंत्रमष्टोत्तरशतवारंजपेत् ॥ ततोयजमानेनत्यागेकृतेग्रहादिहोमंकृत्वा कुबेरतेइतिमंत्रेण १००८ संख्ययाक्षीराप्लुताम्रदलानिहुत्वा ज्वराद्यंगदेवताभ्योनाममंत्रेणैकैकामाज्याहुतिंजुहुयात् ॥ ततः पूर्ववत्कुंभमभिमंत्र्यस्विष्टकृदादिप्रायश्चित्तहोमांतेबलिदानपूर्णाहुतीकृत्वासंस्रावहोमादिशेषंसमाप्यस्थापितकलशोदकेनसमुद्रज्येष्ठाइत्यादिमंत्रैरभिषेकंकुर्यात् ॥ ततःकर्ताधृतशुक्लांबरोविभूतिंधृत्वादेवतोत्तरपूजांविधाय कुबेरतइतिमंत्रांते ज्वरस्वरूपिणंरुद्रंतर्पयामि इतिपयसातर्पणंकृत्वानाममंत्रेणज्वराद्यंगदेवतास्तर्पयेत् ॥ ततःकृतांजलिः ॥ त्रिपाद्भस्मप्रहरणस्त्रिशिरारक्तलोचनः ॥ समेप्रीतःसुखंदद्यात्सर्वामयपतिर्ज्वरः ॥ सततंसंततंचैवज्वरमुग्रंतथैवच ॥ ऐकाहिकंद्व्याहिकंचतृतीयादिमथापिवा ॥ ज्वरोरोगपतीराजामृत्युरोगःसनातनः ॥ क्रुद्धोरोगान्ज्वरोहन्याद्रुद्रोभुवनशोभनः ॥ इतिसंप्रार्थ्यआचार्यादिभ्योदक्षिणादानांतेविसर्जितदेवतापीठंआचार्यायदद्यात् ॥ तत्ररुद्रप्रतिमादानेमंत्रः ॥ ज्वरस्वरूपीयोरुद्रःसुवर्णेनविनिर्मितः ॥

सोपस्करोमयादत्तस्तेनरुद्रःप्रसीदतु ॥ ततआज्यावलोकनंतद्दानंचकृत्वाविप्रान्संभोज्यभूयसींदत्वाशिषोगृहीत्वाकर्मसमापयेत् ॥ इतिशांतिकमलाकरोक्ताज्वरशांतिः ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥

## ॥ ३०४ ॥ अथमृत्युंजयजपविधिः ॥

श्रीः ॥ ॐ अस्यश्रीमृत्युंजयमंत्रस्यवसिष्ठऋषिः ॥ अनुष्टुपछंदः महामृत्युंजयत्र्यंबकरुद्रोदेवता प्रणवोबीजं स्वराःशक्तिः बिंदवःकीलकं ममयजमानस्यवासर्वापमृत्युविनाशार्थंसर्वाभीष्टकामनासिद्ध्यर्थंमहामृत्युंजयमंत्रजपेविनियोगः ॥ अथन्यासः ॐ हौंजूंसःअंगुष्ठाभ्यांनमः ॐ भुर्भुवःस्वः तर्जनीभ्यांस्वाहा ॐ त्र्यंबकंयजामहे० वर्धनं मध्यमाभ्यांवषट् ॐ उर्वारुकमिवबंधनात् अनामिकाभ्यांहुं ॐ मृत्योर्मुक्षीयमामृतात् कनिष्ठिकाभ्यांवौषट् ॐ स्वःभुवःभूः ॐ सःजूंहौं ॐ त्र्यंबकंयजामहे० उर्वारुकमिवबंधनात् करतलकरपृष्ठाभ्यांफट् ॥ ॐ हौंजूंसःहृदयायनमः ॐ भूर्भुवःस्वः शिरसेस्वाहा ॐ त्र्यंबकंयजामहे० वर्धनं शिखायैवषट् ॐ उर्वारुकमिवबंधनात् कवचायहुं ॐ मृत्योर्मुक्षीयमामृतात् नेत्रत्रयायवौषट् ॐ स्वःभुवःभूः ॐ सःजूंहौं ॐ त्र्यंबकंयजामहे० उर्वारुकमिवबंधनात्० अस्त्रायफट् ॐ भूर्भुवःस्वरोमितिदिग्बंधः ॥ अथध्यानं ॥ अरुणकम

---

१ अन्यस्मिन्प्रयोगेप्रधानहोमोत्तरंआरुद्रासइत्यष्टोत्तरशतजपः ततस्तर्पणंतत्रप्रत्येकमादौत्रिपाद्भस० ज्वरोरोगपती० इतिश्लोकद्वयोत्तरंभूःभुवःस्वः भूर्भुवःस्वःपित्तज्वरंतर्पयामि ॥ एवंसर्वत्र वातज्वरंकफज्वरंशीतज्वरंउष्णज्वरंश्लेष्मज्वरंविषमज्वरंसंनिपातज्वरंअतिसारज्वरंदोषोत्थज्वरंसंततज्वरंउग्रज्वरंऐकाहिकज्वरंद्व्याहिकज्वरंत्रिदिवसज्वरंचातुर्थिकज्वरंअत्युग्रज्वरंआमज्वरंअतिवातज्वरंशीतोष्णज्वरंमारींप्रमारींकालींमहाकालींईश्वरींकौमारींचामुंडांवास्तोष्पतिंज्वरपतिरुद्रंतर्पयामीति ततःस्विष्टकृदाद्यस्ति तत्रसदसत्सद्भिर्विचारणीयं ॥

लकांतिस्वर्धुनीराजमानंकरकलितकपालंस्वक्षमालांदधानं ॥ कलशममृतपूर्णंशूलहस्तंज्वलंतंत्रिनयनमभिवंदेमृत्युमृत्युंमहेशं ॥ अथमूलमंत्रः ॐ हौंजूंसः ॐ भूर्भुवःस्वः ॐ त्र्यंबकंयजामहेसुगंधिंपुष्टिवर्धनं ॥ उर्वारुकमिवबंधनान्मृत्योर्मुक्षीयमामृतात् ॐ स्वःभुवःभूः ॐ सःजूंहौं ॐ इतिषट्प्रणवमृत्युंजयमंत्रः ॥ अथचतुर्दशप्रणवमृत्युंजयमंत्रजपविधिः ॥ संकल्पंकृत्वाप्रार भेत् ॥ ॐ हौं ॐ जूं ॐ सः ॐ भूः ॐ भुवः ॐ स्वः ॐ त्र्यंबकंयजामहेसुगंधिंपुष्टिवर्धनं ॥ उर्वारुकमिवबंधनान्मृत्योर्मुक्षी यमामृतात् ॥ ॐ स्वः ॐ भुवः ॐ भूः ॐ सः ॐ जूं ॐ हौं इतिचतुर्दशप्रणवविधिः ॥ विधिवत्कलशेरुद्रंसंपूज्यजपद शांशेनतिलाज्याभ्यांहोमःकार्यः ॥ इतिमृत्युंजयविधिः ॥ ॥ छ ॥ ॥ छ ॥

## ॥ ३०५ ॥ अथसर्वरोगनाशकानि ॥

श्रीः॥रोगानुसारेणलघुरुद्रमहारुद्रातिरुद्राणांजपोभिषेकोवा विष्णुसहस्रनामस्तोत्रस्यशतंसहस्रमयुतंवाजपः ॥ सौरंजपः[१]सूर्य नमस्काराघ्र्यदानानिमुंचामित्वेतिसूक्तजपोऽच्युतानंतगोविंदेतिनामत्रयजपोमृत्युंजयजपश्चरोगानुसारेणेति सर्वरोगहराणि॥

## ॥ ३०६ ॥ अथाच्युतानंतगोविंदनामजपः ॥

श्रीः ॥ आचमनादिदेशकालोत्कीर्तनांतेऽमुकगोत्रस्यामुकशर्मणोममेहजन्मजन्मांतरीयशरीरवाङ्मनःसंभूतनानाविधदुरितोद र्ककर्मविपाकनिदानभूतवातपित्तकफाद्यन्यतमप्रकोपजन्यव्याध्युपशमपूर्वंजीवच्छरीराविरोधेनसद्यःशरीरेआरोग्यावाप्त्यर्थं

१ अत्रसौरपदेनसर्वसौरमंत्रग्रहणंकिंतुउद्वयमित्येतितृचमात्रजपःकार्यः ।

समस्तदुस्तरव्याधिसंघध्वंसक्षमस्याच्युतानंतगोविंदेति श्रीमद्भगवतोनामत्रयस्याद्यप्रभृतिब्राह्मणद्वारालक्षाऽयुताष्टाधिकस हस्राद्यन्यतमसंख्याकजपाख्यंकर्मकरिष्ये ॥ गणेशमभ्यर्च्यस्मृत्वावागोत्रोच्चारपूर्वंब्राह्मणंवृणुयात् ॥ सचशुचिराचांतःकर्म संकल्प्यासनादिविध्युत्तरं ॥ अस्यश्रीनामत्रयीमहामंत्रस्य कश्यपात्रिभरद्वाजाऋषयः श्रीमहाविष्णुर्देवता अनुष्टुप्छंदः सांक ल्पिकहेतुसिद्ध्यर्थेन्यासेजपादौविनि० ॥ तत्रादौन्यासः ॥ कश्यपात्रिभरद्वाजऋषिभ्योनमःशिरसि ॥ अनुष्टुप्छंदसेनमोमुखे ॥ श्रीमहाविष्णुदेवतायैनमोहृदये श्रीमहाविष्णुप्रीत्यर्थेजपेविनियोगः ॥ अच्युतायनमः अंगुष्ठाभ्यांनमः हृदयायनमः ॥ अनं तायनमः तर्जनीभ्यांनमःशिरसेस्वाहा ॥ गोविंदायनमः मध्यमाभ्यांनमः शिखायैवषट् ॥ अच्युतायनमः अनामिकाभ्यांन मः कवचायहुं ॥ अनंतायनमःकनिष्ठिकाभ्यांनमःनेत्रत्रयायवौषट् ॥ गोविंदायनमः करतलकरपृष्ठाभ्यांनमःअस्त्रायफट् ॥ अथध्यानं ॥ समस्तदुरितव्याधिसंघध्वंसपटीयसे ॥ अच्युतानंतगोविंदनाम्नेधाम्नेनमोनमः ॥ इतिध्यात्वा ॥ ॐ अच्युताय नमोनंतायनमोगोविंदायनमः ॐ ॥ इतिमंत्रमुक्तसंख्ययाजपेत् ॥ अच्युतानंतगोविंदनामोच्चारणभेषजात् ॥ नश्यंतिसकला रोगाःसत्यंसत्यंवदाम्यहं ॥ इतिवा ॥ अनेनामुकसंख्यजपाख्येनकर्मणाश्रीमहाविष्णुःप्रीयतां ॥ तत्सद्ब्रह्मार्पणमस्तु ॥ शुभं० ॥

## ॥ ३०७ ॥ अथषड्ग्रहादियोगशांतिः ॥

श्रीः ॥ कर्तागृहस्येशानभागेआचमनादिदेशकालकीर्तनांतेममश्रीपरमेश्वरप्रीतिद्वाराजन्मनक्षत्रेजन्मराशौवाजन्मराशेरमुक स्थानेवाष्ट्यादिग्रहयोगसूचितसकलानिष्टनिरासपूर्वकैहिकपुत्रलाभसुखवृद्धिचिरायुरैश्वर्यसंपत्तिपारलौकिकशिवपुरव्रजनसि द्ध्यर्थंब्रह्मयामलोक्तांग्रहयोगशांतिंकरिष्ये ॥ ( षडादिग्रहयोगेतथोहःकार्यः ) ॥ तदंगंगणेशपूजनंस्वस्तिवाचनमाचार्यादिवर

णंचकरिष्येइतिसंकल्प्य वरणांतेआचार्यःप्रादेशांतंकृत्वाकुंडात्स्थंडिलाद्वाऐशान्यांचतुरस्रंहस्तमात्रंस्थंडिलतंडुलैर्निर्मायतत्र योगकर्तॄणांग्रहाणांसंख्ययाकलशान्प्राक्संस्थानुदक्संस्थान्वासंस्थाप्यतत्रनिहितेषुपूर्णपात्रेषुतत्तद्ग्रहमंडलानिलिखेत् ॥ यद्वा एकमेवकुंभंसंस्थाप्यमहतिपूर्णपात्रेग्रहमंडलानिलिखेत् ॥ तेषुसुवर्णेनतदर्धेनतदर्धेनवामितेनयथाशक्तिसुवर्णेनवाकृतास्तत्तद्ग्रहप्रतिमास्तदधिप्रत्यधिदेवताप्रतिमाश्चनिधायतासुग्रहादींस्तत्तन्मंत्रैरावाह्यग्रहयज्ञोक्तप्रकारेणनैवेद्यांतंपूजयेत् ॥ ततःस्थंडिलेग्निंप्रतिष्ठाप्यध्यात्वान्वादध्यात् ॥ चक्षुषीआज्येनेत्यंतेस्थापितग्रहान्तत्तत्समिच्चर्वाज्यतिलैःप्रत्येकंप्रतिद्रव्यं १००८ १०८।२८ वाआहुतिभिः अधिदेवताःप्रत्यधिदेवताश्चतैरेवद्रव्यैःप्रत्येकंप्रतिद्रव्यं १०८।२८।८ वा शेषेणस्विष्टकृतमित्याद्याज्यभागहोमांतेग्रहोत्तरतोभिषेकार्थंकलशंमहीद्यौरित्यादिविधिनासंस्थाप्य आपोहिष्ठेत्यादितिसृभिर्नहितेक्षत्रमितितिसृभिर्वाजलेनापूर्यतत्रपंचामृतंपंचगव्यंपंचत्वचःपंचपल्लवान्सर्वौषधीस्तिस्रोवात्र्यवराणियज्ञियतरुमूलानि गंधादिचतत्तन्मंत्रैःप्रक्षिप्यतत्रवरुणंसंपूज्यान्वाधानानुसारेणहोमंकृत्वास्विष्टकृदादिप्रायश्चित्तहोमांतेपूर्णाहुतिंहुत्वा होमशेषंसमाप्यभद्रासनोपविष्टंयजमानंसर्वकलशजलैरभिषिंचेत् ॥ तत्रमंत्राःयोगकारकाणांतत्तदधिदेवताप्रत्यधिदेवतानांचवैदिकमंत्रांतेग्रहाणामादिरादित्यो० ९ जातवेदसे० त्र्यंबकं० क्षेत्रस्यपतिना० यतइंद्रेत्यादिद्वयोर्भर्गइंद्रोबृहतीद्वितीयासतोबृहतीपंक्तिःइंद्रंवोविश्वतस्परीत्यादयोष्टलोकपालमंत्राः सुरास्त्वामभिषिंचंतु० येनदेवाःपवित्रेणेत्यादित्रयाणांखिलमंत्राणांवामदेवइंद्रोनुष्टुबंत्यस्यविश्वेदेवास्त्रिष्टुप् आपोहिष्ठेतिनवर्चस्य० स्वादिष्ठयेतिदशर्चस्यमधुच्छंदाःसोमःपवमानोगायत्रीअभिषेकेवि० ॥ समुद्रज्येष्ठाइत्या

दिपुण्यसूक्तैश्चाभिषिक्तोयजमानोधृतशुक्लांबरःस्नानवस्त्रमाचार्यायदत्त्वाज्यावलोकनंतद्दानंचकृत्वाचार्यादिभ्योदक्षिणांदद्यात् ॥ ततोयथाशक्तिब्राह्मणान्संभोज्यभूयसींदत्वाशिषोगृहीत्वाकर्मसमापयेत् ॥ इतिग्रहयोगशांतिः ॥ ॥ ७ ॥

## ॥ ३०८ ॥ अथसर्वाद्भुतशांतिः ॥

श्रीः ॥ अद्भुतकारणानिहिरण्यकेशीयशातिसंस्कारप्रकाशेतोरोक्तग्रंथे ॥ सउदीचींदिशमन्वावर्ततेथयदास्यकनकरजतवस्त्रवैडूर्यमणिमौक्तिकवियोगोभवत्यारंभोवाविपद्यते मधुनिवानिलीयंते काकमैथुनंवापश्येतारिष्टानिवावयांसिचगृहमध्येवल्मीकंछत्राकंवाजायतेवायसकपोतावावन्यविहंगशशमृगप्रवेशोगोमृगःशशकोगृहमारोहेच्छुष्कवृक्षःप्ररोहते ॥ गृहमध्येदूर्वाःप्ररोहंतेमंडूकोग्निंप्रविशतिसरठोमूर्ध्निनिपततिचुल्लिर्निपततिप्रज्वलन्दीपः ( दीपिकासहितः ) पततिसर्पोवाद्वारेणप्रविशेन्निष्क्रमतेचेत्येवमादीनितान्येतानिसर्वाणिवैश्रवणदैवत्यान्यद्भुतप्रायश्चित्तानिभवंत्यभित्यंदेवंसवितारमोण्योरिति स्थालीपाकमष्टोत्तरशतंहुत्वा पंचभिराज्याहुतिभिर्जुहोतिवैश्रवणाययक्षाधिपतयेहिरण्यपाणयईश्वरायसर्वोत्पातशमनायस्वाहेति महाव्याहृतिभिश्चशंतातीयंजपेत् ॥ इति ॥ अत्रप्रयोगः ॥ कर्ताचम्यप्राणनायम्यदेशकालौनिर्दिश्यममामुकाद्भुतजनितभाव्यरिष्टनिरसनेनायुरारोग्यावाप्तिद्वाराश्रीपरमेश्वरप्रीत्यर्थममुकाद्भुतशांतिंकरिष्येइतिसंकल्प्य ॥ गणपतिपूजनंस्वस्तिवाचनंविभवेग्रहानाचार्यवरणंचसंकल्प्यकुर्यात् ॥ आचार्यःस्वकर्मनिर्वर्त्यपूर्वस्यांविधिवत्स्थापितकलशेवैश्रवणं अभित्यंवामदेवोवैश्रवणोष्टिःवैश्रवणावाहनेविनि० ॥ ॐ अभित्यंदेवंसवितारमोण्योःकविक्रतुमर्चामिसत्यसवंरत्नधामभिप्रियं ॥ ऊर्ध्वायस्यामतिर्भाअदिद्युतत्सवीमनिहिरण्यपाणिरमिमीतसुक्रतुःकृपास्वः ॥ इतिमंत्रेणावाह्यसंपूज्य अग्निंग्रहांश्चप्रतिष्ठाप्यान्वादध्यात् ॥ ग्रहो

त्कीर्तनांतेप्रधानंवैश्रवणमष्टोत्तरशतसंख्याकाभिश्चर्वाहुतिभिः ॥ वैश्रवणं १ यक्षाधिपतिं २ हिरण्यपाणिं ३ ईश्वरं ४ सर्वो त्पातशमनं ५ अग्निंपृथिवींमहांतं ६ वायुमंतरिक्षंमहांतं ७ आदित्यंदिवंमहांतं ८ प्रजापतिंचंद्रमसंनक्षत्राणिदिशोमहांतं ९ चैतादेवताएकैकयाज्याहुत्या । शेषेणेत्यादिप्रणीतास्थापनांतेतूष्णीमष्टोत्तरशताहुतिपर्याप्तांस्तंडुलान्मुष्टिभिर्निरुप्यतूष्णींच तुःप्रोक्ष्य चरुश्रपणादिग्रहादिहोमांतेवदानधर्मेणअशक्तौपाणिनावाचरुमवदायपूजामंत्रेण १०८ हुत्वास्रुवेणाज्यंवैश्रवणादि भ्यस्तत्तन्नाम्नाहुत्वा ॐ भूर॒ग्नयेचपृथि॒व्यैचमह॒तेच॒स्वाहा अग्नयेपृथिव्यैमहतेचेदं ॥ ॐ भुवो॑वा॒यवे॑चा॒ंतरिक्षाय० वायवेंतरिक्षा यमहते० ॥ ॐ सुवरादि॒त्यायचदि॒वे० आदित्यायदिवेमहतेचेदं ॥ ॐ भूर्भुव॒ःसुवश्चं॒द्रमसेच॒नक्षत्रेभ्योदि॒ग्भ्यश्चमह॒० चंद्रम सेनक्षत्रेभ्योदिग्भ्योमहतइदंइति ॥ ततःप्रायश्चित्तादिहोमांतेबलिदानपूर्णाहुतीहुत्वाहोमशेषंसमाप्य स्थापितकलशोदकेनयज मानमभिषिंचेत् ॥ ततोयजमानोविभूतिंधृत्वादेवतोत्तरपूजांविधायाचार्यायगांविसर्जितदेवतापीठंचदत्वाशंतातीयंजपेत् ॥ उतदेवाइत्यादिसप्तर्चस्यसप्तर्षयोविश्वेदेवाअनुष्टुप्जपे० ॥ केचिच्छंनइंद्राग्नीतिसूक्तंपठंति ॥ ततःशक्त्याब्राह्मणान्भोजयित्वा भूयसींदत्वाआशिषोगृहीत्वाकर्मेश्वरार्पणंकुर्यात् ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥

## ॥ २०९ ॥ अथजनमारशांतिः ॥

श्रीः ॥ शुभकालेराजाग्रामाधिपतिर्वाशिवालयेआचमनादिदेशकालस्मरणांतेश्रीरुद्रप्रसादसिद्धिद्वाराएतन्नगरग्रामनिवासि सकलप्राणिशरीरेषुउत्पन्नोत्पत्स्यमानजनमाराख्यप्रबलरोगोपसर्गस्यशीघ्रोपशमपूर्वकंसर्वेषामायुरारोग्याद्यवाप्तयेसग्रहमखांज नमारशांतिकं० गणेशपूजनादिऋत्विग्वरणांतंकुर्यात् ॥ ततआचार्यःप्रादेशकरणांतेरुद्रस्यमहापूजांविधायरुद्रसूक्तानिशत

रुद्रियानुवाकंरुद्राथर्वशीर्षविष्णुसूक्तंचजप्त्वाग्निंग्रहांश्चप्रतिष्ठाप्यान्वादध्यात् ॥ ग्रहाद्युत्कीर्तनांतेरुद्रंपलाशसमिद्घृताक्तपाय सबिल्वदलक्षीरवृक्षसमिद्घृताक्ततिलैःप्रतिद्रव्यंसहस्रसंख्याभिराहुतिभिःशेषेणेत्यादि ग्रहादिहोमांतेत्र्यंबकमंत्रेणप्रधानंहुत्वा स्विष्टकृदादिप्रायश्चित्तहोमांतेबलीन्दत्वाशांतिसूक्तजपांतेपूर्णाहुतिंहुत्वासंस्रवादिहोमशेषंसमाप्य स्थापितकलशोदकेनसर्व जनानामभिषेकंकुर्यात् ॥ ततःकर्ताविभूतिंधृत्वाग्रहादीनामुत्तरपूजांतेआचार्यायगांदद्यात् ॥ धेनुस्त्वंपृथिवीरूपासर्वपापक्ष यंकरी ॥ जनस्यास्यचसर्वस्यमृत्युंनाशयशोभनेइति ॥ ब्रह्मादिभ्योयथाशक्तिसुवर्णमन्येभ्यश्चसप्तधान्यादिभूम्यश्वशकटादिय थासंभवंतत्तन्मंत्रैर्दत्वा शिवस्यगर्भागारंगंधादिनोपलिप्यदशांगधूपेनधूपयित्वाशिवंसकर्पूरश्वेतचंदनेनविलिप्यशतपत्रपुष्पैः संपूज्यधूपादितांबूलदक्षिणासमर्पणांतेसर्वैःसहकृतांजलिस्तंप्रार्थयेत् ॥ देवदेवमहादेवमहापापविनाशन ॥ जनमारकृतांपीडां सद्योनाशयशंकर ॥ ततोदेवंप्रदक्षिणीकृत्यशिवस्तुतिंपठित्वासहस्रंशतंवाविप्रान्संभोज्यभूयसींदत्वाशांतिंवाचयित्वाकर्मसमा पयेत् ॥ इतिशांतिरत्नीयाजनमारशांतिः ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥

## ॥ ३१० ॥ अथदीपपतनशांतिः ॥

श्रीः ॥ यजमानःआचम्यप्राणानायम्यतिथ्यादिस्मृत्वाममगृहेप्रज्वलद्दीपपतनाद्यनेकाद्भुतसूचितसर्वारिष्टनिरसनेनआयुरारो ग्यश्रियोभिवृद्धिद्वाराश्रीपरमेश्वरप्रीत्यर्थं दीपपतनाद्भुतशांतिंकरिष्ये ॥ तत्रादौनिर्विघ्नतासिद्ध्यर्थंमहागणपतिपूजनंआचार्य वरणंचकरिष्ये ॥ ( अत्रग्रहयज्ञआचार्यवरणंचकृताकृतं ) ततआचार्योस्मिन्नद्भुतशांतिकर्मणिआचार्यकर्मकरिष्येइतिसंक ल्प्यसर्षपविकिरणादिपंचगव्यशुद्धोदकप्रोक्षणांतेदीपपतनस्थलेघृतेनपयसाचाभ्युक्ष्यलाजैःसर्षपैश्चावकीर्यपुनःपंचगव्यशुद्धो

दकाभ्याममभ्युक्ष्याग्निप्रतिष्ठांतंकुर्यात् ॥ ततोग्नेःपूर्वतस्तंदुलपुंजेष्वष्टदलंमंडलंविधायतत्रपूर्वादिदलेषुइंद्रादीनावाह्यमध्येविधिवत्स्थापितकुंभोपरिहैमींराजतींवावैश्रवणप्रतिमांपृथक्पंचामृतस्नापितांवस्त्रयुगसंवेष्टितां अभित्यंदेवं० इतिस्थापयित्वातस्मात्पूर्वादिदिक्षुयक्षाधिपतिं सर्वोत्पातशमनं हिरण्यपाणिं ईश्वरंच आवाह्यतंत्रेणपूजयेत् ॥ ग्रहपक्षेग्रहानावाह्यवैश्रवणपूजनं ॥ ततोग्नेःपश्चादुपविश्यान्वाधानंकुर्यात् ॥ अस्मिन्नन्वाहितेग्नावित्यादिचक्षुषीआज्येनेत्यंतमुक्त्वा सग्रहपक्षेग्रहानमुकसंख्यया समित्तिलाज्यद्रव्येणवैश्रवणंतिलाज्यद्रव्यैःपृथगष्टोत्तरशतसंख्यया यक्षाधिपतिं सर्वोत्पातशमनं हिरण्यपाणिं ईश्वरंचतैरेव द्रव्यैः २८ तत्तन्नाममंत्रैर्यक्ष्ये शेषेणेत्यादिअन्वाधानपरिसमूहनादिचक्षुषीहोमांतंकृत्वोक्तदेवताभ्यःक्रमेणयथोक्तद्रव्याणिजुहुयात् ॥ ततःस्विष्टकृदादिहोमशेषंसमाप्य इंद्रादिदिक्पतिबलिदानांतेवैश्रवणायसदीपबलिंदत्वाद्वारदेवताभ्यः सदीपपायसबलिंदद्यात् ॥ ततःक्षेत्रपालबलिंदत्वापूर्णाहुतिंहुत्वापूर्णमसीतिमार्जनांतेआचार्यादीन्संपूज्यआचार्यायगांदत्वार्चितदेवताःसंपूज्यआचार्यायमंडलमूर्तिदानंकुर्यात् ऋत्विग्भ्योयथाशक्तिदक्षिणांदत्वाअग्निंसंपूज्यविभूतिंधृत्वाग्निमुपतिष्ठेत् ॥ ततःकलशोदकेनाभिषिक्तोयजमानःब्राह्मणान्संभोज्यआशिषोगृहीत्वायस्यस्मृत्येतिकर्मेश्वरार्पणंकृत्वासुहृद्युक्तोभुंजीत॥इतिदीप० ॥

## ॥ ३११ ॥ अथपलीसरठशांतिः ॥

श्रीः ॥ पल्याःसरठस्यवास्पर्शमात्रेसचैलंस्नात्वाविधिवत्पंचगव्यंप्राश्यआज्यपूर्णेकांस्यपात्रेस्वप्रतिबिंबमवलोक्यसदक्षिणंतद्ब्राह्मणायदत्वाशांतिंकुर्यात् ॥ कर्ताआचमनादिदेशकालस्मरणांतेममशरीरेपल्लीपतनसूचितसकलारिष्टपरिहारद्वाराश्री० सग्रहमखांवृद्धगर्गोक्तांशांतिंकरिष्यइतिसंकल्प्य ( सरठप्ररोहणेतुतत्पदोहःकार्यः ) गणेशपूजनादिऋत्विग्वरणांतंकुर्यात् ॥ त

त्वआचार्यःप्रादेशकरणांतेस्थंडिलात्पूर्वे महीद्यौरित्यादिविधिनाकलशस्थापनादिपूर्णपात्रनिधानांते ॥ पल्याःसरठस्यवायथा शक्तिहेमनिर्मितप्रतिमांतत्रनिधायरक्तवस्त्रेणसंवेष्ट्यगंधादिभिःसंपूज्याग्निंमहांश्चप्रतिष्ठाप्यान्वादध्यात् ॥ ग्रहादिकीर्तनांते प्रधानं मृत्युंजयंखदिरसमिद्भिः १०८ प्रजापतिंतिलैः १०८ अग्निंपृथिवींमहांतं वायुमंतरिक्षंमहांतं आदित्यंदिवंमहांतं प्रजापतिंचंद्रमसंनक्षत्राणिदिशोमहांतं चैतादेवताःघृतमिश्रक्षीरेणैकैकयाहुत्या शेषेणेत्यादिग्रहहोमांते त्र्यंबकमंत्रेणोक्तसंख्ययासमिद्धोमोत्तरंसमस्तव्याहृतिभिस्तिलान्हुत्वा भूरग्नये० भुवोवायवे० सुवरादित्याय० भूर्भुवःसुवश्चंद्रमसे० एतैर्मंत्रैर्घृतमिश्रंक्षीरंजुहुयात् ॥ ततःस्विष्टकृदादिप्रायश्चित्तहोमांतेबलिदानपूर्णाहुतीकृत्वासंस्रावहोमादिशेषंसमाप्यस्थापितकलशोदकेनयजमानमभिषिंचेत् ॥ तत्रमंत्राः ॥ नहितेक्षत्रमितिदशर्चस्यगृत्समदोवरुणस्त्रिष्टुप् अभिषेकेवि० ॥ ततःसमुद्रज्येष्ठाइत्यादिपुण्यसूक्तैर्द्यौःशांतेत्यादिमंत्रैःपौराणमंत्रैश्चाभिषिक्तोयजमानोविभूतिंधृत्वादेवतोत्तरपूजांविधाय आचार्यायधेनुंवस्त्रयुगंऋत्विग्भ्योदक्षिणांचदत्वासोपस्करंविसर्जितदेवतापीठमाचार्यहस्तेप्रतिपाद्यशक्त्याविप्रान्संभोज्य भूयसींदत्वाशिषोगृहीत्वाकर्मसमापयेत् ॥ इतिशांतिरत्नेपल्लीसरठशांतिः ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥

## ॥ ३१२ ॥ अथकाकमैथुनदर्शनादिशांतयः ॥

श्रीः ॥ कर्ताआचमनादिदेशकालस्मरणांतेममकाकमैथुनदर्शनसूचितसकलारिष्टपरिहारद्वाराश्रीपरमे० सग्रहमखांगगर्गोक्तां शांतिंकरिष्यइतिसंकल्प्य ( शिरसिवायसारोहण–शिरस्युरसिवाकाकपक्षाघात–वायसकृतनखविदारण–शयानस्यकाकस्पर्श–मध्यरात्रेअनिमित्तवायसाक्रंदनसूचितेत्यादिनिमित्तांतरेषूह्यं ) गणेशपूजनादिऋत्विग्वरणांतंकुर्यात् ॥ ततआचार्यः प्रा

देशकरणांते अरत्निमात्रेस्थंडिलेग्निंप्रतिष्ठाप्यध्यात्वातदेशान्यांमहीद्यौरित्यादिविधिनाकुंभंसंस्थाप्यपूर्णपात्रोपर्यष्टदलेयथाशक्तिसुवर्णनिर्मितप्रतिमायां यतइंद्रभगइंद्रोबृहतीइंद्रावाहने० इतींद्रं परितोलोकपालांश्चावाह्यषोडशोपचारैःपूजयेत् ॥ ततस्तदुत्तरतोग्रहस्थापनादिकलशप्रार्थनांतंकृत्वान्वादध्यात् ॥ ग्रहाद्युक्तीर्तनांतेत्रप्रधानं इंद्रं पलाशसमिद्व्रीहिचर्वाज्यैःप्रतिद्रव्यं १००८ वा १०८ लोकपालांश्चतैरेवद्रव्यैः प्रतिद्रव्यं ८ शेषेणेत्यादिप्रणीतास्थापनांतेतूष्णींनिर्वापादिविधिनाचरुंश्रपयित्वाज्यसंस्कारादिग्रहहोमांतेप्रधानहोमंकृत्वास्विष्टकृदादिप्रायश्चित्तहोमांतेबलिदानोत्तरंहुतशेषाच्चरुमादाय ॥ ऐंद्रवारुणवायव्यायाम्यावैनैर्ऋताश्चये ॥ तेकाकाःप्रतिगृह्णंतुभूम्यांपिंडंसमर्पितं ॥ इतींद्रस्यपुरतोवायसेभ्योबलिंदत्वापूर्णाहुतिसंस्रावहोमादिशेषंसमाप्यस्थापितकलशोदकेनसपरिवारंयजमानंसमुद्रज्येष्ठाइत्यादिमंत्रैरभिषिंचेत् ॥ ततःकर्ताधृतवस्त्रोविभूतिंधृत्वादेवतोत्तरपूजांतेआचार्यंसंपूज्यतस्मैसोपस्करामिंद्रप्रतिमांदत्वाऋत्विग्भ्योदक्षिणांदत्वाविप्रान्संभोज्यभूयसींदत्वातैःशांतिंपाठयित्वाशिषोगृहीत्वाकर्मसमापयेत् ॥ इतिशांतिरत्नेकाकमैथुनदर्शनादिशांतिः ॥ ॥ छ ॥ ॥ छ ॥

## ॥ ३१३ ॥ प्रपौत्रमुखदर्शनविधिः ॥

श्रीगणेशायनमः ॥ ब्रह्मांडपुराणेनारदीयपातालखंडेनारदब्रह्मदेवसंवादः ॥ तथास्मृतिचंद्रिकायां ॥ प्रपौत्रदर्शनादेवब्रह्मलोकमवाप्नुयात् ॥ तथाचसर्वतीर्थानिदानानिचमहामुने ॥ कृतानिपुण्यजातानिभवंतिमुखदर्शने ॥ तस्मात्सर्वप्रयत्नेनपूजनंप्रपितामह ॥ गंगादिसर्वतीर्थानिवसंतिमुनिसत्तम ॥ पूजाविधिः ॥ पूर्वंनीराजनविधिंतूर्यघोषसमन्वितं ॥ कृत्वाद्विजाग्र्यैःसहितंमंगलस्नानविधिंचरेत् ॥ वरुणसूक्तेनगंगासूक्तेनाभिषेकंकुर्यात् ॥ गंगायथापूजनीयातथापूजांसमाचरेत् ॥ ब्रह्मघोषै

र्वेदघोषैःपूजनीयैःप्रयत्नतः ॥ कांस्यपात्रेघृतंस्थाप्यमुखमालोकयेत्स्वयं ॥ पश्चात्सुवर्णदीपेननिरीक्षेत्सुखदंमुखं ॥ मुखावलोकनादेवब्रह्मलोकमवाप्नुयात् ॥ अथप्रयोगः ॥ देशकालौसंकीर्त्य ममब्रह्मलोकावाप्तिसर्वतीर्थयात्रासकलदानजन्यपुण्यजातावाप्तिद्वाराश्रीपरमेश्वरप्रीत्यर्थंप्रपौत्रमुखदर्शनंकरिष्ये ॥ तदंगंगणेशपूजनंस्वस्तिपुण्याहवाचनंमातृकापूजनंनांदीश्राद्धंचकरिष्ये इतिसंकल्प्य ॥ गणपतिपूजनादिनांदीश्राद्धांतंकृत्वाअभिषेकार्थंकलशंसंस्थाप्यतत्रवरुणंसंपूज्यतूर्यघोषसमन्वितंनीराजनविधिंकृत्वा कंबलांतर्हितेऔदुंबरेआसनेउपविश्यविद्वद्भिर्ब्राह्मणैरभिषेकंकारयेत् ॥ द्विजाश्चवरुणसूक्तेनगंगासूक्तेनचाभिषिंचेयुः ॥ अभिषेकांतेकर्ताजीर्णवस्त्राणिपरित्यज्य नूतनानिधृत्वायथाधिकारंगंगांपूजयेत् ॥ ततःकांस्यपात्रेविलीनघृतंसंस्थाप्यतत्रस्वमुखमवलोक्य पश्चात्सुवर्णपात्रस्थदीपेनप्रपौत्रस्यमुखंपश्येत् ॥ ततःप्रपौत्रंसुवर्णपुष्पैःशतसंख्याकैरभिषिंचेत् विकिरेद्द्वादशभिर्वा पुष्पार्पणेप्रत्येकंयज्ञफलं ॥ ततस्तमभिषेकार्थकलशोदकैर्मार्जयेत् कृतस्यप्रपौत्रमुखावलोकनस्यसांगतायैविधिनागोप्रदानंकुर्यात् यथाशक्तिब्राह्मणान्भोजयेच्च ॥ ततोविष्णुप्रतिमांविधिवत्संपूज्यपायसंनिवेद्यप्रार्थयेत् ॥ भोविष्णोत्वत्प्रसादेनमुखमालोकितंमया ॥ तस्मात्कुरुममाभीष्टंसर्वदासर्वथाप्रभो ॥ दानमंत्रः ॥ प्रतिमायाःप्रदानेनबालकस्यसदाग्रहाः ॥ प्रशमंयांतुदेवेशकंसारेजगतांपते ॥ ततःपूर्वमवलोकितप्रतिबिंबमाज्यंब्राह्मणायदद्यादितिकेचित् इतिप्रपौत्रमुखदर्शनविधिः ॥

## ॥ ३१४ ॥ अथषष्टितमाब्दशांतिः ॥

श्रीः ॥ कर्तांषष्टितमवर्षारंभदिनेतद्वर्षांतर्गतजन्मर्क्षेवाशुभेकालेचंद्रताराबलान्वितेमंगलस्नानंविधायकृतनित्यक्रियोविप्राना

मंत्र्यतेभ्योनुज्ञांप्राप्य द्विराचमनादिदेशकालनिर्देशातेममजन्मनःसकाशात्षष्टितमवर्षप्राप्त्याभविष्यत्त्वेनसूचितानांअपमृत्युदुःस्वप्नदर्शनमातापितृमृतिभार्यापुत्रवियोगग्रहपीडाराजभयविविधरोगच्छायाविकृतिस्फुटनक्षत्रध्रुवाद्यदर्शनयक्षरक्षोभूतप्रेतपिशाचादिविविधदर्शनानामन्येषांचमहोत्पातानांअरिष्टरूपाणांसद्यःपरिहारपूर्वकंसर्वारिष्टविनाशदीर्घायुरारोग्यसर्वसंपद्भवनद्वाराश्रीपरमेश्वरप्री० सग्रहमखांशौनकोक्तांउग्ररथशांतिंकरिष्येइतिसंकल्प्य गणेशपूजनादिनांदीश्राद्धांतेआचार्यंब्राह्मणमृत्विजश्चवृणुयात् ॥ ततआचार्यआचमनादिप्रादेशकरणांतेग्रहस्थापनादिकलशप्रार्थनांतंकृत्वातन्नैर्ऋत्यांस्थंडिलेग्निंप्रतिष्ठाप्यध्यात्वान्वादध्यात् ॥ ग्रहकीर्तनांते मार्कंडेयंप्रधानदेवंसमिदाज्यचरुदूर्वापायसैःप्रतिद्रव्यं १००८ वा १०८ आहुतिभिःमृत्युंजयंदूर्वातिलैःप्रतिद्रव्यं २५००।१५००।५०० यद्वातिलमिश्रदूर्वाभिरुक्तसंख्यातोद्विगुणाभिः अश्वत्थामानं, बलिं, व्यासं, हनुमंतं, बिभीषणं, कृपं, परशुरामं ७ चएतान्लाजद्रव्येण प्रत्येकं २८ वा ८ शेषेणेत्यादिसमिदाधानांतेग्रहाणामुत्तरतः महीद्यौरित्यादिविधिनाकलशंसंस्थाप्यपूर्णपात्रनिधानांते पलेनतदर्धार्धेनवासुवर्णप्रतिमायांमार्कंडेयंनाममंत्रेणावाह्यवस्त्रयुग्मेनावेष्ट्यषोडशोपचारैःसंपूज्येध्माबर्हिषोःसंनहनाद्याज्यभागांतंकृत्वायजमानेनत्यागेकृतेग्रहादिहोमोत्तरं ॥ मार्कंडेयमहाभागसप्तकल्पांतजीवन ॥ आयुरारोग्यमैश्वर्यंदेहिमेमुनिपुंगवस्वाहा इतिमंत्रेणसमिदाज्यचरुदूर्वापायसानि त्र्यंबकमितिमंत्रेणदूर्वातिलान्तिलमिश्रदूर्वावाहुत्वा अश्वत्थाम्नेस्वाहा बलये० व्यासाय० हनुमते० बिभीषणाय० कृपाय० परशुरामायस्वाहेतिमंत्रैः प्रत्येकं २८।८ वालाजान्जुहुयात् ॥ ततःश्रीसूक्तंरुद्राध्यायंचजप्त्वायुष्यमंत्रान्जपेत् ॥ तेच ॥ एषवांदेवावितिद्वयोर्वामदेवोश्विनौगायत्री ॥ परावतोयइतिसप्तदशर्चस्यसूक्तस्यगयोविश्वेदेवाजगत्यंत्येत्रिष्टुभौ ॥ जपेवि० ॥

आनोभद्राइतिवायुष्यसूक्तं ॥ ततःपुरुषसूक्तंजपित्वावेदपारायणंकार्यं तदसंभवेऽग्निमीळइतिसूक्तजपः ॥ ततःस्विष्टकृदादि प्रायश्चित्तहोमांतेबलिदानंपूर्णाहुतिंचकृत्वासंस्रावहोमादिशेषंसमाप्यस्थापितकलशोदकैःसकुटुंबंबंधुवर्गयुतंयजमानमभिषिंचेत् ॥ तत्रमंत्राः ॥ शंनइंद्राग्नीतिपंचदशर्चस्यसूक्तस्यवसिष्ठोविश्वेदेवास्त्रिष्टुप् ॥ सहस्रशीर्षेतिषोडशर्चस्य० परंमृत्योइतिचतुर्दशर्चस्यसूक्तस्यसंकुसुकोविश्वेदेवास्त्रिष्टुप् एकादशीप्रस्तारपंक्तिस्त्रयोदशीजगतीचतुर्दश्यनुष्टुप् ॥ एषवांदेवावितिद्वयोः० परावतोयइतिसप्तदशर्चस्य० स्वादिष्ठयेतिदशर्चस्यसूक्तस्यमधुच्छंदाःसोमःपवमानोगायत्री यज्जाग्रतइतिषण्णांप्रजापतिर्मनस्त्रिष्टुप् ॥ अभिषेकेविनियोगः ॥ ततोग्रहमंत्रैः सुरास्त्वेत्यादिभिस्तच्छंयोरित्यनेनचाभिषिक्तोयजमानोधृतशुक्लांबरगंधमाल्योभिषेकवस्त्रमाचार्यायदत्त्वाविभूतिंधृत्वाआचार्येणआनोभद्राइत्यादिमहाशांतिमंत्रजपपूर्वकंदेवतोत्तरपूजनेकृतेमार्कंडेयादीन्प्रार्थयेत् ॥ मार्कंडेयमहाभाग० ॥ द्रौणेमेत्वंमहाभागरुद्रतेजःसमुद्भव ॥ आयुर्बलंयशोदेहिअश्वत्थामन्नमोस्तुते ॥ दैत्येंद्रकुलसंभूतयज्ञदानक्रियारत ॥ बलेत्वांशरणंयामिदीर्घमायुःप्रयच्छमे ॥ वसिष्ठकुलसंभूतवेदशास्त्रविशारद ॥ नारायणांशसंभूतवेदव्यासनमोस्तुते ॥ अंजनागर्भसंभूतकपींद्रसचिवोत्तम ॥ रामप्रियनमस्तुभ्यंहनुमन्रक्षमांसदा ॥ बिभीषणनमस्तुभ्यंरामपादाब्जपूजक ॥ आयुरारोग्यमैश्वर्यंदेहिपौलस्त्यनंदन ॥ द्विजेंद्रभरताचार्यसर्वविद्याविशारद ॥ शरणंत्वांप्रपन्नोस्मिकृपमांरक्षसर्वदा ॥ रेणुकेयमहावीर्यकार्तवीर्यकृतांतक ॥ आयुःप्रयच्छमेरामजामदग्न्यनमोस्तुते ॥ ततआचार्यादीन्संपूज्यआचार्यायमार्कंडेयप्रतिमासहितंकलशंगांचदत्वाब्रह्मादिभ्योगवादिदशदानानिशतगुंजापरिमितंसुवर्णंचविभज्यदद्यात् ॥ अशक्तौशतसर्षपतोलितंवा ॥ गवादीनांप्रत्यक्षदानासंभवेतन्मूल्यंदेयं ॥ ततोविसर्जितग्रहपीठदानांतेकांस्यपात्रेआज्यंविलोक्यस

दक्षिणंतत्पात्रंब्राह्मणायदत्वातिलदानंचकृत्वाआशिषोगृहीत्वानववस्त्रंधृत्वापुरंध्रीभिर्नीराजितोदेवानभिवाद्यशतंविप्रान्संभो ज्य भूयसींदत्वाकर्मसमाप्यसुहृद्युतोभुंजीत ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥

## ॥ ३१५ ॥ अथरोगोत्पत्तौनक्षत्रफलं ॥

श्रीः ॥ अश्विन्यांरोगोत्पत्तौएकाहंनवदिनानिवापंचविंशतिदिनानिवापीडा ॥ १ ॥ भरण्यामेकादशैकविंशतिर्वामासंवामृत्यु र्वा ॥ २ ॥ कृत्तिकायांदशनवैकविंशतिर्वा ॥ ३ ॥ रोहिण्यांदशवानववासप्तवात्रीणिवाहानि ॥ ४ ॥ मृगेपंचनववात्रिंशद्वा ॥ ५ ॥ आर्द्रायांमृत्युर्वादशाहंवामासंवा ॥ ६ ॥ पुनर्वसौसप्तनववामृत्युर्वा ॥ ७ ॥ पुष्येसप्तवामृत्युर्वा ॥ ८ ॥ आश्लेषायां मृत्युर्विंशतिस्त्रिंशद्वानववादिनानिपीडा ॥ ९ ॥ मघायांमृत्युर्वासार्धमासंवामासंवाविंशतिदिनानिवापीडा ॥ १० ॥ पूर्वाफ ल्गुन्यांमृत्युर्वाब्दंमासंवापीडापंचदशवाषष्टिर्वादिनानि ॥ ११ ॥ उत्तरायांसप्तविंशतिःपंचदशसप्तवादिनानि ॥ १२ ॥ हस्ते मृत्युरष्टवानववासप्तवापंचदशवाहानि ॥ १३ ॥ चित्रायांपक्षमष्टवादशवाएकादशवाहानि ॥ १४ ॥ स्वात्यांमृत्युर्वैकद्वित्रिच तुःपंचमासैर्वादशदिनैर्वारोगनाशः ॥ १५ ॥ विशाखायांमासंवापक्षंवाष्टदिनंविंशतिदिनंवापीडा ॥ १६ ॥ अनूराधायांदश रात्रमष्टाविंशतिरात्रंवा ॥ १७ ॥ ज्येष्ठायांमृत्युर्वापक्षंवामासंवैकविंशतिरात्रंवापीडा ॥ १८ ॥ मूलेमृत्युःपक्षंनवरात्रंविंशति रात्रंवापीडा ॥ १९ ॥ पूर्वाषाढायांमृत्युर्वाद्वित्रिषडादिमासैर्विंशतिदिनैःपक्षेणवारोगनाशः ॥ २० ॥ उत्तराषाढायांसार्धमा संविंशतिरात्रंवामासंवा ॥ २१ ॥ श्रवणेपंचविंशतिर्दशवाएकादशवाषष्टिर्वाहानि ॥ २२ ॥ धनिष्ठायांदशरात्रंपक्षंमासंत्रयोद

शरात्रंवा ॥ २३ ॥ शततारकायांद्वादशैकादशवा ॥ २४॥ पूर्वाभाद्रायामृत्युर्वाद्विन्यादिमासंवादशरात्रवा ॥ २५ ॥ उत्तरा भाद्रायांसार्धमासंपक्षंसप्ताहंदशाहंवा ॥ २६ ॥ रेवत्यांज्वराद्युत्पत्तौदशाहमष्टाविंशतिरात्रंवापीडा ॥ २७ ॥ जन्मनक्षत्रेज न्मराशौअष्टमचंद्रेरोगोत्पत्तौमृत्युः ॥ २८ ॥ अर्कादिवारेक्रमेणमघाद्वादश्यौविशाखैकादश्यौ पंचम्यार्द्रे तृतीयोत्तराषाढे श तताराषष्ठ्यौ अष्टम्यश्विन्यौ पूर्वाषाढानवम्यौ चेतित्रयाणांयोगेमृत्युः एवमर्कादौअनूराधाभरण्यौआर्द्रोत्तराषाढेमघाशत तारेविशाखाश्विन्यौज्येष्ठामृगौश्रवणाश्लेषेपूर्वाभाद्रपदाहस्तौचेन्मृत्युयोगः अत्रोक्तास्तिथिवारनक्षत्रशांतयोविस्तृताःकार्याः येषुनक्षत्रेषुमरणमुक्तंतत्रशांतिरावश्यकीअन्यत्रकृताकृता ॥ इतिरोगोत्पत्तौनक्षत्रफलं ॥ ॥ ॥

## ॥ ३१६ ॥ अथसर्वनक्षत्रसाधारणःशांतिप्रयोगः ॥

श्रीः ॥ देशकालौसंकीर्त्यममोत्पन्नव्याधेर्जीवच्छरीराविरोधेनसमूलनाशार्थममुकनक्षत्रशांतिंकरिष्यइतिसंकल्प्य गणेशपूजा दिआचार्यंवृत्वाकुंभोपरिपूर्णपात्रेद्वादशदलेनक्षत्रदेवताप्रतिमांसौवर्णींसंपूज्य द्वादशदलेषुसंकर्षणादिद्वादशमूर्तीर्द्वादशादि त्यान्वासंपूज्यदूर्वासमित्तिलक्षीराज्यैर्गायत्र्यातत्तद्देवतायै अष्टोत्तरशतंहुत्वामरणादिपीडाधिक्योक्तौसहस्रंहुत्वादध्योदनबलिं दत्वाचार्यायगांप्रतिमांचदद्यादितिसंक्षेपः ॥ शांतिमयूखादौनक्षत्रभेदेनहविर्मंत्रबलिधूपादिभेदस्तिथिवारदेवतामंत्रादिभेद विस्तरोद्रष्टव्यः ॥ कर्मविपाके जातवेदसइत्यृचोयुतंलक्षंवाजपोरुद्रेनमकानुवाकैःसहस्रकलशस्नानंवाविष्णौसहस्रावृतपुरुष सूक्तेनसहस्रघटस्नानंवाज्वरनाशकं ॥ यद्वाश्रीभागवतस्थज्वरस्तोत्रजपः ॥ इतिसर्वनक्षत्रसाधारणःशांतिप्रयोगः ॥ ॥

## ॥ ३१७ ॥ अथद्वादशाब्दोत्तरमवलोकनविधिः ॥

श्रीः॥उभौस्नात्वादेशकालौसंकीर्त्य ममअमुकस्यावलोकनेविदेशगमनेनद्वादशवत्सरात्ययसूचितसर्वारिष्टपरिहारद्वाराश्रीप० यथाविध्यवलोकनंकरिष्यइतिसंकल्प्य गणेशपूजांतेशिवालयेतीर्थेवागत्वादीपौप्रज्वाल्यपटांतर्हितौभूत्वाशिवस्योभयतउपविश्योभौशिवंसंपूज्यब्राह्मणैःसहशांतिमंत्रपाठांते रत्नसहितेजलपूर्णेकांस्यपात्रेन्योन्यमवलोक्यशिवंनमेतां ॥ ततोब्राह्मणाभ्यांसदक्षिणेकांस्यपात्रेदत्वान्येभ्यश्चयथाशक्तिदक्षिणांदत्वापुनरुभौशिवंद्विजान्सूर्यंचनत्वा स्वगृहमागत्यपृथग्घोमंकुर्यातां ॥ सचेत्थं ॥ आचमनादिदेशकालस्मरणांतेमयाकृतामुकावलोकनविध्यंगभूतंहोमंकरिष्यइतिसंकल्प्यस्थंडिलेपावकसंज्ञमग्निंप्रतिष्ठाप्यध्यात्वान्वादध्यात्॥चक्षुषीआज्येनेत्यंतेअग्निंवायुंसूर्यंप्रजापतिंचतिलैःप्रत्येकं२७शेषेणस्विष्टकृतमित्याद्याज्यभागहोमांतेव्यस्तसमस्तव्याहृतिभिस्तिलान्हुत्वास्विष्टकृद्धोमादिशेषंसमाप्यशक्त्याविप्रान्संभोज्यकर्मसमाप्यबांधवैःसहभुंजीत॥इतिशांतिः॥

## ॥ ३१८ ॥ अथजीवतोमृतिवार्ताश्रवणेविधानम् ॥

" श्रीः ॥ वि० मा० गर्गसंहितायां ॥ दुष्टस्थानेयदापुंसोभवेत्क्रूरोनभश्चरः ॥ प्रकोपोवादैवतस्यतदाविघ्नोभिजायते ॥ मृतएवेतिवार्तास्यात्सर्वदेशेदुरत्यया ॥ विधानंतत्रकर्तव्यंनरेणहितमिच्छता ॥ आहूयब्राह्मणान्भक्त्याचतुर्वेदपरायणान् ॥ स्नात्वातैलेनशुद्धेनपूजयेत्कुलदेवतां ॥ पितृन्संतर्प्यविधिवत्स्वस्तिवाच्याद्विजोत्तमाः ॥ जुहुयाद्विधिवद्ब्रह्माविंद्रप्रीत्यैसमाहितः॥ स्वादिष्ठयेतिमंत्रेणजुहुयादयुतंसुधीः ॥ पायसंसर्पिषायुक्तंप्रधानंद्रव्यमुत्तमं ॥ मूर्तिमिंद्रस्यहेम्नस्तुपीठेदेवतरोःशुभे ॥ पूजि

तांविधिवद्भक्त्याआचार्यायनिवेदयेत् ॥ हुत्वास्विष्टकृतंविद्वान्गांचदद्यात्पयस्विनीं ॥ तैलंदद्याद्विजातिभ्योविघ्ननाशायभूरिशः ॥ ब्राह्मणान्भोजयेत्पश्चाच्छतंवाशक्त्यपेक्षया ॥ आत्मनस्त्वायसींमूर्तिंपलैस्तुदशभिःकृतां ॥ तैलाभ्यक्तांततोदद्याद्ब्राह्मणायसदक्षिणां ॥ तत्रमंत्रौ ॥ सहस्राक्षमहाबाहोसर्वविघ्नविनाशन ॥ अनेनमूर्तिदानेनसुप्रीतोभवमेसदा ॥ अपमृत्युविनाशायमूर्तिमेतांददाम्यहं ॥ तुष्टेनमृत्युनानेनपातकंमेव्यपोहतु ॥ ततःपुण्यस्त्रियोवृद्धाविप्राश्चगुरवस्तथा ॥ नीराजनंतुदुर्वार्ताहरणायपुनःपुनः ॥ ततोभिषेचनंकुर्युर्दुर्वार्तापीडितस्यतु ॥ वृद्धान्प्रणमतस्तस्यदद्युराशीर्वचोद्विजाः ॥ शतंजीवेत्यादयआशीर्मंत्राः ॥ ग्रहंतुपूजयेद्दुष्टंप्रणमेत्कुलदेवतां ॥ एवंकृतेविधानेचविघ्नःकोपिनजायते ” ॥ योजीवन्नेवस्वस्यमृतवार्तांश्रृणुयात्सआहिताग्निश्चेदग्नयेसुरभिमतेवाष्टाकपालेनेष्टिंकुर्यात् ॥ तत्रममस्वमृतिवार्ताश्रवणसूचितसकलानिष्टनिरसनद्वाराश्रीपरमेश्वरप्रीत्यर्थं सौरभिमतेष्ट्यायक्ष्यइतिसंकल्पः॥गृह्याग्निमांस्तुलौकिकेग्नौस्थालीपाकंकुर्यात्॥इतिजीवतोमृतिवार्ताश्रवणेविधिः॥

## ॥ ३१९ ॥ अथकृतौर्ध्वदेहिकस्यसंग्रहविधिः ॥

श्रीः ॥ यस्यमृतिवार्ताश्रवणेनौर्ध्वदेहिकमपिकृतंतस्यपुनरागमनेसंग्रहप्रकारउच्यते ॥ संग्राह्यापेक्षयावयोधिकःपित्रादिर्देशकालौस्मृत्वाअमुकगोत्रस्यामुकशर्मणःपैतृमेधिककरणोत्तरंपुनरागतस्यसंग्रहसिद्धिद्वाराश्रीपरमे० संग्रहविधिंकरिष्यइतिसंकल्प्यघृतकुंडेमज्जयित्वासुलग्नेउत्थाप्यपुनर्देशकालौस्मृत्वाअमुकगोत्रस्यामुक० जातकर्मादिसंस्कारान्करिष्येइतिसंकल्प्यगणेशपूजादिनांदीश्राद्धांतेजातकर्मादिचौलांतान्संस्कारांस्तल्लोपप्रायश्चित्तंवाकृत्वापुनरुपनयनंविधाय त्रिरात्रंव्रतचर्यांकारयित्वा

बह्वृचश्चेन्मेधाजननमपिकुर्यात् ॥ संस्कार्यस्तुवेदव्रतलोपप्रायश्चित्तंसमावर्तनंचविधायपूर्वपत्न्यासहविवाहहोमंगृहप्रवेशहोमं चकुर्यात् ॥ अयंविधिरनाहिताग्नेः ॥ आहिताग्नेस्तुश्रौताग्न्याधानाद्यधिकमस्ति ॥ स्त्रीणांतुप्रथमस्थालीपाकोब्राह्मणद्वारा कार्यः ॥ उपनयनादिसमावर्तनांतंनास्ति ॥ सुवासिनीचेत्पतिनासहविवाहहोमादीतिविशेषः ॥ शूद्राणामप्येवं ॥ एवंकृ तेकर्माधिकारः ॥ इति ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥

एवंपरोपकृतयेबहवःप्रयोगाःसंदर्भितामुखजकर्मसमुच्चयेस्मिन् ॥ सर्वांतरस्थजगदीशकृपाकटाक्षान्न्यूनातिरिक्तमिहतत्परि पूर्णमस्तु ॥ जगदीशप्रेरणयाक्रियतांकृतिनामपि ॥ कृतेसमुच्चयेतार्तीयीकोभागोभृतोऽभवत् ॥ ॥ छ ॥

समाप्तमिदंतृतीयंव्रतोद्यापनादिमिश्रप्रकरणम् ॥ ३ ॥

# ॥ अथौर्ध्वदेहिकादिप्रकरणम् ॥ ४ ॥

## ॥ ३२० ॥ अथसर्वप्रायश्चित्तप्रयोगः ॥

श्रीः ॥ प्रायश्चित्तेषडब्दत्र्यब्दसार्धाब्दादिव्यवस्थाप्राजापत्यप्रत्याम्नायाश्चपारिभाषिकोक्ताएव ॥ तत्रत्रिंशत्कृच्छ्रमब्दं पंचचत्वारिंशत्कृच्छ्रंसार्धाब्दं नवतिकृच्छ्रंत्र्यब्दं ॥ कृच्छ्रंप्राजापत्यमितिपर्यायौ ॥ कृच्छ्रेगवादयःतन्निष्क्रयरजतान्यतरनिष्कतदर्धतत्पादादयःप्रत्याम्नायाः ॥ तत्रसामग्र्युपकल्पनं ॥ गंधपुष्पधूपदीपनैवेद्यफलतांबूलानिपंचगव्यानिगोमूत्रगोमयक्षीरदधिघृतादीनिमृत्तिकाभस्मगोमयदूर्वातिलाःसमिधोदर्भाःहोमार्थंघृतंपर्षद्दक्षिणानिबंधानुवादकपूजार्थंदक्षिणापूर्वोत्तरांगगोप्रदानद्रव्यंपूर्वोत्तरांगविष्णुश्राद्धद्रव्यमित्यादि ॥ एवंसामग्रींसंपाद्यसंभवेरिक्तायांतिथावन्यस्मिन्वापुण्येह्निचतुरस्त्रीनेकंवाध्यात्मविदंब्राह्मणंपर्षत्त्वेनोपवेश्यकृतस्नानःशक्तश्चेदार्द्रवासाअभुंजानःसमाहितमनाविप्रान्प्रदक्षिणीकृत्यहृदयेनदूयमानोधरण्यांसाष्टांगंप्रणमेत् ॥ विप्रैःकिंतेकार्यमिथ्यामावादीःसत्यमेववदेतिपृष्टःकर्ताऽऽचम्यप्राणानायम्य देशकालौसंकीर्त्यकरिष्यमाणसर्वप्रायश्चित्तांगत्वेनेदंगोवृषयोर्निष्क्रयीभूतंनिष्कतदर्धतत्पादान्यतमप्रमाणंरजतद्रव्यंसभ्येभ्योदातुमहमुत्सृज्येनममेतिसंकल्पपूर्वकंसभ्याग्रेनिधाय ॥ अमुकशर्मणोममजन्मप्रभृत्यद्ययावत्ज्ञानाज्ञानकामाकामसकृदसकृत्कृतकायिकवाचिकमानसिकसांसर्गिकस्पृष्टास्पृष्टभुक्ताभुक्तपीतापीतसकलपातकातिपातकोपपातकलघुपातकसंकरीकरणमलिनीकरणापात्रीकरणजातिभ्रंशकरप्रकीर्णकपातकानांमध्येसंभावितपापानांनिरासार्थमनुग्रहंकृत्वाप्रायश्चित्तमुपदिशंतुभवंतःइतिवदेत् ॥ (स्वस्याशक्तौपु

त्रादिःप्रतिनिधिश्चेन्ममपितुर्मातुर्वाजन्मप्रभृतीत्यादिवदेत् )॥ ततः॥सर्वेधर्मविवेक्तारोगोप्तारःसकलाद्विजाः॥ ममदेहस्यसंशुद्धिंकुर्वंतुद्विजसत्तमाः॥ (पुत्रादौकर्तरिममेत्यत्रास्यदेहस्येत्यूहः)॥ मयाकृतंमहाघोरंज्ञातमज्ञातकिल्बिषं॥ प्रसादःक्रियतांमह्यंशुभानुज्ञांप्रयच्छथ ॥ पूज्यैःकृतःपवित्रोहंभवेयंद्विजसत्तमैः ॥ इतिप्रार्थयित्वामामनुगृह्णंतुभवंतः इतिप्रणमेत् ॥ ततःसभ्यैस्तस्यशक्त्यादिविचार्यप्रायश्चित्तेनिश्चिते कर्तामासपक्षाद्युच्चार्यकरिष्यमाणसर्वप्रायश्चित्तांगत्वेननिबंधपूजामनुवादकपूजांचकरिष्यइतिसंकल्प्यादौचंदनपुष्पादिभिःपुस्तकपूजांकृत्वानिबंधपूजात्वेनाकिंचिद्द्रव्यंनिधायानुवादकपूजांकुर्यात् ॥ अनुवादकमुदङ्मुखमुपवेश्यपरमेश्वरस्वरूपिणेऽनुवादकब्राह्मणायेदमासनं इत्यादिदक्षिणांतंपूजनंकृत्वाइमांभृतिरूपांदक्षिणामनुवादकायतुभ्यमहंसंप्रददेनममेतिदद्यात्॥ ततःसभ्याःपुस्तकवाचनपूर्वकमनुवादकस्याग्रेकथयेयुः॥ अनुवादकश्चकर्तारंवदेत्॥ तद्यथा ॥ अमुकशर्मणस्तवजन्मप्रभृतिअद्ययावज्ज्ञानाज्ञानकामाकामसकृदसकृत्कृतकायिकवाचिकमानसिकसांसर्गिकस्पृष्टास्पृष्टभुक्ताभुक्तपीतापीतसकलपातकातिपातकोपपातकलघुपातकसंकरीकरणमलिनीकरणापात्रीकरणजातिभ्रंशकरप्रकीर्णकपातकानांमध्येसंभावितपापानांनिरासार्थंपर्षदुपदिष्टंषडब्दत्र्यब्दसार्धाब्दान्यतमप्रायश्चित्तंप्रतिप्राजापत्यं तत्प्रत्याम्नायगोनिष्क्रयीभूतरजतनिष्कतदर्धतत्पादान्यतमद्रव्यदानद्वाराप्राच्योदीच्यांगसहितंत्वयाआचरितव्यंतेनतवशुद्धिर्भविष्यति त्वंकृतार्थोभविष्यसिइतित्रिवारमुपदिशेत्॥कर्ता ॐभवदनुग्रहः इत्यंगीकृत्यसंमानपूर्वकंप्रणम्यपर्षदंविसृजेत्॥ ततःकर्तारिक्तायांसायाह्नेगंगादौदेशकालौसंकीर्त्यअमुकशर्मणोममजन्मप्रभृत्यद्ययावत्ज्ञानाज्ञानकामाकामसकृदसकृत्कृतकायिकवाचिकमानसिकसांसर्गिकस्पृष्टास्पृष्टभुक्ताभुक्तपीतापीतसकलपातकातिपातकोपपातकलघुपातकसंकरीकरणमलिनीकरणापात्री

करणजातिभ्रंशकरप्रकीर्णकपातकानांमध्येसंभावितानांपापानांनिरासार्थंपर्षदुपदिष्टंषडब्दत्र्यब्दसार्धाब्दान्यतमप्रायश्चित्तं प्रतिप्राजापत्यंतत्प्रत्याम्नायगोनिष्क्रयीभूतरजतनिष्कपादतदर्धतत्पादान्यतमपरिमितद्रव्यदानद्वाराप्राच्योदीच्यांगसहितं यथाशक्त्यहमाचरिष्यइतिसंकल्प्य ॥ शिरसिहस्तंनिधाय ॥ यानिकानिचपापानिब्रह्महत्यासमानिच ॥ केशानाश्रित्यतिष्ठंति तस्मात्केशान्वपाम्यहं ॥ इतिमंत्रेणशिखाकक्षोपस्थवर्जनखकेशादीन्वापयित्वा ( अशक्तौक्षौराभावेसार्धाब्दादिव्रतंद्विगुणं कृत्वा पर्षद्दक्षिणापिद्विगुणादेया ) क्षौरांतेगंडूषान्कृत्वायथोक्तापामार्गादिदंतकाष्ठेन ॥ आयुर्बलंयशोवर्चःप्रजाःपशुवसू निच ॥ ब्रह्मप्रज्ञांचमेधांचत्वंनोदेहिवनस्पते ॥ इतिमंत्रेणाभिमंत्रितेनद्वादशांगुलप्रमाणेनप्राङ्मुखः ॥ मुखदुर्गंधिनाशायदं तानांचविशुद्धये ॥ ष्ठीवनायचगात्राणांकुर्वेहंदंतधावनं ॥ इतिमंत्रेणदंतशुद्धिंकृत्वाताद्दशान्यकाष्ठेनजिह्वामुल्लिख्यद्वादश गंडूषान्कृत्वाचम्यस्नात्वा ॥ भस्मादिदशविधस्नानानिकुर्यात् ॥ तत्रप्रायश्चित्तांगंभस्मस्नानंकरिष्यइतिसंकल्प्य भस्मगृही त्वा ॐ ईशानःसर्वविद्याना० ईशानायनमइतिशिरसि ॥ तत्पुरुषायविद्महे० तत्पुरुषायनमइतिमुखे ॥ अघोरेभ्योथघोरे भ्यो० अघोरायनमइतिहृदये ॥ वामदेवायनमोज्येष्ठाय० वामदेवायनमइतिगुह्ये ॥ सद्योजातंप्रपद्यामि० सद्योजातायनम इतिपादयोः ॥ प्रणवेनसर्वांगेषुविलिप्य ( यद्वाअग्निरितिभस्म वायुरितिभस्म जलमितिभस्म स्थलमितिभस्म व्योमेतिभ स्म सर्वंहवाइदंभस्मेतिमंत्रैर्विलिप्य ) ततःस्नात्वाऽऽचामेत् ॥ ॥ ततःप्रायश्चित्तांगंगोमयस्नानंकरिष्यइतिसंकल्प्य गोम यमादायवामहस्तेकृत्वा ॐ भूर्भुवःस्वरितिव्याहृतिभिस्त्रेधाविभज्यदक्षिणभागंप्रणवेनदिक्षुनिक्षिप्योत्तरभागंचतीर्थेप्रक्षिप्यशे षंसूर्यायदर्शयित्वा मानस्तोकेतनये० इत्यभिमंत्र्य गंधद्वारामितिमंत्रेण अग्रमग्रंचरंतीनामोषधीनांवनेवने ॥ तासामृषभप

लीनांपवित्रंकायशोधनं ॥ तन्मेरोगांश्चशोकांश्चनुदगोमयसर्वदा ॥ इतिमंत्रेणवासर्वांगमनुलिप्यस्नात्वाचामेत् ॥ सर्वप्रायश्चित्तांगभूतंमृत्तिकास्नानंकरिष्यइतिसंकल्प्य अश्वक्रांतेइतिमृदमभिमंत्र्य उद्धृतासिवराहेणकृष्णेनशतबाहुना ॥ मृत्तिकेहरमेपापंयन्मयादुष्कृतंकृतं॥ इतिमृदमादाय नमोमित्रस्यवरुणस्य० इतिमंत्रेणसूर्यायप्रदर्श्य गंधद्वारामितिमंत्रेण स्योनापृथिविइतिवा इदंविष्णुइतिमंत्रेणवाशिरःप्रभृत्यंगानिविलिप्यस्नात्वाद्विराचामेत् ॥ ॥अथवाविस्तरेणमृत्तिकास्नानंकार्यं॥ तद्यथा ॥ बळित्थापर्वतानांखिद्रंबिभर्षिपृथिवी ॥ प्रयाभूमिंप्रवत्वतिमह्नाजिनोषिमहिनि ॥ इतिभूमिंप्रार्थ्य ॥ मावोरिषत्खनितायस्मैचाहंखनामिवः ॥ द्विपच्चतुष्पदस्माकंसर्वमस्त्वनातुरं ॥ इतिखनित्वा ॥ स्योनापृथिविभवानृक्षरानिवेशनी ॥ यच्छानःशर्मसप्रथः ॥ इतिमृदंगृहीत्वा ॥ आयनेतेपरायणेदूर्वारोहंतुपुष्पिणीः ॥ ह्रदाश्चपुंडरीकाणिसमुद्रस्यगृहाइमे ॥ इतिदूर्वामादाय गायत्र्याभ्युक्ष्यभूमौमृदंनिधाय मृत्तिकास्नानंकरिष्यइतिसंकल्प्यमृदंकुशोदकेनप्रोक्ष्यदिक्षुक्षिपेत् ॥ त्रातारमिंद्रमवितारमिंद्रंहवेहवेसुहवंशूरमिंद्रं ॥ ह्वयामिशक्रंपुरुहूतमिंद्रंस्वस्तिनोमघवाधात्विंद्रः ॥ इतिपूर्वस्यां ॥ यमायमधुमत्तमंराज्ञेहव्यंजुहोतन ॥ इदंनमऋषिभ्यःपूर्वजेभ्यःपूर्वेभ्यःपथिकृद्भ्यः ॥ इतिदक्षिणस्यां ॥ तत्त्वायामिब्रह्मणावंदमानस्तदाशास्तेयजमानोहविर्भिः ॥ अहेळमानोवरुणेहबोध्युरुशंसमानआयुःप्रमोषीः ॥ इतिपश्चिमायां ॥ वयंसोमव्रतेतवमनस्तनूषुबिभ्रतः ॥ प्रजावंतःसचेमहि ॥ इतिउत्तरतः ॥ तत्सूर्यंरोदसीउभेदोषावस्तोरुपब्रुवे ॥ भोजेष्वस्माँअभ्युच्चरासदा ॥ इत्युपरिष्टात् ॥ अधःपश्यस्वमोपरिसंतरांपादकौहर॥ मातेकशप्लकौदृशन्स्त्रीहिब्रह्माबभूविथ ॥ इत्यधःक्षिप्त्वांगेषुलिंपेद्यथा ॥ सहस्रशीर्षा० इति शिरसि ॥ अक्षीभ्यांतेनासिकाभ्यांकर्णाभ्यांछुबुकादधि । यक्ष्मंशीर्षण्यंमस्तिष्काज्जिह्वायाविवृहामिते ॥ इतिमुखे ॥ ग्रीवाभ्यस्तउ

ष्णिहाभ्यःकीकसाभ्योअनूक्यात् ॥ यक्ष्मंदोषण्या१मंसाभ्यांबाहुभ्यांविवृहामिते ॥ इतिग्रीवायां ॥ आंत्रेभ्यस्तेगुदाभ्यो वनिष्ठोर्हृदयादधि ॥ यक्ष्मंमतस्नाभ्यांयक्नःप्लाशिभ्योविवृहामिते ॥ इतिहृदये ॥ नाभानाभिंनआददेचक्षुश्रित्सूर्येसचा ॥ क वेरपत्यमादुहे ॥ इतिनाभौ ॥ त्वामिंद्रसजोषसमर्कंबिभर्षिबाह्वोः ॥ वज्रंशिशानओजसा ॥ इतिबाह्वोः ॥ सोमानंस्वरणंकृ णुहिब्रह्मणस्पते ॥ कक्षीवंतंयऔशिजः ॥ इतिकक्ष्योः ॥ यःकुक्षिःसोमपातमःसमुद्रइवपिन्वते ॥ उर्वीरापोनकाकुदः ॥ इ तिकुक्ष्योः ॥ बह्वीनांपितावहुरस्यपुत्रश्चिश्चाकृणोतिसमनावगत्य ॥ इषुधिःसंकाःपृतनाश्चसर्वाःपृष्ठेनिनद्धोजयतिप्रसूतः ॥ इ तिपृष्ठे ॥ ऊरुभ्यांतेअष्ठीवद्भ्यांपार्ष्णिभ्यांप्रपदाभ्यां ॥ यक्ष्मंश्रोणिभ्यांभासदाद्भंससोविवृहामिते ॥ इत्यूर्वोः ॥ मेहनाद्वनं करणाल्लोमभ्यस्तेनखेभ्यः ॥ यक्ष्मंसर्वस्मादात्मनस्तमिदंविवृहामिते ॥ इतिजान्वोः ॥ एतावानस्यमहिमातोज्यायांश्चपूरुषः॥ पादोस्यविश्वाभूतानित्रिपादस्यामृतंदिवि ॥ इतिपादयोः ॥ यस्यविश्वानिहस्तयोःपंचक्षितीनांवसु ॥ स्पाशयस्वयोअस्मद्ध्रु कृदिव्येवाशनिंजहि ॥ इतिहस्तयोः ॥ अंगादंगाल्लोम्नोलोम्नोजातंपर्वणिपर्वणि ॥ यक्ष्मंसर्वस्मादात्मनस्तमिदंविवृहामिते ॥ इतिपुरुषसूक्तेनचसर्वांगोद्वर्तनं ॥ ततःअश्वक्रांतेरथक्रांतेविष्णुक्रांतेवसुंधरे ॥ शिरसाधारयिष्यामिरक्षस्वमांपदेपदे ॥ भूमि र्धेनुर्धरणीलोकधारिणी ॥ उद्धृतासिवराहेणकृष्णेनशतबाहुना ॥ मृत्तिकेहरमेपापंयन्मयादुष्कृतंकृतं ॥ मृत्तिकेब्रह्मदत्तासि काश्यपेनाभिमंत्रिता ॥ मृत्तिकेदेहिमेपुष्टिंत्वयिसर्वंप्रतिष्ठितं ॥ मृत्तिकेप्रतिष्ठितेसर्वंतन्मेनिर्णुदमृत्तिके ॥ त्वयाहतेनपापेन गच्छामिपरमांगतिं ॥ इतिसतिलदूर्वामृदंशिरसिनिधायमृत्तिकास्थानंप्रक्षालयेत् ॥ अथशुद्धोदकस्नानं ॥ आपोअस्मान्मात रःइत्युक्त्वासूर्याभिमुखः इदंविष्णु० इतिमंत्रेणप्रवाहाभिमुखोनिमज्जेत् ॥ अथवा आपोहिष्ठेतितृचेनवारिस्नानंकुर्यात् ॥ अ

थपंचगव्यैःकुशोदकेनचेतिषट्स्नानानि ॥ तत्रादौसर्वप्रायश्चित्तांगंगोमूत्रस्नानंकरिष्यइतिसंकल्प्य ॥ तत्सवितु० गोमूत्रस्ना नंकृत्वापुनःस्नात्वाचामेत् ॥ एवमग्रेपिगोमयस्नानंकरिष्ये ॥ गंधद्वारां इतिगोमयेन ॥ क्षीरस्नानंकरिष्ये आप्यायस्वसमेतु ते इतिक्षीरस्नानांतेस्नानमाचमनंच ॥ ततोदधिस्नानंकरिष्ये ॥ दधिक्राव्णोअकारिषं इतिदधिस्नानांतेजलेनस्नात्वाआचा मेत् ॥ ततोघृतस्नानंकरिष्ये ॥ घृतंमिमिक्षे इतिघृतस्नानं ॥ ततःस्नानाचमनेचकार्ये ॥ कुशोदकस्नानंकरिष्यइतिसंक ल्प्य ॥ देवस्यत्वासवितुःप्रसवेश्विनोर्बाहुभ्यांपूष्णोहस्ताभ्यामभिषिंचामीतिकुशोदकस्नानांतेशुद्धोदकेनस्नात्वातीर्थंप्रार्थयेत्॥ हिरण्यशृंगंवरुणंप्रपद्येतीर्थंमेदेहियाचितः ॥ यन्मयाभुक्तमसाधूनांपापेभ्यश्चप्रतिग्रहः ॥ यन्मेमनसावाचाकर्मणावादुष्कृतं कृतं ॥ तन्नइंद्रोवरुणोबृहस्पतिःसविताचपुनंतुपुनःपुनः ॥ इतिद्वाभ्यां ॥ अवतेहेळो० इतिद्वाभ्यांचतीर्थंप्रार्थ्य याःप्रवतो० इतितीर्थमभिमृश्य स्नात्वाचम्यमार्जयेत् ॥ तत्रमंत्राः ॥ ॐ इमंमेगंगे० सुमित्र्यान० समुद्रज्येष्ठाः० एतोन्विंद्रं० तरत्समं दी० त्रिभिष्ट्वंदे० क्षीरंसर्पिर्मधूदकं आपोहिष्ठा० इतिमंत्रैर्मार्जनंकृत्वा ॥ इमंमेगंगेयमुने० इदंतेन्याभिरसमानमद्भिर्याःका श्चसिंधुंप्रवहंतिनद्यः ॥ सर्पोजीर्णामिवत्वचंजहातिपापंसशिरस्कोभ्युपेत्य ॥ इत्युदकमालोड्य ॥ ऋतंचसत्यं० इतितृचेनत्रि रावृत्तेनाघमर्षणंकृत्वात्रिर्द्वादशवारंवामज्जनानिकृत्वास्नानांगतर्पणंकुर्यात् ॥ तद्यथा ॥ उपवीती साक्षताभिरद्भिर्देवतीर्थेन ब्रह्मादयोयेदेवाःतान्देवांस्तर्पयामि भूर्देवांस्तर्पयामि भुवर्देवांस्तर्पयामि स्वर्देवांस्तर्पयामि भूर्भुवःस्वर्देवांस्तर्पयामि ॥ निवी ती साक्षताभिरद्भिःऋषितीर्थेन कृष्णद्वैपायनादयोयेऋषयः तानृषींस्त० भूरृषींस्त० भुवरृषींस्त० स्वरृषींस्त० भूर्भुवःस्व रृषींस्तर्पयामि ॥ प्राचीनावीती सतिलाभिरद्भिःपितृतीर्थेनसोमःपितृमान्यमोंगिरस्वानग्निष्वात्ताःकव्यवाहनादयोयेपितरः

तान्पितृंस्त० भूःपितृंस्त० भुवःपितृंस्त० स्वःपितृंस्तर्पयामि भूर्भुवःस्वःपितृंस्तर्पयामिइतिस्नानांगतर्पणंकृत्वा ॥ अग्निदग्धा
श्चयेजीवायेप्यदग्धाःकुलेमम ॥ भूमौदत्तेनतोयेनतृप्तायांतुपरांगतिं ॥ इतितीरेजलंदत्त्वा ॥ येकेचास्मत्कुलेजाताअपुत्रागो
त्रिणोमृताः ॥ तेगृह्णंतुमयादत्तंवस्त्रनिष्पीडनोदकं ॥ इतितीरेउत्तरीयंनिष्पीड्य ॥ यन्मयादूषितंतोयंशारीरमलसंभवात् ॥
तद्दोषपरिहारार्थंयक्ष्माणंतर्पयाम्यहं ॥ इतियक्ष्मतर्पणंविधाय धौतेवाससीपरिधायद्विराचम्यतिलकंधृत्वाऽऽचम्यदेशकालौ
स्मृत्वा श्रीविष्णुप्रीत्यर्थंसर्वप्रायश्चित्तपूर्वांगत्वेनविहितंविष्णुश्राद्धंकरिष्यइतिसंकल्प्य ॥ शालग्रामशिलायांदर्भबटौवा इदं
विष्णु० इतिविष्णुमावाह्य षोडशोपचारैःपंचोपचारैर्वासंपूज्य पापापहश्रीविष्णुप्रीत्यर्थंसर्वप्रायश्चित्तांगाद्यविष्णुश्राद्धसंपत्त
येश्रीविष्णूद्देशेनब्राह्मणचतुष्टयभोजनपर्याप्तामनिष्क्रयीभूतंद्रव्यं नानानामगोत्रेभ्यश्चतुर्भ्योब्राह्मणेभ्योदातुमहमुत्सृज्येनम
मेतिसंकल्प्यचतुर्भ्योब्राह्मणेभ्यःपूजनपूर्वकंविभज्यदद्यात् ॥ तेनपापापहमहाविष्णुःप्रीयतां ॥ सर्वप्रायश्चित्तपूर्वांगत्वेनविहि
तंगोदानंकरिष्ये इतिसंकल्प्य एकांगांतन्निष्क्रयंवाद्यगोदानत्वेनकुटुंबिनेद्विजायदद्यात् ॥ तद्यथा ॥ गवामंगेषुतिष्ठंतिभुव
नानिचतुर्दश ॥ यस्मात्तस्माच्छिवंमेस्यादिहलोकेपरत्रच ॥ इमांगांयथाशक्त्यलंकृतांइदंगोनिष्क्रयद्रव्यंवापापापहमहाविष्णु
प्रीत्यर्थंब्राह्मणायदातुमहमुत्सृज्येइतिदत्वा ततोदेशकालौसंकीर्त्यश्रीपरमेश्वरप्रीत्यर्थंसर्वप्रायश्चित्तपूर्वांगहोमंकरिष्ये ॥ तदं
गतयास्थंडिलोपलेपनोल्लेखनाद्यग्निप्रतिष्ठापनादिकरिष्यइतिसंकल्प्यतत्कृत्वाजुष्टोदमूनेत्यादिविटनामानमग्निंप्रतिष्ठापयामी
त्यंतेचत्वारिशृंगेत्यादिनाध्यात्वा सर्वप्रायश्चित्तपूर्वांगहोमेदेवतापरिग्रहार्थमित्यादिचक्षुषीआज्येनेत्यंते अत्रप्रधानंअग्निंवायुं
सूर्यंप्रजापतिंचप्रतिदैवतंसप्तविंशतिसंख्याज्याहुतिभिःसप्तसंख्याज्याहुतिभिर्वा तथा पृथिवींविष्णुंरुद्रंब्रह्माणंअग्निंसोमंसवि

तारंप्रजापतिंप्रजापतिमग्निंस्विष्टकृतंचएकैकयापंचगव्याहुत्यायक्ष्ये ॥ शेषेणस्विष्टकृतमित्यादिसद्योयक्ष्यइत्यंतमुक्त्वा समिद्वयमग्नावाधायपरिसमूहनादिपात्रासादनांतेतृणेनसहपंचगव्यपात्रमासाद्याज्यसंस्कारकालेपंचगव्यंकृत्वाज्येनसहपर्यग्निकुर्यात् ॥ इतिसर्वप्रायश्चित्तप्रयोगः ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥

## ॥ ३२१ ॥ अथब्रह्मकूर्चपंचगव्यविधिः ॥

श्रीः ॥ सुवर्णताम्रपलाशपद्मान्यतमपात्रेताम्रायाःगोमूत्रंत्रिपलमष्टमाषंवागायत्र्याप्रणवेनवादाय श्वेतगोशकृदंगुष्ठार्धपरिमितंषोडशमाषंवागंधद्वारामितिमंत्रेणप्रणवेनवादाय पीतायाःकपिलायावागोःक्षीरंसप्तपलंद्वादशमाषंवा आप्यायस्वेति प्रणवेनवादाय नीलायाःसप्तपलंदशमाषंवादधि दधिक्राव्णइतिप्रणवेनवादाय कृष्णायाघृतमेकपलमष्टमाषंवा॥शुक्रमसिज्योतिरसितेजोसिइत्यनेनघृतंमिमिक्षेइत्यनेनवाप्रणवेनवादाय ततःदेवस्यत्वेतिआपोहिष्ठेतिप्रणवेनवाकुशोदकमेकपलंचतुर्माषंवाप्रक्षिपेत् एवंगोमूत्रादीन्येकपात्रेकृत्वाप्रणवंसमुच्चार्यहस्तेनालोड्यपुनःप्रणवमुच्चार्ययज्ञियकाष्ठेननिर्मथ्यप्रणवेनाभिमंत्रयेत् ॥ ततःआज्यपंचगव्यासादनाद्याज्यभागांतेस्रुवेण ॥ ॐ भूःस्वाहाअग्नयइदंनमम ॥ ॐ भुवःस्वाहावायवइदं० ॥ ॐ स्वःस्वाहासूर्यायेदं० ॥ ॐ भूर्भुवःस्वःस्वाहाप्रजापतइदंनममेत्याज्यस्यप्रतिदैवतंसप्तविंशतिरित्येवमष्टोत्तरशताहुतीः प्रतिदैवतंसप्तेत्येवमष्टाविंशतिसंख्याहुतीर्वाहुत्वा साग्रैःसप्तपत्रैर्हरितैःकुशैर्दशाहुतीर्जुहुयात् ॥ तत्रमंत्राः ॥ ॐ इरावतीधेनुमतीहिभूतंसूयवसिनीमनुषेदशस्या ॥ व्यस्तभ्नारोदसीविष्णवेतेदाधर्थपृथिवीमभितोंमयूखैःस्वाहा ॥ पृथिव्याइदंनमम १ ॥ ॐ इदंविष्णु० सुरेस्वाहा ॥ विष्णवइदं० २ ॥ ॐ मानस्तोकेतनये० हवामहेस्वाहा ॥ रुद्रायेदं० ३ ॥ ॐ ब्रह्मजज्ञानं० विवःस्वाहा ॥

ब्रह्मणइदं० ४ ( ब्रह्मस्थानेशंनोदेवीतिमंत्रेणाब्ध्यइतिकेचित् ) ॥ ॐ अग्नयेस्वाहा अग्नयइदं० ५ ॥ ॐ सोमायस्वाहासो मायेदं० ६ ॥ तत्सवितुर्वरेण्यं० प्रचोदयात्स्वाहा सूर्यायेदं० ७ ॥ ॐ प्रजापतेन० रयीणांस्वाहा ॥ प्रजापतयइदं० ८ ॥ ॐ स्वाहाप्रजापतयइदं० ९ ॥ अग्नयेस्विष्टकृतेस्वाहा अग्नयेस्विष्टकृतइदं० १० ॥ इतिदशपंचगव्याहुतीर्हुत्वा केवलाज्य स्ययदस्येतिस्विष्टकृतंहुत्वा ॥ प्रायश्चित्तादिहोमशेषंसमाप्य बर्हिषिपूर्णपात्रनिनयनाद्यग्न्युपस्थानपरिस्तरणविसर्जनादियस्य स्मृत्यंते अनेनसर्वप्रायश्चित्तपूर्वांगहोमाख्येनकर्मणायज्ञभोक्तायज्ञनारायणरूपीपरमेश्वरःप्रीयतामित्युक्त्वा ॥ व्रतग्रहणंकरि ष्यइतिद्विजान्पृष्ट्वाकुरुष्वेत्यभ्यनुज्ञातः ॥ यत्त्वगस्थिगतंपापंदेहेतिष्ठतिमामके ॥ प्राशनात्पंचगव्यस्यदहत्यग्निरिवेंधनं ॥ इ त्युक्त्वाप्रणवेनहुतशेषमशेषंगृहीत्वाप्रणवेनैवसर्वंपंचगव्यंपिबेत् ॥ अशक्तौगोमूत्रादिस्वल्पंग्राह्यंसर्वस्यपेयत्वात् ॥ एतच्चग्रा माद्बहिर्नद्यादेस्तीरेनक्षत्रदर्शनेकार्यं ॥ मुमूर्षोस्तुगृहादावेव ॥ अस्मिन्दिनेशक्तस्योपवासःअशक्तौहविष्याशनम् ॥ अयंचेराव तीत्यादिपंचगव्यस्यदशाहुतिहोमोब्रह्मकूर्चाख्यपंचगव्यपानेसर्वत्रोह्यः ॥ गृहमागत्यप्रातरारभ्यसंकल्पितप्रायश्चित्तंसंकल्पित प्रत्याम्नायानुसारेणानुष्ठायोत्तरांगानिकुर्यात् ॥ गोनिष्क्रयरजतादिदानपक्षेपंचगव्यप्राशनांतेइदंषडब्देअशीत्युत्तरशतकृच्छ्र प्रत्याम्नायगोनिष्क्रयीभूतंत्र्यब्देनवतिकृच्छ्रप्रत्याम्नायगोनिष्क्रयीभूतं प्रतिकृच्छ्रंनिष्कतदर्धतदर्धान्यतमप्रमाणंरजतद्रव्यंनाना नामगोत्रेभ्योब्राह्मणेभ्योदातुमहमुत्सृज्यइतिद्रव्यदानसंकल्पंकृत्वातदैवद्रव्यंविभज्यदद्यात् ॥ ॥ ॥

## ॥ ३२२ ॥ अथप्रायश्चित्तोत्तरांगानि ॥

श्रीः ॥ पुनराचमनप्राणायामादिविधाय आचीर्णस्यसर्वप्रायश्चित्तस्यसांगतासिद्ध्यर्थमुत्तरांगानिकरिष्ये ॥ तत्रहोमंकर्तुंस्थंडि

लादिकरिष्ये ॥ विटनामानमग्निंप्रतिष्ठाप्य ध्यात्वासमिद्द्वयमादायसर्वप्रायश्चित्तोत्तरांगहोमेदेवतापरिग्रहार्थमन्वाधानमित्या दिचक्षुषीआज्येनेत्यंतमुक्त्वा अत्रप्रधानं अग्निंवायुंसूर्यंप्रजापतिंचप्रतिदैवतंसप्तविंशतिसप्तान्यतरसंख्याज्याहुतिभिः ॥ शेषे णस्विष्टकृतमित्यादिसद्योयक्ष्यइत्यंतमुक्त्वा समिद्द्वयमग्नावाधायपरिसमूहनाद्याज्यभागहोमांते ॐ भूःस्वाहाअग्नयइदं० ॥ ॐ भुवःस्वाहावायवइदं० ॥ ॐ स्वःस्वाहासूर्यायेदं० ॥ ॐ भूर्भुवःस्वःस्वाहाप्रजापतयइदं० ॥ इत्याज्यस्यसप्तविंशतिःस प्तवेत्येवमष्टोत्तरशताहुतीरष्टाविंशतिसंख्याहुतीर्वाहुत्वा स्विष्टकृदादिहोमशेषंसमाप्य बर्हिषिपूर्णपात्रनिनयनादिश्रीपरमेश्वरः प्रीयतामित्यंतंसर्वंकुर्यात् ॥ ततःआचम्यप्राणानायम्यदेशकालौस्मृत्वाश्रीविष्णुप्रीत्यर्थंप्रायश्चित्तोत्तरांगत्वेनविहितंविष्णुश्रा द्धंकरिष्यइतिसंकल्प्य ॥ शालग्रामशिलायांदर्भबटौवाइदंविष्णुरितिमंत्रेणविष्णुमावाह्यषोडशोपचारैःपंचोपचारैर्वासंपूज्यपा पापहश्रीविष्णुप्रीत्यर्थं सर्वप्रायश्चित्तोत्तरांगविहितविष्णुश्राद्धसंपत्तयेश्रीविष्णूद्देशेनब्राह्मणचतुष्टयभोजनपर्याप्तामनिष्क्रयी भूतंद्रव्यंचतुर्भ्योब्राह्मणेभ्योदातुमहमुत्सृज्येनममेतिसंकल्प्य चतुर्भ्योब्राह्मणेभ्यःपूजनपूर्वकंविभज्यदद्यात् ॥ पापापहमहा विष्णुःप्रीयताम् ॥ ततःसर्वप्रायश्चित्तोत्तरांगत्वेनविहितंगोदानंकरिष्यइतिसंकल्प्य ॥ एकांगांतन्निष्क्रयंवाद्विजायदद्यात् ॥ तद्यथा ॥ गवामंगेषुतिष्ठंतिभुवनानिचतुर्दश ॥ यस्मात्तस्माच्छिवंमेस्यादिहलोकेपरत्रचेतिमंत्रंपठित्वा ॥ इमांगांयथाशक्त्य लंकृतांइदंगोनिष्क्रयद्रव्यंवापापापहमहाविष्णुप्रीत्यर्थंगोत्रायशर्मणेब्राह्मणायदातुमहमुत्सृज्येनममेतिसंकल्पयेत् ॥ एवंप्राय श्चित्तंकृत्वाशक्तौसत्यांदशदानान्यपिकुर्यात् ॥ तानिच ॥ गोभूतिलहिरण्याज्यवासोधान्यंगुडानिच ॥ रौप्यंलवणमित्याहु र्दशदानान्यनुक्रमादिति ॥ एतानिव्रतांगत्वेनविहितानीतिमहार्णवः ॥ मंत्रहीनंक्रियाहीनं० इतिवदन्विष्णुंस्मरेत् ॥ ततो

यन्मयाकृतंसर्वप्रायश्चित्तंतदच्छिद्रमस्त्वितिब्राह्मणाब्रूयुः ॥ यद्वा ॥ व्रतछिद्रंतपश्छिद्रंयच्छिद्रंयज्ञकर्मणि ॥ सर्वंभवतुमेऽच्छिद्रंयस्यचेच्छंतिवैद्विजाइतिप्रतिवचनं ॥ ततःशक्त्यनुसारेणब्राह्मणान्भोजयेदित्यलमतिविस्तरेण ॥ इतिसर्वप्रायश्चित्तप्रयोगः ॥ गृह्याग्निसागरेतस्मिन्नेवदिनेउत्तरांगहोमश्चतस्मिन्नेवाग्नौकार्यइत्युक्तं ॥ तत्रतंत्रप्रयोगचिकीर्षायांपूर्वांगहोमप्रधानदेवताःपंचगव्यहोमप्रधानदेवताश्चसंकीर्त्यततस्तदैवप्रक्रांतप्रायश्चित्तानंतरं उत्तरांगेक्रियमाणेतुप्रधानं अग्निंवायुंसूर्यंप्रजापतिंचप्रतिदैवतंसप्तविंशतिसंख्याज्याहुतिभिः सप्तसंख्याज्याहुतिभिर्वाशेषेणस्विष्टकृतमित्यादिपंचगव्यहोमांतेस्विष्टकृतःप्राक्पंचगव्यंप्राश्य सर्वप्रायश्चित्तीयंद्रव्यंपूर्ववदुत्सृज्योत्तरांगहोमंकृत्वास्विष्टकृदादिहोमशेषंसमाप्यउत्तरांगत्वेनविहितविष्णुश्राद्धगोदानेकृत्वाकर्मशेषंसमापयेदिति ॥ इतिसर्वप्रायश्चित्तप्रयोगः ॥ छ ॥ ॥ छ ॥

## ॥ ३२३ ॥ अथस्त्रीशूद्रप्रायश्चित्तम् ॥

श्रीः ॥ स्त्रीणांहोमःकृताकृतः ॥ करणपक्षेविधवायाःक्षौरांतंपूर्ववत्कृत्वा अमंत्रकाणिदशस्नानानि ॥ सधवायास्तुदंतधावनंकृत्वातूष्णींदशस्नानानि ॥ वस्त्रपरिधानांतेविष्णुश्राद्धगोदानेकृत्वा प्रायश्चित्तहोमार्थमाचार्यत्वांवृणेइतिविप्रंवृत्वा पूर्ववद्विप्रद्वारासर्वपूर्वांगंकारयित्वास्वयंपंचगव्यंतूष्णींप्राश्यमुख्यप्रत्याम्नायद्रव्यंविसृज्योत्तरांगानिकारयेत् ॥ होमाभावपक्षेदशविधस्नानांतेविष्णुश्राद्धगोदानेकृत्वा विप्रेणपंचगव्यंकारयित्वा तूष्णींप्राश्यप्रायश्चित्तद्रव्यंसंकल्प्यदत्वोत्तरांगविष्णुश्राद्धगोदानदशदानानिकुर्यात् ॥ इतिविप्रस्त्रियाःप्रायश्चित्तप्रयोगः ॥ अथशूद्रस्यसंकल्पांतमविकृतंप्राग्वत् ॥ ततःक्षौरांतेअमंत्रकस्ना

नानि॥वस्त्रतिलकधारणांतेविष्णुश्राद्धगोदाने ॥ विप्रद्वारापंचगव्यंकारयित्वास्वयंतूष्णींपिबेत् ॥ शूद्रेणकपिलायाःपंचगव्यानिनपेयानि ॥ नास्यविप्रद्वारापिहोमः ॥ प्रायश्चित्तद्रव्यंसंकल्प्यदत्वोत्तरांगविष्णुश्राद्धगोदानानिदशदानानिचकुर्यात्॥इति॥

## ॥ ३२४ ॥ अथातुरसन्निधौजाप्यम् ॥

प्राणोत्क्रमणकाले गोमयोपलिप्तभूमौकुशोपर्युपविष्टोदक्षिणशिरःशयितोवातुलस्यूर्ध्वपुंड्रगंगामृत्तिकादिपवित्रैरलंकृतःपरमेश्वरंस्मरन्पुत्रोत्संगेधारितशिरस्तिष्ठेत् ॥ ततोनानानमित्यादिस्वयंपठेदन्योवाश्रावयेत् ॥ ततःअद्येत्यादिअमृतत्वप्राप्तिकामनयापुण्यसूक्तादिपाठमहंकरिष्येश्रोष्येवा ॥ नानानमितिसूक्तस्यशिशुरांगिरसःपवमानःसोमःपंक्तिःअमृतत्वप्राप्तयेजपेश्रवणेवाविनियोगः ॥ नानानंवाउंनोधियोविव्रतानिजनानां । तक्षारिष्टंरुतंभिषग्ब्रह्मासुन्वंतमिच्छतींद्रायेंदोपरिस्रव ॥ जरतीभिरोषधीभिःपर्णेभिःशकुनानां । कार्मारोअश्मभिर्द्युभिर्हिरण्यवंतमिच्छतींद्रायेंदोपरिस्रव॥कारुरहंततोभिषगुपलप्रक्षिणीनना। नानाधियोवसूयवोनुगाइवतस्थिमेंद्रायेंदोपरिस्रव ॥ अश्वोवोह्लासुखंरथंहसनामुपमंत्रिणः । शेपोरोमण्वंतौभेदौवारिन्मंडूकइच्छतींद्रायेंदोपरिस्रव ॥ १ ॥ शर्यणावतिसोममिंद्रःपिबतुवृत्रहा । बलंदधानआत्मनिकरिष्यन्वीर्यंमहदिंद्रा० ॥ आपवस्वदिशांपतआर्जीकात्सोममीढ्वः । ऋतवाकेनसत्येनश्रद्धयातपसासुतइंद्रायेंदो० ॥ पर्जन्यवृद्धंमहिषंतंसूर्यस्यदुहिताभरत् । तंगंधर्वाःप्रत्यगृभ्णन्तंसोमेरसमादधुरिंद्रा० ॥ ऋतंवदन्नृतद्युम्नसत्यंवदन्सत्यकर्मन् । श्रद्धांवदन्त्सोमराजन्धात्रासोमपरिष्कृतइंद्रायेंदो० ॥ सत्यमुग्रस्यबृहतःसंस्रवंतिसंस्रवाः । संयंतिरसिनोरसाःपुनानोब्रह्मणाहरइंद्रायेंदो० ॥ २ ॥ यत्रब्रह्मापवमानछंदस्यां३ वाचंवदन् । ग्राव्णासोमेमहीयतेसोमेनानंदंजनयन्निंद्रायेंदो० ॥ यत्रज्योतिरजस्रंयस्मिँल्लोकेस्वर्हितं ॥ तस्मिन्मां

धेहिपवमानामृतेलोकेऽअक्षितइंद्रायेंदो० ॥ यत्रराजावैवस्वतोयत्रावरोधनंदिवः । यत्रामूर्यह्वतीरापस्तत्रमाममृतंकृधींद्रायें दो० ॥ यत्रानुकामंचरणंत्रिनाकेत्रिदिवेदिवः । लोकायत्रज्योतिष्मंतस्तत्रमाममृतंकृ० ॥ यत्रकामानिकामाश्चयत्रब्रध्नस्यवि ष्टपं । स्वधाचयत्रतृप्तिश्चतत्रमाममृतं० ॥ यत्रानंदाश्चमोदाश्चमुदःप्रमुदआसते । कामस्ययत्राप्ताःकामास्तत्रमाममृतं० ॥३॥ यइंदोःपवमानस्यानुधामान्यक्रमीत् । तमाहुःसुप्रजाइतियस्तेसोमाविधन्मनइंद्रायेंदो० ॥ ऋषेमंत्रकृतांस्तोमैःकश्यपोद्वर्धय न्गिरः । सोमंनमस्यराजानंयोजज्ञेवीरुधांपतिरिंद्रायेंदो० ॥ सप्तदिशोनानासूर्याःसप्तहोतारऋत्विजः । देवाआदित्यायेसप्त तेभिःसोमाभिरक्षनइंद्रायेंदो० ॥ यत्तेराजञ्छृतंहविस्तेनसोमाभिरक्षनः । अरातीवामानस्तारीन्मोचनःकिंचनाममदिंद्रायें दो० ॥ ४ ॥ यत्रतत्परमंपदंविष्णोर्लोकेमहीयते । देवैःसुकृतकर्मभिस्तत्रमाममृतंकृधींद्रायेंदो० ॥ यत्रतत्परमाव्यंभूतानाम धिपतिः । भावभाविचयोगींचतत्रमाममृतंकृधींद्रायेंदो० ॥ यत्रगंगाचयमुनायत्रप्राचीसरस्वती । यत्रसोमेश्वरोदेवस्तत्रमा ममृतंकृधींद्रायेंदो० ॥ ५ ॥ इतिनानानंसूक्तं ॥ ततउपनिषद्भागान्अन्यानिचपुण्यसूक्तानिगीतांस्तोत्राणिचसहस्रनामादी निपठेत्शृणुयाद्वा ॥ श्रोतुःसंकल्पाशक्तौश्रावयिताऽमुकशर्मणोस्यामृतत्वरूपफलप्राप्तयेमुकंश्रावयिष्ये इतिसंकल्पयेत् ॥ श्रीरामादिस्मरणंचकार्यं ॥ इतिआतुरसंनिधौजाप्यविधिः ॥ ॥ ॥ ॥ ॥

## ॥ ३२५ ॥ अथमरणोत्तरंविधिः ॥

श्रीः ॥ पूर्वमकृतेप्रायश्चित्तेप्राणोत्क्रमणोत्तरंपुत्रादिःकर्माधिकारीआचम्यप्राणानायम्यदेशकालौसंकीर्त्य ॥ अमुकगोत्रस्यामु

---

१ तत्रपुत्राद्यधिकारिणापित्रादिकमासन्नमरणंदृष्ट्वाषडब्दत्र्यब्दसार्धाब्दादिप्रायश्चित्तंतिलपात्रवैतरणी-उत्क्रांति-मोक्षऋणधेन्वादिदानानिच तेनकर

कशर्मणःपित्रादेःप्रेतस्यजन्मप्रभृत्यद्ययावत् ज्ञानाज्ञानकामाकामसकृदसकृत्कृतकायिकवाचिकमानसिकसांसर्गिकस्पृष्टास्पृष्टभुक्ताभुक्तपीतापीतसकलपातकातिपातकोपपातकलघुपातकसंकरीकरणमलिनीकरणापात्रीकरणजातिभ्रंशकरप्रकीर्णकपातकानांमध्येसंभावितपापानांनिरासार्थं षडब्दत्र्यब्दसार्धाब्दान्यतमप्रायश्चित्तंप्रतिप्राजापत्यकृच्छ्रंतत्प्रत्याम्नायगोनिष्क्रयीभूताताम्रकार्षापणपरिमितद्रव्यदानेनसूतकांतेहमाचरिष्ये ॥ (मात्रादौतुअमुकगोत्रायाःअमुकदायाःप्रेतायाःप्रेतत्वेत्यादिपूर्ववत्सर्वत्र)॥ पुनर्देशकालौस्मृत्वामुकगोत्रस्यामुकशर्मणःपित्रादेःप्रेतस्यऊर्ध्वोच्छिष्टाधरोच्छिष्टोभयोच्छिष्टास्पृश्यस्पृष्टांतरालखट्वामरणादिजनितप्रत्यवायपरिहारार्थं पंचदश-द्वादश-नव-षट्-त्रि-कृच्छ्राद्यन्यतमकृच्छ्रात्मकंप्रायश्चित्तंप्रतिकृच्छ्रंतत्प्रत्याम्नायगोनिष्क्रयीभूतताम्रकार्षापणपरिमितद्रव्यदानेनसूतकांतेहमाचरिष्ये ॥ ॥ रात्रिमृतौदिवादाहे ॥ अमुकगोत्रस्यामुकप्रेतस्यरात्रावकृतसंस्कारजनितप्रत्यवायपरिहारपूर्वकंदाहाद्यधिकारसिद्ध्यर्थं पंचगव्यस्नापनपूर्वकंकृच्छ्रत्रयप्रायश्चित्तंप्रतिकृच्छ्रंतत्प्रत्याम्नायगोनिष्क०सूतकांतेआचरिष्ये ॥ ॥ पुनर्देशकालकथनांतेआत्मशुद्धिद्वारापित्रादेरौर्ध्वदेहिकाधिकारसिद्धयेद्वादश-षट्-त्रि-कृच्छ्राद्यन्यतमंप्रायश्चित्तंप्रतिकृच्छ्रंतत्प्रत्याम्नायगोनिष्क्रयी० ॥ पित्रादेरंत्यकर्माधिकारार्थंवपनंकरिष्ये ॥ कर्तृभिन्नैःपित्रादिमरणनिमित्तंवपनंकरिष्यइतिसंकल्प्य ॥ यानिकानिचपापानिब्रह्महत्यासमानिच ॥ केशानाश्रित्यतिष्ठंति तस्मात्केशान्वपाम्यहं ॥ इतिकक्षोपस्थवर्जंकेशश्मश्रुलोमनखानिदक्षिणसंस्थानिवापयित्वास्नायात् ॥ ॥ ॥

---

णीयानिस्वयंवातमुद्दिश्यकर्तव्यानि । उक्तप्रायश्चित्तादिदानांतविधिमकृत्वापित्रादिमरणेपुत्रादिनाप्रायश्चित्तंकृत्वादाहादिकर्तव्यं दानानित्वेकादशाहे ॥

१ इदंवपनंरात्रिमृतौपरेहनिदिवैवकार्यं । कर्तृभिन्नैस्तदैवदशमेहनिवायथाचारं । भर्तरिमृतेपत्न्याआद्येदशमेहनिवावपनंकार्यं ॥

## ॥ ३२६ ॥ अथगृहात्स्मशानेशवनयनप्रकारः ॥

( तत्रंपूर्वंदशहोत्राभिःप्रेतस्नापनं । इतःसर्वकृत्यंप्राचीनावीतिनाकार्यंदक्षिणापवर्गंच । मंत्रास्तु चित्तिःस्रुगासी३त् । चित्त माज्यमासी३त् । वाग्वेदिरासी३त् । आधीतंबर्हिरासी३त् । केतोअग्निरासी३त् । विज्ञातमग्नीदासी३त् । प्राणोहविरासी ३त् । सामाध्वर्युरासी३त् । वाचस्पतिर्होतासी३त् । मनउपवक्तासी३त् १० । तेवाएतंग्रहमगृह्णत । वाचस्पतेविधेनाम न् । विधेमंतेनाम । विधेस्त्वमस्माकंनामधांगच्छ । इति ) प्रेतंसंस्नाप्यगोपीचंदनतुलसीमूलमृत्तिकाभिरलंकृत्य नलदमा लां ( काळयावाळयाच्यामूळांचीमाळा ) जपामालांवाकंठेप्रतिमुच्य अहतेनवाससाप्रत्यगग्रेणत्रिभिर्भागैःशिरःप्रभृत्यंगुलिप र्यंतंपादतलवर्जंप्रेतमाच्छाद्यतस्यपाददेशस्थंचतुर्थभागंछित्त्वातेनात्मनउत्तरीयंकुर्यात् । द्वादशाहांतंप्रेतकृत्येषुतदेवधारयेत् ॥ ततःशिविकायांप्रेतंप्राक्शिरसमूर्ध्वमुखंशाययित्वा सजातीयाःप्रेतंदाहदेशंप्रतिनयेयुः ॥ श्रौताग्नयःस्मार्ताग्निर्वाग्रेन्येननेत व्यः । प्रेताग्न्योर्मध्येऽन्येननगंतव्यं ॥ सर्वेसपिंडादयोऽधःकृतोपवीताअप्रावरणामुक्तकेशावृद्धपुरःसराःप्रेतमनुगच्छेयुः ॥ तत्रब्राह्मणोनगरस्यपश्चिमद्वारेणनेयः ॥ पथिमध्येशिविकांनिधाय ( सक्तुपिंडद्वयंकृत्वा ॥ अतिद्रवेतिद्वयोर्यमश्वानौत्रिष्टुप् अध्वनिपिंडदानेवि० ॥ अतिद्रवसारमेयौश्वानौचतुरक्षौशबलौसाधुनापथा ॥ अथापितॄन्सुविदत्राँऽउपेहियमेनयेसधमादं

१ अयंधनुश्चिह्नांतर्गतःस्नानविधिरप्रेतनमध्वपिंडदानंचप्राचीननारायणभट्टप्रयोगेपुनोपलभ्यतेतथापिबहुत्रकुर्वंतीत्यत्रोपन्यस्तं ॥ २ अत्राध्वपिंडतः पूर्वंइमेजीवेत्यस्यसंकुसुकोमृत्युस्त्रिष्टुप्प्रेतमुखावलोकनेवि० ॥ इमेजीवाविमृतैरावृत्रन्नभूद्भद्रादेवहूतिर्नोअद्य ॥ प्रांचोअगामनृतयेहसायद्राघीयआयुः प्रतरंदधानाः ॥ इतिमुखावलोकनं वातास्तेवांत्वित्यनेनांजलिदानंचक्वचित्पुस्तकेषूपलभ्यतेपरंतुप्रचुरप्रचाराभावान्नसंगृहीतं ॥

मदंति ॥ शवस्यदक्षिणेश्यामायायंपिंडउपतिष्ठतु ॥ यौतेश्वानौयमरक्षितारौचतुरक्षौपथिरक्षीनृचक्षसौ ॥ ताभ्यामेनंपरिदेहिराजन्स्वस्तिचास्माअनमीवंचधेहि ॥ प्रेतवामभागेशबलायायंपिंडउपतिष्ठतुइत्यध्वपिंडद्वयंदत्वा ) ततोवाहकाव्युत्क्रमेण प्रेतंवहंतःशिविकांश्मशानदेशंनिदध्युः ॥ दाहदेशाद्वायव्यामग्निंनिदध्यात् ॥ ततोमध्यदेशोच्छ्रितंसमंतान्निम्नंबहुलौषधिकं श्मशानंकल्पयित्वाकंटकिक्षीरवृक्षादीन्युद्वास्यतत्रभूम्यैकदेशंआग्नेय्यांनैर्ऋत्यांवाप्रकल्प्यतत्रवायवीप्रभृत्याग्नेयीपर्यंतं ऊर्ध्वबाहुनरायामंदीर्घमाग्नेयीप्रवणंईशानीमारभ्यनिर्ऋतिपर्यंतंपंचारत्निमात्रंतिर्यगायतंद्वादशांगुलमधःखातंगर्तंखानयेत् ॥ ॥

## ॥ ३२७ ॥ अथप्रेतस्यपुनःसंधानम् ॥

श्रीः ॥ मृतस्यगृह्याग्निविच्छेदे देशकालौनिर्दिश्यअमुकगोत्रस्यामुकशर्मणःपित्रादेःगृह्याग्निविच्छेददिनादारभ्यएतावंतंकालंगृह्याग्निविच्छेदजनितप्रत्यवायपरिहारद्वाराश्रीपरमेश्वरप्रीत्यर्थं प्रत्यब्दंएककृच्छ्रप्रायश्चित्तंतत्प्रत्याम्नायगोनिष्क्रयीभूतयथाशक्तिरजतद्रव्यदानद्वारासूतकांतेहमाचरिष्ये ॥ गृह्याग्निविच्छेदेनलुप्तानांसायंप्रातर्होमानांतथादर्शपूर्णमासस्थालीपाकानांचव्रीह्यादिद्रव्यमाज्यंचतन्निष्क्रयंवासूतकांतेब्राह्मणेभ्योदातुमहमुत्सृज्ये ॥ आचम्यअमंत्रकंप्राणायामंकृत्वातिथ्यादिसंकीर्त्यप्राचीनावीतीअमुकगोत्रस्यामुकशर्मणःपित्रादेःअग्निविच्छेदनिमित्तकंदाहायाग्निसिद्ध्यर्थंप्रेताधानंकरिष्ये ॥ चतुरस्रंस्थंडिलंकृत्वासंभारान्यथालाभंसंपाद्यतद्गोमयेनोपलिप्ययज्ञियकाष्ठेनोल्लिख्यलौकिकाग्निंस्थंडिलस्याग्नेय्यांनिधाय जुष्टोदमूनेत्यादिनावाह्यव्याहृतिभिरग्निंप्रतिष्ठाप्यसमिध्यचत्वारिशृंगेतिध्यात्वापरिसमुह्यपरिस्तीर्यपर्युक्ष्य अग्नेरुत्तरतोदर्भेषुप्रोक्षणीस्रुवौआज्यपात्रंसंमार्गदर्भानासाद्यप्रोक्षणीपात्रमुत्तानंकृत्वा तत्रानंतर्गर्भितसाग्रसमस्थूलप्रादेशमात्रेकुशद्वयरूपेपवित्रेनिधाय

शुद्धाभिरद्भिस्तत्पात्रंपूरयित्वागंधादिक्षिप्त्वाहस्तयोरंगुष्ठोपकनिष्ठिकाभ्यामुदगग्रेपृथक्पवित्रेधृत्वापस्त्रिरुत्पूय पात्राण्युत्ताना निकृत्वासर्वाणित्रिःप्रोक्षेत् ॥ तेपवित्रेआज्यपात्रेनिधायआज्यपात्रंपुरतःसंस्थाप्यतस्मिन्नाज्यमासिच्यअग्नेरुत्तरतोदर्भेषुस्वस्था नेनिधायज्वलतादर्भोल्मुकेनावज्वल्यअंगुष्ठपर्वमात्रंप्रक्षालितंदर्भाग्रद्वयमाज्येप्रक्षिप्य पुनर्ज्वलतातेनैवदर्भोल्मुकेनआज्यंत्रिः पर्यग्निकृत्वातदुल्मुकंनिरस्यअपउपस्पृश्यसवितुष्ट्वेतिउत्पूयअग्नौपवित्रंप्रहरेत् ॥ ततआत्मनोग्रतोभूमिंप्रोक्ष्यतत्रास्तीर्णदर्भेषु आज्यपात्रंनिधायस्रुवंसंमृज्यतूष्णीमग्निमभ्यर्च्य ॥ अयाश्चेतिविमदोअयाळग्निःपंक्तिःप्रेताधानांगाज्यहोमेविनियोगः ॥ ॐ अयाश्चाग्नेस्यनभिशस्तीश्चसत्यमित्वमयाअसि ॥ अयासावयंसाकृतोयासन्हव्यमूहिषेयानोधेहिभेषजंस्वाहा ॥ अयसेग्नयइदं॥ इत्याज्याहुतिंहुत्वा ॥ यस्याग्नयोजुह्वतोमांसकामाःसंकल्पयंतोयजमानमांसं ॥ जानंतुतेहविषेसादितायस्वर्गलोकमिमंप्रेतंन यंतुस्वाहास्वरिदं ॥ भूःस्वाहाअग्नयइदं ॥ भुवःस्वाहावायवइदं ॥ स्वःस्वाहासूर्यायेदं ॥ भूर्भुवःस्वःस्वाहाप्रजापतयइदं ॥ एवंहुत्वापरिस्तरणानिविसृज्यपुनःपरिसमुह्यपर्युक्ष्याग्निंसंपूज्यविष्णुंस्मरेत् ॥ एवमौपासनःसिद्धोभवति ॥ ॥ ६१ ॥

## ॥ ३२८ ॥ अथौर्ध्वदेहिकविधिः ॥

श्रीः ॥ ततोदाहगर्तादीशानेजानुमात्रंवितस्तिमात्रंवागर्तंकृत्वाजलमापूर्यतत्रावकांशीपालं (शैवालं) चनिक्षिपेत् ॥ अस्मिन्क र्मणिप्रायःप्राचीनावीतित्वमाग्नेय्यभिमुखतादक्षिणापवर्गत्वंचज्ञेयं ॥ ततःकर्ताहस्तौपादौप्रक्षाल्यआचम्यअमंत्रकंप्राणायामं

---

१ भर्तुःपूर्वंपत्नीमरणेप्येवं। ब्रह्मचारिविधुरविधवाऽविवाहितानुपनीतकन्यापुत्रनिरग्निकभार्यादीनांकपालाग्निनालौकिकाग्निनावादाहः । अग्निवर्णकपाले करीषादिनोत्पादितोभूर्भुवःस्वःस्वाहेत्याज्याहुत्यासंस्कृतोऽग्निःकपालाग्निः । लौकिकाग्निश्चांत्यजाग्निपतिताग्निसूतिकाग्निचित्यग्न्यमेध्याग्निभिन्नोग्राह्यः ।

कृत्वादेशकालौसंकीर्त्य ॥ अमुकगोत्रस्यामुकशर्मणःपित्रादेःप्रेतस्यप्रेतत्वविमोक्षार्थंऔर्ध्वदेहिकंकरिष्येइतिसंकल्प्य ॥ प्राचीनावीती ॥ उपसर्पेतिसंकुसुकःपितृमेधास्त्रिष्टुप् ॥ भूमिप्रार्थनेविनियोगः ॥ उपसर्पमातरंभूमिमेतामुरुव्यचसंपृथिवींसुशेवां॥ ऊर्णम्रदायुवतिर्दक्षिणावतएषात्वापातुनिर्ऋतेरुपस्थात् ॥ अपसर्पंतुतेप्रेतायेकेचिदिहपूर्वजाः ॥ स्वस्तिनःकृणुतामाशुआपातःपुनरागमत् ॥ इतिभूमिंप्राथ्र्य ॥ दिविजाताअप्सुजातायाजाताओषधीभ्यः ॥ अथोयाअग्निजाआपस्तानःशुंधंतुशुंधनीः ॥ इतिस्थलशुद्धिंकृत्वा ॥ अपेतेतियमःपितरस्त्रिष्टुप् ॥ भूमिप्रोक्षणेवि० ॥ अपेतवीतविचसर्पतातोस्माऽएतंपितरोलोकमक्रन् ॥ अहोभिरद्भिरक्तुभिर्व्यक्तंयमोददात्यवसानमस्मै ॥ इतिमंत्रेणपूर्वोक्तगर्तोदकेनान्यजलेनवाशमीशाखयात्रिरप्रदक्षिणंपरिव्रजन्खातंप्रोक्षेत् ॥ प्रतिपरिव्रजनंमंत्रावृत्तिः ॥ ततोवायव्यांखातांतरेतद्बहिर्वात्रिकोणंस्थंडिलंकृत्वोपलिप्योल्लिख्यअग्नेत्वंक्रव्यादनामासीतिऔपासनाग्निंप्रतिष्ठापयेत्[1] ॥ कुशमूलेनखातमध्येयमायदहनपतयेचोल्लिखामिइत्येकांरेखामुल्लिख्य ॥ कालायदहनपतयेचोल्लिखामिइतिउत्तरतः ॥ मृत्यवेदहनपतयेचोल्लिखामीतिदक्षिणतउल्लिख्य तासुतिलोदकंनिक्षिपेदेभिर्मंत्रैः ॥ यमायदहनपतयेपितृभ्यःस्वधानमःइतिमध्यरेखायां ॥ कालायदहनपतयेपितृभ्यःस्वधानमःइतिमध्यादुत्तरस्यां ॥ मृत्यवेदहनपतयेपितृभ्यःस्वधानमइतिमध्याद्दक्षिणस्यां ॥ ततःखातेहिरण्यशकलानितिलांश्चप्रक्षिप्य सजातीयाहृतैर्यज्ञियकाष्ठैश्चितिंकुशलःकुर्यात् ॥ ततःकर्तातस्यांबर्हिरास्तीर्यतदुपरिऊर्ध्वलोमकृष्णाजिनमास्तीर्यप्रेतमग्नेरुत्तरेणनीत्वादक्षिणशिरस्कंचितौनिवेशयेत् ॥ ततःप्रेतस्यमुखे नासिकाद्वये चक्षुर्द्वये श्रोत्रद्वये एवंसप्तछिद्रेषुहिरण्यशकलानि तदभावेआज्यविंदून्वानिक्षिप्य प्रेत

१ यस्यकपालाग्निर्लौकिकाग्निर्वातस्यतुव्याहृतिभिःक्रव्यादनामानमग्निंप्रतिष्ठाप्यखातोल्लेखनंकुर्यात् ॥

शरीरेघृताक्तांस्तिलान्प्रक्षिप्य ॥ ततोदेशकालौसंकीर्त्यप्रेतोपासनंकरिष्येइतिसंकल्प्य समिद्द्वयमादाय अग्निंकामंलोकंअ
नुमतिंएताःप्रधानदेवताःअग्नावाज्येनप्रेतंप्रेतोरसिआज्येनयक्ष्ये ॥ व्याहृतीनांपरमेष्ठीप्रजापतिःप्रजापतिर्बृहती अन्वाधानस
मिद्धोमेविनियोगः ॥ ॐ भूर्भुवःस्वःस्वाहाप्रजापतयइदंनमम ॥ अग्निंपरिसमुह्यचितिसहितमग्निंपरिस्तीर्यदक्षिणतोऽग्नेःपर्यु
क्ष्यप्रोक्षणींस्रुवंचमसंआज्यभाजनंचेतिएकैकशःउत्तानानिपात्राण्यासादयेत् ॥ ततोगर्तोदकंचमसेआसिच्यदर्भैराच्छाद्यप्रण
येत् ॥ इममग्नइतिदमनोग्निस्त्रिष्टुप्चमसानुमंत्रणेविनियोगः ॥ इममग्नेचमसंमाविजिह्वरःप्रियोदेवानामुतसोम्यानां ॥ एष
यश्चमसोदेवपानस्तस्मिन्देवाअमृतामादयंते ॥ इतिचमसानुमंत्रणंकृत्वा प्रोक्षण्यांकुशैकरूपंपवित्रंनिधायजलमापूर्यगंधादि
क्षिप्त्वाअपस्त्रिरुत्पूयपात्राणिसंप्रोक्ष्यअन्यदर्भेणाच्छाद्य तत्पवित्रंआज्यपात्रेनिधाय आज्यपात्रंपुरतःसंस्थाप्यतस्मिन्नाज्यमा
सिच्यस्वस्थानेनिधायज्वलतादर्भोल्मुकेनावज्वल्य अंगुष्ठपर्वमात्रंप्रक्षालितंदर्भाग्रद्वयमाज्येप्रक्षिप्यपुनर्ज्वलतातेनैवदर्भोल्मुके
नाज्यंत्रिःपर्यग्निकृत्वातदुल्मुकंनिरस्यापःस्पृष्ट्वातत्रस्थमेवाज्यंतूष्णीमुत्पूयपवित्रमद्भिःप्रोक्ष्याग्नौप्रहरेत् ॥ ततआत्मनोग्रतोभू
मिंप्रोक्ष्यतत्रदर्भेषुआज्यपात्रंनिधायस्रुवंदक्षिणहस्तेनगृहीत्वासव्येनदर्भानादायसहैवाग्नौप्रताप्य दर्भाग्रैःस्रुवस्यबिलंपृष्ठंचत्रिः
संमृज्यमूलैर्मूलंचप्रोक्ष्यप्रताप्यआज्यादुत्तरतःसंस्थाप्यतूष्णीमग्निमलंकृत्यवामंजान्वाच्य प्राचीनावीतीपराचीनपाणिःस्रुवेणा
ज्यंजुहुयात् ॥ अग्नयेस्वाहा अग्नयइदं० ॥ कामायस्वाहा कामायेदं० ॥ लोकायस्वाहा लोकायेदं० ॥ अनुमतयेस्वाहा
अनुमतयइदं० ॥ एवंचतस्रआज्याहुतीर्हुत्वा ॥ अस्माद्वैत्वमजायथाअयंत्वदभिजायतां ॥ असौस्वर्गायलोकायस्वाहेतिमंत्रे
णप्रेतस्योरसिपंचमींजुहुयात् ॥ असावित्यत्रसंबुद्ध्याप्रेतनामनिर्दिशेत् ॥ अमुकप्रेतायेदंनममेतित्यजेत् ॥ अत्रस्विष्टकृतंपात्र

संयोजनंचनास्ति ॥ एवंप्रेतोपासनंकृत्वाततःसक्तुपिंडेनअपूपपंचकंकृत्वापृषदाज्येनाभिघार्य ॥ अग्नेर्वर्मेतिदमनोग्निस्त्रिष्टुप्प्रेत स्यललाटेमुखेचसक्तुपिंडदानेविनियोगः ॥ अग्नेर्वर्मपरिगोभिर्व्ययस्वसंप्रोर्णुष्वपीवसामेदसाच ॥ नेत्वाधृष्णुर्हरसाजर्हृषाणोद धृग्विधक्ष्यन्पर्यंखयाते॥ इतिललाटेमुखेचद्वौपिंडौदत्वा ॥ अतिद्रवेतिमंत्रद्वयस्ययमश्वानौत्रिष्टुप् बाहुद्वयेहृदयेचसक्तुपिंडदा नेवि० ॥ अतिद्रवसारमेयौश्वानौचतुरक्षौशबलौसाधुनापथा ॥ अथापितृन्त्सुविदत्रांउपेहियमेनयेसधमादंमदंति ॥ यौते श्वानौयमरक्षितारौचतुरक्षौपथिरक्षीनृचक्षसौ ॥ ताभ्यामेनंपरिदेहिराजन्त्स्वस्तिचास्माअनमीवंचदेहि ॥ इतिबाहुद्वयेपिंड द्वयंहृदयेएकःपिंडइत्येवंपंचसक्तुपिंडान्दद्यात् ॥ ततोधनिष्ठापंचकत्रिपान्नक्षत्रादौमरणेतद्विधिंकृत्वानंतरंचितिपूरणंकार्यं ॥

## ॥ ३२९ ॥ अथापंचकादिदाहविधिः ॥

श्रीः ॥ पंचकमरणेशवसमीपेदेशकालौसंकीर्त्यअमुकगोत्रस्यामुकशर्मणःपित्रादेःप्रेतस्यधनिष्ठापंचकमरणसूचितवंशारिष्टवि नाशार्थंपंचकविधिंकरिष्ये ॥ दर्भमयीःयवपिष्टानुलिप्ताऊर्णासूत्रवेष्टिताःपंचप्रतिमाःकृत्वानक्षत्रमंत्रैरभिमंत्र्यगंधपुष्पैःसंपू ज्यप्रथमांशिरसि द्वितीयांनेत्रयोः तृतीयांवामकुक्षौ चतुर्थीनाभौ पंचमींपादयोः इतिन्यस्यतासुक्रमेणाज्यंजुहुयादेभिर्मंत्रैः ॥ प्रेतवाहायस्वाहा प्रेतवाहायेदं ॥ प्रेतसखायस्वाहा प्रेतसखायेदं ॥ प्रेतपायस्वाहाप्रेतपायेदं ॥ प्रेतभूमिपायस्वाहा प्रेतभूमि पायेदं ॥ प्रेतहर्त्रेस्वाहा प्रेतहर्त्रइदं ॥ ततःतदुपरिउदकधारांदत्वा ॥ यमायसोमंसुनुतयमायजुहुताहविः ॥ यमंहयज्ञोगच्छ त्यग्निर्दूतोअरंकृतःस्वाहा ॥ यमायेदं ॥ त्र्यंबकंयजामहेसुगंधिंपुष्टिवर्धनं॥ उर्वारुकमिवबंधनान्मृत्योर्मुक्षीयमामृतात्स्वाहा॥

१ तत्रायंविशेषः ॥ नक्षत्रांतरेमृतस्यपंचकेदाहप्राप्तौपुत्तलविधिरेवनशांतिकं ॥ पंचकमृतस्यनक्षत्रांतरेश्विन्यादौदाहप्राप्तौशांतिकमेवनपुत्तलविधिः ॥

मृत्युंजयायेदं ॥ इतिप्रत्येकंप्रतिमासुआज्याहुतीर्जुहुयात् ॥ ततःप्रेतमुखेकनकहीरकनीलपद्मरागमौक्तिकेतिपंचरत्नानितद
भावेकर्षार्धस्वर्णंतदभावेघृतंदत्वापुत्तलैःसहप्रेतंदहेत् ॥ ॥ त्रिपादृक्षमरणे ॥ अमुकत्रिपादनक्षत्रमरणसूचितवंशारिष्ट
विनाशार्थंतद्विधिंकरिष्ये ॥ पूर्ववत्पुत्तलिकात्रयंनिर्माय संपूज्यदाहसमये प्रथमांशिरसि द्वितीयांनेत्रयोः तृतीयांकुक्षौ एवं
न्यस्य प्रेतवाह १ प्रेतसख २ प्रेतप ३ इतिनामभिस्तदुपरिपूर्ववद्धृतंहुत्वायथालिंगंत्यक्त्वाउदकधारांदत्वा यमायसोमंत्र्यं
बकमितिमंत्राभ्यांप्रत्येकमाहुतिद्वयंहुत्वाप्रतिप्रतिमां ॥ वहवपांजातवेदःपितृभ्योयत्रैनान्वेत्थनिहितान्पराके ॥ कुल्याउप्र
ताःक्षरंतुसत्याएताआशिषःसंतुकामैःस्वाहा ॥ अग्नयेजातवेदसइदं० ॥ ॥ त्रिपुष्करद्विपुष्करमरणे ॥ देश० अमुकत्रि
पुष्करयोगेद्विपुष्करयोगेवामरणसूचितवंशारिष्टविनाशार्थंकृच्छ्रत्रयप्रायश्चित्तंयथाशक्तिद्रव्यदानद्वाराहमाचरिष्ये ॥ पुनर्दे
श० अमुकस्यत्रिपुष्करयोगमरणसूचितवंशारिष्टविनाशार्थंत्रिपुष्करविधिंकरिष्ये ॥ त्रिपादवत्प्रतिमात्रयकरणाद्याज्याहुत्यं
तंसर्वंकुर्यात् ॥ द्विपुष्करेतुप्रतिमाद्वयंकृत्वाप्रेतशिरसि १ नेत्रयोः २ न्यस्य प्रेतवाह प्रेतसख इतिनामभ्यांपूर्ववद्धृतं
हुत्वान्यत्सर्वंपूर्ववत्कुर्यात् ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥

## ॥ ३३० ॥ अथचितिपूरणम् ॥

श्रीः ॥ ततश्चितिंपरिपूर्य ॥ क्रव्यादमितिदमनोग्निस्त्रिष्टुप् ॥ अग्निप्रज्वालनेविनियोगः ॥ क्रव्यादमग्निंप्रहिणोमिदूरंयमरा
ज्ञोगच्छतुरिप्रवाहः ॥ इहैवायमितरोजातवेदादेवेभ्योहव्यंवहतुप्रजानन् ॥ इतिमंत्रेणपुंसःशिरोदेशेस्त्रियाःपाददेशेऽग्निंप्र
ज्वाल्यवक्ष्यमाणमंत्रैर्वस्त्रपल्लवैश्चितौवायुःकार्यः ॥ वातास्तेवांतुपथिपुण्यगंधामनःसुखागात्रसुखानुलोमाः ॥ त्वचःसुखामांस

सुखांअस्थिसौख्यावहंतुत्वांमरुतःसुकृतांयत्रलोकाः ॥ ॥ इमाआपोमधुमत्योस्मिंस्तेलोकउपदुह्यंतामक्षीयमाणाःस्वधानमः ॥
इमाआपोमधुत्योंतरिक्षेतेलोकउपदुह्यंतामक्षीयमाणाःस्वधानमः ॥ इमाआपोमधुमत्यःस्वर्गेतेलोकउपदुह्यंतामक्षीयमाणाः
स्वधानमः ॥ ततोदह्यमानंप्रेतंतिलप्रक्षेपेणानुमंत्रयीत ॥ प्रेहिप्रेहीतिद्वयोर्यमःपितरस्त्रिष्टुप् ॥ दह्यमानप्रेतानुमंत्रणेविनि
योगः ॥ प्रेहिप्रेहिपथिभिःपूर्व्येभिर्यत्रानःपूर्वेपितरःपरेयुः ॥ उभाराजानास्वधयामदंतायमंपश्यासिवरुणंचदेवं ॥ संगच्छ
स्वपितृभिःसंयमेनेष्टापूर्तेनपरमेव्योमन् ॥ हित्वायावद्यंपुनरस्तमेहिसंगच्छस्वतन्वासुवर्चाः ॥ अतिद्रवेतिद्वयोर्यमश्वानौत्रि
ष्टुप् ॥ दह्यमानप्रेतानु० ॥ अतिद्रवसारमेयौश्वानौचतुरक्षौशबलौसाधुनापथा ॥ अथापितृन्त्सुविदत्राँउपेहियमेनयेसधमा
दंमदंति ॥ यौतेश्वानौयमरक्षितारौचतुरक्षौपथिरक्षीनृचक्षसौ ॥ ताभ्यामेनंपरिदेहिराजन्त्स्वस्तिचास्माअनमीवंचधेहि ॥
नैनमितिषण्णांदमनोग्निस्त्रिष्टुप् ॥ दह्यमानप्रेतानु० ॥ मैनमग्नेविदहोमाभिशोचोमास्यत्वचंचिक्षिपोमाशरीरं ॥ यदाशृतंकृणवो
जातवेदोथेमेनंप्रहिणुतात्पितृभ्यः ॥ शृतंयदाकरसिजातवेदोथेमेनंपरिदत्तात्पितृभ्यः॥ यदागच्छात्यसुनीतिमेतामथादेवानां
वशनीर्भवाति ॥ सूर्यंचक्षुर्गच्छतुवातमात्माद्यांचगच्छपृथिवींचधर्मणा ॥ अपोवागच्छयदितत्रतेहितमोषधीषुप्रतितिष्ठाशरी
रैः ॥ अजोभागस्तपसातंतपस्वतंतेशोचिस्तपतुतंतेअर्चिः ॥ यास्तेशिवास्तन्वोजातवेदुस्ताभिर्वहैनंसुकृतामुलोकं ॥ अवसृज
पुनरग्नेपितृभ्योयस्तऽआहुतश्चरतिस्वधाभिः ॥ आयुर्वसानऽउपवेतुशेषःसंगच्छतांतन्वाजातवेदः ॥ यत्तेकृष्णःशकुनऽआतु
तोदपिपीलःसर्पउतवाश्वापदः ॥ अग्निष्टद्विश्वादगदंकृणोतुसोमश्चयोब्राह्मणाँऽआविवेश ॥ ॥ पूषात्वेतिचतसृणांदेवश्रवाः
पूषात्रिष्टुप् ॥ दह्यमानप्रेतानु० ॥ पूषात्वेतश्च्यावयतुप्रविद्वानननष्टपशुर्भुवनस्यगोपाः ॥ सत्वैतेभ्यःपरिददत्पितृभ्योग्निर्देवे

भ्यः सुविदुत्रियेभ्यः ॥ आयुर्विश्वायुःपरिपासतित्वापूषात्वापातुप्रपथेपुरस्तात् ॥ यत्रासतेसुकृतोयत्रतेययुस्तत्रत्वादेवःस
वितादधातु ॥ पूषेमाआशाऽअनुवेदसर्वाःसोऽअस्माँअभयतमेननेषत् ॥ स्वस्तिदाऽआघृणिःसर्ववीरोप्रयच्छन्पुरएतुप्रजा
नन् ॥ प्रपथेपथामजनिष्टपूषाप्रपथेदिवःप्रपथेपृथिव्याः ॥ उभेअभिप्रियतमेसधस्थेआचपराचचरतिप्रजानन् ॥ ॥ उपस
र्पेतिचतसृणांसंकुसुकःपितृमेधास्त्रिष्टुप् द्वितीयाप्रस्तारपंक्तिः चतुर्थीजगती ॥ दह्यमानप्रेतानु० ॥ उपसर्पमातरंभूमिमेतामु
रुव्यचसंपृथिवींसुशेवां ॥ ऊर्णम्रदायुवतिर्दक्षिणावतएषात्वापातुनिर्ऋतेरुपस्थात् ॥ उच्छ्वंचस्वपृथिविमानिबाधथाःसूपाय
नास्मैभवसूपवंचना ॥ मातापुत्रंयथासिचाभ्येनंभूमऊर्णुहि ॥ उच्छ्वंचमानापृथिवीसुतिष्ठतुसहस्रंमितउपहिश्रयंतां ॥ तेगृहा
सोघृतश्चुतोभवंतुविश्वाहास्मैशरणाःसंत्वत्र ॥ उत्तेस्तभ्नामिपृथिवींत्वत्परीमंलोगंनिदधन्मोऽअहंरिषं ॥ एतांस्थूणांपितरोधार
यंतुतेत्रायमःसादनातेमिनोतु ॥ ॥ सोमएकेभ्यइतिपंचानांयमोभाववृत्तोनुष्टुप् ॥ दह्यमानप्रेतानु० ॥ सोमएकेभ्यःपवते
घृतमेकउपासते ॥ येभ्योमधुप्रधावतितांश्चिदेवापिगच्छतात् ॥ तपसायेअनाधृष्यास्तपसायेस्वर्ययुः॥तपोयेचक्रिरेमहस्तां०॥
येयुध्यंतेप्रधनेषुशूरासोयेतनूत्यजः ॥ येवासहस्रदक्षिणास्तांश्चिदेवापिगच्छतात् ॥ येचित्पूर्वऋतसापऽऋतावानऋतावृधः ॥
पितृन्तपस्वतोयमतांश्चिदेवापिगच्छतात् ॥ सहस्रणीथाःकवयोयेगोपायंतिसूर्यं ॥ ऋषीन्तपस्वतोयमतपोजाँऽअपिगच्छता
त् ॥ उरूणसावित्यस्ययमश्वानौत्रिष्टुप् ॥ दह्यमानप्रेतानु० ॥ उरूणसावसुतृपाउदुंबलौयमस्यदूतौचरतोजनाँऽअनु ॥ ता
वस्मभ्यंदृशयेसूर्यायपुनर्दातावसुमद्येहभद्रं ॥ एतैर्मंत्रैर्दह्यमानंप्रेतमनुमंत्र्य ॥ ॥ ततःकर्तासव्यंसेजलपूर्णकुंभंगृहीत्वाश्मशा
नस्थितंनातिस्थूलमस्फुटितंश्लक्ष्णमश्मानमादायकुंभस्यपृष्ठभागेतेनाश्मनाछिद्रंकृत्वाप्रेतपाददेशादारभ्यतत्पर्यंतमप्रदक्षिणं

परिव्रजन्जपेत् ॥ वातास्तेवांतुपथिपुण्यगंधामनःसुखागात्रसुखानुलोमाः ॥ त्वचःसुखामांससुखाअस्थिसौख्यावहंतुत्वांमरुतःसुकृतांयत्रलोकाः ॥ इमाआपोमधुमत्योस्मिंस्तेलोकउपदुह्यंतामक्षीयमाणाःस्वधानमः ॥ इत्येकवारंपरिक्रम्यपाददेशएवस्थित्वा तेनैवाश्मनाकुंभेद्वितीयच्छिद्रंकृत्वाव्रजन्जपेत् ॥ वातास्तेवांतु० ॥ इमाआपोमधुमत्योंतरिक्षेतेलोकउपदुह्यंतामक्षीयमाणाःस्वधानमः ॥ पुनस्तथैवतृतीयच्छिद्रंकृत्वापूर्ववद्व्रजन्जपेत् ॥ वातास्तेवांतु० ॥ इमाआपोमधुमत्यःस्वर्गेतेलोकउपदुह्यंतामक्षीयमाणाःस्वधानमः ॥ एवंत्रिःपरिक्रम्यप्रेतशिरोदेशेकुंभंस्फोटयित्वाशिलाहस्तःकर्ता ॥ इमेजीवाःसंकुसुकोमृत्युस्त्रिष्टुप्॥सव्यमावृत्यगमनेविनि०॥इमेजीवाविमृतैरावंवृत्रन्नभूद्भद्रादेवहूतिर्नोऽअद्य ॥ प्रांचोअगामनृतयेहसायद्राघीयआयुःप्रतरंदधानाः ॥ इतिमंत्रंजपेत्॥ततःकर्तृसहिताःसव्यावृत्ताभूत्वापृष्ठतोनवेक्षमाणाःकनिष्ठपूर्वाःकर्तृपुरःसरंसर्वेनिर्गच्छेयुः ॥

## ॥ ३३१ ॥ अथतिलांजलिदानम् ॥

श्रीः ॥ ततोयत्रोदकमवहत्स्थिरंभवतितत्रसर्वेगत्वाकपालस्फोटनानंतरंसपिंडाःसोदकाःसगोत्रिणःस्त्रियश्चापिसर्वेमुक्तकेशाएकवाससोदक्षिणामुखाः महाजलेशरीरमलंपूर्वपरिहितंवस्त्रंचप्रक्षाल्यपुनस्तत्परिधायसर्वेएकदानिमज्ज्यपुनःकैश्चिदुक्तेनअपनइतिमंत्रेणवामहस्तेनअनामिकयाजलावलोडनंकृत्वा सचैलंस्नात्वाचम्योत्तीर्ययेनाश्मनाकुंभच्छिद्राणिकृतानितमश्मानंशुचौतीरेदक्षिणाग्रेषुदर्भेषुस्थापयित्वातस्योपरिसतिलमेकैकंजलांजलिंदक्षिणहस्तपितृतीर्थेनसव्योत्तरपाणिकायुगपदयुग्मादद्युःअपसव्येनअमुकगोत्रअमुकप्रेतैतत्तेतिलोदकमुपतिष्ठतामिति ॥ ब्रह्मचारीतुनदद्यात् ॥ पितृमातृगुर्वाचार्यमातामहमातामहीभ्यःसोपिदद्यात् ॥ शववाहकैश्चांजलिर्देयः ॥ अन्येसुहृदोदद्युर्नवा ॥ दानेपिनाश्मनियमः॥ पतितभ्रात्यादयोनदद्युः ॥

ततोमुकगोत्रस्यअमुकप्रेतस्यदाहजनिततापोपशमनार्थइदंतेवासोदकमुपतिष्ठतामितिकर्ताश्मनिउत्तरीयोदकंदद्यात् ॥ ततःक
र्तृभिन्नाःसर्वेसपिंडादयःशवस्पर्शिनश्चान्यानिवासांसिपरिधायार्द्राण्यधोदशानिसकृन्निष्पीड्यशोषणार्थमुदग्दशानिनिक्षिप्य
दिनदाहेआतारकोदयात् रात्रिदाहेआदित्योदयात्तत्रैववसीरन् ॥ शववाहकानामप्येवंनियमः ॥ ॥ ७ ॥

## ॥ ३३२ ॥ अथप्रथमदिनविधिः ॥

श्रीः ॥ कर्तातुआर्द्रवस्त्रःतस्मिन्दिनेतत्कालएवअन्यदिनेषुवा पूर्वाह्णएवप्रागुदीच्यांग्रामाद्बहिःसरित्संगमेमहाजलसन्निधौवा
गत्वाभूमिंसंशोध्यतत्रदशाहांतंकर्मकुर्यात् ॥ स्नात्वाआर्द्रेनवीनेवाससीधृत्वाचम्यदेशकालौस्मृत्वासोत्तरीयःप्राचीनावीतीद
क्षिणामुखःअमुकगोत्रस्यामुकशर्मणःप्रेतस्यपित्रादेः ( मात्रादौतुअमुकगोत्रायाअमुकदायाःप्रेतायाः ) प्रेतत्वनिवृत्त्याउत्तम
लोकप्राप्त्यर्थंप्रथमदिनविधिंकरिष्यइतिसंकल्प्य ताम्रादिमयंनवंभांडंसंशोध्यतस्मिन्पिंडार्थंसकृत्प्रक्षालितान्प्रसृतिपरिमितां
स्तंडुलान्सोदकान्निधायतत्पात्रंलौकिकाग्नावधिश्रित्यस्वयंचरुंश्रपयित्वामृत्तिकास्नानादिकुर्यात् ॥ देशकालौसंकीर्त्यप्राचीना
वीतीपित्रादेरमुकगोत्रस्यामुकप्रेतस्यप्रेतत्वनिवृत्त्याउत्तमलोकप्राप्त्यर्थंप्रथमेहनिदाहजनिततापोपशमनार्थंमृत्तिकास्नानानिक
रिष्येइतिसंकल्प्य ॥ उदुत्यंजातवेदसंदेवंवहंतिकेतवः ॥ दृशेविश्वायसूर्यं ॥ इतिशुद्धमृदमादाय ॥ आकृष्णेनरजसावर्तमा
नोनिवेशयन्नमृतंमर्त्यंच ॥ हिरण्ययेनसवितारथेनादेवोयातिभुवनानिपश्यन् ॥ इतिसूर्यायदर्शयित्वा ॥ सहस्रशीर्षापुरुषः
सहस्राक्षःसहस्रपात् ॥ सभूमिंविश्वतोवृत्वात्यतिष्ठद्दशांगुलं ॥ इतिशिरसिविलिप्य ॥ अंगादंगाल्लोम्नोलोम्नोजातंपर्वणिपर्वणि ॥
यक्ष्मंसर्वस्मादात्मनस्तमिदंविवृहामिते ॥ इतिसर्वांगेलिंपेत् ॥ स्नात्वाआचम्यएवंपुनर्द्विवारंकार्यं ॥ ततःआचम्यअद्येत्यादि

प्राचीनावीतीपित्रादेरमुकगोत्रस्यामुकप्रेतस्यदाहजनिततृषोपशमनार्थंतिलतोयांजलिदानंकरिष्यइतिसंकल्प्य कुशोपर्यश्मानं स्थापयित्वातदुपरिअमुकगोत्रामुकप्रेतदाहजनिततृषोपशमनार्थंएषतिलतोयांजलिस्तवोपतिष्ठतां ॥ इतिदक्षिणामुखःतिलतोयांजलिंदद्यात् ॥ प्रत्यंजलिस्नानंकार्यं ॥ तिलांजलिसंख्या ॥ प्रतिदिनंएकैकइतिदश ॥ प्रतिदिनंत्रयस्त्रयइतित्रिंशत् ॥ प्रतिदिनंएकैकवृद्धिरितिपंचपंचाशत् ॥ प्रत्यहंदशदशेत्येवंभवति ॥ प्रत्यहंद्वयोत्तरंवृद्धिरितिदशोत्तरंशतं ॥ एषांपक्षाणांमध्येन्यतमपक्षाश्रयणेनतिलांजलिर्देयः ॥ स्नात्वाआचम्य ततःतिलसर्पिर्मधुशर्करापयोमिश्रितंभक्तपिंडंकृत्वाअमुकगोत्रस्यामुकप्रेतस्यआद्येहनिशिरोवयवनिष्पत्त्यर्थंएषपिंडस्तवोपतिष्ठतामितिकुशोपरिमहांतंपिंडंदत्वा पुनःअमुकगोत्रामुकप्रेतएतत्तेतिलोदकमुपतिष्ठतामितिपिंडोपरिपितृतीर्थेनतिलोदकंप्रक्षिप्यपुनरमुकेत्यादिउपतिष्ठतामित्यंतेनतुलसीदलंभृंगराजपत्रंधूपदीपादिचदत्वा ॥ अनादिनिधनोदेवःशंखचक्रगदाधरः ॥ अक्षय्यःपुंडरीकाक्षःप्रेतमोक्षप्रदोस्तुवै ॥ इतिपठित्वा ॥ इदंपिंडदानंसतिलोदकंप्रेताप्यायनमस्तु ॥ अस्तुप्रेताप्यायनमितिप्रतिवचनंआचार्योवदेत् ॥ ततःपिंडंजलेप्रवाह्यस्नात्वाआचामेत् ॥ इतिप्रथमदिनीयावयवपिंडदानविधिः ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥

## ॥ ३३३ ॥ अथनवश्राद्धम ॥

श्रीः॥ आचम्यप्राणानायम्यदेशकालौस्मृत्वाअमुकगोत्रस्यामुकप्रेतस्यप्रेतत्वविमोक्षार्थंआद्येहनिनवश्राद्धंकरिष्येइतिसंकल्प्य प्राचीनावीतीदक्षिणाभिमुखःआत्मनोऽग्रेदर्भबटुंउदङ्मुखंसंस्थाप्य अमुकगोत्रामुकप्रेतनवश्राद्धेअयंतेक्षणउपतिष्ठतामितिएकंकुशंदत्वा अमुकगोत्रामुकप्रेतनवश्राद्धेइदंतेपाद्यमुपतिष्ठतामितिपाद्यंदत्वा अमुकगोत्रस्यामुकप्रेतस्यनवश्राद्धेआसनमुपति

ष्ठतामितिदर्भबटुवामभागेएकंसतिलंकुशंदत्वास्वाग्रेदक्षिणाग्रमेकंकुशंनिधाय तत्रैकमुत्तानंपात्रमासाद्यतत्रैकंपवित्रंनिधायतू
ष्णींजलमासिच्यतूष्णीमेवतिलान्प्रक्षिप्यतूष्णीमर्घ्यंनिवेद्य अमुकगोत्रामुकप्रेतनवश्राद्धेइदमर्घ्यंतथोपतिष्ठतामितिअर्घ्यंदत्वा
मुकगोत्रामुकप्रेतआच्छादनमुपतिष्ठतामित्याच्छादनदर्भंदद्यात् ॥ नात्रगंधादिदानं ॥ ततोघृताक्तमन्नंसक्तुवादायअमुकगो
त्रायामुकप्रेतायस्वाहेत्येकामाहुतिंदर्भबटुपाणौहुत्वा अमुकगोत्रायामुकप्रेतायनवश्राद्धेदास्यमानमामंयथाशक्तिसोपस्करंत
न्निष्क्रयंवासोदकुंभंसदक्षिणमुपतिष्ठतामितितिलोदकंदद्यात् ॥ ततःपिंडदानार्थमेकंकुशंनिधायाभ्युक्ष्यअमुकगोत्रायामुकप्रे
तायाद्येहनिनवश्राद्धेऽयंसक्तुपिंडउपतिष्ठतामितिपिंडंदत्वातदुपरितिलोदकमुपतिष्ठतामितिदत्वानुमंत्र्यशक्त्याप्राणंनिरुध्यपु
नरनुमंत्र्यशेषमाघ्रायअमुकगोत्रेत्यादिउपतिष्ठतामित्यंतेन अभ्यंजनांजनकशिपूपबर्हणेदशांचनिवेद्योपस्थायामुकगोत्रायामुक
प्रेतायनवश्राद्धेदक्षिणोपतिष्ठतामितिदक्षिणांदत्वातूष्णींविकिरंदत्वा अनादिनिधनइतिश्लोकंपठित्वाऽभिरम्यतामित्युक्तेऽभि
रताःस्मेतिप्रत्युक्तेपिंडंप्रवाह्यस्नायात् ॥ इतिनव( त्रिषम )श्राद्धं ॥ ॥ ॥ ॥ ७ ॥

## ॥ ३३४ ॥ अथनग्नप्रच्छादनश्राद्धम् ॥

श्रीः ॥ आचम्यप्राणानायम्यदेशकालौस्मृत्वा प्राचीनावीतीअमुकगोत्रस्यामुकप्रेतस्यप्रेतत्वनिवृत्तिकामःप्रथमदिनविहितंन
ग्नप्रच्छादनश्राद्धंकरिष्यइतिसंकल्प्य उदङ्मुखंदर्भबटुमुपवेश्यअमुकगोत्रामुकप्रेतनग्नप्र० अयंतेक्षणउपतिष्ठतां ॥ एवंअमु
केत्यादिपाद्यं० ॥ अमुकगोत्रस्यामुकप्रेतस्यनग्नप्र० आसनमुप० ॥ एकपवित्रकोक्ताऱ्घ्यपात्रेजलमासिच्यानुमंत्र्यतिलोसिप्रेत
दैवत्योगोसवेदेवनिर्मितः ॥ प्रत्नवद्भिःप्रत्तःप्रेतेमान्लोकान्प्रीणयाहिनःइतिमंत्रेणतूष्णींवातिलान्प्रक्षिप्यतूष्णींनिवेद्यामुकगो

त्रामुकप्रेतनग्न० इदमर्घ्यंतवोपतिष्ठतां ॥ अमुकेत्यादि इदमाच्छादनंतवोपतिष्ठतां ॥ अमुकगोत्रायामुकप्रेतायस्वाहेतिविप्र पाणौहुत्वा अमुकगोत्रायामुकप्रेतायदास्यमानमामंयथाशक्तिसोपस्करंसघृतंसोदकुंभंसवस्त्रंयथाशक्तिकांस्यपात्रसुवर्णरजत लोहतैलदक्षिणोपेतंसोपानत्कंसोदपात्रमुपतिष्ठतामित्यामंदद्यात् ॥ ततःपिंडदानार्थमेकंकुशंनिधायाभ्युक्ष्यशुंधंतांप्रेताइत्युद कंनिनीयामुकगोत्रायामुकप्रेतायनग्नप्रच्छादनश्राद्धेअयंसक्तुपिंडउपतिष्ठतां पिंडोपरितिलोदकमुपतिष्ठतां ॥ ततोनुमंत्रणादिक शिपूपबर्हणदशादानांतंसर्वंनवश्राद्धवत्तूष्णींकृत्वा ॥ अमुकेत्यादिप्रेतनग्नप्र० तुलसीदलंभृंगराजंचोपतिष्ठतामितिदत्वोपस्था यामुकगोत्रायामुकप्रेतायनग्नप्रच्छादनश्राद्धेदक्षिणोपतिष्ठतां ॥ अनादिनिधनोदेवइत्यादिस्नानांतंपूर्ववत् ॥ इति ॥ ॥

## ॥ ३३५ ॥ अथपाथेयश्राद्धम् ॥

श्रीः ॥ अस्मिन्नेवाहनिपाथेयश्राद्धं ॥ आचम्यप्राणानायम्यदेशकालौस्मृत्वाप्राचीनावीति ॥ अमुकगोत्रस्यामुकप्रेतस्यमनु ष्यलोकात्प्रेतलोकगमनार्थंपाथेयश्राद्धंकरिष्येइतिसंकल्प्यामुकगोत्रामुकप्रेतपाथेयश्राद्धेअयंतेक्षणउपतिष्ठतां ॥ अमुकेत्यादि पाद्यं० ॥ अमुकगोत्रस्यामुकप्रेतस्यपाथेयश्राद्धेआसनं० ॥ एकपवित्रार्घ्यपात्रेजलमासिच्यानुमंत्र्यतिलोसीत्यूहितमंत्रेणतू ष्णींवातिलान्प्रक्षिप्यतूष्णींनिवेद्यअमुकगोत्रामुकप्रेतपाथेय० अर्घ्यं० ॥ अमुकेत्यादिआच्छादनंउपतिष्ठतां ॥ अमुकगोत्रा यामुकप्रेतायस्वाहेतिपाणौहुत्वाऽमुकगोत्रायामुकप्रेतायामंतन्निष्क्रयंवायथाशक्तिसोपस्करंसघृतंसोदकुंभंसवस्त्रंयथाशक्तिकां स्यसुवर्णरजतलोहतैलदक्षिणोपेतंसोपानत्कंसोदपात्रमुपतिष्ठतामितितिलोदकंक्षिपेदिति ॥ ततःपिंडदानार्थमेकंकुशंनिधाया भ्युक्ष्यशुंधंतांप्रेताइत्युदकंनिनीयअमुकगोत्रायामुकप्रेतायपाथेयश्राद्धेअयंसक्तुपिंडउपतिष्ठतां ॥ अनुमंत्रणादिकशिपूपबर्ह

णदशादानांतंसर्वंनवश्राद्धवत्तूष्णींकृत्वाअमुकेत्यादिप्रेततुलसीदलंभृंगराजंचउप० इति दत्वोपस्थाय ॥ अमुकगोत्रायामुकप्रेतायपाथेयश्राद्धेदक्षिणोपतिष्ठतां ॥ अनादिनिधनइत्यादिस्नानांतंपूर्ववत् ॥ इतिपाथेयश्राद्धं ॥ ॥ ततःपूर्वशोषणार्थंस्थापितानिवस्त्राणिधारयेयुः ॥ ततःकर्तापिपरिधानीयंआर्द्रवस्त्रंउत्तीर्यत्रिगुणंधोदशमर्धवन्निष्पीड्यशोषणायउदगग्रंविसृजेत् ॥ ततोदिवामृतौदृष्टेष्वृक्षेषुरात्रिमृतौउदितेसूर्येबालपुरःसराःवृद्धजघन्यागृहंगत्वाद्वारदेशेनिंबपत्राणिविदश्यफूत्कृत्याचम्यपाषाणाग्निगोमयाक्षततिलोदकदूर्वावृषभसर्षपान्यथालाभंस्पृष्ट्वादेहल्यश्मनिचरणंदत्वागृहंविशेयुः ॥ शववाहकानामपिनिंबपत्रंदशादिएकाहमाशौचंच ॥ ततःशिक्ययोर्नवेमृन्मयभाजनेजलंदुग्धंचप्रक्षिप्य ॥ प्रेतात्रस्नाहीदंचपिबेतिवदेत् ॥ इदंचकृताकृतं ॥ अस्मिन्दिनेक्रीतंसुहृद्भ्योलब्धंवाश्नीयुः ॥ गोत्रजादीनांतद्दिनेतद्गृहएवभोजनं ॥ आमिषलवणपयोमिष्टापूपपायसादिकंनाश्नीयुः ॥ हविष्यान्नमेवभुंजीरन् ॥ कर्ताभोजनकालेसघृतमन्नमादायामुकप्रेतायेदमन्नमुपतिष्ठतामितिगृहोपरिभोजनस्थलसमीपेवादद्यात् ॥ दशाहांतंभोजनस्थानविपर्ययोपितावत्पर्यंतंनकार्यः ॥ लेखनहर्षोच्चासनोत्कृष्टवस्त्रादिधारणतैलाभ्यंगस्त्रीसंगखट्वाशयनान्यस्पर्शादीनिवर्जयेयुः ॥ रात्रौपृथगेवतृणास्तृतभूमौशयीरन् ॥ महागुरुनिपातेषुत्र्यहमेकाहंचोपवासः ॥ पारणाचक्रीतेनसुहृद्भ्योलब्धेनवा ॥ पत्न्याचैवं ॥ बालवृद्धातुराणांनैतेनियमाः ॥ ॥ ॥

## ॥ ३३६ ॥ अथास्थिसंचयनम् ॥

श्रीः ॥ तच्चआशौचमध्येतुप्रथमेद्वितीयेतृतीयेचतुर्थेसप्तमेनवमेवादिनेकार्यम् ॥ तत्रद्विपादत्रिपादनक्षत्राणिकर्तुर्जन्मनक्षत्रंचवर्ज्यं ॥ संभवेर्कभौममंदवारानंदातिथयश्चवर्ज्याः ॥ अस्थ्नांश्वसूकरशूद्रादिस्पर्शेपंचगव्येनशालग्रामतुलस्युदकैःप्रोक्षणं ॥

दाहदेशंगत्वाआचम्यतूष्णींप्राणानायम्यदेशकालौस्मृत्वाप्राचीनावीती अमुकगोत्रस्यामुकप्रेतस्यप्रेतत्वनिवृत्त्यर्थंअस्थिसंचय
नंकरिष्यइतिसंकल्प्यशमीशाखयाक्षीरमिश्रोदकेनाप्रदक्षिणंत्रिःपरिव्रजन्चितिदेशंप्रोक्षेत् ॥ शीतिकेशीतिदमनोग्निस्त्रिष्टुप् ॥
चितिप्रोक्षणेवि० ॥ शीतिकेशीतिकावतिह्लादिकेह्लादिकावति ॥ मंडूक्या३सुसंगमइमंस्व१ग्निंहर्षय ॥ इतिमंत्रेणपादादार
भ्यसर्वांचितिंत्रिःप्रोक्षेत् ॥ प्रतिप्रोक्षणंमंत्रावृत्तिः ॥ ततोवृद्धाविषमाःकर्तृसहिताअंगुष्ठोपकनिष्ठिकाभ्यांएकैकमस्थिपादप्र
भृतिशिरःपर्यंतंगृहीत्वायथाशब्दोनभवतितथाकुंभेनिदध्युः ॥ स्त्रियाःकुंभ्यां ॥ स्तनरहितःकुंभः सस्तनीकुंभी ॥ अन्यद्भस्म
शूर्पेणसंशोध्यसूक्ष्माण्यस्थीन्यपिकुंभेनिधायभस्मगंगायांक्षिपेत् ॥ ततोवर्षाकालादन्यकालेजलंनागच्छतितादृशेशुचिप्रदेशेग
र्तंकृत्वा ॥ उपसर्पेतिसंकुसुकःपृथिवीमृत्युःपितरोवात्रिष्टुप् ॥ गर्तेस्थिकुंभनिक्षेपणेविनि० ॥ उपसर्पमातरंभूमिमेतामुरुव्यचं
संपृथिवींसुशेवां ॥ ऊर्णम्रदायुवतिर्दक्षिणावतएषात्वापातुनिर्ऋतेरुपस्थात् ॥ इतिमंत्रेणकर्तागर्तेघटंनिदध्यात् ॥ उच्छ्वंचस्वे
तिसंकुसुकोमृत्युःपितरःपृथ्वीवाप्रस्तारपंक्तिः ॥ गर्तेपांसुक्षेपणेवि० ॥ उच्छ्वंचस्वपृथिविमानिबाधथाःसूपायनास्मैभवसूपवंच
ना ॥ मातापुत्रंयथासिचाभ्येनंभूमऊर्णुहि ॥ अनेनघटस्यसमंतात्खातेमृदंक्षिपेत् ॥ उच्छ्वंचमानेतिसंकुसुकःपृथ्वीमृत्युःपि
तरोवात्रिष्टुप् ॥ अस्थिकुंभसमीपेजपेवि० ॥ उच्छ्वंचमानापृथिवीसुतिष्ठतुसहस्रंमितउपहिश्रयंतां ॥ तेगृहासोघृतश्चुतोभवंतु
विश्वाहास्मैशरणाःसंत्वत्र ॥ इतिमंत्रमंजलिंबद्ध्वाजपेत् ॥ उत्तेस्तभ्नामीतिसंकुसुकःपृथ्वीपितरोमृत्युर्वात्रिष्टुप् ॥ घटस्यमुख
पिधानेवि० ॥ उत्तेस्तभ्नामिपृथिवींत्वत्परीमंलोगंनिदधन्मोऽअहंरिषं ॥ एतांस्थूणांपितरोधारयंतुतेत्रायमःसादनातेमिनो
तु ॥ इतिनवखर्परंघटोपरिनिदध्यात् ॥ ततोयथाकुंभोनदृश्यतेतथामृदंनिधायपश्चादनवेक्षमाणोन्यत्रगत्वास्नायात् ॥ ॥

## ॥ ३३७ ॥ अथास्थिसंचयनश्राद्धम् ॥

श्रीः ॥ ततोगोमयेनस्मशानदेशमनुलिप्यतत्र ( दक्षिणाग्रां ) त्रिकोणांवेदिंकृत्वा देशकालौसंकीर्त्यप्राचीनावीतीअमुकगोत्रस्यामुकप्रेतस्यप्रेतत्वनिवृत्त्यर्थंवेदिकाराधनंकरिष्ये ॥ तूष्णींतिलोदकंकृत्वावेदिंहरिद्रादिनालकृत्यतत्रोदकपूर्णकुंभंनिधायतदुपरिमहांतंभक्तपिंडंसंस्थाप्य अमुकगोत्रायामुकशर्मणेप्रेतायभोजनार्थमयंपिंडःपानार्थंचोदकुंभोदकमुपतिष्ठतामितिसकुशतिलोदकंक्षिप्त्वा ॥ तत्पश्चिमभागेस्मशानवासिनेरुद्रायायंपिंडउपतिष्ठतामितिकुंभोपरिपिंडांतरं ॥ ततःतदुत्तरतःस्मशानवासिभ्यःप्रेतेभ्योयंपिंडउपतिष्ठतामितिकुंभोपरिपिंडांतरं ॥ पूर्वतोदक्षिणतोवाप्रेतसखिभ्योयंपिंडउपतिष्ठतामितिकुंभोपरिपिंडांतरं ॥ एवंचतुरःपिंडान्दत्वापिंडोपरिस्मशानवासिनेरुद्राय स्मशानवासिभ्यःप्रेतेभ्यः प्रेतसखिभ्यश्चक्रमेण इदंतिलोदकमुपतिष्ठतामितिप्रत्येकंदत्वायवपिष्टेनपोलिकात्रयंपादुकाषट्कंछत्रत्रयंचसंपाद्य तन्मध्येएकांपोलिकांपादुकाद्वयंएकंछत्रंचकालायदहनपतयेइदमुपतिष्ठतामितिदत्वा पोलिकांपादुकाद्वयंछत्रंचमृत्यवेदहनपतयेइदमुपतिष्ठतामितिदत्वा पोलिकांपादुकाद्वयंछत्रंचयमायदहनपतयेइदमुपतिष्ठतामितिदद्यात् ॥ ततोयमश्वभ्यामुपतिष्ठतामितिपोलिकांपादुकांछत्रंचदत्वास्नायात्॥ततोदेशकालौसंकीर्त्यअमुकगोत्रस्यामुकप्रेतस्यप्रेतत्वविमोक्षार्थंअस्थिसंचयनश्राद्धंकरिष्ये ॥ प्राचीनावीतीतिलोदकंकृत्वाउदङ्मुखंदर्भवटुंसंस्थाप्यअमुकगोत्रस्यामुकप्रेतस्य अस्थिसंचयनश्राद्धेक्षणउपतिष्ठतामित्यादिपाद्यासनार्घ्याच्छादनांतंअमुकप्रेतेत्यादितत्तद्विभक्त्याउपतिष्ठतामितिदत्वापाणिहोमंकृत्वाआमंतन्निष्क्रयंवाअमुकगोत्रायेत्यादिचतुर्थ्यंतेनउपतिष्ठतामितिदत्वा पिंडदानाद्यभिरम्यतामित्यंतंनग्नप्रच्छादनवत्कृत्वाअनादिनिधनइतिश्लोकंपठित्वाभिरम्यतामित्यादिपिंडंप्रवाह्यस्नायात् ॥

## ॥ ३३८ ॥ अथतीर्थेस्थिक्षेपपूर्वांगविधिः ॥



श्रीः ॥ दशाहांतरस्थिक्षेपेनास्तादिविचारः ॥ दशाहोत्तरंतु ॥ अस्तंगतेगुरौशुक्रेतथामासेमलिम्लुचे ॥ गंगायामस्थिनिक्षेपंन कुर्यादितिगौतमः ॥ यत्रास्थीनिनिखातानिसंतितत्रदेशकालनिर्देशांतेस्मत्पित्रादेरमुकशर्मणोमुकगोत्रस्यतीर्थेस्थिक्षेपार्थमस्थ्यु द्धरणंकरिष्ये ॥ पृथग्गोमूत्रादिभिर्गायत्र्यादिमंत्रैस्तांभूमिंप्रोक्ष्य ॥ उपसर्पेतिचतसृणांशंखःपितरस्त्रिष्टुप् क्रमेणभूप्रार्थनखन नमृदुद्धरणास्थिग्रहणेषुविनियोगः ॥ एताभिर्ऋग्भिःक्रमेणास्थिग्रहणांतानिकर्माणिकृत्वाजलाशयेगृह्योक्तविधिनास्नात्वास्थि शुद्धिंकुर्यात् ॥ अस्थीनिस्पृष्ट्वाएतोन्विंद्रमितितिसृणामांगिरसस्तिरश्चीइंद्रोनुष्टुप्अस्थिमार्जनेवि० इतितृचावृत्त्यापंचगव्यैः स्नात्वास्पृष्ट्वैवदशस्नानानिकुर्यात् ॥ तत्रगायत्र्यादिपंचमंत्रैर्गोमूत्रगोमयक्षीरदधिसर्पिःस्नानानिकृत्वादेवस्यत्वेतिकुशोदकेन मानस्तोकइतिभस्मनाअश्वक्रांतेरथक्रांतइतिमृदामधुवाताइतिमधुनाआपोहिष्ठेतिशुद्धोदकेनचस्नायात् ॥ एवंदशस्नानांते स्थ्नांकुशैर्मार्जनंकुर्यात् ॥ तत्रमंत्राः ॥ अतोदेवाइत्यृक् १ अथसप्तसूक्तानि ॥ एतोन्विंद्रमितितिसृणामांगिरसस्तिरश्चीइंद्रोनुष्टुप् ३ शुचीवोहव्येतिमैत्रावरुणिर्वसिष्ठोमरुतस्त्रिष्टुप् ३ नतमंहइत्यष्टर्चस्यांहोमुग्विश्वेदेवाबृहतीअंत्यात्रिष्टुप् ८ इतिवाइतित्रयो दशर्चस्यलबइंद्रोगायत्री १३ ॥ यदंतियच्चेतिसप्तानांवसिष्ठोद्वयोःपवमानसोमोंत्यानामग्निर्गायत्री ७ ममाग्नइतिदशर्चस्यवि हव्योविश्वेदेवास्त्रिष्टुबंत्याजगती १० ॥ कद्रुद्रायेतिनवर्चस्यघौरःकण्वोरुद्रोगायत्री ९ एतैःप्रतिमंत्रंमार्जयित्वाततोयदीया न्यस्थीनितस्यकृतसपिंडीकरणस्यपार्वणविधिनास्थिक्षेपांगभूतंश्राद्धंहिरण्येनकुर्यात् ॥ दशाहांतरस्थिक्षेपकरणेएकोद्दिष्टविधि नाश्राद्धं ॥ देशकालसंबंधनामगोत्रादिस्मृत्वागंगायांकरिष्यमाणास्थिक्षेपांगभूतंश्राद्धंहिरण्येनकरिष्ये तिलोदकं० ॥ पुरूर

वार्द्रवविश्वेदेवार्थेत्वयाक्षणःकरणीयइतिदैवे पित्राद्यर्थेइतिपित्र्येक्षणंदत्वा एवमुभयत्रासनादिआच्छादनांतंपूजांकृत्वासक्तु
भिरग्नौकरणं ॥ यथाशक्तिहिरण्यंपात्रेनिधाय देवेभ्यःपितृभ्यश्चत्यक्त्वातृप्तिप्रश्नवर्जंसंपन्नवचनांतंकृत्वासक्तुभिःपिंडदानं ॥
ततःअपहतेत्यादिवासोदानांतेनमोवःपितरइत्यत्रइषेपदस्थानेहेमद्रव्यायेत्यूहः ततःश्राद्धसमाप्त्यंतंप्रकृतिवत् स्मृत्युक्तसंकल्पे
तुउशंतस्त्वेत्यादिमंत्रेष्वपियथायथमूहोबोध्यः॥ एवंश्राद्धंसमाप्यवक्ष्यमाणपदार्थैरस्थीनिवेष्टयेत्॥ यक्षकर्दमेनानुलिप्यहेममौ
क्तिकरौप्यप्रवालनीलमणीनस्थिषुप्रक्षिप्यअजिनकंबलदर्भभूर्जपत्रशाणभूर्जपत्रताडपत्रैःक्रमेणसप्तधावेष्ट्यताम्रपुटेस्थापयेत् ॥
ततःस्वसूत्रोक्तविधिनास्थंडिलेग्निंप्रतिष्ठाप्याष्टोत्तरंतिलाज्याहुतीःपृथक्जुहुयात्॥ उदीरतांचतुर्दशर्चस्यशंखःपितरस्त्रिष्टुबेका
दशीजगतीअस्थिप्रक्षेपांगतिलाज्यहोमेवि० एतत्सूक्तस्यसप्तावृत्तिभिःअष्टमावृत्तौअंत्यानांचतुर्णांत्यागेन १०८ हुत्वास्विष्टकृ
दादिहोमशेषंसमाप्यास्थीनिगृहीत्वाचांडालपतितव्रात्यादिस्पर्शमकृत्वैवशुचिस्तीर्थंगच्छेत् ॥ मूत्रपुरीषशौचाचमनकालेस्थी
न्यन्यत्रस्थापयेत् ॥ ततस्तीर्थंप्राप्यतीर्थप्राप्तिनिमित्तकंस्नानादिविधायास्थीनिस्नापयित्वामुकगोत्रस्यामुकशर्मणोब्रह्मलोका
दिप्राप्तयेमुकतीर्थेस्थिप्रक्षेपमहंकरिष्येइतिसंकल्प्य पलाशपर्णपुटेपंचगव्येनास्थीन्यासिच्यहिरण्यशकलमाल्यघृततिलमिश्रि
तास्थीनिमृत्पिंडेनिधायदक्षिणांदिशमवेक्षमाणोनमोस्तुधर्मायेतिवदंस्तीर्थेप्रविश्यनाभिमात्रजलेस्थित्वासमेप्रीतोस्त्वित्युक्त्वा
तीर्थेक्षिपेत् ॥ ततःस्नात्वाजलाद्बहिरागत्यसूर्यंदृष्ट्वाहरिंस्मृत्वाविप्राययथाशक्तिदक्षिणांदद्यात् ॥ ( एतदशक्तौनिर्दिष्टप्रयोगां
तर्गतहिरण्यश्राद्धहोमौवर्जयित्वान्यत्सर्वंयथावत्कुर्यादितिशौनकादयः ) ॥ इत्यस्थ्युद्धरणविधिस्तीर्थेस्थ्नांप्रक्षेपविधिश्च ॥

## ॥ ३३९ ॥ अथद्वितीयादिदिनविधिः ॥

श्रीः ॥ ततःपूर्वदिनकृत्यदेशेद्वितीयदिनविधिंकुर्यात् ॥ आचम्यप्राणानायम्यदेशकालौसंकीर्त्यप्राचीनावीतीअमुकगोत्रस्यामुकप्रेतस्यप्रेतत्वनिवृत्त्याउत्तमलोकप्राप्त्यर्थं द्वितीयदिनविधिंकरिष्येइतिसंकल्प्यहविःश्रपयित्वाप्रथमदिनवत्संकल्पपूर्वकंमृत्तिकास्नानत्रयंविधायप्रथमदिनपरिगृहीततिलांजलिदानपक्षाश्रयणेनअश्मनिसंकल्पपूर्वकमंजलिदानंकृत्वा प्रत्यंजलिस्नात्वा अमुकगोत्रस्यामुकप्रेतस्यद्वितीयेहनिचक्षुःश्रोत्रनासावयवनिष्पत्त्यर्थमयंपिंडउपतिष्ठतां ॥ तृतीयेहनिभुजवक्षोग्रीवामुखावयवनिष्पत्त्यर्थं ३ चतुर्थेपार्ष्णिकुक्षिकटिनाभिगुदलिंगावयवनि० ४ पंचमेऊरुजानुजंघावयवनि० ५ षष्ठेगुल्फपादांगुलिमर्माद्यवयवनि० ६ सप्तमेअस्थिमज्जाशिरावयवनि० ७ अष्टमेनखरोमाद्यवयवनि० ८ नवमेमर्मवीर्यादिसर्वावयवनि० ९ दशमेक्षुत्पिपासानिवृत्त्यर्थमितितत्तद्दिनोहेनदर्भशिखोपरिपिंडंदत्वा तुलसीभृंगराजदानादिकृत्वाअनादिश्लोकपाठपिंडप्रवाहणस्नानांतंपूर्ववत् ॥ तृतीयपंचमसप्तमनवमादिदिनेषुतत्तद्दिनोहेनपूर्वोक्तवद्विषमश्राद्धंकुर्यात् ॥ इतिनित्यविधिः ॥ ॥

## ॥ ३४० ॥ अथदशमदिनविधिः ॥

श्रीः ॥ अथकाकबलिः ॥ प्रात्याहिकपिंडदेशेऽन्यत्रवामृदात्रिकोणांवेदिंकृत्वागोमयेनसंमृज्यहरिद्रादिनालंकृत्यकर्तातस्यांमध्येपूर्वादिचतुर्दिक्षुजलपूर्णकुंभपंचकंसंस्थाप्य तेषुस्थापनक्रमेणैवौदनपिंडांश्चनिधायक्रमेणसर्वत्रनिवेदयेत् ॥ अमुकगोत्रायामुकशर्मणेप्रेतायक्षुत्पिपासानिवृत्त्यर्थंअयंपिंडःसोदकुंभउपतिष्ठतामितिमध्यस्थंनिवेदयेत् १ ॥ प्रेतसखिभ्यःक्षुत्पिपासा०ता

मितिपूर्वस्थं २ ॥ वैवस्वतायमायक्षुत्पिपासानि० तामितिदक्षिणस्थं ३ ॥ वायसेभ्यःक्षुत्पिपासा० तामितिपश्चिमस्थं ४॥ प्रेताधिपतयेरुद्रायक्षुत्पिपासानि० तामितिउत्तरस्थं ५ ॥ पिंडदानक्रमेणैवतिलोदकमुपतिष्ठतामितिप्रत्येकंतिलोदकंदत्वापादुकाद्वयंछत्रंपताकापोलिकाचउपतिष्ठतामितिसर्वेभ्यःप्रत्येकंदद्यात् ॥ ततःपश्चिमदेशस्थंपिंडंवायसोयावत्भक्षयतितावत्तिष्ठेत् ॥ ततोश्मानंतिलतैलेनाभ्यज्यजलेक्षिपेत् ॥ केचित्प्रेतत्वनिवृत्त्याउत्तमलोकप्राप्त्यर्थंदशदानान्यप्यत्रकुर्वंति ॥ ततःकर्त्रांप्रार्थिताःसर्वेबांधवाःसंबंधिनश्चत्रींस्त्रीन्धर्मोदकांजलीनेकैकंवांजलिंतीरेप्रेतोद्देशेनदद्युः ॥ ततःपुत्रादीनांयथाचारंवाससांत्यागःकेशश्मश्रुवपनंनखच्छेदादिच ॥ ततःसर्वेसगोत्राःपुरंध्यश्चयथादेशाचारंगौरसर्षपकल्केनतिलामलककल्केनवाभ्यक्ताः एककालेजलेसशिरस्कंस्नात्वाचम्यवाग्यताःवृषभंगांसुवर्णंचस्पृष्ट्वाशुक्लवाससोगृहंगत्वासर्वेतत्रैवभुंजीरन् ॥ इतिदशाहकृत्यं ॥

## ॥ ३४१ ॥ अथैकादशाहकृत्यम् ॥

श्रीः ॥ तत्रप्रातरुत्थायगृहानुलेपनंकृत्वास्पृष्टानांमृद्भांडानांत्यागःसर्वेषांसपिंडानांसचैलंस्नानंतत्रस्पृष्टवस्त्रादीनांप्रक्षालनं तत्रमाधवप्रायश्चित्तग्रंथेचश्वपाकमपिशोधयेदितिब्रह्मकूर्चहोमस्यात्यंतंपापदाहकत्वश्रवणात्कर्त्रास्वस्याशौचजन्यसकलदोषनिवृत्त्यैब्रह्मकूर्चहोमंकृत्वापंचगव्यप्राशनंकार्यं ॥ अथवापंचगव्यप्राशनमात्रेणापिपापक्षयश्रवणादवश्यंतत्कालंकेवलंपंचगव्यंसंपाद्यप्राशयेन्नहोमस्यैवावश्यकत्वं ब्रह्मकूर्चहोमस्यद्विदिनसाध्यत्वेनेदानीमसंभवात् ॥ कर्ताचम्यप्राणानायम्यदेशकालौस्मृत्वाममाशौचजन्याशुचित्वादिसकलदोषनिवृत्तिपूर्वकशरीरशुद्धिद्वारावृषोत्सर्गाद्यधिकारसिद्ध्यर्थंपंचगव्यप्राशनमहंकरिष्य इतिसंकल्प्यताम्रेपालाशेवापात्रेताम्रायागोमूत्रमष्टमाषप्रमाणंतत्सवितुरितिगायत्र्यादाय गंधद्वारामितिश्वेतगोःशकृत्षोड

शमाषमादाय आप्यायस्वेतिपीतगोःक्षीरंद्वादशमाषं दधिक्राव्णइतिनीलगोर्दधिदशमाषं शुक्रमसिज्योतिरसितेजोसिइतिकृ
ष्णगोघृतमष्टमाषमादाय तत्रदेवस्यत्वेतिकुशोदकंचतुर्माषंप्रक्षिप्यप्रणवेनैवयज्ञियकाष्ठेनालोड्यप्रणवेनाभिमंत्र्यप्रणवेनपिबे
त् ॥ कर्तृभिन्नाःसर्वेपियथाचारंपिबेयुराचमेयुश्च ॥ एवंपंचगव्यप्राशनेनशरीरशुद्धिंसंपाद्यवृषोत्सर्गादिकंकर्मकुर्यात् ॥ क्वचि
त्पंचकत्रिपादनक्षत्रत्रिपुष्करद्विपुष्करादिसंभावनायां सूतकांतेततःपुत्रःकुर्याच्छांतिकमंततइतिवचनेअंतशब्दात्पुत्रेणसूतक
निवृत्तिस्नानोत्तरंप्रातर्वृषोत्सर्गमहैकोद्दिष्टश्राद्धात्प्रागेवशांतिःकर्तव्येतिप्रतीयते ॥ अतःपूर्वंशांतिकंततोवृषोत्सर्गादिसंगृहीतं॥

## ॥ ३४२ ॥ अथपंचकत्रिपादसाधारणशांतिः ॥

श्रीः ॥ अत्रविशेषः ॥ नक्षत्रांतरेमृतस्यपंचकेदाहप्राप्तौदाहकालेपुत्तलविधिरेवनशांतिकं पंचकमृतस्याश्विन्यांदाहप्राप्तौशां
तिकमेवनपुत्तलविधिः ॥ तत्रसूतकांतेतिलहोमंघृतदानंचकृत्वाकांस्यपात्रेतैलंप्रक्षिप्यतत्रात्मबिंबंवीक्ष्यविप्रायदद्यात् ॥ शांति
श्चलक्षहोमरुद्रजपान्यतररूपायथाविभवंकार्या ॥ अथवाकुंभेयमप्रतिमांसंपूज्यस्वगृह्योक्तविधिनाग्निप्रतिष्ठापनान्वाधानादि
चरुश्रपणांतंकृत्वाज्यभागांतेनामभिश्चतुर्दशचर्वाहुतीर्जुहुयात् ॥ यमायस्वाहा धर्मराजाय मृत्यवे अंतकाय वैवस्वताय का
लाय सर्वभूतक्षयाय औदुंबराय दध्नाय नीलाय परमेष्ठिने वृकोदराय चित्राय चित्रगुप्तायस्वाहा १४ एवंहुत्वाहोमशेषंस
माप्यकृष्णवस्त्रयुतांकृष्णांगांयमोमेप्रीयतामितिब्राह्मणायदद्यात् ॥ इतिपंचकत्रिपादसाधारणशांतिः ॥ ॥ छ ॥



## ॥ ३४३ ॥ अथपंचकशांतिः ॥

श्रीः ॥ देशकालौसंकीर्त्यअमुकगोत्रस्यामुकशर्मणःपंचकनक्षत्रमरणाद्योमतिदोषशुद्धिपूर्वकंममाशुभत्वपरिहारार्थवंशारिष्टवि

नाशार्थंचश्रीपरमेश्वरप्रीतयेपंचकशांतिमहंकरिष्ये ॥ तदंगत्वेनाचार्यवरणं ॥ आचार्योयदत्रेत्यादिवरदनामाग्निप्रतिष्ठांतंकृत्वा पूर्वेकलशान्स्थापयेत् ॥ महीद्यौरितिमंत्रावृत्त्यापंचकलशेषुपंचसुवर्णप्रतिमाःसंस्थाप्य तत्र यमायसोममितिमध्ये इमाकद्रा येतिपूर्वे अपनःशोशुचदघमितिदक्षिणे इदंविष्णुरितिपश्चिमे इंद्रत्वावृषभमित्युत्तरे ॥ धनिष्ठादिदेवताश्च क्रमयाअत्र० तत्त्वायामि० अभियेमिथो० उतनोहिर्बुध्न्यः० पूषागाअन्वेतुनः ॥ अत्रैवयमादयः ॥ यमंधर्मराजंमृत्युंअंतकंवैवस्वतंकालं सर्वभूतक्षयंऔदुंबरंदध्नंनीलंपरमेष्ठिनंवृकोदरंचित्रंचित्रगुप्तंआवाह्यतैरेवमंत्रैःषोडशोपचारैःसंपूज्य पूर्वोक्तानिशांतिसूक्तानिज प्त्वाउत्तरेग्रहान्कलशंचसंपूज्यप्रार्थ्यान्वादध्यात् ॥ चक्षुषीआज्येनेत्यंतमुक्त्वा अत्रप्रधानं नवग्रहान्समित्तिलैःपूर्वोक्तसंख्या कैः ॥ प्रधानंपंचनक्षत्रदेवताःसमित्तिलाज्याहुतिभिःप्रतिद्रव्यं १०८ यमादिचतुर्दशप्रत्येकं ८ शेषेणेतिपरिसमूहनादितत्त देवतायैतूष्णींनिर्वापादिकृत्वाद्रव्यत्यागंकृत्वापूर्वमंत्रैर्होमंकुर्यात् ॥ ततःस्विष्टकृदादिहोमंसमाप्यबलिदानंकृत्वापूर्णाहुतिंजु हुयात् ॥ देवताविसृज्यततःशांतिपाठःआज्यावेक्षणंब्रह्मविष्णुमहेशेंद्रवरुणप्रीतयेप्रियंगुगोधूममाषमुद्गयवव्रीहितिलसुवर्णा निदद्यात् ॥ ततोनारिकेलेनार्घ्यंदद्यात् ॥ इतिपंचकशांतिः ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥

## ॥ ३४४ ॥ अथत्रिपादशांतिः ॥

श्रीः ॥ देशकालौसंकीर्त्यअमुकस्यत्रिपादनक्षत्रमरणाधोगतिदोषशुद्धिद्वारास्वस्याशुभत्वपरिहारार्थंवंशानिष्टविनाशार्थंचसन वग्रहांत्रिपादशांतिमहंकरिष्ये ॥ तदंगत्वेनाचार्यादीन्वृणुयात् ॥ अथाचार्यःकर्मसंकल्प्ययदत्रसंस्थितामित्यादिअग्निप्रतिष्ठां तंकृत्वाकलशत्रयंमहीद्यौरित्यादिविधिनास्थाप्याब्दैवतमंत्रैः ( आपोहिष्ठा० ९ समुद्रज्येष्ठा० ४ आयंतामिह० २ इत्येतैः)

कलशानभिमंत्र्यतत्तद्देवताआवाहयेत् ॥ कृत्तिकायाःअग्निर्देवताअग्निंदूतमितिसंपूज्य भरण्यायमोदेवतास्यमाप्यसोमभिस्त्यधि देवतांसंपूज्य रोहिण्याःप्रजापतिर्देवताप्रजापतेनत्वदे० इतिप्रत्यधिदेवतांसंपूज्य ॥ पुनर्वसोःअदितिर्देवताअदितिर्द्यौरिति संपूज्य आर्द्रायाःरुद्रोदेवताकद्रुद्रायेत्यधिदेवतां पुष्यदेवताबृहस्पतिःबृहस्पतेअतियदर्यइतिप्रत्यधिदेवतांचसंपूज्य ॥ उत्तरा याःअर्यमादेवताअर्यमणोअदितिर्य० इतिसंपूज्य पूर्वायाःभगोदेवताभगएवभगवानित्यधिदेवतां हस्तस्यसूर्योदेवताउदुत्य मितिप्रत्यधिदेवतां ॥ विशाखायाःइंद्राग्नीदेवतेतदिंद्राग्नीइति स्वात्यृक्षस्यवायुर्देवतातववायइत्यधिदेवतां अनुराधायाःमि त्रोदेवतामित्रोजनानितिप्रत्यधिदेवतां ॥ उत्तराषाढायाविश्वेदेवादेवताविश्वेदेवासआगतेतिसंपूज्य पूर्वाषाढायावरुणोदेव तायत्किंचेदंवरुणेत्यधिदेवतां श्रवणस्यविष्णुर्देवताइदंविष्णुरितिप्रत्यधिदेवतां ॥ पूर्वाभाद्रपदायाःअजैकपादोदेवतासमुद्रः सिंधूरजो० इतिसंपूज्य शततारकायावरुणोदेवताइमंमेवरुणेत्यधिदेवं उत्तराभाद्रपदायाःअहिर्बुध्न्योदेवताअभिप्रेमिधोमनुष्यः इतिप्रत्यधिदेवतांआवाह्यतत्तन्मंत्रैःसंपूज्यशांतिसूक्तानिजपेत् ॥ तद्यथा ॥ यत्तेयमं० परेयिवांसं० इमारुद्रायस्थिर० अप नःशोशुच० विष्णोर्नुकं० आशुःशिशानो० श्रीसूक्तंजस्वायमादीनावाहयेत् ॥ यमंधर्मराजंमृत्युंअंतकंवैवस्वतंकालंसर्वभूत क्षयकरंऔदुंबरंदध्नंनीलंपरमेष्ठिनंवृकोदरंचित्रंचित्रगुप्तंआवाह्यसंपूज्यतदुत्तरतोग्रहान्संपूज्यान्वादध्यात् ॥ प्रधानंप्रतिद्रव्यं अष्टोत्तरशतसंख्याकाभिःपलाशसमित्तिलचर्वाज्याहुतिभिः अधिदेवताप्रत्यधिदेवतेतद्दशांशेन यमादिनामभिस्तानष्टाष्टसं ख्याकाभिःशेषेणस्विष्टकृतमित्यादिहोमशेषंसमाप्यबलिदानंकृत्वापूर्णाहुतिंजुहुयात् ॥ आचार्यायधेनुंऋत्विग्भ्योयथाशक्तिद क्षिणांदत्वातान्संतोष्यतेषांतेश्शांतिपाठःकार्यः ॥ ब्राह्मणभोजनसंकल्पःततोमित्रैःसहभुंजीत ॥ इतित्रिपादशांतिः ॥ ॥ ॥

श्रीः ॥ अयंगृह्येनकार्यः ॥ गोष्ठादावितरत्रआचम्यप्राणानायम्यदेशकालौस्मृत्वाप्राचीनावीतीअमुकगोत्रस्यअमुकशर्मणःप्रेतस्यप्रेतत्वमिवृत्त्योत्तमलोकप्राप्त्यर्थंवृषोत्सर्गंकरिष्येइतिसंकल्प्य ॥ स्थंडिलादिकृत्वा अध्वरनामानमग्निंप्रतिष्ठाप्यसमिद्वयमादायचक्षुष्यंते रुद्रंचरुणा सोमंपायसेन इंद्रंयावकेनयक्ष्ये शेषेणस्विष्टकृतमित्यादिपरिसमूहनादिपूर्णपात्रनिधानांतंविधायतूष्णींनिर्वापादिक्रमेणहविस्त्रयंसंपाद्यजुहुयात् ॥ कद्रुद्रायेतिघौरःकण्वोरुद्रोगायत्री ॥ रौद्रचरुहोमेवि० ॥ ॐ कद्रुद्राय प्रचेतसेमीढुष्टमायतव्यसे ॥ वोचेमशंतमंहृदेस्वाहा ॥ रुद्रायेदंनमम १ ॥ सोमोधेनुंगोतमःसोमस्त्रिष्टुप् ॥ सौम्यपायसहोमे० ॥ सोमोधेनुंसोमोअर्वंतमाशुंसोमोवीरंकर्मण्यंददाति ॥ सादन्यंविदथ्यंसभेयंपितृश्रवणंयोददाशदस्मैस्वाहा ॥ सोमायेदंनमम २ ॥ इंद्रंवोमधुच्छंदाइंद्रोगायत्री ॥ ऐंद्रयावकहोमेवि० ॥ ॐ इंद्रंवोविश्वतस्परिहवामहेजनेभ्यः ॥ अस्माकमस्तुकेवलःस्वाहा ॥ इंद्रायेदंनमम ३ ॥ एभिर्मंत्रैर्यथाक्रमंहुत्वास्विष्टकृदादिमार्जनांतंकुर्यात् ॥ (अत्रकेचिद्रुद्रायस्वाहेत्यादिनानामंत्रैरेवहोममाहुः ) ॥ ततोद्विहायनमेकहायनंवाजीववत्सायाःपयस्विन्याःपुत्रंनीलादिवर्णंयथालाभंवाआनीय ततश्चतस्रो द्वेएकांएकवर्षाधिकांवत्सतरीमानीयगोसहितवृषस्यमंत्रैरभिषेकःकार्यः ॥ आपोहिष्ठेतितिसृणांसिंधुद्वीपआपोगायत्री ॥ वृषवत्सतर्यभिषेकेवि० ॥ कयानइतितिसृणांगौतमोवामदेवइंद्रोगायत्रीतृतीयापादनिचृत् ॥ वृषवत्स० ॥ ॐ कयानश्चित्रआभुवदूतीसदावृधःसखा ॥ कयाशचिष्ठयावृता ॥ कस्त्वासत्योमदानांमंहिष्ठोमत्सदंधसः ॥ दृढाचिदारुजेवसु ॥ अभीषुणःसखीनामविताजरितॄणां ॥ शतंभवास्यूतिभिः ॥ वृषवत्सतरीभ्यांनमःवृषवत्सतर्यावावाहयामीत्यावाह्यासनादिवस्त्रगंधाक्ष

तमाल्यादिभिर्यथाशक्त्यलंकृत्य ॥ ऋषभमितिपंचर्चस्यसूक्तस्यऋषभोविराडनुष्टुप् अंत्यामहापंक्तिः ॥ वृषभोपस्थानेवि० ॥
ॐ ऋषभंमासमानानांसपत्नानांविषासहिं ॥ हंतारंशत्रूणांकृधिविराजंगोपतिंगवां ॥ अहमस्मिसपत्नहेंद्रइवारिष्टोअक्षतः ॥
अधःसपत्नामेपदोरिमेसर्वेअभिष्ठिताः ॥ अत्रैववोपिनह्याम्युभेआर्त्नीइवज्यया ॥ वाचस्पतेनिषेधेमान्यथामदधरंवदान् ॥
अभिभूरहमागमंविश्वकर्मेणधाम्ना ॥ आवश्चित्तमावोव्रतमावोहंसमितिंददे ॥ योगक्षेमंवआदायाहंभूयासमुत्तमआवोमूर्धा
नमक्रमीं ॥ अधस्पदान्मउद्वदतमंडूकाऽइवोदकान्मंडूकाउदकादिव ॥ इतिपंचर्चसूक्तंकृतांजलिपुटोजपेत् ॥ ततोवृषंप्रद
क्षिणंअग्निपूर्वतआनीय तस्यदक्षिणबाहुमूलेस्फिचिभस्मनात्रिशूलाकारंवामेचक्राकारमंकयित्वा तदुपरितप्तलोहेनचिह्नंकार
येत् ॥ प्रांचःकेचनत्रिशूलांकनमात्रमिच्छंति ॥ ततःप्रांचमुत्सृजेत् ॥ व्रजंतमनुमंत्रयीत ॥ एतंयुवानमितिमंत्रस्ययाज्ञवल्क्य
ऋषभस्त्रिष्टुप् वृषोत्सर्गेवि० ॥ एतंयुवानंपरिवोददामितेनक्रीडंतीश्चरतप्रियेण ॥ मानःशाप्तजनुषासुभागारायस्पोषेणसमि
षामदेम ॥ शांतातेपृथिवीशिवमंतरिक्षंद्यौस्तेदेव्यभयंकृणोतु ॥ शिवादिशःप्रदिशउद्दिशस्तआपोविद्युतःपरिपांतुसर्वतःशांतिः
शांतिःशांतिः ॥ सर्वतोव्रजस्वेतिब्रूयात् ॥ ततोवृषंपूर्वाभिमुखंकृत्वा ॥ कद्रुद्रायेतिनवर्चस्यसूक्तस्यघौरःकण्वोरुद्रोगायत्रीतृ
तीयामैत्रावरुणीअंत्यस्तृचःसौम्योंत्यानुष्टुप् ॥ पूर्वदिगुपस्थानेवि० ॥ कद्रुद्रायप्रचेतसेमीळ्हुष्टमायतव्यसे ॥ वोचेमशंतमंहृदे ॥
यथानोअदितिःकरत्पश्वेनृभ्योयथागवे ॥ यथातोकायरुद्रियं ॥ यथानोमित्रोवरुणोयथारुद्रश्चिकेतति ॥ यथाविश्वेसजोषसः ॥
गाथपतिंमेधपतिंरुद्रंजलाषभेषजं ॥ तच्छंयोःसुम्नमीमहे ॥ यःशुक्रइवसूर्योहिरण्यमिवरोचते ॥ श्रेष्ठोदेवानांवसुः ॥ १ ॥
शंनःकरत्यर्वतेसुगंमेषायमेष्ये ॥ नृभ्योनारिभ्योगवे ॥ अस्मेसोमश्रियमधिनिधेहिशतस्यनृणां ॥ महिश्रवस्तुविनृम्णं ॥

मानःसोमपरिबाधोमारातयोजुहुरंत ॥ आनइंद्रोवाजेभज ॥ यास्तेप्रजाऽअमृतस्यपरस्मिन्धामन्नृतस्य ॥ मूर्धानाभासोमवे नऽआभूषंतीःसोमवेदः ॥ २ ॥ एतत्सूक्तांतेभोवृष ( गोभिःसह ) अनयावत्सतर्यासहतृणंभक्षजलंपिबयथासुखंक्रीडस्वेति वदेत् ॥ ततोदक्षिणाभिमुखंकृत्वा ॥ इमारुद्रायेत्येकादशर्चस्यसूक्तस्यकुत्सोरुद्रोजगती ॥ अंत्येत्रिष्टुभौ ॥ दक्षिणदिगुपस्था नेवि० ॥ ॐ इमारुद्रायतवसेकपर्दिनेक्षयद्वीरायप्रभरामहेमतीः ॥ यथाशमसद्द्विपदेचतुष्पदेविश्वंपुष्टंग्रामेऽअस्मिन्ननातुरं ॥ मृळानोरुद्रोतनोमयस्कृधिक्षयद्वीरायनमसाविधेमते ॥ यच्छंचयोश्चमनुरायेजेपितातदश्यामतवरुद्रप्रणीतिषु ॥ अश्यामते सुमतिंदेवयज्ययाक्षयद्वीरस्यतवरुद्रमीढ्वः ॥ सुम्नायन्निद्विशोअस्माकमाचराऽरिष्टवीराजुहवामतेहविः ॥ त्वेषंवयंरुद्रंयज्ञसाधं वंकुंकविमवसेनिह्वयामहे ॥ आरेअस्मद्दैव्यंहेळोअस्यतुसुमतिमिद्वयमस्यावृणीमहे ॥ दिवोवराहमरुषंकपर्दिनंत्वेषंरूपंनमसा निह्वयामहे ॥ हस्तेबिभ्रद्भेषजावार्याणिशर्मवर्मच्छर्दिरस्मभ्यंयंसत् ॥ १ ॥ इदंपित्रेमरुतामुच्यतेवचःस्वादोःस्वादीयोरुद्राय वर्धनं ॥ रास्वाचनोऽअमृतमर्तभोजनंत्मनेतोकायतनयायमृळ ॥ मानोमहांतमुतमानोअर्भकंमानउक्षंतमुतमानउक्षितं ॥ मा नोवधीःपितरंमोतमातरंमानःप्रियास्तन्वोरुद्ररीरिषः ॥ मानस्तोकेतनयेमानआयौमानोगोषुमानोअश्वेषुरीरिषः ॥ वीरान्मा नोरुद्रभामितोवधीर्हविष्मंतःसदमित्वाहवामहे ॥ उपतेस्तोमान्पशुपाइवाकरंरास्वापितर्मरुतांसुम्नमस्मे ॥ भद्राहितेसुमतिर्मृ ळयत्तमाथावयमवइत्तेवृणीमहे ॥ आरेतेगोघ्नमुतपूरुषघ्नंक्षयद्वीरसुम्नमस्मेतेऽस्तु ॥ मृळाचनोअधिचब्रूहिदेवाधाचनःशर्मय च्छद्विबर्हाः ॥ अवोचामनमोअस्माअवस्यवःशृणोतुनोहवंरुद्रोमरुत्वान् ॥ तन्नोमित्रोवरुणोमामहंतामदितिःसिंधुःपृथिवीउ तद्यौः ॥२॥ एतत्सूक्तांते (गोभिः सह) अनयावत्सतर्यासहतृणंभक्षजलंपिबयथासुखंक्रीडस्व ॥ ततःपश्चिमाभिमुखंकृत्वा ॥

आतेपितरिति नवर्चस्य सूक्तस्य गृत्समदो रुद्रस्त्रिष्टुप् ॥ पश्चिमदिगुपस्थाने वि० ॥ ॐ आतेंपितर्मरुतांसुम्नमेंतुमानःसूर्यस्य संदृशोंयुयोथाः ॥ अभिनोंवीरोअर्वतिक्षमेतप्रजांयेमहिरुद्रप्रजाभिः ॥ त्वादत्तेभीरुद्रशंतमेभिःशतंहिमांअशीयभेषजेभिः ॥ व्य१स्मद्वेषोंवितरंव्यंहोव्यमीवाश्चातयस्वाविषूचीः ॥ श्रेष्ठोंजातस्यंरुद्रश्रियासिंतवस्तमस्तवसांवज्रबाहो ॥ पर्षिणःपारमंहसःस्वस्तिविश्वांअभींतीरपसोयुयोधि ॥ मात्वांरुद्रचुक्रुधामानमोंभिर्मादुष्टुतीवृषभमासहूंती ॥ उन्नोंवीरांअर्पयभेषजेभिर्भिषक्तमंत्वाभिषजांशृणोमि ॥ हवींमभिर्हवंतेयोहविभिरवस्तोमेंभीरुद्रंदिंषीय ॥ ऋदूदरःसुहवोमानोंअस्यैबभ्रुःसुशिप्रोरीरधन्मनायैं ॥ १ ॥ उन्मांममंदवृषभोमरुत्वान्त्वक्षीयसावयंसानाधमानं ॥ घृणींवच्छायामरपाअंशीयाविंवासेयंरुद्रस्यंसुम्नं ॥ क१स्यतेंरुद्रमृळयाकुर्हस्तोयोअस्तिभेषजोजलांषः ॥ अपभर्तारपसोदैव्यस्याभीनुमांवृषभचक्षमीथाः ॥ प्रबभ्रवेवृषभायश्वितीचेमहोमहींसुष्टुतिमीरयामि ॥ नमस्याकल्मलीकिनंनमोंभिर्गृणीमसित्वेषंरुद्रस्यनाम ॥ स्थिरेभिरंगैःपुरुरूपउग्रोबभ्रुःशुक्रेभिःपिपिशेहिरंण्यैः ॥ ईशानादस्यभुवनस्यभूरेर्नवाउयोषद्रुद्रादसुर्यं ॥ अर्हन्बिभर्षिसायकानिधन्वाऽर्हन्निष्कंयजतंविश्वरूपं ॥ अर्हन्निदंदयसेविश्वमभ्वंनवाऽओजीयोरुद्रत्वदस्ति ॥ २ ॥ स्तुहिश्रुतंगर्तसदंयुवानंमृगंनभीममुपहत्नुमुग्रं ॥ मृळाजरित्रेरुद्रस्तवानोन्यंतेअस्मन्निवंपंतुसेनाः ॥ कुमारश्चित्पितरंवंदमानंप्रतिंनानामरुद्रोपयंतं ॥ भूरेर्दातारंसत्पतिंगृणीषेस्तुतस्त्वंभेषजारास्यस्मे ॥ यावोंभेषजामरुतःशुचीनियाशंतमावृषणोयामयोभु ॥ यानिमनुरवृंणीतापितानस्ताशंचयोश्चरुद्रस्यंवश्मि ॥ परिंणोहेतीरुद्रस्यंवृज्याःपरित्वेषस्यदुर्मतिर्महीगात् ॥ अवस्थिरामघवंद्भ्यस्तनुष्वमीढ्वस्तोकायतनयायमृळ ॥ एवाबभ्रोवृषभचेकितानयथादेवनहृणीषेनहंसि ॥ हवनश्रुन्नोंरुद्रेहबोधिबृहद्वदेमविदथेसुवीराः ॥ ३ ॥ एतत्सूक्तांतेनयाबत्सतर्यासहतृणंभक्षजलं

पिबयथासुखंक्रीडस्व ॥ उदङ्मुखंकृत्वा ॥ इमारुद्रायेतिचतसृणांवसिष्ठोरुद्रोजगती ॥ अंत्यात्रिष्टुप् ॥ उत्तरदिगुपस्थाने वि० ॥ इमारुद्रायस्थिरधन्वनेगिरःक्षिप्रेषवेदेवायस्वधाव्ने ॥ अषाढायसहमानायवेधसेतिग्मायुधायभरताशृणोतुनः ॥ स हिक्षयेणक्षम्यस्यजन्मनःसाम्राज्येनदिव्यस्यचेतति ॥ अवन्नवंतीरुपनोदुरश्चरानमीवोरुद्रजासुनोभव ॥ यातेदिद्युदवसृष्टादि वस्परिक्ष्मयाचरतिपरिसावृणक्तुनः ॥ सहस्रंतेस्वपिवातभेषजामानस्तोकेषुतनयेषुरीरिषः ॥ मानोवधीरुद्रमापरादामातेभूम प्रसितौहीळितस्य ॥ आनोभजबर्हिषिजीवशंसेयूयंपातस्वस्तिभिःसदानः ॥ १ ॥ एतत्सूक्तांतेनयावत्सतर्यासहतृणंभक्षजलंपि बयथासुखंक्रीडस्वेतिपूर्ववत् ॥ ततःवृषपुच्छेप्रेतस्यनामगोत्राद्युच्चार्यतर्पणंकुर्यादितिकेचित् ॥ एतावत्कृत्वास्विष्टकृदादिकु र्यादितिवा ॥ ततःपरिस्तरणविसर्जनादिकर्मशेषंसमापयेत् ॥ ततोरुद्रसोमेंद्रेभ्योनुरूपमामान्नत्रयंसदक्षिणंदद्यात् ॥ ततोवृ षोत्सर्गसंपूर्णतासिद्ध्यर्थंतिलानुदकुंभंगांवासोहिरण्यंयथाशक्तिदक्षिणांचदद्यात् ॥ पतिपुत्रवत्याःसुवासिन्यानवृषोत्सर्गःत स्थानेएकापयस्विनीगौर्देया ॥ इतिवृषोत्सर्गविधिः ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥

## ॥ ३४६ ॥ अथमहैकोद्दिष्टम् ॥

श्रीः ॥ तस्मिन्नेवाहन्येकंब्राह्मणंनिमंत्र्यतस्यश्मश्रुकर्माभ्यंगादिकारयित्वा ॥ अद्येत्यादिअमुकगोत्रस्यामुकप्रेतस्यप्रेतत्वनिवृ त्त्योत्तमलोकप्राप्तयेएकादशाहेमहैकोद्दिष्टंकरिष्यइतिसंकल्प्य । क्षणपाद्यासनार्घ्यगंधपुष्पाच्छादनानिदद्यात् । तत्रार्घ्येदक्षि णाग्रकुशोपरिएकमर्घ्यपात्रमासाद्यतत्रैकंपवित्रंजलंचक्षिप्त्वा । तिलोसिसोमदेवत्योगोसवेदेवनिर्मितः । प्रत्नवद्भिःप्रत्तःप्रेतेमाँ

१ ततःअद्येत्यादिर्पिंडमवाहणस्नानांतंनवश्राद्धैकोद्दिष्टंप्राक्तनविषमविनवत्कुर्यात् । शिवस्वामिमतेनैतत् । किंतुपंचैवनवश्राद्धानिपूर्वोक्तामितन्मते ।

लोकान्प्रीणयाहिनः इतिमंत्रेणतूष्णींवातिलान्क्षिप्त्वा अमुकगोत्रेत्यादिसंबुद्ध्याप्रेतांतमुक्त्वामहैकोद्दिष्टेइदमर्घ्यंतवोपतिष्ठता
मित्यर्घ्यंदत्वा । पात्रेघृताक्तंसिद्धमन्नमादायविप्रपाणौप्रक्षालितेदर्भानास्तीर्यामुकगोत्रायामुकशर्मणेप्रेतायस्वाहेतिहस्तेएका
माहुतिंहुत्वातदन्नमग्नौक्षिपेत् । नवापाणिहोमः । ततःपरिवेषणाद्यंगुष्ठनिवेशनांतंकृत्वाअमुकगोत्रायामुकप्रेतायेदमन्नंयथा
शक्तिसोपस्करममृतरूपमुपतिष्ठतामितिसंकल्प्याऽऽपोशनादिदद्यात् । दर्भशिखायाममुकगोत्रेत्यादिअमुकप्रेतायायंतेपिंडउ
पतिष्ठतामितिपिंडंदद्यात् । तिलोदकंभृंगराजपत्रंदक्षिणांचदद्यात् । प्रेतस्यवस्त्रशयनाभरणानिपादुकाछत्रोदकपात्रवाहनादी
नियथाशक्तिदद्यात् । भूयसींदक्षिणांदत्वासंतोषयेत् । अभिरम्यतामितिविसर्जनं । अभिरताःस्मेतिप्रतिवचनं । एकोद्दिष्टेए
कोविप्रःदिवैवनिमंत्रणं एकमर्घ्यपात्रं धूपदीपौनस्तः स्वधाशब्दपितृशब्दनमःशब्दानसंति नाभिश्रवणं सर्वप्राचीनावीति
नाकार्यं दैवंनास्ति नाग्नौकरणं एकएवपिंडः अनुमंत्रणादिसर्वममंत्रकं अक्षय्यस्थानेउपतिष्ठतामितिवदेत् श्राद्धशेषभोजनं
नकार्यं अंतेस्नानं नवश्राद्धैकोद्दिष्टेतुसर्वममंत्रकं स्मृत्यर्थसारेमहैकोद्दिष्टानंतरंनवश्राद्धमितिक्रमः ॥ इतिमहैकोद्दिष्टं ॥ ॥

## ॥ ३४७ ॥ अथाग्नौमहैकोद्दिष्टम् ॥

श्रीः ॥ अथद्विजाभावेअग्नौआद्यमासिकमहैकोद्दिष्टविधिः ॥ ग्रामाद्बहिःशुचौदेशेगोमयेनोपलिप्तेअद्येत्यादिअमुकगोत्रस्या
मुकप्रेतस्यप्रेतत्वनिवृत्त्योत्तमलोकप्राप्तयेएकादशाहेअग्नौमहैकोद्दिष्टंकरिष्यइतिसंकल्प्य । ॐ भुर्भूवःस्वःइतिलौकिकाग्निंप्रति
ष्ठाप्यपरिसमुह्यपरिस्तीर्यपर्युक्ष्यगंधादिभिरभ्यर्च्य द्विजवदग्निसमीपेदेशकालौस्मृत्वाग्नौमहैकोद्दिष्टश्राद्धंकरिष्ये तिलोदकं०
इतिसंकल्प्य दर्भवटौअमुकगोत्रामुकप्रेतमहैकोद्दिष्टश्राद्धेक्षणउपतिष्ठतामित्यादिक्षणादिपूर्ववद्दद्यात् । अग्निसमीपेपूर्ववद

र्थं । अमुकगोत्रावेत्यादिप्रेतायस्वाहेतिअग्नौएकाहुतिहोमः । ततोऽग्नेरग्रतस्त्रिकोणमंडलोपरिपात्रंसंस्थाप्यपरिवेषणादिसंक
ल्पांतंपूर्ववत् । उदीरतामित्यष्टभिर्मंत्रैःप्रणवाद्यैःस्वाहाकारांतैश्चतुर्वाराावृत्त्याद्वात्रिंशदाहुतीर्ग्रासमिताःसोपस्करान्नस्यजुहुया
न्नत्यागः । उदीरतामित्यष्टर्चस्यशंखःपितरस्त्रिष्टुप् । महैकोद्दिष्टान्नहोमेवि० ॥ ॐ उदीरतामवरउत्परासउन्मध्यमाःपितरः
सोम्यासः । असुंयईयुरवृकाऋतज्ञास्तेनोवंतुपितरोहवेषुस्वाहा ॥ इदंपितृभ्योनमोअस्त्वद्ययेपूर्वासोयउपरासईयुः । येपार्थि
वेरजस्यानिषत्तायेवानूनंसुवृजनासुविक्षु ॥ आहंपितृन्त्सुविदत्राँअवित्सिनपातंचविक्रमणंचविष्णोः । बर्हिषदोयेस्वधयासुत
स्यभजंतपित्वस्तइहागमिष्ठाः ॥ बर्हिषदःपितरऊत्य१र्वागिमावोहव्याचकृमाजुषध्वं । तआगतावसाशंतमेनाथानःशंयोररं
पोदधात ॥ उपहूताःपितरःसोम्यासोबर्हिष्येषुनिधिषुप्रियेषु । तआगमंतुतइहश्रुवंत्वधिब्रुवंतुतेवन्त्वस्मान् ॥ आच्याजानुद
क्षिणतोनिषद्येमंयज्ञमभिगृणीतविश्वे । माहिंसिष्टपितरःकेनचिन्नोयद्वआगःपुरुषताकराम ॥ आसीनासोअरुणीनामुपस्थेर
यिंधत्तदाशुषेमर्त्याय । पुत्रेभ्यःपितरस्तस्यवस्वःप्रयच्छततइहोर्जंदधात ॥ येनःपूर्वेपितरःसोम्यासोनूहिरेसोमपीथंवसिष्ठाः ।
तेभिर्यमःसंरराणोहवींष्युशन्नुशद्भिःप्रतिकाममत्तु ॥ एवंचतुरावृत्तसूक्तेनद्वात्रिंशदाहुतीर्हुत्वोच्छिष्टपिंडोनदेयः । अग्निसमीपे
एकःपिंडःपूर्ववद्देयः । पिंडार्थमेकंकुशंनिधायअभ्युक्ष्य अ० गो० पिंडार्थेदर्भासनं तस्योपरितिलोदकंउप० अमुकप्रेतक्षुन्नि
वृत्त्यर्थंचरुपिंडउप० तस्योपरितिलोदकमुप० अंजनाभ्यंजनंपाद्यंअर्घ्यंआचमनीयंस्नानंवस्त्रंगंधमाल्यभृंगराजतुलसीपत्राणिस
र्वोपचारार्थेतिलाः धूपदीपौचरुनैवेद्यःतांबूलंदक्षिणा प्रेतस्यवस्त्रशयनासनाभरणानिपादुकाछत्रोदकपात्रवाहनादीनियथाश

किंदद्यात् ॥ अतसीपुष्प० ॥ अनादिनिधनोदेवइतिपठित्वाप्यायनंवाचयित्वापरिस्तरणानिविसृज्यपरिसमुह्यपर्युक्ष्याभ्यर्च्य ग्रांगत्तर्धब्राह्मणेभ्योभूयसींदत्वाअभिरम्यतामितिविसर्जयेत् ॥ इत्यग्नौमहकोद्दिष्टविधिः ॥ ॥ छ ॥ ॥ छ ॥

## ॥ ३४८ ॥ अथरुद्रगणश्राद्धम् ॥

श्रीः ॥ तच्चैकादशरुद्रोद्देशेनरुद्ररूपप्रेतोद्देशेनवाकार्यं ॥ रुद्रोद्देशपक्षेसव्येन तद्रूपप्रेतोद्देशपक्षेऽपसव्येन ॥ तत्रैकादशरुद्र नामानि ॥ अजैकपाद् १ अहिर्बुध्न्यः २ कपाली ३ रुद्र ४ एवच । वृषाकपिश्च ५ शंभुश्च ६ कपर्दी ७ रैवतस्तथा ८ हरश्च ९ बहुरूपश्च १० त्र्यंबकश्चापराजितः ११ ॥ अथप्रयोगः । देशकालौस्मृत्वा अमुकगोत्रस्येत्यादिप्रेतत्वविमुक्त्योत्तमलो. कप्राप्त्यर्थंरुद्रगणश्राद्धंकरिष्यइतिसंकल्प्य । अपसव्यंतूष्णींतिलोदकं । शक्तेनैकैकरुद्रनामग्रहणेनैकैकब्राह्मणभोजनंकार्यं । एकैकरुद्ररूपप्रेतोद्देशपक्षे अजैकपाद्रूपिन्अमुकप्रेतइदमासनमित्यादिप्रत्येकंक्षणपाद्येसंबुध्यादत्वाआसनंषष्ठ्यान्नदानंचतुर्थ्या चार्पयेत् । अशक्तेनसर्वोद्देशेनैकएवभोजनीयः । भोजनाभावेएकादशामान्नानि । एकब्राह्मणपक्षेतुएकादशनामान्युक्त्वाएतद्रू पिणेऽमुकप्रेतायेत्याद्यूह्यंभोजनानंतरंदक्षिणाविसर्जनादिकार्यं।अत्रपिंडदानार्घ्यश्रीकरधाविकिराणामभावः॥इतिरुद्रगण०॥

## ॥ ३४९ ॥ अथवसुगणश्राद्धम् ॥

श्रीः ॥ इदंचकृताकृतं । इदमप्यष्टवसूद्देशपक्षेसव्येनतद्रूपप्रेतोद्देशपक्षेत्वपसव्येनकार्यं । शक्तेनाष्टौब्राह्मणाभोजनीयाः । अ शक्तेनैकःसर्वोद्देशेन । अन्नाभावेआमान्नं । अन्यत्सर्वंपूर्ववत् । वसुनामानिच ॥ ध्रुवो १ ऽध्वरश्च २ सोमश्च ३ आप

श्च ४ वानिलो ५-ऽनल-६ । प्रत्यूषश्च ७ प्रभासश्च ८ वसवोऽष्टौप्रकीर्तिताइति ॥ अमुकगोत्रेत्यादिसंकल्पांते ध्रुवस्वरूपि न् अमुकगोत्रामुकप्रेतअर्घ्यंतेक्षणस्यतिष्ठतांइत्यादिसर्वंकुर्यात् ॥ अत्रापिपिंडाद्यभावः ॥ इतिवसुगणश्राद्धं ॥ ॥ ७२ ॥

## ॥ ३५० ॥ अथषोडशमासिकश्राद्धानि ॥

श्रीः ॥ तानिच । आद्यमासिक १ ऊनमासिक २ द्वितीयमासिक ३ त्रैपक्षिक ४ तृतीयमासिक ५ चतुर्थमासिक ६ पंच ममासिक ७ षष्ठमासिक ८ ऊनषाण्मासिक ९ सप्तममासिक १० अष्टममासिक ११ नवममासिक १२ दशममासिक १३ एकादशमासिक १४ द्वादशमासिक १५ ऊनाब्दिकानि १६ तत्तत्कालेकर्तव्यानिद्वादशेह्निसपिंडीकरणाधिकारसिद्ध्यर्थ मपकृष्यएकादशेद्वादशेवाह्निकार्याण्येकोद्दिष्टविधिना । यदिमरणादारभ्यद्वादशमासमध्येकश्चिदधिकस्तदातन्मासिकंद्वि वारंकार्यंएवंसप्तदशश्राद्धानिभवंति ॥ अथप्रयोगः । तस्मिन्नेवाहनिप्रातःषोडशब्राह्मणान्निमंत्र्यतेषांश्मश्रुकर्माभ्यंगौकारयि त्वाकृतमाध्याह्निकः षोडशपाकान्निष्पाद्यशक्तौओदनमात्रभेदंकृत्वाश्राद्धमुपक्रमेत् । अत्यशक्तौआमान्नेनवाकुर्यात् ॥ देश कालौस्मृत्वाऽमुकगोत्रस्याऽमुकप्रेतस्यप्रेतत्वनिवृत्त्योत्तमलोकप्राप्त्यर्थंअतिक्रांतमाद्यमासिकं सपिंड्यधिकारार्थमपकृष्योनमा सिकादीन्यूनाब्दिकांतानिपंचदशमासिकानिचअन्नेनामान्नेनवाएकोद्दिष्टविधिनातंत्रेणकरिष्यइतिसंकल्प्य अमुकगोत्रामु कप्रेतआद्यमासिकेक्षणःक्रियतां । एवंद्वितीयमासिकइत्यादिषोडशस्थानेपुक्षणंदत्वाअमुकगोत्रामुकप्रेताद्यमासिकेद्वितीयमा सिकइत्यादिइदंतेपाद्यमुपतिष्ठतामित्येवंषोडशब्राह्मणेषुपाद्यंदद्यात् । एवमासनार्घ्यगंधपुष्पाच्छादनानिप्रत्येकंषोडशभ्योद द्यात् । अर्घ्येतिलावापेतिलोसीतिमंत्रमहैकोद्दिष्टवदूहः । एकैकमर्घ्यंप्रत्येकं । षोडशपात्रेषुघृताक्तमन्नंप्रत्येकमादायमहैको

द्दिष्टवदमुकशर्मणेप्रेतायस्वाहेति एकैकामाहुतिंतत्तदन्नेनकरेहुत्वाहुतमन्नमग्नौप्रक्षिप्य तत्तदाहुत्यर्थमन्नंयतोगृहीतंतत्तदन्नंतत्र तत्रपरिविष्यांगुष्ठनिवेशनांतंकृत्वा अमुकप्रेतायाद्यमासिकश्राद्धेइदमन्नंयथाशक्तिसोपस्करंसोदकुंभममृतरूपमुपतिष्ठतामिति संकल्पयेत् । एवंद्वितीयमासिकादौ । भुक्तवत्सुद्विजेषुतत्तदन्नंषोडशसुपात्रेषुगृहीत्वातत्तत्कराहुतिशिष्टमन्नंतत्रतत्रप्रक्षिप्यत त्तद्विप्रसमीपेदर्भशिखायाममुकगोत्रायामुकप्रेतायाद्यमासिकादावयंतेपिंडउपतिष्ठतामितिषोडशपिंडान्दद्यात् । आमपक्षेआ मान्नस्यसंकल्पः । सक्तुपिष्टेनचपिंडदानं । पिंडोपरितिलोदकंभृंगराजपत्रादिमहैकोद्दिष्टवत् । अंजनादिकंसर्वंप्राकृतं । अक्ष य्येउपतिष्ठतामितिवदेत् । यथाशक्तिदक्षिणांदत्वाऽभिरम्यतामितिविसर्जयेत् । अन्यत्सर्वंविहितनिषिद्धादिमहैकोद्दिष्टवत् । एवंएकदेशकालकर्तृकत्वात्तंत्रेणषोडशश्राद्धानिकुर्यात् । आद्यमासिकंसर्वसमाप्य[illegible]दीनिप्रत्येकंपृथगेवसर्वाणिनतुतंत्रे णेतिकेचित् । एतदनंतरमाद्याब्दिकमप्येकोद्दिष्टविधिनाकार्यं । आद्यमासिकेनल[illegible]द्धेनपृथक्कार्यंकिंतुआद्यमासिकंआ द्याब्दिकंचतंत्रेणकरिष्यइतिसंकल्पयेदितिकेचित् ॥ इतिषोडशश्राद्धानि ॥ ॥ छ ॥ ॥ छ ॥

## ॥ २५१ ॥ अथदशदानानि ॥

श्रीः ॥ आचम्यप्राणानायम्यदेशकालौनिर्दिश्यअमुकगोत्रस्यपित्रादेःपरलोकोपकारकाणिपूर्वसंकल्पितानिदशदानानिकरि ष्ये ॥ गोभूतिलहिरण्याज्यवासोधान्यगुडानिच ॥ रौप्यंलवणमित्यादिदशदानान्यनुक्रमात् ॥ विप्रंसंपूज्य ॥ ॥ गोप्रदानं ॥ यज्ञसाधनभूतायाविश्वस्याघौघनाशिनी ॥ विश्वरूपधरोदेवःप्रीयतामनयागवा ॥ भूमिदानं ॥ सर्वेषामाश्रयाभूमिर्वराहेण समुद्धृता ॥ अनंतसस्यफलदाअतःशांतिंप्रयच्छमे ॥ तिलदानं ॥ महर्षेर्गोत्रसंभूताःकाश्यपस्यतिलाःस्मृताः ॥ तस्मादेषांप्र

दानेनपितृपापंव्यपोहतु ॥ हिरण्यदानं ॥ हिरण्यगर्भगर्भस्थंहेमबीजंविभावसोः ॥ अनंतपुण्यफलदमतःशांतिंप्रयच्छमे ॥ आज्यदानं ॥ कामधेनोःसमुद्भूतंसर्वक्रतुषुसंस्थितं ॥ देवानामाज्यमाहारअतःशांतिंप्रयच्छमे ॥ वस्त्रदानं ॥ शीतवातोष्ण संत्राणंलज्जायारक्षणंपरं ॥ देहालंकरणंवस्त्रमतःशांतिंप्रयच्छमे ॥ धान्यदानं ॥ सर्वदेवमयंधान्यंसर्वोत्पत्तिकरंमहत् ॥ प्राणि नांजीवनोपायस्ततःशांतिंप्रयच्छमे ॥ गुडदानं ॥ गुडमिक्षुरसोद्भूतंमंत्राणांप्रणवोयथा ॥ दानेनानेनचैतस्यपरालक्ष्मीःस्थिरा गृहे ॥ रौप्यदानं ॥ प्रीतिर्यतःपितॄणांचविष्णुशंकरयोःसदा ॥ शिवनेत्रोद्भवंरूप्यमतःशांतिंप्रयच्छमे ॥ लवणदानं ॥ यस्मा दन्नरसाःसर्वेनोत्कृष्टालवणंविना ॥ शंभोःप्रीतिकरंयस्मादतःशांतिंप्रयच्छमे ॥ अनेनदशदानाख्येनकर्मणाप्रेतोद्धर्तामहाविष्णुः प्रीयतां ॥ इतिदशदानानि ॥ (सर्वत्रपुत्रकर्तृकेसंकल्पवाक्येदानमंत्रे 'मे—मम' इत्यादिस्थले 'पितुः—तस्य' इत्याद्यूहःकार्यः ) ॥

## ॥ ३५२ ॥ अथाष्टदानानि ॥

श्रीः ॥ तानिचआमान्नोदकुंभगोवस्त्रभूम्यास्तरणछत्रासनानि ॥ अमुकशर्मणःपित्रादेःपरलोकेतत्तद्दानकल्पोक्तफलावाप्तयेष्ट दानानिक० ॥ विप्रंसंपूज्य आमान्नदानं ॥ अन्नमेवयतोलक्ष्मीरन्नमेवजनार्दनः ॥ अन्नंब्रह्माखिलत्राणमस्तुजन्मनिजन्मनि ॥ उदकुंभदानं ॥ वारिपूर्णोघटश्चायंदेवत्रयमयोयतः ॥ प्रीयतांधर्मराजस्तुदानेनानेनपुण्यदः ॥ गोप्रदानं ॥ यज्ञसाधनभू ताया० ॥ वस्त्रदानं ॥ शीतवातोष्णसंत्राणं० ॥ भूमिदानं ॥ सर्वेषामाश्रयाभूमिः ॥ शय्या ( डाळी ) ॥ यथानकृष्ण शयनंशून्यंसागरजातया ॥ शय्यैतस्याप्यशून्यास्तुतथाजन्मनिजन्मनि ॥ छत्रदानं ॥ इहामुत्रातपत्राणंकुरुमेकेशवप्रभो ॥ छत्रंत्वत्प्रीतयेदत्तंतस्यास्तुचसदाशुभं ॥ आसनं ( पाट ) ॥ त्रिलोकीनाथदेवेशसर्वभूतकृपानिधे ॥ आसनेनचतुष्यस्वप्रयच्छ

तस्यवांछितं ॥ इत्यष्टदानानि ॥ वृषोत्सर्गांगाष्टदानानितु आमान्नत्रयंतिलानुदकुंभंगावासाहिरण्यंचेति ८ तत्रतिल दानं ॥ महर्षेर्गोत्रसंभूताःकाश्यपस्यतिलाःस्मृताः ॥ तस्मादेषांप्रदानेनतस्यपापंव्यपोहतु ॥ हिरण्यगर्भेतिहिरण्यदानं ॥ अन्ये आमान्नोदकुंभगोवस्त्रदानादिमंत्रादशाष्टदानांतर्गतास्तत्तदुक्ताज्ञेयाःविस्तरभियानपुनःसंगृहीताः ॥ एवमग्रेप्युपदानादौज्ञेयं ॥

## ॥ ३५३ ॥ अथोपदानानि ॥

श्रीः ॥ अन्नंचैवोदकुंभंचोपानहौचकमंडलुः ॥ छत्रंवस्त्रंतथायष्टिंलोहदंडंचदापयेत् ॥ अग्निष्टिकांप्रदीपंचतिलांस्तांबूलमेवच ॥ चंदनंपुष्पमालांचोपदानानिचतुर्दश ॥ पित्रादेःप्रेतस्योत्तमलोकप्राप्त्यर्थंपरलोकेतत्तद्दानकल्पोक्तफलावाप्तयेचतुर्दशोपदानानि क० ॥ आमान्नं ॥ अन्नमेवयतो० ॥ उदकुंभः ॥ वारिपूर्णोघटः० ॥ उपानहदानं ॥ उपानहौप्रदास्यामिकंटकादिनिवारणे ॥ सर्वमार्गेषुसुखदेअतःशांतिंप्रयच्छमे ॥ कमंडलुः ॥ त्रिलोकीनाथ० उदपात्रेणसंतुष्टःप्रयच्छ० ॥ छत्रं ॥ इहामुत्रातप० ॥ वस्त्रं ॥ शीतवातोष्णसं० ॥ यष्टिदानं ॥ त्रिलोकीनाथ० अनेनयष्टिदानेनप्र० ॥ लोहदंडः ॥ ज्ञानाज्ञानकृतंपापंतथालोभात्कृतंचिरात् ॥ लोहदंडप्रदानेनसर्वपापंव्यपोहतु ॥ अग्निष्टिका ॥ त्रिलोकीनाथ०अग्निष्टिकाप्रदानेनप्र०॥दीपदानं॥ दीपोज्ञानप्रदोनित्यंदेवतानांप्रियःसदा ॥ दानेनास्यभवेत्सौख्यंशांतिस्तद्वांछितंफलं ॥ तिलदानं ॥ महर्षेर्गोत्र० ॥ तांबूलदानं ॥ सोपस्करंमतांबूलंसर्वदामंगलप्रियं ॥ प्रियंचैवतुदेवानांसौगंध्यंवदनेस्तुवै ॥ चंदनं ॥ त्रिलोकीनाथ० चंदनस्यप्रदानेनप्रयच्छ० ॥ पुष्पमाला ॥ त्रिलोकीनाथ० पुष्पमालाप्रदानेनप्र० ॥ इतिचतुर्दशोपदानानि ॥ ॥ केचित्तिललोहहेमकार्पासलवणभूमिधेनुसप्तधान्यंत्यष्टदानान्याहुः ॥ त्रिलोकीनाथ० कार्पासेनचसंतुष्टः—सप्तधान्येनसंतुष्टःइत्याद्यूहः ॥

सप्तधान्यानितुयवव्रीहिगोधूमतिलमाषमुद्गप्रियंगुसंज्ञानि ॥ अन्येमंत्राउपरिविज्ञेयाः ॥ ॥ सिद्धस्थालीदानं ॥ इमांपाय सपूर्णांयःस्थालींघृतजलादिभिः ॥ दद्यात्संपत्तिपात्रंस्यादतःपाहिमहेश्वर ॥ ॥ ऊर्णादानं ॥ ऊर्णावस्त्रंचारुचित्रंदेवानाप्री तिवर्धनं ॥ सुखस्पर्शकरंयस्मादतःशांतिं० ॥ ॥ व्यजनदानं ॥ व्यजनंवायुदैवत्यंग्रीष्मकालेसुखप्रदं ॥ अस्यप्रदानात्सक लाःसंतुतस्यमनोरथाः ॥ इति ॥ ॥ तिलपात्रदानं ॥ पित्रादेःजन्मप्रभृतिमरणांतंकृतनानाविधपापप्रणाशार्थं० ॥ तिलाः पुण्याःपवित्राश्चतिलाःसर्वकराःस्मृताः ॥ शुक्लावायदिवाकृष्णाऋषिगोत्रसमुद्भवाः ॥ यानिकानिचपापानिब्रह्महत्यासमानि च ॥ तिलपात्रप्रदानेनतस्यविष्णुर्व्यपोहतु ॥ नग्नप्रच्छादनीयवस्त्रदानं ॥ मंत्रउपरिवत् ॥ ॥ छ ॥ ॥ छ ॥

## ॥ ३५४ ॥ अथप्रायश्चित्तगोदानप्रयोगः ॥

श्रीः ॥ आचम्यप्राणानायम्यदेशकालौसंकीर्त्यअमुकगोत्रस्यामुकप्रेतस्यजन्मप्रभृत्यद्ययावदाचरितसमस्तपातकस्याकृतप्राय श्चित्तस्यामरणांतंपापापनोदनार्थंप्रायश्चित्तधेनुदानंक० ॥ गोःपूजनंकरिष्ये ॥ पंचगावः समुत्पन्नामथ्यमानेमहोदधौ ॥ ता सांमध्येतुयानंदातस्यैदेव्यैनमोनमः ॥ इतिमंत्रेणपूजयेत् ॥ शक्तौस्वर्णशृंगीमित्यादिदानवाक्येवक्ष्यमाणानलंकारांस्तत्रतत्र संयोज्यान्यानप्यर्पयेत् ॥ ततआगावोअग्मन्निति सूक्तेनगांत्रिःप्रदक्षिणीकृत्यप्रार्थयेत् ॥ यालक्ष्मीःसर्वभूतानांयाचदेवेष्ववं स्थिता ॥ धेनुरूपेणसादेवीतस्यपापंव्यपोहतु ॥ देहस्थायाचरुद्राणीशंकरस्यप्रियासदा ॥ धेनुरूपेणसादेवीतस्यपापंव्यपोहतु ॥ विष्णोर्वक्षसियालक्ष्मीःस्वाहायाचविभावसोः ॥ चंद्रार्कशक्रशक्तिर्याधेनुरूपास्तुसाप्रिये ॥ चतुर्मुखस्ययालक्ष्मीर्यालक्ष्मीर्धन दस्यच ॥ लक्ष्मीर्यालोकपालानांसाधेनुर्वरदास्तुमे ॥ स्वधात्वंपितृमुख्यानांस्वाहायज्ञभुजांतथा ॥ सर्वपापहराधेनुस्तस्माच्छां

तिंमेयच्छमे ॥ इतिगांप्रार्थ्यप्रतिग्रहीतारंब्राह्मणंयथाविभवंसंपूज्यगोपुच्छदेशेतमुदङ्मुखमवस्थाप्य स्वयंप्राङ्मुखः स्वर्णयुता
ज्यपूरितकांस्यपात्रेगोपुच्छंनिक्षिप्य ॥ प्रायश्चित्तेसमुत्पन्नेनिष्कृतिर्नकृताक्वचित् ॥ तस्यपापस्यशुद्ध्यर्थंधेनुमेतांददामिते ॥
मयामत्पित्रावाजन्मप्रभृतिअद्ययावदाचरितसमस्तपातकस्याकृतप्रायश्चित्तस्यामरणांतंपातकापनोदकामः प्रायश्चित्तत्वेनक
ल्पितांइमांकपिलांधेनुंरुद्रदैवत्यांसुवर्णशृंगींरौप्यखुरांताम्रपृष्ठांघंटाग्रैवेयकांमुक्तालांगूलांकांस्यदोहनिकांवस्त्रद्वयाभरणाद्युप
स्करयुतां अमुकगोत्रस्यामुकप्रेतस्यपरलोकेसुखसिद्ध्येअमुकगोत्रायामुकशर्मणेतुभ्यमहंसंप्रददेनममेत्युक्त्वा विप्रकरेसकुश
तिलोदकंगोपुच्छंदत्वा ॥ यज्ञसाधनभूतायाविश्वस्याघौघनाशिनी ॥ विश्वरूपधरोदेवःप्रीयतामनयागवा ॥ इतिपठेत् ॥
प्रतिग्रहीतातुदेवस्यत्वेतिमंत्रेणप्रतिगृह्य ॐ स्वस्तीत्युक्त्वाकइदंकस्माअदादितिकामस्तुतिंयथाशाखंपठेत् ॥ कर्तादानस्यप्र
तिष्ठासिद्ध्यर्थंदक्षिणांदत्वायमोक्तांगोमतींविद्यांपठेत् ॥ गावःसुरभयोनित्यंगावोगुग्गुलुगंधिकाः ॥ गावःप्रतिष्ठाभूतानांगा
वःस्वस्त्ययनंमहत् ॥ अन्नमेवपरंगावोदेवानांहविरुत्तमं ॥ पावनंसर्वभूतानांरक्षंतिचवहंतिच ॥ हविषामंत्रपूतेनतर्पयंत्यमरा
न्दिवि ॥ ऋषीणामपिहोतॄणांगावोहोमेप्रतिष्ठिताः ॥ सर्वेषामेवभूतानांगावःशरणमुत्तमं ॥ गावःपवित्रंपरमंगावोमंगलमुत्त
मं ॥ गावःसर्वस्यभूतस्यगावोधन्याःसनातनाः ॥ नमोगोभ्यःश्रीमतीभ्यःसौरभेयीभ्यएवच ॥ नमोब्रह्मसुताभ्यश्चपवित्राभ्यो
नमोनमः ॥ ब्राह्मणाश्चैवगावश्चकुलमेकंद्विधाकृतं ॥ एकत्रमंत्रास्तिष्ठंतिहविरेकत्रतिष्ठति ॥ इति ॥ ततोब्राह्मणेनसहगांप्रद
क्षिणीकृत्यविष्णुंस्मृत्वाकर्मेश्वरार्पणंकृत्वाचामेत् ॥ इतिगोदानविधिः ॥ अयमेवविधिरग्रेप्रत्यक्षधेनुदानेतत्तदूहेनसर्वत्रो
ह्यः ॥ अत्रांगन्यासादिविशेषःपूर्वोक्तगोदानप्रयोगेआलोचनीयः ॥ ॥ छ ॥ ॥ छ ॥

## ॥ ३५५ ॥ अथपंचगोदानानि ॥

पापधेनुदानं ॥ आजन्मोपार्जितंपापंमनोवाक्कायकर्मभिः ॥ तत्सर्वंनाशमायातुपापधेनुप्रदानतः ॥ ममपितुः मनोवाक्कायक र्मभिराजन्मोपार्जितपापापनोदनकामोहंइमांकृष्णांपापापनोदधेनुंयथाशक्तिसोपस्करांरुद्रदैवत्यांगोत्रायशर्मणेतुभ्यंसंप्रददे ॥ ॥ ॥ उत्क्रांतिधेनुदानं ॥ असूत्क्रांतौप्रवृत्तस्यसुखोत्क्रमणसिद्धये ॥ तुभ्यमेनांसंप्रददेधेनुमुत्क्रांतिसंज्ञिकाम् ॥ ममपितुः सुखेनप्राणोत्क्रमणप्रतिबंधकोक्तनिष्कृत्यनुक्तनिष्कृतिजनितसकलपापक्षयद्वारासुखेनप्राणोत्क्रमणसिद्ध्यर्थमिमामुत्क्रांतिसंज्ञि कांधेनुंयथाशक्तिसोपस्करांरुद्रदैवत्यांगोत्रायशर्मणेतुभ्यमहंसंप्रददेनमम ॥ ॥ वैतरणीधेनुदानं ॥ तत्रोपकल्पनं ॥ पाट लांकृष्णांवाहेमशृंगाद्युपेतांकृष्णवस्त्रयुगच्छन्नांसप्तधान्यसंयुक्तांछत्रोपानद्युगुलसंयुक्तांगांसंनिधाप्यद्रोणमितकार्पासशिखरे ताम्रपात्रंतत्रमहिषारूढंदक्षिणवामकरधृतलोहदंडपाशंहैमंयमंस्थापयित्वातदग्रेरक्तपट्टबंधेक्षुदंडनिर्मितनौकोपरितांधेनुंस्थाप यित्वातिथ्यादिसंकीर्त्यअमुकगोत्रस्यामुकप्रेतस्ययमद्वारस्थितवैतरणींतर्तुंगोदानंकरिष्येइतिसंकल्प्य द्विजंवृत्वाहैमप्रतिमा याम‌क्षतपुंजेवाविष्णुंविप्रंगांचसंपूज्यप्रार्थयेत् ॥ विष्णुरूपद्विजश्रेष्ठभूदेवगतिपावन ॥ तर्तुंवैतरणीमस्यकृष्णांगांप्रददाम्य हम् ॥ धेनुकेत्वंप्रतीक्षस्वयमद्वारेमहापथे ॥ उत्तितीर्षुरयंदेविवैतरण्यैनमोस्तुते ॥ यमद्वारपथेघोरेघोरावैतरणीनदी ॥ तांत र्तुमस्ययच्छामिकृष्णांवैतरणींतुगाम् ॥ ममपितुःयमद्वारस्थितवैतरण्याख्यनद्युत्तरणार्थंइमांकृष्णांगांसवत्सांयमप्रतिमायुक्तां कृष्णवस्त्रयुगच्छन्नांसप्तधान्ययुतांरक्तमाल्याद्यलंकृतांयथाशक्तिस्वर्णशृंगाद्युपस्करोपेतांकार्पासद्रोणशिखरांरुद्रदैवत्यांगोत्रा यशर्मणेतुभ्यमहंसंप्रददेइतितिलजलकुशयुतंगोपुच्छंविप्रहस्तेदद्यात् ॥ ॥ ऋणधेनुदानं ॥ ममपितुःऐहिकामुष्मिकसप्तज

न्मार्जितऋणपातकापाकरणार्थंगोदानंक० ॥ ऐहिकामुष्मिकंयच्चसप्तजन्मार्जितंऋणं ॥ तत्सर्वंशुद्धिमायातुगामेकांददतो मम ॥ संकल्पवाक्यमुक्त्वाइमांगांइत्यादिपूर्ववत् ॥ ॥ मोक्षधेनुदानं ॥ मोक्षदोवासुदेवस्तुवेदशास्त्रेषुगीयते ॥ तत्प्रीतये द्विजाग्र्यायमोक्षधेनुंददाम्यहम् ॥ ममपितुःसमस्तपापक्षयपूर्वकसंसारमोक्षावाप्तिकामःश्रीपापापहमहाविष्णुप्रीतिकामश्चइ मांमोक्षधेनुंयथाशक्तिसोपस्करांरुद्रदैवत्यांगोत्रायशर्मणेसंप्रददेनमम ॥ इतिपंचगोदानसंक्षेपः ॥ ॥ छ ॥

## ॥ ३५६ ॥ अथाश्वदानम् ॥

श्रीः ॥ अद्येत्यादि० ममपितुर्वासमस्तपापक्षयपूर्वकमश्वरोमसंख्याकाब्दसूर्यलोकनिवासाप्तिकामःयथाशक्तिसोपस्करंअश्व दानंकरिष्ये ॥ अश्वकर्णेधृत्वादद्यात् ॥ उच्चैःश्रवास्त्वमश्वानांराज्ञांविजयकारक ॥ सूर्यवाहनमस्तुभ्यमतःशांतिंप्रयच्छमे ॥ महार्णवसमुत्पन्नउच्चैःश्रवसपुत्रक ॥ मयात्वंविप्रमुख्यायदत्तोहयसुखीभव ॥ इमंविप्रनमस्तुभ्यमश्वंतेप्रतिपादितम् ॥ प्रति गृह्णीष्वविप्रेंद्रमयादत्तंसुशोभनं ॥ इतिदानमंत्रमुच्चार्यइममश्वंसुवर्णतिलकालंकारयुतंललाटग्रैवेयकादियुतंचगंधपुष्पाद्यर्चि तंसूर्ययमदैवतंममपितुःब्रह्महत्यादिसमस्तपापनाशकामोहयरोमसमसंख्याकाब्दसूर्यलोकनिवासकामश्चगोत्रायशर्मणेतुभ्यम हंसंप्रददेनमम ॥ सांगतासिद्ध्यर्थंदक्षिणांदद्यात् ॥ अनेनाश्वदानाख्येनकर्मणाप्रेतोद्धर्तामहाविष्णुःप्रीयतां ॥ ॥ छ ॥

## ॥ ३५७ ॥ अथशय्यादानम् ॥

श्रीः ॥ अद्यपूर्वेतिलप्रस्थंनिक्षिप्यतस्मिन्दारुमयींस्वास्तीर्णाद्युपस्करयुतांशय्यामास्तीर्यतस्याःसमंतादीशानादिकोणचतुष्टये

शिरोभागेचपंचकुंभान्क्रमात् घृतकुंकुमगोधूमजलपूर्णकुंभमुच्छीर्षेघृतपूर्णकलशंसप्तधान्यानिचसंस्थाप्य अद्येत्यादि० पि
त्रादेःसमस्तपापक्षयपूर्वकाप्सरोगणसेवायुतविमानकरणकेंद्रपुरगमनोत्तरषष्टिसहस्रवर्षाधिकरणक्रीडनस्त्रीसंघसमावृतसर्वलो
कमहिमत्वतदुत्तरषष्टियोजनमंडलराज्यभोगानंतरशिवसायुज्यावाप्तिकामःशय्यादानमहंकरिष्ये इतिसंकल्प्य द्विजंसपत्नी
कंवृत्वायथाविभवंवस्त्रालंकारादिभिःसंपूज्य शय्यायांलक्ष्मीनारायणप्रतिमांस्वर्णमयींसंस्थाप्यसंपूज्यसपत्नीकविप्रेणसहश
य्यांप्रदक्षिणीकृत्यनमःप्रमाण्यैदेव्यैइतिचतुर्दिक्षुक्रमेणप्रणम्य ॥ दानमंत्रस्तु ॥ यथानकृष्णशयनंशून्यंसागरजातया ॥ तथै
तस्याप्यशून्यास्तुशय्याजन्मनिजन्मनि ॥ इति ॥ तिथ्यादिसंकीर्त्यपितुःसर्वपापक्षयेत्यादिशिवसायुज्यावाप्तिकामोगोत्राय
शर्मणेसुपूजितायइमांशय्यांईशानादिकोणचतुष्टयस्थापनक्रमेण घृतकुंकुमगोधूमजलपूर्णकुंभसमेतांहंसतूलीप्रच्छन्नांशुभ्रगं
डोपधानिकांप्रच्छादनपटास्तृतांसप्तधान्ययुतांसतांबूलायतनादर्शैलालवंगकर्पूरयुतां सुगंधपरिमलभोग्यवस्तुचंदनागरुदीपि
कोपानच्छत्रचामरासनयुतांभोजनभाजनजलपात्रपंचवर्णवितानकेशप्रसाधिन्यंजनशलाकापुष्पमालायुतां लक्ष्मीयुतनाराय
णप्रतिमासहितांयुक्तोपस्करामंगिरोदेवत्यांगोत्रायशर्मणेसुपूजितायसालंकृतायसपत्नीकायतुभ्यमहंसंप्रददेनममेति शय्योपवे
शितविप्रहस्तेसाक्षतकुशोदकंक्षिपेत् ॥ तस्मैसुवर्णमेवदक्षिणांदद्यात् ॥ ततोब्राह्मणेभ्योभूयसींदद्यात् ॥ इतिशय्यादानम् ॥

## ॥ ३५८ ॥ अथभूमिदानम् ॥

श्रीः ॥ सागोचर्ममिताधिकावादेया ॥ दशहस्तेनदंडेनत्रिंशद्दंडानिवर्तनं ॥ त्रिभागहीनंगोचर्ममानमाहप्रजापतिः ॥ अद्ये
त्यादिपितुःसर्वपापक्षयपूर्वकंषष्टिसहस्रवर्षस्वर्गनिवासोत्तरंशिवपुरनिवासार्थंभूदानंक० ॥ विप्रंवृत्वा ॥ सर्वेषामाश्रयाभूमिर्व

राहेणसमुद्धृता ॥ अनंतसस्यफलदाअतःशांतिं० ॥ यस्यांरोहंतिबीजानिवर्षाकालेमहीतले ॥ भूमेःप्रदानात्सकलास्तस्यसंतु मनोरथाः ॥ इमांभूमिंवृक्षाद्युपेतांतस्योत्तमवांविष्णुदैवत्यांसंकल्पहेतवेसंप्रददे ॥ ॥ पददानम् ॥ आसनोपानहौछत्रंमुद्रिकाचकमंडलुः ॥ यज्ञोपवीताज्येवस्त्रंभोजनंचान्नभाजनं ॥ दशकंपदमेतत्स्यात्पदान्येवंत्रयोदश ॥ देयानिवायथाशक्तितेना सौप्रीणितोभवेत् ॥ पित्रादेःमार्गकष्टपरिहारपूर्वकमुत्तमलोकावाप्तयेतृप्त्यर्थंचपददानंक० ॥ त्रिलोकीनाथदेवेशसर्वभूतकृपानिधे ॥ पददानेनतुष्यस्वप्रयच्छतस्यवांछितं ॥ संकल्पवाक्यांतेइदंयथाशक्तिआसनादिदशोपकरणसमूहात्मकंपदंतृतीयांश दक्षिणायुतंतुभ्यंसंप्रददे ॥ ॥ शालग्रामदानम् ॥ सशैलवनभूचक्रदानसमफलावाप्तयेशाल० ॥ महाकोशनिवासेनशक्राद्यैरुपशोभितः ॥ शालग्रामप्रदानेनतस्यशापंव्यपोहतु ॥ ॥ रुद्राक्षमालादानम् ॥ अष्टाविंशतिसंख्याकैरुद्राक्षैर्योजितामया ॥ अर्पितातवहस्तेचगृहाणद्विजसत्तम ॥ ॥ पुस्तकदानं ॥ गोदानसमफलावाप्तिस्वर्गलोकनिवासविद्यादानादिकल्पोक्तफलावाप्तये० ॥ सर्वविद्याश्रयायज्ञाःकारणंलिखिताक्षरं ॥ पुस्तकस्यप्रदानेनतस्यप्रीणातुभारती ॥ संकल्पवाक्येनदद्यात् ॥ इतिभूम्यादिदानानि ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥

## ॥ ३५९ ॥ अथसपिंडीकरणम् ॥

श्रीः॥तत्रदेवार्थंविप्रद्वयंप्रेतार्थमेकःपार्वणार्थंत्रयइतिषट्अशक्तौदेवार्थंप्रेतार्थंपार्वणार्थंप्रत्येकमेकैकइतित्रयंवानिमंत्र्य आचम्य पवित्रंतेइतिपवित्रादिधृत्वाप्राणानायम्यदेशकालौसंकीर्त्य अमुकगोत्रस्यअमुकशर्मणःप्रेतस्यप्रेतत्वनिवृत्त्यापितृलोकप्राप्त्यर्थं भारद्वाजगोत्रैःकृष्णविष्णुमहादेवशर्मभिःवसुरुद्रादित्यस्वरूपैःप्रेतपितृपितामहप्रपितामहैः सहसपिंडीकरणंमृताहाद्द्वादशेह्नि

पार्वणैकोद्दिष्टेनविधिनाकरिष्येइतिसंकल्प्य ( मातरितुअमुकगोत्रायाअमुकदायाःभारद्वाजगोत्राभिःअस्मत्पितामहीप्रपितामहीवृद्धप्रपितामहीभिर्वसुरुद्रादित्यस्वरूपाभिःसह० इति ॥ एवंभ्रात्रादिसपिंडनेप्यूह्यं ) तदंगयवतिलोदकवैश्वदेवसूक्तजपमार्जनब्रह्मदंडादि । श्राद्धभूमौ० क्षणादिकरिष्ये । अपोदत्वाकामकालसंज्ञकविश्वेदेवार्थत्वयाक्षणःकरणीयः । एवंद्वितीये । अपसव्यंप्रेतार्थक्षणउपतिष्ठतां । प्रेतस्यपित्रर्थत्वयाक्षणःकरणीयःएवंपितामहार्थप्रपितामहार्थंच । स्मृत्युक्तकरणपक्षेतु सर्वेषांपादप्रक्षालनं । मंडलानिकृत्वादेवमंडलाद्दक्षिणेत्रिकोणमंडलंज्ञेयं । अमुकगोत्रअमुकशर्मन्प्रेतइदंतेपाद्यमुपतिष्ठतां । प्रेतपित्रादौपार्वणवत् । ततःकर्ताब्राह्मणानाचमय्यस्वयंद्विराचम्यदेवानुपवेशयित्वा सव्यंसर्वेषांस्वागतंदेवाःसमाध्वं । प्राची० पित्रादयःसमाध्वं । उपक्रांतंसपिंडीकरणश्राद्धंकरिष्ये । शंनोदेवी० यवोसियवया० प्रेतस्थानेतूष्णींपार्वणस्थानेशंनोदेवी० उदीरता० तिलारक्षंत्व० रक्षोहणं० अष्टौवसव० । पाकप्रोक्षणं ॥ आगच्छंतुमहाभागा० श्राद्धभूमौ० ॥ सव्यंकामकालसं० देवानांब्रह्मणेइदमासनंइत्यादिमंत्रवदर्घ्यासादनावाहनार्घ्यदानगंधपुष्पधूपदीपाच्छादनांतार्चनंप्रकृतिवत् ॥ अपसव्यंततोमुकगोत्रस्यामुकप्रेतस्येदमासनं ततःपार्वणस्थत्रयेअपोदत्वाअमुकगोत्राणामित्यादिषष्ठ्यासनंदत्वापुरतःप्रेतार्थमेकमर्घ्यपात्रमासाद्यतत्पूर्वतःपार्वणार्थपात्रत्रयमाग्नेयीसंस्थंचासाद्यप्रेतपात्रेदर्भचतुष्टयंनिधाय पार्वणपात्रेषुप्रत्येकंकुशत्रयंनिधायपात्रचतुष्टयेप्यपआसिच्यशंनोदेवीतिसकृदनुमंत्र्यप्रेतपात्रेतिलोसिसो० प्रत्नवद्भिःप्रत्तःप्रेतेमांल्लोकान्प्रीणयाहिनःइति तूष्णींवातिलान्प्रक्षिप्य पार्वणपात्रेषुप्रकृतिवत्प्रक्षिप्यसर्वत्रगंधादिक्षिप्त्वा प्रेतपात्रंतूष्णींनिवेद्यपित्रादिपात्रत्रयंस्वधाः र्घाःइतिप्रत्येकंनिवेदयेत् । ततःप्रेतपात्रस्थमेकंकुशंप्रेतब्राह्मणहस्तेदत्वा प्रेतपात्रस्थजलैकदेशमादायअमुकगोत्रामुकशर्मन्प्रे॰इदंते

र्घ्यमुपतिष्ठतांइत्यर्घ्यंदत्वाअमुकगोत्रामुकप्रेतपात्रोदकंभारद्वाजगोत्राणांकृष्णविष्णुमहादेवशर्मणांवसुरुद्रादित्यस्वरूपाणां प्रेतपितृपितामहप्रपितामहानामर्घ्यपात्रोदकैःसंयोजयिष्ये संयोजयेत्युक्ते प्रेतपात्रस्थंकुशत्रयंपित्रादिपात्रत्रयेदत्वाप्रेतार्घ्यपात्रस्थजलंवक्ष्यमाणमंत्रैःकिंचित्किंचित्संयोजयेत् । प्रतिसंयोजनंमंत्रावृत्तिः ॥ तत्प्रकारस्तुप्रेतपात्रस्थोदकैकदेशंपात्रांतरेणादाय । येसमानाःसमनसःपितरोयमराज्ये ॥तेषांलोकःस्वधानमोयज्ञोयज्ञेषुकल्पतां॥ येसजाताःसमनसोजीवाजीवेषुमामकाः॥ तेषाश्रीर्मयिकल्पतामस्मिँल्लोकेशतंसमाः ॥ संगच्छध्वंसंवदध्वंसंवोमनांसिजानतां ॥ देवाभागंयथापूर्वेसंजानानाउपासते ॥ समानोमंत्रःसमितिःसमानीसमानंमनःसहचित्तमेषां ॥ समानंमंत्रमभिमंत्रयेवःसमानेनवोहविषाजुहोमि ॥ समानीवआकूतिःसमानाहृदयानिवः ॥ समानमस्तुवोमनोयथावःसुसहासति ॥ एतान्मंत्रानुक्त्वाभारद्वाजगोत्रशिवशर्मन्प्रेत भारद्वाजगोत्रेणकृष्णशर्मणावसुरूपेणस्वपित्रासहसायुज्यंगच्छेत्युक्त्वाहस्तेगृहीतजलंप्रेतपितृपात्रस्थोदकेसंयोजयेत् । पुनःप्रेतार्घ्यपात्रस्थमुदकंकिंचिद्गृहीत्वायेसमानाइत्यादिमंत्रान्पठित्वाभारद्वाजगोत्रशिवशर्मन्प्रेतभारद्वाजगोत्रेणविष्णुशर्मणारुद्ररूपेणस्वपितामहेनसहसायुज्यंगच्छेत्युक्त्वातज्जलंप्रेतपितामहपात्रेसंयोज्य । ततःप्रेतपात्रस्थोदकंसर्वंगृहीत्वायेसमानाइत्यादिमंत्रानुच्चार्यभारद्वाजगोत्रशिवशर्मन्प्रेत भारद्वाजगोत्रेणमहादेवशर्मणाआदित्यरूपेणस्वप्रपितामहेनसहसायुज्यंगच्छेत्युक्त्वाहस्तस्थजलंप्रेतप्रपितामहपात्रेसंयोजयेत्॥( मातरितुभारद्वाजगोत्रगंगाप्रेतपात्रोदकंभारद्वाजगोत्राणांकृष्णावेणीनर्मदादानांप्रेतभर्तृमातृपितामहीप्रपितामहीनांवस्वादिरूपाणामर्घ्यपात्रोदकैःसंयोजयिष्ये । पूर्ववत्त्रिषुकुशनिधानांतेप्रेतपात्रजलैकदेशमादायये समानाइत्यादिमंत्रान्पठित्वा भारद्वाजगोत्रेगंगाप्रेतेभारद्वाजगोत्रयाकृष्णादयावसुरूपयास्वश्वश्र्वासहसायुज्यंगच्छेत्युक्त्वाह

स्तस्थजलंभर्तृमातृपात्रेसंयोज्य पुनर्जलमादाययेसमानाइत्यादिमंत्रांतेभारद्वाजगोत्रेगंगाप्रेतेभारद्वाजगोत्रयावेणीदयारुद्ररूपयास्वभर्तृपितामह्यासहसायुज्यंगच्छेत्युक्त्वाहस्तस्थजलंतत्पात्रेसंयोज्यप्रेतपात्रस्थंसर्वंजलंगृहीत्वायेसमानाइत्यादिमंत्रपाठांतेभारद्वाजगोत्रेगंगाप्रेतेभारद्वाजगोत्रयानर्मदादयाआदित्यरूपयास्वभर्तृपितामह्यासहसायुज्यंगच्छेत्युक्त्वाहस्तस्थमुदकंतत्पात्रेसंयोजयेत् । भ्रात्रादिसंयोजनेप्येवमेवोह्यं ) अनंतरंपार्वणस्थप्रेतपित्रादिभ्यउशंतस्त्वेत्याद्यावाहनपूर्वक्रमेणपार्वणवदर्घ्यंदद्यात् ॥ ततोमुकप्रेतगंधमुपतिष्ठतांमाल्यंआच्छादनमुपतिष्ठतामितिप्रेतेदत्वापित्रादिभ्यःसंबुध्यापार्वणवदाच्छादनांतंकुर्यात् ॥ ततोग्नौकरणंकरिष्यइतिसंकल्प्यभोजनार्थादन्नादुद्धृत्यघृताक्तंकृत्वाअमुकगोत्रायामुकशर्मणेप्रेतायस्वाहेत्येकामाहुतिंप्रेतस्थविप्रकरेहुत्वा तदन्नंवह्नौप्रक्षिप्यपात्रांतरेसघृतमन्नमादायद्विधाविभज्यपार्वणस्थब्राह्मणकरेषुदत्वाततोन्नंघृताभिघारपूर्वंपात्रेषुपरिविष्यपृथिवीतेपात्रमित्यादिकामकालसंज्ञकेभ्योविश्वेभ्योदेवेभ्यःइदमन्नमित्यादिप्रकृतिवत् । प्रेतपात्रेमुकगोत्रायामुकशर्मणेप्रेतायेदमन्नंपरिविष्टंपरिवेक्ष्यमाणंचोपतिष्ठतामितिनिवेद्यपित्राद्युपविष्टस्थलेपृथिवीतइत्यादिपार्वणवत् । ब्रह्मार्पणं० ईशानविष्णु० एकोविष्णु० । ततस्तृप्तेषुविश्वेदेवाःतृप्ताःस्थ प्रेतस्थानेस्वदितमितिप्रश्नःसुस्वदितं पित्रादौप्रकृतिवत् । ततउच्छिष्टपिंडोदेयः । उच्छिष्टसमीपेपिंडार्थमेकंदर्भंनिधाय तत्रशुंधंतांप्रेताइत्युदकंनिनीय अमुकगोत्रायामुकप्रेतायसपिंडी० अयंतेपिंडउपतिष्ठतामितिमहांतंपिंडंदत्वा तद्दक्षिणतःपश्चिमतोवाअपहतेत्यादिशुंधनांतंकृत्वापार्वणवत्प्रेतपित्रादिभ्यःपिंडत्रयंदद्यात् । प्रेतपिंडेअनुमंत्रणांजनाभ्यंजनादिसर्वंतूष्णींकृत्वातिलोदकगंधपुष्पभृंगराजाद्युपचारान्समर्प्य अमुकशर्मणःप्रेतस्ययद्दत्तंसपिंडीकरणश्राद्धीयमन्नोदकादितदक्षय्यमुपतिष्ठतामित्युक्त्वाविशिष्टदक्षिणांदत्वाअभिरम्यतामितिविसर्जयेत्॥

सहैववादक्षिणाविसर्जनेभवेतां । ततःअमुकगोत्रस्यामुकप्रेतस्यपिंडंपित्रादिपिंडैःसहसंयोजयिष्ये इतिपृष्टासंयोजयस्वेतिद्वि जैःप्रत्युक्तःकर्तामधुवाताइतितृचेनकुशरज्ज्वाप्रेतपिंडंत्रिधाविभज्यतदवयवत्रयंत्रिषुपिंडेषुयोजयेदेभिर्मंत्रैः ॥ येसमानाः० ये सजाताः० संगच्छध्वं० समानोमंत्रः० समानीवआकूतिः० इतिपंचपूर्वोक्तान्मधुवाताइतितृचंचोक्त्वा ( पूर्वमर्घ्यसंयोज नेनिर्दिष्टप्रकारेणयोजयेत् ) अमुकगोत्रअमुकप्रेतअमुकशर्मणास्वपित्रासंसृजस्वेतिवदन् प्रेतपिंडप्रथमभागंतत्पिंडेसंयोज्यद धिमधुभ्यांमिश्रीकुर्यात् ॥ एवंप्रेतस्यपितामहप्रपितामहयोःप्रेतपिंडेनसंयोजनं ॥ येसमानाइत्यादीनांसर्वमंत्राणामावृत्तिः ॥ ततःअत्रपितरोमादयध्वमित्यादिपिंडप्रवाहणांतंपार्वणवत् ॥ केचित्तुप्रेतपिंडावयवत्रयेणसंयोजितांस्त्रीन्पिंडानिदानींतनमृ तमारभ्यपुरुषत्रयायपार्वणवत्पुनरपिनामगोत्राद्युच्चार्यदद्यादित्याहुःप्रयोगरत्ने ॥ अस्मिन्पक्षेअपहतेत्यादिकृत्वाप्रवाहणांतं ॥ द्वादशदिनपर्यंतंधारितमुत्तरीयंपिंडोपरिदद्यात्तच्चाचार्योगृह्णीयात् ॥ अन्नयत्रपिंडार्थापाकस्थालींचाचार्यायदद्यात् ॥ ततः॥ एषवोनुगतःप्रेतःपितृभागमवाप्तवान् ॥ शुभंभवतुशेषाणांजायंतांचिरजीविनः ॥ इतिमंत्रंपठेत् ॥ ततोविकिरद्वयंदद्यात् ॥ वर याचनतांबूलदक्षिणादि ॐ स्वधोच्यतामित्यादिविसर्जनांतंपार्वणवत् ॥ स्मृत्युक्तसंकल्पेतुशिवाआपःसंत्वित्यादिसर्वंज्ञेयं ॥ प्रेतस्थानेअन्यविप्राद्द्विगुणदक्षिणांदद्यात् ॥ वाजेवाजेइत्यादिअभिरम्यतामितिविसर्जयेत् ॥ आसीमांतमनुव्रज्यपिंडान्गं गादौप्रक्षिप्यस्नात्वागृहमागत्यवैश्वदेवादिकंकुर्यात् ॥ ( अस्मिन्प्रयोगेउच्छिष्टपिंडदानंपिंडनिर्वपणात्प्रागेवास्तितन्मूलंनवि द्मः ) ॥ इतिसपिंडीकरणम् ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥

## ॥ ३६० ॥ अथपाथेयश्राद्धम् ॥

श्रीः ॥ अथद्वादशेत्रयोदशेवाह्नितिथ्यादिस्मृत्वाप्राचीनावीतीअस्मत्पितुरमुकगोत्रस्यामुकशर्मणःप्रेतलोकात्पितृलोकगमनेसुखसिद्ध्यर्थं अस्मत्पितृपितामहप्रपितामहानांअमुकगोत्राणांअमुकशर्मणांवसुरुद्रादित्यस्वरूपाणांपाथेयश्राद्धंसदैवंसपिंडंपार्वणविधिनाकरिष्येइतिसंकल्प्य क्षणपाद्यासनादिसर्वंपार्वणवत् ॥ इदंपक्वान्नेनआमेनवाकुर्यात् ॥ आमपक्षेपाथेयश्राद्धंसदैवंसपिंडमामेनहविषाकरिष्यइतिसंकल्प्यतिलोदकाद्यन्यत्पार्वणवदेवकुर्यात् ॥ पाकप्रोक्षणस्थानेआमप्रोक्षणं ॥ आवाहनेउशंतस्त्वेतिमंत्रेपितॄन्हविषेस्वीकर्तवेइत्यूहः ॥ भस्ममर्यादांतंप्राग्वत् ॥ विप्रहस्तेषुतंडुलैरग्नौकरणं ॥ अन्नाच्चतुर्गुणंद्विगुणंसमंवातत्तदामंपात्रेषुसंस्थाप्यपाणिहोमशेषंपिंडार्थंसंस्थाप्यपात्रेषुदत्वापृथिवीतेपात्रमित्यादि इदमामंहव्यंकव्यमित्यादि इदमाममममृतरूपंस्वाहेत्यादियथाधर्ममध्वित्यंतंप्राकृतं ॥ यथासुखंजुषध्वमित्यस्यापोशनप्राणाहुतितृप्तिप्रश्नानांचलोपः ॥ संपन्नवाचनांतेअन्नशेषप्रश्नलोपः ॥ सर्वमतेतंडुलसक्तुपिंडदानं ॥ केचिद्गृहसिद्धान्नेनपायसेनवापिंडानाहुः ॥ इतिपाथेयश्राद्धम् ॥ ॥

## ॥ ३६१ ॥ अथत्रयोदशदिनविधिः ॥

श्रीः ॥ ततःकर्ताअभ्यंगस्नानंकृत्वादेशकालौस्मृत्वाममसपरिवारस्यसकलारिष्टोपशांतयेक्षेमायुःसिद्ध्यर्थंश्रीपरमेश्वरप्रीत्यर्थं निधनशांतिंकरिष्ये तदंगत्वेनगणेशपूजनंस्वस्तिवाचनंचकरिष्येइतिसंकल्प्ययथाशास्त्रंस्वस्त्ययनंवाचयित्वाशांतिसूक्तानिनिधनसूक्तानिजपेयुः ॥ आनोभद्रा० वर्ग १ स्वस्तिनोमिमीता० वर्ग २ शन्नइंद्राग्नी० वर्ग० ३ शंवतीःपारे० वर्ग १ आशुःशिशा

नो० वर्ग ३ मुंचामित्वा० वर्ग १ त्यमूषुवाजिनं० वर्ग १ महिंत्रीणाम० वर्ग १ ॥ ईळेद्यावापृथिवीपूर्वचित्तयेऽग्निंघर्मंसुरुचं यामन्निष्टये ॥ याभिर्भरेकारमंशायजिन्वथस्ताभिरूषुऊतिभिरश्विनागतम् ॥ युवोर्दानायसुभराअसश्चतोरथमातस्थुर्वचसंन मंतवे ॥ याभिर्धियोवथःकर्मन्निष्टयेताभिरूषुऊतिभिरश्विनागतम् ॥ युवंतासांदिव्यस्यप्रशासनेविशांक्षयथोअमृतस्यमज्मना ॥ याभिर्धेनुमस्वं१ पिन्वथोनरातामिरूषुऊतिभिरश्विनागतम् ॥ याभिःपरिज्मातनयस्यमज्मनाद्विमातातूर्षुतरणिर्विभूषति ॥ याभिस्त्रिमंतुरभवद्विचक्षणस्ताभिरूषुऊतिभिरश्विनागतम् ॥ याभीरेभंनिवृतंसितमद्भ्यउद्वंदनमैरयतंस्वर्दृशे ॥ याभिःक ण्वंप्रसिषासंतमावतंताभिरूषुऊतिभिरश्विनागतं ॥ १ ॥ याभिरंतकंजसमानमारणेभुज्युंयाभिरव्यथिभिर्जिजिन्वथुः ॥ या भिःकर्कंधुंवय्यंचजिन्वथस्ताभिरूषुऊतिभिरश्विनागतं ॥ याभिःशुचंतिंधनसांसुषंसदंतप्तंघर्ममोम्यावंतमत्रये ॥ याभिःपृश्नि गुंपुरुकुत्समावतंताभिरूषुऊतिभिरश्विनागतं ॥ याभिःशचीभिर्वृषणापरावृजंप्रांधंश्रोणंचक्षसएतवेकृथः ॥ याभिर्वर्तिकांग्र सितामर्मुचतंताभिरूषुऊतिभिरश्विनागतं ॥ याभिःसिंधुंमधुमंतमसश्चतंवसिष्ठंयाभिरजरावजिन्वतं ॥ याभिःकुत्संश्रुतर्यंन र्यमावतंताभिरूषुऊतिभिरश्विनागतं ॥ याभिर्विश्पलांधनसामथर्व्यंसहस्रमीह्ळआजावजिन्वतं ॥ याभिर्वशमश्व्यंप्रेणिमाव तंताभिरूषुऊतिभिरश्विनागतं ॥ २ ॥ याभिःसुदानूऔशिजायवणिजेदीर्घश्रवसेमधुकोशोअक्षरत् ॥ कक्षीवंतंस्तोतारंयाभि रावतंताभिरूषुऊतिभिरश्विनागतं ॥ याभीरसांक्षोदसोद्नःपिपिन्वथुरनश्वंयाभीरथमावतंजिषे ॥ याभिस्त्रिशोकउस्रियाउदा जततताभिरूषुऊतिभिरश्विनागतं ॥ याभिःसूर्यंपरियाथःपरावतिमंधातारंक्षैत्रपत्येष्वावतं ॥ याभिर्विप्रंप्रभरद्वाजमावतंता भिरूषुऊतिभिरश्विनागतं ॥ याभिर्महामतिथिग्वंकशोजुवंदिवोदासंशंबरहत्यआवतं ॥ याभिःपूर्भिद्येत्रसदस्युमावतंताभि

रूषुऊतिभिरश्विनागतं ॥ याभिर्वश्चंविपिपानमुपस्तुतंकलिंयाभिर्वित्तजानिंदुवस्यथः ॥ याभिर्व्यश्वमुतपृथिमावतंताभिरूषु ऊतिभिरश्विनागतं ॥ ३ ॥ याभिर्नराशयवेयाभिरत्रयेयाभिःपुरामनवेगातुमीषथुः ॥ याभिःशारीराजतंस्यूमरश्मयेताभि रूषुऊतिभिरश्विनागतं ॥ याभिःपठर्वाजठरस्यमज्मनाग्निर्नादीदेच्चितइद्धोअज्मन्ना ॥ याभिःशर्यातमवथोमहाधनेताभिरूषु ऊतिभिरश्विनागतं॥ याभिरंगिरोमनसानिरण्यथोग्रंगच्छथोविवरेगोऽअर्णसः॥याभिर्मनुंशूरमिषासमावतंताभिरूषुऊतिभि रश्विनागतं॥याभिःपत्नीर्विमदायन्यूहथुराघवायाभिररुणीरशिक्षतं॥ याभिःसुदासऊहथुःसुदेव्यं१ताभिरूषुऊतिभिरश्विना गतं ॥ याभिःशंतातीभवथोददाशुषेभुज्युंयाभिरवथोयाभिरध्रिगुं ॥ ओम्यावतींसुभरामृतस्तुभंताभिरूषुऊतिभिरश्विनागतं ॥ ४ ॥ याभिःकृशानुमसनेदुवस्यथोजवेयाभिर्यूनोअर्वतमावतं ॥ मधुप्रियंभरथोयत्सरड्भ्यस्ताभिरूषुऊतिभिरश्विनागतं ॥ याभिर्नरंगोषुयुधंनृषाह्येक्षेत्रस्यसातातनयस्यजिन्वथः ॥ याभीरथाँअवथोयाभिरर्वतस्ताभिरूषुऊतिभिरश्विनागतं ॥ या भिःकुत्समार्जुनेयंशतक्रतूप्रतुर्वीतिंप्रचदभीतिमावतं ॥ याभिर्ध्वसंतिंपुरुषंतिमावतंताभिरूषुऊतिभिरश्विनागतं ॥ अप्नस्व तीमश्विनावाचमस्मेकृतंनोदस्रावृषणामनीषां ॥ अद्यूत्येवसेनिह्वयेवांवृधेचनोभवतंवाजसातौ ॥ द्युभिरक्तुभिःपरिपातमस्मा नरिष्टेभिरश्विनासौभगेभिः ॥ तन्नोमित्रोवरुणोमामहंतामदितिःसिंधुःपृथिवीउतद्यौः ॥ ५ ॥ निवर्तध्वंमानुगातास्मान्सिं षक्तरेवतीः ॥ अग्नीषोमापुनर्वसूअस्मेधारयतंरयिं ॥ पुनरेनानिवर्तयपुनरेनान्याकुरु ॥ इंद्रएनानियच्छत्वग्निरेनाउपाजतु ॥ पुनरेतानिवर्ततामस्मिन्पुष्यंतुगोपतौ ॥ इहैवाग्नेनिधारयेहतिष्ठतुयारयिः ॥ यंनियानंन्ययनंसंज्ञानंयत्परायणं ॥ आवर्तनं निवर्तनंयोगोपाअपितंहुवे ॥ यउदानड्व्ययनंयउदानट्परायणं ॥ आवर्तनंनिवर्तनमपिगोपानिवर्ततां ॥ आनिवर्तनिवर्तय

पुनर्नइंद्रोगामदात् ॥ जीवाभिभुनजामहे ॥ पारवावस्वतादधङ्जाधृतेनपयसा ॥ यदुग्राःकश्यपाअश्यास्तदच्यासस्तृजतुनः ॥ आनिवर्तनिवर्तयनिनिवर्तनिवर्तय ॥ भूम्याश्चतस्रःप्रदिशस्ताभ्यएनानिवर्तय ॥ १ ॥ भद्रंनोअपिवातयमनः ॥ शांतापृथिवीशिवमंतरिक्षंद्यौर्नोदेव्यभयंनोअस्तु ॥ शिवादिशःप्रदिशउद्दिशोनआपोविद्युतःपरिपांतुसर्वतःशांतिःशांतिःशांतिः ॥ तव गृहेसर्वारिष्टशांतिरस्तु ॥ यजमानःतथास्तु ॥ ततःस्थापितकलशोदकेनसमुद्रज्येष्ठादिमंत्रैर्यजमानाभिषेकः ॥ नूतनवस्त्रधारणं॥ ततःअशुभनिवृत्त्याचंदनादिभोगधारणाधिकारार्थंसदक्षिणानिचंदनपुष्पफलतांबूलगुडदानानिकरिष्येइतिसंकल्प्यतानिकृत्वाकुलदेवतामिष्टदेवतादींश्चनत्वाअभ्यारमितिदेवतांविसृज्यद्विराचम्यब्राह्मणैःसहबंधुभिःस्वयंभुंजीत ॥ श्रीखंडंधृत्वा तांबूलादिभक्षयित्वाभूयसींदक्षिणांदद्यात् ॥ आचार्यायवस्त्रदक्षिणांदत्वातोषयेत् ॥ इतित्रयोदशदिनविधिः ॥ ॥ छ ॥

## ॥ ३६२ ॥ अथत्रयोदशश्रवणामान्नविधिः ॥

श्रीः ॥ देशकालौनिर्दिश्यअमुकगोत्रस्यामुकशर्मणःपित्रादेःजन्मप्रभृतिमरणांतमाचरितसुकृतस्यधर्मराजाग्रेकथयितॄणांश्रवणाख्यद्वादशब्राह्मणानांप्रीतयेद्वादशतथासमस्तपापक्षयपूर्वकमहाविष्णुप्रसादसिद्ध्यर्थंएकमितित्रयोदशामान्नानिसोदकुंभानिवस्त्रदक्षिणादियुतानिनानानामगोत्रेभ्योब्राह्मणेभ्योदातुमहमुत्सृज्यइत्युत्सृज्यपूजापूर्वकंतानिदद्यात् ॥ ॥ छ ॥

## ॥ ३६३ ॥ अथउदकुंभश्राद्धम् ॥

श्रीः॥ देशकालौस्मृत्वाप्राची० अस्मत्पितृपितामहप्रपितामहानांअमुकगोत्राणांअमुकशर्मणांवसुरुद्रादित्यस्वरूपाणांउदकुंभ

श्राद्धंकरिष्येइतिसंकल्प्य अदैवंसंकल्पविधिनापार्वणवत्कुर्यात् ॥संकल्पक्षणपाद्यासनगंधाच्छादनांतपूजान्नपरिवेषणांतेएवउ दकुंभःइदमन्नंदत्तंचेत्यादित्यागविधिः अंतेतांबूलदक्षिणादि इदमब्दपर्यंतंप्रत्यहं ॥ अशक्तौप्रतिमासं संकटेएकदिनंकुर्यात् ॥

## ॥ ३६४ ॥ अथमासिकश्राद्धानि ॥

श्रीः ॥ देशकालौस्मृत्वाप्राचीनावीति अस्मत्पितृपितामहप्रपितामहानांअमुकगोत्राणांशर्मणांवसुरुद्रादित्यस्वरूपाणांऊनमासिकाद्यूनाब्दिकांतानिएतानिपंचदशमासिकानि स्वकालेकर्तव्यानिअस्मत्कुलेचौलोपनयनविवाहाद्यन्यतमनांदीश्राद्धनिमित्तमपकृष्यसद्यःसदैवानिसपिंडानिसाग्नौकरणानिपार्वणेनविधिनातंत्रेणकरिष्येइतिसंकल्प्यान्यत्सर्वपार्वणवत् ॥ इदंप्रतिमासंकार्यंअशक्तौअपकर्षः ॥ इतिमासिकश्राद्धं ॥ अब्दपूरितश्राद्धविधिः ॥ देशकालौस्मृत्वा प्राचीनावीतीअस्मत्पितृपितामहप्रपितामहानांअमुकशर्मणांअमुकगोत्राणांवसुरुद्रादित्यस्वरूपाणांममपितुःअब्दपूरितश्राद्धंसदैवंसपिंडंसाग्नौकरणं पार्वणेनविधिनाअन्नेनहविषायुष्मदनुज्ञयासद्यःकरिष्ये इतिसंकल्प्य अन्यत्सर्वपार्वणवत् ॥ अथप्रथमाब्दिकश्राद्धविधिः ॥ आचम्यप्राणायामंकृत्वादेशकालौस्मृत्वाप्राचीनावीती अस्मत्पितृपितामहप्रपितामहानांअमुकशर्मणांअमुकगोत्राणांवसुरुद्रादित्यस्वरूपाणांममपितुःप्रथमाब्दिकश्राद्धंसदैवंसपिंडंसाग्नौकरणंपार्वणेनविधिनाअन्नेनहविषायुष्मदनुज्ञयासद्यःकरिष्येइतिसंकल्प्य अन्यत्सर्वपार्वणवत्कुर्यात् ॥ तत्रब्राह्मणाय तांबूलं छत्रं पादुकादानं उदकुंभदानं अन्नदानं दीपदानंचदद्यात् ॥ मृतदिनमारभ्यअब्दपर्यंतंएतत्कर्मसांगतासिद्ध्यर्थंब्राह्मणायशक्त्यागोप्रदानंदत्वाभूयसींदक्षिणांदद्यात् ॥ अनेनकर्मणापितृस्वरूपी श्रीपरमेश्वरःप्रीयतां ॥ इतिमासिक-अब्दपूरित-आद्याब्दिकानांसंक्षेपः ॥ ॥ छ ॥ ॥ छ ॥

## ॥ ३६५ ॥ अथजीवच्छ्राद्धविधिः ॥

श्रीः ॥ तत्रशौनकः ॥ जीवच्छ्राद्धंप्रवक्ष्यामिशौनकोहंद्विजन्मनां ॥ कृष्णपक्षेत्रयोदश्यांस्नात्वोपोष्यसमाहितः ॥ तस्मिन्नह्नि संभारानुपकल्प्ययथाक्रमं ॥ विद्रुमंहेमसूचींवैअंकुशंतांतवंतथा ॥ पाशंकेशांश्चपालाशंवृंतंकृष्णाजिनंतथा ॥ औदुंबरसमिद्बर्हिरासनंकलशान्नवान् ॥ ग्रीवामात्रजलेतीर्थेस्नात्वामध्यंदिनेजपेत् ॥ गायत्रीमित्यर्थः ॥ उत्थायब्राह्मणान्भोज्यकृत्वापुण्याहसुव्रतं ॥ वस्त्रांगुलीयकादीनिदत्वाचार्यायभक्तितः ॥ सघृतंपायसान्नंचसभुक्त्वादक्षिणामुखः ॥ सायंकालेग्निमाधायपुरस्तात्तत्रसंस्कृतं ॥ घृताप्लुतंचरुंहुत्वामंत्रैःषड्भिर्यथाक्रमं ॥ द्वाभ्यांचत्वारिश्रृंगेतितत्सवितुर्ऋचैकया ॥ अग्नेनयेतिद्वाभ्यांचजातवेदसइत्यृचा ॥ हुत्वापुरुषसूक्तेनप्रत्यृचंषोडशाहुतीः ॥ अतोदेवादिषड्भिश्चसावित्र्याष्टशतानिच ॥ अष्टाविंशतिसंख्यांवाहोमशेषंसमापयेत् ॥ गत्वाचतुष्पथंसूचींरज्जुकाद्यंकुशांस्तथा ॥ प्रीयतांकिंकरायेतिदद्यात्कृष्णायवैमुने ॥ कृष्णायकिंकरायैतद्दत्तंनममअनेनसप्रीयतामितियमकिंकरोद्देशेनत्यागः ॥ निधायकलशान्प्रीतःसोदकांस्तंतुवेष्टितान् ॥ पुरुषाकृतिवत्कुर्याच्छिरसित्रीन्मुखेतथा ॥ ग्रीवैकंचतुरोवक्षोबाह्वोर्द्वौद्वौतथैवच ॥ एकंलिंगेपादयोश्चपंचपंचेतिकथ्यते ॥ एवमेकविंशतिकलशाः ॥ यन्मेप्रीतोसिभगवन्नित्याहृत्यसुसंस्कृतान् ॥ पंचगव्येनप्रक्षाल्यएतोन्विंद्रादिभिस्तथा ॥ पालाशवृंतानीतिशेषः ॥ कृष्णाजिनेतुपालशवृंतैःकृत्वानराकृतिं ॥ चत्वारिंशच्छिरोग्रीवेदशत्रिंशदुरस्यपि ॥ बाह्वोश्चैवशतंदद्यात्पंचपंचतथांगुलौ ॥ जठरेविंशतिंदद्याज्जंघयोर्विंशतिद्वयं ॥ ऊर्वोश्चषष्टिर्दद्याद्वैमेढ्रेचत्वारिविन्यसेत् ॥ त्रीणित्रीणिवृषणयोःपादयोस्त्रिंशतंतथा ॥ विन्यसेच्छेदवृंतानिदशपादांगुलीषुच ॥ शतानित्रीणिषष्टिश्चपालाशंवृंतमाहरेत् ॥ अलाभेयज्ञवृक्षाणांवृंता

न्यपिसमाहरेत् ॥ निवेश्यकलशेप्राणान्वृंतेदेहंनिवेश्यच ॥ कलशेइत्येकवचनमविवक्षितं ॥ कलशेषुप्राणन्निवेशनंचिंतयित्वे त्यर्थः ॥ मध्येशयित्वास्वंदेहंविवस्वत्युदितेसति ॥ सुस्नाप्यसकलंऋग्भिःस्वंदेहंस्वयमेवतु ॥ सम्यक्पुरुषसूक्तेनश्रीसूक्तेनस माप्यच ॥ अन्नेनब्राह्मणान्भोज्ययमाकिंकरतृप्तये ॥ दाहश्चतस्यकर्तव्यःपितृमेधविधानतः ॥ होतृप्रीत्याचवरयेद्बालवृद्धातु रान्जनान् ॥ नद्यादितीरेकर्तव्यंदशाहंवादिनेगृहे ॥ दिनेचेद्गृहएवेत्यर्थः ॥ एकादश्यांतुकर्तव्यंश्राद्धंसुब्राह्मणायच ॥ सर्व मेकाह्निवाकुर्यात्सपिंडीकरणंविना ॥ एकादश्यांचनोकुर्यात्तत्पिंडान्मंत्रवत्तथा ॥ मंत्रकर्माणिजीवेनश्राद्धंकुर्याच्चसत्स्वपि ॥ यथाविधिप्रकर्तव्यंसपिंडीकरणादृते ॥ अन्येनस्त्रीचशूद्रश्चवृंतैर्दग्ध्वास्वकांतनुं॥तदह्न्येवक्रियाःसर्वाःकुर्यात्..............॥ देशांतरमृतस्यैवंचंडालाद्यैर्हतस्यच ॥ यद्येकादशेह्निकुर्यात्तद्ब्राह्मणस्यैव ॥ चकारादन्यवर्णयोश्चैकादशेह्निकुर्याद्दिनांतरेवास पिंडीकरणवर्जं ॥ स्त्रीशूद्रौप्रत्याहएकादश्यामिति ॥ स्त्रियाशूद्रेणचैकादश्यांपिंडोपलक्षितमौर्ध्वदेहिकंनकार्यं ॥ सर्वकर्माणि तूष्णींकार्याणि ॥ सत्सुपिंडादिष्वधिकारिषुजीवच्छ्राद्धंनकार्यंअसत्स्वाहयथेति॥ अनेनकृतप्रायश्चित्तइत्यर्थः ॥ देशांतरमृता देरस्थ्नामलाभेपर्णवृंतदाहमात्रमितिदृश्यते ॥ इतिशौनकोक्तोजीवच्छ्राद्धविधिः ॥ ॥ छ ॥ ॥ छ ॥

## ॥ ३६६ ॥ अथपालाशविधिः ॥

श्रीः ॥ आचम्यप्राणानायम्यदेशकालौसंकीर्त्यप्राचीनावीतीअमुकगोत्रस्यअमुकप्रेतस्यप्रेतत्वविमुक्त्योत्तमलोकप्राप्त्यर्थंमृता हात्विदेशस्थस्यमरणेप्रेतस्यमंत्राग्निरहितस्यअस्थिरहिताश्मरहितउत्तरीरहितनिमित्तंऔर्ध्वदेहिकक्रियाधिकारार्थंपालाशवि धिंकरिष्येइतिसंकल्प्य यवपिष्टेनशरीरनिर्माणं ॥ शिरसिचत्वारिंशत् ग्रीवायांदश बाह्वोःप्रत्येकंपंचाशत्एवंशतं करांगुलि

घुसर्वासुदशउदरेत्रिंशत्जठरेविंशतिः शिश्नेचत्वारिअंडयोस्त्रयस्त्रयः ऊर्वोः प्रत्येकंपंचाशत्जंघांतः पादतलांतंयावत्पादयोः प्रत्ये
कंपंचदशसर्वासुपादांगुलिषुदशएवंषष्ट्यधिकशतत्रयमित ३६० पालाशपर्णैः शरीरंनिर्माय ऊर्णासूत्रेणशरीरंबद्ध्वाजललोडित
यवपिष्टेनानुलिंपेत् ॥ ततः शक्तौसत्यांवक्ष्यमाणान्यपिकार्याणि मूर्धस्थानेकदलीफलं शिरसिफलंवर्तुलंलंबंवा ललाटेकदली
पत्रंदंतेदाडिमबीजानि कर्णेकंकणंनेत्रयोःकपर्दकौ नासिकायांतिलपुष्पं नाभौअभ्रकं स्तनयोर्जंबीरफलद्वयं वातेमनःशिलां
पित्तेहरितालं कफेसमुद्रफेनं रुधिरेमधु पुरीषेगोमयं मूत्रेगोमूत्रं रेतसिपारदं वृषणयोर्वृंताकद्वयं शिश्नेगृंजरं केशेसूकरकेशाः
रोमावलीषुऊर्णावस्त्रं मांसस्थानेयवपिष्टेनवामाषपिष्टेनवातंडुलपिष्टेनवालिंपेत् ॥ ततः पंचगव्येनप्रोक्ष्यपंचामृतमंत्रैः पंचामृते
नप्रोक्ष्य ॥ पुनर्नोअसुमितिबृहदुक्थः प्राणस्त्रिष्टुप् प्राणप्रवेशनेवि० ॥ पुनर्नोअसुंपृथिवीददातुपुनर्द्यौर्देवीपुनरंतरिक्षं ॥ पुन
र्नःसोमस्तन्वंददातुपुनःपूषापथ्यां१यास्वस्ति ॥ इतिप्राणप्रवेशनंभावयेत् ॥ यद्वा यत्तेयममितिद्वादशर्चस्य यमोनुष्टुप् प्राण
प्रवेशनेवि० ॥ यत्तेयमंवैवस्वतंमनोजगामदूरकं ॥ तत्तआवर्तयामसीहक्षयायजीवसे ॥ यत्तेदिवंयत्पृथिवींमनो० ॥ तत्तआ
वर्त० ॥ यत्तेभूमिंचतुर्भृष्टिंमनो० ॥ तत्त० ॥ यत्तेचतस्रःप्रदिशोमनो० ॥ तत्त० ॥ यत्तेसमुद्रमर्णवंमनो० ॥ तत्त० ॥ य
त्तेमरीचीःप्रवतोमनो० ॥ तत्त० ॥ यत्तेअपोयदोषधीर्मनो० ॥ तत्त० ॥ यत्तेसूर्यंयदुषसंमनो० ॥ तत्तआ० ॥ यत्तेपर्वतान्बृहतो
म० ॥ तत्त० ॥ यत्तेविश्वमिदंजगन्मनो० ॥ तत्त० ॥ यत्तेपराःपरावतोमनो० ॥ तत्त० ॥ यत्तेभूतंचभव्यंचमनो० ॥ तत्त
आवर्त० ॥ इतिद्वादशर्चेनसूक्तेनप्राणानानीय ॥ शुक्रमसिज्योतिरसितेजोसि ॥ इतिमंत्रेणपादेक्षिप्त्वा ॥ अक्षीभ्यांतइतिष
ळर्चेनसूक्तेनशरीरंस्पृशेत् ॥ अक्षीभ्यांतेनासिकाभ्यांकर्णाभ्यांछुबुकादधि ॥ यक्ष्मंशीर्षण्यंमस्तिष्काज्जिह्वायाविवृहामिते ॥

ग्रीवाभ्यस्तउष्णिहाभ्यःकीकसाभ्योऽअनूक्यात् ॥ यक्ष्मंदोषण्य1मंसाभ्यांबाहुभ्यांविवृहामिते ॥ आंत्रेभ्यस्तेगुदाभ्योवनि
ष्ठोर्हृदयादधि ॥ यक्ष्मंमतस्नाभ्यांयक्नः प्लाशिभ्योविवृहामिते ॥ ऊरुभ्यांतेअष्ठीवद्भ्यांपार्ष्णिभ्यांप्रपदाभ्यां ॥ यक्ष्मंश्रोणिभ्यां
भासंदाद्भंससोविवृहामिते ॥ मेहनाद्वनंकरणाल्लोमभ्यस्तेनखेभ्यः ॥ यक्ष्मंसर्वस्मादात्मनस्तमिदंविवृहामिते ॥ अंगादंगाल्लो
म्नोलोम्नोजातंपर्वणिपर्वणि ॥ यक्ष्मंसर्वस्मादात्मनस्तमिदंविवृहामिते ॥ इत्येतैःस्पृष्ट्वाशरीरंभावयित्वास्नापयित्वाचंदनेनानु
लिप्यवस्त्रेपरिधाप्ययज्ञोपवीतेधारयित्वा शुभ्रसुगंधमाल्यादिभिरलंकृत्यअयंसदेवदत्तइत्यभिमृश्य ॥ इदंचास्योपासनं ॥
इत्यग्निंध्यात्वापूर्वोक्तवैतरण्यादिदानपूर्वकंऊर्णासूत्रेणवेष्टयित्वाकृष्णाजिनेनाच्छाद्यचिति स्थानमाधायपूर्वोक्तविधिनाशवव
द्दहेत् ॥ पालाशवृंताभावेकुशैःप्रतिकृतिंकुर्यात् ॥ आहिताग्नेःप्रतिकृतिदाहेअ[illegible]शाहमेवाशौचं ॥ अनाहिताग्नेस्तु
सपिंडानांत्र्यहंपर्णशरदाहे ॥ पूर्वमगृहीताशौचयोर्भार्यापुत्रयोर्दशाहमेव ॥ गृहीताशौचयोस्तुतयोरपित्रिरात्रमाशौचं ॥ प
त्नीसंस्कारेपत्युश्चैवमेव ॥ सपत्न्योःपरस्परंचैवमेवाशौचं ॥ सापत्नभ्रातुर्दशाहान्तरंत्र्यहंकार्यंसपत्नीपुत्रेण ॥ आहिताग्नौविदे
शस्थेमृतेयावद्विधिनानसंस्कारःतावत्पुत्रादीनांनाशौचं ॥ इतिपालाशविधिः ॥ ॥ छ ॥ ॥ छ ॥

## ॥ ३६७ ॥ अथऔर्ध्वदेहिकोपयोगिनारायणबल्यादि ॥

श्रीः ॥ तत्रदुर्मरणेष्वात्मघातेजलादिभिःप्रमादमरणेपतितादिमरणेचपूर्वोक्तव्यवस्थयामुकगोत्रस्यामुकशर्मणोमुकदोषनाशा
र्थमौर्ध्वदेहिकेसंप्रदानत्वयोग्यतासिद्ध्यर्थममुकप्रायश्चित्तममुकदानंवाकरिष्यइत्यादिसंकल्पपूर्वकंतत्तत्प्रायश्चित्तंदानंचकार्यं॥
अशक्तौतुदानमेवकार्यं॥ ततोमुकगोत्रस्यामुकशर्मणोमुकदुर्मरणदोषनाशार्थमौर्ध्वदेहिकसंप्रदानत्वयोग्यतासिद्ध्यर्थंनारायणब

लिंकरिष्यइतिसंकल्प्यपूर्वोक्तनारायणबलिवत्सर्वंकुर्यात् ॥ एतत्तुवर्षांतरकरणपक्षे ॥ सद्यःकरणपक्षेतुपूर्वोक्तद्विगुणप्रायश्चित्तंसंकल्प्यशुक्लैकादश्यादिकालमनपेक्ष्यैवसमनंतरोक्तसंकल्पंकृत्वाविधिनास्थापितेकलशद्वयेहेमप्रतिमयोर्विष्णुंवैवस्वतंयमंचावाह्यपुरुषसूक्तेनयमायसोममितिचक्रमेणषोडशोपचारैःसंपूज्यतत्पूर्वभागेरेखायांदक्षिणाग्रकुशानास्तीर्य शुंधंतांविष्णुरूप्यमुकप्रेतइतिदशस्थानेष्वपोनिनीयमधुघृततिलमिश्रानोदनपिंडान्दशअमुकगोत्रामुकशर्मन्प्रेतविष्णुदैवतायंतेपिंडइतिदक्षिणसंस्थान्प्राचीनावीतीत्यादिपैतृकधर्मेणदत्वातान्गंधादिभिरभ्यर्च्यप्रवाहणांतंकृत्वानद्यांक्षिपेत् ॥ श्वःसद्योवापूर्वस्थापितंविष्णुमभ्यर्च्यैकविप्रेदर्भबटौवापादक्षालनादितृप्तिप्रश्नांतंविष्णुरूपप्रेतावाहनपूर्वकंकृत्वा विप्रसमीपेतूष्णींरेखाःकृत्वादर्भास्तरणेअपोनिनयनंचकृत्वा दर्भेषुसव्येनविष्णवेब्रह्मणेशिवायचसपरिवाराययमायचेतिचतुर्भ्यःपिंडचतुष्टयंदत्वाऽपसव्येनविष्णुरूपप्रेतामुकगोत्रनामायंतेपिंडइत्येकंपंचमंपिंडंदत्वातथैवाभ्यर्च्यप्रवाहणांतेविप्राचांततादिश्राद्धशेषसमापनांतेप्रेतबुद्ध्याविप्रायवस्त्राभरणादिदत्वाविप्रेणप्रेतायतिलांजलिंदापयेत् ॥ अमुकगोत्रायामुकशर्मणेविष्णुरूपिणेप्रेतायायंतिलतोयांजलिरितिमंत्रेणविप्रालाभेस्वयंदद्यात् ॥ ततोविप्रान्वाचयेत् ॥ अनेननारायणबलिकर्मणाभगवान्विष्णुरिमममुकंप्रेतंशुद्धमपापमर्हंकरोत्विति ॥ काम्यप्रयोगेस्मिन्प्रयोगेचसंकल्पेनामगोत्रोच्चारेचविशेषःस्पष्टएव ॥ पूर्वत्रकाश्यपगोत्रदेवदत्तप्रेतेत्याद्युच्चारःअत्रतुनामगोत्रज्ञानसत्त्वाद्दुर्मरणेनमृतस्यतन्नामगोत्रंतदेवोच्चारयेदितिसंकल्पविशेषेपिहेतुःस्पष्टएव ॥ इति ॥ ॥ छ ॥

## ॥ ३६८ ॥ अथसर्पहतेव्रतम् ॥

श्रीः ॥ प्रतिमासंशुक्लपंचम्यामुपवासंनक्तंवाकृत्वापिष्टमयंनागंपंचफणमनंतवासुकिशंखपद्मकंबलककर्कोटकाश्वतरधृतराष्ट्रशंख

पालकालियतक्षककपिलेतिद्वादशनामभिर्द्वादशमासेषुसंपूज्य पायसेनविप्रान्संभोज्यवत्सरांतेहेमनागंमत्स्यक्षांगांचदत्वानाराय णबलिपूर्वकंदाहाशौचादिकंकार्यं ॥ अथवानमोअस्तुसर्पेभ्यइतिचतस्रआज्याहुतीर्जुहुयात् ॥ पंचम्यांपन्नगंहैमंस्वर्णेनैकेनका रयेत् ॥ क्षीराज्यपात्रमध्यस्थंपूज्यविप्रायदापयेत् ॥ प्रायश्चित्तमिदंप्रोक्तंनागदष्टस्यशंभुनेति ॥ ततोनारायणबल्यादि ॥ ७ ॥

## ॥ ३६९ ॥ अथब्रह्मचारिमरणविधिः ॥

श्रीः ॥ ब्रह्मचारिणोमृतिसंभावनायांतन्मरणोत्तरंवाअवकीर्णदोषनिमित्तंप्रायश्चित्तंकृत्वाप्रयोगरत्नसंगृहीतविधानमालोक्यकौ पीनादिदानंब्रह्मचारिभ्योदत्वाव्रतविसर्जनंविधायऔर्ध्वदेहिकाधिकारसिद्ध्यर्थंअर्कविवाहंकृत्वाऔर्ध्वदेहिकंकुर्यात् ॥ अत्रप्र योगः ॥ ब्रह्मचारिणोमृतिसंभावनायांमरणोत्तरंतिथ्याद्युच्चार्यअमुकगोत्रस्यअमुकनाम्नोमृतस्यब्रह्मचारिणःम्रियमाणस्यब्रह्म चारिणोवाअवकीर्णदोषनिवृत्त्यर्थं द्वादशाब्दषडब्दत्र्यब्दान्यतमप्रायश्चित्तंप्रतिप्राजापत्यंअमुकगोनिष्क्रयप्रत्याम्नायद्वारास द्यःसूतकांतेवाअहमाचरिष्येइतिसंकल्प्य ॥ पुनर्देशकालौनिर्दिश्यप्राचीनावीतीअमुकगोत्रस्यअमुकनाम्नोब्रह्मचारिणोब्रह्मच र्याश्रमेणमरणजन्मदुर्गतिनिवृत्तिपूर्वकब्रह्मसायुज्यसिद्धयेममकुलस्याभिवृद्ध्यर्थंसद्गतिसिद्ध्यर्थंत्रिंशद्भ्योब्रह्मचारिभ्यःप्रत्येकं कौपीनादिपदार्थान्दास्येइतिसंकल्प्य ब्रह्मचारिणंवृत्वायुवंवस्त्राणीत्यादितत्पदार्थलिंगकमंत्रानुच्चार्य कौपीनांगुलीयककर्ण कुंडलकृष्णाजिनपादुकाछत्रमाल्यगोपीचंदनमणिप्रवालमालायज्ञोपवीतंचेतिपदार्थानाममुकगोत्रायामुकनाम्नेब्रह्मचारिणेतु भ्यमहंसंप्रददेइतिदद्यात्संकल्पयेद्वा ॥ एवंत्रिंशद्भ्योब्रह्मचारिभ्यःतदसंभवेसाधुगृहस्थेभ्योवादत्वापुनःतिथ्याद्युच्चार्यअमुकना म्नःब्रह्मचारिणोव्रतविसर्गंकरिष्येतदंगत्वेनमातृपूजाहिरण्यविधिनाआभ्युदयिकंचकृत्वा व्रतविसर्गकर्मणिस्थंडिलादिकरिष्ये

इतिसंकल्प्यउल्लेखनाद्यग्न्याधानांतेसमिद्वयमादायआघारांते अग्निंवायुंसूर्यंप्रजापतिं अग्निंव्रतपतिं अग्निंव्रतानुष्ठानफलसंपाद
नंविश्वान्देवान्एताःसप्तदेवताःप्रत्येकमेकैकयाज्याहुत्यायक्ष्ये ॥ शेषेणेत्यादिसमिद्वयंप्रक्षिप्यआघारांतेजुहुयात् ॥ भूःस्वाहा
अग्नयइदं० ॥ भुवःस्वाहावायवइदं० ॥ स्वःस्वाहासूर्यायेदं० ॥ भूर्भुवःस्वःस्वाहाप्रजापतयइदं० ॥ अग्नयेव्रतपतयेस्वा०अग्न
येव्रतपतयइदं० ॥ अग्नयेव्रतानुष्ठानफलसंपादनायस्वाहाअग्नयेव्रतानुष्ठानफलसंपादनायेदं० ॥ विश्वेभ्योदेवेभ्यःस्वाहाविश्वे
भ्योदेवेभ्यइदं० ॥ एवंसप्ताहुतीर्हुत्वास्विष्टकृदादिहोमशेषंसमाप्यअर्कशाखासमीपेगत्वाशाखांगृहेवानीयार्कविवाहःकार्यः ॥
तिथ्यादिसंकीर्त्यअमुकगोत्रस्यामुकशर्मणऔर्ध्वदेहिकाधिकारसिद्ध्यर्थंअर्कविवाहंकरिष्येइतिसंकल्प्य तदंगत्वेनमातृकापूजन
पूर्वकंहिरण्यद्वारानांदीश्राद्धंकरिष्येइतिसंकल्पंकृत्वाअर्कब्रह्मचारिणौहरिद्रयानुलिप्यपीतसूत्रेणावेष्ट्यवस्त्रयुग्मेनाच्छादयेत् ॥
ततःउल्लेखनाद्यग्न्याधानांतेसमिद्वयमादायाघारांतमुक्त्वा अग्निंबृहस्पतिंविवाहविधियोजकंकामंअग्निंवायुंसूर्यंप्रजापतिंएताः
अष्टौप्रधानदेवताःप्रत्येकमेकैकयाज्याहुत्यायक्ष्ये शेषेणेत्यादिआघारांतंकृत्वाप्रधानाज्याहुतीर्जुहुयात् ॥ ॐ अग्नयेस्वाहा
अग्नयइदं० ॥बृहस्पतयेस्वाहाबृहस्पतयइदं० ॥ विवाहविधियोजकायस्वाहाविवाहविधियोजकायेदं० ॥यस्मैत्वाकामकामाय
वयंसम्राड्यजामहे ॥ तमस्मभ्यंकामंदत्वाथेदंघृतंपिबस्वाहाकामायेदं० ॥ भूःस्वाहाअग्नयइदं० ॥ भुवःस्वाहावायवइदं० ॥
स्वःस्वाहासूर्यायेदं० ॥ भूर्भुवःस्वःस्वाहाप्रजापतयइदं० ॥ इतिहुत्वास्विष्टकृदादिहोमंसमाप्यअर्कशाखांशवंचदहेत्शाखांप्रवा
हयेद्वा ॥ इतिब्रह्मचारिमरणविधिः ॥ छ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥

## ॥ ३७० ॥ अथस्नातकमरणविधिः ॥

श्रीः ॥ हरिहरः ॥ एवंस्नातकमृतावपिअर्कविवाहंकुर्यात् ॥ स्नातकोब्रह्मचारीचनिधनंप्राप्नुयाद्यदिइत्यनेनस्नातकस्याप्यर्क विवाहोक्तेः ॥ तत्रप्रयोगः ॥ स्नातकमृतिसंभावनायांतन्मरणोत्तरंवाअवकीर्णदोषनिमित्तंप्रायश्चित्तंकृत्वा आचम्यप्राणाया मंकृत्वातिथ्याद्युच्चार्य अमुकगोत्रस्यअमुकनाम्नोमृतस्यस्नातकस्यम्रियमाणस्यस्नातकस्यवाअवकीर्णदोषनिष्कृत्यर्थंयथाशक्ति कृच्छ्त्रयप्राजापत्यप्रायश्चित्तभूतद्रव्यंगोनिष्क्रयप्रत्याम्नायद्वारासद्यःसूतकांतेवाअहमाचरिष्ये ॥ अर्कशाखासमीपेगत्वाशा खांगृहेवानीयअर्कविवाहःकार्यः ॥ तिथ्याद्युच्चार्यअमुकगोत्रस्यअमुकशर्मणःऔर्ध्वदेहिकाधिकारसिद्ध्यर्थंअर्कविवाहंकरिष्ये इतिसंकल्प्यतदंगत्वेनमातृकापूजापूर्वंहिरण्यदानंनांदीश्राद्धंकरिष्येइतिसंकल्पंकृत्वा अर्कस्नातकौहरिद्रयानुलिप्यपीतसूत्रेणा वेष्ट्यवस्त्रयुग्मेनाच्छादयेत् ॥ ततःउल्लेखनाद्यग्न्याधानांतेसमिद्द्वयमादायाघारांतमुक्त्वा अग्निंबृहस्पतिंविवाहविधियोजकंका मंअग्निंवायुंसूर्यंप्रजापतिंचएताःअष्टप्रधानदेवताःब्रह्मचार्युक्तविधिनाहुत्वास्विष्टकृदादिहोमशेषंसमाप्यअर्कशाखांशवंचदहे त् ॥ शाखांप्रवाहयेत् ॥ शवंविधिवद्दहेत् ॥ इतिस्नातकमरणविधिः ॥ ॥ ॥ ॥

## ॥ ३७१ ॥ अथरजस्वलामरणविधिः ॥

श्रीः ॥ रजस्वलायाःशुद्धिकर्तातिथ्याद्युच्चार्यअमुकगोत्रायाःअमुकनाम्न्याःरजस्वलादशायांमरणजनितदोषपरिहारार्थंऔर्ध्व देहिकयोग्यतासिद्ध्यर्थंचचांद्रायणत्रयात्मकंप्रायश्चित्तंप्रतिचांद्रायणंतत्प्रत्याम्नाय गोनिष्क्रयद्वाराकृच्छ्रैकमित्यष्टकृच्छ्रानुक

ल्पत्वेनकृच्छ्रत्रयानुकल्पेनवाचांद्रायणत्रयस्यद्रव्यंदद्यात् ॥ तत्कालाचरणासंभवेसूतकांतेवादद्यात् ॥ ततःकर्ताब्राह्मणवचना
च्चांद्रायणप्रायश्चित्तस्यसंपन्नतांसंपाद्ययवपिष्टेनप्रेतमनुलिप्यस्वयंस्नात्वाशूर्पेणअष्टोत्तरशतवारंस्नापयेत् ॥ प्रेतंप्रक्षाल्यभस्म
गोमयमृत्तिकाकुशोदकपंचगव्यशुद्धोदकैःस्नापयित्वातथापावमानीभिर्यदंतियच्चदूरकेआपोहिष्ठेतितिसृभिःकयानइतितिसृ
भिःस्नापयित्वावस्त्रंपरित्यज्यविधिनादहेत् ॥ यद्वामलंप्रक्षाल्यस्नापयित्वाकाष्ठवद्दग्ध्वास्थीनिविधिनादहेदितिभट्टाः ॥ इति ॥

## ॥ ३७२ ॥ अथगर्भिणीमरणविधिः ॥

श्रीः ॥ मदनरत्नेशौनकः ॥ षण्मासोत्तरंगर्भिण्यांमृतायांभर्त्रादिर्जलैःगोमूत्रेणआपोहिष्ठादिभिर्मंत्रैःप्रतिमंत्रंशवंप्रोक्ष्य स्मशा
नेनीत्वा नाभेरधःसव्यमुदरंचतुरंगुलंछित्त्वापुत्रमादायजीवंश्चेद्यस्तेस्तनइत्यृचास्तनंदत्वाशिशुंग्रामेप्रापयेत् ॥ ततःसूत्रग्रथने
नोदरमव्रणंकृत्वा पृषदाज्येनचापूर्यमृद्भस्मकुशगोमूत्रैरापोहिष्ठादिभिस्त्रिभिःसंस्नाप्य वासोभिःप्रेतमाच्छाद्यशवधर्मेणदाहये
दिति ॥ यदिगर्भश्चेदप्राणस्तंनिखनेत् ॥ इतिशौनकीयकल्पोक्तगर्भिणीमरणविधिः ॥ अथप्रयोगरत्नोक्तगृह्यकारिकानुसारी
उच्यते ॥ गर्भिण्यांसशल्यायांमृतायांकर्ताकुक्षिंभित्त्वाशल्यंजीवतिचेन्निजगृहेप्रापयित्वा प्रमीतंनिखायशल्यसहितमरणदो
षनिवृत्तयेत्रयस्त्रिंशत्कृच्छ्रात्मकप्रायश्चित्तंकुर्यात् ॥ कृच्छ्रद्वयमप्युक्तंप्रायश्चित्तमंतेहेमाद्रौ ॥ छेत्तुस्तप्तकृच्छ्रंचरणीयमित्यपि
तत्रैव ॥ अथतत्प्रयोगः ॥ भर्त्रादिःकर्तातिथ्याद्युच्चार्य अमुकगोत्रायाःअमुकनाम्न्याःगर्भिण्याःसशल्यमरणदोषनिवृत्त्यर्थंत्र
यस्त्रिंशत्कृच्छ्रात्मकंप्रायश्चित्तंप्रतिकृच्छ्रंगोनिष्क्रयाद्यन्यतमद्वारासद्यःसूतकांतेवाअहमाचरिष्येइतिसंकल्प्यविधिनादहेत् ॥
यदिगर्भदहनंकृतंतदाकर्तासगर्भदहनजन्यदोषपरिहारार्थसंपादकःप्रायश्चित्तंकुर्यात् ॥ प्रायश्चित्तंतुगर्भवधप्रयुक्तातिदेशिकं

कार्यं ॥ यद्यपिस्त्रीपुन्नपुंसकज्ञानाभावस्तथापिगर्भदहनेइदंप्रायश्चित्तंकार्यमेव ॥ एवमात्मशुद्ध्यर्थंकृतेगर्भिण्याअपिसगर्भदह नदोषनिवृत्त्यर्थंऔर्ध्वदेहिकेऽधिकारसिद्ध्यर्थंचत्र्यब्दंप्रायश्चित्तंकार्यं ॥ अत्रब्रह्मचारिविधानप्रभृतिएतदंतविधिनामूलाभिप्रा यःप्रयोगरत्ननिर्णयसिंध्वादौद्रष्टव्यः ॥ इतिगर्भिणीमरणविधिः ॥ ॥ छ ॥ ॥ छ ॥

## ॥ ३७३ ॥ अथसूतिकामरणविधिः ॥

श्रीः ॥ देशकालौसंकीर्त्यामुकगोत्रायाःअमुकनाम्न्याःसूतिकावस्थामरणजन्यप्रत्यवायपरिहारार्थंऔर्ध्वदेहिकयोग्यतार्थंचगोनि ष्क्रयाद्यन्यतमप्रत्याम्नायत्वेनकृच्छ्रैकमितिकृच्छ्रत्रयात्मकचांद्रायणत्रयप्रायश्चित्तपूर्वकंशूर्पेणशतस्नानानिकारयिष्ये ॥ इतिसं कल्प्यस्वयंस्नात्वाशूर्पोदकेनअष्टोत्तरशतवारंतांस्नापयित्वा कुंभेजलमादायपंचगव्यंतत्रक्षिप्त्वा आपोहिष्ठीयवामदेव्यवारुण्या दिपुण्यऋग्भिरभिमंत्र्यपावमानीयैरपि आपोहिष्ठेतितिसृभिःसंस्नाप्यविधिनादहेत् ॥ सूतिकावस्थायांमरणेतत्रापिदिनभेदे नप्रायश्चित्तमुक्तंनिर्णये० ॥ तच्चप्रथमेत्र्यब्दंद्वितीयेब्दद्वयंतृतीयेअब्दं तदूर्ध्वमासपर्यंतंकृच्छ्रत्रयमिति ॥ प्रयोगरत्नेतुदशा हादुत्तरंयावन्मासंकृच्छ्रत्रयमिति ॥ असूतकीशवंसंस्पृश्यशूर्पशतंक्षिपेदितिनिर्णयसिंधौ ॥ इतिसूतिकामरणविधिः ॥ छ ॥

## ॥ ३७४ ॥ अथसकेशामरणेविधिः ॥

श्रीः ॥ कर्तास्नात्वादेशकालौनिर्दिश्यअमुकगोत्रायाअमुकनाम्न्याःप्रेतायाःभर्तृवियोगोत्तरमेतावंतंकालंनिषिद्धकेशकंचुक्या दिधारणजनितप्रत्यवायपरिहारार्थंप्रत्यब्दमेकैककृच्छ्रं तथाकेशकंचुक्यादियुतायाःप्राणोत्क्रमणजनितदोषनिवर्हणार्थंकृच्छ्र

त्रयंप्रायश्चित्तंयथाशक्तिव्यावहारिकद्रव्यदानेनसूतकांतेहमाचरिष्य इतिसंकल्प्यकंचुक्यादिपरित्यज्यवपनंकृत्वासंस्नाप्यवि
धिनादहेत् ॥ इतिसकेशामरणेविधिः ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥

## ॥ ३७५ ॥ अथप्रसंगात्सत्केशावपनविधिः ॥

श्रीः ॥ तीर्थादौगत्वास्नात्वादेशकालौसंकीर्त्यअमुकगोत्रायाअमुकनाम्न्याममभर्तृवियोगादेतावंतंकालंकेशकंचुक्यादिधारण
दिनद्विवारभोजनतांबूलभक्षणादिजनितप्रत्यवायपरिहारार्थं यतिचांद्रायणप्रतिनिधिभूतंप्रायश्चित्तंप्रत्यब्दमेकैककृच्छ्रंतत्प्र
त्याम्नायगोनिष्क्रयीभूतताम्रकार्षापणपरिमितमूल्यदानेनाहमाचरिष्ये तथासमस्तपापक्षयार्थंवापनादिकरिष्यइतिसंकल्प्य॥
यानिकानिचपापानिब्रह्महत्यासमानिच ॥ केशानाश्रित्यतिष्ठंतितस्मात्केशान्वपाम्यहं ॥ इतिशिरसिदर्भंनिधायवापयित्वा
स्नायात् ॥ ततःत्वंराजासर्वतीर्थानामित्यादितीर्थंप्रार्थयित्वापुनर्देशकालौनिर्दिश्यममकायिकवाचिकमानसिकसांसर्गिकज्ञा
ताज्ञातस्पृष्टास्पृष्टभुक्ताभुक्तपीतापीतादिसकलदुरितनिबर्हणार्थंअमुकस्मिंस्तीर्थेस्नानमहंकरिष्ये ततःशरीरशुद्ध्यर्थंदशविधस्ना
नानिसंकल्प्य भस्मादायईशानायनमःशिरसि तत्पुरुषायमुखे अघोरायहृदये वामदेवायनाभौ सद्योजातायपादयोः नमःशि
वायेतिसर्वांगेविलिप्यस्नात्वाचम्य १ अग्रमग्रंचरंतीनामितिगोमयेन २ त्वंदेव्यादिवराहेणरसायाःस्थानमिच्छता ॥ उद्धृतासि
नमस्तुभ्यंपाप्मानंमेप्रणाशयेतिमृत्तिकया ३ यत्त्वगस्थीतिपंचगव्येन ४ गवामंगेष्वितिगोरजसा ५ तिलस्नानंसदानृणांपर
मंपावनंस्मृतं ॥ अतस्तत्प्रकरोम्यद्यसर्वपापापनुत्तये इतितिलकल्केन ६ ओषध्यःसर्ववृक्षेषुतृणगुल्मलतादिकाः ॥ तासांस्ना
नेनमेशुद्धिःसर्वौषध्यःपुनंतुमां इत्योषधीभिः ७ हिरण्यगर्भगर्भेतिहिरण्योदकेन ८ कुशमूलेस्थितोब्रह्माकुशमूलेजनार्दनः ॥

कुशाग्रेशंकरंविद्यात्तस्यस्नानेनशुध्यति इतिकुशोदकेन ९ गंगागंगेतिगंगोदकेन १० इतिदशस्नानानि ॥ प्रतिस्नानमाचम नंकार्यं ॥ ततस्तीर्थंप्रार्थयित्वास्नानांगतर्पणंकृत्वा एहिसूर्यसहस्रांशो० १ नमःकमलनाभाय० २ भागीरथिनमस्तुभ्यं० ३ इत्यर्घ्यत्रयंदत्वास्नात्वापंचगव्यंप्राश्यतदहरुपोषणंकृत्वापरेह्निपुनर्गंगायांस्नात्वाश्राद्धंकुर्यात् तत्रपुरूरवार्द्रवौदेवौ भर्तृतत्पि तृपितामह–स्वपितृपितामहप्रपितामहेतिपार्वणद्वयोद्देशेनामेनहेम्नावाशक्तौगांदत्वापिंडोद्वासनांतेइष्टैःसहभुंजीत ॥ तृतीयेह निगंगायांस्नात्वाप्रार्थ्यशुक्लवस्त्रंपरिधायषोडशोपचारैर्गंगांसंपूज्यसांगतासिद्धयेब्राह्मणायवंशपात्रेवायनंपरिपूर्य सवस्त्रफलतां बूलंगोधूमैश्चप्रपूरितं ॥ वायनंद्विजवर्यायसहिरण्यंददाम्यहं ॥ इतिदत्वाब्राह्मणसमाराधनंकुर्यात्॥इतिप्रसंगात्सकेशावप०॥

## ॥ ३७६ ॥ अथसहगमनविधिः ॥

श्रीः ॥ पितुःपुत्रेणपैतृमेधिकसंकल्पादिअग्निदानांतेकृतेनुगमनकर्त्रीपत्नीआचम्यदेशकालौसंकीर्त्यअरुंधतीसमाचारत्वस्वर्ग लोकमहीयमानत्वमनुष्यलोकसंख्याद्यवच्छिन्नस्वर्गवासभर्तृसहितचतुर्दशेंद्रावच्छिन्नकालिकक्रीडयानत्वमातृपितृश्वशुरकुल त्रयपूतत्वब्रह्मघ्नमित्रघ्नपूतत्वपुत्राद्यवियोगकामासहगमनविधिंकरिष्ये ( भर्तृचितारोहणंकरिष्ये ) इतिसंकल्प्य ॥ तदंगंश्री लक्ष्मीनारायणप्रीतिद्वारासहगमनेअतिशयसात्विकबुद्धिप्राप्त्यर्थं हरिद्राकुंकुमांजनसौभाग्यद्रव्ययुतानिपंचत्रीणिवावंशपा त्रदानानिकरिष्ये इतिसंकल्प्यदानार्थंपात्रंवृत्वाप्रतिमायांसंपूज्य ॥ लक्ष्मीनारायणोदेवोबलसत्त्वगुणाश्रयः ॥ गाढंसत्त्वंच मेदेयाद्वायनैःपरितोषितः ॥ सोपस्कराणिशूर्पाणिवायनैःसंयुतानिच ॥ लक्ष्मीनारायणप्रीत्यैसत्त्वकामाददाम्यहं ॥ इतिमं त्रमुच्चार्य ॥ इदंसौभाग्यद्रव्ययुतवंशपात्रंलक्ष्मीनारायणप्रीत्यैअमुकशर्मणेब्राह्मणायतुभ्यमहंसंप्रददेइतिदत्वा ॥ अनेनसोप

स्करशूर्पदानेनलक्ष्मीनारायणौप्रीयेतामित्युक्त्वासमंत्रंसप्तपंचत्रीणिवासोपस्कराणिदद्यात् ॥ ततःपल्लवेपंचरत्नानिनीलांजनं चाबद्ध्यमुखेमुक्ताफलंन्यस्याग्नेःसमीपंगत्वा ॥ स्वाहासंश्लेषनिर्विण्णशर्वगोत्रहुताशन ॥ सत्त्वमार्गप्रदानेननयमांपत्युरंतिक मित्यग्निंप्रार्थ्यआज्येनाग्नौजुहुयात् ॥ अग्नयेतेजाधिपतयेस्वाहाअग्नयेतेजाधिपतयइदं० ॥ विष्णवेसत्त्वाधिपतयेस्वाहाविष्ण वेसत्त्वाधिपतयइदं० ॥ कालायधर्माधिपतयेस्वाहाकालायधर्माधिपतयइदं०॥ पृथिव्यैलोकाधिष्ठात्र्यैस्वाहापृथिव्यैलोकाधि ष्ठात्र्याइदं० ॥ अद्भ्योरसाधिष्ठात्रीभ्यःस्वाहाअद्भ्योरसाधिष्ठात्रीभ्यइदं० ॥ वायवेबलाधिपतयेस्वाहावायवेबलाधिपतयइ दं० ॥ आकाशायसर्वाधिपतयेस्वाहाआकाशायसर्वाधिपतयइदं० ॥ कालायधर्माधिष्ठात्रेस्वाहाकालायधर्माधिष्ठात्रइदं० ॥ अद्भ्यःसर्वसाक्षिणीभ्यःस्वाहाअद्भ्यःसर्वसाक्षिणीभ्यइदं० ॥ ब्रह्मणेवेदाधिपतयेस्वाहाब्रह्मणेवेदा[illegible]यइदं० ॥ रुद्रायस्मशा नाधिपतयेस्वाहारुद्रायस्मशानाधिपतयइदं० ॥ इत्येकादशाज्याहुतीर्हुत्वापुत्रादिरग्निदानंकुर्या[illegible] ततःसहगमनकर्त्रीप्रद क्षिणीकृत्यदृषदुपलंसंपूज्यचितामारुह्यफलपुष्पांजलिंगृहीत्वा ॥ त्वमेवसर्वभूतानामंतश्चरसिसाक्षिवत् ॥ त्वमेवदेवजानीषेन विदुर्यानिमानुषाः ॥ अनुगच्छामिभर्तारंनयमांपत्युरंतिकमितिमंत्रद्वयमुच्चार्य(?)निर्हुताशनंनप्रविशेत् ॥ अनधिकारात्मं त्रोच्चारणेप्यधिकाराभावात् ॥ पुत्रादिनाविधिवदग्निदानंकृत्वातूष्णींप्रज्वालयेदितियुक्तंप्रतिभाति ॥ भर्तुर्वामेंगेशयीतेतिदे वराजदेवीये ॥ इतिसहगमनं ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥

## ॥ ३७७ ॥ अथातुरसंन्यासविधिः ॥

श्रीः ॥ उक्तंजाबालोपनिषदि ॥ यद्यातुरःस्यान्मनसावाचावासंन्यसेदेषपंथाब्राह्मणायानुवित्तस्तेनेतिसंन्यासीब्रह्मविदित्येव

मेवतद्भवेदिति ॥ आतुरोपिद्विविधःरोगादिनामुमूर्षुःजलादिव्याघ्रादिभयाक्रांतश्च ॥ तत्रद्वितीयस्यत्वाहदत्तात्रेयः ॥ उत्प
न्नेसंकटेघोरेचोरव्याघ्रादिगोचरे ॥ भयभीतस्यसंन्यासमंगिरामुनिरब्रवीत् ॥ भारते ॥ आतुराणांचसंन्यासेनविधिर्नैवचक्रिया ॥
प्रैषमात्रंतुसंन्यासःसंन्यासंतत्रकारयेत् ॥ तथाच ॥ संन्यस्तमितियोब्रूयादित्यादिवाक्यैश्चप्रैषमात्रोच्चारणमेवतस्यसंन्यासः ॥
सचेज्जीवतियथाधिकारंयथाविधिदंडादिकंगृहीत्वायतिधर्मयुक्तोभवेत् ॥ रोगाद्यातुरस्यपुरुषसूक्तहोमविरजाहोमोपवासजा
गरणाद्यंगकलापस्यलोपः ॥ अन्यत्सर्वंभवत्येव ॥ ॥ तस्यायंप्रयोगः ॥ कात्यायनः ॥ कृच्छ्रांस्तुचतुरःकृत्वावापनार्थमना
श्रमी ॥ आश्रमीचेत्तप्तकृच्छ्रंतेनासौयोग्यतांव्रजेत् ॥ मिताक्षरायांचतुर्विंशतिमतेप्राजापत्येएकंसांतपनेद्वयंअतिकृच्छ्रेद्वयंगो
दानमिति ॥ षट्त्रिंशन्मतेपिपराककृच्छ्रातिकृच्छ्रेचतिस्रोगाः ॥ पराककृच्छ्रतप्तकृच्छ्रातिकृच्छ्रस्थानेकृच्छ्रत्रयंचरेत् ॥ सांत
पनस्यगोद्वयंअशक्तौव्रतमाचरेत् ॥ तप्तकृच्छ्रेसार्धकायद्वयंस्मृतमितिस्मृत्यर्थसारे ॥ कायंनामप्राजापत्यमेव ॥ आतुरस्ततो
द्रव्यवस्त्रगृहदेवपुस्तकादियथायथंविभज्यआचार्यार्थंसंन्यासविधिपर्याप्तंस्थापयित्वानिर्ममोभवेत् ॥ शोकाहंकारादिद्वंद्ववा
सनांत्यजेत् ॥ ततःनित्यक्रियादिसंपाद्यनदीतीरंगत्वोपविश्यपुत्रमुखंदृष्ट्वाजपेत् ॥ अशक्तश्चेच्छुचौदेशेसर्वंकुर्यात् ॥ त्वंब्रह्म
त्वंयज्ञस्त्वंलोकइति ॥ सपुत्रस्तंप्रत्याह ॥ अहंब्रह्माहंयज्ञोहंलोकइति ॥ ततोबंधून्प्रत्याह ॥ नमेकश्चिन्नाहंकस्यचित् ॥ ततः
स्नात्वादेशकालौसंकीर्त्यविष्णुध्यात्वाअमुकगोत्रोत्पन्नस्यामुकशर्मणोममाशेषदुःखनिवृत्त्यतिशयानंदावाप्तिद्वारापरमपुरुषार्थ
प्राप्तयेपरमहंससंन्यासग्रहणंआतुरोक्तविधिनाकरिष्यइतिसंकल्प्यगृहस्थश्चेत्संकल्पात्पूर्वमेवप्रातरौपासनहोमंविधायात्मस
मारोपणंकुर्यात् ॥ विच्छिन्नाग्निश्चेत्तद्विच्छिन्नकालातिक्रमप्रायश्चित्तंसद्यःपुनःसंधानंचकृत्वा ॥ यातेअग्नेयज्ञियातनूस्तयेह्या

रोहात्मात्मानं ॥ अच्छावसूनिकृण्वन्नस्मेनर्यापुरूणि ॥ यज्ञोभूत्वायज्ञमासीदस्वांयोनिं ॥ जातवेदोभुवआजायमानःसक्षय एहिं ॥ इतिमंत्रेणआत्मसमारोपणंकृत्वासंन्याससंकल्पंकुर्यात् ॥ ततःशक्तौसत्यांकक्षोपस्थवर्जकांश्चिच्छिखार्थंपंचसप्तकेशा न्स्थापयित्वासशिखंवपनंकुर्यात् ॥ ततःस्वशक्त्यनुसारेणभस्मगोमयमृत्तिकास्नानानिकृत्वा वाससीपरिधायद्विराचम्यधर्मा न्धारयमाणःपात्रेजलमुद्धृत्यतदेकदेशंहस्तेगृहीत्वाप्सुजुहुयात् ॥ एषवाअग्नेर्योनिःप्राणःप्राणंगच्छस्वाहाप्राणायेदं० ॥ स्वां योनिंगच्छस्वाहाप्राणायेदं० ॥ आपोवैसर्वादेवताःसर्वाभ्योदेवताभ्योजुहोमिस्वाहासर्वाभ्योदेवताभ्यइदं० ॥ इत्युद्धृतंजलं किंचित्किंचित्गृहीत्वाआहुतित्रयमप्सुहुत्वापात्रहुतशेषंतोयंआशुःशिशानइत्यनुवाकेनाभिमंत्र्यकिंचिदुदकंगृहीत्वा पुत्रेषणा वित्तेषणालोकेषणामयात्यक्ताःस्वाहा इतिमंत्रेणपीत्वापुनःकिंचिद्गृहीत्वाअभयंसर्वभूतेभ्योमत्तःस्वाहा इतिद्वितीयंपिबेत् ॥ ततोनिःशेषंगृहीत्वासंन्यस्तंमयास्वाहा इतितृतीयंपिबेत् ॥ ततःशक्तौसत्यांनाभिदघ्नेजलेस्थित्वाअशक्तश्चेज्जलसमीपेस्थित्वा सावित्रीप्रवेशंकुर्यात् ॥ ॐ भूःसावित्रींप्रविशामि ॥ तत्सवितुर्वरेण्यं ॥ ॐ भुवःसावित्रींप्रविशामि ॥ भर्गोदेवस्यधीमहि ॥ ॐ स्वःसावित्रींप्रविशामि ॥ धियोयोनःप्रचोदयात् ॥ इतिपच्छः ॥ ॐ भूर्भुवःसावित्रींप्रविशामि ॥ ॐ तत्सवितुर्वरेण्यं भर्गोदेवस्यधीमहि ॥ ॐ स्वःसावित्रींप्रविशामि ॥ धियोयोनःप्रचोदयात् ॥ इत्यर्धर्चशः ॥ ॐ भूर्भुवःस्वःसावित्रींप्रविशा मि ॥ ॐ तत्सवितुर्वरेण्यंभर्गोदेवस्यधीमहि ॥ धियोयोनःप्रचोदयात् ॥ इतिसर्वा ॥ ॐ भूःप्रणवंप्रविशा० ॥ ॐ भुवःप्रणवं प्र० ॥ ॐ स्वःप्रणवंप्र० ॥ ॐ भूर्भुवःस्वःप्रणवंप्र० इतिप्रणवप्रवेशः ॥ तरत्समंदीधावति० ॥ इतिसूक्तंजपित्वा ॥ नमःस वित्रेजगदेकचक्षुषेजगत्प्रसूतिस्थितिनाशहेतवे॥त्रयीमयायत्रिगुणात्मधारिणेविरिंचिनारायणशंकरात्मनेइतिआदित्यमुपस्था

यपूर्वस्थापितशिखाकेशान्निकृत्ययज्ञोपवीतमंजलौगृहीत्वा भूःस्वाहेत्यप्सुहुत्वाप्राच्यांदिशिप्रतिदिशंऊर्ध्वंअधस्ताच्चजलांज
लीनुत्सिच्यपुत्रेषणायाश्चवित्तेषणायाश्चलोकेषणायाश्चव्युत्थितोहमित्युक्त्वाऊर्ध्वबाहुःसूर्याभिमुखस्तिष्ठेत् ॥ देवान्साक्षिणः
कृत्वाहरिंस्मरन्जलाद्बहिःस्थित्वा ॐ भूःसंन्यस्तंमया ॐ भुवःसंन्यस्तंमया ॥ ॐ स्वःसंन्यस्तमया ॐ भूर्भुवःस्वःसंन्यस्तं
मयाइतित्रिरुपांशुत्रिर्मध्यमस्वरेणत्रिरुच्चैर्वदेत् ॥ यद्वा ॐ भूर्भुवःस्वःसंन्यस्तंमयेतित्रिरुपांशुत्रिर्मध्यमस्वरेणत्रिरुच्चैर्ब्रूयात् ॥
अर्थभावनैकचित्ताग्रःप्रेषोच्चारणंकुर्यात् ॥ ततोजलंप्रविश्याचम्यस्नात्वाचम्य ॥ अभयंसर्वभूतेभ्योनमःस्वाहेतित्रीनंजलीन्
जलेक्षिप्त्वाइदंपठेत् ॥ यत्किंचिद्बंधनंकर्मकृतमज्ञानतोमया ॥ प्रमादालस्यदोषाद्वातत्सर्वसंत्यजाम्यहं ॥ एवंसंपूज्यभूतेभ्यो
दद्यादभयदक्षिणां ॥ पद्भ्याकराभ्यांविहरन्नाहंवाक्कायमानसैः ॥ करिष्येप्राणिनांहिंसांप्राणिनःसंतुनिर्भयाः ॥ यमः ॥ द
त्वातोयांजलिंविप्रोभक्त्यासंप्रार्थयेद्धरिं ॥ सर्वदेवात्मकेतोयेतोयाहुतिमहंहरे ॥ दत्वासर्वेषणांत्यक्त्वायुष्मच्छरणमागतः ॥
त्राहिमांसर्वलोकेशगतिरन्यानविद्यते ॥ संन्यस्तंमेजगन्नाथपाहिमांमधुसूदन ॥ त्राहिमांसर्वदेवेशवासुदेवसनातन ॥ संन्य
स्तंमेजगद्योनेपुंडरीकाक्षमोक्षद ॥ अहंसर्वाभयंदत्त्वाभूतानांपरमेश्वर ॥ युष्मच्छरणमापन्नस्त्राहिमांपुरुषोत्तम ॥ इतिपूर्वधृ
तवस्त्रंविसृज्यनग्नोभूत्वासप्तपदानिगच्छेत् ॥ ततोन्येनप्रार्थितःकाषायवस्त्रंकौपीनंप्रणवेनस्वीकृत्य ॥ युवासुवासाःपरिवीत
आगात्सउश्रेयान्भवतिजायमानः ॥ तंधीरासःकवयउन्नयंतिस्वाध्यो३मनसादेवयंतः ॥ इतिमंत्रेणपरिदध्यात् ॥ इंद्रस्यव
ज्रोसिवार्त्रघ्नःशर्ममेभव ॥ यत्पापंतन्निवारय ॥ सखामांगोपायेतिदंडं ॥ प्रणवेनसावित्र्याकमंडलुं ॥ एवमासनशिक्यादिक
मपिमंत्रैर्गृहीत्वा ॥ महावाक्यब्रह्मोपदेशार्थमुपहारसहितंयथाविधिब्रह्मिष्ठंगुरुमुपसृज्यतस्मैसर्वस्वंदत्त्वोपतिष्ठेत ॥ योब्रह्माणं

विदधातिपूर्वंयोवैवेदांश्चप्रहिणोतितस्मै ॥ तंहदेवमात्मबुद्धिप्रकाशंमुमुक्षुर्वैशरणमहंप्रपद्ये ॥ ततोदक्षिणंजान्वाच्यपादावुपसं गृह्याधीहिभगवोब्रह्मेतिवदेत् ॥ ततोगुरुःस्वात्मानंब्रह्मरूपंध्यात्वासजलंशंखंद्वादशप्रणवैरभिमंत्र्यतेनशिष्यमभिषिच्यशंनो मित्रइतिशांतिंपठेत् ॥ ततस्तच्छिरसिहस्तंदत्वापुरुषसूक्तंजस्वा ॥ ममव्रतेहृदयंतेदधामिममचित्तमनुचित्तंतेअस्तु ॥ ममवा चमेकव्रतोजुषस्वबृहस्पतिष्ट्वानियुनक्तुमह्यं ॥ इतिजस्वोदङ्मुखःप्रणवार्थमनुसंदधन्दक्षिणकर्णेप्रणवमुद्दिश्यतदर्थंपंचीकरणा त्प्रबोध्य प्रज्ञानंब्रह्म अयमात्माब्रह्म तत्त्वमसि अहंब्रह्मास्मि इत्याद्युपदिशेत् ॥ तदर्थंचवदेत् ॥ ततोनामापिदद्यात् ॥ ततो जीवतिचेद्योगपट्टंचगृहीत्वावेदांतवर्णनंयोगाभ्यासंचकुर्यात् ॥ यावज्जीवंयतिधर्मेणतिष्ठेत् ॥ आहिताग्निश्चेत्प्राजापत्यानिकृ त्वाउत्सर्गेष्ट्याग्नीनुत्सृज्यात्मसमारोपंकृत्वासंन्यसेत् ॥ इत्यातुरसंन्यासविधिः ॥ ॥ ॥

## ॥ ३७८ ॥ अथसंन्यासग्रहणविधिः ॥

श्रीः ॥ तत्रोत्तरायणंप्रशस्तं ॥ आतुरस्यतुदक्षिणायनमपि ॥ तत्रादौगृह्याग्निमंतंतादृशविधुरंप्रतिचप्रयोगः ॥ तत्रशांत्यादि लक्षणंगुरुंसंशोध्यतन्निकटेत्रिमासंयतिधर्मान्संवीक्ष्यगायत्रीजपरुद्रजपकूष्मांडहोमादिभिःशुद्धिंलब्ध्वारिक्तातिथौ देशका लौस्मृत्वामुकस्यममकरिष्यमाणसंन्यासेधिकारार्थं चतुःकृच्छ्रात्मकंप्रायश्चित्तंप्रतिकृच्छ्रंतत्प्रत्याम्नायैकैकगोनिष्क्रयद्वाराहमा चरिष्येकृच्छ्रप्रत्याम्नायगोनिष्क्रयद्रव्यंविप्रेभ्योदातुमुत्सृज्येइतिसंकल्पपूर्वकंरजतनिष्कतदर्धतदर्धान्यतमंप्रतिधेनुदद्यात् ॥ एकादश्यांद्वादश्यांवायथाब्रह्मरात्रिःस्यात्तथाश्राद्धान्यारभेत् ॥ अत्रानाश्रमिणश्चतुःकृच्छ्रमन्यस्यतप्तकृच्छ्रमितिसिंधुः ॥ स्वस्यनवश्राद्धस्यषोडशश्राद्धसपिंडीकरणानिसाग्निःपार्वणविधिनानिरग्निरेकोद्दिष्टविधिनाकुर्यादितिकेचित् ॥ नेत्य

न्ये ॥ ॥ अथाष्टौश्राद्धानि ॥ तत्रापस्तंबहिरण्यकेशीयादीनामग्नौकरणपिंडादिरहितःसांकल्पिकप्रयोगः आश्वलायनादीनांसपिंडकःपार्वणप्रयोगः ॥ तत्रादौसव्येनसयवजलेनश्राद्धांगतर्पणं ॥ ब्रह्माणंतर्पयामि विष्णुंत० महेश्वरंत० देवर्षीन्० ब्रह्मर्षीन्० क्षत्रर्षीन्० वसून्० रुद्रान्० आदित्यान्० सनकं० सनंदनं० सनातनं० पंचमहाभूतानि० चक्षुरादिकरणानि० भूतग्रामं० पितरं० पितामहं० प्रपितामहं० मातरं० पितामहीं० प्रपितामहीं० आत्मानं० पितरं० पितामहं० इतिनद्यादौकृत्वागृहमागत्यदेशकालौस्मृत्वा करिष्यमाणसंन्यासांगत्वेनाष्टौश्राद्धानिपार्वणविधिनाग्नेनामेनवाकरिष्येइतिसंकल्प्यक्षणंदद्यात् ॥ अत्रसर्वंनांदीश्राद्धवत् तेननापसव्यं तिलस्थानेयवाः युग्माविप्राः तथाचदेवस्थानेविप्रौद्वौश्राद्धाष्टकेषोडशेत्यष्टादशविप्राः तत्रसत्यवसुसंज्ञकाविश्वेदेवानांदीमुखाःस्थानेक्षणःकर्तव्यःइत्येकंवृत्वाद्वितीयंवृणुयात् ॥ एवमग्रेपिप्रथमेदेवश्राद्धेब्रह्मविष्णुमहेश्वरा नांदीमुखाःस्थानेक्षणः १ द्वितीयेऋषिश्राद्धेदेवर्षिब्रह्मर्षिक्षत्रर्षयःनांदी० २ दिव्यश्राद्धेवसुरुद्रादित्या नांदी० ३ मनुष्यश्राद्धेसनकसनंदनसनातना नांदी० ४ पंचमेभूतश्राद्धेपृथिव्यादिपंचमहाभूतान्येकादशचतुरादिकरणादिचतुर्विधभूतग्रामा नांदी० ५ षष्ठेपितृश्राद्धेपितृपितामहप्रपितामहा नांदी० ६ मातृश्राद्धेमातृपितामहीप्रपितामह्यो नांदी० ७ अष्टमेआत्मश्राद्धेआत्मपितृपितामहा नांदी० ८ आत्मांतरात्मापरमात्मेतिकेचित् इतिद्वौद्वौविप्रौवृणुयात् ॥ सर्वत्रनांदीमुखत्वंविशेषणं युग्माविप्राः सत्यवसूदक्षक्रतूवादेवौ ततःसर्वेषांपाद्यंदत्वाप्राङ्मुखानुदक्संस्थानुपवेश्यप्रार्थयेत् ॥ संन्यासार्थमहंश्राद्धंकुर्वेब्रूतद्विजोत्तमाः ॥ अनुज्ञांप्राप्ययुष्माकंसिद्धिंप्राप्स्यामिशाश्वतीं ॥ कुरुइतिप्रत्युक्तःसयवऋजुदूर्वादियुग्मेनाब्दानपूर्वकंसंबुध्यंतेइदमासनमित्यष्टादशस्वासनंदद्यात् ॥ ततआश्वलायनानामर्घ्यपात्रासादनंआपस्तंबादीनांसांक

लिपकत्वान्नार्घ्यं देवार्थमेकंपार्वणाष्टकार्थमष्टावित्येवंनवपात्राणि सर्वत्रपवित्रद्वयांतर्हितेषुशन्नोदेवीरित्यपआसिच्यविश्वेदेव
पात्रेयवोसीतियवाःअष्टपात्रेषुतिलोसीतिमंत्रस्योहेनयवानोप्यगंधादिपूजनं ऊहस्तु यवोसिसोमदेवत्योगोसवेदेवनिर्मितः प्र
त्नवद्भिःप्रत्तःपुष्ट्यानांदीमुखान्देवान्प्रीणयाहिनःस्वाहानमः इतिप्रथमपात्रे द्वितीयेनांदीमुखानृषीन्० तृतीयेनांदीमुखान्
दिव्यान्प्री० चतुर्थेनांदीमुखान्मनुष्यान्प्रीण० पंचमेनांदीमुखानिभूतानिप्री० षष्ठसप्तमाष्टमेषुनांदीमुखान्पितॄन्प्रीणयेत्यादि०
एकैकंपात्रंद्विधाविभज्यसर्वत्रयादिव्याइतिमंत्रांतेविश्वेदेवानांदीमुखाइदंवोर्घ्यमितिदत्वा ब्रह्मविष्णुमहेश्वरानांदीमुखाइदंवो
र्घ्यंस्वाहानमइत्यादिनायथायथंषोडशविप्रहस्तेषुदद्यात् ॥ यादिव्याइतिस्रवदनुमंत्रणं पात्रंन्युब्जीकृत्यगंधाद्याच्छादनांतपू
जा तत्रसर्वत्रसंबुध्द्यंतोनांदीमुखविशेषणयुक्तउच्चारः ॥ भोजनपात्राण्यासाद्यब्रह्मादिषोडशविप्रकरेष्वग्नयेकव्यवाहनायस्वा
हासोमायपितृमतेस्वाहेतिमंत्राभ्यामाहुतिद्वयंदद्यात् ॥ नेदमापस्तंबादीनां ॥ उपस्तीर्यान्नंपरिविष्यान्नाभावेआमंतन्निष्क्रयंवा
प्रोक्ष्यपृथ्वीतेपात्रमित्यादिनायथादैवतमन्नस्यामादेर्वात्यागः ॥ येदेवासो० प्रजापतेन० ब्रह्मार्पणंब्रह्म० अनेनाष्टश्राद्धेननां
दीमुखादेवादयःप्रीयंतां ॥ आपोशनदानांतेबलिदानवर्ज्यंभुंजीयुः तृप्तेषूपास्मै० अक्षन्नमी० संपन्नमितिपृष्टेरुचिरमितिसर्वे
ब्रूयुः नेदमामान्ने ॥ आचांतेषुयवलाजदधिबदरीयुतान्नेनाष्टचत्वारिंशत्पिंडान्कृत्वा प्रागायताउदक्संस्थाअष्टौरेखाःकृत्वा
भ्युक्ष्यकुशान्दूर्वावास्तीर्यपिंडस्थानेषुचतुर्विंशतौजलंसिंचेत् ॥ तद्यथाशुंधंतांब्रह्माणोनांदीमुखाः शुंधंतांविष्णवोनांदी० शुंधं
तांमहेश्वरानां० इतिप्रथमरेखायां तदुत्तररेखासुशुंधंतांदेवर्षयोनां० शुंधंतांब्रह्मर्षयोनां० इत्याद्यूहोज्ञेयः ॥ ततोब्रह्मणेनांदी
मुखायस्वाहेत्येकंपिंडंदत्वाद्वितीयएवमेवदेयस्तूष्णींवेतिप्रतिदैवतंपिंडद्वयं एवमग्रेपिविष्णवेनांदीमुखायस्वाहेत्यादयःस्वाहा

ताःपिंडदानमंत्राऊह्याः ॥ अत्रपितरोमादयध्वमित्यादिपुनःशुंधंतांतंतंत्रमंजनमभ्यंजनंचकृताकृतं ॥ पिंडान्गंधादिनासंपू
ज्यनत्वोपसंपन्नमितिविसृज्यविप्रेभ्योदक्षिणादितंत्रं ॥ नेदंपिंडदानाद्यापस्तंबादीनां ॥ अष्टश्राद्धोत्तरंतद्दिनेद्वितीयेवाषट्शि
खाकेशान्स्थापयित्वाकक्षोपस्थवर्जकेशश्मश्रुनखादिवापयित्वास्नात्वा कौपीनाच्छादनादिहोमद्रव्यंचविनान्यद्धनादिविप्रा
दिभ्यःपुत्रादिभ्यश्चत्यजेत् ॥ कौपीनादिकंगैरिकरंजितंकृत्वावैणवंदंडंसत्वचंशिरोभ्रूललाटान्यतमप्रमाणंसमूलमंगुलिस्थूलं
विप्रानीतमेकादशनवचतुःसप्तान्यतमपर्वकंपर्वग्रंथियुतंमुद्रायुतंसंपाद्य शंखोदकेनप्रणवपुरुषसूक्तकेशवादिनामभिरभिषिच्य
स्थापयेत् ॥ ततःकमंडलुकौपीनाच्छादनकंथापादुकाःस्थापयेत् शिक्यपात्रादिकमपीतिकेचित् ॥ ॥ देशकालौसंकीर्त्याशे
षदुःखनिवृत्तिनिरतिशयानंदप्राप्तिपरमपुरुषार्थप्राप्तयेपरमहंसाख्यसंन्यासग्रहणंकरिष्येतदंगतयागणपतिपूजनपुण्याहवाच
ननांदीश्राद्धानिकरिष्ये ॥ तानिकृत्वाजपेत् ब्रह्मणेनमः विष्णवे० रुद्राय० सूर्याय० सोमाय० आत्मने० अंतरात्मने०
परमात्मने० अग्निमीळेऋक् इषेत्वोर्जेत्वा० अग्नआयाहिऋक् शन्नोदेवीऋक् जपित्वा सक्तुपिष्टंमुष्टित्रयंप्रणवेनत्रिःप्राश्यना
भिमालभेत आत्मनेस्वाहा अंतरात्मने० परमात्मनेस्वा० प्रजापतयेस्वाहेतिमंत्रैः ॥ ततःपयोदधिमिश्रमाज्यंजलमेववात्रि
वृदसीतिप्रथमंप्राश्य प्रवृदसीतिद्वितीयं विवृदसीतितृतीयंप्राश्यापःपुनंत्वितिजलंप्राश्याचम्योपवासंकुर्यात् ॥ ॥

## ॥ ३७९ ॥ अथसावित्रीप्रवेशः ॥

श्रीः ॥ ॐ भूःसावित्रींप्रविशामि ॐ तत्सवितुर्वरेण्यं ॐ भुवःसावित्रींप्र० भर्गोदेवस्य० ॐ स्वःसावित्रीं० धियोयो० ॥
ॐ भूर्भुवःस्वःसावित्रींप्र० तत्सवितुर्वरेण्यं० ऋक् ततोस्तात्प्राक्गृह्याग्निंसमिध्यविच्छिन्नश्चेत्पुनःसंधानविधिनानिरग्निर्वावि

धुरादिर्वापृष्टोदिविविधानेनाग्निंसंपादयेत् ( पृष्टोदिविविधानंचकात्यायनवैश्वदेवप्रसंगेधर्मसिंधौद्रष्टव्यं )॥ ॥ अथास्तात्पूर्वंब्रह्मान्वाधानं ॥ संन्यासंकर्तुंब्रह्मान्वाधानंकरिष्येइतिसंकल्प्याग्निध्यानाद्याज्यंसंस्कृत्यस्रुक्स्रुवौसंमृज्यस्रुचिचतुराज्यंगृहीत्वोंस्वाहेतिहुत्वापरमात्मनइदं० परिषेचनादि इतिब्रह्मान्वाधानं ॥ ततःसायंसंध्याहोमवैश्वदेवान्कृत्वाग्निसमीपेजागरंकुर्यात् ॥ ॥ प्रातर्नित्यहोमांतेवैश्वदेवादिकंकृत्वाग्नेयंवैश्वानरंवास्थालीपाकंकुर्यात् ॥ तत्रकरिष्यमाणसंन्यासपूर्वांगभूतमाग्नेयस्थालीपाकंकरिष्येइतिसंकल्पः ॥ ध्यात्वाचक्षुषीआज्येनेत्यंतेत्रप्रधानमग्निंचरुणाशेषेणेत्यादिअग्नयेत्वाजुष्टंनिर्वपामीत्यादिनाम्नानिर्वापादि॥नाम्नैवप्रधानहोमः एवंवैश्वानरपक्षेप्यूह्यं ॥ ततस्तरत्समंदीतिजपित्वाकुशहेमरूप्यजलैःस्नात्वादेशादिस्मृत्वासंन्यासांगभूतंप्राणादिहोमंपुरुषसूक्तहोमंविरजाहोमंचतंत्रेणकरिष्येइतिसंकल्प्यान्वाधानेआज्येनेत्यंतेप्राणादिपंचदेवताःसमिच्चर्वाज्यैःपुरुषंपुरुषसूक्तेनप्रत्यृचंषोडशवारंसमिच्चर्वाज्यैःप्राणाद्येकोनविंशतिदेवताविरजामंत्रैःप्रतिद्रव्यमेकैकसंख्यसमिच्चर्वाज्याहुतिभिःप्रजापतिंसकृदाज्येनशेषेणेत्यादिषष्ट्युत्तरशतवारंतूष्णींनिरुप्यतथैवप्रोक्ष्यश्रपयित्वाज्यभागांतेप्राणायस्वाहेत्यादिपंचमंत्रैर्द्रव्यत्रयंसकृद्धुत्वायथादैवंत्यक्त्वासहस्रशीर्षेतिषोडशर्चेनप्रत्यृचंपृथक्पृथक्द्रव्यत्रयंहुत्वापुरुषायेदंनममेतिसर्वत्रत्यजेत् ॥ इतिसावित्रीप्रवेशः ॥ ॥ ॥ ॥ ॥ ॥

## ॥ ३८० ॥ अथविरजाहोमः ॥

श्रीः ॥ प्राणापानव्यानोदानसमानामेशुध्यंतांज्योतिरहंविरजाविपाप्माभूयासंस्वाहाप्राणादिभ्यइदं वाङ्मनश्चक्षुःश्रोत्रजिह्वाघ्राणरेतोबुद्ध्याकूतिसंकल्पामेशुध्यंतांज्योति० वागादिभ्यइदं त्वक्चर्ममांसरुधिरमेदोमज्जास्नायवोस्थीनिमेशुध्यंतां० त्वगा

दिभ्यइदं० शिरःपाणिपादपार्श्वपृष्ठोरूदरजंघाशिश्नोपस्थपायवोमेशुध्यं० शिरआदिभ्य० उत्तिष्ठपुरुषहरितपिंगललोहिताक्ष
देहिदेहिददापयितामेशुध्यं० पुरुषादिभ्य० पृथिव्यापस्तेजोवायुराकाशामेशुध्यं० पृथिव्यादिभ्य० शब्दस्पर्शरूपरसगंधामे
शुध्यं० शब्दादिभ्य० मनोवाक्कायकर्माणिमेशुध्यंतां० मनआदिकर्मभ्य० अव्यक्तभावैरहंकारैर्ज्योतिरहं० अव्यक्तादिभ्य०
आत्मामेशुध्यतांज्यो० आत्मन० अंतरात्मामे० अंतरात्मन० परमात्मामे० परमात्मन० क्षुधेस्वाहा क्षुधइदं क्षुत्पिपासा
यस्वाहा क्षुत्पिपासायेदं० विविद्यैस्वाहा० विविद्यायाइदं० ऋग्विधानाय० कषोत्कायस्वा० क्षुत्पिपासामलांज्येष्ठामलक्ष्मीं
नाशयाम्यहं अभूतिसममृद्धिंचसर्वांनिर्णुदमेपाप्मानंस्वाहाअन्नयइदं० अन्नमयप्राणमयमनोयामानंदमयआत्मामेशुध्यंतां०
अन्नमयादिभ्य० एवंसमिच्चर्वाज्यैःप्रतिद्रव्यंचत्वारिंशदाहुतीर्हुत्वा यदिष्टंयच्चपूर्तंयच्चापद्यनापदि प्रजापतौतन्मनसिजुहो
मि विमुक्तोहंदेवकिल्बिषात्स्वाहेत्याज्यंहुत्वाप्रजापतयइदमितित्यजेत् ॥ ततःपुरुषसूक्तंअग्निमिळेइत्यादिचतुर्वेदादींश्चजपित्वा
स्विष्टकृदादिहोमशेषंसमाप्य ब्रह्मचार्यादिभ्योगोहिरण्यवस्त्रादिदत्वासंमासिंचंतुमरुतइतिमंत्रेणगृह्याग्निमुपस्थायतत्रदारुपा
त्राणिदहेत्तैजसानिगुरवेदद्यात् ॥ ततआत्मन्यग्निसमारोपंअयंतेयोनिरित्यृचायातेअग्नेयज्ञियातनूस्तयेह्यारोहात्मात्मानमित्या
दियजुषाचत्रिरुक्तेनाग्नेर्ज्वालांप्राश्नन्कुर्यात् ॥ कृष्णाजिनमादायगृहान्निष्क्रम्य ॥ सर्वेभवंतुवेदाढ्याःसर्वेभवंतुसोमपाः ॥
सर्वेपुत्रमुखंदृष्ट्वासर्वेभवंतुभिक्षुकाइतिपुत्रादिभ्यआशिषंदत्वा नमेकश्चिन्नाहंकस्यचित्इतिपुत्रादीनुक्त्वाविसृजेत् ॥ जलाश
यंगत्वांजलिनाजलमादायाशुःशिशानइतिसूक्तेनाभिमंत्र्यसर्वाभ्योदेवताभ्यःस्वाहेतित्यजेत् ॥ तिथ्यादिस्मृत्वाऽपरोक्षब्रह्मा
वासयेसंन्यासंकरोमीतिसंकल्प्यजलांजलिंगृहीत्वा ॐ एषहवाअग्निःसूर्यःप्राणंगच्छस्वाहा ॐ स्वांगोनिंगच्छस्वाहा ॐ आ

पोवैगच्छस्वाहेतिमंत्रत्रयेणजलेष्वंजलित्रयंदद्यात्॥ पुत्रेषणावित्तेषणालोकेषणासर्वेषणामयापरित्यक्ताअभयंसर्वभूतेभ्योमत्तः स्वाहाइत्यंजलिंजलेक्षिपेत् ॥ पुनरेवमभयंदत्वावदेत् ॥ यत्किंचिद्बंधनंकर्मकृतमज्ञानतोमया ॥ प्रमादालस्यदोषोत्थंतत्सर्वं संत्यजाम्यहं ॥ त्यक्तसर्वोविशुद्धात्मागतस्नेहशुभाशुभः ॥ एषत्यजाम्यहंसर्वकामभोगसुखादिकं ॥ रोषंतोषंविवादंचगंधमाल्यानुलेपनं ॥ भूषणंनर्तनंगेयंदानमादानमेवच ॥ नमस्कारंजपंहोमंयाश्चनित्याःक्रियामम ॥ नित्यंनैमित्तिकंकाम्यंवर्णधर्माश्रमाश्रये ॥ सर्वमेवपरित्यज्यददाम्यभयदक्षिणां ॥ पद्भ्यांकराभ्यांविहरन्नाहंवाक्कायमानसैः ॥ करिष्येप्राणिनांपीडांप्राणिनःसंतुनिर्भयाः ॥ सूर्यादिदेवान्विप्रांश्चसाक्षित्वेनध्यात्वानाभिमात्रेजलेप्राङ्मुखःसावित्रीप्रवेशंपूर्ववत्कृत्वातरत्समंदीतिसूक्तं पठित्वा पुत्रेषणायावित्तेषणायालोकेषणायाश्चव्युत्थितोहंभिक्षाचर्यंचरामीतिजलेजलंजुहुयात् ॥ ॥प्रैषोच्चारः॥ ॐ भूःसंन्यस्तंमया ॐ भुवःसंन्यास्तंमया ॐ स्वःसंन्यस्तंमया ॐ भूर्भुवःस्वःसंन्यस्तंमयेतित्रिर्मंदमध्योच्चस्वरेणोक्त्वाऽभयंसर्वभूतेभ्योमत्तःस्वाहेतिजलंजलेक्षिपेत्॥ शिखामुत्पाट्ययज्ञोपवीतमुद्धृत्यकरेगृहीत्वा॥ आपोवैसर्वादेवताःसर्वाभ्योदेवताभ्योजुहोमिस्वाहा ॥ भूःस्वाहेतिजलेजलैःसहहुत्वाप्रार्थयेत् ॥ त्राहिमांसर्वलोकेशवासुदेवसनातन ॥ संन्यस्तंमेजगद्योनेपुंडरीकाक्षमोक्षद ॥ युष्मच्छरणमापन्नंत्राहिमांपुरुषोत्तम ॥ ततोदिगंबरःपंचपदान्युदङ्मुखोगच्छेत् ॥ विविदिषुश्चेत्तस्मैआचार्योनत्वाकाषायकौपीनाच्छादनेदत्वादंडंदद्यात् ॥ सचकौपीनंवासश्चपरिधाय ॐ इंद्रस्यवज्रोसिसखेमांगोपायेतिदंडंगृह्णीयात् ॥ वार्त्रघ्नःशर्ममेभवयत्पापंतन्निवारय प्रणवेनगायत्र्यावाकमंडलुं इदंविष्णुरित्यासनं ॥ ततःसमित्पाणिर्गुरुंनत्वागरुडासनोपविष्टोगुरुंवदेत् ॥ त्रायस्वभोजगन्नाथगुरोसंसारवह्निना ॥ दग्धंमांकालदष्टंचत्वामहंशरणंगतः ॥ योब्रह्माणंविदधातिपूर्वंयोवैवेदांश्चप्र

ह्णोतितस्मै ॥ तंहदेवमात्मबुद्धिप्रकाशंमुमुक्षुर्वैशरणमहंप्रपद्ये ॥ इतिगुरुमुपस्थायदक्षिणंजान्वाच्यपादावुपसंगृह्यअधीहिभ गवोब्रह्मेतिवदेत् ॥ गुरुरात्मानंब्रह्मरूपंध्यात्वाजलपूर्णशंखंद्वादशप्रणवैरभिमंत्र्यतेनशिष्यमभिषिच्यशन्नोमित्रइतिशांतिंपठि त्वा तच्छिरसिहस्तंदत्वापुरुषसूक्तंजपित्वाशिष्यहृदयेहस्तंकृत्वा ममव्रतेहृदयंतेदधामीत्यादिमंत्रंजह्वादक्षिणकर्णेप्रणवमुपदि श्यतदर्थंचपंचीकरणाद्यवबोध्य प्रज्ञानंब्रह्मअयमात्माब्रह्मतत्त्वमसिअहंब्रह्मास्मीतिऋग्वेदादिमहावाक्येष्वन्यतमंशिष्यशाखा नुसारेणोपदिश्यतदर्थंबोधयेत् ॥ ततस्तीर्थाश्रमादिसंप्रदायानुसारेणनामदद्यात् ॥ ततःपर्यंकशौचंकारयित्वायोगपट्टंदद्यात्

## ॥ ३८१ ॥ अथपर्यंकशौचप्रयोगः ॥

श्रीः ॥ कस्मिंश्चित्पुण्यदिनेकश्चिद्गृहस्थःस्वाग्रेपीठादौयतिमुपवेश्यगुर्वनुज्ञातोयतयेपर्यंकशौचंकरिष्येइतिसंकल्प्य वामभागेप्रा क्संस्थान्पंचमृद्भागान्दक्षिणभागेपितथैवपंचसंस्थाप्योभयत्रशुद्धोदकंचसंस्थाप्य वामप्रथममृद्भागेनपंचवारंमृज्जलाभ्यांयति जानुद्वयंकराभ्यांयुगपत्क्षालयेत् चरमक्षालनेमृद्भागसमाप्तिः एवमग्रेपि ततोदक्षिणभागस्थप्रथमभागार्धेनस्ववामकरंमृज्ज लाभ्यांदशवारंप्रक्षाल्यापरार्धेनतेनैवजलेनोभौकरौसप्तवारंक्षालयेत् एवमग्रेपियोज्यं ॥ संख्यायांविशेषस्तूच्यते ॥ वामद्वि तीयभागेनचतुर्वारंजंघाद्वयंयुगपत्प्रक्षाल्यदक्षिणद्वितीयभागार्धेनसप्तवारंवामकरमर्धांतरेणचतुर्वारमुभौचकरौक्षालयेत् ॥ वामतृतीयेनयतिगुल्फौत्रिवारंदक्षिणभागार्धेनवामकरंषड्वारमुभौचतुर्वारंवामचतुर्थेन यतिपादपृष्ठौद्विवारंदक्षिणार्धेनस्व वामंकरंचतुर्वारंभूमौद्विवारमवशिष्टार्धेनवामपंचमेनयतिपादतलेसकृद्दक्षिणपंचमार्धेनवामस्यद्विवारमुभयोश्चापरार्धेनसकृ त्क्षालनमिति ॥ इतिपर्यंकशौचप्रयोगः ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥

## ॥ ३८२ ॥ अथयोगपट्टः ॥

श्रीः ॥ कारितपर्यंकशौचोयतिःकटिशौचंकृत्वाकटिसूत्रकौपीनेधृत्वावस्त्रेणावगुंठ्यगुर्वनुज्ञयोच्चासनेउपविश्यसभ्यैःसहवेदांतेकिंचिदुपन्यसेत् ॥ गुरुर्यतिःशिष्यंयतिंशिरसिशंखेनपुरुषसूक्तेनाभिषिच्यवस्त्रगंधपुष्पधूपदीपनैवेद्यैःसंपूज्यवस्त्रमुपरिधृत्वायतिभिःसहविश्वरूपाध्यायंपश्यामिदेवानित्यारभ्यभुंक्ष्वराज्यंसमृद्धमित्यंतंपठित्वा पूर्वकल्पितंनामदद्यात् ॥ ततःशिष्यंवदेत्इतःपरंत्वयासंन्यासाधिकारिणेसंन्यासोदेयोदीक्षायोगपट्टादिकंचकार्यं ज्येष्ठयतयोनमस्कार्याः ॥ ततोगुरुःकटिसूत्रंपंचमुद्रालंकृतंपूर्वदंडंचशिष्यायदत्वाशिष्यंयथासंप्रदायंनमस्कुर्यात् अन्येयतयोगृहिणश्चनमस्कुर्युः ॥ शिष्योनारायणेत्युक्त्वोच्चासनादुत्थायतत्रगुरुमुपवेश्ययथाविधिनत्वान्ययतीन्नमेत् ॥ इतिगृह्याग्निमतोविधुरादेश्चविविदिषासंन्यासप्रयोगः ॥ अथाग्निहोत्रिणोविशेषः ॥ तत्रश्रौताग्नयोविच्छिन्नाश्चेत्पुनराधानंपावमानेष्ट्यंतंपूर्णाहुत्यंतंवाकृत्वाप्रायश्चित्तादिसावित्रीप्रवेशांतंपूर्ववत्कुर्यात् ॥ इतियोगपट्टः ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥

## ॥ ३८३ ॥ अथब्रह्मान्वाधानम् ॥

श्रीः ॥ अग्नित्रयंसमिध्यसंस्कृतमाज्यंस्रुचिचतुर्वारंगृहीत्वाहवनीयेपूर्णाहुतिं ॐ स्वाहापरमात्मनइदमितिकुर्यात् ॥ सायंसंध्याग्निहोमांतेउत्तरेणगार्हपत्यंद्वंद्वशःपात्राण्यासाद्याहवनीयदक्षिणतःकौपीनदंडाद्यासादयेत् ॥ रात्रिजागरांतेप्रातर्होमादिकृत्वापौर्णमास्यांब्रह्मान्वाधानंचेत्पौर्णमासेष्टिंकृत्वादर्शेष्टिमपिपक्षहोमापकर्षपूर्वकमपकृष्यतदैवकुर्यात् ॥ दर्शेचेद्दर्शेष्टिरेव ॥

अथपूर्णमास्यांदर्शेवादेशकालौस्मृत्वासंन्यासपूर्वांगभूतयाप्राजापत्येष्ट्यावैश्वानर्येष्ट्यावसमानतंत्रयायक्ष्ये इतिसंकल्प्यसमुच्च
येनेष्टिद्वयं ॥ अत्रवैश्वानरद्वादशकपालःपुरोडाशःप्राजापत्यश्चरुर्वैष्णवोनवकपालःपुरोडाशः अथवाकेवलप्राजापत्येष्टिः ॥
अत्रप्रयोगःस्वस्वसूत्रानुसारेणोह्यः ॥ बौधायनसूत्रानुसारेणकिंचिदुच्यते ॥ पवनपावनपुण्याहवाचनादिपूर्वांगांतेकेवलवैश्वा
नरेष्ट्याःकेवलप्राजापत्यावासंकल्पः व्रीहिमयःपुरोडाशोद्रव्यं पंचप्रयाजाः अग्निर्वैश्वानरः प्रजापतिर्वादेवता पंचदशसामिधे
न्यः व्रतग्रहणांतेध्वर्युराज्यंसंस्कृत्यस्रुचिचतुर्गृहीतंगृहीत्वापृथिवीहोतेत्यादिचतुर्होतृहोमंकूष्मांडहोमसारस्वतहोमौचकृत्वानि
र्वापादिः वैश्वानरोद्वादशकपालःपुरोडाशः प्राजापत्यश्चरुः वैश्वानरायप्रतिवेदयामइतिपुरोनुवाक्यावैश्वानरःपवमानःपवित्रै
रितियाज्याप्राजापत्यायांप्रधानमुपांशुधर्मकं सुभूःस्वयंभूरित्याद्यनुवाक्याः प्रजापतेनत्वदेतामितियाज्या ॥ अथस्रुवेणाष्टा
वुपहोमावुभयत्र वैश्वानरोनऊतयआप्रयातुपरावतःअग्निरुक्थेनवाहसास्वाहा वैश्वानरायेदमितित्यागःसर्वत्र ॥ ऋतावानं
वैश्वानरमृतस्यज्योतिषस्पतिंअजस्रंघर्ममीमहेस्वाहा २ वैश्वानरस्यदस० ३ पृष्टोदिविपृष्टोअग्निः० ४ जातोयदग्ने० ५ त्व
मग्नेशोचिषा० ६ अस्माकमग्ने० ७ वैश्वानरस्यसुमतौ० ८ अथैनमुपतिष्ठेतसहस्रशीर्षेतिसूक्तेन ॥ ततःस्विष्टकृदादिशेषंस
मापयेत् ॥ सर्वोवैरुद्रःविश्वंभूतमितिद्वाभ्यामभ्युत्सर्गः ॥ आयुर्दाअग्नेइतिमंत्रेणदर्भस्तंबस्थयजमानभागात्किंचिदादायसह
स्रशीर्षेत्यनुवाकेनप्राश्यओमितिब्रह्मओमितीदंसर्वमित्यनुवाकेनहुतशेषमाहवनीयेप्रक्षिपेत् ॥ एवंवैश्वानर्याद्यन्यतरामिष्टिंकृ
त्वौपासनाग्नौसर्वाधानेदक्षिणाग्नौप्राणादिहोमादिविरजाहोमांतंकार्यंअन्यत्प्राग्वत् ॥ आहवनीयेअरणीमुसलोलूखलातिरिक्त
दारुपात्राणांदाहः ॥ ततआत्मन्याहवनीयाग्निसमारोपःपूर्ववत् अरणीद्वयंगार्हपत्येप्रक्षिप्यतत्समारोपंकृत्वादक्षिणाग्नौमुसलो

लूखलेहुत्वादक्षिणाग्नेरपिसमारोपः ततऔपासनाग्नेःसमारोपइतिक्रमः ॥ अत्रविशेषोन्यत्रज्ञातव्यः ॥ इतिसाग्निकप्रयोगः ॥ स्नातकंप्रतिब्रह्मान्वाधानविरजाहोमादिरहितोवाप्रयोगोऽग्न्यभावात् ॥ इतिब्रह्मान्वाधानम् ॥ ॥ छ ॥

## ॥ ३८४ ॥ अथमृतयतिसंस्कारः ॥

श्रीः ॥ पुत्रःशिष्योवास्नात्वावपनंकृच्छ्रत्रयंचाधिकारार्थंकुर्यात् पुत्रातिरिक्तस्यवपनंकृताकृतं ॥ देशकालौस्मृत्वाब्रह्मीभूतस्ययतेःशौनकोक्तविधिनासंस्कारंकरिष्ये । नवंकलशंतीर्थेनापूर्य गंगेचयमुने० नारायणःपरंब्रह्म० यच्चकिंचिज्जगत्सर्वं० इतिमंत्रैरभिमंत्र्यरुद्रसूक्तविष्णुसूक्तापोहिष्ठादिभिर्यतेःस्नानंविधाय चंदनादिभिःकलेवरंसंपूज्यमाल्यादिभिरलंकृत्यवाद्यघोषादिभिःशुद्धदेशंनयेत् जलेस्थलेवासमाहितंकुर्यात् स्थलपक्षेगर्तंव्याहृतिप्रोक्षितभुविदंडप्रमाणंकृत्वामध्येसूक्ष्मगर्तंसार्धहस्तंकृत्वासप्तव्याहृतिभिःपंचगव्येनत्रिःप्रोक्ष्य जलपक्षेनद्यांपंचगव्यंप्रक्षिप्यकुशानास्तीर्यसावित्र्यादेहंप्रोक्ष्यशंखोदकेनपुरुषसूक्तेनाष्टोत्तरशतावृत्तप्रणवैश्चसंस्नाप्याष्टाक्षरेणषोडशोपचारैःसंपूज्यतुलसीमालाद्यैरलंकृत्यविष्णोहव्यंरक्षस्वेतिदेहंगर्तेनद्यांवाक्षिपेत् । इदंविष्णुरितिदंडंत्रेधाभग्नंदक्षिणहस्तेस्थापयेत् । हंसःशुचिषदितिपरेणनाकंनिहितंगुहायांविभ्राजदेतद्यतयोविशंति । वेदांतविज्ञानसुनिश्चितार्थाःसंन्यासयोगाद्यतयःशुद्धसत्त्वाः । इतिहृदयेजपेत् पुरुषसूक्तंभ्रुवोर्मध्येजपेत् ब्रह्मजज्ञानमितिमूर्धनिमूर्धानंभूर्भुवःस्वश्चेत्युक्त्वाशंखेनभेदयेत् । अथवाभूमिर्भूमिमगान्मातामातरमप्यगात् । भूयास्मपुत्रैःपशुभिर्योनोद्वेष्टिसभिद्यतामितिमंत्रेणपरश्वादिनाभेदयेत् । शिरोभेत्तुमशक्तःशिरस्थापितंगुडपिंडादिकंभिंद्यात् । गर्तंपुरुषसूक्तेनलवणेनप्रपूरयेत् । सृगालश्वादिरक्षार्थंसिकतादिभिःप्रपूरयेत् । नद्यादौशिरोभेदनोत्तरंदर्भैराच्छाद्यव्याहृतिभिरभिमंत्र्यपाषाणंबध्वा ॐ

स्वाहेतिहृदेन्यसेत् ॥ ततोग्निनाग्निःस० त्वंह्यग्रेअग्निना० तंमर्जयंतसुक्रतुं० यज्ञेनयज्ञं० इत्यृक्चतुष्टयेनचित्तिःस्रुगित्यादि भिर्दशहोत्रादिसंज्ञकयजुर्मंत्रैश्चाभिमंत्रयेत् । अतोदेवाइतिजपित्वापापैर्मुक्ताअश्वमेधादिफलभागिनोवयमितिभावयंतोऽव भृथबुध्यासर्वेनुगामिनःस्नात्वागंधादिधृत्वासोत्सवागृहंगच्छेयुः । अत्रपरमहंसस्यस्थलेसमाधिर्मुख्यःजलेमध्यमः । कुटीचकं तुप्रदहेत्पूरयेच्चबहूदकं । हंसोजलेतुनिक्षेप्यःपरमहंसंप्रपूरयेदितिवचनात् । अत्रपरमहंसंप्रकीरयेदितिक्वचित्पाठः । एकोद्दि ष्टंजलंपिंडमाशौचंप्रेतसत्क्रियां । नकुर्याद्वार्षिकादन्यद्ब्रह्मीभूतायभिक्षवे । कुटीचकातिरेकेणनदहेद्यतिनंक्वचित् ॥ ॥ त तःकर्तास्नात्वाचम्यसिद्धिंगतस्यब्रह्मीभूतभिक्षोस्तृप्त्यर्थंतर्पणंकरिष्येइतिसंकल्प्य सव्येनदेवतीर्थेनैवात्मानमंतरात्मानंपरमा त्मानमित्तिचतुश्चतुस्तर्पयित्वा शुक्लपक्षेमृतस्यकेशवादिद्वादशनामभिः कृष्णपक्षेमृतस्यसंकर्षणादिद्वादशनामभिःकेशवंतर्पया मीत्येवंद्वितीयांतैःकुर्यात् ॥ इदंक्षीरेणेतिकेचित् ॥ ततःसिद्धिंगतस्यभिक्षोस्तृप्त्यर्थंनारायणपूजनंबलिदानंघृतदीपदानंचक रिष्येइतिसंकल्प्यदेवयजनोपरितीरेवामृन्मयलिंगंकृत्वापुरुषसूक्तेनाष्टाक्षरेणचषोडशोपचारपूजांकृत्वाघृतमिश्रपायसबलिंद त्वाघृतदीपंचसमर्प्यपायसबलिंजलेक्षिपेत् ॥ ततः ॐ नमोब्रह्मणेनमइतिशंखेनाष्टार्घ्यान्दत्वागृहंव्रजेदितिप्रथमदिनकृत्यं ॥ एवंदशदिनांतंप्रत्यहंतर्पणंलिंगपूजनंपायसबलिदीपदानानिकुर्यात् ॥ इतिमृतयतिसंस्कारः ॥ ॥ छ ॥

## ॥ ३८५ ॥ अथएकादशेहनिपार्वणश्राद्धम् ॥

श्रीः ॥ तत्रमध्याह्नेनद्यादौश्राद्धांगतिलतर्पणंकृत्वादेशकालौस्मृत्वाप्राचीनावीतीअमुकगोत्रस्यामुकशर्मणोब्रह्मीभूतस्यास्मत्पि तुःकरिष्यमाणदर्शादिसर्वश्राद्धाधिकारार्थमाद्यपार्वणश्राद्धंकरिष्येइतिपुत्रादिःसंकल्पयेत् । शिष्यस्तुब्रह्मीभूतगुरोःप्रत्यब्दा

दिश्राद्धाधिकारार्थंतत्पितृसंबंधिनामगोत्रोद्देश्यतासिद्ध्यर्थंचपार्वणश्राद्धमितिसंकल्पयेत् । अन्यत्समानं । पुरूरवाद्रवसंज्ञकाविश्वेदेवाः । पितृपितामहप्रपितामहानांनामगोत्रादिसहितानामुच्चारः । सर्वत्रपितुर्ब्रह्मीभूतइतिविशेषणमात्रमधिकंशेषं प्रत्यब्दश्राद्धवत् । केचिच्छिष्यःकर्ताचेदात्मांतरात्मपरमात्मनउद्दिश्यसाधुरुरुसंज्ञकदेवयुतं सव्येनदेवधर्मकंनांदीश्राद्धवदेकोदशाहेपार्वणश्राद्धंकुर्यादित्याहुः ॥ अत्रसर्वत्रविस्तरस्तोरोक्तसंन्यासपद्धतौद्रष्टव्यः ॥ इतिएकादशेहनिपार्वणश्राद्धम् ॥

## ॥ ३८६ ॥ अथद्वादशाहेनारायणबलिः ॥

श्रीः ॥ देशादिस्मृत्वासिद्धिंगतस्यभिक्षोःसंभावितसर्वपापक्षयपूर्वकंविष्णुलोकावाप्तिद्वाराश्रीनारायणप्रीत्यर्थंनारायणबलिं करिष्येइतिसंकल्प्यत्रयोदशयतीन्विप्रान्वानिमंत्र्य शुक्लपक्षेकेशवरूपिगुर्वर्थेत्वयाक्षणःकर्तव्यइत्येवंदामोदरांतकेशवादिद्वादशनामभिःक्षणोदेयः । कृष्णेतुसंकर्षणादिद्वादशनामभिः । त्रयोदशंविप्रंविष्ण्वर्थेत्वयाक्षणःकर्तव्यइतिनिमंत्र्यपादान्प्रक्षाल्य प्राङ्मुखानुपवेशयेत् । विप्राग्रेस्थंडिलेग्निप्रतिष्ठापनादि । अन्वाधानेचक्षुषीआज्येनेत्यंतेग्निंवायुंसूर्यंप्रजापतिंचव्यस्तसमस्तव्याहृतिभिरेकैकपायसाहुत्या विष्णुमतोदेवाइतिषड्भिःप्रत्यृचमेकैकपायसाहुत्या नारायणंपुरुषसूक्तेनप्रत्यृचमेकैकपायसाहुत्याशुक्लेकेशवादिद्वादशदेवताः कृष्णेसंकर्षणादिद्वादशदेवताः एकैकपायसाहुत्याशेषेणेत्यादिद्विपंचाशदधिकशतमुष्टीन्निरुप्यबलिपर्याप्ततंडुलानोप्याष्टत्रिंशदाहुतिपर्याप्तंपुरुषाहारमितविष्णुनैवेद्यपर्याप्तंचक्षीरेश्रपयित्वाज्यभागांतेग्निपूर्वतः शालग्रामेविष्णुसूक्तेनाष्टाक्षरेणचषोडशोपचारैःसंपूज्य स्रुचाहस्तेनवान्वाधानानुसारेणहोमत्यागौविदध्यात् । एवंशुक्लकृष्णभेदेनकेशवादिद्वादशांताःसंकर्षणाद्यंतावाष्टत्रिंशदाहुतीर्हुत्वास्विष्टकृदादिशेषंसमाप्य पुनःशालग्रामंसंपूज्यविष्णुगायत्र्याविष्णवेर्घ्यंदत्वा

हुतशेषपायसेनविष्णवेबलिंदत्वा निमंत्रितत्रयोदशविप्रान्केशवादिक्रमेणकेशवरूपिगुरवेनमइदमासनमित्यादिनासनगंधपु
ष्पधूपदीपाच्छादनानिदत्वा त्रयोदशेविप्रेपुरुषसूक्तेनप्रत्यृचांतेविष्णवेनमइत्येवमादिनाविष्णुंदीपांतोपचारैःपूजयेत् । चतुर
स्रमंडलेषुत्रयोदशभोजनपात्राण्यासाद्योपस्तीर्यान्नंपरिषिच्य पृथिवीतेपात्रमित्यादिनाकेशवादिद्वादशोद्देशेनविष्णूद्देशेनचा
न्नंत्यक्त्वा अतोदेवा० ॐ तद्ब्रह्म ॐ तद्वायुर्ब्रह्मार्पणमित्याद्यापोशनादिप्राणाहुत्यंतेनारायणाद्युपनिषद्भागान्पठेत् । तृप्ति
प्रश्नांतेआचांतेषुविप्रेषुप्रागग्रान्दर्भानास्तीर्याष्टाक्षरेणाक्षतोदकंदत्वा केशवरूपिणेगुरवेऽयंपिंडःस्वाहानममइत्येवंद्वादशपिंडा
न्दद्यात् । कृष्णेतुसंकर्षणादिनामभिरितिसर्वत्र । पिंडेषुविष्णुंसंपूज्यपुरुषसूक्तेनस्तुत्वाविसर्जयेत् । विप्रेभ्यस्तांबूलदक्षिणा
दिदत्वात्रयोदशायविप्रायनाभ्याआसीदित्याद्यृक्त्रयेणफलतांबूलदक्षिणांदत्वानमस्कृत्यतांशालग्राममूर्तिमाचार्यायदद्यात् ।
इतिनारायणबलिः॥अत्रद्वादशाहेत्रयोदशाहेवायथाचारमाराधनमपेक्षितं तत्प्रयोगःप्रथमेप्रकरणेश्राद्धकांडेगतस्ततोवगंतव्यः

## ॥ ३८७ ॥ अथयतिधर्माः ॥

श्रीः ॥ प्रातरुत्थायब्रह्मणस्पतइतिजपित्वादंडादीनिमृदंचादायमूत्रपुरीषयोर्गृहस्थचतुर्गुणंशौचंकृत्वाचम्यपर्वद्वादशीवर्ज्यंप्र
णवेनदंतधावनंकृत्वामृदाबहिःकटिंप्रक्षाल्यजलतर्पणवर्ज्यंस्नात्वापुनर्जंघेप्रक्षाल्यवस्त्रादीनिगृहीत्वा प्रणवेनप्राणायाममार्ज
नादिकृत्वाकेशवादिनमोंतनामभिस्तर्पयित्वा भूस्तर्पयामीत्यादिव्यस्तसमस्तव्याहृतिभिर्महर्जनस्तर्पयामीतितर्पयेत् ॥ अत्र
विशेषोमाधवादौविश्वेश्वरादौचज्ञेयः ॥ सूर्योपस्थानादिकंत्रिकालविष्णुपूजादिकंचसिंधौज्ञेयं । विधूमेसन्नमुसलेव्यंगारेभु
क्तवज्जने । कालेपराह्णेभूयिष्ठेनित्यंभिक्षांयतिश्चरेत् । अत्रभिक्षाभेदाःग्रंथांतरेज्ञेयाः । अत्रविविदिषोर्दंडिनःमाधुकरीमु

ख्या । दंडवस्त्रादिपरिग्रहगरहितस्यतुकरपात्रंमुख्यं । अन्येपक्षाअशक्तविषयाः । तत्रमाधुकरीपक्षेदंडादिगृहीत्वापंचभ्यः सप्तभ्योवागृहेभ्योभिक्षांयाचित्वान्नंप्रोक्ष्य भूःस्वधानमःइत्यादिव्यस्तसमस्तव्याहृतिभिःसूर्यादिदेवेभ्योभूतेभ्यश्चभूमौक्षिप्त्वा शेषमन्नंविष्णुनिवेदितंभुंजीत । चंडीविनायकादिनैवेद्यंनभुंजीत । भुक्त्वाचम्यषोडशप्राणायामान्कुर्यादितिसंक्षेपः ॥ ॥ अथयतिभोजनप्रकारः ॥ यतिहस्तेजलंदद्याद्भिक्षांदद्यात्पुनर्जलं । भैक्षंपर्वतमात्रंस्यात्तज्जलंसागरोपमं । एकरात्रंवसेद्ग्रामे नगरेपंचरात्रकम् । वर्षाभ्योन्यत्रवर्षासुमासांश्चचतुरोवसेत् । अष्टौमासान्विहारःस्याद्यतीनांसंयतात्मनां । महाक्षेत्रप्रविष्टा नांविहारस्तुनविद्यते । भिक्षाटनंजपःस्नानंध्यानंशौचंसुरार्चनं । कर्तव्यानिषडेतानिसर्वथानृपदंडवत् । मंचकंशुक्लवस्त्रंच स्त्रीकथालौल्यमेवच । दिवास्वापश्चयानंचयतीनांपतनानिषट् । वृथाजल्पंपात्रलोभंसंचयंशिष्यसंग्रहं । हव्यंकव्यंतथान्नंच वर्जयेच्चसदायतिः । यतिपात्राणिमृद्वेणुदार्वलाबुमयानिच । नतीर्थवासीनित्यंस्यान्नोपवासपरोयतिः । नचाध्ययनशीलः स्यान्नव्याख्यानपरोभवेत् । एतद्वेदार्थभिन्नपरं । एतेसंक्षेपतोयतिधर्माः । अन्येपिमाधवीयमिताक्षरादौज्ञेयाः ॥ ॥ ७ ॥

## ॥ ३८८ ॥ अथत्रिंशच्छ्लोकी ( आशौचनिर्णयः ) ॥

श्रीः ॥ षण्मासाभ्यंतरेषुस्वपुरुषनिहितेगर्भमात्रेविनष्टेमातातन्माससंख्यासमदिनमशुचिःस्नानशुद्धाःसपिंडाः ॥ अंत्येमास द्वयेतुत्रिदिनमशुचयोतःपरंसूतिवत्स्याच्चातुर्वर्ण्यस्यतुल्यंभवतिवयसियत्प्रोच्यतेशौचमात्रं ॥ १ ॥ जन्माशौचांतरालेयदिशि शुनशनंनालवृद्ध्यूर्ध्वकालेनिःप्राणोनिःपतेद्वाजननजनितमाशौचमस्त्येवकृत्स्नम् ॥ प्राङ्नालच्छेदनाच्चेन्निधनमुपगतस्तत्र्य हेणैवशुद्धिःसर्वेषांसूतिकायास्त्विहचसफलकंप्रेतशुद्धिस्तुसद्यः ॥ २ ॥ स्नानंप्राङ्नामतोवाग्दशनजननतोहःपरेतेग्निदग्धेऽ

दग्धेत्वत्रापिसद्यस्तदुपरिदिनमाव्यब्दतश्चौलशून्ये ॥ सच्चौलेतुत्रिरात्रंत्रिदिनमितरथाप्याग्रतोजात्यशौचंमातापित्रोस्तुपुत्रे
त्रिदिनमदशनेसन्निधौनष्टचेष्टे ॥ ३ ॥ ऊनक्त्र्यब्देत्वसंज्ञेजनिकरजननीसोदराणांदशाहंयद्वाऽस्पृश्यत्वमेवाधिकमिहविषयेसूत
कैतुत्रिरात्रम् ॥ स्त्रीषुस्नानेनशुद्धेत्रिपुरुषविषयेज्ञातिराशौचकालादर्वाग्वाग्दानतोह्नांत्रिभिरुपयमनात्कर्तृगोत्रंस्वकंच ॥ ४ ॥
जन्मन्यौपेतमृत्यावपिचदशनिशाद्वादशाहानिपक्षंमासंवर्णाःक्रमेणाशुचयउचितकृच्छ्रद्रजातिस्तुपक्षम् ॥ वानप्रस्थेयतौचोप
रमतिकुलजेषंढकेचाप्लवःस्याद्योषिद्विप्रोविप्रगुर्व्यैमृतवतिचदिनंयुद्धविद्धेतुसद्यः ॥ ५ ॥ शावेतीतेदशाहात्प्रभृतिविषयकेप्राक्
त्रिमासौत्रिरात्रंपक्षिण्याषष्ठमासाद्दिनमिहनवमात्स्यात्ततःस्नानमात्रम् ॥ स्नानंदेशांतरस्थेत्वथपितृविषयेदेशकालाविशेषात्स्वं
स्वंमातुःसपत्न्यास्त्रिदिनमिदमतिक्रांतशौचंसमानम् ॥ ६ ॥ पित्रोर्गेहेसमूढाप्रसवमरणयोरेकरात्रत्रिरात्रेस्यातांपित्रादिका
नामथपितृमरणेप्यूढपुत्र्यास्त्रिरात्रम् ॥ प्रेतेष्वाचार्यमातामहदुहितृसुतश्रोत्रियर्त्विक्सयाज्यस्वस्त्रीयेषुत्रिरात्रंत्रिदिवसमशु
चिःसोदकस्तूभयत्र ॥ ७ ॥ पक्षिण्याशौचमृत्विक्दुहितृसुतसहाध्यायिबंधुत्रयांतेवासिश्वश्रूसुमित्रश्वशुरभगिनिकाभागिने
यप्रयाणे ॥ मातामह्यांचपित्रोःस्वसरिचविरतेमातुलेमातुलान्यांचाथोसज्योतिरेवस्वविषयनृपतौग्रामनाथेचनष्टे ॥ ८ ॥ शि
ष्योपाध्यायबंधुत्रयगुरुतनयाचार्यभार्यासगोत्रानूचानश्रोत्रियेषुस्वगृहपुरमृतौमातुलेचैकरात्रम् ॥ रात्रिंसब्रह्मचारिण्यथतुकथ
मपिस्वल्पसंबंधयुक्तेस्नानंवासोयुतंस्यादिदमपिसकलंसर्ववर्णेषुतुल्यम् ॥ ९ ॥ वृद्धाशौचस्यमध्येत्वपरमपिसमंस्वल्पकंवासजा
तिर्मेतेजात्यंतरंवायदिभवतितदापूर्वशेषेणशुद्धिः ॥ द्वाभ्यांतत्रत्रिशेषेत्रिभिरपरदिनैर्यामिनीयामशेषेनैवाशौचेनपित्र्यंपितु
रुपशमनेपक्षिणीमातृमृत्यौ ॥ १० ॥ सर्वत्वाशौचमंतर्यदिविदितमिदंशेषमात्रेणशुद्धिर्दाहाहादाहिताग्नौमरणदिवसतोऽन्यत्र

कुर्याद्दशाहम् ॥ पूर्वैस्नात्वासचैलंविहितहितकृतावर्हकासूतिकातुत्रिंशद्रात्रंनयोग्यासुरपितृकरणेविंशतिंपुत्रसूस्तु ॥११॥ निर्हृत्यान्यंप्रमीतंदिवसमशुचिकोऽथासवर्णंतदुक्ताशौचोथानाथमाद्यक्रतुशतफलभागाप्लवेनैवशुद्ध्येत् ॥ नीत्वोपाध्यायमातापितृपरमगुरून्ब्रह्मचारीनदोषीतेभ्योन्यंनिर्हृतोऽस्यव्रतमपिविततंभ्रश्यतेऽवश्यमेव ॥ १२ ॥ तुल्योत्कृष्टानुयानेवसनसहितकोंभस्यवप्लुत्यवह्निंस्पृष्ट्वाज्यंप्राश्यशुद्ध्येदथदिनमशुचिर्हीनवर्णानुयाने ॥ पक्षिण्येकांतरानुव्रजनइहभवेद्व्यंतरत्वेत्रिरात्रंकृत्वास्नात्वासुनद्यामसुयमनशतंसर्पिराशंचकुर्युः ॥ १३ ॥ तातांबाचार्यकेभ्योनलजलतिलदोब्रह्मचारीतदीयाशौचोन्येभ्यस्तुतद्वत्पुनरुपनयनंचाधिकंकारयेत्तु ॥ अन्येत्वज्ञातिकेभ्योयदिददतितदातत्प्रयुक्ताःशुभाःस्युःकुर्युःकृच्छ्त्रयंवाधमदहनविधौतंतमेवाप्नुवंति ॥ १४ ॥ पालाशीमाहिताग्नेःप्रतिकृतिमथवास्थीनिदग्ध्वादशाहाद्याशौचाज्ञातयःस्युस्ततइतरनृणांत्रीण्यहान्येवकुर्युः ॥ अन्योविप्राद्यशौचेसकृददनमदंस्तावदाशौचकृत्स्याद्यावत्तेषांतदंतेव्रतमपिचचरेद्रोदनेत्वेकरात्रम् ॥ १५ ॥ जन्मन्यस्पृश्यतानोभवतिकुलभुवांमातृवर्जंपितुस्तुस्नानादूर्ध्वंसचैलादथनिधनकृताशौचकेऽल्पेत्रिभागे ॥ पूर्वांशस्योपरीत्थंमहतिचयदिसंचायनंवृत्तमासीन्नोचेत्तस्योपरिष्टादथतुगृहजयोर्दासयोराप्लवोर्ध्वं ॥ १६ ॥ अन्नेनोपात्तयोस्तुत्रिरजनिचरणाद्दासदासादिकानांस्वाम्याशौचाहसेव्यासमदिनगमनादूर्ध्वमन्यत्तुसूक्तं ॥ जातेऽपत्येतुतस्मिन्नहनिनिशिचतंमंगलार्थेषुयोग्याःसर्वाशौचंसदानोभवतियतिवनिब्रह्मचर्यस्थितानाम् ॥ १७ ॥ तत्तत्कार्येषुसत्रिव्रतिनृपनृपवद्दीक्षितर्त्विक्स्वदेशभ्रंशापत्स्वप्यनेकश्रुतिपठनभिषक्कारुशिल्पातुराणां ॥ संप्रारब्धेषुदानोपनयनयजनश्राद्धयुद्धप्रतिष्ठाचूडातीर्थार्थयात्राजपपरिणयनाद्युत्सवेष्वेतदर्थे ॥ १८ ॥ नाशौचाज्ञातयःस्युःपतितपतिसुतब्रह्मविद्घातिनीषुदोषात्पाखंडिचौराश्रमरहितसुरापेयहीनोपगासु ॥

संदर्पोत्सर्पविप्रक्षितिपपशुदिवाकीर्तिकाद्यैर्हतेषुस्वेच्छापूर्वंचशस्त्रज्वलनजलविषानाशकाद्यैर्मृतेषु ॥ १९ ॥ नाशौचंशाककच्छा
छाजिनलवणतृणक्षीरनीरामिषेषुपुष्पेमूलेफलेचौषधिदधिमधुषुस्यात्तिलेक्ष्वामभोज्ये ॥ दद्यादद्यादिमानिस्वयमनुमननात्स्वा
मिनोयातिजाताशौचेवाकृत्रिमेवापणितमपणितंचापिसर्वंशुचिस्यात् ॥ २० ॥ जातारण्याग्निनावाकृपरिणयनविधेदग्धिरा
धानकालात्गृह्येणोर्ध्वंतुविध्याहितहुतवहनैर्लौकिकेनान्यभावे ॥ चांडालाग्निंचिताग्निंपतितहुतभुजंसूतिकामेध्यवह्नीन्जह्या
च्छूद्राहृतेनेंधनदहनघृताद्येनदाहोप्यदाहः ॥ २१ ॥ सर्वंतूष्णींविदध्यादुपनयनविधेःप्राक्परंतुस्वशाखागृह्योक्तस्तद्विधानैः
सकलशवविधिंज्येष्ठपुत्रोऽवरोवा ॥ पुत्राभावेक्रमेणस्वकुलजजननीवंश्यशिष्यर्त्विजोवाचार्योवायत्रकुर्यात्प्रथमदिनविधिंसो
पितत्सूतकांते ॥ २२ ॥ आनाम्नःखातमात्रंनजलहुतवहौनामवर्षत्रयांतःकामंचोर्ध्वंतुनित्यौभवतउपरतेचौलकेचौलयुक्ते ॥
नित्यौकालाविशेषादथपितृमुखराःस्नापयित्वांबरस्रग्गंधाद्यैःशोभयित्वामृतमथखननेयोग्यमाज्यैर्विलिप्य ॥ २३ ॥ प्रत्यग्द्वा
राभ्रगर्याद्बहिरवनिसुरंक्षत्रियंतूत्तरेणप्राग्द्वारेणैववैश्यंपितृदिशिवृषलंनाययित्वानुयायुः ॥ वर्षीयःपूर्वमूनद्विशरदुपरतौनानु
यानेनियामःशूद्रैःस्पृष्टोथवोढोयदिभवतिमृतःप्रेतभावान्नमुक्तिः ॥ २४ ॥ ज्ञातीनांमातृपित्रोरपिपरमगुरोर्नित्यमंभोथमित्र
प्रत्तास्वस्त्रीययाज्यश्वशुरगुरुसुहृद्याजकानांयथेष्टं ॥ नग्नात्यब्रह्मचारिव्रतियतिपतितक्लीबपाखंडचोरादघुर्येत्वत्रपिंडानलजल
कथनानर्हकास्तेतुसूक्ताः ॥ २५ ॥ संस्कृत्यानीक्ष्यमाणाःसकलकुलभुवोबालपूर्वंप्रजित्वानादेयेवृद्धपूर्वंपयसिसवसनाएकवा
रंनिमज्ज्य ॥ पाषाणेत्रिःसकृद्वाप्रतिदिनमुदकंब्राह्मणेदक्षिणास्याःक्षत्रेतूदङ्मुखावैमृतवतिविशितुप्राङ्मुखास्तेददीरन् ॥२६॥
स्नायुर्भूयोपितत्रत्रिदिनमनशनाज्ज्ञातयोहर्निशंवाक्रीतोत्पन्नाशनावामिषलवणपयःक्षीरमन्नंत्यजेयुः ॥ स्त्रीसंगंमंगलानिव्यसन

हसनमुद्रोदनोच्चासनानितार्णास्तीर्णक्षितौतेपृथगतिनियताःसंविशेयुर्निशायाम् ॥ २७ ॥ संस्कर्तादर्भपुंजेसमधुदहनतःप्रत्य हंपिंडमेकंभूमावेवावपेतप्रथमदिनचरुद्रव्यमेवोपरिष्टात् ॥ दाहाह्नादेवगण्यंचयनदिनमिदंचादितोह्नांचतुर्णामेकस्मिन्सप्तमे वाह्निनवमदिनेवानुपेतेतुनैतत् ॥ २८ ॥ वर्षीयस्युद्गतेतूपरिवपननखच्छेदनंसूतकांतेमध्येवाकेचिदूचुःपितृपरमगुरुष्वेववा पादिनित्यम् ॥ अत्रस्मार्तंशुभार्थेभणितमभणितंतत्स्वगृह्यैर्विदित्वाकृत्वादानंचदद्यादशुभभयभिदेभूसुरेभ्यःशुभार्थं ॥ २९ ॥ दत्वापिंडंसपिंडाःपरशववहनंस्नातकाश्चव्रजित्वातद्वेश्मद्वारिचास्यप्रशमितमनसोनिंबपत्रंविदश्य ॥ आचम्याम्यंबुदूर्वांकुरव रवृषभानक्षतान्गोमयंचस्पृष्ट्वासिद्धार्थतैलान्यथदृषदिपदंन्यस्यसर्वेविशेयुः ॥ ३० ॥ इतित्रिंशच्छ्लोकी समाप्ता ॥ ॥ ६ ॥

## ॥ अथग्रंथप्रशस्तिः ॥

श्रीः ॥ सह्यांघ्र्युदन्वत्तटवर्तिरामक्षेत्रेऽस्तिगोमांतकराजधानी ॥ फिरंगराजेनचकास्त्यरंयाराजन्वतीकौंकणचंद्रिकेव॥१॥तदंत रालेकमलानिकेतोग्रामोललामोऽस्त्यतिपेडणाख्यः ॥ स्वभक्तकामोन्मुखदेवसंघैःश्रीमद्भिरर्थ्यर्थकरैश्चपूज्यः ॥ २ ॥ यस्यांतरे भगवतीप्रमुखाहिदेव्यःसूर्जेस्वलारवळनाथमुखाश्चदेवाः ॥ छायाश्रिताखिलमनोरथपूरणेनकल्पद्रुमाइवविभांत्यनिशंप्रसन्नाः ॥ ३ ॥ तत्पश्चिमेऽस्तिपणशीक्षितिदेवजन्मभूमिर्यदेकनिलयाःपणशीकराख्याः ॥ आसंश्चिराद्रवळनाथपदारविंदसेवैकतान मनसोऽमलकीर्तिभाजः ॥ ४ ॥ सद्वंशकृत्यकरणेनसुशीलविद्यासंपत्भरेणविमलाचरणेनतेषु ॥ श्रीशप्रसादसमवाप्ततपःश्रु ताब्धिर्गुर्वादरेणतिलकोऽजनिलक्ष्मणार्यः ॥ ५ ॥ आर्यापितंपतिमनोनुगुणैवभार्याभामेवकृष्णमवृणोदनुसत्यभामा ॥ तौ

दंपतीकिलननंदतुरत्रपुत्रपौत्रादिभिश्चिरमदभ्रसुखौघप्रपंचे ॥ ६ ॥ तद्धर्मजेष्ववरजेनचवासुदेवनाम्नाकृतोद्विजहितायसमुच्चयोऽयम् ॥ पूर्वाकरैर्लघुधियाकृपयाद्विजानांलक्ष्मीशितुश्चतदयंसमभूत्सुपूर्णः ॥ ७ ॥ तमांचकन्निर्णयसागरेशःश्रीमांस्तुकारामचतुर्धराख्यः (चौधरीत्युपनाम) ॥ भूयश्चतत्संस्करणंतुरीयमानंकसंवर्ध्यसकर्तृहस्तात् ॥ ८ ॥ वर्णक्षोदकलाकलापकलनाच्छ्रीमानभूज्जावजीक्षोणीमंडलवर्तिमुद्रणकलाजीवातुरासीच्छनैः ॥ धैर्यौदार्यगुणैरुदात्तयशसागांभीर्यतःसागरोयज्जोनिर्णयसागरोविसृमरोवर्वर्तिलोकोत्तरः ॥ ९ ॥ जातौतत्तनुजावुदारयशसौदीपात्प्रदीपाविवज्येष्ठःपैतृकसद्गुणैःकिलतुकारामोऽभवन्मंडितः ॥ ईड्यस्तत्सदृशोऽनुजोऽप्रिसमशीलःपांडुरंगाह्वयोरेजातेभुविरामलक्ष्मणनिभौयौमोहमय्यांपुरि ॥ १० ॥ पितुरनंतरमात्मगुणैर्जनंप्रकुरुतामधिकंवशवर्तिनं ॥ विनयतोनयतोनयतोऽधिकोऽन्यइतिसागरजाप्यवृणोच्चतौ ॥ ११ ॥ स्वंस्वैरिणीवचपलाकमलेतिलोकवादंविमार्ष्टुमिवयावचलासतीसा ॥ वृत्वामुदाचिरमरीरमदुत्सवेनलुब्धाप्रलोभकतदीयगुणैर्गुणज्ञा ॥ १२ ॥ पूर्वंगजेलावस्विंदु १८१८ शाकेऽभूदयस्यमुद्रणम् ॥ चंद्राक्षिगजभू १८२१ शाकेऽप्यस्याभूत्पुनरंकनम् ॥ १३ ॥ तार्तीयीकंपुनर्वाणदृग्गजेंदु १८२५ मितेऽकनं ॥ तुरीयंनभरामेभचंद्रे १८३० भून्मुद्रणंपुनः समभूद्दीशकृपयाशमस्त्वेनत्प्रयुंजताम् ॥ १४ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥



## ॥ १. ॥मातृगृहपूजनम्॥

आचम्य० देशकालौ संकीर्त्य मम श्रीमदुमामहेश्वरप्रीतिद्वारा सकलदुरितदौर्भाग्य निरसनपूर्वकं भर्त्रादिचिरजीवन वंशाभिवृद्धि महैश्वर्य सुखोदयमातापितृकुलोद्धार सौमंगल्याखंडानंद शिवलोक प्राप्त्यादिकल्पोक्तफलसिद्ध्यै उमामहेश्वरस्वरूपिणोर्मातापित्रोः यथाविभवं पाद्यादिभिः पूजनं मंगलदीपदानंच० गणेशपूजनस्वस्तिवाचनादिकृत्वा ।मातापित्रोः पादौप्रक्षाल्य गंधवस्त्रभूषणादिभिः संपूज्य धान्यराशिस्थदीपं गंधादिना अलंकृत्य इमं मंगलदीपं उमामहेश्वरप्रीतिकरं संकल्पोक्तफलसिद्ध्यै मातृगृहे दातुमहमुत्सृजे ततः प्रार्थना – यन्मयाद्ययथाशक्ति मातापित्रर्चनंकृतम् ॥ प्रीयेतां तेनमेदेवौ नित्यंगौरीमहेश्वरौ ॥ १ ॥ तयोः पुण्यप्रभावेण क्षेमं भवतु पुष्कलम् ॥ अखंडानंदमैश्वर्यं वंशवृद्धिः सुखोदयः॥ २ ॥ मातृगृहे मयादत्तो दीपोयं मंगलाव्हयः ॥ निहत्य दुरितं सर्वं पुनातु च कुलद्वयम् ॥ ३ ॥ ततो विप्रसुवासिनीभ्यः वस्त्रदक्षिणादिदानम् ।

# ॥ २. ॥ ब्रह्मणस्पतिसूक्तम् ॥

सोमानंस्वरणंकृणुहिब्रह्मणस्पते । कक्षीवंतंयऽऔशिजः ॥ योरेवान्योऽअमीवहावसुवित्पुष्टिवर्धनः । सनःसिषक्तुयस्तुरः ॥
मानःशंसोऽअररुषोधूर्तिःप्रणङ्मर्त्यस्य । रक्षाणोब्रह्मणस्पते ॥ सघावीरोनरिष्यतियमिंद्रोब्रह्मणस्पतिः । सोमोहिनोतिमर्त्यं ॥
त्वंतंब्रह्मणस्पतेसोमऽइंद्रश्चमर्त्यं । दक्षिणापात्वंहसः ॥ उत्तिष्ठब्रह्मणस्पतेदेवयंतस्त्वेमहे । उपप्रयंतुमरुतःसुदानवऽइंद्रप्राशू
र्भवासचा ॥ त्वामिद्धिसहसस्पुत्रमर्त्यउपब्रूतेधनेहिते । सुवीर्यंमरुतऽआस्वश्व्यंदधीतयोवऽआचके ॥ प्रैतुब्रह्मणस्पतिःप्रदेव्ये
तुसूनृता । अच्छावीरंनर्यंपंक्तिराधसंदेवायज्ञंनयंतुनः ॥ योवाघतेददातिसूनरंवसुसधत्तेअक्षितिश्रवः । तस्माऽइळांसुवीरामाय
जामहेसुप्रतूर्तिमनेहसं ॥ प्रनूनंब्रह्मणस्पतिर्मंत्रंवदत्युक्थ्यं । यस्मिन्निंद्रोवरुणोमित्रोऽअर्यमादेवाऽओकांसिचक्रिरे ॥ तमि
द्वोचेमाविदथेषुशंभुवंमंत्रंदेवाऽअनेहसं । इमांचवाचंप्रतिहर्यथानरोविश्वेद्वामावोऽअश्नवत् ॥ कोदेवयंतमश्नवज्जनंकोवृक्तब
र्हिषं । प्रप्रदाश्वान्पस्त्याभिरस्थितांतर्वावत्क्षयंदधे ॥ उपक्षत्रंपृंचीतहंतिराजभिर्भयेचित्सुक्षितिंदधे । नास्यवर्तानतरुतामहा
धनेनार्भेऽअस्तिवज्रिणः ॥ गणानांत्वागणपतिंहवामहेकविंकवीनामुपमश्रवस्तमं । ज्येष्ठराजंब्रह्मणांब्रह्मणस्पतऽआनःशृण्वन्नू
तिभिःसीदसादनं ॥ देवाश्चित्तेऽअसुर्यप्रचेतसोबृहस्पतेयज्ञियंभागमानशुः । उस्राऽइवसूर्योज्योतिषामहोविश्वेषामिज्जनिताब्र
ह्मणामसि ॥ आविबाध्यापरिरापस्तमांसिचज्योतिष्मंतंरथमृतस्यतिष्ठसि । बृहस्पतेभीममममित्रदंभनंरक्षोहणंगोत्रभिदंस्वर्विदं
॥ सुनीतिभिर्नयसित्रायसेजनंयस्तुभ्यंदाशान्नतमंहोऽअश्नवत् । ब्रह्मद्विषस्तपनोमन्युमीरसिबृहस्पतेमहितत्तेमहित्वनं ॥ न

तमंहोनदुरितंकुतश्चननारातयस्तितिरुर्नद्वयाविनः । विश्वाऽइदस्माद्ध्वरसोविबाधसेयंसुगोपारक्षसिब्रह्मणस्पते ॥ त्वंनोगोपाः पथिकृद्विचक्षणस्तवव्रतायमतिभिर्जरामहे । बृहस्पतेयोनोऽअभिह्वरोदधेस्वातंमर्मर्तुदुच्छुनाहरस्वती ॥ उतवायोनोमर्चयाद नागसोरातीवामर्तःसानुकोवृकः। बृहस्पतेऽअपतंवर्तयापथःसुगंनोऽअस्यैदेववीतयेकृधि ॥त्रातारंत्वातनूनांहवामहेवस्पर्तर धिवक्तारमस्मयुं । बृहस्पतेदेवनिदोनिबर्हयमादुरेवाऽउत्तरंसुम्नमुन्नशन् ॥ त्वयावयंसुवृधाब्रह्मणस्पतेस्पार्हावसुमनुष्यादंदीम हि । यानोदूरेतळितोयाऽअरातयोभिसंतिजंभयाताऽअनप्नसः ॥ त्वयावयमुत्तमंधीमहेवयोबृहस्पतेपप्रिणासस्निनायुजा । मा नोदुःशंसोऽअभिदिप्सुरीशतप्रसुशंसामतिभिस्तारिषीमहि ॥ अनानुदोवृषभोजग्मिराहवंनिष्टप्ताशत्रुंपृतनासुसासहिः । असि सत्यऽऋणयाब्रह्मणस्पतऽउग्रस्यचिद्दमितावीळुहर्षिणः ॥अदेवेनमनसायोरिषण्यतिशासामुग्रोमन्यमानोजिघांसति । बृहस्पतेमा प्रणक्तस्यनोवधोनिकर्ममन्युंदुरेवस्यशर्धतः ॥ भरेषुहव्योनमसोपसद्योगंतावाजेषुसनिताधनंधनं ॥विश्वाऽइदर्योऽअभिदिप्स्वो ३मृधोबृहस्पतिर्विववर्हारथाँऽइव ॥ तेजिष्ठयातपनीरक्षसस्तपयेत्वानिदेदधिरेदृष्टवीर्यं । आविस्तत्कृष्वयदसत्तऽउक्थ्यं१बृहस्प तेविपरिरापोऽअर्दय ॥ बृहस्पतेऽअतियदर्योऽअर्हाद्द्युमद्विभातिक्रतुमज्जनेषु । यद्दीदयच्छवसऽऋतप्रजाततदस्मासुद्रविणंधेहि चित्रं ॥ मानःस्तेनेभ्योयेऽअभिद्रुहस्पदेनिरामिणोरिपवोन्नेषुजागृधुः । आदेवानामोहतेविव्रयोहृदिबृहस्पतेनपरःसाम्नोविदुः ॥ विश्वेभ्योहित्वाभुवनेभ्यस्परित्वष्टाजनत्साम्नःसाम्नःकविः । सऽऋणचिदृणयाब्रह्मणस्पतिर्द्रुहोहंतामहऽऋतस्यधर्तरि ॥ तवश्रि येव्यजिहीतपर्वतोगवांगोत्रमुदसृजोयदंगिरः । इंद्रेणयुजातमसापरीवृतंबृहस्पतेनिरपामौब्जोऽअर्णवं ॥ ब्रह्मणस्पतेत्वमस्ययंता सूक्तस्यबोधितनयंचजिन्व । विश्वंतद्भद्रंयदवंतिदेवाबृहद्वदेमविदथेसुवीराः ॥ सेमामविड्ढिप्रभृतिंयऽईशिषेयाविधेमनवयाम

हागिरा । यथानोमीढ्वान्त्स्तवतेसखातवबृहस्पतेसीषधःसोतनोमतिं ॥ योनंत्वान्यनमन्योजंसोतादर्दमन्युनाशंबराणिवि ।
प्राच्यावयदच्युताब्रह्मणस्पतिराचाविशद्वसुमंतंविपर्वतं ॥ तद्देवानांदेवतमायकर्त्वमश्रथ्नन्दृह्लाव्रदंतवीळिता । उद्गाऽआजदभि
नद्ब्रह्मणावलमगूहत्तमोव्यचक्षयत्स्वः ॥अश्मास्यमवतंब्रह्मणस्पतिर्मधुधारमभियमोजसातृणत् । तमेवविश्वेपपिरेस्वर्दृशोबहुसा
कंसिसिचुरुत्समुद्रिणं ॥ सनाताकाचिद्भुवनाभवीत्वामाद्भिःशरद्भिर्दुरोवरंतवः । अयंतताचरतोऽअन्यदन्यदिद्याचकारवयु
नाब्रह्मणस्पतिः ॥ अभिनक्षंतोऽअभियेतमानशुर्निधिंपणीनांपरमंगुहाहितं । तेविद्वांसःप्रतिचक्ष्यानृतापुनर्यतऽउऽआयंतदु
दीयुराविशं ॥ ऋतावानःप्रतिचक्ष्यानृतापुनरातऽआतस्थुःकवयोमहस्पथः । तेबाहुभ्यांधमितमग्निमश्मनिनकिःषोऽअस्त्य
रणोजहुर्हितं ॥ ऋतज्येनक्षिप्रेणब्रह्मणस्पतिर्यत्रवष्टिप्रतदश्नोतिधन्वना । तस्यसाध्वीरिषवोयाभिरस्यतिनृचक्षसोदृशयेकर्ण
योनयः ॥ ससंनयःसविनयःपुरोहितःससुष्टुतःसयुधिब्रह्मणस्पतिः । चाक्ष्मोयद्वाजंभरतेमतीधनादित्सूर्यस्तपतितप्युतुर्वृथा ॥
विभुप्रभुप्रथमंमेहनावतोबृहस्पतेःसुविदत्राणिराध्या । इमासातानिवेन्यस्यवाजिनोयेनजनाऽउभयेभुंजतेविशः ॥ योवरेवृ
जनेविश्वथाविभुर्महामुरण्वःशवसाववक्षिथ । सदेवोदेवान्प्रतिपप्रथेपृथुविश्वेदुतापरिभूर्ब्रह्मणस्पतिः ॥ विश्वंसत्यंमघवानायुवो
रिदापश्चनप्रमिनंतिव्रतंवां । अच्छेंद्राब्रह्मणस्पतीहविर्नोन्नंयुजेववाजिनाजिगातं ॥ उताशिष्ठाऽअनुशृण्वंतिवह्नयःसभेयोविप्रोभ
रतेमतीधना । वीळुद्वेषाऽअनुवशऽऋणमाददिःसहवाजीसमिथेब्रह्मणस्पतिः ॥ ब्रह्मणस्पतेरभवद्यथावशंसत्योमन्युर्महिकर्माक
रिष्यतः । योगाऽउदाजत्सदिवेविचाभजन्महीवरीतिःशवसासरत्पृथक् ॥ ब्रह्मणस्पतेसुयमस्यविश्वहारायःस्यामरथ्योवयस्व
तः । वीरेषुवीराँऽउपपृंग्धिनस्त्वंयदीशानोब्रह्मणावेषिमेहवं ॥ ब्रह्मणस्पतेत्वमस्ययंतासूक्तस्यबोधितनयंचजिन्व । विश्वंतद्भद्रंय

दर्वतिदेवावृहद्ददेमविदथेसुवीराः ॥ इंधानोऽअग्निंवनवद्वनुष्यतःकृतब्रह्माशूशुवद्रातहव्यऽइत् । जातेनजातमतिस प्रसर्स्र्तेयंयंयुजंकृणुतेब्रह्मणस्पतिः ॥ वीरेभिर्वीरान्वनवद्वनुष्यतोगोभीरयिंपप्रथद्बोधतित्मना । तोकंचतस्यतनयंचवर्धतेयंयंयु जं० ॥ सिंधुर्नक्षोदःशिमींवाँऽऋघायतोवृषेवव्रधींऽरभिवष्ट्योजसा । अग्नेरिवप्रसितिर्नाहवर्तवेयंयंयुजं० ॥ तस्माऽअर्षतिदिव्याऽअ सश्चतःससत्वभिःप्रथमोगोषुगच्छति । अनिभृष्टतविपिर्हत्योजसायंयंयुजं०॥तस्माऽइद्विश्वेधुनयंतसिंधवोच्छिद्राशर्मंदधिरेपुरू णि । देवानांसुम्नेसुभगःसऽएधतेयंयंयुजं० ॥ ऋजुरिच्छंसोवनवद्वनुष्यतोदेवयन्निददेवयंतमभ्यसत् ।सुप्रावीरिद्वनवत्पृ त्सुदुष्टरंयज्वेदयज्योर्विभजातिभोजनं ॥ यजस्ववीरप्रविहिमनायतोभद्रंमनःकृणुष्ववृत्रतूर्ये । हविष्कृणुष्वसुभगोयथाससिब्रह्म णस्पतेरवऽआवृणीमहे ॥ सऽइज्जनेनसविशासजन्मनासपुत्रैर्वाजंभरतेधनानृभिः । देवानांयःपितरमाविवासतिश्रद्धामनाहवि षाब्रह्मणस्पतिं योऽअस्मैहव्यैर्घृतवद्भिरविधत्प्रतंप्राचानयतिब्रह्मणस्पतिः । उरुष्यतीमंहसोरक्षतीरिषोंऽहोश्चिदस्माउरुचक्रिरद्भुतः ॥ तमु ज्येष्ठं नमसा हविर्भिः सुशेवं ब्रह्मणस्पतिं गृणीषे । इन्द्रं श्लोको महि दैव्यः सिषक्तु यो ब्रह्मणो देवकृतस्य राजा ॥ इयं वां ब्रह्मणस्पते सुवृक्तिर्ब्रह्मेन्द्राय वज्रिणेऽअकारि । अविष्टं धियो जिगृतं पुरन्धीर्जजस्तमर्यो वनुषामरातीः ॥ चतो इतश्चत्तामुतः सर्वा भ्रूणान्यारुषी । अराय्यं ब्रह्मणस्पते तीक्ष्णशृङ्गोदृषन्निहि ॥ अदो यद्दारु प्लवते सिन्धोः पारेऽअपूरुषम् । तदा रभस्व दुर्हणो तेन गच्छ परस्तरम् ॥ अग्निर्येन विराजति सूर्यो येन विराजति । विराज्येन विराजति तेनास्मान्ब्रह्मणस्पते विराजसमिधं कुरू ॥

## ॥ ३. ॥ पुत्रकामाष्टियज्ञः ॥

अथकन्यानामेवोत्पत्तौपुत्रार्थंपुत्रकामेष्टिः ऋतुकालात्षष्ठेदिनेसभार्यः कृताभ्यङ्गः प्राणानायम्यदेशकालौसंकीर्त्य पुत्रकामःपुत्रकामेष्टिंकरिष्येइति संकल्प्यस्वस्तिवाचनादि नान्दीश्राद्धान्तेऽग्निंप्रतिष्ठाप्य चक्षुषीआज्येनात्रप्रधानं अग्निंपञ्चवारंवरुणंपञ्चवारंविष्णुंपृथ्वीं विष्णुंसोमंसूर्यासावित्रींपायसेन शेषेणस्विष्टकृतमित्यादि निर्वापकालेतूर्ष्णींषष्टिमुष्टीनिरुप्यतथैवप्रोक्ष्य श्वेतवत्सश्वेतगोःक्षीरेणचरुंपक्त्वाज्यभागान्ते आतेगर्भइतिअग्निरैतुइतिसूक्तद्वयस्य हिरण्यगर्भऋषिः क्रमेणाग्नीवरुणौदेवते अनुष्टुप्जगत्यौछन्दसी पायसचरुहोमे विनि०॥ ॐ आतेगर्भोयोनिमैतुपुमान्बाणइवेषुधिम् ।आवीरोजायतांपुत्रस्तेदशमास्यःस्वाहा । अग्नयइदं० १ करोमितेप्राजापत्यमागर्भोयोनिमैतुते । अनूनःपुत्रोजायतामश्लोणोपिशाचधीतःस्वाहा । अग्नय० २ पुमांस्तेपुत्रोनारीतंपुमाननुजायताम् । तानिभद्राणिबीजान्यृषभाजनयन्तुनौस्वाहा । अग्न० ३ यानिभद्राणिबीजान्यृषभाजनयन्तिनः । तैस्त्वंपुत्रान्विन्दस्वसाप्रसूर्धेनुकाभव स्वाहा । अग्न० ४ कामः समृद्ध्यतांमह्यमपराजितमेवमे । यंकामंकामयेदेवतंमे वायो समर्धयस्वाहा । अग्न० ५ अग्निरैतुप्रथमोदेवतानांसोस्यैप्रजांमुञ्चतुमृत्युपाशात् । तदयंराजावरुणोनुमन्यतांयथेयंस्त्रीपौत्रमघन्नरोदात्स्वाहा । वरुणायेदं०१ इ.मामग्निस्त्रायतांगार्हपत्यःप्रजामस्यैनयतुदीर्घमायुः । अशून्योपस्थाजीवतामस्तुमातापौत्रमा नन्दमभिप्रबुध्यतामियंस्वाहा । वरु० २ मातेगृहेनिशिघोषउत्थादन्यत्रत्वद्रुदन्त्यःसंविशन्तु मात्वंविकेश्युरआवधिष्ठाजीवपत्नीपतिलोकेविराजपश्यन्तीप्रजांसुमनस्यमाना स्वाहा०।व रु० ३ अप्रजस्तांपौत्रमृत्युंपाप्मानमुतवाघम् । शीर्ष्णःस्रजमिवोन्मुच्यद्विषद्भ्यःप्रतिमुञ्चामि पाशंस्वाहा । वरुणा० ४ देवकृतंब्राह्मणंकल्पमानंतेनहन्मियोनिषदः पिशाचान् । क्रव्यादोमृत्युनधरान्पातयामिदीर्घमायुस्तवजीवन्तुपुत्राः स्वाहा ।वरु०५ नेजमेषेतितिसृणांविष्णुस्त्व ष्टागर्भकर्ताविष्णुपृथ्वीविष्णवोनुष्टुप् । नेजमेष० विष्णव० १ यथेयंपृथ्वी० पृथिव्याइ० २ विष्णोःश्रेष्ठेन० विष्णव० ३ सोमोधेनुं गणोगौतमःसोमस्त्रिष्टुप् । सोमोधेनुं०

सोपा येदं० १ तांपूषनसूर्यासावित्रीसूर्यासावित्रीत्रिष्टुप् पायसचरुहोमेवि० तांपूषञ्छिव० सूर्यासावित्र्याइदं० १ इतिपञ्चदशाहुतीर्हुत्वा स्विष्टकृद्धोमंकृत्वा दंपती अपश्यंत्वेतिद्वयोः प्रजावा न्प्राजापत्यःप्रजापतिस्त्रिष्टुप् हुतशेषचरुप्राशनेविनियोगः अपश्यंत्वेतिद्वाभ्यांप्राश्य पिशंगभृष्टिमित्यस्यदैवोदासिःपारुच्छेपइंद्रोगायत्री नाभ्यालंभनेवि० पिशंगभृष्टि० इतिदंपतीनाभ्यालंभनंकुर्यातां यजमानः प्राय श्चित्तादिहोमशेषंसमाप्यविप्रेभ्योगांसुवर्णादिदक्षिणांच दत्त्वारात्रौदंपतीदर्भास्तरणेशयीयातां इतिपुत्रकामेष्टिप्रयोगः ।

## ॥ ४. ॥ सप्ततिवर्षशांतिः ॥

बृहच्छौनकीये सप्तत्यब्दिका भैमरथी शांतिः ॥ अथ प्रयोगः ॥ सप्ततिवर्षांतः षण्मासात्प्राक् जन्मर्क्षे अनुकूलर्क्षे वा देवालये नदीतीरे स्वगृहे शुभस्थले वा। देवालयादीनामैशाने शांतिककर्ममंडपे मंडपाभ्यंतरे पश्चिमस्यां एकहस्तं चतुरस्रं कुंडं विधाय मंडपमध्ये प्रधानवेदीं तदुत्तरतो ग्रहवेदीं च कुर्यात्॥ आच० । प्राणा० । पवि० । शांतिसूक्तपाठः । देशकालसं० । संकल्पः अमुकगोत्रस्यामुकशर्मणो मम जन्मनः सकाशात् प्रवर्तमाने सप्ततिवर्षे तद्वर्षप्रवेशनिमित्तेन षण्मासादूर्ध्वं उत्पत्स्यमानानां मृत्यु-धनधान्यद्रव्यपशुक्षय पुत्रदारादिनाशाद्यरिष्टानां निरसनार्थं जन्मनामराश्योः सकाशात् विरुद्धस्थानस्थितादित्यादिग्रहज-निष्यमाणारिष्ट निरसनार्थं शत्रुनाश सर्वदुःखनिवृत्ति पूर्वक पुत्रपौत्राभिवृद्धि सार्वकालीन सुखाभिवृद्धये च आदित्यादिग्रहानु-कूल्यतायै मृत्युंजय भीमरथ देवताप्रीतये च बृहच्छौनकोक्तां सग्रहमखां भैमरथीं शांतिं करिष्ये। इति संकल्पः ॥ गणपति-

पूजनादि नांदीश्राद्धांतं । ब्रह्माचार्यादिऋत्विग्वरणं । मधुपर्केण तेषां पूजनं दिग्रक्षणादि पंचभूसंस्कारपूर्वकाग्निप्रतिष्ठापनातं ॥ प्रधानवेद्यामास्तृते वस्त्रे भारमितान् ( मण २ ) व्रीहीन्निक्षिप्य तदुपरि भारार्धमितान् ( मण १ ) तंडुलान्निक्षिप्य तदुपरि भारार्धार्धमितान् ( अर्धामण ) तिलांश्च निक्षिप्य तदुपरि तंडुलैरष्टदलं विदधीत । अष्टदले मध्ये प्रधानकलशं तद्दक्षिणे अधिदेवकलशं प्रधानघटवामतः प्रत्यधिदेवकलशं एवं क्रमेण रक्तसूत्रेण वाससा च वेष्टितान् त्रीन् कलशान् ॐ महीद्यौरित्यादि—प्रसन्नो भव सर्वदेत्यंतं मंत्रावृत्त्या स्थापयेत् ॥ ततस्तिसृषु सौवर्णप्रतिमासु अग्न्युत्तारणं कृत्वा मध्यमप्रतिमायां प्राणप्रतिष्ठापूर्वकं ॐ त्र्यंबकंयजामहे० माऽमृतात् ॥ १ ॥ ॐ नमउग्रायचभीमायच ॥ २ ॥ इति मंत्रेण वा ॐ मृत्युंजयाय भीमरथाय नमः मृत्युंजयं भीमरथमावाहयामीत्यावाह्य तद्दक्षिणप्रतिमायां ॐ तन्वायामि० । इति मंत्रेण । ॐ अपां पतये नमः अपांपतिमधिदेवमावाहयामीत्यावाह्य । वामप्रतिमायां ॐ आशानामाशापालेभ्यश्चतुर्भ्यो अमृतेभ्यः इदंभूतस्याध्यक्षेभ्यो विधेम हविषावयम् ॥ १ ॥ इतिमंत्रेण ॥ ॐ आशापालेभ्यो नमः आशापालान् प्रत्यधिदेवमावाहयामीत्यावाह्य षोडशोपचारैः पूजयेत् ॥ ततो देवतासन्निधौ तत्तद्देवतामंत्रजपः वेदपारायणं पूर्वादिद्वारसूक्तजपः नमकजपः चमकजपः श्रीसूक्तजपः रौद्रसूक्तजपश्च ब्राह्मणैरनुष्ठेयः । तदर्थं तेषां वरणं च । ततस्तदुत्तरतो ग्रहवेद्यां ग्रहप्रतिष्ठापनं । रुद्रकलशप्रतिष्ठापनंच । । ततोऽग्नेर्दक्षिणतोब्रह्मसनास्तरणादि आज्यभागांतं । द्रव्यत्यागः । ग्रहहोमः । प्रधानहोमः । प्रधानहोमे घृताक्तास्तिलाः एकमेव हौम्यं ।।होमसंख्या अष्टोत्तरसहस्रं अष्टोत्तरशतं वा १००८ । १०८ । होममंत्रा आवाहनोक्ता एव । । तत उत्तरांगानि पूजा

गोभ्य इन्द्राय उग्रायै प्रजापतये मूलायाद्भ्योऽषाढाभ्यो विश्वेभ्यो देवेभ्योऽषाढाभ्यो ब्रह्मणेऽभिजिते विष्णवे श्रोणायै वसुभ्यः श्रविष्ठाभ्यो वरुणाय शतभिषजेऽजायैकपदे प्रोष्ठपदेभ्योऽहये बुध्नियाय प्रोष्ठपदेभ्यः पूष्णे रेवत्या अश्विभ्यां अश्वयुग्भ्यां यमायापभरणीभ्यः स्वाहेति व्याहृतिः ॥

अथप्रयोगः-- आचम्य प्राणानायम्य देशकालौ संकीर्त्य मम अष्टमासाधिकाशीतिवर्षप्राप्त्या भविष्यत्त्वेन सूचितानां अपमृत्यु दुःस्वप्नदर्शननानाविधरोगादिपरिहारार्थं आदित्यादिनवग्रहाणां आनुकूल्यार्थं अशीतिशांतिं (सहस्त्रचंद्र दर्शनविधिंवा) करिष्ये निर्विघ्नतार्थं महागणपतिपूजनं स्वस्तिपुण्याहवाचनं इत्यादि नांदीश्राद्धांतं कर्म कृत्वा आचार्यवरणं कुर्यात् । अथ आचार्यः आचार्य कर्म कृता स्थंडिलपूर्वभागे वेद्यां कलशस्थापनं कुर्यात् । तदुपरि पूर्णपात्रे कर्तुः जन्मनक्षत्रदेवता प्रतिमां स्थापयित्वा तद्दक्षिणे रोहिण्यादिहस्तांतनक्षत्राणि तद्देवताः वामे चित्रादि कृत्तिकान्तनक्षत्राणि तद्देवताश्च स्थापयित्वा पूजां कुर्यात् । स्थंडिले वरदनामानमग्निं प्रतिष्ठाप्य -- ईशान्यां ग्रहपीठे अधि-प्रत्यधिदेवतासहितान् ग्रहान् प्रतिष्ठाप्य पूजां कृत्वा अन्वाधानं कुर्यात् आधारांते । अत्रप्रधानं -- गणपतिं -- वराहुत्या आज्येन आदित्यादिनवग्रहान् अधिदेवताः प्रत्यधिदेवताः क्रतुसाद्गुण्यदेवता लोकपालांश्च समिदाज्यचरुद्रव्यै न-क्षत्रदेवतां १०८ । २८ वा संख्याकाभि आज्याहुतिभि नक्षत्राणि तद्देवताश्च प्रत्येकं ८ । १ आज्याहुतिभिः यक्ष्ये शेषे-णेत्यादि बलिदानं पूर्णाहुतिःस्थापितदेवतानां उत्तरपूजनं । अभिषेकः। विभूतिधारणम् कार्यम् उग्ररथशांत्युक्ता मंत्रा अभिषेकार्थं जपार्थंच ग्राह्याः। सुवर्णरजतमुक्तावस्त्रतंडुलापूपादिदानानि यथाशक्ति ब्राह्मणेभ्यो दद्यात सहस्त्रं ब्राह्म-णान संपूज्य भोजयेत् । यथाशक्ति वा । कर्मेश्वरार्पणं कुर्यात् आचार्यादीनां पूजनं दक्षिणादानंच कुर्यात् । अथ सायं

स्विष्टं० अभिषेकांते यजमानः (स्नात्वा) स्वलंकृत्य कुंभगते आज्ये मुखावलोकनं कुर्यात् । ततः सदक्षिणमाज्यकुंभदानं । ततो गोदानं । दश दानानि च । आशीर्वाचनं । विसर्जनं । ब्राह्मणभोजनं । यस्य स्मृत्येति विष्णुस्मरणं॥ बृहच्छौनकोक्ता सप्तत्यब्दिका ७० भैमरथी शांतिः समाप्ता ॥

## ॥ ५. ॥ अशीतिवर्षशांतिः ॥

(वैखानसगृह्यसूत्रे तृतीयप्रश्न एकविंशी कण्डिका)

तदेवं वर्तमानस्य यद्यष्टमासाधिकाशीतिवर्षाणि रविवर्षेणाधिगान्यधिगच्छेयुः स दृष्टसहस्रचन्द्रो भवति । तमेनं क्रियायुक्तं पुण्यकृत्तमं ब्रह्मशरीरमित्याचक्षते । तस्मान्नान्दीमुखं कृत्वा शुक्लपक्षे शुद्धेऽहनि पूर्वाह्णे पूर्ववद्धुत्वा तथैव कपिल इवेति वृद्ध स्य वृद्धाया वा वदन्नक्षतोदकादीन् मूर्ध्न्यादध्यात् सर्वदेवताः सहस्रं च ब्राह्मणानामर्चनं बलिभ्यामन्नेन तर्पयेत् । ग्रामं प्रदक्षिणीकृत्य सायं स्थण्डिले सहस्रं पिष्टेन सोमरूपाणि करोति । राजतेन पात्रेण कुमुदपत्रैः सोमस्यार्चनम् । तस्य दक्षिणे रोहिणीगणं वामे चानावृष्टिगणमर्चयति । सहस्रशः सुवर्णरजतमुक्तादीनि शक्त्या वस्त्रतण्डुलापूपानि च दद्यात्॥

१. आघारं हुत्वा तदधिदेवता नक्षत्राणि च जुहुयादग्नये कृत्तिकाभ्यः प्रजापतये रोहिण्यै सोमाय मृगशीर्षाय रुद्रायार्द्रायै अदित्यै पुनर्वसुभ्यां बृहस्पतये तिष्याय सर्पेभ्य आश्रेषाभ्यः पितृभ्यो मघाभ्योऽर्यम्णे फल्गुनीभ्यां भगाय फल्गुनीभ्यां सवित्रे हस्ताय त्वष्ट्रे चित्रायै वायवे निष्ट्यायै इन्द्राग्निभ्यां विशाखाभ्यां मित्रायानू

रथेन ग्रामपर्यटनं कृत्वा कुर्यात्। पिष्टेन सहस्रचंद्राकृतीः कृत्वा पूजयेत। राजतपात्रेण कुमुदपत्रं पूजनं कुर्यात्। अथवा प्रातरेव सायंकालीनं विधिं कृत्वा कर्म समापयेत्।

अथ द्वितीयः प्रयोगः भट्टभास्करोक्तः।

तत्र। कलशस्थापनम् तदुपरि नवोनवो भवति जायमान इतिमंत्रेण सहस्रचंद्रप्रतीकं चंद्रं संस्थाप्य तद्दक्षिणे त्र्यंबक मितिमंत्रेण मृत्युंजयं वामे आकृष्णेनेति कालरूपिणं सूर्यंच प्रतिष्ठापयेत् पूजयेत्अग्निस्थापनं ग्रहस्थापनं मुख्यदेवतानां आज्येन होमः। संख्या १००८, १०८, २८ वा अधिदेवताप्रत्यधिदेवतानां १०८, २८, ८ वा आज्येनहोमः। अस्मिन् प्रयोगे ग्रामपर्यटनं सहस्रचंद्रपिष्टाकृतिपूजनंच नास्ति

## ॥ ६. ॥ 'धन्वंतरी याग' ॥

अद्यपूर्वो० फलप्राप्त्यर्थं अस्माकं सकल० र्थंच सर्वेषां स्वस्थानां स्वास्थ्यरक्षणार्थं रुग्णानां मानसिक कायिक विविधरोग परिहारार्थं आयुरारोग्यैश्वर्याभिवृद्ध्यर्थंच अमराणां जरारुजामृत्युहरस्य आयुर्वेदशास्त्रप्रवर्तकस्य अमृतकलशं बिभ्रागस्य श्रीविष्णोः अवतारूपस्य श्री धन्वंतरेः अवतारदिवसे धन्वंतरिचैत्यमुद्दिश्य आश्वलायनसूत्रोक्तविधिना धन्वन्तरियज्ञाख्यं कर्म करिष्ये। आदौ० महागणपतिपूजनं पुण्याह वाचनं आचार्य ब्रह्मवरणंच करिष्ये। बलवर्धननामानमग्निं प्रतिष्ठाप्य श्रीधन्वन्तरियज्ञांगभूतं धन्वन्तरिस्थापनं पूजनं च करिष्ये। अत्र प्रधानं धन्वंतरिं इदंविष्णुरिति मंत्रेण घृतेन चरुद्रव्येण वा चतुर्गुणितैः अष्टाविंशतिसंख्याकाभिः आहुतिभिः शेषेण०। होमांते

स्विष्टकृत् – होमात् प्राक् श्रीधन्वंतरि यज्ञांगभूतं धन्वंतरये पुरोहिताय च द्रव्यरूपं बलिप्रदानं करिष्ये । द्वौ भागौ कृत्वा श्रीधन्वंतरये नम अमुं बलिं समर्पयामि इति एकं भागं समर्प्य अपरं ब्रह्माणमग्निचांतरा पुरोहिताग्रे नीत्वा पुरोहिताय नमः अमुं बलिं समर्पयामि इति समर्प्य अनेन बलिदानेन श्रीधन्वंतरिः प्रीयतां । ततः स्विष्टकृदादिहोमशेषं समाप्य उत्तरपूजां कृत्वा दक्षिणाप्रदानादि कुर्यात् ।

इदं विष्णुः काण्वो मेधातिथिर्धन्वन्तरिर्गायत्री । विह्निहवने विनियोगः ।

# ॥ गृहवास्तुमंडलमेकाशीतिपदम् ॥

पू.

६१ ईशानायनमः

५४ इंद्रायनमः

५५ अग्नयेनमः

४६ चरक्यैनमः

५० स्कंदायनमः

४७ विदार्यैनमः

१ शिखिनेनमः

पर्जन्याय नमः २

३ जयंतायनमः

४ कुलिशायुधायनमः

५ सूर्यायनमः

६ सत्यायनमः

७ भृशायनमः

आकाशाय नमः ८

९ वायवेनमः

दित्यैनमः ३२

आपायनमः ३३

सावित्रायनमः ३४

१० पूष्णेनमः

३१ अदित्यैनमः

आपवत्सायनमः ४४

३७ अर्यम्णेनमः

सवित्रेनमः ३८

११ वितथायनमः

३० भुजगायनमः

१२ गृहक्षतायनमः

२९ सोमायनमः

४३ पृथ्वीधरायनमः

ब्रह्मणेनमः ४५

३९ विवस्वतेनमः

१३ यमायनमः

२८ भल्लाटायनमः

१४ गंधर्वायनमः

२७ मुख्यायनमः

४२ राजयक्ष्मणेनमः

४१ मित्रायनमः

४० विबुधाधिपायनमः

१५ भृंगराजायनमः

अहयेनमः २६

३५ जयायनमः

३६ रुद्रायनमः

१६ मृगायनमः

२५ रोगायनमः

२४ पापयक्ष्मणेनमः

२३ शोषायनमः

२२ असुरायनमः

२१ वरुणायनमः

२० पुष्पदंतायनमः

१९ सुग्रीवायनमः

१८ दौवारिकायनमः

१७ पितृभ्योनमः

६० सोमायनमः

५३ पिलिपिच्छायनमः

५१ अर्यम्णेनमः

५६ यमायनमः

उ.

द.

४९ पापराक्षस्यैनमः

५२ जृंभकायनमः

४८ पूतनायैनमः

५९ वायवेनमः

५८ वरुणायनमः

५७ निर्ऋतयेनमः

प.

## ॥ प्रासादवास्तुमंडलं चतुःषष्टिपदम् ॥

पू.

ईशानायनमः ६१
इंद्रायनमः ५४
अग्नयेनमः ५५

चरक्यैनमः ४६
स्कंदायनमः ५०
विदार्यैनमः ४७

१ शिखिनेनमः
२ पर्जन्यायनमः
३ जयंतायनमः
४ कुलिशायुधायनमः
५ सूर्यायनमः
६ सत्यायनमः
७ भृशायनमः
८ आकाशाय०
९ वायवेनमः

३२ आपायनमः
३३ आपवत्सायनमः

१० पूष्णेनमः
३१ अदितयेनमः
४४ आपवत्साय
३४ अर्यम्णेनमः
३५ सावित्रायनमः
३६ सवित्रेनमः
११ वितथायनमः

३० दित्यैनमः
१२ गृहक्षतायनमः

सोमायनमः ६०
पिलिपिच्छायनमः ५३
४३ पृथ्वीधरायनमः
ब्रह्मणेनमः ४५
३७ विवस्वतेनमः
अर्यम्णेनमः ५१
यमायनमः ५६

द.

२९ सोमायनमः
१३ यमायनमः

२८ भल्लाटायनमः
४२ रुद्रायनमः
४१ राजयक्ष्मणे
४० विबुधाधिपायनमः
३९ जयायनमः
१४ गंधर्वायनमः

२७ मुख्यायनमः
१५ भृंगराजायनमः

२६ अहयेनमः
२५ रोगायनमः
२३ शोषायनमः
२२ असुरायनमः
२१ वरुणायनमः
२० पुष्पदंतायनमः
१९ सुग्रीवायनमः
१८ दौवारिकायनमः
१६ मृगायनमः
१७ पितृभ्योनमः

पापराक्षस्यैनमः ४९
जृंभकायनमः ५२
पूतनायैनमः ४८

वायवेनमः ५९
वरुणायनमः ५८
निर्ऋतयेनमः ५७

प.

# ॥ सप्तशतीमहायंत्रम्॥

पूर्वा (देवी पश्चिमा)

वं बटुकाय० ८४

पं पद्माय० ८०
आं ब्रह्मणे० ७०

वं वज्रायनमः ७२
लं इंद्रायनमः ६२




मं वरुणायनमः ६६
पां पाशायनमः ७६

ह्रीं शेषाय० ७१.
चं चक्राय० ८१.

उत्तरा (देवीदक्षिणा)
हूं क्षेत्रपालायनमः ८३

दक्षिणा (देव्युत्तरा)
यों योगिनीभ्योनमः ८५

ॐ गं गणपतयेनमः ८२

पश्चिमा (देवी प्राक्)

## ॥ रुद्रपीठमहायन्त्रम् ॥

प्राची ( देवप्रतीची )




पश्चिमा ( देवपूर्वा )

